॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

३०





॥ श्रीः ॥

श्रीमदुदयनाचार्यप्रणीतः

# न्यायकुसुमाञ्जलिः

( व्याख्याचतुष्टयोपेतः सटिप्पणः )

श्रीमद्वरदराजप्रणीतया 'बोधन्या' महोपाध्यायश्रीवर्धमानोपाध्याय-
प्रणीतेन 'प्रकाशेन' नैयायिकशिरोमणिश्रीमेघठक्कुरप्रणीतया
'प्रकाशिकया' ( जलदेन ) महोपाध्यायश्रीरुचिदत्तो-
पाध्यायप्रणीतेन 'मकरन्देन' सर्वतन्त्रस्वतन्त्र-
श्रीधर्मदत्त (बच्चाझा) प्रणीतया 'टिप्पण्या'
च समुल्लसितः ।

सम्पादकौ

न्यायाचार्यः श्रीपद्मप्रसादोपाध्यायः

तथा

न्यायाचार्यः श्रीढुण्ढिराजशास्त्री

प्राक्कथनलेखकः

महामहोपाध्यायः श्रीगोपीनाथकविराज एम. ए.

प्रस्तावनालेखकः

पण्डितराजः श्रीराजेश्वरशास्त्री द्राविडः



KASHI SANSKRIT SERIES
30



THE

# NYĀYA KUSUMĀÑJALI

OF

## S'RĪ UDAYANĀCHĀRYA

WITH FOUR COMMENTARIES—

THE BODHINĪ, PRAKĀS'A, PRAKĀS'IKĀ ( JALADA )
AND MAKARANDA

by

VARADARĀJA, VARDHAMĀNOPĀDHYĀYA, MECHA THAKKURA
AND RUCHIDATTOPĀDHYĀYA

and

NOTES

by

S'RĪ DHARMADATTA ( BACHCHĀ JHĀ )

EDITED BY

*Nyāyāchārya Pt. S'rī Padmaprasāda Upādhyāya*

&

*Nyāyāchārya Pt. S'rī Dhuṇḍhirāja S'āstrī*

WITH FOREWORD

BY

*M. M. Dr. Gopinath Kavirāj, M. A., D. Litt.*

and

Introduction by

*Paṇḍitarāja S'rī Rājes'wara S'āstrī Drāviḍa*



# FOREWORD

I congratulate the Chowkhamba Sanskrit Series authorities of Banaras on the publicationo f a new edition of Udayana's Nyaya Kusumanjali with five commentaries and sub-commentaries, including those of Vardhamana and Ruchidatta which accompanied its first edition. The text of Kusumanjali consists of a number of mnemonic verses ( karikas ) arranged into five groups and furnished with the author's own commentary in prose. The work has come down to us in two forms, as (i) a complete work ( called Prakarana ) containing both the verses and the author's comentary and (ii) as a smaller hand-book containing the verses only with the prose portion left out.

UDAYANA'S language, a faithful reflection of his abstruse ideas, is generally stiff and terse. An illuminating commentary bringing out the implications of each line and the hidden significance of the context is often felt to be a necessity. Vardhamana's commentary, inspite of the great learning displayed in its pages, is not of much help in this respect, as it does not follow Udayana line by line and phrase by phrase. Varadaraja's Bodhani however is more useful from this point of view, as it is a running commentary on the whole work. In view of this fact I had it published more than 35 years ago, from the Government Sanskrit College Banaras, as the first work of the Saraswati Bhavana Texts Series. Unfortunately the work was incomplete, being based on an old manuscript of the College which did not extend beyond the third chapter. This edition is not now available. The inclusion of Varadaraja's commentary in the present edition is therefore welcome. Now that the last two chapters of Bodhani are also available, it is expected that the publishers

will try to add these also as a supplement. The value of the edition has been generally increased by the addition of Bhagiratha alias Megha Thakkura's sub-commentary Jalada and Bachha Jha's notes.

Bhagiratha Thakkura was an elder brother of Mahesha Thakkura, Raja of Mithila, who was himself a Naiyayika of high order. He lived by the end of the 15th and the beginning of the 16th century. Ruchidatta also lived about the same time. Both were distinguished pupils of the great Pakshadhara Misra.

It may be pointed out that besides Varadaraja and Vardhamana, Gunananda Vidyavagisa, probably of the 16th century, wrote also a commentary on the complete text of Nyaya Kusumanjali which was held in great repute in those days. It is to be hoped that in the next edition of this great work the publishers will try to reclaim from oblivion this useful commentary which will facilitate the study of Udayana. The Chowkhamba Sanskrit Series anthorities have been rendering a valuable sevice to Sanskrit scholarship by publishing regularly rare Sanskrit works for the last sixty years or more. It is hoped that they will continue this noble work with great zeal and help forward rapidly the cause of Sanskrit Culture.

2/A Sigra,
Banaras

**Gopi Nath Kaviraj**
Mahamahopadhyaya
M. A., D. LITT.

* श्रीगुरुः शरणम् *

# प्रस्तावना

## [ पण्डितराजः श्रीराजेश्वरशास्त्री द्राविडः

काशीस्थवल्लभरामशालिग्रामसाङ्गवेदमहाविद्यालयाध्यक्षः । ]

न्यायाचार्यश्रीमदुदयनाचार्यप्रणीतो न्यायकुसुमाञ्जलिग्रन्थः वर्धमानप्रकाशमकरन्दमेघठक्कुरवचामाकृतटीकाप्रटीकादिभिः सम्भूषितः नूतनतया निजेनामोदेनामोदयन् सहृदयमनांसि पुरःस्थितो दृश्यते । नास्तिकदर्शनेष्विचारितकदर्शनेष्वपि निरीश्वरवादिमतं साङ्ख्यैः मीमांसकैश्चादृतं खण्डयित्वा अत्र ग्रन्थे ईश्वरतत्त्वसाधनिका कृता । तस्याः साधनिकाया एतावतैवात्युत्कृष्टत्वं सिद्ध्यति यत् न्यायाचार्यमतानुसारेण इच्छाविशेषरूपां शाब्दीभावनामङ्गीकुर्वन् खण्डदेवः स्वनिर्मितायां भाट्टदीपिकायां ईश्वरनिराकरणपराणि मीमांसासूत्राणि शावरभाष्यटुप्टीकाद्यनुसारेण व्याचक्षाणोऽपि अन्ते भीतभीतः मम त्वेवं वदतोपि जिह्वा दूषयति इति हरिस्मरणमेवात्र शरणमिति प्रायश्चित्तं विदधौ । बौद्धास्तु स्वसमय एवाचार्यैः भारतवर्षादुत्खाताः इत्यहो आचार्याणां वैदुष्यातिशयः प्रभावातिशयश्च । ऐतिहासिकदृष्ट्या पुराणवाङ्मयनिर्माणानन्तरं सहस्रसम्वत्सरात्मके काले आयुर्वेदग्रन्थान् सुश्रुतवाग्भटादीन् विहाय दर्शनप्रतिपादकः वर्णाश्रमिणां कोऽपि शास्त्रीयो ग्रन्थः प्रामाणिकैरादृतः यन्नोपलभ्यते महाभाष्यं विहाय, तेन एतत्सुष्ठ्ववगम्यते बौद्धधर्मानुसारिणां राज्ञां काले वर्णाश्रमिणां विद्याः क्रमशो विलुप्यमाना आसन् राजकीयप्रभावातिशयात् । तथापि आयुर्वेदविषयस्यारोग्याश्रितत्वात् बौद्धैरपि आरोग्यार्थं वर्णाश्रमधर्मोऽवश्यं स्वीकार्य इति मतमासीत् । प्रथमशताब्दीभवेन नागार्जुनेन संशोधितस्य सुश्रुतग्रन्थस्य षष्ठशताब्दीभवस्य वाग्भटग्रन्थस्य च पर्यालोचनादिदं सिद्ध्यति । नीतिसारदृष्ट्यापि 'सर्वाभ्यो वलं सत्त्वमारोग्यं शीलमेव चे'त्यत्रत्यवचनानुसारेण जनपदग्रामादिसन्निवेशस्यारोग्यायत्तत्वात् तस्य च वलायत्तत्वात् वलस्य च शीलायत्तत्वात्तस्य च व्यसने चाभ्युदये चाविकारकरि यत्सत्त्वं तद्रूपत्वेन तस्य ईश्वरीयज्ञानानुसरणायत्तत्वमवगम्यते । विस्तरेण विवेचितोऽयमर्थः गीर्वाणवाग्वर्धिनीसभापञ्चाशदब्द्युत्सवस्मारकनिबन्धेऽस्माभिरिति नेह तन्यते । विष्णुसहस्रनामस्तोत्रजपस्य ज्वरादिनिवर्तकत्वेन विधानं चरकाद्युक्तमत एव संगच्छते । न्यायशास्त्रं हि विषादिनाशकमन्त्रायुर्वेदप्रामाण्येन वेदप्रामाण्यं साधयत् मीमांसकान् जीवयतीति स्पष्टमस्मत्कृतान्यत्र निबन्धे । आयुर्वेदोपदर्शितमीश्वरमप्यादावुपन्यस्य प्रत्यभिज्ञाप्य च कुसुमाञ्जलिग्रन्थस्य महत्त्वमस्यां भूमिकायां प्रकटीकर्तुमिच्छामः ।

> जाठरो भगवानग्निः ईश्वरोऽन्नस्य पाचकः ।
> सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ।

इति उदराग्नेरीश्वरत्वेनोपासना आयुर्वेदीयानां सम्मता । इति निम्नलिखितडल्हणकृतसुश्रुतटीकादर्शनात् प्रतिपद्यते । एतदप्रतियन्तः केचन वर्तमाना वैद्याश्चरकादिग्रन्थेषु भगवानिति विशेषणमात्रदर्शनात्, वायुमेवेश्वरत्वेनोपास्यं मन्यन्ते । तत्तु सुश्रुतवचने ईश्वरशब्दस्य प्रत्यक्षं निर्देशदर्शनात् तन्मूलकेन डल्हणवचनेन विरुध्यत इति न प्रीणाति हृदयं सहृदयानामित्यन्यदेतत् । जाठराग्नेरीश्वरत्वेनोपासनं हि न केवलं वैद्यकमूलकमपि तु—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥'

इति गीतादर्शनात्, 'तस्याः शिखाया मध्ये परमात्माव्यवस्थितः, स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' इति तैत्तिरीयोपनिषद्वचनाच्च सिद्धम् । यद्यपि 'प्राणो ब्रह्म खं ब्रह्म' इत्यादि श्रुत्या प्राणाद्युपासनान्यपि विहितानि, तान्यपि सत्यान्येवेति नास्ति सन्देहः । तथापि पूर्वोक्तडल्हणवचनदर्शनात्, जाठराग्नेरेवोपासनाप्रतीकत्वं वैद्यकमतसिद्धमिति प्रतीमः । सोऽयं जाठराग्निः कथमीश्वरो भवितुमर्हतीति प्रथमतः किञ्चिद्विस्तरेणोच्यते । तत्र नैयायिकैः साध्यमानमीश्वरत्वं कार्यमात्रम्प्रति कर्तृत्वरूपमेव । तदुक्तं 'यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो, बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः' इति । तच्च कर्तृत्वं कार्यमात्रनिरूपितोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपमेवेति न्यायकुसुमाञ्जलिदर्शनात् नैयायिकैः स्पष्टमेवागम्यते । यद्यपि 'स्वतन्त्रः कर्ता' इति पाणिनीयसूत्रे स्वातन्त्र्यरूपमेव कर्तृत्वमिति प्रतीयते, तच्च कारकान्तराप्रयोज्यत्वे सति स्वेतरसकलकारकप्रयोक्तृत्वरूपमेवेति वैयाकरणा वर्णयन्ति । न्यायवार्तिककारोऽप्युद्योतकर एवंविधमेव शरीरात्मनोः सादृश्यावहं कर्तृत्वं वर्णयांबभूव । तथापि निष्कृष्यमाणे स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिसमष्टिमत्येव पुरुषे तादृशं स्वातन्त्र्यं विश्राम्यतीति हेतोरेवंविधे ईश्वरत्वे सर्वेषामेतेषां अविप्रतिपत्तिरेव । अत एव ज्ञानसमर्जनार्थं प्रयत्नः सर्वसंगपरित्यागेन विचाररसिकैः क्रियते स्वातन्त्र्यस्येश्वरस्वरूपस्य लाभायेत्यत्र नास्ति चार्वाकस्यापि विप्रतिपत्तिः । कर्तव्यविस्मरणमेव जाड्यापरपर्यायं पारतन्त्र्यापादकं भवति । ज्ञानन्तु स्वातन्त्र्यापरपर्यायेश्वरत्वापादकमिति सर्वेषां हृदयाभ्यनुज्ञातोऽयमर्थः । एवंस्थिते प्राप्ताप्राप्तविवेकेन परिपूर्णज्ञानस्येश्वरतारूपत्वे, तज्ज्ञानं किण्वादिभ्यो मदशक्तिवत् भूतपरिणामरूपमेवेति चार्वाकाः, ततोऽन्यदिति आस्तिका इति मतभेदस्थितावपि चार्वाकमतेऽपीश्वरत्वापादकं ज्ञानतत्त्वं नापह्नोतुं शक्यत इति वस्तुस्थितिस्तु वक्तव्यैव भवति । पाश्चात्त्यविज्ञानशास्त्रेऽपि हि सेन्द्रियविज्ञानं निरिन्द्रियविज्ञानमिति विभागद्वयं कृत्वा सेन्द्रियविज्ञानमध्ये प्राणिशरीरावयवसापेक्षोत्पत्तिकानां शर्कराघृततण्डुलगोधूमादीनां द्विलक्षाधिकपदार्थानां संयुक्तानां वर्णनं यदुपलभ्यते तत्तेषां निरुक्तजाठराग्निमात्रसाध्यत्वादेव । वनस्पतिषु स्थितस्य पर्णहरितद्रव्यस्य सूर्यप्रकाशादेव सिद्धेः सौरशक्तेरसाधारणकारणत्वमिव शुक्लपक्षे समारोपितानामेव वंशानां रोगविनिर्मुक्तानां दर्शनात् चान्द्रमसज्योतिष्यपि जीवनोपयोगित्वसिद्धेस्तेजस्त्रयस्याप्यस्य जाठराग्निसाहाय्येन कार्यकरत्वं स्पष्टम् । 'तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुक् विभजन्तिष्ठन्नाहारमजरः कविः । तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य संतता । सन्तापयति स्वं देहमापादतलमस्तकः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यनूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' । इति तैत्तिरीयोपनिषदि सुषुम्नाकाण्डस्थितज्ञानतन्तुगतानामूर्ध्वमुखानां वेगानामाश्रयभूते वह्नौ परमात्मदृष्टयोपास्यत्वं विधीयते ।

'धातवः सप्तभूतानामन्तः सप्तामयः स्थिताः ।
केचिदग्नय इत्येवं केचिदूष्मेति जानते ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव ।'

इत्यादिना भावप्रकाशनकारेण शारदातनयेन वैद्यके एतदनूदितं जाठराग्निविषये । तस्योष्मरूपत्वपक्षे चरकानूदिते अनुद्भूतरूपत्वात् अतीन्द्रियत्वम् । सुश्रुतमते तु 'सौक्ष्म्याद्रसानादहतो विवेक्तुं नैव शक्यते' इति दर्शनात् सौक्ष्म्यादनुपलब्धिः चाक्षुषप्रत्यक्षद्वारा । स्पार्शनप्रत्यक्षविषयत्वं तु उद्भूतस्पर्शत्वादुभयवादिसिद्धम् । 'कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे अन्तर्धान-

मिति'. योगसूत्रदर्शनात् सिद्धिविशेषवलात् रूपस्य सूक्ष्मत्वेऽपि स्पर्शस्य स्थौल्यमुपपद्यत एव। सोयं जाठराग्निः 'सोऽग्रभुक् विभजन्तिष्ठन्नाहारमजरः कविः' इति वेदे कवित्वेनोपवर्णितः। कविः क्रान्तदर्शी इति प्रामाणिकव्याख्यादर्शनात् कुसुमाञ्जलिनिर्दिष्टं सर्वज्ञत्वमस्यैव जाठराग्नेरवगम्यते। स्पष्टमुक्तं च भावप्रकाशने शारदातनयेन :—

'सोऽपि त्रैविध्यमन्विच्छन् विराट्पुरुष ईश्वरः।
बीजत्रयेण भिन्नः स्यात्सोमसूर्याग्निरूपिणा।
स रुद्रोपेन्द्रपद्मोत्थगुणत्रयविभेदिना।
षण्णवत्यङ्गुलायामं सर्वेषाञ्च शरीरिणाम्।
शरीरं तस्य मध्यः स्यादाधारः कन्दसंज्ञितः।
वलयत्रितयाकारः सोमसूर्याग्निमण्डलैः।
वह्नेः शिखा तस्य मध्ये नीपान्तःकेसराकृतिः।
परा प्रकृतिरेषा स्यादम्बिकेत्यपरे जगुः'।

इत्यादिना मूलाधारोत्थिताया सुषुम्नाकाण्डान्तर्गतोर्ध्वमुखत्वेनगधराया जाठराग्निशिखायाः ज्ञानरूपधारिण्या आधुनिकविज्ञानसिद्धं वर्णनं कृतं तदपि अत एवोपपद्यते। अस्याग्नेः शरीरारोग्यसम्पादकत्वं शरीरवर्धकत्वं च कुम्भकप्राणायामावस्थायामेव भवति समानवायुसञ्चारे सतीति।

'समानोग्निसमीपस्थः कोष्ठे चरति सर्वतः।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति'।

इत्यादि भावप्रकाशनवचनं सङ्गच्छते। अत एव पापकर्मणि कृतेऽनृते चोक्ते वक्तुर्विच्छायमुखत्वं जाठराग्नेः कोपादेव रुधिरधाराया यथावदपरिपच्यमानतया भवति, इति स्पष्टमेवास्येश्वरत्वम्। यद्यपि जाठरोऽग्निः नैयायिकैः तैजसविषयमध्ये परिगणितः, ईश्वरस्तु आत्मभेदान्तर्गतः स्वतन्त्रद्रव्यत्वेन; तथापि 'देवताः सन्निधानेन प्रत्यभिज्ञानतोपि वा'। इति कुसुमाञ्जलिग्रन्थ एव विषयरूपेऽपि जाठरे हव्यवाहे ईश्वराहङ्कारास्पदत्वरूपं तच्छरीरत्वं नैयायिकैरभ्युपगम्यत एवेति स्वीकृतत्वान्नेयं कल्पना तद्विरोधिनी।

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्'।

इति भगवद्गीतोपबृंहणमुपर्युक्त एवार्थेऽनुकूलं दृश्यते।

यद्यपि सोमसूर्याग्नीनामत्यन्तसात्त्विकतया तदवच्छिन्नचैतन्यस्यैव प्रकृततमत्वादुपास्यत्वमैदम्पर्येणात्र विहितमिति स्थितिः, तथापि 'तत्तेजो विद्धि मामकमिति-पुनस्तेजःपदोपादानात् शुक्लभास्वररूपवतस्तदीयतेजसोऽपीश्वरदृष्ट्योपास्यत्वं समर्थितं तद्व्याख्यातृभिः। तेन आयुर्वेदतैत्तिरीयोपनिषद्गीतानामेकवाक्यत्वोपपत्तिः।

मेस्मेरिजमवादिभिरुच्यमानं प्राणतेजोऽपीदमेव, यत् पाश्चात्यन्यायालयेऽपि निर्णीय स्वीकृतमिति नात्र विषये कस्यापि विप्रतिपत्तिरवशिष्टा।

एवं स्थिते स्वोपादानगोचरापरोक्षज्ञानचिकीर्षासमष्टिरूपे ईश्वरतत्त्वे सर्वाभीप्सिते तस्य 'किण्वादिभ्यो मदशक्तिवदिति, जडभूतपरिणतिमात्ररूपत्वे, भूतव्यक्तिभेदेन भिन्नत्वे, आनन्त्यं प्रति-

व्यक्त्यपरिपूर्णत्वञ्च चार्वाकेन वक्तव्यम् यत्र स्वभाववादस्योत्थितिः, लाघवादेकत्वं नित्यत्वं च, अतः सर्वविषयकत्वात् पराहन्तारूपत्वमास्तिकानां पक्षः। तत्रापि तादृशसर्वज्ञत्वस्य योगजधर्मजन्यत्वेन, अनित्यत्वेनानीश्वरापादकत्वं बौद्धानां पक्षः। कर्मणो जडस्य परिणतिमात्रत्वमिति पूर्वमीमांसकानाम्। एतत्पक्षत्रयनिराकरणेन नित्यैकज्ञानादिरूपत्वं नैयायिकवेदान्तितान्त्रिकादीनामितरास्तिकानां सिद्धान्त इति कुसुमाञ्जलिग्रन्थे सम्यगालोचिते सिद्ध्यति। (१)साहित्यप्रक्रियास्सारवादवेलायां साधारणीकरणव्यापारेण पराहन्ताया वेदान्तदर्शनसिद्धसाक्षिरूपायास्तादात्म्येन जगद्भासनदर्शनात् प्रत्यक्षानुभवसिद्धोऽप्ययमास्तिकानां पक्षः भेदवादिपतितैः कुतार्किकैः नास्तिकैरपलप्यते, इति स्वाङ्गीकृतप्रत्यक्षप्रामाण्यविरुद्धोऽपि केषाञ्चिदेव पुण्यवतामास्तिकानामनुभूतिपथगामी भवति। तदुक्तं—

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना। महाभयकृतत्राणाद्द्वित्राणामेव जायते॥ इति।

केवलमास्तिकानां पूर्वमीमांसकानां पक्षः किञ्चिदिवालोचनामर्हति।

दहराकाशमध्यस्थसहस्रदलशोभिते।
विस्फुरत्केसराश्लिष्टकर्णिके पङ्कजोदरे।
आत्मा निःसङ्ग एवैकः साक्षी सर्वस्य कर्मणः।
तस्य स्यामिति सङ्कल्पो मनआख्यां लभेत्तु सः।
मनोऽधितिष्ठति प्राणपूर्वान् पञ्च समीरणान्।
ते धातून् व्याप्य धमनीमुखेभ्यस्तत्र सम्भवान्।
अग्नीन् प्रज्वलयन्त्येव तेभ्यो नादः प्रवर्तते'।

इति भावप्रकाशनकारेण वैयाकरणसम्मतस्य चिदचिन्मिश्रसंवलनरूपस्य नादात्मकस्य चेतनस्य शब्दस्य मध्यमानादरूपस्य प्रणवांशरूपस्य पूर्वोक्ताग्न्युद्भवत्वं वर्णयताऽग्निप्रज्वलनं प्रत्याधुनिकवैज्ञानिकदृष्ट्यापि लघुमस्तिष्कसमीपस्थितप्राणगुहासमीपस्थप्राणदानाडीप्रेरणाधीनफुफ्फुसद्वयसंकोचविकासाधीनप्राणादिवायुसञ्चारणप्रयोजकीभूतं बृहन्मस्तिष्कस्थितज्ञानकेन्द्रसमीपवृत्तीच्छाशक्तिरूपेश्वरसङ्कल्पात्मकमनसः सामर्थ्यमुपवर्णितं यदस्ति तत्र बृहन्मस्तिष्कस्थितस्य जीवैरज्ञातसामर्थ्यस्य समस्तकर्मसाक्षिणः परमात्मन एव सिद्धिरुक्ता, या 'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिसिद्धा।

'विस्फुरत्केसराश्लिष्टकर्णिके पङ्कजोदरे' इति भावप्रकाशनवाक्ये ऊर्ध्वाधोमुखवेगवाहिनीनां नाडीनां विस्फुरत्ताया वर्णनदर्शनात् मस्तिष्काख्यपङ्कजकेसररूपत्वं वर्ण्यमानं दृष्ट्वा नाडीतन्त्रविज्ञानमाधुनिकं सर्वमपि प्राचामवगतमासीदिति स्पष्टमेव वर्णयितुं शक्यते आस्तिकैः। तत्र स्वतन्त्रनाडीनां स्वतन्त्रेच्छाशक्तिक्षेत्राणाञ्च जीवानधिष्ठितानामधिष्ठानमिच्छाशक्तिक्षेत्रसाहाय्येनैव जीवाज्ञातज्ञानशक्तिक्षेत्रभूतैः मस्तिष्कभागैः क्रियत इति आधुनिकविज्ञानसिद्धत्वात्। नादोत्पत्तिप्रक्रिया इयं सर्वापि कुसुमाञ्जलौ अंशतः सूचिता दृश्यते। तथा च मीमांसकानामपि ईश्वरास्तित्व-

(१) चित्रादाविव रसास्वादयदर्शिनो राम इति तत्रत्यटीकादर्शने चित्रतुरगन्यायः काव्यप्रकाशोक्तः पुरत आगच्छति तत्रत्यचित्रतुरगन्यायः आहार्यारोपरूप एव इति यद्यपि वर्धमानभगीरथठक्कुरमकरन्दादिग्रन्थदर्शनेनावगम्यते, अतश्च स भ्रम इति शङ्कितुं शक्यतेऽपि। तथापि गोकुलनाथोपाध्यायकृतविवरणरीत्या रेखातुरगौ तदुभयपर्याप्तैकविशेष्यतानिरूपिततदीयसन्निवेशविशेषतुरगत्वोभयनिष्ठैकप्रकारताकालौकिकज्ञानविशेषरूपे चित्रतुरगप्रत्ययेऽङ्गीक्रियमाणे तद्भ्रमत्वस्य वक्तुमशक्यत्वाद्देवतादीनामीश्वरस्य च प्रतिमादिषु तादृशसन्निधिरूपाहङ्कारममकारयोरङ्गीकारे आहार्यारोपकल्पनानुपपत्त्यैव, अतः रसप्रतीतिमनुसृत्याग्रे वक्ष्यमाणरीत्या सर्वैरनागतः स्वात्मतादात्म्यापन्नतया अनुभूयमानत्वं न भ्रमकृतमिति शङ्कनीयम्।

मनपह्नवनीयतां गतमस्ति । तथा हि कुसुमाञ्जलिग्रन्थे 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ।' इति पद्ये अष्टविधेषु अनुमानेषु ब्रह्माण्डविषयाणि कार्यायोजनधारणानि पक्षीकृत्येश्वरानुमानमुक्तं तत्तु ब्रह्माण्ड इव पिण्डाण्डेऽपि स्वतन्त्रनाडीतन्त्रकृतं शरीरनिर्माणात्मकं कार्यं, तदारम्भकपरमाणुप्रेरणात्मकमायोजनं, जीवतः शरीरधारणात्मकञ्च पक्षीकृत्य सम्यगवगन्तुं शक्यते । 'पदात्प्रत्ययतः श्रुतेः' वाक्याच्च नादसापेक्षात् ईश्वरानुमानं पूर्वोक्तनादप्रक्रियया स्वतन्त्रनाडीतन्त्रमूलिकया स्पष्टमवगन्तुं शक्यत इति पराहन्तानुभवानुसारेण एकस्मिन्सर्वविषयकज्ञाने स्थिरीकृते सति तदनुसारिमनननिदिध्यासनादिद्वारा जीवस्यापि सर्वज्ञत्वसिद्धिरप्रत्यूहा भवति । अत एव

स्वर्गापवर्गयोर्द्वारमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥
न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

इत्युक्तं न्यायकुसुमाञ्जलौ । इयांस्तु विशेषः-अद्वैतवादिनां द्वैतवादिनाञ्चेश्वरविषयविवादे मध्यसेतुभूतास्तत्रभवन्त उदयनाचार्याः स्वकीयया अलौकिक्या नैयायिकपरिभाषया ईश्वरतत्त्वमनुमानद्वारा उभयाविरुद्धं साधयन्ति, तदुपयोगिपञ्चावयववाक्यप्रयोगस्यैव सम्पूर्णेऽस्मिन्ग्रन्थे उपलभ्यमानत्वात् । अन्तरा अनूद्यमाने जीवेश्वरभेदादौ तु अनूद्यमानत्वमेव न विधेयत्वम्, तदुपयोगिपञ्चावयववाक्यप्रयोगस्यात्र ग्रन्थे क्वचिदप्यदर्शनात्, प्रत्युत—

'न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः ।
नोचेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥'

( आत्मतत्त्वविवेके ) इत्यादिना आचार्यैर्वेदैकसिद्धे परमेश्वरतत्त्वे स्वतात्पर्यमाविष्कृतमन्यत्र, अतः प्रामाणिकानामयमत्यन्तमुपादेयः कुसुमाञ्जलिग्रन्थ इति न तिरोहितमस्ति विदुषाम् । नैयायिकानामपि परलोकधर्माधर्मविषयेषु नैयायिकप्रक्रियानुरोधिविप्रतिपत्त्याद्यभ्यासार्थं बहुटीकासनाथः विशेषतो मिथिलामण्डलमण्डनायमाननैयायिकवरपूज्यवच्चाझामहोदयकृतटीकोपबृंहितोऽयं ग्रन्थो अतीव प्रकाशकरो वर्तत इति उचिततममुपादेयतमञ्चैतत्प्रकाशनं श्रीमता श्रेष्ठिवरेण जयकृष्णदासगुप्तमहोदयेन कृतं प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताकक्रमानुष्ठानरूपभारतीयराजनीतिरूपमेवेति सहर्षमस्माभिरनुमोद्यते । इति ।



# भूमिका

अथायं प्रकाश्यते मुद्रयित्वा वरदराजकृतया बोधिन्या, व्याख्यात्रयसमलङ्कृतेन वर्धमानोपाध्यायविरचितेन प्रकाशेन च समन्वितो न्यायाचार्यपदाङ्कितेन श्रीमदुदयनाचार्येण निबद्धो न्यायकुसुमाञ्जलिरित्यभिधया प्रथितो महानिबन्धः । तत्र च लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्वमात्मनि वर्तते न वेति संशये, भावकोट्या धर्मत्वाधर्मत्वारूपतादृशजात्यधिकरणत्वमात्मनि नैयायिकमतेन वर्तते, अभावकोट्या च चार्वाकमतेन गुरुत्वादिरूपतादृशजात्यधिकरणत्वमनात्मगुण इति प्रथमविप्रतिपत्तिनिरसनार्थः प्रथमस्तवक आचार्यप्रवरेण गुगुम्फि । द्वितीये च अदृष्टादिसद्भावेऽपि वेदानामाप्तोक्तत्वेन प्रामाण्यावधारणादाप्तो वेदकर्ता कश्चिदीश्वर इति न संभवति, अन्यथापि तेषां नित्यनिर्दुष्टतया स्वतःप्रामाण्यावधारणात्तद्बोधितस्वर्गादिसाधनयागादौ प्रवृत्तिसंभवादित्याशयवान्मीमांसको द्वितीयः प्रतिवादी प्रत्यवतिष्ठते तन्मतखण्डनेनेश्वरसिद्धिः प्रसाधिता । तृतीये–भवतु वेदानां पौरुषेयत्वादाप्तोक्तत्वं तदभावावेदकप्रमाणसद्भावात्, क्षित्यादेः कर्तृजन्यत्वे च प्रत्यक्षबाधान्नेश्वरः कथमपि सिध्येदिति सौगतमतनिराकरणमकारि । सन्नपीश्वरो न प्रमाणम्, यतः प्रमाणपदं हि भावकरणकर्तृव्युत्पत्त्या प्रमातत्साधनतदाश्रयेषु प्रवर्तते, तथाचेश्वरः कर्ता स्यात्प्रमावांस्तत्करणेन्द्रियादिमांस्तत्समवायिकारणं च स्यान्न चायं तथेति विपर्ययानुमानादिति वादी दिगम्बरश्चतुर्थश्चतुर्थे स्तवके दूषितः श्रीमदाचार्यपादैः । पञ्चमे च स्तवके नैयायिकैः क्षित्यादेः कर्तृजन्यत्वेनेतरबाधादीश्वरकर्तृकत्वं साधनीयम्, स च हेतुः शरीरजन्यत्वाद्युपाधिग्रस्ततया न साधकः संभवतीति निरीश्वरसांख्यमतविप्रतिपत्तिखण्डनपुरस्सरं साधकयुक्तिगणैरीश्वरं साधयित्वा तन्मूलकमेव श्रुतिस्मृतिपुराणेतिहासादीनामव्ययावत्प्रामाण्यमुररीक्रियते । वैदिकधर्मप्रामाण्यवादिभिर्मानवैरतः प्रधानतयेश्वरसिद्धिरेवास्य ग्रंथस्य निर्मितौ आचार्यचरणानां प्रयोजनम् । एवं चेश्वरो वर्तते न वेति संशयबीजविप्रतिपत्तिनिरसनमुखेनेश्वरसिद्धेर्जागरूकत्वात्तदाज्ञापत्र(१)रूपश्रुतिस्मृतीतिहासपुराणाद्यनुसृत्या तद्विहिताचरणसंपन्नानां हृदि सुविमलां पुरुषार्थचतुष्टयलब्धिहेतुकां शेमुषीमुत्काज्ञापत्रानास्थया तन्निषिद्धाचारवतां च स्वान्ते विपरीतां बुद्धिं प्रयच्छन्नीश्वरो जीवकर्मानुरूपाणि सुकृतदुष्कृतफलानि भोजयन्कर्मसापेक्षतया न वैषम्यनैर्घृण्यदोषदूषितो भवति, अत एवोक्तं भगवता व्यासेन वेदान्तब्रह्मसूत्रेषु **'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति** २–१–३४ इति । अस्मिंश्च सूत्रे तथाहि दर्शयति इतिवाक्यैकदेशेनैतद्विषये **'पुण्येन पुण्यं लोकं नयति पापेन पापम्'** ( प्रश्नो० ३।७ ) **'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन'** (बृह० ३।२।१३) **'कर्मवैचित्र्यात्सृष्टिवैचित्र्यम्'** ( ६।४१ ) इत्यादिना कर्मनिमित्तं रचनावैविध्यमतो न परमात्मनि कश्चिद्दोष इति श्रुतिप्रामाण्यं स्फुटीचकार सूत्रकारः । कर्मानुगुणमतिप्रेरकोऽपि स एवेत्यत्रापि ।

---

( १ ) अतएवोक्तं वाधूलस्मृतौ–श्रुतिस्मृती ममैवाज्ञे यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥ इति ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥'

इति गीतावचनं प्रमाणम् ।

इत्थं प्राधान्येनात्र महानिबन्धे परमेश्वरतदवतारादीनां दृढप्रमाणैरवधारयितुर्न्यायाचार्यविरुदावलीसमलङ्कृतस्याचार्योदयनभगवतः समयचारित्र्यादैतिह्यं भूतपूर्वैर्वाराणसेयराजकीयसंस्कृतमहाविद्यालयीयपुस्तकाध्यक्षैः श्री पं० विन्ध्येश्वरीप्रसादद्विवेदिमहोदयैः काशीस्थचौखम्बासंस्कृतसीरीजाभिधपुस्तकमालायां प्रकाशितायां न्यायवार्तिकभूमिकायां, तत्रैव प्रकाशिते चात्मतत्त्वविवेकेऽस्माभिरपि विस्तीर्य वर्णितप्रायमतस्तत्रैव द्रष्टव्यम् ।

आचार्येण वैशेषिके **किरणावली, लक्षणावली, न्याये न्यायनिबन्धाख्या तात्पर्यपरिशुद्धिः, न्यायपरिशिष्टापरपर्याया न्यायसूत्रवृत्तिरात्मतत्त्वविवेकश्च** यया पाण्डित्यपूर्णया रचनया विरचितास्तां विदन्त्येव प्राचीनन्यायवैशेषिकदर्शनहार्दज्ञा नैयायिकाः । स चायमाचार्यप्रवर इतः पूर्वं ११०५ पंचाधिकैकादशशततमिते वैक्रमे वर्षे नवाधिकसप्तशत ७०९मिते शकाब्दे वा प्रादुर्भूतस्य भगवतः शंकराचार्यस्य कियत्कालानन्तरमाविर्बभूवेत्यत्र—

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

इति तदुक्त्यैव निर्धार्यते ।

एतद्विरचितोऽयं न्यायकुसुमाञ्जलिर्द्विविधः—एको हरिदासमहेशचन्द्रन्यायरत्नप्रभृतिभिर्व्याख्यातः केवलकारिकात्मकोऽपरश्च गद्यपद्यात्मको वरदराजवर्धमानोपाध्यायादिभिष्टीकाग्रंथैः समुपबृंहितः । अस्य च पूर्वं वाराणसेयचौखम्बासंस्कृतपुस्तकालयमालायां ई० १९१२ हायने वर्धमानकृतप्रकाशेन, रुचिदत्तविरचितमकरन्देन च समलङ्कृतस्य महामहोपाध्यायस्वर्गस्थलक्ष्मणशास्त्रिभिः संस्कृतस्य प्रकाशनमभूत् , किन्तु तस्याधुनाऽप्राप्यत्वाद्बोधिन्याश्च वरदराजकृताया वाराणसेयराजकीयसरस्वतीभवनात्प्रकाशिताया दुष्प्रापतया चास्मिन्संस्करणे बोधिनी, मेघठक्कुरकृतं जलदापरपर्यायं प्रकाशिकाख्यं प्रकाशव्याख्यानं, मैथिलनैयायिकश्रीबच्चाझाकृता टिप्पणी च संनिवेशिता । एवं समुदितव्याख्यात्रयोपेतप्रकाशबोधिनीसहितस्य सर्वाङ्गपरिपूर्णस्य न्यायकुसुमांजलेः प्रातःस्मरणीयानामस्मद्गुरुप्रवराणां महामहोपाध्यायानां श्रीवामाचरणभट्टाचार्याणामन्तिमान्तेवासिभिर्न्यायाचार्यश्रीपद्मप्रसादभट्टराइभिर्महता श्रमेणारब्धेऽस्य संपादने तेषां नेपालराजकीयकाठमाण्डूस्थितराजकीयसंस्कृतमहाविद्यालये प्रधानाचार्यत्वेन नियुक्ततया तत्र गमनेन तृतीयस्तवकमारभ्य काशीस्थचौखम्बासंस्कृतपुस्तकालयाध्यक्षैः श्रेष्ठिकुलावतंसैर्जयकृष्णदासमहोदयैरस्य संस्करणस्यावशिष्टसंपादनकार्येऽहं न्ययोजिषि । ऐषमे संस्करणे प्रकाशमकरन्दसहितं पूर्वनिर्दिष्टमेकमेव पुस्तकं प्रायशः शुद्धमादर्शत्वेनावलम्बितम् । जलद( प्रकाशिका )टिप्पण्योश्चादर्शपुस्तकाश्रयेण लेखकलिखिते भट्टराइमहोदयैः संशोधिते द्वे एव । बोधिन्याश्च वरदराजकृताया उपरिनिर्दिष्टं प्रायः शुद्धमेकमेव पुस्तकमादर्शभूतमस्माभिरुपलब्धम् । स चायं वरदराजः कस्मिन्समये बभूव, मध्यकौमुदीलघुकौमुद्योर्व्याकरणग्रंथयोस्सम्पादकाद्भिन्नः स एव वेति सन्देहे प्रायशो मिथिलादेशवासी रामदेवमिश्रतनूजोऽयमीस्वीयपंचदशशताब्द्यां बभूवेति वदन्त्यैतिह्यज्ञाः । कुसुमांजलिहार्दप्रकाशनपुरस्सरमक्षरार्थसंगतिद्वारा व्याख्यां प्रकुर्वाणेन वरदराजेनाऽन्येभ्यो व्याख्याकारेभ्यः प्रथितनैयायिकप्रचुरभारतवर्षा-

दन्यत्राप्यनेन व्याख्यानेन कुसुमांजलिरहस्यजिज्ञासूनामीश्वरेऽनास्थां विदधतां गीर्वाणवाणीसुबुद्धानां वैदेशिकानामुपकृतिर्भवेदिति बोधनी विरचितेति वैलक्षण्यमत्र प्रतीयते यतस्तेनैवोक्तं मङ्गलान्ते—

औदयने पथि गहने विदेशिकः प्रतिपदं स्खलति लोकः।
तस्य कृते कृतिरेषा कुसुमांजलिबोधनी जयतीति ॥

लघुकौमुद्यादिरचयिता तु वरदराजोऽस्माद्भिन्न एवेति प्रतीयते। यद्यपि पंचदशशताब्द्या अन्ते वर्तमानेन रामचन्द्रविदुषा रचितायाः प्रक्रियाकौमुद्या व्याख्याता वरदराजोऽपि तत्समय एव प्रायशो बभूव, अन्नंभट्टादिवन्न्यायव्याकरणादिशास्त्रपांडित्यमपि तस्य संभवतीत्यत्रापि न कापि क्षतिस्तथापि तस्य जनको भट्ट…नामोत्तरप्रदेशवासीति विभिन्न एवायं वरदराज इति सिद्धान्तः। पूर्वमीमांसाभिज्ञः कश्चिदन्योऽपि वरदराज इति मीमांसकाः प्राहुः।

न्यायकुसुमाञ्जलिप्रकाशकारो न्यायाद्यनेकशास्त्रपारावारपारदृश्वा वर्धमानोपाध्यायस्तु मिथिलादेशे दरभङ्गामण्डलान्तर्गत'करियन'ग्रामे जातस्तत्त्वचिन्तामणिकृद्गङ्गेशोपाध्यायस्यापरगौतममूर्तेरात्मजः।

अत एवोक्तं न्यायकुसुमांजलिप्रकाशारम्भे—

न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने।
गङ्गेश्वराय गुरवे पित्रेऽत्र भवते नमः ॥ इति।

'यस्तर्कतन्त्रशतपत्रसहस्ररश्मि'रित्यादिकिरणावलीप्रकाशे च वर्धमानोपाध्यायाः। अस्य गणरत्नमहोदधिकारस्य च तत्तद्ग्रन्थेषु वर्धमाननाम्नैव प्रसिद्धिसत्त्वेऽपि समयैक्यासंभवाद्गुरोर्नामभेदाच्च गणरत्नमहोदधिकारोऽन्यः स्वकीयग्रन्थे जैनेषु गौरवं प्रदर्शयन् जैन इति प्रतीयते, स च वर्धमानसूरिर्गोविन्दसूरिशिष्य इति तद्वृत्तौ स्वयमेव लिखितवान्।

सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु।
वर्षाणां वक्रिमतो गणरत्नमहोदधिर्विहितः ॥

इत्यप्युक्तम्। अनेन च गौतमसूत्रतत्त्वचिन्तामणिन्यायलीलावतीप्रभृतयोऽनेके ग्रन्था व्याख्याताः। किरणावल्याद्या आचार्यग्रन्था अपि सर्वे व्याख्याताः। स चायं मिथिलादेशजातो विद्वद्वरेण्यः दशमशताब्द्यां वर्तमानादुदयनाचार्यादनन्तरकालिको द्वादशशताब्द्यां बभूवेति निर्धारितमस्माभिर्न्यायलीलावतीभूमिकायाम्।

कुसुमांजलिप्रकाशग्रन्थस्य प्रकाशिकाख्यव्याख्याकारो भगीरथठक्कुरापरपर्यायो मेघठक्कुरोऽपि मैथिलः। अयं च पक्षधरमिश्रशिष्य इति किंवदन्ती, 'विंशाब्दे जयदेवपण्डितकवेरि'त्याद्यभियुक्तोक्त्या चायं जयदेवसमकाले विंशाब्दे तदनन्तरं वा विंशाब्दे बभूवेति इतिहासतत्त्वज्ञाः। अनेनापि वर्धमानोपाध्यायनिर्मिताः सर्वे प्रकाशग्रंथा व्याख्याता इत्यनुमीयते। उपलभ्यन्ते च किरणावलीप्रकाशप्रकाशिका, न्यायलीलावतीप्रकाशप्रकाशिका एतदतिरिक्ता ग्रन्थाः।

प्रकाशव्याख्यां मकरन्दाभिधया टीकया समुद्भासयतो महामहोपाध्यायरुचिदत्तमिश्रस्य विषये त्वियं किंवदन्ती जागर्ति—यदेष मिथिलामण्डलान्तर्गतसोदरपुरवास्तव्यो देवदत्तमिश्रसूनुः

पीयूषवर्षजयदेवापरनाम्नो पक्षधरमिश्रस्य प्रधानोऽन्तेवासी नव्यन्यायप्राचीनन्याययोरतत्त्वज्ञस्तत्कालिकनैयायिकेष्वतीवप्रसिद्धनैयायिको बभूवेति ।

अत एवोक्तं तत्त्वचिन्तामणिप्रत्यक्षखण्डपुष्पिकायां—

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥ इति ।

तथा—

श्रीदेवदत्ततनयो विनयोपगूढः श्रीरेणुकाविरलगर्भपुटोपजातः ।
श्रीशक्तिदत्तमतिदत्तसहोदरो यः सोऽमुं चकार रुचिदत्तकृती प्रकाशम् ॥

इति श्रीसोदरपुरकुलसमुद्भूतमहामहोपाध्यायश्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे । अनेन न्यायकुसुमांजलिप्रकाशे मकरन्दव्याख्या, तत्त्वचिन्तामणिप्रकाशः, तर्कपादः, तर्कसारश्च स्वतंत्रो व्यरचीति प्रसिद्धिः । एतत्समयविषये त्वनेकमतानि प्रतीयन्ते, तद्यथा सुरेन्द्रनाथगुप्तमहोदयमतेनायमीस्वीयत्रयोदशशताब्द्यां १२७५ वर्षे बभूवेति । सार्धदशकोत्तरं त्रयोदशशताब्दिमध्येऽस्य स्थितिरासीदिति च तार्किकरक्षायां वाराणसेयभूतपूर्वराजकीयसंस्कृतमहाविद्यालयीयप्रधानाचार्या महामहिमशालिनो डॉ० वेनिसमहाशया दर्शयन्ति स्म ।

वस्तुतस्त्वनेकशाखाविस्तृतस्य नव्यन्यायशास्त्रस्य बीजाधानं विदधतः श्रीगङ्गेशोपाध्यायस्य शिष्येण पुत्रेण च प्रकाशकर्त्रा द्वादशशताब्द्यां वर्तमानेन सुयोग्यस्तात्कालिको यज्ञपतिरध्यापितः । यज्ञपतिशिष्यश्च हरिमिश्रस्तस्य च पक्षधरमिश्रः । तेन च वासुदेव-रुचिदत्त-चन्द्रपतिरिति त्रयोऽन्तेवासिनः प्राधान्येन न्यायशास्त्रमध्याप्य भारतं वर्षं स्वनामकीर्तिपताकया समलङ्कृतमभूत् । तेषु रुचिदत्तमिश्रस्य शिष्यो महेशठक्कुरो महामहिम्नो अकबरनाम्नो यवनराजस्य समये ई० १५५६ हायने षोडशशताब्द्यामेवाभूदतत्समय एव रुचिदत्तस्य स्थितिरासीदिति सिद्धान्तः ।

अयं च सिद्धान्तो—

वेदैर्बाणयुतैः सशंभुनयनैस्संख्यां गते हायने
श्रीमद्गौडमहीभुजो गुरुदिने मार्गे च पक्षेऽसिते ।
षष्ठ्यांताममरावतीमधिवसन् या भूमिदेवालया
श्रीमत्पक्षधरः सुपुस्तकमिदं शुद्धं व्यलेखीद्द्रुतम् ॥

इति च वचनेन १४५१ A. D.-१८६५ A. D. समयस्थितिकस्य पक्षधरमिश्रस्य समयनिर्धारणेन परिपुष्टो भवतीति सुधीभिर्विभावनीयम् ।

टिप्पणीकारा धर्मदत्तापरपर्यायश्रीबच्चाझामहोदयास्तु मिथिलाप्रदेशान्तर्गतनवानीनाम्निग्रामे १९१७ वैक्रमाब्दे दरभंगाधीश्वरश्रीरुद्रसिंहमहाराजराजपण्डितानां रत्नपाणिझामहोदयानां तनुजन्मनो पं० दुर्गादत्तझानाम्नो विदुषः पुत्रः सुगृहीतनामधेयो धर्मदत्तनाम्ना बच्चाझापरपर्यायेण प्रथितो बभूव । स च गृह एव प्रारंभिकमध्ययनं समाप्य टाढीग्रामनिवासिनो विद्वन्मूर्धन्यस्य पं० विश्वनाथझाविदुषः समीपे किंचित्कालमध्ययनं कृत्वा तत्कालीनप्रसिद्धनैयायिकप्रवरस्य पं० बबुजनझाविदुषः प्राधानान्तेवासित्वमवाप्य न्यायवैशेषिकशास्त्रे व्युत्पत्तिमावाप्तवान् । पश्चाद्वाराणस्यां

सुप्रथितविदुषो महायोगिनः श्रीविशुद्धानन्दसरस्वतीमहोदयस्य चरणचंचरीकतामंगीकृत्य पूर्वोत्तर-मीमांसाहार्दं विज्ञाय सुप्रौढपाण्डित्यं लेभे।

पश्चान्मिथिलाप्रचलितां स्वगृहे एव चतुष्पाठीमुद्धाव्याध्यापनं चकारेति वदन्ति तत्रस्थाः। तत्र-भवतोऽध्यापनचातुरीमाकर्ण्य देशान्तरस्थाश्छात्रगणा यन्निकटेऽधीत्य देशान्तरेऽपि यत्कीर्तिपताकां प्रकाशितवन्तः। कदाचिद्यत्पाण्डित्यसंतुष्टा द्वारिकापीठाध्यक्षाः शंकराचार्या अपि सादरमाहूय यत्समीपे शास्त्राध्ययनमकुर्वन्त। 'सूरत' इत्यत्रायोजितेऽखिलभारतीयपण्डितसमाजेऽपि प्रधानपदं येनालङ्कृतमभूत्। भृतकवृत्तिमपह्नुवानेनापि येन मिथिलाधीशश्रीरमेश्वरसिंहराज्ञामनुरोधेन धर्म-समाजसंस्कृतकालेजमुजफ्फरनगरप्रधानाचार्यपदमलंकृतम्। स चायं वैक्रमे १९७८ वर्षे देवपुरातिथि-र्बभूव वच्चाझामहोदयः। अयं च कविताशक्तिप्रतिभया सुलोचनामाधवचंपूनामकं चंपूकाव्यमपि निर्ममे। एतत्कृतग्रंथाः—

| | |
|---|---|
| १. व्याप्तिपंचकटीका। | ७. सिद्धान्तलक्षणविवेचनम्। |
| २. अवच्छेदकत्वनिरुक्तिविवेचनम्। | ८. व्याप्त्यनुगमविवेचनम्। |
| ३. व्युत्पत्तिवादगूढार्थतत्त्वालोकः। | ९. शक्तिवादटिप्पणम्। |
| ४. सव्यभिचारटिप्पणम्। | १०. सत्प्रतिपक्षटिप्पणम्। |
| ५. खण्डनखाद्यटिप्पणम्। | ११. कुसुमांजलिप्रकाशटिप्पणम्। |
| ६. न्यायभाष्यटीका। | १२. अद्वैतसिद्धिचन्द्रिकाटिप्पणम्। |

सोऽयं कुसुमांजलिग्रन्थोऽद्य यावदप्रकाशिताभ्यां जलदापरपर्यायप्रकाशिकाटिप्पणीभ्यां सह महता श्रमेण यथामति संशोध्य विदुषामग्रे उपस्थापितः। अत्र च पंचमस्तवकान्ते प्रकाशिकायां मकरन्दे च पृष्ठे प्रदर्शितस्य **चकरोति, आगन्तुकेति च** प्रतीकद्वयस्य मुद्रितप्रकाशपुस्तकेऽद-र्शनाल्लिखितादर्शप्रकाशपुस्तकप्राप्त्यर्थमस्माभिः प्रयत्नो विदधे, किन्तु वाराणसेयसरस्वतीभवनाख्य-राजकीयपुस्तकालयेऽपि केवलमेकं चतुर्थस्तवकमात्रस्य पुस्तकं वर्तते न तु पूर्णमेकमपि। मकरन्दप्रका-शिकयोश्चादर्शपुस्तके वंगाक्षरे वरीवर्तेते, तयोरपि चोक्तप्रतीकद्वयमुपलभ्यैतन्निर्धारितं यत्प्रकाशस्थो-यमन्तिमो भागोऽवश्यं भ्रष्टो नोपलब्धः पूर्वप्रकाशकैरिति स्वयमूहनीयं नैयायिकप्रवरैः।

निरीश्वरवादिमतोन्मूलनक्षमस्यैकमात्रस्यास्य महानिबन्धस्य संशोधनकार्यं मादृशामल्पबुद्धीनां यद्यप्युडुपेन सागरतितीर्षोरिवोपहासकरन्तथापि प्रातःस्मरणीयानां गुरुचरणानामसीमानुग्रहबलादेव यथाकथंचित्पूर्णतां गतमिति तदुपकृतीर्भूमिकालेखने ऐतिह्यसाहाय्यं ददतां वाराणसेयराजकीयसंस्कृत-महाविद्यालयप्रधानपुस्तकालयाध्यक्षाणां डॉ० सुभद्रझामहोदयानां चोपकारान् यावज्जीवं न कदापि विस्मरिष्यामः।

वाराणसेयागस्त्याश्रमवासी<br>कार्तिकपूर्णिमा<br>२०१३

विदुषामनुचरः<br>ढुण्ढिराजशास्त्री।



मेघठक्कुररचितप्रकाशिका( जलद )युतेन रुचिदत्तोपाध्यायकृतमकरन्दो-
द्भासितेन झोपाख्यधर्मदत्तनिर्मितटिप्पणयान्वितेन वर्धमानोपाध्यायकृत-
प्रकाशेन वरदाराजकृतबोधन्या च सहितः ।

महामहोपाध्यायश्रीमदुदयनाचार्यप्रणीतः

# न्यायकुसुमाञ्जलिः

बोधनी ।

विशदयितुमर्थतत्त्वं विनिहन्तुं चान्तरीयसन्तमसम् ।
मम मनसि सन्निधत्तां नरहरिशवलाकृति ज्योतिः ॥ १ ॥
विश्वं यो विदधात्यदृष्टसचिवः सत्सम्प्रदायो यतः
प्रामाण्यं लभते श्रुतिर्गुणवतो वक्तुर्यतो नान्यतः ।
यस्मिन् बाधकशङ्कयापि विगतं-माता च मानं च यः
सिद्धो यः श्रुतिनीतिसम्भवशतैस्तं मन्महे मानतः ॥ २ ॥

प्रकाशः ।

भक्तानां कामदस्तुष्टो रुषा कामं दहन्नपि ।

प्रकाशिका ।

भासयन्भक्तजनताचेतःकमलकोरकान् ।
वन्दे सन्देहतिमिरविच्छेदमिहिरं महः ॥ १ ॥
यः कैशोरे विश्वविख्यातकर्मा धर्म्माचार्यः श्रीमहादेवशर्मा ।
तत्सोदर्य्यो वर्द्धमानस्य सूक्तौ भावं मेघः सम्यगाविष्करोति ॥

**कामद इति । कामः** = काम्यं काम्यत इति व्युत्पत्त्या, अथ च **कामः** = कन्दर्पः, कामं

मकरन्दः ।

भूतप्रभूतविकटध्वनिभीतिमत्या मानग्रहं मनसि धर्तुमपारयन्त्या ।
आलिङ्गितो गिरिजया चिरमस्मदादेरङ्गेषु मङ्गलमनङ्गरिपुर्दधातु ॥ १ ॥
कुसुमाञ्जलिमकरन्दः श्रीरुचिदत्तेन भण्यते कृतिना ।
स्तवकोपमर्दभाजां बुधमधुपानां विनोदाय ॥ २ ॥

**कामं दहन्नपि कामद** इति विरोधाभासः । **कामः** = काम्यम् , अर्शआदित्वात् कर्मणि

टिप्पणी ।

श्रीगणेशाय नमः । **भक्तानां कामद इति** । काम्यत इति कामः, काम्यम् । **कामं**

# सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो

बोधनी ।

औदयने पथि गहने विदेशिकः प्रतिपदं स्खलति लोकः ।
तस्य कृते कृतिरेषा कुसुमाञ्जलिबोधनी जयति ॥ ३ ॥

प्रारिप्सितप्रकरणव्युत्पाद्यस्य परमात्मविषयन्यायस्य प्रसिद्धसमाराधनसाधनप्रसूनाञ्जलिसाधर्म्यप्रदर्शनेन पञ्चरूपोपपत्तिसम्पत्तिलक्षणां विशुद्धिं निःश्रेयसात्मकं फलं च प्रतिपाद्य तथाविधन्यायव्युत्पादनेन परमात्मसमाराधनतया परिकल्पितेन परमात्मनिरूपणेन स्वारसिकश्रद्धायुक्तस्य स्वान्तःकरणस्याविहतश्रद्धावत्त्वमारिप्सितग्रन्थाविघ्नपरिसमाप्तिफलमाशास्ते—**सत्पक्षप्रसर इति । सति** प्रमाणसिद्धे प्रमाणाबाधिते च **पक्षे** सन्दिग्धसाध्यधर्मवति धर्मिणि प्रसरतीति **सत्पक्षप्रसरः** । तेनाश्रयासिद्धिकालात्ययापदेशसिद्धसाधनानां मूले निहितः कुठारः। **सत्पक्षे प्रसरः** प्रकर्षेण सरणं व्याप्त्या वृत्तिर्यस्येति भागतोऽपि स्वरूपासिद्धेरुद्धारः । कुसुमाञ्जलिस्तु सन् शोभनः पक्षप्रसरः पत्रविकासो यस्येति स तथोक्तः । **सताम**न्वयव्यतिरेकविदामागमावगततत्त्वानां वा **परिमलः** परिशीलनं भूयोदर्शनमिति यावत् , तज्जनितः **प्रोद्बोधः** भूयोदर्शने साहायकमाचरतानुकूलतर्केण निरस्तनिखिलोपाधिशङ्कं व्याप्तिज्ञानं, तत्र **बद्ध उत्सवो**ऽपेक्षा येन स तथोक्तः गृहीतव्याप्तिक इति यावत् । यद्वा तेन प्रोद्बोधेन स्वस्मिन् बद्धोत्सवः बद्धापेक्षः अनुसित्सतां गृहीतव्याप्तिकत्वादपेक्षणीय इत्यर्थः । अथवा सामान्यव्याप्तिमतया परिशीलनस्य **प्रोद्बोधो** विशेषे पर्यवसानं, तेन **बद्धः** स्थिरीकृतः **उत्सवः** पर-

प्रकाशः ।

अपि ज्ञानमयः स्थाणुर्यस्तमीशं स्तुवीमहि ॥ १ ॥
यतः प्रकाशते ज्योतिरपि वाचामगोचरः ।
कायेन मनसा वाचा परां वाचं नमामि ताम् ॥ २ ॥
न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥ ३ ॥

सदाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितप्रतिबन्धकविघ्नविघातकमिष्टदेवताकीर्त्तनरूपं सच्छब्दप्रयोगरूपञ्च मङ्गलमाचरन्नेव प्रयोजनाभिधेयसम्बन्धानाह । **सत्पक्षेति । एषोऽनघो =**

प्रकाशिका ।

दहन्नपि कामद इति विरोधद्योतनायापिः । **ज्ञानमय** इत्यभिव्याप्तौ मयट् , यथा जलमयो देश इत्यत्र, व्याप्तिश्च देशकालाभ्याम्, इदञ्चेशस्येश्वराभिन्नत्वपक्षे, अन्यथा शिवस्य संसारित्वेनानुपपत्तेः। **स्थाणुः**=शिवः, स्थाणुर्दारुविशेषोऽपि ज्ञानमय इति विरोधद्योतनायापिः, **स्तुवीमहीति ।**

मकरन्दः ।

प्रत्ययाद्वा । **स्थाणुः**=स्थिरः, अथ च स्थाणोर्दारुविशेषस्य ज्ञानसम्बन्धो विरुद्ध इति विरोधाभासः । यद्यपि वृक्षादेरपि चेतनत्वं, तथापि दारुविशेषे न तथात्वम् । यद्वा **ज्ञानमय** इत्यभिव्याप्तौ मयट् , भगवज्ज्ञानस्य व्याप्यवृत्तित्वादिति विरोधाभासः ॥

टिप्पणी ।

**दहन्नपीति** । रोपतोपयोः समानकालिकयोस्तात्त्विक एव विरोधः काम्यकन्दर्पयोरेकशब्दप्रतिपाद्यत्वेन तद्दाननाशकत्वयोरारोपितो विरोधः शतृप्रत्ययेन सहापिना द्योत्यते, तेन च महिमातिशयो व्यज्यते। इदञ्च विग्रहविशेषपक्षे। ईशस्येश्वराभिन्नत्वपक्षे त्वाह । **अपीति ।** मयटोऽभिव्याप्त्यर्थकत्वम् , व्याप्तिर्देशकालाभ्याम् तथा च विग्रहविशेषपक्षे तदभाव इति भावः। **अनघो वाक्यदोष**

बोधनी ।

मात्मोपासनेच्छा येनेति । एतदुक्तं भवति आगमावगते परमात्मनि व्याप्तिवशेन भूयस्तत्संवादिप्र-
मित्युत्पादनेन तदुपासने श्रद्धां निश्चलामावद्धवानिति । अनेन स्वरूपतो ज्ञानतश्च व्याप्यत्वासिद्धेः

प्रकाशः ।

वाक्यदोषरहितः, विषया(१)शुद्धेः पूर्वार्द्धेनैव निरासात् । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति

प्रकाशिका ।

नतिवत् स्तुतेरपि मङ्गलत्वमिति भावः । अघशब्दस्य पापवाचकत्वेन प्रकृतासङ्गतिरत आह—**वाक्यदोषरहित इति** । तथापि दोषसामान्यपरतैव किन्नेत्यत आह—**विषयेति** । तथा च तेन समं पौनरुक्त्यं मा भूदिति विशेषपरतेति भावः । न चैवमनघत्वमित्यग्रिमग्रन्थविरोध इति वाच्यम् । तस्य पूर्वोक्तमनघत्वन्नार्थः, किन्तु दोषसामान्याभाव एव, तथा च श्लोकस्थानघशब्देन वाक्य-दोषाभावे पूर्वार्द्धेन चार्थदोषाभावे लब्धे भवति सामान्याभावलाभ इति तदर्थात्, अत एव तत्रोक्त-मुपपादयन्निति न तूपपादयितुमिति । केचित्तु वाक्यपदं सम्पातायातं, कथं दोषसामान्याभावलाभ इत्यपेक्षायां **विषयाशुद्धेरेति** फक्किका । न चैवमपि शब्ददोषाभावालाभादयुक्तता, न्यायप-देन नीयत इति व्युत्पत्त्या बोधकमात्रपरेण तल्लाभादिति न पूर्वोत्तरग्रन्थविरोधशङ्केति वदन्ति । न्यायपदस्यानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यपरतायां पौनरुक्त्यमनघ-पदेन समं शब्दतोऽर्थतो वा स्यादत आह **नीयत इति** । तथा च योगार्थ एव न्यायपदेन विवक्षितो

मकरन्दः ।

अनघत्वमपापत्वमत्राप्रकृतमित्यत आह । **वाक्यदोषेति, वाक्येति** स्वरूपनिर्वचनम् । तथाच दोषराहित्यमात्रमत्र विवक्षितम् । तत्र दोषो द्विविधो वाक्यस्य, अर्थगतो वाक्यगतश्च, तत्र पूर्वार्द्धश्लोकेन आद्ये निरस्तेऽपि अन्त्यस्य निरासो न लभ्यत इत्यर्थः । नन्वेवमर्थदोषनिब-न्धनदोषविशेषाभावे लब्धेऽपि तत्सामान्याभावो न लब्धः, शब्ददोषात्मकविशेषाभावस्याप्रा-प्तत्वादित्यत आह । **नीयत इति** । तथाच बोधकत्वेन सोऽपि सूचित इति भावः । नचैवं

टिप्पणी ।

**रहित इति** । अघशब्दस्य दोषविशेषपरत्वे हेतुमाह । **विषयेति** । तथा च सामान्यपरत्वे पूर्वा-र्द्धेन सममनघपदस्य पौनरुक्त्यं, पूर्वार्द्धस्य प्रयोजनशून्यतापि स्यादिति भावः । न्यायपदेनानुमिति-चरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यस्य विवक्षणेऽयोग्यापार्थकनिराकाङ्क्षादिवाक्या-च्छाब्दबोधाभावात् शब्दार्थदोषशून्यत्वलाभाद् विमर्दन इत्यन्तेनानघपदेन च पौनरुक्त्यं, ग्रन्थे न्यायेतरभागस्यानिवेशप्रसङ्गश्च स्यादित्यत आह । **नीयते इति** । तथा च स्वार्थ-स्मृत्युत्पादितमानसद्वारेण क्वचिद्विवक्षितार्थसिद्धिप्रापका यथोक्तशब्दा अपि भवन्तीति तयोरुप-न्यास इति न पौनरुक्त्यम्, एवं समुदितग्रन्थस्यैव विवक्षितेश्वरानुमितिप्रापकतया न्यायपदा-र्थता, तेन च तर्कपक्ष इत्याद्यग्रिमफक्किकाया अपि नासङ्गतिः । अन्यथा पञ्चावयववाक्यरूपस्य तर्काप्रतिपादकत्वेन सा स्यात् । एवं यथोक्तन्यायस्य शब्दाप्रतिपादकत्वेन पदद्वयस्य शब्दानुसा-नद्वयपरत्वे बाधितार्थत्वेन तत्र ग्रन्थविरोधलिखनमयुक्तं स्यादित्यपि प्रत्युक्तम् । यद्वा समस्तरूपे-त्यादितात्पर्यविषये उचितानुपूर्वीकवाक्यपञ्चकसमुदाये न्यायपदार्थतायानीयत इत्यादिना योगार्थो-ऽपि प्रदर्शितः । न्यायस्य तर्कविषयत्वासम्भवमाकलय्यैवान्वयीत्यादि व्याख्यान्तरानुसरणम् । अत्र न तु शब्देत्यादिग्रन्थस्त्वाचार्याणां शोचनीयतामासादयतीति विभाव्यम् । विवक्षितार्थसिद्धिप्रापकत्व-

(१) वाक्यजन्यशाब्दबोधविषयार्थस्य अशुद्धेः=दोषस्य बाधितत्वादेर्हेत्वाभासस्येति यावत् ।

बोधनी ।

कण्ठतः कुण्ठनम् । अनध्यवसितसव्यभिचारयोर्विरुद्धस्य चार्थतो निरासः । अन्यत्र, **सतां** श्लेष्मा-द्यनुपहतघ्राणानां सौरभोद्गारेण विहितप्रीतिः स्वस्मिन् वद्धेच्छो वा । प्रतिप्रमाणैः प्रतितर्कैश्च **विम-**

प्रकाशः ।

**न्यायः** = समस्तरूपोपपन्नलिङ्गबोधकवाक्यजातम् , स एवाह्लादकतया प्रसूनम् ; तदेवावान्तर-वाक्यघटितत्वेन अञ्जलिः । मम चेतः, अविघ्नं यथा स्यादेवं **रमयतु** = दुःखसामग्रीविहीनं करोतु । ईशस्य पदयुगे **रमयतु** = तदेकाग्रं करोत्विति वा । मनः कीदृशम् ? **भृङ्गायमाणम्** , भृङ्ग इव मकरन्दे संसारिणां दुःखविगमोपाये सतृष्णम् **भ्रमद्** = अनुसरत् । दुःखविगमोपायम् इत्य-र्थात् , तत्र सतृष्णस्य तदन्यानुसरणानौचित्यात् , तत्साधनानुसरणस्यापि तदर्थतया तदनुसरण-रूपत्वात् । परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानोच्छेदे तृष्णा भवत्येवेत्यनुभवसिद्धम् ।

यद्वा, मम चेतो **रमयतु** = सफलयतु । परोपकारकरणाद् **भृङ्गायमाणम्** उपकारलुब्धम् । **भ्रमत्** = दुःखितमुपकर्तुं व्याप्रियमाणमित्यर्थः ।

तथापि भूयसो धूमादिविषयस्य न्यायस्य सत्त्वात् किमनेनेत्यत आह–**ईशस्य पदयुगे** =

प्रकाशिका ।

न रूढ्यर्थ इति भावः । विवक्षितार्थप्रतिपादकत्वमपि न साक्षादिति द्वाराकाङ्क्षायामाह **समस्तेति । अवान्तरेति ।** वाक्यपदमत्र प्रकृताभिप्रायम्, अवान्तरघटितत्वमात्रं विवक्षितम्, अन्यथा प्रसूनाञ्ज-लावनन्वयापत्तेः । प्रकृतन्यायस्य मोक्षजनकत्वात् सुखजनकत्वमसम्भवीत्यन्यथा व्याचष्टे । **दुःखसा-**

मकरन्दः ।

**समस्ते**त्यादिना विषयशुद्धेरपि लब्धत्वात् पूर्वार्द्धवैयर्थ्यम् । तत्त्वेन बोधकस्याभाससाधारणस्य विवक्षितत्वादिति भावः । केचित्तु एकविशेषाभावस्य पूर्वार्द्धेनैव लब्धत्वादपरविशेषाभावमात्रला-भार्थं **वाक्यपदम् ।** नचैवमनघत्वमित्याद्यग्रिमग्रन्थविरोधः । अनघपदेन विषयाशुद्धेरप्रतिपादित-त्वात् , अर्थदोषनिरासार्थमित्यस्यैव वक्तुमौचित्यात् । शब्ददोषद्वैविध्येनार्थदोषनिवन्धनशब्ददो-षाभावस्य ततः सम्भवादित्याहुः । अनघत्वपदं यत् क्वचित्वेऽस्ति तद्भिन्नमनघत्वं स्वातन्त्र्येण लिखितं परग्रन्थे । तत्रापि सामान्यशब्दस्यानघत्वमित्यस्य वक्ष्यमाणस्यार्थदोषरहितत्वमिति विशे-षपरत्वादित्यर्थः ।

अवान्तरघटितत्वमात्रं प्रयोजकं, वाक्येति प्रकृताभिप्रायकम् । विशिष्टस्य प्रसूनाञ्जलाव-भावाद् ।

रागित्वनिरासार्थमाह । **दुःखेति** । तर्हि तत्साधनं नानुसरेदित्यत आह । **तत्साधनेति** ।

टिप्पणी ।

मपि न्यायस्य न साक्षादतो द्वाराऽऽकाङ्क्षायामाह–**समस्तेति** । द्वारत्वं प्रतिपत्त्यन्तस्यैव, प्रतिप-त्तिरत्र मानसी, तज्जनकवाक्यजातमित्यन्तग्रन्थस्तु न्यायपदेन वाक्यसमूहरूपग्रन्थातिरिक्तस्यापि च प्राप्ततया तद्व्यवच्छेदार्थ इति ध्येयम् । प्रकृत उक्तन्यायस्य मोक्षोपायत्वेन सुखजनकत्वमसम्भ-वीत्यन्यथा व्याचष्टे । **दुःखसामग्रीत्यादि** । **दुःखविगमोपायमिति** । **अत्र** उपाय पर्य्यन्तोपादानं मकरन्दसाम्याय उपायानुसरणे तत्र सतृष्णस्येत्यादेः साम्मुख्येन सङ्गमनाय चेति । अनुसरणकर्म्मणोऽनुक्तत्वात्तदाकाङ्क्षायामाह । **दुःखेत्यादि** । अर्थतस्तल्लाभे हेतुमाह । **तत्रेत्यादि** । दुःखनाशे सतृष्णस्य तत्रानुसरणासम्भवेन तदुपायानुसरणात् उक्तन्यायविरोध इत्यत आह । **तत्साधनेति** । तथा च तदुपायानुसरणं न तदन्यानुसरणमिति भावः । **व्याप्रियमाणमिति** अतिशयेन व्यापारयुक्तमित्यर्थः । **तद्विषय उत्पादित** इति विषय-

## विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।

बोधनी ।

**र्दने** पीडने सति न म्लायति न दूष्यते, तेषां हीनाङ्गत्वेन दुर्बलत्वादिति भावः । अनेन प्रकरणसमः प्रतितर्कप्रतीघातश्च घातितः । अन्यत्र करतलादिमर्दने **न म्लानः** तदभावादेव न प्रत्यग्रापचित इत्यर्थः । यद्वा पुष्पाञ्जलिसाधर्म्यप्रसक्तविमर्दनासहत्वनिवारणेन न्यायस्य तद्वैधर्म्यमनेन प्रदर्श्यते, यथा विमर्दने सति पुष्पाञ्जलिर्म्लायति नायं तथेति । **अमृतं** ब्रह्म, रसयतीति रसस्तद्विषया बुद्धिः, तस्य **प्रस्यन्दः**=प्रवाहः ध्यानमिति यावत् । तेन यत् तस्य साक्षात्कारि ज्ञानं तद्द्वारं निर्वाणं वा, तदेव माध्वीकमिवाव्यवहितपुरुषार्थतया माध्वीकमिति गौणो वादः, तस्य **भूर्हेतुः** । श्रवणानन्तरं न्यायावधृतपरमात्मतत्त्वानां तत्त्वानुचिन्तनेन साक्षात्कार उत्पद्यते ततोऽपवर्ग इति स्थितिः । अथवा **अमृतं**=मोक्षः, तत्र **रसः**=तद्गोचरेच्छा, तस्य **प्रस्यन्दो**ऽविच्छेदेन प्रवाहः, स एव **माध्वीकं**, तस्य भूर्भूमिरिति । श्रवणसञ्जातां मुमुक्षां नास्तिककुतर्कापादितशैथिल्यापनयेन वर्द्धयतीत्यर्थः । अनेन न्यायस्य फलवत्ताप्रदर्शनेन तद्व्युत्पादकस्य प्रकरणस्यापि प्रेक्षाव-

प्रकाशः ।

पद्यते ज्ञायतेऽनेनेति व्युत्पत्त्या प्रत्यायकयुगे प्रमाणतर्करूपे । **निवेशितः**=तद्विषये उत्पादितः । अन्वयि व्यतिरेकि वा पदयुगम् । वेदस्य पौरुषेयत्वे केवलस्य व्यतिरेकिणोऽपि दर्शयिष्यमाणत्वात् । यद्वा, पदं=ज्ञानं तद्युगं तदुभयोत्पादितम्, निमित्तसप्तम्या ज्ञानद्वयार्थमित्यर्थः । प्रमाणा-

प्रकाशिका ।

**मग्रीति** । तर्कविषयो न न्याय इत्यरुचेराह । **अन्वयीति** । **वेदस्येति** । अत्र मिश्राः सम्भवप्राचुर्यादिदमुक्तम् अन्वयव्यतिरेकिणोऽप्युदाहरणद्वयभेदेन न्यायभेदस्य सर्वसम्मतेः । नचैवमपि विषयिणो न्यायस्य भेदेऽपि तद्विषयस्य प्रमाणस्य न भेद इति वाच्यम् । अन्वयव्यतिरेकव्याप्तिद्वयविशिष्टप्रमाणस्यापि भेदादित्याहुः । तच्चिन्त्यम् । तत्र व्यतिरेकव्याप्त्युपदर्शनाभावेन तादृशन्यायाप्रदर्शनेन "तत्परतामिप"इति मूलविरोधात् तादृशन्यायतात्पर्यस्य च कल्पने गौरवात् । ननु पदयुग इतीयं यद् विषयसप्तमी तद्विषयप्रतिपत्तिजनकत्वमाह, नचेह प्रमाणप्रतिपत्तिमात्रं विवक्षितं प्रयोजनास्पर्शादतस्तत्साध्यश्रुतप्रयोजनभगवदनुमितिपरतया पदपदं व्याचष्टे । **यद्वेति** । न च कर्मयोगं विना नेयं

मकरन्दः ।

ननु तर्कविषयो न न्याय इत्यरुचेराह । **अन्वयीति** । **वेदस्येति** । इदञ्च सम्भवसांकर्यादुक्तम् । वस्तुतोऽन्वयव्यतिरेकिणोऽपि उदाहरणादिभेदेन न्यायभेदस्य सर्वसम्मतत्वादिति वदन्ति । तच्चिन्त्यम् । एवमपि विषयिणो भेदेऽपि विषयस्यैक्यमेवेति युगत्वानुपपत्तेः । व्यक्तिभेदविवक्षया तथात्वेऽप्यनुपपत्तेः । आनन्त्यात् । **निमित्तेति** । न च कर्मयोगाभावान्नेयं

टिप्पणी ।

सप्तमीमनुसृत्येदम् । तद्रूपविषयार्थं तयोर्वा विषयार्थ सन्दर्भित इत्यर्थः । न चेह प्रमाणप्रतिपत्तिमात्रं विवक्षितम्, प्रयोजनास्पर्शनादतस्तत्साध्यश्रुतप्रयोजनभगवदनुमितिपरतया पदपदं व्याचष्टे । **यद्वेत्यादि** । नन्वनुमितेः कथमुभयत्वमित्यत्राह । **तदुभयेति** । यतस्तदुभयोत्पादितं तत् अतः, तथा चोत्पादकयोरन्वयिव्यतिरेकिणोरुभयत्वादेवानुमितावपि तदिति भावः । पर्य्यवसितार्थं सप्तम्या सहाह । **ज्ञानद्वयेति** । अत्र ग्रन्थे शब्दादिप्रमाणान्यपि व्युत्पादितानि सन्तीति कथमस्यानुमिति मात्रार्थत्वमत्राह । **प्रमाणान्तरेति** । तान्यपि साक्षात्परम्परयानुमितावेवोपयोगीनीत्यत्र व्युत्पादनतात्पर्य्यम् । अथ शब्दादयोऽपि कथं न स्वतन्त्रप्रमाणतया व्युत्पादनीया इत्यत्राह—

**ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-**
**चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥**

---

बोधनी ।

दुपादित्साप्रयोजिकामभिमतफलसाधनतां सूचितवानिति । अन्यत्र अमृतसमरसस्य प्रस्यन्दमानस्य मकरन्दस्य भूमिरिति । एवम**नघः**=विशुद्धः, **न्यायो** नीयते ज्ञाप्यते विवक्षितार्थोऽनेनेति न्यायः परार्थानुमानं, स एव **प्रसूनाञ्जलिः** । यद्वा **न्यायाः** प्रसूनानीव तेषाम**ञ्जलिः**, विधेयनिषेध्यविषयलिङ्गात्मककरतलद्वयगोचरत्वेन न्यायानामञ्जलित्वमिति । **ईशस्य**=परमात्मनः परापररूपात्मनि **पदयुगे निवेशितः** । यद्वा, पद्यते गम्यतेऽनेनेति **पदं**, तद्द्वयमागमप्रामाण्यलिङ्गं कार्यलिङ्गं च तद्विषय इति । अन्यत्र सुगमम् । यथा कुसुमाञ्जलौ भ्रमति भृङ्गः तथा स्वस्मिन् मदीयं साभिलाषमन्तःकरणमविघ्नं **रमयतु** । यद्वा **भृङ्गायमाणं** यथा मधुमत्यमधुमति च कुसुमे विवेकानवधारणेन चञ्चलश्चञ्चरीकः, तथा तत्त्वेऽतत्त्वे च वर्त्तमानं सन्दिहानमित्यर्थः, भ्रमच्च क्वचिदतत्त्वमेव तत्त्वतयाध्यवस्यन् मदीयं **चेतो रमयतु** संशयविपर्ययनिरासेन तत्त्वास्पदं करोत्विति । **अनघ**मिति व्यस्तपाठे चेतोविशेषणं, स्वारसिकश्रद्धावत्त्वेन निष्पापं चेत इति; क्रियाविशेषणं वा,

प्रकाशः ।

न्तरव्युत्पादनस्याप्यत्र तदर्थत्वादिति भावः । न तु शब्दानुमानरूपं पदयुगमत्र विवक्षितम्, श्रुतो हि—इत्यादिना तदतीतत्वोपदर्शनविरोधात्, ग्रन्थे च शब्दोपदर्शनस्याऽनुमाने तदविरोधमात्रप्रदर्शनतात्पर्य्यकत्वात् ।

अनघत्वं न्यायानामुपपादयन्नाह । **सत्पक्षेति । सति**=प्रामाणिके, **पक्षे**=सिषाधयिषितसाध्यधर्म्मके धर्म्मिणि, प्रकर्षेण सरो ज्ञानं यस्मात् । अनेनाश्रयासिद्धिबाधसिद्धसाधनस्वरूपा-

प्रकाशिका ।

सप्तमी साधुरिति वाच्यम् । निवेशितो निवेशनां प्रापित इत्यन्तर्भावितकर्मतया तद्योगोपपत्तेरिति भावः। **अनुमान इति** । इदमुपलक्षणम् "अहं सर्वस्य प्रभव" इत्यादेः क्षित्यादिसकर्तृकत्वानुमानोत्थापकतातात्पर्यकत्वस्यापि भावात् । **प्रामाणिक इति** । पक्षतावच्छेदकवतीत्यर्थः । तेन काञ्चनमयाद्रिः सकर्त्तृक इत्यादिन्यायाभासव्युदासः । आश्रयासिद्धेरपि तत्रैव भावात्, असत्पक्षत्वे त्वपार्थकतयाऽनघपदादेव व्यावृत्तिः । **सिषाधयिषितेति** । सिषाधयिषा सिद्धीच्छा सा च साध्यसिद्धिनिवर्त्तनीयेति सिद्धसाधनव्युदासः । **धर्म्मिणीति** साध्यरूपधर्मवतीत्यर्थः, तेन बाधव्युदासः । न च साध्यधर्मवतीत्यर्थकेन प्रथमपदेनैव तद्व्युदासः । तस्य सिषाधयिषारूपसम्बन्धमात्रतात्पर्यकत्वात् । अन्यथा धर्म्मिणीत्यस्य वैयर्थ्यापत्तेः । न च तस्य हेतुरूपधर्म्मवतीत्यर्थकस्य स्वरूपासिद्धिव्युदासे तात्पर्यम्, भागासिद्धिवारणार्थोपात्तव्याप्त्यर्थकप्रशब्देनैव तस्य व्युदासात् ज्ञानं हेतोरित्यर्थात् । न

मकरन्दः ।

सप्तमी साधुरिति वाच्यम् । निवेशितो निवेशनां प्रापित इत्यन्तर्भूतकर्मतया तद्योगबलादुपपत्तेरित्याहुः । **प्रामाणिक इति** । पक्षतावच्छेदकवतीत्यर्थः । तेन पक्षविशेषणाप्रसिद्ध्याऽऽश्रयासिद्धिः परिहृता । अन्यथाऽव्यावर्त्तकतापत्तेः । अप्रामाणिकपक्षत्वेऽपार्थकतयाऽनघपदादेव व्यावृत्तेः । प्राचीनमतेनेदमित्यन्ये ॥

सिद्धसाधनवारणायाह । **सिषाधयिषितेति** । सिषाधयिषितं साध्यं धर्मो यस्येति बाध-

टिप्पणी ।

**न तु शब्दानुमानरूपमित्यादि । सिषाधयिषितेति** अत्र सिषाधयिषितसाध्यवत्त्वपर्य्यन्त-

प्रकाशः ।

सिद्धिभागासिद्ध्यो निरस्ताः । तर्कपक्षे **सन्** = निर्दोषः । **पक्षप्रसरः** = पक्षव्यापकोऽनिष्टप्रसङ्ग-नरूपस्तर्को यस्मात् । **सतां** = परामर्शकुशलानाम् । **परितः** = सपक्षे सत्तया विपक्षे चासत्तया यो **मलः** = सम्बन्धो व्याप्तिरूपस्तस्य यः **प्रोद्बोधः** = अबाधितप्रतिबन्धनिश्चयः साध्यसाध-

प्रकाशिका ।

चावाधितेऽपि बाधावतारान्न्यायाभासेऽतिप्रसङ्गः । तस्य व्यतिरेकनिश्चयेनापक्षतया पक्षपदेनैव वार-णात्, तस्य सन्न्यायत्वाद्वा । न च भागासिद्धेऽपि व्याप्त्या ज्ञानमस्त्येवेति तदव्युदासः, प्रकर्षेण व्याप्त्यालक्षितस्येत्यर्थात् ज्ञानपदस्य प्रमापरत्वाद्वा, प्रकर्षस्यैव व्याप्तिप्रामाण्योभयरूपत्वाद्वा । **सन्निर्दोष इति** । न चाग्रे परिमलेत्यादिनापाद्यापादकव्याप्तिप्रदर्शनेन मूलशैथिल्यस्य विमर्दना-भावेन मिथो विरोधस्य च निरसनात् पौनरुक्त्यमिति वाच्यम्, निर्दोषपदस्य तदतिरिक्तदोषाभा-वपरत्वात्, सामान्याभावे विशेषाभावस्येतरसहकृतस्य हेतुतया हेतुहेतुमद्भावेनान्वयाद्वा । **सपक्षे सत्तयेति** । न च सपक्षे नावश्यं हेतोः सर्वतः सम्बन्ध इति वाच्यम्, साध्याभावासामानाधिकर-ण्यसहकारस्यैव सर्वतः पदार्थत्वात् । पदार्थविचारपर्यवसितमर्थमाह । **अबाधितेति** । अन्यथा

मकरन्दः ।

व्युदासः । **धर्मिणि** हेतूभूतधर्मवतीति स्वरूपासिद्धिव्युदासः । **प्रकर्षेण** व्याप्त्या, तेन भागासि-द्धिव्युदासः । ज्ञानं हेतोरित्यर्थात् । न चाबाधितेऽपि बाधावतारात् तन्न्यायाभासस्य न व्युदास इति वाच्यम् । व्यतिरेकनिश्चये सिषाधयिषाविरहेण पक्षपदादेव तन्निरासात् । तस्य न्याय-त्वादेव वा ।

**निर्दोष** इति । नचाग्रे आपाद्यापादकव्याप्तिप्रदर्शनेन मूलशैथिल्यस्य विमर्दनाभावेन मिथोविरोधस्य च निरसनात् पुनरुक्तिरिति वाच्यम् । विशेषाभावस्य सामान्याभावोपपादकतया हेतुहेतुमद्भावेनान्वयादित्येके । निर्दोषपदं तदतिरिक्तदोषाभाववत्परमित्यन्ये । एतावता पर्यवसितम-र्थमाह । **अबाधितेति** । अन्यथा प्रतिबन्धपदार्थानन्वयापत्तेः ।

टिप्पणी ।

विवक्षणे धर्म्मिणीत्यस्य वैयर्थ्यापत्तिः स्यात्, स्वरूपासिद्धिनिरासाय हेतुमतीत्यर्थकत्वमपि तस्य न सम्भवति, तावतापि भागासिद्धेरनिरासेन प्रशब्दज्ञानशब्दाभ्यां हेतोरित्यस्य शेषेण चावच्छेदकाव-च्छेदेन हेतुप्रमाज्ञानस्यावश्यविवक्षणीयतया तेनैव स्वरूपासिद्धेरपि निरासादिति । अथ किं ग्रन्थकृदेवं विधं शब्दमुक्तवान् यत् सत्त्वासत्त्वयोरपि तुल्यैव गतिरिति चेत् । सत्यम् । तुल्यैव, परन्तु केवल मसन्देहार्थं तात्पर्यग्रहार्थञ्च, ततश्च सिषाधयिषितसाध्यके इत्युक्ते ह्रदादावपि सिषाधयिषितवह्न्यादि-साध्यकानुमित्युत्पादाद् बाधादिनिरासो न स्यादर्थान्तरे तु स बार्थोऽयं वार्थ इति सन्देहः स्याद्, धर्मिणीत्युक्तावुपस्थितत्वात् साध्यरूपधर्म्म एव गृह्यते, तथा सति साध्यवत्त्वस्य तत्राभिप्रेतत्वमवगत्य तत्पदस्यैव तादृशार्थे तात्पर्यमवधारणीयं भवेदिति । साध्यधर्म्मक इत्यत्र धर्मपदोपादानं साध्ये प्रामाणिकत्वलाभाय, तेन साध्याप्रसिद्धिनिरासः । आश्रयासिद्धिपदं साध्याप्रसिद्धतादेरप्युपलक्षकमिति ध्येयम् । **सन्निर्दोषः पक्षप्रसर इत्यादि** । न चाग्रे परिमलेत्यादिनापाद्यापादकयोर्व्याप्तिप्रदर्शनेन मूलशैथिल्यनिरासात् निर्दोषपदेन पौनरुक्त्यमिति वाच्यम् । अत्र दोषपदस्य तदितरदोषपरत्वात् सामान्यपरत्वेऽपि अग्रे विशेषाभावस्य तत्प्रयोजकतया विवक्षणे क्षत्यभावः । **प्रोद्बोधोऽबाधि-तप्रतिबन्धनिश्चय इति** । प्रतिबन्धो व्याप्तिः तस्याबाधितनिश्चयः प्रमात्मकनिश्चयः, नायं प्रोद्बोधपदस्यैवार्थः, अपि तु प्रोद्बोधान्तस्य पर्य्यवसितार्थः । अन्यथा परिमलपदार्थानन्वयप्रसङ्गः

बोधनी ।

'अघं' क्लेशः यथा तन्न स्याद् यथा च विघ्नो न स्यात् तथा **रमयतु**। अक्लिष्टमविहतश्रद्धायुक्तं यथा स्यात्तथा करोत्वित्यर्थः ।

प्रकाशः ।

नयोः, साध्याभावसाधनाभावयोर्वा, आपाद्यापादकयोश्च, तेन **बद्धः** = स्थिरीकृत **उत्सव** आनन्दो येन स तथा । नित्यसापेक्षत्वादसमर्थेऽपि समासः । तेनान्वयव्यतिरेकिणि सपक्षासपक्षयोः सत्त्वासत्त्वे केवलव्यतिरेकिणि च विपक्षासत्त्वं दर्शितमिति व्याप्यत्वासिद्धिसव्यभिचारविरुद्धनिरासः । **विमर्दनं** = तद्विषयीभूतप्रमाणविरोधिप्रमाणप्रदर्शनम्, तेन न विम्लानो न कार्य्याक्षम इति सत्प्रतिपक्षविरहो दर्शितः ।

ननु तथाविधप्रमाणव्युत्पादनं न स्वतः प्रयोजनं, प्रयोजनवत्सन्निधावश्रवणाच्च न तदङ्गमित्यत आह । **अमृतेति** । **अमृतं** = मोक्षः, तत्र **रस** = इच्छा । रस्यमानममृतमिति यावत् । "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्, तस्य **प्रस्यन्दः** = असम्बद्धसम्बन्धोप-

प्रकाशिका ।

प्रतिबन्धपदार्थानन्वयापत्तेः । अत एव साध्याभावसाधनाभावयोरित्यपि युज्यते । अन्यथा सपक्षे सत्तयेत्यनेनास्यानन्वयात्, तत्र च हेतोरित्यध्याहारेण सङ्गतिः, न च तथापि व्यतिरेकव्याप्तिस्थले हेतोः सम्बन्ध इत्यनेनानन्वय एवेति वाच्यम्। विपक्षव्यावृत्तेरेव सम्बन्धत्वात् तदिदमुक्तं **विपक्षेचासत्तयेति**। ननु बद्धशब्दोऽसमस्तेन सतामितिपदेन सापेक्ष इत्युत्सवपदेनासामर्थ्यान्न समासोचित इत्यत आह । **नित्येति**। तथाचासमस्तसाकाङ्क्षतायाः समस्यमानापरपदाकाङ्क्षाविच्छेदकत्वेन दूषणत्वं-तच्चात्र नास्ति, बद्धशब्दस्य सम्बन्धवाचकतयोभाभ्यां प्रतियोग्यनुयोगिवाचकपदाभ्यां सह नित्यसाकाङ्क्षतयोत्सवपदेन निराकाङ्क्षत्वाभावादित्यर्थः। **असमर्थेऽपीति** । असमस्तपदसाकाङ्क्षेऽपीत्यर्थः। **कृदभिहित इति** । कृदन्तपदविशेष्यीभूतद्रव्यवाचकपदोपस्थाप्यद्रव्यवत्प्रत्ययविषयो भवति विशेष्यीभूतकृदन्तपदाभिहितोऽपि भावः, तेन रस्यमानममृतमित्यत्रेवामृतरस इत्यत्रान्वय इति भावः । इयञ्च व्युत्पत्तिस्तात्पर्याधीना न तु सर्वत्रेत्यवधेयम्। **असम्बन्धेति**(१)। प्रस्यन्द-

मकरन्दः ।

**नित्येति** । सामर्थ्ये समासात् सापेक्षमसमर्थ भवतीति यद्यपि सापेक्षे न समासः, तथापि नित्यसापेक्षे तदनिषेधादस्य च तथात्वादत्र समास इत्यर्थः । **कृदभिहित इति** । कृदभिहितो भावो द्रव्यवत् प्रकाशते, कृदभिहितद्रव्यवद् भासते । तेन रस्यमानममृतमिति यथा कृदभिहितद्रव्ये प्रत्ययस्तथा द्रव्यसमभिव्याहृतकृदभिहितभावेऽपीत्यर्थः । इदञ्च तात्पर्य्यवशादित्यवधेयमित्याहुः ॥

**असम्बद्धेति** । आद्यक्षणेत्यर्थः । इहापि कृदभिहित इति न्यायात् प्रस्यन्दमानेत्यर्थः । तेन

टिप्पणी ।

स्यात्। साध्यसाधनयोरित्यादेरपि प्रतिबन्धपदार्थ एव निरूपितत्वेनान्वयः । सपक्षे सत्तयेत्यादिना साध्यसाधनयोरित्यस्यान्वयसम्भवेऽपि साध्याभावसाधनाभावयोरित्यस्यान्वयासम्भव एवेति। साध्याभावसाधनाभावयोरिति तु केवलव्यतिरेक्यभिप्रायेण, तत्र प्रथमं तयोर्व्याप्तिं गृहीत्वानन्तरं साध्यसाधनयोस्तद्ग्रह इति ध्येयम्। **कृदभिहितो भावो द्रव्यवत्प्रकाशते इति न्यायादिति**

---

(१) असम्बद्धेति प्रकाशे पाठः ।

बोधनी ।

केचित्तु न केवलं कुसुमाञ्जलिना न्यायो निरूप्यते मननात्मकेन ज्ञानयोगेनैव कुसुमाञ्जलिप्रदानात्मकेन कर्मयोगेनापि परमात्मसमाराधनतया परिकल्पितेनाविघ्नपरिसमाप्तिराशास्यत इति व्याच-

प्रकाशः ।

हिता क्रिया, उत्पत्तिरिति यावत् । तदेव माध्वीकं मधु, तस्य भूरुत्पत्तिस्थानम् । रसपदेन स्वरूपत इष्यमाणतां दर्शयता दुःखाभावोऽपि नावेद्यः पुरुषार्थ इति निरस्तम् । माध्वीकपदेन चोत्कटेच्छाविषयत्वं दर्शयता सुखहानादपि तुल्याऽऽयव्ययतया नायमपुरुषार्थ इति दर्शितम् । **अमृतं**=मोक्षः, तस्य **रसः**=इच्छा, तस्य **प्रस्यन्दः**=प्रवाह उत्तरोत्तराऽनुवृत्तिः, स एव माध्वीकम्, तस्य भूरुत्पत्तिस्थानम्—इति तु न व्याख्यानम् । मोक्षेच्छायाः पूर्वं मोक्षज्ञानादेव सञ्जातत्वाद्, उत्तरोत्तरानुवृत्तेरपि उत्तरोत्तरज्ञानसाध्यत्वात् । एतावता मोक्षजनकेश्वरविषयकानुमितिकरणलिङ्गपरामर्शविषयलिङ्गप्रतिपादनद्वारा मोक्षानुकूलत्वमस्य दर्शितम् ।

प्रकाशिका ।

शब्दस्य कर्मविशेषवाचकस्यासम्बद्धसम्बन्धोपहितधात्वर्थरूपक्रियावाचकत्वमजहत्स्वार्थलक्षणया, कर्मणोऽसम्बद्धदेशसम्बन्धोपहितत्वमुत्पत्तेरप्यसम्बद्धलक्षणाद्यक्षणसम्बन्धोपहितत्वम्, तथा च भवत्यसम्बद्धाद्यक्षणसम्बन्धरूपोत्पत्तिः प्रस्यन्दपदवाच्येति भावः । अत्रापि "कृदभिहित" इति न्यायात् प्रस्यन्दमानेत्यर्थः, तेनोत्कटेच्छाविषयत्वं दर्शयतेत्यग्रिमग्रन्थविरोधो न भवति, अन्यथोत्पत्तेरुत्कटेच्छाऽविषयतया तद्विरोधात् । **उत्पत्तिरिति यावदिति** । नचोत्पत्तेरुत्पत्तिस्थानमिति पर्यवसितं तथा चानन्वय इति वाच्यम् । भूरित्यस्य व्याख्यानं स्थानम्, उत्पत्तिरित्यनुवादमात्रमिति भावात् । **रसपदेनेति** । इदमुपलक्षणम्, प्रस्यन्दपदेनोत्पन्नत्वं दर्शयताऽत्यन्ताभावरूपतया कृत्यसाध्यत्वेनापुरुषार्थत्वशङ्का निराकृतेत्यपि बोध्यम् । अञ्जलेः करसंस्थानभेदस्य न माध्वीकोत्पत्त्यधिकरणत्वमित्य-

मकरन्दः ।

तस्य माध्वीकपदादुत्कटेच्छाविषयत्वमिति नाग्रिमग्रन्थविरोधः । अन्यथोत्पत्तेरुत्कटेच्छाविषयत्वप्रदर्शनप्राप्तौ तद्विरुद्ध्येतेत्यवधेयम् । **रसपदेनेति** । एतच्चोपलक्षणम् । प्रस्यन्दपदेनोत्पन्नत्वं दर्शयताऽत्यन्ताभावत्वादिना अपुरुषार्थत्वशङ्का निराकृतेत्यपि बोध्यम् । संयुक्तकरद्वयात्मकस्याञ्जलेर्मा-

टिप्पणी ।

रस्यमानममृतमित्यत्र कृदन्तपदार्थस्य विशेष्यीभूतं यद् द्रव्यं लिङ्गसङ्ख्यान्वययोग्यं भावस्य धात्वर्थस्य कारकममृतादिकं यथा 'प्रकाशते' शाब्दविषयो भवति, तथैवामृतरस इत्यत्र द्रव्यपदार्थविशेष्यतया प्रतीयमानभावार्थाभिधायिना कृदन्तपदेनापि तात्पर्य्यवशाल्लक्षणया शाब्दविषयो-भवतीति न्यायार्थः । भावप्राधान्यप्रतिपत्तिरूपप्रयोजनाभिसन्धिना भावकारकपदमप्रयुज्य यत्र भावपदं प्रयुक्तं तत्र तद्भावपदं विवक्षितातिशयविशिष्टभावकारकं प्रकृतवाक्यार्थान्वययोग्यं लक्षयतीत्यत्र तात्पर्य्यम् । तेन पाक इत्यादौ पाककर्म्मादिप्रतीतेर्नापत्तिः, स्वायत्ते शब्दप्रयोगे विवक्षिते च पक्वे पक्वपदमप्रयुज्य पाकपदप्रयोगे कारणस्य प्रयोजनविशेषप्रतिपित्साया अभावात् । अत्र हि यथा गङ्गायां घोष इत्यत्र गङ्गातीरे घोष इति प्रयोगे सहृदयलभ्यस्य शैत्यपावनत्वविशेषप्रतिपत्तिरूपप्रयोजनस्यानिष्पत्तेः तत्सम्पिपादयिषया गङ्गापदप्रयोगः, तथा रस्यमानपदप्रयोगे स्वतः प्रयोजनार्थविषयकत्वरूपप्राधान्यरूपविशेषविशिष्टेच्छाप्रतिपत्तिरूपप्रयोजनस्य सहृदयलभ्यस्य दुर्लभतया तत्सम्पिपादयिषया रसपदप्रयोगः । स च रस्यमानस्य रसात्मताप्रतिपत्तिमुखेन रसप्राधान्यपर्यवसायी शक्नोति प्रयोजनं सम्पादयितुमिति भावः । अमृतप्रायो यो रसस्तं

बोधनी ।

क्षते, तत्र न्यायेनोपार्जितः प्रसूनाञ्जलिर्न्यायप्रसूनाञ्जलिरिति ॥ १ ॥

ननु देहादिव्यतिरिक्तस्य नित्यस्यापरस्यात्मनस्तत्त्वज्ञानं संसारनिदानतद्विषयमिथ्याज्ञानादिनिवृत्तिद्वारेण निर्वाणकारणं वर्णयन्ति । यथाहुः—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायात्तदनन्तराभावादपवर्गः"(१) (न्या. सू. १. १. २) इति । विवेचितश्चायमात्मतत्त्वविवेक इति

प्रकाशः ।

अथ च न्याय इव **प्रसूनाञ्जलिः** = अञ्जलिस्थानि कुसुमानि, तत्रानघत्वं न्यायोपात्तत्वमपर्युषितत्वादि च । रूपकपक्षेऽपि न साधर्म्यं विना तदिति तदुभयसाधर्म्यमाह—**सत्पक्षेति** । "पचि व्यक्तीकरणे" इति धात्वनुसारात् पक्षशब्दो दलवचनः । सत्पक्षाणां प्रसरो यत्र, सता पक्षेणानुकूलेन रविकिरणादिना विकाशो यस्येति वा । तेन हस्तादिना कलिकाप्रकाशो निषिद्धः । यद्वा, **सत्पक्षप्रसरः** = सदनुकूलविकाशः । **सतां** = सुकृतिनामनुपहतघ्राणानां, **परिमलः** = सौरभविशेषः, तस्य यः **प्रोद्बोधः** = प्रकृष्टज्ञानम् । तेन **बद्धः** = स्थिरीकृत उत्सवो येन स तथा । **विमर्दने** = करपुटसम्पर्कें, **न विम्लानो** = नान्यथाभूतसंस्थानः । अमृतप्रायो रसः, तं प्रस्यन्दते इति प्रस्यन्दः । कर्मण्यण् । अमृतरसप्रस्यन्द एव माध्वीकम् , तस्य भूरुत्पत्तिस्थानम् । यद्वा, अमृतमिव रसो यस्य । प्रस्यन्दते इति प्रस्यन्दः । अनयोः कर्मधारयः ॥ १ ॥

ननु कर्मसु विद्यमानेषु जन्मानुच्छेदात् , तेषां चाभुक्तानामक्षयाद् भोगेन च तद्धेतुना पुनः कर्मान्तरार्जनात् कशेषविशेषगुणोच्छेदो मोक्षः। नापीश्वरे प्रमाणव्युत्पादनस्य मोक्षहेतुत्वे मानमिति तन्निष्फलम् । किञ्च, ईश्वरमननस्य मोक्षहेतुत्वे मानाभावः "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्य"इति श्रुतौ सामानाधिकरण्याद् यद्विषयकः साक्षात्कारो मोक्षजनकस्तद्विषयकं मननं मोक्षहेतुः। साक्षात्कारश्च न जीवात्ममात्रगोचरो, न वेश्वरविषयकस्तथा। मिथ्याज्ञानध्वंसद्वारा ह्यस्य तद्धेतुत्वम् । न च जीवात्ममात्रगोचरमीश्वरगोचरं वा मिथ्याज्ञानं संसारहेतुर्येन तदुच्छेदस्तद्द्वारं स्यात् । किन्तु स्वात्मगोचरं मिथ्याज्ञानमिति तत्तत्त्वसाक्षात्कार एव मोक्षहेतुरित्यत आह ।

प्रकाशिका ।

न्यथा व्याचष्टे । **अञ्जलिस्थानीति** । नन्वमृतप्रायो रस इत्यत्र रसशब्दस्य गुणपरत्वे तं प्रस्यन्दत इत्यनन्वयः तस्य कर्मविशेषवाचकत्वात् , द्रव्यपरत्वे सुतरां तत एव । न च जनयतीति तस्यार्थः, तथाच गुणपरतयैव सङ्गतिरिति वाच्यम् । लक्षणापत्तेरित्यरुचेराह । **यद्वेति** ॥ १ ॥

नन्वीश्वरमननद्वारा प्रमाणव्युत्पादनं मोक्षोपयोगि स्यादित्यत आह—**किञ्चेति** । जीवा-

मकरन्दः ।

ध्वीकोत्पत्तिस्थानकत्वादिकमसम्भवीत्यत आह । **अञ्जलिस्थानीति** ॥ १ ॥

**किञ्चेति**। तथाचेश्वरमननद्वाराऽपि तद्व्युत्पादनं न मोक्षप्रयोजनमिति भावः। ननु प्रमाणव्युत्पाद-

टिप्पणी ।

प्रस्यन्दत इति अन्तर्भावितणिचः प्रयोगः, तेन स्यन्दधातोरकर्म्मकत्वेऽपि न क्षतिः ॥ १ ॥

नन्वीश्वरमननद्वारा प्रमाणव्युत्पादनं मोक्षोपयोगि स्यादित्यत आह—**किञ्चेति** । **साक्षात्कारश्च न जीवात्ममात्रगोचर इति** । नायं प्रकृतोपयोगी किन्तु विवेचनमात्रं, दृष्टान्तार्थं

---

(१) दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति विश्वनाथपञ्चाननसम्मतः पाठः । तदनन्तराभावादिति न्यायसूचीनिबन्धे न्यायसूत्रविवरणे च पाठः ।

## स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।

बोधनी ।

किमनेन परमात्मनिरूपणेनेत्यत्राह—**स्वर्गापवर्गयोः** इति । साक्षात्कृतपरमेश्वरप्रसादसहकृतमेव हि जीवात्मज्ञानमपवर्गमातनोति । तथाचामनन्ति—"द्वे ब्रह्मणी वेदितव्ये परं चापरं च" "द्वा सुपर्णा सयुजा सखाया" इत्यादि । गुडजिह्विकया रागिजनमावर्जयितुमत्र स्वर्गोपादानं, तेऽपि दुःखसन्तमससन्ततासु सुखखद्योतिकासु निर्विद्य मुमुक्षवो भविष्यन्तीति भावः । न चैकस्या एवोपास्तेः कथं परस्परविरोधिस्वर्गापवर्गहेतुत्वमिति वाच्यम् । उपासकसङ्कल्पादिसहकारिविशेषेण सामग्रीभेदादुपपत्तेः । यद्वा, अत्र पूर्वत्र सूचितयोर्विषयप्रयोजनयोः स्पष्टीकरणेनेश्वरोपास्तेरपवर्ग-

प्रकाशः ।

**स्वर्गेति** । स्वर्गयोरुत्कटरागगोचरयोः, अपवर्गयोरपरपरयोर्मुक्तयोः, मार्गमुपायमित्यर्थः । तथा च परापरमुक्त्योरेकानुष्ठानसाध्यतां दर्शयता जीवन्मुक्तिसहिता परममुक्तिः साध्येति दर्शितम् । तेन च न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य देहिन इत्यपूर्वकर्म्मोपार्ज्जनशङ्का निरस्ता । ईश्वरमननञ्च न तद्गोचरं प्रमाणमव्युत्पाद्य शक्यं व्युत्पादयितुमिति तद्बोधक(१)प्रमाणव्युत्पादनमपि मोक्षहेतुः । प्रमाणव्युत्पादने च तत एव मननसिद्धौ न मननपर्य्यन्तं ग्रन्थव्यापारः, धूमोऽस्तीति

प्रकाशिका ।

त्समात्रगोचर इति दृष्टान्तार्थम् । ननु तत्प्रमाणव्युत्पादनस्य ग्रन्थरूपस्य शब्दात्मकतया तस्यानुमितिजनकत्वे शाब्दत्वानुमितित्वयोः सङ्करः स्यादत आह—**प्रमाणव्युत्पादने चेति** ।

मकरन्दः ।

नरूपग्रन्थस्य शब्दात्मकस्येश्वरानुमितिजनकत्वे जातिसङ्कर इत्यत आह । **प्रमाणव्युत्पादने चेति** ।

टिप्पणी ।

वेति ध्येयम् । **हीनक्लेशस्य** जीवन्मुक्तस्य प्रवृत्तिः, 'प्रतिसन्धानाय' अपूर्वकर्म्मणे न भवतीत्यर्थः । इति हेतौ, अयं शङ्कानिरासेऽन्वेति तथा च मुक्तिर्नालीकेति भावः । जीवन्मुक्तानां मद्यस्त्रीनिषेवणं, ब्रह्महत्यादिकं, तपो यज्ञादिकं च, केवलपूर्वकृतकर्म्मणां फलीभूतसुखदुःखादिहेतुतयैवावतिष्ठते न पुनः फलाय । तथा च श्रुतिः "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" "अभयं वै जनक प्राप्तोऽसीत्याद्या, एवं "तत्सुकृतदुष्कृते विधूनुते" "एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव"मित्याद्यापीति । **तद्द्वारेति** । द्वारतया जन्यत्वव्याप्यत्वेनेश्वरमननस्य तत्त्वे शाब्दानुमितित्वयोः सङ्करप्रसङ्गोऽत आह—**प्रमाणव्युत्पादने चेति** । **तत एव** प्रमाणादेवेत्यर्थः । यागादेः स्वर्गपर्य्यन्तव्यापारत्वमदृष्टस्यान्यथाहेतुत्वानुपपत्त्या कल्प्यते । अनुमानप्रमाणस्यान्यत्र हेतुतायाः क्लृप्तत्वादिति भाव । **ग्रन्थव्यापार इति** । साक्षाद्व्यापार इत्यर्थः । येन तत्र शाब्दत्वं स्यात् । साक्षाद्व्यापारस्तु प्रमाणप्रतिपत्तिपर्य्यन्तमेवेति भावः । द्वारता च परम्परयेति बोध्यम् । ननु प्रमाणव्युत्पादनस्य मननपर्यन्तव्यापाराभावे**ऽमृतरसे**त्यादिना सूचितस्य प्रयोजनवत्त्वस्यानिर्वाह इत्यत आह—**धूमोऽस्तीत्यादि** । प्रमाणव्युत्पादनस्य सन्निहितत्वेन न मनने कश्चिद्विलक्षणो व्यापारः, अपि तु धूमोऽस्तीत्यादिवाक्यस्य व्यवहितस्येव साधारणो व्यापारोऽस्त्येवेति भावः ।

(१) तद्द्वारेति पाठान्तरम् ।

# यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥

बोधनी ।

हेतुत्वे श्रुतीः प्रमाणयतीति ॥ २ ॥

प्रकाशः ।

वाक्यस्य यथा वह्निविषयानुमितिपर्य्यन्तव्यापारत्वमिति । ईश्वरमननाङ्गतया तत्प्रमाणव्युत्पादनमपि प्रयोजनवदिति सूचितम् । ईश्वरमननञ्च मोक्षहेतुः । "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुत्या स्वात्मज्ञानस्येव ईश्वरज्ञानस्यापि तद्धेतुत्वप्रतिपादनात् । "द्वे ब्रह्मणी वेदितव्ये" इत्यत्र वेदनमात्रस्याकाङ्क्षितत्वेन प्रकृतत्वात् । श्रोतव्यो मन्तव्य इत्यादेरन्वयाच्च । ईश्वरमननञ्च यद्यपि मिथ्याज्ञानोन्मूलनद्वारा नोपयोगि, तथापि स्वात्मसाक्षात्कार एवोपयुज्यते । यदाहुः—"स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति" इति । यद्वा, श्रुत्या तद्धेतुत्वे प्रमापिते तदनुपपत्त्याऽदृष्टमेव तद्द्वारं कल्प्यते । केचित्तु मोक्षस्यात्र प्रस्तुतत्वात् स्वर्गपदं मुख्यमेव दृष्टान्तार्थमुपात्तमित्याहुः । उपास्तीत्यत्र, "ण्यासश्रन्थो युच्" [ पा० सू० ३।३।१०७ ] इति युज्न भवति । "क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्त्तते"—इति न्यायाद्, बहुलवचनाद्वा । यद्वा धातुनिर्देशे श्तिपोऽयं प्रयोगः । तस्य च धातुरूपशब्दाभिधायकत्वेऽप्यर्थे द्विरेफपदवल्लक्षणा ॥ २ ॥

प्रकाशिका ।

**तमेवेति** । प्रकरणादीश्वरस्यैव तत्पदादुपस्थितेरिति भावः । ननूक्तयुक्त्येश्वरमननस्य मुक्त्यहेतुत्वेऽयोग्यतया प्रकृतमपीश्वरमपहाय योग्यतयाऽऽत्मन एव तत्पदेन परामर्षः स्यादिति साशङ्कं प्रमाणमपहाय निश्शङ्कमागमं प्रमाणयति । **द्वे इति** । **वेदनमात्रस्येति** । वेदनसामान्यस्येत्यर्थः । नन्वीश्वरमननानुपदमेव स्वात्मसाक्षात्कारानुत्पादाददृष्टद्वारा तद्धेतुत्वं वाच्यम्, एवं च लाघवाददृष्टद्वारा मुक्ताविव तत्कारणमस्तु, उपकारित्वं सहकारितैवास्त्विति तथैव सिद्धान्तयति । **यद्वेति** । उक्तबाधकान् मुक्त्यसम्भव इत्याशङ्कानुद्धारान्नैवं स्यादित्यरुचिं विभावयति । **केचिदिति** । **तस्य चेति** । नन्वत्र श्तिपदे वा लक्षणा उपास्पदे वा ? नाद्यः, तस्य प्रकृतेः स्वबोधकत्वतात्पर्यग्राहकतया उपशब्दवदशक्तत्वात्, अन्यथा तत्तद्धातूपसन्धानेनानन्तशक्त्यापत्तेः, स्वपरेणोपास्पदेन सह पौनरुक्त्यापत्तेश्च । नान्त्यः, तस्यार्थे शक्तत्वादेवेति चेत् । मैवम् । धातुत्वेन रूपेण श्तिपो धातुमात्रे शक्तेः, उपास्धातुरिति उपास्तीति पदात् प्रतीतेः, अत एवोक्तं **तस्य च धातुरूपेति** । धातुत्वं च क्रियावाचित्वमेव । नचैवं यागपाकादौ पदे तिप्प्रयोगापत्तिः, केवलस्यासाधुत्वात्, धातुसमभिव्याहारे च तदुपस्थापकत्वादेव । एवं च प्रकृतिप्र-

मकरन्दः ।

**तमेवेति** । प्रकरणादीश्वरस्यैव तत्पदादुपस्थितेरिति भावः । ननूक्तयुक्त्येश्वरज्ञानस्य मुक्त्यहेतुत्वेनायोग्यतया तदपरामर्शे स्वात्मैव तेन परामृश्यत इति यदि ब्रूयात्तत्राह । **द्वे इति** । नन्वेवमपि मननं नायातमित्यत आह । **वेदनमात्रस्येति** । वेदनसामान्यस्येत्यर्थः । नन्वनुपदं स्वात्मसाक्षात्कारानुत्पत्तेरदृष्टद्वारा तद्धेतुत्वं तस्य वाच्यमेवञ्च तद्द्वारामुक्ताविव तद्धेतुत्वमस्तु लाघवात्, तदुपकारश्च तत्सहकारितयाऽप्युपपद्यत इत्यरुचेराह । **यद्वेति** । **केचित्त्विति** । उक्तबाधकान्मुक्त्यसम्भव इत्याशङ्कायां नैवं समाधानमित्यस्वरसो बोध्यः ।

**तस्येति** । ननु श्तिपस्तत्र न लक्षणा, तस्य प्रकृतेः स्वपरत्वतात्पर्यग्राहकत्वमात्रेणोपपत्तावुपसर्गवदशक्तत्वात् । किञ्च, तस्यार्थशक्तत्वे किं लक्षणया, शब्दशक्तत्वे तस्योपास्पदादेव स्वल-

टिप्पणी ।

किन्त्वेत्यादेरुत्तरमाह—**ईश्वरमननेति** । **मोक्षहेतुर**त्रापि प्रयोजकत्वमेव हेतुत्वमिति

प्रकाशिका ।

त्ययाभ्यां लक्षणया शक्तया वा उपास्धातुज्ञाने जाते ज्ञाप्यसम्बन्धिन्युपासनारूपेऽर्थे तिप्पदस्य लक्षणा गम्भीरायां नद्यामित्यत्र गम्भीरनदीतीरे नदीपदस्येव, अस्तु वा क्रियावाचित्वरूपे धर्ममात्र एव शक्तिर्लाघवात्। अत्रापि कल्पे विशिष्टलक्षणा पूर्वकल्पवदेव। नचैवमेकलक्षणैवेति द्विरेफपदद्दृष्टान्तोपादानमसङ्गतमिति वाच्यम्। न हि द्विरेफपदे लक्षणाद्वयं किन्तु शब्दघटितसम्बन्धेनैकैव लक्षणा, तथाचात्रापि शब्दघटितेन सम्बन्धेन शब्दोपस्थापकस्यार्थे लक्षणेत्यत्रैव च तद्दृष्टान्तोपादानात्। न च तत्र द्विरेफपदेन भ्रमरपदोपस्थितिः, तेन चार्थस्य शक्यस्योपस्थितिरिति नोक्तक्रमेणापि तद्दृष्टान्ततेति वाच्यम्। तथा सति द्विरेफपदोत्तरविभक्त्यर्थस्यार्थेऽनन्वयापत्तेरिति। वस्तुतस्तु उपास्तिपदस्यार्थे लक्षणेति कल्प एवायमसङ्गतः, "इक्श्तिपौ धातुनिर्देशे" इति वार्तिकेन शब्दपरतायामेव तस्य साधुत्वानुशासनात् अन्यथाऽपादानानुशिष्टायाः पञ्चम्याः कर्मणि लक्षणया प्रयोगापत्तेः। न च सुब्विभक्तौ लक्षणाविरहान्न तथेति वाच्यम्। तत्कल्पनायामपि साधुत्वविरहस्यैव मूलत्वात्। अत एव व्यत्ययानुशासनस्थले लक्षणा स्वीक्रियत एव। न च तत्र शक्तिरेव, अन्यथा व्यत्ययानुशासनवैयर्थ्यमिति वाच्यम्। गौरवात्, व्यत्ययानुशासनस्य लक्ष्यविशेषे साधुत्वज्ञापकत्वात्। श्तिपो धातुत्वविशिष्टे शक्तिरित्यपि न युक्तम्। तस्य प्रकृतेः स्वरूपपरतायां तात्पर्यमात्रग्राहकत्वात्, अन्यथाऽस्तिर्धातुरित्यादिप्रयोगे पौनरुक्त्यापत्तेरिति ॥ २ ॥

मकरन्दः ।

क्षणया लाभे तच्छक्त्यकल्पनात्। अन्यथा पौनरुक्त्यापत्तेः। तत्तद्धातुसमभिव्याहारे तत्तदनन्तशक्त्यापत्तेश्च। नचोपास्पद एव लक्षणा। तस्योपासनारूपार्थशक्तत्वादेव। प्रत्युत स्वलक्षणाभ्युपगमादिति चेत्।

अत्राहुः। उपास्तीत्यादिना उपास्धातुरित्यादिप्रत्ययाद् धातुत्वेन धातौ श्तिपः शक्तिः। तदिदमुक्तं, **धातुरूपशब्दाभिधायकत्वेऽपीति।** तथाच न शक्त्यानन्त्यादिदोषः। अन्यथा धातुत्वप्रकारकप्रत्ययानुपपत्तेः। न च धातुत्वं नानुगतमिति वाच्यम्। क्रियावाचित्वस्य तथात्वात्। नचैवं यागपाकपदादपि तत्प्रयोगापत्तिः। केवलस्यासाधुत्वात्। धातुसमभिव्याहारे च तत्तद्धात्वन्वयबोधजननियमेन तदप्रतिपादकत्वात्। अत एव परमते कार्यत्वं लिङः प्रवृत्तिनिमित्तम्। अस्तु वा क्रियावाचित्वे धर्ममात्र एव शक्तिः, धर्मिणः प्रकृतिलभ्यत्वात्। एवञ्च प्रकृतिप्रत्ययाभ्यां स्वलक्षणया शक्त्या च उपास्धातुरिति विशिष्टानुभवे जनिते स्वज्ञाप्यधातुत्वविशिष्टोपास्सम्बन्धिनि उपासनारूपेऽर्थे गभीरनदीतीरे तीरपदस्येव श्तिप्पदे लक्षणा। ज्ञाप्यसम्बन्धमात्रस्य लक्षणात्वात्। एवञ्च धातुशक्तत्वेऽपि लक्षणया धात्वर्थमात्रलाभः स्यान्न तूपासनारूपार्थलाभ इति निरस्तम्। नचैवमेकलक्षणैव, न तु लक्षितलक्षणेति द्विरेफपदद्दृष्टान्तोपादानमसङ्गतमिति वाच्यम्। शब्दोपस्थापकस्यार्थे लक्षणेत्यत्र दृष्टान्तात्। किञ्च, द्विरेफपदेऽप्येकलक्षणैव परम्परासम्बन्धेनार्थोपस्थापिका। यदि च तत्र भ्रमरपदं लक्षयित्वाऽर्थो लक्ष्यते इति लक्षणाद्वयं, तदा प्रकृतेऽप्युपासपदं लक्षयित्वैवार्थो लक्ष्यते इति तुल्यम्। इयांस्तु विशेषो यत्तत्रैकमेवोभयलक्षकमत्र तु न तथेति। न हि सर्वप्रकारेण दृष्टान्तत्वम्। असम्भवात्। नचान्यपदार्थोपस्थितभ्रमरपदादेव भ्रमरपदार्थोपस्थितिसम्भवे द्विरेफपदे कथमर्थलक्षणेति वाच्यम्। तथात्वे द्विरेफपदोत्तरविभक्त्यर्थस्य तत्रानन्वयापत्तेरिति दिक् ॥ २ ॥

टिप्पणी ।

भावः ॥ २ ॥

**इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्म्मविपाकाशयैरपरामृष्टो-**

बोधनी।

प्रकरणारम्भमाक्षिपति। **इहेत्यादिना किं निरूपणीयमित्यन्तेन**। सन्दिग्धे न्यायः प्रवर्त्तते न हि सिद्धे। सिद्धश्चायमात्मा सर्ववादिनाम्। तस्मादस्य न्यायविषयत्वासम्भवात् तद्विषयकन्यायव्युत्पादकं प्रकरणं नारम्भणीयमिति तात्पर्य्यम्। इह=परमात्मनि प्रकरणे वा, **किं निरूपणीय**मिति सम्बन्धः, **अर्थयमाना** इत्यस्य **चोपासते** इत्यनेन। सर्ववादिसम्प्रतिपत्तिदर्शनं **शुद्धेत्यादि**। **शुद्धः**=केवलः, अद्वितीय इति यावत्। अत एव **बुद्धः**=स्वप्रकाशः। द्वितीयाभावे परप्रकाश्यत्वासम्भवात्। **आदिविद्वान्**=स्वारसिकचैतन्यः, न तु बुद्धिवदिति; छायापत्त्या तथात्वे सत्यादिविद्वत्ताविरोधात्। **सिद्धः**=कूटस्थनित्यः, न तु प्रकृत्यादिवत् केनचिदपि रूपेण साध्य इति। अविद्यास्मितारागद्वेषाभिनिवेशाः **क्लेशाः**। तत्र विपरीतख्यातिरविद्या। अहमस्मीत्यभिमानोऽस्मिता। रागद्वेषौ सुखदुःख

प्रकाशः।

भगवदुपासना फलवती, निरूपणञ्च क्रियते, इत्यसङ्गतिं परिहरन् वादिनां विप्रतिपत्त्यभावेन न्यायाङ्गं संशयमाक्षिपति—

**इहेति**। इह=विचारे। **सन्देह एव** न्यायपूर्वाङ्गं **कुतः**। अत्र हेतुः **प्रसिद्धानुभावे**। **अनुभावः** असाधारणीं कारणतामाह—**यं कमपीति**। **यं कमपि**=मोक्षादिकं स्वाभिमतं **पुरुषार्थ**मर्थयमानाः, **यमीश्वरमुपासते** मननविषयीकुर्वन्तीत्**यौपनिषदा** इत्यादौ सर्वत्र सम्बन्धः। **शुद्धः**=एको, द्वितीयाभावात्। **बुद्धः**=स्वप्रकाशज्ञानात्मकः। द्वितीयाभावेन परप्रकाश्यत्वानुपपत्तेः, एतदुभयवेदान्तिसाधारणम्। **आदीति**। **आदौ**=प्रथमतो, **विद्वांश्चिद्रूपः** स्वभावतश्चेतनो, न तु प्रकृतिवच्चेतनोपरागादौपाधिकं चैतन्यं तस्येत्यर्थः। **सिद्धो**=नित्यो, न तु बुद्ध्यादिवत् साध्यः। तेन कूटस्थनित्यो, न तु प्रकृतिवत् परिणामिनित्य इत्यर्थः। एतच्च सकलक्षेत्रज्ञसाधारणत्वान्न परमात्मोत्कर्षाभिधायकमित्यन्यथा व्याख्येयम्। **आदौ**=सर्गादौ। **विद्वान्**=ज्ञानवान्, **सिद्धो**=योगर्द्धिसम्पदुत्पादिताष्टविधैश्वर्य्यसम्पद्युक्त इत्यर्थः। यथोक्तं तत्त्वकौमुद्यां वाचस्पतिमिश्रैः—"सर्गादावादिविद्वानत्रभवान् कपिलो महामुनिर्धर्म्मज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्रादुर्बभूवेति स्मरन्तीति"। **क्लेशेति**। अविद्यास्मितारागद्वेषाभिनिवेशाः **क्लेशाः**। **कर्म्म**=धर्म्माधर्म्महेतु-

प्रकाशिका।

**परिहरन्निति** वर्त्तमानसामीप्ये, तेन परिहरिष्यन्नित्यर्थः। अन्यथा परिहारस्य सिद्धान्तेनाभिधानादाक्षिपतीत्यनेनानन्वयापत्तेः। ननु सन्देहाभावे का क्षतिरत आह—**न्यायेति**। **उभ-**

मकरन्दः।

ननु माऽस्तु सन्देह इत्यत आह। **न्यायेति**॥

त्रिदण्डिमतमेकदण्डिमतञ्चेत्**युभयम्**। बुद्ध्यात्मनोरेकत्वेन ज्ञानमस्मितेत्येके। अहङ्कार

टिप्पणी।

**परिहरन् वादिनां विप्रतिपत्त्यभावेनेति**। परिहन्निति वर्त्तमानसामीप्ये तेन परिहरिष्यन्नित्यर्थः। अन्यथा परिहारस्य सिद्धान्तेनाभिधानादाक्षिपतीत्यनन्वयापत्तेरिति। **अनुभावोऽत्रासाधारणीङ्कारणतामाहेति**। प्रसिद्धोऽनुभावोऽसाधारणकार्य्यं यस्येति व्युत्पत्त्या प्रसिद्धस्वकार्यकत्वरूपकारणत्वस्य लाभान्नानुभावशब्दस्याग्रेऽसाधारणकार्ये व्याख्यानेन विरोधः। उपासनास्वरूपमाह। **शुद्ध एको द्वितीयाभावादिति**। **एतदुभयवेदान्तिसाधारणमिति**।

**निर्म्माणकायमधिष्ठाय (१)सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेद-**

बोधनी ।

तत्साधनविषयौ प्रसिद्धौ । प्राप्तैश्वर्यभङ्गभीतिरभिनिवेशः । धर्माधर्मसाधनमश्वमेधादिब्रह्महत्यादि **कर्म** । जात्यायुर्भोगा **विपाकाः** । तत्र जातिर्देवत्वमनुष्यत्वादिः । प्राणाख्यस्य वायोः कायावच्छिन्नः सम्बन्ध आयुः । स्वसमवेतसुखदुःखान्यतरसाक्षात्कारो भोगः । आफलनिष्पत्तेरात्मनि शेत **इत्याशयो** धर्माधर्मरूपमपूर्वम् । **एतैरपरामृष्टः** सर्वदा सर्वथाऽसंसृष्टः । कथं तर्हि कर्माद्यभावे शरीरसम्बन्धः, कथं वा तदभावे सम्प्रदायप्रवर्त्तकत्वं, कथं वानुग्राहकत्वमित्यत उक्तं—**निर्माण** इति । जगन्निर्माणार्थं स्वेच्छामात्रनिर्मितानि संसारिचेतनवर्गनिर्मितानि वा शरीराणि व्युत्पाद्यव्युत्पादकभावेनाधितिष्ठति । सम्प्रदीयते गुरुणा शिष्यायेति **सम्प्रदायो**= वेदो घटपटव्यवहारश्च, **तत्प्रवर्त्तको** वक्ता प्रवक्ता च वेदे कर्त्ता ग्राहयिता चान्यत्र, **अनुग्राहकः**= स्वर्गापवर्गादिफलप्रदानादिनेति । **लोकवेदविरुद्धैः**= चिताभस्मोद्धूलन देवदारुवनद्विजवधूविप्लवादिभिरनुष्ठितैरलेपः लोकगर्हयाऽधर्मेण रहितः । क्लेशसलिलाव-सिक्तायामात्मभूमौ उप्तं कर्मबीजमधर्माङ्कुरमारभते, न च नित्यसर्वज्ञस्य क्लेशसम्भवः ।

प्रकाशः ।

भावनासाध्यं यागहिंसादि । **विपाको**=जात्यायुर्भोगाः । फलपर्य्यन्तमाशेरत इत्या**शया**= धर्म्मा-धर्म्माः । तैर**परामृष्टो**ऽसम्बद्ध इत्यर्थः । शरीरैकनिष्पाद्यवेदादिनिर्म्माणार्थं कायो **निर्म्माण-कायः** । सम्प्रदीयते गुरुणा शिष्यायेति **सम्प्रदायो** वेदः । स चानादिरेव भगवता द्योत्यते । भगवतश्चादृष्टाभावेऽपि तच्छरीरसाध्यघटादिजन्यभोगजनकास्मदाद्यदृष्टैरेव तन्निष्पाद्यते । **अनु-ग्राहको** घटादिनिर्म्माणे शिक्षाद्वारेत्यर्थः । **लोकेति** । लोकविरुद्धैः= सर्पदहनधारणादिभिः,(२)

प्रकाशिका ।

**येति** । एकदण्डित्रिदण्डीत्यर्थः । यद्यपि शुद्धमद्वैतं त्रिदण्डिमते नास्ति तेन भेदस्याङ्गीकारात् । तथाप्यभेदोऽपि तेन स्वीक्रियत एवेत्यभिप्रायेणेदमुक्तम् । वृद्धत्वमात्राभिप्रायेण वा साधारण्यमुक्तम् । एतदुभयमिति क्वचित् पाठः । तत्र केवलोपनिषदुपजीवी औपनिषदशब्दार्थः, तन्मूलकवेदान्त-सूत्रोपजीवी वेदान्तिपदार्थ इति बोध्यम् । लेपपदस्य पापपरतायां तृतीयायाः करणार्थत्वमसम्भवि निर्लेपत्वप्रतियोगिनि लोकविरुद्धहेतुकस्यानन्वयादनुयोगिनि चोभयस्यैवानन्वयादित्युपलक्षणं

मकरन्दः ।

इत्यन्ये । वेदे नित्यपाल्यत्वमुच्चार्यत्वं, न तूत्पाद्यत्वम् । स चेत्याद्यग्रिमग्रन्थानुरोधात् । ननु लेप शब्दस्य पापपरत्वे तृतीयायाः करणार्थत्वमयुक्तम् । लोकविरुद्धहेतुकलेपस्याप्रसिद्धेरित्यत आह ।

टिप्पणी ।

एकदण्डित्रिदण्डिसाधारणम् । यद्यपि शुद्धमद्वैतं त्रिदण्डिमते नास्ति तेन भेदाङ्गीकारात् , तथाप्य-भेदोऽपि तेनाङ्गीक्रियत एवेत्यभिप्रायोक्तिः । **जात्यायुर्भोगा इति** । जातिः ब्राह्म-ण्यादि । आयुः=श्वासप्रश्वासपरिच्छिन्नकालविशेषावधिकप्राणशरीरसंयोगः । भोगः= सुखदुःखादिः । **फलपर्य्यन्तमाशेरते** इत्याशया धर्माधर्मा इति तैरपरामृष्टोऽसम्बद्ध इत्यर्थः ।

(१) सम्प्रदायप्रवर्तक इति वरदराजाभिमतः पाठः । (२) सर्पदहनेत्यत्र द्वन्द्वः ।

**विरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति**

बोधनी।

**स्वतन्त्रः** कर्त्ता । **महापाशुपताः**=महाव्रतचारिणः पाशुपताः । **शिवः**=निस्त्रैगुण्यः । **पुरुषोत्तमः**=पुरुषेभ्य उत्तमः । उत्तमत्वं च सर्वज्ञत्वमसंसारित्वं चेति स्वयमेव

प्रकाशः।

वेदविरुद्धैः=दारुवनद्विजवधूविध्वंसनैरुपलक्षितः(१)। इत्थम्भूतलक्षणे तृतीया । सोऽयमित्थम्भूतोऽपि निर्लेपः = पापरूपलेपरहित इत्यर्थः । करणे वा तृतीया। वेदविरुद्धहेतुक–भोगजनकविशेषगुणरहित इत्यर्थः । स च सुखं दुःखं धर्म्माधर्म्मौ चेति । मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ कर्म्मबीजं धर्म्माधर्म्माङ्कुरमारभते, न तु तत्त्वज्ञाननिदाघनिपीतसलिलतयोपरायामिति भावः । **स्वतन्त्रो**=जगत्कर्त्ता । **शिवो**=निस्त्रैगुण्यः । **पुरुषेषूत्तमः** सर्व्वज्ञत्वात्।

प्रकाशिका।

तृतीयार्थ इति मत्वा व्याचष्टे । **उपलक्षित इति।** लेपपदं दुःखस्यापि वाचकमिति प्रतियोगिन्येव करणस्यान्वयः, लोकविरुद्धहेतुकस्य दुःखस्यैव प्रसिद्धेरिति मत्वा व्याचष्टे। **करण इति।** ननु वेदविरुद्धेनापि कथं न पापमतमाह। **मिथ्याज्ञानेति।** ननु कर्मधारये उत्तमपदस्य सर्वज्ञार्थकस्य विशेषणपदतया पूर्वनिपातापत्तिः, षष्ठीसमासे च "न निर्द्धारणे" इति षष्ठीसमासनिषेध इति सप्तमीसमासमाह। **पुरुषेष्विति।** नच षष्ठीसमासनिषेधकस्य सप्तमीसमासनिषेधेऽपि तात्पर्यमन्यथा वैयर्थ्यापत्तिः सप्तमीसमासेनैव तदर्थकपदसाधुत्वात् षष्ठीसप्तम्योरभिन्नार्थकत्वादिति वाच्यम्। षष्ठीसमासनिषेधस्य षष्ठीसमासनिषेधपरतयैवोपपत्तौ सप्तमींसमासनिषेधपरत्वाभावात्।वस्तुतो निर्द्धारणमेव नास्त्यत्र समस्यमानपदातिरिक्तमुखेन निर्द्धारणं पृथक्करणं यत्र समुदायादेकदेशस्य तत्रैव षष्ठीसमासनिषेधात्। अत एव नराणां क्षत्रियः शूरतम इत्यत्र नरक्षत्रिय इति पदं प्रतिषेधोदाहरणत्वेन वृत्तिकारो दर्श-

मकरन्दः।

**उपलक्षित इति ।** लेपपदे दुःखसाधारणतया व्याख्याते लोकविरुद्धकरणकलेपत्वं दुःख एव प्रसिद्धमित्याह । **स चेति ।**

कर्मधारये उत्तमपदस्य विशेषणपदतया पूर्वनिपातापत्तिः। षष्ठीसमासश्च "न निर्द्धारणे" [पा० सू०२।२।१०] इति निषिद्ध एवेति सप्तमीसमासमालम्बते । **पुरुषेष्विति।** यद्यपि षष्ठीसप्तम्योरभेदात् सोऽपि निषिद्ध एव । अन्यथा तत्र तत्र सप्तमीसमासेनैवोपपत्तौ षष्ठीसमासनिषेधवैयर्थ्यापत्तेः। तथापि निर्द्धारणस्याऽविवक्षायामयं समास इति **ऋजवः ।** वस्तुतो जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम् । यथा नराणां क्षत्रियः शूरतम इत्यत्र । तच्चात्र नास्तीति न निषेधः । तथाच समुदायसमुदायिवाचकपदयोः समासनिषेधस्यैव तत्सूत्रार्थत्वान्न निर्द्धारणप्रयोजकगुणादिविशेषवाचिपदसमासनिषेधोऽपीति तात्पर्यम् । एवञ्च षष्ठीसमासेऽप्यदोष इत्यवधेयम् ।

टिप्पणी।

वेदविरुद्धेनापि न पापमत आह । **मिथ्याज्ञानसलिलेति ।** कर्मधारय उत्तमपदस्य विशेषणपरत्वेन पूर्वनिपातप्रसङ्गान्निर्द्धारणसप्तमीसमासमाह । **पुरुषेषूत्तम इति ।** पुरुषशब्दस्यार्थमात्रे-

(१) अत्र च पौराणिकी कथा शिवपुराणे कोटिरुद्रसंहितायां द्वादशाध्याये, लिङ्गपुराणे चैकोनत्रिंशदध्याये द्रष्टव्या ।

**वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित(१) इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः, किं**

बोधनी।

व्याख्यास्यति। **पितामहः**=जगतामुत्पादकः। **यज्ञपुरुषः**=यज्ञाधिष्ठातृदेवता। **सर्वज्ञः**=क्षणिकसर्वज्ञः। **निरावरणः**= सर्वविषयकचैतन्याच्छादकत्वेन स्वकर्मार्जितं शरीरमावरणम्; यद्वा वस्त्रादिभिरिव शरीरं धर्माधर्माभ्यामाव्रियते पुरुष इति तावेवावरणं, तद्रहितः। **उपास्यत्वेन चोदितः** चोदनासिद्धमुपास्यत्वं हविःप्रतियोगित्वं स्तुतिप्रतियोगित्वं चैव तस्य रूपं, न तु सर्ववित्सर्वकर्तृकत्वादिकमिति। **लोकव्यवहारसिद्धः**=राजादिर्दृश्यमानः, चतुर्भुजादिरूपा प्रतिमा वा। **याव-**

प्रकाशः।

**पितामहो**=जनकस्यापि जनकः। यज्ञे प्रधानमिज्यं **यज्ञपुरुषः**। **सर्वज्ञः**=क्षणिकसर्वज्ञः। **निरावरण इति**। आवरणमदृष्टमविद्या स्वकर्मोपार्ज्जितश्च शरीरमस्य नास्तीत्यर्थः। **उपास्यत्वेनेति**। वेदोपदिष्टोपास्यभावः कश्चिन्मन्त्रादिरित्यर्थः। **लोकेति**। यथा लोके व्यवह्रियते चतुर्भुजाद्युपेतदेहवान्, नत्वदृश्य इत्यर्थः। **यावदुक्तेति**। यावदुक्तेषु यदुपपन्नं युक्तिमत् सर्वज्ञत्वादि, तेनो**पपन्नः** सम्पन्न इति मध्यपदलोपी समासस्तत्पुरुषः। यावदुक्तेषु उपपन्नः प्रामाणिको धर्म्मो यस्येति बहुव्रीहिर्वा। न तु यावद्भिरुक्तैरुपपन्नः सहित इत्यर्थः, अद्वैतावनङ्गीकारेण यावद्यथाव्याख्यातार्थस्य नैयायिकैरनङ्गीकारात्।

यद्वा **सन्देह एव कुत** इत्युपसंहारात् सर्वाण्येव] दर्शनान्येकार्थपरतया व्याख्यायन्ते। **शुद्धो**=दोषहीनः, **बुद्धस्वभावो**= घटादिभिन्नत्वे सत्यौपाधिकचैतन्यरहितः, **आद्यो**=

प्रकाशिका।

यति स्मेति। पुरुषशब्दस्यार्थमात्रमतिप्रसक्तमत आह। **प्रधानमिति**। न्यायमतभेदाय व्याचष्टे। **क्षणिकेति**। **एकार्थपरतयेति**। अविरुद्धार्थतयेत्यर्थः। **घटादीति**। औपाधिकं चैतन्य-

मकरन्दः।

इज्यत्वमात्रमतिप्रसक्तमत आह। **प्रधानमिति**। न्यायमतसाधारण्यमपाकरोति। **क्षणिकेति**। **एकार्थेति**। अविरुद्धार्थेत्यर्थः। **घटादीति**। औपाधिकं चैतन्यमन्यत्रोपाधिभूतं चैतन्यं घटादिभिन्नत्वसमानाधिकरणौपाधिकचैतन्यशून्यत्वमित्यर्थः, तथा च परमते विशेषणाभावात्, स्वमते च विशेष्याभावाद् विशिष्टाभावोऽविशिष्ट इति भावः। **मिश्रास्तु** औपाधिकं चैतन्यं जन्यचैतन्यम्, एवं च विशिष्टाभावस्तन्मत उभयाभावादस्मन्मते च विशेष्याभावादिति

टिप्पणी।

ऽसङ्गतिरत आह—**प्रधानमिज्यं यज्ञपुरुष इति**। न्यायमतभेदायाह। **क्षणिकसर्वज्ञ इति**। **वेदोपदिष्टोपास्यभावः कश्चिन्मन्त्रादिरिति**। तन्मते मन्त्रादिभिन्नाया इन्द्रादिदेवताया अस्वीकारात्, यत इन्द्रोऽपीन्द्राय स्वाहेत्यादिना इन्द्रमुद्दिश्य यजते, स्वमुद्दिश्य स्वकर्तृकयागस्यासम्भवात्, इन्द्रान्तरस्वीकारेऽनवस्थानादतो मन्त्र एवोपासितः स्वरूपविशेषपरिणतः फलाय कल्पत इत्यादि तेषाम्मतमिति। **बुद्धस्वभावो घटादिभिन्नत्वे सत्यौपाधिकचैतन्यरहित इति**। अन्यत्रोपाधिभूतचैतन्यात्मकत्वमौपाधिकचैतन्यं घटादिभिन्नत्वञ्च विशेषणम्। तेन परमते घटादिभिन्नत्वे द्वैतापत्त्या विशेष्यवति तत्र विशिष्टाभावो विशेषणा-

---

(१) उपास्यत्वेन नोदित इति मुद्रितबोधन्युद्धृतः पाठः।

२ न्या० कु०

वहुना, कारवोऽपि यं विश्वकर्मेत्युपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरण

---

बोधनी ।

**दुक्तोपपन्नः**=मया यानि विशेषणान्युक्तानि तेषु यावदुपपन्नं तेनोपपन्नः । यद्वा, **यावदुक्तेन** यथाश्रुतेन न तु व्याख्यातेनोपपन्नः, यथा **शुद्धः** = देहादिरहितः, **बुद्धः** = बोधे कर्त्ता कर्म वा, **आदिविद्वान्**=नित्यज्ञातलोकव्यवहारः । **सिद्धः**=सर्वजनप्रसिद्धिगम्यः, सुगममन्यत् । **जातिर्ब्रा**-ह्मणत्वादिः । **गोत्रं**=कूटस्थऋषिनाम्ना सङ्कीर्त्तनम् । **प्रवरः**=वंश्यऋषिगणानुकीर्त्तनम् । **चरणः** =

प्रकाशः ।

सर्गादौ, **विद्वान्**=ज्ञानवान्, **सिद्धो**=नित्यः, **सम्प्रदायप्रद्योतको** वेदं प्रणीय सर्गादिसमुत्पन्नाध्यापकः, **अनुग्राहकः**=कुलालादिकृतेऽपि घटादौ सहकारीत्यादिक्रमेण । नचैवमैकमत्येन दर्शनभेदानुपपत्तिः । (१)फलैकमत्येऽपि प्रकारभेदात् । सर्वथा विरोधाभावे विचा-रोपयोगिसंशयस्याप्यभावप्रसङ्गात् । यद्यपि मीमांसकानीश्वरसांख्यमते नेश्वरे सम्प्रतिपत्तिः, तथा-प्युपास्यत्वेन धर्म्मिणि सम्प्रतिपत्तिरस्त्येव । **कारुः**=शिल्पी । **विश्वं** सर्व्वमुत्पत्तिमत् **कर्म्म** कार्य्यं यस्य स तथा । **जातिः** = ब्राह्मणत्वादि । **गोत्रं**=काश्यपादि । ऋषय एव यज्ञे व्रियमाणाः **प्रव-राः** । **चरणं**=शाखा । **अनुभावो**ऽसाधारणं कार्यं वेदादि । अत एव भवत्यस्मादिति **भवः** ।

प्रकाशिका ।

मन्यत्रोपाधिभूतचैतन्यात्मकत्वं तद् घटादिभिन्नत्वं च प्रतियोगिविशेषणं तेन विशिष्टाभावः परमते विशेषणाभावात्, अस्मन्मते च विशेष्याभावादविशिष्ट इति भावः । **मिश्रास्तु** औपाधिकं चैतन्यं जन्यचैतन्यमित्यर्थः, एवं च विशिष्टाभावोऽस्मन्मते विशेष्याभावात्, परमते चोभयाभावादविशिष्ट इति वदन्ति । तच्चिन्त्यम् । तथासति विशेष्याभावमात्रस्यैवोभयसाधारण्ये विशेषणोपादानानुप-पत्तेः । यत्तु घटाद्यतिप्रसङ्गवारणार्थमेव विशेषणपदमभावस्यैव च विशेषणन्तदभिधेयमिति । तत्तु-च्छम् । अतिप्रसङ्गस्यादोषत्वात् । अन्यथा **दोषहीन** इत्यादावपि तद्विशेषणोपादानापत्तेः । किञ्चाभा-वविशेषणतायां वेदान्तिमतसाधारण्यानुपपत्तिरेव । **फलैकमत्येऽपीति** । उक्तधर्मेणाविरोधेऽपि धर्मा-न्तरेण विरोधादित्यर्थः । तमेवोपपादयति । **सर्वथेति** । **अनुभावोऽसाधारणमिति** । न च पूर्व-

मकरन्दः ।

वदन्ति । तच्चिन्त्यम् । तथा सति विशेष्याभावस्यैवोभयमतसाधारणत्वे विशेषणवैयर्थ्यापत्तेः । यत्तु घटाद्यतिप्रसङ्गवारणार्थमेव सत्यन्तमिति । तच्चिन्त्यम् । तदतिप्रसङ्गस्यादोषत्वात् । अन्यथा दोषहीनत्वनित्यत्वादावपि तथात्वप्रसङ्गादिति । **फलैक्येति** । उक्तप्रकारावच्छिन्नधर्मिण्यैकमत्येऽपि प्रकारान्तरभेदेन दर्शनभेदादित्यर्थः । तदेवोपपादयति । **सर्वथेति** ।

टिप्पणी ।

भावात् । स्वमते द्वैताङ्गीकारेण घटादिभिन्ने तत्र विशिष्टाभावो विशेष्याभावादित्यविशिष्ट एव विशिष्टाभाव इति । न च चैतन्यात्मकत्वमात्रमुपेयं न्यायमते चैतन्यस्येश्वरधर्मत्वेन तदात्मक-त्वाभावादिति वाच्यम् । साङ्ख्यमतसाधारण्याय तदुपादानात्, तन्मते चेतनस्य घटादिभिन्नत्वात् चैतन्यात्मकत्वाच्च विशिष्टाभावसत्त्वासम्भवात् । तदुपादानप्रकृतेः कार्यजनने स्वतन्त्रत्वेन चेत-नस्याकारणतया चैतन्यस्यान्यत्र कार्यजनने प्रयोजकत्वलक्षणोपाधित्वासम्भवात् । न्यायवेदान्तमत-योरीश्वरस्य कारणतयोपादानसाक्षात्कारात्मकस्य मायावृत्तिप्रतिबिम्बितचैतन्यात्मकस्य च ज्ञानपदा-भिधेयस्य चैतन्यस्य कार्यजननप्रयोजकत्वेनास्त्युपाधित्वमिति भावः । **सम्प्रदायप्रद्योतको वेदं**

---

(१) फलैक्येऽपीति पाठान्तरम् ।

कुलधर्म्मादिवदासंसारं प्रसिद्धानुभावे भगवति भवे सन्देह एव कुतः ? किं निरूपणीयम् । तथापि,

**न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥**

**श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्यो भवति,**

---

बोधनी ।

बह्वृचत्वाद्यवान्तरजातिः । **कुलधर्मः**=प्रतिकुलं व्यवच्छिन्नः शिखासन्निवेशादिः । यथा जात्यादयः संसारमभिव्याप्य प्रमाणसिद्धाः, एवमीश्वरोऽपि । **किं निरूपणीयम्** ? न किञ्चिदित्यर्थः ।

समाधत्ते—**तथापि न्यायेति** । तत्रैव हि सन्दिग्धविषयत्वनियमो न्यायस्य यत्र दृष्टमेव संशयनिरासः प्रयोजनम्, अयं तु विहितोपासनात्मकत्वाददृष्टरूपस्वर्गापवर्गादिफल इति सिद्धेऽपि विषये प्रवर्त्तत इति भावः । विहितत्वप्रदर्शनार्थं—**मननेति ।** "मन्तव्य" इति मननं विहितम्, मननाख्या चेयं न्यायचिन्तेति । यद्वा, यद्युपासनेयं **न्यायचर्चा**, न तु संशयनिरासफला, तर्हि श्रवणादिचतुर्विधायां कतमेयमित्यत उक्तं—**मननेति । श्रवणानन्तरेति** मननस्यावसरप्राप्तिर्दर्शितेति । तद् व्याचष्टे—**श्रुतो हीति ।**

प्रकाशः ।

तथा च जातिगोत्रादिवत् संसारमभिव्याप्य श्रुत्यादिप्रमाणसिद्धे परमात्मनि न सन्देहः, अतस्तत्रेश्वरे किं निरूपणीयमित्यर्थः । तथापि धर्मिणि भगवति विहितमनने प्रकाराकाङ्क्षायां तत्र विप्रतिपत्त्या सन्देहोऽस्तीति मनसिकृत्य मननरूपोपासनैव क्रियते इति समाधत्ते—

**तथापीति ।**

न्यायेन चर्च्चा **न्यायचर्च्चा** अनुमितिरूपा, **उपासनैवेति** सम्बन्धः । **श्रवणानन्तरागतेत्यनेन** श्रुतिप्रामाण्यग्राहकन्यायनिरूपणमपि सूचितम् । **श्रवणानन्तरागतेति** संगृहीतं विवृणोति । **श्रुतो हीति** । श्रुतिमूलकत्वात् स्मृतेरपि तत्समानविषयतया स्वबोधदार्ढ्यार्थं श्रवण

प्रकाशिका ।

मनुभावोऽसाधारणीं कारणतामाहेति व्याख्यानेन विरोध इति वाच्यम् । तत्रानुभावोऽनुभावशब्दार्थोऽसाधारणकार्यरूपो नान्तरीयकतयाऽसाधारणीं कारणतामाहेत्यर्थात्, इह तु पदार्थव्याख्यानादिति । **तत्र विप्रतिपत्त्येति** । इदं च तथापि (१)विप्रतिपत्तिं विनेत्यादिवक्ष्यमाणं मनसिकृत्योक्तम् । वस्तुतो मननरूपानुमितौ सन्देहोऽनङ्गमेवेति स्वयमेवोक्तेरिति । **श्रुतिमूलकत्वादिति** । अत्र मिश्राः "श्रोतव्यः श्रुतिवाक्येभ्य"इत्यादिनियमविध्यवष्टम्भेनेदमुक्तम् । वस्तुतस्तस्य नियमविधित्वेऽदृष्टकल्पनाभिया श्रुतिवाक्यपदमजहत्स्वार्थलक्षणया आत्मप्रतिपादकप्रमाणवाक्यपरम् । अत एवोत्तरोत्तरप्रतिपत्तिरेव पूर्वपूर्वप्रतिपत्तेर्द्वारमिति सिद्धान्तः । अत एव "द्रष्टव्य" इत्यादिपाठिकक्रमत्यागो-

मकरन्दः ।

**श्रुतिमूलकत्वादिति ।** एतच्च 'श्रोतव्यः श्रुतिवाक्येभ्य" इति नियमविध्यवष्टम्भेनोक्तम् । वस्तुतस्त्वात्मप्रतिपादकप्रमाणवाक्यपरमेव श्रुतिपदम् । अन्यथा अदृष्टार्थकतापत्तेः । पूर्व-

टिप्पणी ।

**प्रणीयेति** । प्रणयनं हि तत्प्रत्यक्षजनककण्ठताल्वाद्यभिघातविशेषः । तथा च वेदस्य नित्यत्वपक्षेऽपि तत्सम्भवोऽनित्यत्वपक्षेऽपि चेति न क्षतिः । **स्मृतेरपि तत्समानविषयतयेत्यादि ।** इदं तु

---

( १ ) संशयं विनेति मुद्रितप्रकाशे पाठः ।

"श्रोतव्यो मन्तव्यः" इति श्रुतेः,

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥

इति स्मृतेश्च ॥ ३ ॥

---

बोधनी ।

**प्रज्ञा**=साक्षात्कारः, **योगं**=योगफलं निःश्रेयसमिति ॥ ३ ॥

प्रकाशः ।

उपयोग उक्तः । **उत्तमो योगः** = आत्मतत्त्वसाक्षात्कारः ॥ ३ ॥

ननु भगवति सन्देहाभावेन सिद्धसाधनात् कथमनुमितिः ? । सिद्धसाधनं हि स्वार्थानुमाने न दोषः प्रमाणसंप्लवस्य संस्थापनादिति चेद् । न । विनिगमकाभावात्,

प्रकाशिका ।

ऽपि, अन्यथा अदृष्टमेव तत्रापि द्वारमिति किमिति पाठिकक्रमत्यागः । एवं च स्त्रीशूद्रादीनामपि पुराणादिना श्रवणे मोक्षाधिकार इति वदन्ति । तच्चिन्त्यम् । (१)अदृष्टकल्पनाभिया श्रुतार्थपरित्यागे रथकारशब्देऽपि लक्षणापत्तेः । 'द्रष्टव्य' इत्यादौ तु क्रमत्यागमात्रं, तत्त्यागद्वारा श्रुतार्थपरित्यागः (१)अदृष्टकल्पनाभियाऽसिद्ध एव, "अग्निहोत्रं जुहोति" यवागूं पचतीत्यादावाद्यप्रतिपत्तिरूपद्वारवति उत्तरोत्तरप्रतिपत्तिर्द्वारमित्यदृष्टद्वारकत्वेऽपि विशेषणज्ञानत्वेन द्वारत्वायुक्तमिति । अत एव त्रिसूत्री टीका 'तपःप्रभाव एव हि तादृशस्तेषां यत एवंविधाः पाप्मानो विलीयन्त" इति । अन्यथा शूद्रादीनामप्यधिकारे तदुपदेशेन पापानुत्पत्त्या तद्विरुद्धेतेति । निबन्धेऽप्येवमेवेति। **योगो** निदिध्यासनमेवेत्यनन्वय इत्यत आह । **आत्मतत्त्वसाक्षात्कार इति** ॥ ३ ॥

**विनिगमकेति** । सिद्धेः पक्षताविघटकतया दूषणत्वस्योभयत्राविशेषादित्यर्थः । ननु सिद्धेरनुमितिप्रतिबन्धकत्वे मानाभावः, यावत् परामर्शमनुमित्यविरोधादिति परार्थानुमान एवार्थान्तरतया

मकरन्दः ।

पूर्वप्रतिपत्तौ हि उत्तरोत्तरप्रतिपत्तिद्वारकता । सा च श्रुतिमात्रजनितश्रवणसाध्यतायां नियमापूर्वकल्पनया भज्येत । द्रष्टव्य इति अदृष्टद्वारकताभयेन पाठिकक्रमोल्लङ्घनमपि नोचितं तस्य स्यादिति पुराणस्मृत्यादिना श्रुते मननादभिमतसिद्धिर्भवत्येवेत्याहुः । ननु **योगो** निदिध्यासनमेवेत्यनन्वय इत्यत आह । **उत्तम इति** ॥ ३ ॥

**विनिगमकेति** । सिद्ध्यभावरूपायाः पक्षताया अनुमितिहेतुत्वे तदभावादनुमित्यभावस्यो

टिप्पणी ।

"श्रोतव्यः श्रुतिवाक्येभ्य" इत्यादिनियमविध्यवष्टम्भेन, अन्यथा स्मृतेरपि श्रवणे प्रतिपत्तेरविशेषात्, तस्या अपि प्रामाण्याच्च **श्रुतिमूलकत्वादि**त्युपादानमफलं स्यात्, तथापि मुख्यतया श्रुतिवाक्येभ्य एवायं श्रोतव्यः । अवबोधदार्ढ्यार्थं श्रुतिमूलायाः स्मृतेरपीति भावः ॥ ३ ॥

नन्वित्यादिग्रन्थे शङ्कते **सिद्धसाधनं हीत्यादि** । ननु सिद्धसाधनस्यादोषत्वात् ज्ञानधाराप्रसङ्ग इत्यत आह—**प्रमाणसंप्लवेत्यादि** । यावत् प्रमाणं प्रत्यक्षस्थल इवात्रानुमानस्थलेऽपि ज्ञानाधारा सम्पद्यत एव, प्रमाणसम्प्लवकारणाभावान्नेष्यत इत्यर्थः । यद्वा सिद्धसाधनस्यादोषत्वे ग्रन्थकारसम्मतिमाह । **प्रमाणेति** । **संप्लवः** = सङ्करः । **व्यवस्थापनाद्** भाष्यकारेणेति शेषः । **इति चेन्न विनिगमकाभावादिति** । सिद्धेः पक्षतावि-

---

(१) अक्लृप्तेत्यादर्शपुस्तके पाठः ।

प्रकाशः ।

ग्रन्थस्य परार्थानुमानरूपत्वाच्च । यथा अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्राऽऽर्थेन क्रमेण शाब्दः क्रमो लङ्घ्यते, तथा "श्रोतव्यो मन्तव्य" इत्यत्रापि मननानन्तरं श्रवणे श्रुतेस्तात्पर्य्यमिति चेद् । न । दृष्टान्ते, होमे द्रव्यान्तरसाधनत्वं यवागूपाकस्यादृष्टार्थत्वञ्च कल्प्यमिति गौरवात्तथाऽस्तु, प्रकृते त्वनुपपत्त्यभावः, श्रवणानन्तरं मननस्यान्यथोपपाद्यत्वात्, **श्रवणानन्तरागतेति** ग्रन्थ विरोधाच्च । "श्रोतव्यः श्रुतिवाक्येभ्य"इति बहुवचनं, कपिञ्जलानालभेतेतिवत् त्रित्वपरम्, अतो रूपान्तरेण मननमविरुद्धमिति चेन्न । "श्रोतव्यो मन्तव्य" इति सामानाधिकरण्यश्रुतेर्लाघवाच्च येनैव

प्रकाशिका ।

सिद्धसाधनं दोष इति ब्रूयात्तत्राह–**ग्रन्थस्येति** । शाब्दत्वं पाठिकत्वं न तु शब्दप्रतिपाद्यत्वं "अध्वर्य्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इतिवत्तादृशशब्दाभावात् । ननु श्रवणानन्तरं मननासम्भव एवानुपपत्तिरत आह । **श्रवणानन्तरमिति** । **अन्यथेति** । सिषाधयिषयेत्यर्थः । नन्वेवं सिद्धसाधनात् कथमनुमितिरिति स्वपक्ष एव दूषित इत्यरुचेराह–**श्रवणेति । कपिञ्जलानालभेतेतीति** । यावत्कपिञ्जलानामालम्भनाशक्यत्वेन विशेषपरतायां प्रथमोपस्थितिलाघवाद्बहुवचनं तत्र यथा त्रित्वपरं तथात्रापीत्यर्थः । धर्म्मिमात्रमादाय सामानाधिकरण्यं स्यादत आह । **लाघवाच्चेति** । मननस्य प्रकाराकाङ्क्षायामुपस्थितश्रवणप्रकारस्यैवान्वयात्, अन्यथाऽनुपस्थितकल्पनागौरवादिति भावः । ननु सिद्धसाधनभिया प्रामाणिकं गौरवमादर्त्तव्यं रूपान्तरेण मननसंभवादित्यत आह ।

मकरन्दः ।

भयत्र तुल्यत्वादित्यर्थः । ननु नोक्तरीत्या सिद्धसाधनस्य दोषत्वं, किन्त्वर्थान्तरतया, तच्च शब्ददोषतया स्वार्थानुमाने न दोष इति यदि ब्रूयात् तत्राह । **ग्रन्थस्येति** । क्रमे शाब्दत्वं, पाठिकत्वं न तु शब्दप्रतिपाद्यत्वम्, क्रमप्रतिपादकाभावात् । ननु सिद्धसाधनान्मननानुपपत्तिरेवेत्यत आह । **श्रवणेति । अन्यथेति** । सिषाधयिषयेत्यर्थः । ननु सिद्धसाधनात् कथमनुमितिरिति स्वपक्षः साधु समर्थित इत्यरुचेराह । **श्रवणेति । कपिञ्जलेति** । यावत्परत्वासम्भवेन कतिपयपरतया बहुवचनस्य प्रथमोपस्थितत्रित्वपरत्वं यथा, तथा प्रकृतेऽपीत्यर्थः । धर्म्मिमात्रविषयतयापि सामानाधिकरण्यसम्भव इत्यरुचेराह । **लाघवाच्चेति** । श्रवणप्रकारस्योपस्थितत्वेनानुपस्थितप्रकारकल्पनायां गौरवादिति भावः । ननु सिद्धसाधनादेव प्रामाणिकं गौरवं न्याय्य-

टिप्पणी ।

घटकत्वेन दूषकत्व उभयत्राप्यविशेषाद्विनिगमकाभावादित्यर्थः । ननु पक्षताया अनुमितौ स्वार्थे हेतुतायाम्मानाभावः यावत्परामर्षमनुमितिर्जायत एवेत्युद्धतं प्रत्याह । **ग्रन्थस्य परार्थानुमानेति** । तस्य समस्तरूपोपन्नलिङ्गप्रतिपादकवाक्यत्वेन परार्थानुमानत्वं, परार्थानुमाने चावश्यं सिद्धसाधनं दोषः, सन्दिग्ध एव हेत्वादेराकाङ्क्षितत्वादिति भावः । **श्रवणानन्तरं मननस्यान्यथेति** । सिषाधयिषयेत्यर्थः । **अन्यथोपपाद्यत्वादिति** । तथा चोक्तकल्पनासम्भवादिति शेषः । ननु सिद्धसाधनात् कथमनुमितिरिति स्वपक्ष एव दूषित इत्यरुचेराह । **श्रवणानन्तरागतेति । कपिञ्जलानालभेतेतिव**दिति । यथा यावदालम्भस्याशक्यत्वेन विशेषपरतायां प्रथमोपस्थितिलाघवाद्बहुवचनस्य त्रित्वपरत्वन्तथेत्यर्थः । ननु धर्म्मिमात्रमादाय सामानाधिकरण्यं स्यादित्यत आह । **लाघवाच्च । येनैव रूपेण श्रवणमिति** । मननस्य प्रकाराकाङ्क्षायामुपस्थितश्रवणप्रकारस्यैवान्वयात्, अन्यथानुपस्थितकल्पने गौरवादिति भावः । ननु सिद्धसाधनभिया गौरवं प्रामाणिकमिति

"श्रोतव्यो मन्तव्यः" इति श्रुतेः,

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥

इति स्मृतेश्च ॥ ३ ॥

बोधनी ।

**प्रज्ञा**=साक्षात्कारः, **योगं**=योगफलं निःश्रेयसमिति ॥ ३ ॥

प्रकाशः ।

उपयोग उक्तः । **उत्तमो योगः** = आत्मतत्त्वसाक्षात्कारः ॥ ३ ॥

ननु भगवति सन्देहाभावेन सिद्धसाधनात् कथमनुमितिः ? । सिद्धसाधनं हि स्वार्थानुमाने न दोषः प्रमाणसंप्लवस्य संस्थापनादिति चेद् । न । विनिगमकाभावात्,

प्रकाशिका ।

ऽपि, अन्यथा अदृष्टमेव तत्रापि द्वारमिति किमिति पाठिकक्रमत्यागः । एवं च स्त्रीशूद्रादीनामपि पुराणादिना श्रवणे मोक्षाधिकार इति वदन्ति । तच्चिन्त्यम् । (१)अदृष्टकल्पनाभिया श्रुतार्थपरित्यागे रथकारशब्देऽपि लक्षणापत्तेः । 'द्रष्टव्य' इत्यादौ तु क्रमत्यागमात्रं, तत्त्यागद्वारा श्रुतार्थपरित्यागः (१)अदृष्टकल्पनाभियाऽसिद्ध एव, "अग्निहोत्रं जुहोति" यवागूं पचतीत्यादावाद्यप्रतिपत्तिरूपद्वारवति उत्तरोत्तरप्रतिपत्तिर्द्वारमित्यदृष्टद्वारकत्वेऽपि विशेषणज्ञानत्वेन द्वारत्वायुक्तमिति । अत एव त्रिसूत्री टीका 'तपःप्रभाव एव हि तादृशस्तेषां यत एवंविधाः पाप्मानो विलीयन्त" इति । अन्यथा शूद्रादीनामप्यधिकारे तदुपदेशेन पापानुत्पत्त्या तद्विरुद्धेतेति । निबन्धेऽप्येवमेवेति । **योगो** निदिध्यासनमेवेत्यनन्वय इत्यत आह । **आत्मतत्त्वसाक्षात्कार इति** ॥ ३ ॥

**विनिगमकेति** । सिद्धेः पक्षताविघटकतया दूषणत्वस्योभयत्राविशेषादित्यर्थः । ननु सिद्धेरनुमितिप्रतिबन्धकत्वे मानाभावः, यावत् परामर्शमनुमित्यविरोधादिति परार्थानुमान एवार्थान्तरतया

मकरन्दः ।

पूर्वप्रतिपत्तौ हि उत्तरोत्तरप्रतिपत्तिद्वारकता । सा च श्रुतिमात्रजनितश्रवणसाध्यतायां नियमापूर्वकल्पनया भज्येत । द्रष्टव्य इति अदृष्टद्वारकताभयेन पाठिकक्रमोल्लङ्घनमपि नोचितं तस्य स्यादिति पुराणस्मृत्यादिना श्रुते मननादभिमतसिद्धिर्भवत्येवेत्याहुः । ननु **योगो** निदिध्यासनमेवेत्यनन्वय इत्यत आह । **उत्तम इति** ॥ ३ ॥

**विनिगमकेति** । सिद्ध्यभावरूपायाः पक्षताया अनुमितिहेतुत्वे तदभावादनुमित्यभावस्यो

टिप्पणी ।

"श्रोतव्यः श्रुतिवाक्येभ्य" इत्यादिनियमविध्यवष्टम्भेन, अन्यथा स्मृतेरपि श्रवणे प्रतिपत्तेरविशेषात् तस्या अपि प्रामाण्याच्च **श्रुतिमूलकत्वादि**त्युपादानमफलं स्यात्, तथापि मुख्यतया श्रुतिवाक्येभ्य एवायं श्रोतव्यः । अवबोधदार्ढ्यार्थं श्रुतिमूलायाः स्मृतेरपीति भावः ॥ ३ ॥

नन्वित्यादिग्रन्थे शङ्कते **सिद्धसाधनं हीत्यादि** । ननु सिद्धसाधनस्यादोषत्वात् ज्ञानधाराप्रसङ्ग इत्यत आह—**प्रमाणसंप्लवेत्यादि** । यावत् प्रमाणं प्रत्यक्षस्थल इवात्रानुमानस्थलेऽपि ज्ञानाधारा सम्पद्यत एव, प्रमाणसम्प्लवकारणाभावान्नेष्यत इत्यर्थः । यद्वा सिद्धसाधनस्यादोषत्वे ग्रन्थकारसम्मतिमाह । **प्रमाणेति** । **संप्लवः** = सङ्करः । **व्यवस्थापनाद्** भाष्यकारेणेति शेषः । **इति चेन्न विनिगमकाभावादिति** । सिद्धेः पक्षतावि-

(१) अक्लृप्तेत्यादर्शपुस्तके पाठः ।

प्रकाशः ।

ग्रन्थस्य परार्थानुमानरूपत्वाच्च । यथा अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्राऽऽर्थेन क्रमेण शाब्दः क्रमो लङ्घ्यते, तथा "श्रोतव्यो मन्तव्य" इत्यत्रापि मननानन्तरं श्रवणे श्रुतेस्तात्पर्य्यमिति चेद् । न । दृष्टान्ते, होमे द्रव्यान्तरसाधनत्वं यवागूपाकस्यादृष्टार्थत्वञ्च कल्प्यमिति गौरवात्तथाऽस्तु, प्रकृते त्वनुपपत्त्यभावः, श्रवणानन्तरं मननस्यान्यथोपपाद्यत्वात्, **श्रवणानन्तरागतेति** ग्रन्थ विरोधाच्च । "श्रोतव्यः श्रुतिवाक्येभ्य" इति बहुवचनं, कपिञ्जलानालभेतेतिवत् त्रित्वपरम्, अतो रूपान्तरेण मननमविरुद्धमिति चेन्न । "श्रोतव्यो मन्तव्य" इति सामानाधिकरण्यश्रुतेर्लाघवाच्च येनैव

प्रकाशिका ।

सिद्धसाधनं दोष इति ब्रूयात्तत्राह—**ग्रन्थस्येति**। शाब्दत्वं पाठिकत्वं न तु शब्दप्रतिपाद्यत्वं "अध्वर्य्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इतिवत्तादृशशब्दाभावात्। ननु श्रवणानन्तरं मननासम्भव एवानुपपत्तिरत आह। **श्रवणानन्तरमिति । अन्यथेति**। सिषाधयिषयेत्यर्थः। नन्वेवं सिद्धसाधनात् कथमनुमितिरिति स्वपक्ष एव दूषित इत्यरुचेराह—**श्रवणेति । कपिञ्जलानालभेतेतीति ।** यावत्कपिञ्जलानामालम्भनाशक्यत्वेन विशेषपरतायां प्रथमोपस्थितिलाघवाद्बहुवचनं तत्र यथा त्रित्वपरं तथात्रापीत्यर्थः। धर्मिमात्रमादाय सामानाधिकरण्यं स्यादत आह। **लाघवाच्चेति ।** मननस्य प्रकाराकाङ्क्षायामुपस्थितश्रवणप्रकारस्यैवान्वयात्, अन्यथाऽनुपस्थितकल्पनागौरवादिति भावः। ननु सिद्धसाधनभिया प्रामाणिकं गौरवमादर्तव्यं रूपान्तरेण मननसंभवादित्यत आह।

मकरन्दः ।

भयत्र तुल्यत्वादित्यर्थः। ननु नोक्तरीत्या सिद्धसाधनस्य दोषत्वं, किन्त्वर्थान्तरतया, तच्च शब्ददोषतया स्वार्थानुमाने न दोष इति यदि ब्रूयात् तत्राह। **ग्रन्थस्येति ।** क्रमे शाब्दत्वं, पाठिकत्वं न तु शब्दप्रतिपाद्यत्वम्, क्रमप्रतिपादकाभावात्। ननु सिद्धसाधनान्मननानुपपत्तिरेवेत्यत आह। **श्रवणेति । अन्यथेति ।** सिषाधयिषयेत्यर्थः। ननु सिद्धसाधनात् कथमनुमितिरिति स्वपक्षः साधु समर्थित इत्यरुचेराह। **श्रवणेति । कपिञ्जलेति ।** यावत्परत्वासम्भवेन कतिपयपरतया बहुवचनस्य प्रथमोपस्थितत्रित्वपरत्वं यथा, तथा प्रकृतेऽपीत्यर्थः। धर्मिमात्रविषयतयापि सामानाधिकरण्यसम्भव इत्यरुचेराह। **लाघवाच्चेति ।** श्रवणप्रकारस्योपस्थितत्वेनानुपस्थितप्रकारकल्पनायां गौरवादिति भावः। ननु सिद्धसाधनादेव प्रामाणिकं गौरवं न्याय्य-

टिप्पणी ।

घटकत्वेन दूषकत्व उभयत्राप्यविशेषाद्विनिगमकाभावादित्यर्थः। ननु पक्षताया अनुमितौ स्वार्थे हेतुतायाम्मानाभावः यावत्परामर्षमनुमितिर्जायत एवेत्युद्धतं प्रत्याह। **ग्रन्थस्य परार्थानुमानेति ।** तस्य समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यत्वेन परार्थानुमानत्वं, परार्थानुमाने चावश्यं सिद्धसाधनं दोषः, सन्दिग्ध एव हेत्वादेराकाङ्क्षितत्वादिति भावः। **श्रवणानन्तरं मननस्यान्यथेति ।** सिषाधयिषयेत्यर्थः। **अन्यथोपपाद्यत्वादिति ।** तथा चोक्तकल्पनासम्भवादिति शेषः। ननु सिद्धसाधनात् कथमनुमितिरिति स्वपक्ष एव दूषित इत्यरुचेराह। **श्रवणानन्तरागतेति । कपिञ्जलानालभेतेतिवदिति ।** यथा यावदालम्भस्याशक्यत्वेन विशेषपरतायां प्रथमोपस्थितिलाघवाद्बहुवचनस्य त्रित्वपरत्वन्तथेत्यर्थः। ननु धर्म्मिमात्रमादाय सामानाधिकरण्यं स्यादित्यत आह। **लाघवाच्च । येनैव रूपेण श्रवणमिति ।** मननस्य प्रकाराकाङ्क्षायामुपस्थितश्रवणप्रकारस्यैवान्वयात्, अन्यथानुपस्थितकल्पने गौरवादिति भावः। ननु सिद्धसाधनभिया गौरवं प्रामाणिकमिति

प्रकाशः ।

रूपेण श्रवणं तेनैव रूपेण मननस्योचितत्वात्। न वा रूपान्तरेण श्रुतस्य रूपान्तरेण मननेऽश्रद्धामलक्षालनं शास्त्रव्यापारो निर्वहति , श्रुतस्यामननात् । अत एव धर्मिस्वरूपे सन्देहाभावेऽपि क्षितिकर्तृत्वादौ धर्मे सन्देहात्तत्रानुमेत्यपास्तम् । तथापि धर्मिणि सन्देहानुपपादनाच्च । न वा तद्रूपमस्तीश्वरे, यन्न वेदे श्रुतमस्ति । तथा च "श्रोतव्यः श्रुतिवाक्येभ्य" इत्यत्रासङ्कोचादीश्वरपरसर्ववाक्येभ्य एव श्रवणे सति कथं मननम् । एतेन **भगवति भवे सन्देह एव किं निरूपणीय**मिति, **कुतः** = पृथिवीतः कर्तृजन्यत्वसंशयात्तत्र संशय एवेत्यपि योजनामात्रमपास्तम् । यत्तु श्रुतेऽपि भगवति श्रुतेः प्रामाण्यसन्देहात्तत्प्रतिपादितेऽपीश्वरे सन्देह इति । तन्न । "श्रोतव्यो मन्तव्य" इति

प्रकाशिका ।

**न वेति । अत एवेति ।** अन्यथा मनने शास्त्रव्यापारानिर्वाहादेवेत्यर्थः। **तथापीति ।** तथाच **परमात्मा निरूप्यत** इत्यसङ्गतमेवेति भावः। ननु संशयकोटित्वं धर्म्मस्यैव, धर्म्मिणि तु विशेष्यतया स एव संशयोऽनुप्रवर्त्तक इत्यत आह। **न वेति।** ननु बहुवचनस्य त्रित्वपरत्वे तथापि संशयासङ्गतिरेवेत्यत आह । **तथा चेति ।** भवेदेवं यदि कपिञ्जलन्यायावतारोऽत्र स्यात् स च सामान्यान्वयानुपपत्तिमूलकः, न चात्र सेति भावः। **एतेनेति ।** धर्म्मे धर्म्मिणि च संशयाभावेनेत्यर्थः। **सन्देह एवेति ।** अत्र सन्देहपदं सप्तम्यन्तम् तथा च सन्देहे किन्निरूपणीयमिति लोकोक्तेरपि सन्देहोऽस्त्येव **कुतः** पृथिवीत इति योजना । **योजनामात्र**मिदं न तु संशयोपपादकं किञ्चिदुक्तमिति मात्रार्थ इति व्याख्येति मिश्राः । **कुतः कुत** इति पाठपक्षे तु सन्देहोऽस्त्येव, किन्निरूपणीयमिति कुतः, अत्र हेतुः कुतः पृथिवीत इति **योजनामात्रम्,** मात्रपदार्थश्च तादृशपदद्वयाभावः पूर्ववच्चेति भावः । श्रोतव्य इति प्रामाण्यसंशयाहितो धर्म्मिणि संशयो वर्त्तत एवेति स एवानुमानाङ्गं स्यादतो न विरोध

मकरन्दः ।

मित्यत आह । **न वेति । अत एवेति ।** श्रुतस्यामनने उक्तशास्त्रव्यापारानिर्वाहादेवेत्यर्थः । **तथापीति ।** तथा च **परमात्मा निरूप्यत** इत्यसङ्गतमेवेति भावः । ननूक्तधर्मिनिरूपणस्यैव पक्षीभूतेश्वरविषयतां विनाऽसम्भवान्नासङ्गतिरित्यत आह । **न वेति ।** तथा च धर्मेऽपि न सन्देह इति भावः । **तथा चेति ।** कपिञ्जले यावत्परत्वासम्भववदत्रासम्भवाभावेन त्रित्वपरत्वाभावादिति भावः । **एतेनेति ।** उक्तरीत्या धर्मिणि धर्मे वा सन्देहाभावेनेत्यर्थः । ननु कथं सन्देह इत्यत आह । **कुत इति । योजनामात्रमिति ।** अत्र मात्रपदेनापदार्थव्याख्यानं सूचितम् । मूले, इति कुत इति पदाभावाद् योजना कृता, न तु संशयोपपादकं किञ्चिदुक्तमिति तेन सूचितमित्यन्ये । **श्रोतव्य इति ।** ननु संशयस्योभयत्र तुल्यतया श्रुतिबलेन ईश्वरविषयकमेव मननं

टिप्पणी ।

रूपान्तरेण मननं स्यादित्यत आह। **न च रूपान्तरेण श्रुतस्येति ।** न वेत्यर्थः । तेन पूर्वहेतोरुक्तयुक्त्याऽसम्भवेऽपि न क्षतिरन्यथा समुच्चयार्थत्वे तत्स्यादिति भावः । **अत एव धर्मिणीति ।** रूपान्तरेण मनने शास्त्रव्यापारानिर्वाहादेवेत्यर्थः। **तथापि धर्मिणि सन्देहानुपपादनादिति ।** तथा च **परमात्मा निरूप्यत** इति ग्रन्थासङ्गतिः । तत्प्रयोजकस्य परमात्मसंशयस्याभावादिति भावः । ननु तन्निरूपणमवान्तरधर्म्मप्रकारेण तत्प्रतिपत्त्यनुकूलव्यापारः । तत्र धर्म्मसंशय एवोपयुज्यते सर्वत्र धर्मस्यैव कोटित्वेन धर्मिणो विशेष्यतयैव सन्दिग्धत्वात् कर्त्तृत्वादिसन्देहस्यापि तथात्वादित्यत आह। **न च तद्रूपमस्तीश्वर** इति। **श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्रासङ्कोचादिति ।** कपिञ्जलन्यायेन बहुवचनस्य त्रित्वाद्यपरत्वात् सामान्यान्वयानुपपत्तेर्बीजस्यात्राभावादिति भावः । **एतेने-**

प्रकाशः।

सामानाधिकरण्यविरोधात्। मननस्य प्रामाण्यविषयकत्वात्। यदि च श्रुतिरनवधृतप्रामाण्यैव, तदा कथं ततः श्रवणेऽपि बह्वायाससाध्ये प्रवृत्तिः। तथात्वेऽपि वेदप्रामाण्यानुमानमात्रौचित्यादीश्वरानुमानानुपपत्तिः। अथ सिद्धसाधनं न हेत्वाभासः। उभयथा हि हेत्वाभासता, करणविघटकत्वाद्विरुद्धानैकान्तिकयोरिव, तद्विघटनमकुर्वतः स्वत एव प्रतिबन्धकत्वाद् बाधप्रतिरोधवत्, सिद्धसाधनन्तु न व्याप्तिज्ञानविघटकं, न वा स्वत एव प्रतिबन्धकम्, अतो न हेत्वाभासः, दूषकता त्वर्थान्तरान्तर्भावादिति मतम्। तन्न। व्याप्तिज्ञानस्येव पक्षधर्मताज्ञानस्यापि तत्कारणत्वात् तद्विघटकसिद्धसाधनस्यापि तदौचित्यात्। पक्षधर्मताज्ञानं न तत्करणं किन्तु व्याप्तिज्ञानमिति चेन्न। लाघवात् कारणमात्रस्य प्रयोजकत्वात्। श्रुतिबोधितेऽपि भगवति बहुविधकर्तृत्वकौटस्थ्यनिरञ्जनादिश्रुतेः

प्रकाशिका।

इत्यरुचेराह। **यदि चेति**। ननु श्रवणप्रतिपादिकाया अपि श्रुतेः प्रामाण्यावधारणेऽपीश्वरप्रतिपादिकायाः श्रुतेः प्रामाण्यसंशये बाधकाभाव इत्यरुचेराह। **तथात्वेऽपीति**। प्रामाण्यसंशयाहितसंशयस्य तन्निर्णयं विनार्थानुमितावप्यनिवृत्तेरिति भावः। **विरुद्धेत्या**द्युपलक्षणं स्वरूपासिद्धस्यापीति द्रष्टव्यम्। **स्वत इति**। साक्षादित्यर्थः। **अर्थान्तरेति**। तच्च पुरुषदोषतया नानुमितिप्रतिबन्धकं पुरुषः परं सापराधः परमकारुणिकतया स्वदोषं पश्यन्नपि प्रयोगं कुर्यादिति भावः। **पक्षधर्मताज्ञानस्येति**। तथा च पक्षताया अपि करणकोटिप्रवेशात्तद्विघटकसिद्धसाधनस्यापि करणविघटकत्वमिति भावः। **लाघवादिति**। एवं च पक्षतायाः स्वातन्त्र्येणापि कारणतया तद्विघटकतया हेत्वाभास इति सूचितम्। नचैवं प्रत्यक्षसामग्र्यादिकमप्याभासः स्यादिति वाच्यम्। ज्ञायमानस्य यस्य कारणविघटकत्वं तस्य हेत्वाभासत्वमित्युपगमात्। अत एव नात्ममनोयोगाभावादावप्यतिप्रसङ्गः। नचैवं सिद्धसाधनमपि न हेत्वाभासः, स्वरूपसत्प्रति-

मकरन्दः।

स्यान्न तु प्रामाण्यविषयकमतो नोक्तविरोध इति चेन्न। प्रामाण्यसंशये जागरूके कुतोऽपि न विपर्ययसंशयव्युदासः, तन्निदानानुच्छेदादिति प्रामाण्यानुमानानुसरणावश्यंभावात्, अनन्तरञ्च तत एव विषयनिश्चयात् किं पुनर्विषयनिरूपणेनेति भावः। **श्रवणेऽपीति**। श्रोतव्य इत्यादिश्रुतावपि प्रामाण्यसन्देहसम्भवादित्यर्थः। यद्यपि श्रुतिभेदादन्यत्र तन्निश्चयेऽप्यन्यत्र संशयो नासम्भवी, तथापि प्रवृत्तिसंवादाद्यभावे आप्तोक्तत्वमेव तन्निश्चायकं, तच्चोभयत्राविशिष्टमिति भावः। वस्तुतस्तु एतदस्वरसादेव प्रागुक्तं सामानाधिकरण्यविरोधं स्मारयति। **तथात्वेऽपीति**। **विरुद्धेत्युपलक्षणं**, स्वरूपासिद्ध्यादेरपि द्रष्टव्यम्। **स्वत एवेति**। साक्षादित्यर्थः। **अर्थान्तरेति**। तच्च पुरुषदोषो न हेतुदोष इति न्यायोपदेष्टरि सापराधेऽप्यात्ममननसिद्धिरप्रत्यूहैवेति भावः। **पक्षधर्मतेति**। यद्यपि पक्षधर्मतायाः स्वातन्त्र्येण पृथक्कारणत्वात् तद्विघटकत्वेऽपि न ज्ञानविघटकत्वं, तथापि यः पक्षस्तद्धर्मताज्ञानत्वेन हेतुत्वमिति पक्षताया अवच्छेदकत्वाभ्युपगमेन यादृशज्ञानस्य हेतुत्वं तादृशज्ञानस्य विघटकत्वमस्त्येवेति भावः। **कारणमात्रस्येति**। तथा च पक्षतायाः पृथक्कारणत्वपक्षे तद्विघटकतयाऽपि तदौचित्यमित्यपि ध्वनितम्। न च ज्ञायमानप्रतिबन्धकत्वाभावान्न सिद्धसाधनं हेत्वाभास इति वाच्यम्। प्राचीनमतेऽनुमित्यसाधरणदोषस्यैव तथात्वात्। एवमपि साध्यज्ञानमादाय साध्यस्य तथात्वे बाधकाभावाच्चेति भावः।

टिप्पणी।

ति। धर्म्मे धर्म्मिणि च सन्देहाभावेनेत्यर्थः। **दूषकता त्वर्थान्तरान्तर्भावादिति**। प्रकृता-

प्रकाशः ।

कुत्र श्रुतिर्मुख्यार्था, कुत्र वोपचरितार्थेति तात्पर्य्यसन्देहात् सन्देह इति चेन्न। तथापि धर्मिस्वरूपे संशयानुपपादनात् तात्पर्य्यग्राहकन्यायाभिधानमात्रस्योचितत्वात्। कर्तृत्वादौ सन्देहादुत्कटकोटिको धर्मिण्येव सन्देहः, अन्यथा धर्मी क्वापि संशयविषयो न स्यादिति चेन्न। "श्रोतव्यो मन्तव्य" इत्यत्रात्मज्ञानस्य मोक्षहेतुत्वं न तु तद्धर्मिककर्तृत्वादिनिश्चयस्येति तत्सन्देहस्यानुच्छेद्यत्वात्। तथापि निर्धर्मकस्य तस्य ज्ञातुमशक्यत्वात्तद्धर्मनिश्चयोऽप्यादरणीय इति चेन्न। परस्पराविरुद्धप्रकारेण तच्चिन्तनोपपत्तेरिति दिक्।

अत्रोच्यते। साध्यज्ञानं न स्वतः साध्यज्ञानविरोधि, धारावाहिकसत्त्वात्। नापि साध्यानुमितिविरोधि, प्रत्यक्षाधिगतस्याप्यनुमितिदर्शनात्, किन्तु सिषाधयिषाघटितपक्षत्वविघटनद्वारा। सिषाधयिषा च साध्यज्ञानेच्छा, सा च द्वयी साध्यज्ञानमात्रे तद्विशेषे च। तत्र या साध्यज्ञानमात्रेच्छा सा श्रौतज्ञानान्निवर्त्तताम्, यत्किञ्चिद्विशेषसिद्ध्यैव हि सामान्येच्छाविच्छेदः, अन्यथा सकलविशेषसिद्धेरसम्भवेन तद्विच्छेदः क्वापि न स्यादेव। या त्वनुमितिरूपसाध्यज्ञानविशेषेच्छा सा कथं निवर्त्तेत, तद्विषयस्य ज्ञानविशेषस्यासिद्धेः, इच्छायाः स्वविषयसिद्धिनिव-

प्रकाशिका ।

वन्धकत्वादिति वाच्यम्। तद्विषयस्य साध्यस्यैव तेन हेत्वाभासत्वोपमात्। **तथापीति**। यत्र संशयस्तत्रैव न्यायाभिधानस्योचितत्वात् श्रोतव्यो मन्तव्य इति प्रतीतसामानाधिकरण्यभङ्गापत्तिरिति भावः। **परस्परेति**। तत्र च न संशयः, विरुद्धस्यैव संशयप्रकारत्वादिति भावः। नन्वसङ्कोचादीश्वरपरसर्वश्रुतिबोधिततावत्प्रकारकमननस्य मोक्षहेतुतेति तन्मध्ये विरोधप्रतिसन्धानमस्त्येव, तथा च तन्निबन्धनः संशयोऽपि स्यादेव, तथा च मननमपि स्यादेवेत्युनुशयादाह— **दिगिति**। एवमपि श्रवणप्रकारीभूतयावद्धर्मप्रकारकमननासम्भवात् स्वविरुद्धप्रकारे संशयाभावात् श्रोतव्यो मन्तव्य इत्यत्र च विशिष्टसामानाधिकरण्यस्यौत्सर्गिकत्वादिति भावः।

**इच्छाया इति**। नन्विच्छा न विषयनिष्पत्तिनिवर्त्या, जातेऽपि पुत्रे पुत्रेच्छायास्तदज्ञानेऽनिवृत्तेः, किन्तु विषयधीनिवर्त्या, एवं च जातायामप्यनुमितौ तदज्ञानेऽनुमितिः स्यादिति चेन्न। बाह्ये विषये विषयज्ञानस्य आन्तरे विषयस्यान्वव्यतिरेकाभ्यामिच्छाविरोधावधारणात् विरोधित्वञ्चान्येच्छाप्रतिबन्धकत्वमेव, न तु पूर्वेच्छानिवर्त्तकत्वं तस्या विरोधिगुणेनैव निवृत्तेः। **मिश्रास्तु** असिद्धत्वज्ञानमिच्छाकारणं तच्च बाह्ये विषये सत्यपि सिद्धत्वे भ्रमरूपं सुलभम्। आन्तरे तु सति सिद्धत्वे भ्रमरूपमप्यसिद्धत्वज्ञानं न सम्भवतीति तदभावान्नेच्छेति वदन्ति। तच्चिन्त्यम्। अन्येन्द्रियजन्यासिद्धत्वज्ञाने सत्यप्यन्येन्द्रियजन्यसिद्धत्वज्ञान इच्छानुत्पत्तेः, सिद्धत्वं हि तत्तत्सम्बन्धा-

मकरन्दः ।

**तात्पर्य्येति**। यत्र सन्देहस्तत्रैव न्यायाभिधानस्योचितत्वादित्यर्थः। तात्पर्यसन्देहादपि धर्मसन्देहो न धर्मिणीति तत्र न्यायाभिधानमनुचितमेवेति भावः। **परस्परेति**। तथा च न संशयः, विरुद्धप्रकारकस्यैव संशयत्वादिति भावः। न चासङ्कोचादीश्वरपरसर्वश्रुतिबोधिततावत्प्रकारेण मननं मोक्षहेतुः। तत्र च विरोधप्रतिसन्धाननिबन्धनसंशयावश्यम्भावान्मननमस्त्विति वाच्यम्। अविरुद्धप्रकारे संशयाभावादेवमपि तावत्प्रकारकमननासम्भवात्। एतदेवाभिसन्धायोक्तं दिगिति।

**इच्छाया इति**। ननु विषयसिद्धिनिवर्त्त्या नेच्छा, किन्तु तद्धीनिवर्त्त्या। अन्यथा प्राप्तधनस्यापि तत्प्राप्तिमजानतस्तदिच्छाविच्छेदापत्तेः। एवञ्च सिद्धसाधनस्थलेऽप्युत्पन्नसिद्धेरग्रहे तदिच्छाया अनिवृत्तेः पक्षता स्यादिति चेत्।

प्रकाशः ।

र्थ्यत्वात् । अत्र च श्रोतव्यो मन्तव्य इति श्रुत्या मननस्येष्टसाधनत्वावगतेः श्रौते ज्ञाने वृत्तेऽपि मननस्यासिद्धत्वात् तत्रेच्छा भवत्येवेति न सिषाधयिषाविघटनद्वारकदूषणभावस्य सिद्धसाधनस्यावकाशः, इच्छाविषयतावच्छेदकरूपवत्सिद्धेः सिद्धपदेन विवक्षितत्वात् । अत एव सिद्धसाधनं दशाविशेषे दोषः, पृथक् च न दूषणम् , असिद्ध्युपजीव्यत्वेऽपि बाधवत् स्वतो दूषकत्वाभावात् , किन्तु दूषकतायामुपाधेरिव परमुखनिरीक्षकत्वात् । भवेदेवं यदि सिषाधयिषाघटितं पक्षत्वम् । तदेव न । तस्य विशेषणतोपलक्षणतयोरुभयत्रापि दोषात् । योग्यतायाश्च तदवच्छेद-

प्रकाशिका ।

वच्छिन्नविषयत्वरूपमेवेति । ननु सिद्धीच्छाविरोधिन्याः श्रौतप्रतिपत्तेर्विद्यमानत्वात् कथं सिषाधयिषा अत आह—**इच्छाविषयेति** । नचैवं निरन्तरानुमितीच्छायामनुमित्यानन्त्यापत्तिः । परामर्शस्य प्राथमिकत्वे अनुमितिकाले तन्नाशात् , सिषाधयिषायाश्च तथात्वे तस्या एव तत्काले नाशात् । न च लिङ्गोपधानपक्षे प्रसङ्गः । अनुमितिद्वयस्येष्टत्वात् । उत्तरकाले च सिषाधयिषाविरहेणाप्रसङ्गात् । **मिश्रास्तु** विषयान्तरसञ्चारस्य प्रतिबन्धकत्वान्नानुमित्यानन्त्यम् । अन्यथा सिषाधयिषोत्तरसिद्धिप्रागभावावच्छिन्नकालस्यैव सिषाधयिषापदार्थत्वेन लिङ्गोपहितलैङ्गिकभानपक्षे तदानन्त्यापत्तिरित्याहुः । तच्चिन्त्यम् । सर्वापेक्षया भिन्ने विषये अनुमितिसामग्र्या बलवत्वेन विषयान्तरसञ्चारस्याभावात् । यदपि तैरुक्तमेकस्योभयसामग्रीत्वे अनुमितिसामग्रीबलवत्वं भिन्ने विषये इह त्वनुमितिसञ्चारसामग्र्योर्भिन्नतया नानुमितिसामग्रीबलवत्वमिति । तदपि चिन्त्यम् । तद्देशस्थितवृक्षादीन्द्रियसन्निकर्षकालेऽनुमितेरनुभूयमानत्वादिति । **अत एव**= सिषाधयिषादूषकताप्रयोजकविघटनकादाचित्कत्वादेवेत्यर्थः । पृथङ् न दूषणमित्यत्र हेतुमाह—**असिद्धीति** । **विशेषणेति** । परामर्शपूर्वमेव नाशान्न विशेषणत्वम् , अतिप्रसङ्गान्नोपलक्षणत्वमित्यर्थः ।

मकरन्दः ।

अत्राहुः विषयसिद्धिः साक्षान्नेच्छानिवर्त्तिका, उत्पन्नायास्तस्या विरोधिगुणनिवर्त्यत्वात् । तस्मात्तद्धेतोरसिद्धत्वज्ञानस्य विघटनद्वारा इच्छान्तरोत्पत्तिप्रतिबन्धकत्वेन तथात्वं वाच्यम् । ततः प्रकृते सिद्ध्युत्पादमात्रेणैव सिद्धौ सत्यां तदसिद्धत्वभ्रमसंशयाभावात् । घनादिस्थले च तत्सम्भवेन ज्ञप्तिपर्यन्तानुसरणमिति ।

**इच्छेति** । न चैवं निरन्तरानुमितित्वेनेच्छायां निरन्तरानुमित्यापत्तिः, इष्टत्वात् । न चानुमित्यानन्त्यम् । तृतीयक्षणे परामर्शस्यैव विनाशात् । न च लिङ्गोपधानमतेऽनुमित्यात्मकपरामर्शमादाय तदापत्तिः । अनुमितिद्वयस्येष्टत्वात् । उत्तरकाले च सिषाधयिषानाशादेव तदापत्त्यभावात् । यत्तु विषयान्तरसञ्चारसामग्रीबलवत्त्वान्न तथाऽनुमितिरिति । तच्चिन्त्यम् । भिन्ने विषये प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात् । अत एव परामर्शानन्तरं न परामर्शान्तरं, तदनुव्यवसायो वा । अन्यथा सिद्धसाधनस्थले तत्सामग्र्या एव प्रतिबन्धकत्वसम्भवे सिद्धेरप्रतिबन्धकत्वे तदभावरूपपक्षताया हेतुत्व एव मानाभावात् ।

**अत एवेति** । दूषणत्वप्रयोजकसिषाधयिषाविघटनस्यासार्वदिकत्वादेवेत्यर्थः । द्वितीये हेतुमाह । **असिद्धीति** । वस्तुतो ज्ञायमानप्रतिबन्धकत्वाभावादेव न हेत्वाभासत्वम् । साध्यञ्च न यथा हेत्वाभासस्तथोक्तमनुमानप्रकाशे । **विशेषणेति** । लिङ्गदर्शनादिना तन्नाशाद् न विशेषणत्वं, सिद्धसाधनस्थलेऽप्यतिप्रसङ्गान्नोपलक्षणत्वमित्यर्थः । साधकप्रमाणपदं सिद्धिपरम् । तेन घनगर्जितस्थले परामर्शात्मकसाधकप्रमाणमादाय; नाव्याप्तिः । सिद्ध्युपहितप्रमाणपरं तदित्यन्ये ।

प्रकाशः ।

करूपपरिचेयत्वादिति चेन्न । सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावस्य तत्त्वात् । स च विशिष्टाभावो यत्र साधकप्रमाणसिषाधयिषे स्तः तत्र विशेषणाभावात् , यत्रोभयाभावस्तत्र विशे-

प्रकाशिका ।

**सिषाधयिषेति** । अत्र साधकमानं सिद्धिरेव । सिद्धितत्करणान्यतरद्वेति व्याख्यातमन्यत् ।

ननु सिद्धेः प्रतिबन्धकत्वे मानाभावः, न चानुमित्यनन्तरमनुमित्यापत्तिः, द्वितीयानुमिताविष्टापत्तेः, उत्तरकालं च परामर्शाभावात् । न च लिङ्गोपधानपक्षेऽनुमित्यविच्छेदः स्यादिति वाच्यम् । तदनभ्युपगमात् । अत्र केचित् । वह्निव्याप्यवत्वमेव यत्र पक्षतावच्छेदकं तत्र पक्षतावच्छेदकस्यानुमितौ भानादनुमित्यविच्छेदः सिद्धेरप्रतिबन्धकत्व इति । तदयुक्तम् । तत्र वह्निव्याप्यवत्त्वलिङ्गिकानुमितिरापाद्या, धूमलिङ्गिका वा, नाद्यः, तदीयवह्निव्याप्यत्वस्यानुमितावभानात् , न द्वितीयः, धूमत्वस्यानुमितावभानात् । न च वह्निव्याप्यधूमवत्वमेव यत्र पक्षतावच्छेदकं तत्रानन्त्यापत्तिः, धूमलिङ्गकानुमितिसामग्रीसत्त्वादिति वाच्यम् । यद्धर्मसामानाधिकरण्येन हेतुः परामर्षविषयः तस्यैव पक्षतावच्छेदकत्वेनानुमितौ भानमिति धूमलिङ्गकप्रथमानुमितेः वह्निव्याप्यधूमवत्त्वावगाहित्वे तत्सामानाधिकरण्येन धूमवत्त्वानवगाहितया द्वितीयानुमितेः पक्षतावच्छेदकत्वेन वह्निव्याप्यधूमवत्त्वानवगाहितया अनुमितिधाराविच्छेदादिति । अत्र वयं ब्रूमः, एवं सति संशयविपर्य्ययोत्तरप्रत्यक्षानुव्यवसायो न स्यादनुमितिसामग्रीसत्त्वात् । सिद्धेः प्रतिबन्धकत्वे तु प्रत्यक्षसत्त्वान्नानुमितिसामग्रीति भवत्यनुव्यवसायः । नचानुव्यवसाय एव मास्तु, तथा सति तादृशप्रत्यक्षे मानाभावेनासमानविषयेऽनुमितिसामग्र्या बलवत्त्वमित्यपि भज्येत, तस्मादवश्यं सिद्धेरनुमितिप्रतिबन्धकत्वम् । न च तथा सत्यपि प्रत्यक्षसामग्रीसत्त्वादेव नानुव्यवसाय इति वाच्यम् । इन्द्रियसन्निकर्षविच्छेदकाले तत्सम्भवात् । न चानुव्यवसायेच्छासहकारादनुव्यवसायसामग्री बलवतीति वाच्यम् । एवमपि

मकरन्दः ।

सिषाधयिषायाश्च विशेषणत्वमेव, तदुत्तरस्मरणलक्षणपरामर्षादनुमितौ विनश्यदवस्थसिषाधयिषायास्तथात्वात् ।

ननु सिषाधयिषा तत्पुरुषीयतया तत्कालीनतया तत्साध्यीयत्वादिना चावश्यं विशेषणीया । अन्यथा व्यधिकरणामन्यकालीनामन्यसाध्यलिङ्गपक्षीयाञ्च सिषाधयिषामादाय पक्षतासत्त्वे सिद्धसाधनेऽप्यनुमित्यापत्तिः । एवञ्च तादृशसिषाधयिषाया घनगर्जितस्थलादावप्रसिद्धेः कथं तद्घटिता तत्र पक्षतेति चेन्मैवम् । व्यधिकरणाया अन्यकालीनायाश्च तस्यास्तदा तत्पुरुषे विरह एवेति तामादायातिप्रसङ्गाभावात्तल्लिङ्गकतत्साध्यकतत्पक्षकानुमितिगोचरेच्छाया एव विवक्षितत्वात् , तादृश्याश्च घनगर्जितस्थलेऽपीश्वरेच्छाया एव प्रसिद्धत्वात् । तादृशानुमित्यसम्भवे पक्षत्वाभावेऽपि न क्षतिः । नचैवं बाधादेरनुमितिप्रतिबन्धकत्वं न स्यात् , तत्र तादृशानुमित्यसम्भवे पक्षताविरहादेव तदनुत्पत्तेरिति वाच्यम् । बाधाद्यनवतारदशायामन्यदा तादृशानुमितिसम्भवे तद्घटितपक्षतासत्त्वे तदा बाधादेरेव प्रतिबन्धकत्वात् । ननु तत्कालिकत्वेनाप्यनुमितिरवश्यं विशेषणीया । अन्यथाऽन्यकालिकानुमितिगोचरेच्छामादायातिप्रसङ्गादिति चेत् । अस्त्वेवं, तथापि पक्षताविरहेऽपि बाधादेरेव तत्रोपजीव्यत्वात् । अन्यथाऽनुमितिसत्त्वे तद्घटितपक्षताया अप्यावश्यकत्वात् । पक्षताविरहादेवानुमित्यभावेऽन्योन्याश्रयात् ।

एतेन सिषाधयिषा न सिद्धित्वप्रकारिकेच्छा, प्रकृते तदभावात् । नापि सिद्धिविषयेच्छामात्रम् , प्रत्यक्षेण जानीयामितीच्छायामपि तदापत्तेः । नाऽप्यनुमितित्वप्रकारिकेच्छा । एकलि-

प्रकाशः ।

प्याभावात्, यत्र साधकप्रमाणाभावे सिषाधयिषामात्रमस्ति तत्र द्वयाभावात् सर्वत्राविशिष्टः । यत्र साधकप्रमाणे सत्यसति वा सिषाधयिषाया अभावस्तत्र नास्तीत्यस्मत्पितृचरणाः ।

तथापि संशयं विना कथं न्यायावतार इति चेदित्थम् । संशयो हि न्यायाङ्गं न तावद् न्यायकारणतया, तस्य लिङ्गपरामर्शात्मनः संशयं विनाऽपि सम्भवात्, कारणत्वासिद्धौ फलवैजात्यस्यापि कल्पने मानाभावात्, अन्योन्याश्रयाच्च । नापि सहकारित्वेन । तद्धि न साक्षात्, लिङ्गपरामर्शादिना तन्नाशात् शाब्दलिङ्गपरामर्शे तत्कारणत्वासंभवाच्च संशयस्य कारणत्वासिद्धौ तत्कल्पनेऽपि मानाभावात् । अत एव परम्परयापि तत्सहकारित्वमपास्तम् । नाप्याश्रयतावच्छेदकत्वेन । पर्वतत्वादेरेव तथात्वात् । अन्यथा पक्षतावच्छेदकधर्म–साध्ययोः सामानाधिकरण्यभाननैयत्येन पर्वतत्वादेरिव सन्दिग्धत्वस्याप्यनुमितौ भानापत्तेः । अथ संशयेन स्वयोग्यतोपलक्षणात् साधकवाध-

प्रकाशिका ।

तादृशेच्छातत्प्रयोजकसामाग्र्यन्यतरस्यैवानुमितिप्रतिवन्धकत्वकल्पनापत्तेरित्यन्यत्र विस्तर इति ।

**सत्यसतीति ।** समीचीनेऽसमीचीने वेत्यर्थः । सतीति शेषः । तेन भ्रमसाधारणसिद्धावपि यत्र सिषाधयिषाविरहस्तत्र नास्तीत्यर्थः । यत्तु सत्यसति स्वरूपसतीत्यर्थ इति । तन्न । वाशब्दासङ्गतेः । **तस्येति ।** यद्यपि न्यायः पञ्चावयवात्मा, तथापि तत्कारणत्वं संशयस्यानुक्तिसम्भवमेवेति न्यायपदं परामर्षपरं वक्तव्यमिति भावः । ननु परामर्षाव्यवहितपूर्वं संशय इत्यत आह । **संशयस्येति । अत एवेति ।** व्यभिचारादेवेत्यर्थः । **आश्रयतावच्छेदकत्वेन**=अनुमितिविशेष्यतावच्छेदकत्वेन । यथाश्रुते सन्दिग्धत्वस्यैव पक्षतात्वेन तस्यैव तदवच्छेदकत्वानुपपत्तेः, विशिष्टाभावस्य पक्षतात्वे न तदवच्छेदकं सन्दिग्धत्वं न्यूनवृत्तित्वादिति । **पर्वतत्वादेः**=इदंपर्वतत्वादेः । **अन्यथेति ।** नियमेन विशेष्यतावच्छेदकत्वमनुमितौ सन्दिग्धत्वस्य, सामान्यतो वा, विशेषतो वा । नाद्यः, संशयं विनाप्यनुमितिरित्युपक्रम्य ग्रन्थावतारात् । नान्त्यः, विशेषसामग्र्यन्तरकल्पनागौरवादिति दूषणं द्रष्टव्यम् । यथाश्रुतेः क्वचिदिष्टापत्तेः सम्भवात् । परामर्शादिना तन्नाशादित्यत्राशङ्कते । **अथेति ।** संशयविशेषणत्वमुक्तयुक्तेरसम्भवीति दोषे

मकरन्दः ।

ङ्गावगते लिङ्गान्तरेणानुमित्सायां तदनापत्तेरित्याद्यपास्तम् । निरुक्तानुमितिगोचरेच्छाया एव विवक्षितत्वात् । अधिकमनुमानप्रकाशे विपश्चितम् ।

**सत्यसति वेति ।** समीचीनेऽसमीचीने वेत्यर्थः । सतीति शेषः । तथाच भ्रमप्रमासाधारणसिद्धिमात्रस्य प्रतिवन्धकतया तस्मिन् सति यत्र सिषाधयिषाया अभावस्तत्र नास्तीति भावः । यत्तु सत्यसतिपदं स्वरूपार्थकमिति स्वरूपसतीत्यर्थ इति । तन्न । वाशब्दस्यासङ्गतत्वापत्तेः ।

**तस्येति ।** यद्यपि न्यायो न लिङ्गपरामर्शात्मा, किन्तु पञ्चावयववाक्यम् । तथापि तत्रापि तद्धेतुत्वे मानाभावात् परामर्शपरत्वाभिप्रायेण दूषितमिति मन्तव्यम् । **तद्धीति ।** तत्सहकारित्वासम्भवादित्यर्थः । तस्यैवासत्त्वेनेति भावः । **अत एवेति ।** व्यभिचारादेवेत्यर्थः ।

परामर्शादिना तन्नाशादित्यत्र शङ्कते । **अथेति ।** उक्तबाधकादेव संशयस्यात्र न विशेष-

टिप्पणी ।

नाकाङ्क्षाभिधानमर्थान्तरम् । **सत्यसति चेति ।** समीचीनेऽसमीचीने वेत्यर्थः । **शाब्दलिङ्गपरामर्शे तत्कारणत्वासम्भवाच्चेति ।** अव्यवहितपूर्वमसम्भवात् शाब्दकारणकलापेन व्यवधानात् । **अत एवेति ।** संशयस्य व्यभिचारादेव ।

प्रकाशः ।

कमानाभावो न्यायाङ्गमिति चेन्न । तथापि संशयस्यातत्त्वात् । संशययोग्यतायास्तदङ्गत्वाद् । विशिष्टस्य तद्ग्राहकमानेन विशेषणस्यापि तत्त्वं विषयीकृतमिति चेन्न । मिलिताभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात् । प्रत्येकञ्च न योग्यता । केवलान्वयिनि बाधकाप्रसिद्धेश्चेत्यन्यत्र विस्तरः ।

तथापि संशयस्यानुमितिमात्राहेतुत्वेऽपि जिज्ञासितार्थानुमितौ जिज्ञासाद्वारा संशयस्यानुमितिहेतुत्वम् । यद्वा(१) सङ्कसुकतानिवृत्तये न्यायोपासने संशयोऽङ्गमिति संशयं विना यो न परितुष्येत् तं प्रति **श्रोतव्यो मन्तव्य** इति श्रुतेरनन्यगत्या भिन्नविषयक एव धर्मविषयकसंशयो धर्मिविष-

प्रकाशिका ।

सत्येवाह **मिलितेति । प्रत्येकमिति ।** अभावद्वयमित्यर्थः । लाघवात् साधकाभावस्यैव तथात्वम्, अन्यथा पक्षताविरहादेव बाधस्थलेऽप्यनुमित्यनुत्पत्त्या तस्य हेत्वाभासान्तरतानुपपत्तेरिति भावः । **केवलेति ।** साध्याभावसाधकस्यैव बाधकत्वमित्यभिप्रायेणेदम् । यदि च पक्षनिष्ठात्यन्ताभावप्रतियोगिताग्राहकमेव बाधकपदार्थः, तदा लाघव एव तात्पर्य, तदेवाभिसन्धायाह **अन्यत्रेति** । ननु जिज्ञासाद्वारा संशयस्यानुमितिहेतुत्वमत्रेत्ययुक्तम् । जिज्ञासा च द्वयी द्विकोटिका, एककोटिका च, तत्राद्या यद्यपि संशयमपेक्षते, तथापि द्वितीया विनैव संशयमिष्टसाधनताज्ञानमात्रात् सा चात्र पक्षताघटिका । किञ्च जिज्ञासापि संशयवन्न तावत्कालस्थायिनीत्यरुचेराह **यद्वेति ।** तथा च निवर्त्यत्वेनात्र संशयो न्यायाङ्गमित्यर्थः । **य इति ।** तथा च दुर्दुरूटस्य तस्य प्रबोधार्थं संशयबीजविप्रतिपत्तिप्रदर्शनं न तु तं विना मननासम्भव एवेति भावः । **अनन्यगत्येति ।** ननु सर्वत्र धर्म्मकोटिक एव संशयो धर्म्मिणि न्यायाङ्गम्, न हि धर्मो क्वापि संशयकोटिः तत्र कुतोऽनन्यगतिकत्वोपवर्णनम्? किञ्च **न वा तद्रूपमस्तीश्वर** इत्यादिग्रन्थेनासङ्कोचात् **श्रुतिवाक्येभ्य** इत्यनेन सर्वेषामेव श्रवणबोधनमित्यभिप्रायकेण धर्म्मेऽपि सन्देहाभावोपपादनात् क्व धर्म्मेऽपि सन्देह इति चेन्न । अत्र हि विषयपदं विशेष्यपरं तथाच धर्मविशेष्यक एव संशयो धर्म्मिविषयकन्यायप्रवृत्यङ्गमिति फक्किकार्थः । अत एव तत्तद्धर्मविशेष्यकविप्रतिपत्तिमेवोदाहरन्ति स्म ग्रन्थकृतः । एवं च धर्म्मविशिष्टधर्म्मिविशेष्यकनिश्चयेऽपि धर्म्मविशेष्यकधर्म्मिविशेषणकसंशये बाधकाभाव इत्यापाततस्तात्पर्यम् । वस्तुविचारे त्विदमप्ययुक्तमेव, समानविशेष्यतया निश्चयसंशययोर्विरोधित्वे कथं धर्म्मिन्यायप्रवृत्त्या धर्म्मसंशयो निवर्तनीय इति शङ्कुशुकतानिवृत्तये न्यायोपासनमित्याकरविरोधात् । समानविषयतामात्रेण च तयोर्विरोधे कथं धर्म्मिविशेष्यकनिश्चये सति धर्म्मविशेष्यक-

मकरन्दः ।

णत्वं, किन्तूपलक्षणत्वमिति दोषे सत्येवाऽऽह । **मिलितेति ।** ननु प्रत्येकाभावद्वयं योग्यता, तच्च प्रत्येकसत्त्वे नास्तीत्यत आह । **प्रत्येकमिति ।** प्रत्येकाभावद्वयमित्यर्थः । साधकमानाभावमात्रस्य तथात्वे लाघवादिति भावः । अन्यथा पक्षताविरहादेवानुमितिप्रतिबन्धे बाधो हेत्वाभासो न स्यादित्यपि बोद्धव्यम् । **केवलेति ।** साध्याभावसाधकस्य बाधकत्वमित्यभिप्रायेणेदम् । यद्यपि पक्षनिष्ठात्यन्ताभावप्रतियोगित्वग्राहकमानाविषयत्वं बाधकाभाव इति विवक्षिते तत्र नाप्रसिद्धिः, तथापि लाघव एव तात्पर्यम् । एतदेवाभिसन्धायोक्तम्, **अन्यत्रेति ।**

संशयवज्जिज्ञासाऽपि न तावत्कालस्थायिनीति मतान्तरमाह । **यद्वेति ।** तथा च निवर्त्त्यत्वेन संशयस्य न्यायाङ्गत्वमिति । **य इति ।** तथाच प्रबोधनार्थं संशयबीजविप्रतिपत्तिप्रदर्शनम्,

---

( सं० १ ) "सङ्कसुकोऽस्थिरे" इति कोशात् सङ्कसुकता=अस्थिरता अश्रद्धा मिथ्याज्ञानजन्यवासनामूलाऽप्रामाण्यशङ्केति यावत् तन्निवृत्तय इत्यर्थः ।

तदिह सङ्क्षेपतः पञ्चतयी विप्रतिपत्तिः । अलौकिकस्य परलोकसाधनस्या

बोधनी ।

ननु प्रमाणायत्तं मननं, प्रमाणं त्वीश्वरविषयं तत्तदादिविप्रतिपत्तिदूषितं कथं मननसाधनमित्याशङ्कां निरसितुं परिच्छेदपञ्चकनिराकरणीया विप्रतिपत्तीस्तावद्दर्शयति–**तदिहेति** । तदिति वाक्योपक्रमे, प्रकरणस्यारभ्यत्वादिति हेतौ वा । इह–प्रकरणे, जगत्कर्त्तरि, तद्विषये प्रमाणयुगले वा । निरस्यत इति शेषः । तत्र परमनास्तिकचार्वाकविप्रतिपत्तिं प्रथममाह–**अलौकिकस्येति** । अयमाशयः–अलौकिकहेतुसिद्धौ तस्य साधनानुमानायत्तसिद्धित्वात्, तदनुमानस्य च ज्ञानमन्तरेणानुपपत्तेस्तस्य चास्मदादीनामसम्भवादुपदेशमूलेन भवितव्यम्; उपदेशश्च न विशिष्टमुपदेष्टारं विनेति लोकोत्तरः कल्प्येतापि न त्वेवं सम्भवति, अलौकिकस्य परलोकसाधनस्यैवाभावात् तद-

प्रकाशः ।

थकन्यायप्रवृत्तिहेतुरित्यास्थेयमिति विभावयँस्तत्कारणं विशेषविप्रतिपत्तिमादर्शयति—

**तदिहेति । तदिति** वाक्योपक्रमे । संक्षेपोऽवान्तरविप्रतिपत्त्यविवक्षा । विरुद्धा प्रतिपत्तिर्ज्ञानमभिलापो वा विप्रतिपत्तिः । विप्रतिपत्तौ विषयिण्यां विषयस्य प्रयोजकत्वं विवक्षित्वा पञ्चमीनिर्देशः । तत्राऽलौकिके तावत्, साक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयत्वं प्रमेयत्वव्यापकं न वा ? इन्द्रियस्य तु न सन्निकर्षाश्रयत्वं, किन्तु प्रतियोगित्वमिति न विप्रतिपत्तिः । य एव चक्षुषा रूप-

प्रकाशिका ।

संशय इति विरोधादिति । **विवक्षित्वेति** । शब्दात्मकविप्रतिपत्तौ विषयस्याहेतुत्वादिति भावः । वस्तुतो ल्यब्लोपे पञ्चमी अभावं प्राप्य ज्ञात्वा विप्रतिपत्तिरिति मूलव्याख्या । यदपेक्षया संक्षेपस्तमाह **साक्षादिति** । इन्द्रियसन्निकर्षाश्रयत्वमलौकिकेऽपीति साक्षात्कारकारणत्वं विशेषणम्, शरीरप्राणसंयोगस्य साक्षात्कारकारणतया प्राणेऽतिप्रसङ्ग इति तद्वारणायेन्द्रियपदम्, न च गर्भोत्पन्नविनष्टे व्यभिचारः, तन्मते प्रमाणान्तराभावेन सति प्रमेयत्वे साक्षात्कारविषयत्वात् । सन्निकर्षे च लौकिकत्वं विशेषणं तच्च संयोगाद्यन्यतमत्वाश्रयत्वम् । न च व्यावर्त्याप्रसिद्धिः पक्षे उपरञ्जकस्यापि स्वीकारात् । अभिधेयत्वघटत्वयोश्च विधिनिषेधप्रसिद्धिः । ननु चक्षुर्घटसंयोगमादाय घट इव तादृशसंयोगाश्रयत्वं चक्षुषोऽपीत्यत आह **इन्द्रियस्येति** । इन्द्रियविशिष्टसंयोगाश्रयत्वं नेन्द्रिये अंशत आत्माश्रयात् तच्चात्र विवक्षितमिति भावः । **य एवेति** । यथाश्रुते दूषणमिदम् । यदा तु स्वसाक्षात्कारकारणेति

मकरन्दः ।

न तु तद्विना मननासम्भव एवेति तात्पर्यम् । **प्रयोजकत्वमिति** । शब्दात्मकविप्रतिपत्तौ विषयस्य हेतुत्वाभावादिति भावः । यस्या अविवक्षा तामवान्तरविप्रतिपत्तिमाह । **साक्षादिति** । अलौकिकपरमाण्वादावतिप्रसक्तिर्व्यतिरेके च बाध इत्यत उक्तं **साक्षात्कारकारणेति** । संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्कारकारणेत्यर्थः । न च तन्मते व्यावर्त्त्याप्रसिद्धिः । पक्षे उपरञ्जकस्यापि दानात् । अत एव साक्षात्कारत्वपर्य्यन्तमपि तज्जातित्वे वैयर्थ्यमपि नेति ध्येयम् । न च गर्भवर्तिनष्टे व्यभिचारादिदमुक्तमिति वाच्यम् । तन्मते प्रमाविषयत्वस्याप्यभावात् । भावे वाऽवश्यमिन्द्रियसन्निकृष्टत्वम् । प्रमाणान्तरात्तदसम्भवात् । योग्यतापरत्वे वा सन्निकर्षत्वेऽपि तथेति भावः । विधिनिषेधकोटिप्रसिद्धिः, अभिधेयत्वघटत्वयोः सुलभेति । ननु घटसाक्षात्कारकारणघटचक्षुःसंयोगरूपसन्निकर्षाश्रयत्वं चक्षुष्यपि, न च तल्लौकिकमित्यत आह । **इन्द्रियस्येति** । यद्यपि संयोगस्य द्विष्ठत्वादिदमयुक्तं, तथापि नेन्द्रियविशिष्टसन्निकर्षाश्रयत्वमिन्द्रियस्य अंशत आत्माश्रयात्, किन्तु तदुपलक्षितसन्निकर्षाश्रयत्वम् । तदिदमुक्तं, किन्तु **प्रतियोगित्वमिति** । तत्र तत्प्रतियोगिकसन्निकर्षाश्रयत्वेऽपि तस्योपलक्षणत्वमित्यर्थः । **य एवेति** । एतच्च

बोधनी ।

भावे च तदधिष्ठातुर्जगत्कर्त्तुरनुपपत्तेः कार्यत्वहेतुरपि शिथिलः स्यादिति । अस्त्वलौकिको हेतुस्तत्साधनोपदेशश्च, तथाप्युपदेशस्य नित्यत्वपुरुषान्तरपूर्वकत्वयोरपि सम्भवादसिद्धमाप्तोक्तत्वम्,

प्रकाशः ।

स्य संयुक्तसमवायः स एव गुरुत्वस्यापीति तस्यापि लौकिकत्वापत्तेः । किन्तु सामान्यलक्षणप्रत्यासत्त्यजन्ययोगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्या-

प्रकाशिका ।

विवक्षा तदा तावन्मात्रविषयत्वमेवास्तु कृतं स्वपदकारणपदगर्भतयेति तथैव सिद्धान्तयति **किन्त्विति ।** न च तन्मते साक्षात्कारविषयत्वमेव प्रमेयत्वमिति व्याप्यव्यापकयोरभेद इति वाच्यम् । उपाधिभेदेन भेदात् । अनुमितिमादाय सिद्धसाधनमिति **साक्षात्कारेति ।** ईश्वरसाक्षात्कारमादाय सिद्धसाधनमिति **जन्येति** साक्षात्कारविशेषणम् । अलौकिकप्रत्यासत्तित्रयजन्यसाक्षात्कारमादाय सिद्धसाधनवारणायाद्यप्रतीकम् । तत्रापि जगत एवेश्वरज्ञानजन्यतयाऽप्रसिद्धिवारणाय जन्येति सविकल्पकविशेषणम् । स्वविषयकपदप्रयोजनं त्वाकर एव व्यक्तम् । स्वपदेन च यो यत्र साक्षात्कारविषयत्वेनाभिमतः स एव तत्र ग्राह्यः । व्यावर्त्याप्रसिद्धिस्तु तन्मत इति तूपरञ्जकतयैव समाधेयम् । ज्ञानाजन्येत्येतदेव यद्यपि प्रकृते सम्यक्, तथाप्युपरञ्जकतयाऽखण्डाभावघटकतया च न दोषः ।

मिश्रास्तु लौकिकसाक्षात्कारविषयत्वमेव प्रकृते विवक्षितमिति तल्लाभाय सविकल्पकपदम्, पक्षे उपरञ्जकस्यापि भावात् । न च लौकिकत्वमेव ज्ञानजन्यस्वविषयजन्यत्वमात्रगर्भमस्त्विति वाच्यम् । तथा सति लौकिकविशिष्टप्रत्यक्षाव्याप्तेः । न च सविकल्पके पदे दत्तेऽपि विशिष्टवैशिष्ट्यप्रत्यक्षाव्याप्तिरिति वाच्यम् । सविकल्पकत्वेन तदजन्यत्वस्य विवक्षणात् । न च विशिष्टवैशिष्ट्यज्ञाने तथाजनकत्वम्, विशेष्ये विशेषणमिति न्यायेन विशिष्टवैशिष्ट्यधीसम्भवेन व्यभिचारात् । तथा च विशेषणज्ञानत्वेनैव तत्र जनकत्वमिति नाव्याप्तिः । नचेयं विवक्षा ज्ञानपदमात्र एवास्तु तथा सत्यपि स्वविषयकज्ञानत्वेन तदजन्यत्वमर्थो लभ्यत इति नाव्याप्तिर्विशिष्टप्रत्यक्ष इति वाच्यम् । स्वविषयकज्ञानत्वेन जनकत्वस्याप्रसिद्धेः, सविकल्पकान्तर्भावे तु तथाजनकत्वं स्मरणं प्रत्येव सिद्धम् ।

मकरन्दः ।

यथाश्रुते । स्वसाक्षात्कारविवक्षायान्तु तावन्मात्रविषयत्वमेवास्तु, कृतं स्वपदकारणादिगर्भत्वेनेति तथैव सिद्धान्तमाह । **किन्त्विति ।** न च तन्मते साक्षात्कारस्यैव प्रमात्वेन व्याप्यव्यापकाभेदात् कथं व्याप्यव्यापकताग्रह इति वाच्यम् । उपाधिभेदेन भेदात् । तादृशानुमितिविषयत्वं सर्वेषामिति सिद्धसाधनं, व्यतिरेके च बाध इत्यत उक्तं-**साक्षात्कारेति ।** ईश्वरसाक्षात्कारमादाय दोषतादवस्थ्यादाह, चरमजन्यपदम् । अलौकिकप्रत्यासत्तित्रयजन्यसाक्षात्कारमादाय दोषतादवस्थ्यादाह, पूर्वप्रतीकम् । तत्राजन्यपदमीश्वरज्ञानजन्यतया जगतोऽप्रसिद्धिवारणार्थम् । स्वविषयकपदव्यावृत्तिस्तु मूल एव । स्वपदेन च यत्र यः साक्षात्कारविषयत्वेनाभिमतः, स एव तत्र ग्राह्यः । सविकल्पकपदञ्च यद्यपि प्रकृतेऽकिञ्चित्करम् ज्ञानपदेनैव सङ्गतेः । तथापि उपरञ्जकस्यापि दानादखण्डाभावघटितस्य च न व्यर्थत्वम् ।

केचित्तु लौकिकसाक्षात्कारविषयत्वस्य प्रकृतेऽभिमतत्वेन विशिष्टोपादानम् । अन्यथा विशिष्टप्रत्यक्षस्य स्वविषयकनिर्विकल्पकजन्यस्य तत्रासंग्रहापत्तेः । न चैवमपि विशिष्टवैशिष्ट्यप्रत्यक्षा-

टिप्पणी ।

**स्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वमिति ।** जन्यज्ञानाजन्यजन्यसाक्षात्कारविषयत्वमेव यद्यप्युपादेयम्, निर्विकल्पकमादाय सर्वत्र प्रसिद्धेर्योगजधर्म्माजन्यत्वान्तं नोपा-

प्रकाशः ।

पकं न वा ? अभावसमवाययोस्तादृशप्रतियोगिसम्बन्धिसविकल्पकजन्यसाक्षात्कारविषयत्वेऽपि प्रत्यक्षत्वात् तत्सङ्ग्रहार्थं स्वविषयकेति विशेषणम् । अत्र यद्यपि घटोऽयमिति सविकल्पके घटत्वस्य तत्कारणज्ञानविषयताऽस्ति, तथापि तज्ज्ञानाजन्यनिर्विकल्पकविषयताऽप्यस्ति । न हि तज्ज्ञान-जन्यज्ञानगोचरत्वं तज्ज्ञानाजन्यज्ञानगोचरताविरोधि । एकत्र ज्ञानद्वयस्य भावादित्याहुः ।

अलौकिकविशेषे त्वदृष्टे, प्रयत्नकारणात्मविशेषगुणनिरुपाधिविषयकारणात्मविशेषगुणत्वं लौकि-

प्रकाशिका ।

न च तथासति यद्यपीत्यादिग्रन्थविरोधः, तथासति सविकल्पकविषयतयापि तत्र सामञ्जस्ये तदनु त्थानप्रसङ्गादिति वाच्यम् । यथाश्रुताभिप्रायेण तदुत्थानादिति वदन्ति । तच्चिन्त्यम्, विवक्षाया-मपि विशिष्टवैशिष्ट्यप्रत्यक्षाव्याप्तेः, द्विधा हि विशिष्टवैशिष्ट्यधीः, एका पुरुषेऽविशिष्टस्यैव दण्डस्य विशेषणत्वं विषयीकरोति अपरा च दण्डत्वविशिष्टस्येति तन्नियमनाय तस्यां सविकल्पकत्वेनैव-जनकतास्वीकारात् । अत एव न व्यभिचारोऽपि विलक्षणधीविशेष एव तथाजनकत्वोपगमा-दिति । न च तन्मते योगजधर्मादीनामप्रसिद्ध्या तदभावाप्रसिद्धिः परमतेऽसत्ख्यात्युपनीतस्यापि प्रतियोगित्वात् संयोगादिषडन्यतमजन्यसाक्षात्कारविषयत्वस्य वा समुदायार्थत्वादिति दिक् ।

**सविकल्पक इति** । धारावाहिकस्थले द्वितीयादिसविकल्पक इत्यर्थः । **ज्ञानविषयता**=स-विकल्पकविषयता, यथाश्रुते सविकल्पकाजन्यत्वस्य तथाप्यक्षतेरसङ्गते, निर्विकल्पकेत्युपलक्षणम् प्राथमिकसविकल्पकेत्यपि द्रष्टव्यम् । **प्रयत्नेति** । प्रयत्नकारणात्मविशेषस्य संसारिणो गुणौ यौ इच्छाद्वेषौ तयोर्निरुपाधिविषयौ सुखदुःखे तत्कारणं य आत्मविशेषगुणः तत्त्वं लौकिकमानसत्वजा-त्याश्रयाविषये वर्तते न वेत्यर्थः । अत्र प्रयत्नकारणं गुण ईश्वरज्ञानादि तन्निरुपाधिविषयो विशिष्ट-ज्ञानं तत्कारणमात्मविशेषगुणो निर्विकल्पकमिति तदादाय सिद्धसाधनवारणाय **आत्मविशेषेति** ।

मकरन्दः ।

व्याप्तिः । जन्यस्वविषयकसविकल्पकत्वेन जनकत्वाभावस्य विवक्षितत्वाद् अत्र जन्यादिपदमप्रसि-द्धिवारकमित्याहुः । तच्चिन्त्यम् । अत्र **यद्यपीत्यग्रिमग्रन्थविरोधात्** । तथा सति सविकल्पकविषय-तयापि सामञ्जस्ये तदनुत्थानप्रसङ्गः । यद्यपि तन्मते योगजादीनामप्रसिद्धतया तदजन्यत्वस्यापि तथात्वात् तदुपरक्तबुद्धेरप्यभावादुपरञ्जकत्वेनापि तदुपादानमसङ्गतम् । तथापि असत्ख्यातिरूपा तदुपरक्तबुद्धिरस्त्येव इति नोक्तदोष इत्येके । संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्कारविषयत्व-मनेनोपलक्षितमित्यन्ये ।

**सविकल्पक इति**। धारावाहिक इत्यर्थः। प्राथमिकसविकल्पकस्याऽजनकत्वान्निर्विकल्पक इत्यु-पलक्षणम् । प्राथमिकसविकल्पक इत्यपि द्रष्टव्यम् । **प्रयत्नेति** । प्रयत्नकारणात्मविशेषगुणाविच्छा-द्वेषौ तयोर्निरुपाधिविषयौ सुखदुःखे तत्कारणत्वविशिष्टात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षाविषये वर्त्तते न वेत्यर्थः । न च मानसेति व्यर्थम् । मानसप्रत्यक्षपदेन मनःप्रयोज्यजातिविशेषाश्रयस्यो-

टिप्पणी ।

देयम्, तथापि पक्षे उपरञ्जकस्यापि भावादखण्डाभावघटकतया सार्थक्यं बोध्यम् । **सविकल्पक इति** द्वितीयसविकल्पे । **निर्विकल्पकेति** प्राथमिकसविकल्पकस्याप्युपलक्षकम् । **प्रयत्न-कारणेति** । **प्रयत्नयोः**=प्रवृत्तिनिवृत्त्योः, **कारणे**=साक्षात्कारणे, स्वविजातीयस्य प्रत्यक्षविषयस्य स्वसमानाधिकरणव्यापारस्य जनकजातीयभिन्नत्वे सति कारणे वा [ साक्षात्कारणे ] ये व्यक्ती **आत्म-विशेषस्य**=संसारिणो, **गुणौ**=इच्छाद्वेषौ, तयो**र्निरुपाधिविषयौ**=इष्टसाधनत्वेन विषयत्वाप्रयो-ज्यविषयताश्रयौ सुखदुःखे, तत्कारणात्मविशेषसंसारिगुणत्वमित्यर्थः । प्रयत्नजनकेश्वरज्ञानविषयवि-

प्रकाशिका।

तस्य च संसारिण इत्यर्थो व्याख्यात एव। अस्मदादिज्ञानमादाय पुनस्तदेव सिद्धसाधनमतः **प्रयत्नकारणेति**। तस्य च साक्षात्प्रयत्नकारणेत्यर्थः। तेन ज्ञानस्यापि प्रयत्नकारणतया न पूर्वोक्तसिद्धसाधनप्रसङ्गः। न च साक्षात् कारणत्वं यदि व्यक्तेस्तदा फलेच्छाद्वेषयोरपि उपायेच्छाद्वेषद्वारा जनकत्वमिति विवक्षितार्थालाभः, तज्जातीयस्य यदि तदा पूर्वोक्त सिद्धसाधनमेव उपादानप्रत्यक्षस्य साक्षाज्जनकत्वात्तज्जातीयत्वाज् ज्ञानस्येति वाच्यम्। फलेच्छायाः स्वरूपसत्त्या एव साक्षात् प्रयत्नहेतुत्वेन व्यक्तिपक्षस्यैवादुष्टत्वात्। न च फलेच्छायाः प्रयत्नकारणत्वमेव न, कारणत्वेऽपि न साक्षा ज्जनकत्वं मानाभावादिति वाच्यम्। फलेच्छौत्कट्येन प्रयत्नौत्कट्यात्तस्याः कारणत्वे चिकीर्षां प्रति च फलचिकीर्षायामेव व्यभिचारेणाकारणत्वेऽर्थतः साक्षात्कारणत्वात्। न च फलेच्छोपायेच्छोपादानप्रत्यक्षाणां युगपदसम्भवान्नेदं युक्तमिति वाच्यम्। प्रथमेच्छाया नाशेऽपि चिकीर्षाया एव समूहालम्बनात्मिकायाः फलेच्छात्वात्। न च यद्विषयकत्वेन प्रयत्नकारणत्वं स एव प्रकृते विषयपदार्थः, अन्यथा उपादानप्रत्यक्षस्यापि दैवादुपनीतप्रत्यक्षज्ञानविषयत्वात् तज्जनकनिर्विकल्पकज्ञानमादाय सिद्धसाधनात्, न च समूहालम्बनेच्छायाः फलविषयकत्वेन जनकत्वमिति वाच्यम्। प्रयत्नौत्कट्यानुरोधेन तद्विषयकत्वेनापि जनकत्वात्। यद्वा विजातीयव्यापारजनकजातीयभिन्नत्वमेव वा साक्षाज्जनकत्वं ज्ञानन्तु विजातीयेच्छारूपव्यापारजनकजातीयमेव, न चेच्छाया अप्यदृष्टद्वारा कार्यमात्रजनकतया विजातीयव्यापारजनकत्वमेवेति वाच्यम्। स्वविजातीयप्रत्यक्षसमानाधिकरणव्यापारजनकजातीयभिन्नत्वस्य विवक्षितत्वात्। निरुपधिपदन्तु इच्छासोपाधिविषयकामिनीविशिष्टज्ञानजनकनिर्विकल्पकमादाय सिद्धसाधनवारणाय। ननु तथापि निदिध्यासनजन्यभावनामादाय सिद्धसाधनं तस्यास्तत्त्वसाक्षात्कारद्वारा इच्छानिरुपधिविषयदुःखाभावरूपमोक्षहेतुत्वात्। न च निदिध्यासनस्यादृष्टमेव व्यापार इति वाच्यम्। दृष्टेनैवोपपत्तेः। न च तत्त्वसाक्षात्कारस्य भावनाजन्यत्वे स्मृतित्वापत्तिरिति वाच्यम्। समानविषयकसंस्कारत्वेन जनकत्वे तथाभावात् अत्र चात्मविषयकभावनात्वेन हेतुत्वादिति चेत्। न। तत्त्वसाक्षात्कारस्यैव न मोक्षहेतुत्वम्, तत्त्वज्ञानादिति सूत्रे पञ्चम्याः प्रयोजकत्वपरतया टीकाकृता व्याख्यानात्। तज्जनकभावनायास्तु मोक्षहेतुत्वं दूरनिरस्तमेव। न च देवताप्रतिमादिदर्शनसामान्यस्यैव स्वर्गहेतुत्वश्रुतेस्तन्निर्विकल्पकमादाय सिद्धसाधनमिति वाच्यम्। प्रमेयत्वप्रकारकदर्शनमादायातिप्रसक्त्या विशेषप्रकारकत्वस्य वाच्यत्वेन निर्विकल्पकस्य स्वर्गाहेतुत्वात्। न चेश्वरज्ञानस्य सुखदुःखकारणतया तदादाय सिद्धसाधनमिति वाच्यम्। द्वितीयात्मविशेषगुणपदस्यात्मविशेषस्य संसारिणो यो विशेषगुण इत्यर्थकत्वात् मध्यपदलोपिसमासात्। न च जीवनयोनियत्नमादाय सिद्धसाधनम्। तस्य जीवनमात्रहेतुत्वेन

मकरन्दः।

कत्वात्तस्य व्यर्थत्वाभावादखण्डाभावे वा न वैयर्थ्यम्। लौकिकपदञ्चाप्रसिद्धिवारणार्थम्। अत्र प्रयत्नकारणं गुण ईश्वरज्ञानादिस्तन्निरुपधिविषयो विशिष्टप्रत्यक्षं तत्कारणात्मविशेषगुणत्वं तादृशनिर्विकल्पके वर्त्तत एवेति सिद्धसाधनमत आह, प्रथमात्मविशेषपदम्, आत्मविशेषस्य संसार्यात्मनो गुण इत्यर्थः। ज्ञानमादाय पूर्वोक्तसिद्धसाधनतादवस्थ्यादाह। **प्रयत्नकारणेति**। प्रयत्नसाक्षात्कारणेत्यर्थः। तेन न दोषतादवस्थ्यम्।

टिप्पणी।

शिष्टज्ञानजनकनिर्विकल्पकत्वस्य लौकिकमानसप्रत्यक्षाविषयवृत्तित्वस्य सिद्धत्वात् सिद्धसाधनवारणाय संसारिगुणत्वमुक्तम्। संसारिगुणानुव्यवसायविषयविशिष्टज्ञानकारणनिर्विकल्पकत्वमादायसिद्धसाधनवारणाय **प्रयत्नकारणेति**। फलेच्छौत्कट्येन प्रयत्नौत्कट्यानुभवात् फलेच्छायाः स्वातन्त्र्येणापि कार-

प्रकाशिका ।

सुखाहेतुत्वात् । आत्मपदञ्च सुखजनककामिनीरूपमादाय, विशेषपदं च तादृशात्ममनोयोगमादाय सिद्धसाधनवारणाय । केचित्तु विषयान्तस्य सुखदुःखान्यतरदर्थः, तथा च सुखदुःखान्यतरकारणात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षविषयजातीयभिन्नवृत्ति न वेति विप्रतिपत्त्यर्थः । तज्जातीयत्वञ्च गुणत्वसाक्षाद्व्याप्यजात्या । एवं च निर्विकल्पकादिकमीश्वरज्ञानादिकं जीवनयोनियत्नञ्चादाय न सिद्धसाधनावकाशः, विशेषपदाऽऽत्मपदे तु पूर्ववदेव, भावना च यदि कायव्यूहादिद्वारा क्वचित् सुखहेतुस्तदा तदन्यत्वेनापि विशेषणम् । लौकिकत्वं च संयोगाद्यन्यतमप्रत्यासत्तिजन्यत्वं धर्माधर्मोभयसाधार-

मकरन्दः ।

ननु साक्षाज्जनकत्वं यदि व्यक्तेस्तदा इच्छाद्वेषयोरप्युपायेच्छाद्वेषद्वारा जनकत्वमित्यसम्भवः, तज्जातीयस्य चेत्तदा ज्ञानेऽप्यतिप्रसङ्गः, उपादानप्रत्यक्षस्य साक्षात्प्रयत्नहेतुत्वादिति चेत् । न । फलेच्छायाः स्वरूपसत्याः साक्षादेव प्रयत्नहेतुत्वेन व्यक्तिपक्षस्यैव क्षोदक्षमत्वात् । विजातीयाव्यापारकजनकजातीयस्यैव वा साक्षाज्जनकत्वेन विवक्षितत्वादित्याहुः । तच्चिन्त्यम् । फलेच्छायाः प्रयत्नजनकत्वाभ्युपगमेऽपि साक्षाज्जनकत्वे मानाभावात् । चिकीर्षादिसत्त्वे तां विना तदुत्पत्तौ विलम्बाभावात् । चिकीर्षोपादानप्रत्यक्षाभ्यां सह युगपदनवस्थानाच्च । क्षणद्वयमात्रस्थायित्वात् । चिकीर्षाद्वारेणैवोपपत्तौ समूहालम्बनकल्पने प्रमाणाभावाच्च । भावे वा तद्विषयत्वे न प्रयत्नजनकत्वं, गौरवान्मानाभावाच्च । अन्यथोपादानप्रत्यक्षेऽपि उपनीतविशिष्टप्रत्यक्षविषयत्वसम्भवान्निर्विकल्पकमादाय दोषापत्तेः । फलेच्छां विनोपायचिकीर्षाविरहात्तद्धेतुत्वस्यावश्यकत्वात् ।

वस्तुतस्तु न तस्याः प्रयत्नं प्रति जनकत्वं, किन्त्ववच्छेदकत्वमित्युक्तमस्माभिरन्यथाख्यातिवादे । विजातीयेत्याद्यप्ययुक्तम् । साक्षाज्जनकत्वेनैव विजातीयाव्यापारकं यद् उपादानप्रत्यक्षं तज्जातीयं ज्ञानमादायोक्तसिद्धसाधनतादवस्थ्यात् । न च विजातीयव्यापारजनकजातीयभिन्नत्वं विवक्षितं, ज्ञाने च विजातीयेच्छाव्यापारकत्वमेवेति वाच्यम् । ज्ञानादीनामदृष्टद्वारा कार्यमात्रहेतुत्वाभ्युपगमेनेच्छाया विजातीयव्यापारकप्रयत्नजनकजातीयत्वात् । किञ्च द्वेषस्य प्रयत्नकारणत्वे मानाभावः, यथा चैतत्तथा प्रपञ्चितमनुमानप्रकाशे । मूले त्वग्रेतनं प्राचीनमतमनुपादेयम् । चिन्तामणिस्वरसोऽप्येवमेव ।

यच्चोक्तं निरुपधिपदं सोपाधीच्छाविषयकामिनीविशिष्टज्ञानकारणाऽऽत्मविशेषगुणत्वस्योक्ते सत्त्वेन सिद्धसाधनवारकमेव । अग्रिमात्मविशेषगुणपदयोः कामिनीरूपात्ममनोयोगादिवृत्तित्वेन सिद्धसाधनवारणे तात्पर्य्यमिति । तदपि चिन्त्यम् । निदिध्यासनजन्यभावना तत्त्वसाक्षात्कारद्वारा इच्छानिरुपधिविषयदुःखाभावरूपमोक्षहेतुरिति तामादाय सिद्धसाधनतादवस्थ्यात् । न च निदिध्यासनजन्यमदृष्टमेव । दृष्टेनैवोपपत्तेः । न च तज्जन्यत्वे स्मृतित्वापत्तिः । स्वसमानविषयकसंस्कारत्वेनैव हेतुत्वे तथात्वात् । अत्र चात्मविषयकभावनात्वेनैव हेतुत्वात् । तत्त्वसाक्षात्कारस्य विश्वविषयकत्वाच्च । अन्यथा संस्कारध्वंसे का गतिः । अत एव मूले वक्ष्यति, अतीन्द्रियार्थदर्शनाभ्युपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कारमुत्पादयतीति अदृष्टवत् तस्यापि प्रत्यासत्तित्वे विरोधाभावः ।

अस्तु वा तथा । तथापि देवप्रतिमादिदर्शनत्वेनैव स्वर्गहेतुत्वश्रुतेस्तन्निर्विकल्पकस्यापि तथा-

टिप्पणी ।

णत्वे व्यक्तिसाक्षात्कारणत्वगर्भप्रथमकल्पः, फलेच्छायाः साक्षादकारणत्वे द्वितीयः, ज्ञानस्य विजातीयेच्छारूपव्यापारजनकजातीयत्वात् तद्वारणम् । इच्छाया अदृष्टरूपव्यापारजनकत्वेऽपि तस्य प्रत्यक्षाविषयत्वान्न तत्रासम्भवः, **निरुपाधिपद**न्तु इच्छासोपाधिविषयकामिनीज्ञानजनकनिर्विकल्पकमादाय

प्रकाशः ।

कमानसप्रत्यक्षाविषये वर्त्तते नवा ? यद्वा, लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्व-मात्मगुणे वर्त्तते, न वा ? भावनात्वन्तु न गुणत्वसाक्षाद्व्याप्यम्, अदृष्टत्वन्तु न जातिः ।

प्रकाशिका ।

ण्यायोभयगर्भत्वम्, प्रत्येकगर्भतायान्तु विप्रतिपत्तिद्वयमेव । मानसत्वञ्चाखण्डजातिरेवेति न वैयर्थ्य-मिति प्रथमकल्पसाधारणमेव समाधानमिति दिक् । अत्र च कारणान्तं भावनासामान्यमादाय सिद्ध-साधनवारणाय ।

**लौकिकेति ।** प्रत्यक्षाविषयत्वं न्यायमतेऽप्रसिद्धमिति लौकिकत्वं विशेषणम्, परमते च तदुपरञ्जकमेव तदर्थश्च विषयजन्यत्वम् । सुखत्वादिकमादायार्थान्तरमित्य**विषयान्तं** विशेषणम् । गुरुत्वमादायार्थान्तरमिति **आत्म**पदम् । **गुण**पदं स्पष्टार्थम् । साक्षात्पदव्यावर्त्यमाह । **भावनात्वमिति ।** जातिपदव्यावर्त्यमाह । **अदृष्टत्वमिति ।** जातिपदाप्रक्षेपे दर्शनानर्हगुणत्वस्य गुणत्वव्याप्यजात्यव्याप्यतयाऽऽत्मसंयोगादिवृत्तितया च सिद्धसाधनमिति तत्पदमिति भावः ।

केचित्तु धर्मत्वमधर्मत्वञ्चादृष्टत्वव्याप्यतया साक्षाद्व्याप्यमेव न भवति, अदृष्टत्वं च जातिरेव नेति विधिकोटेर्बाध इत्यत आह । **अदृष्टत्वमिति ।** यत एवादृष्टत्वं न जातिः, अत एव गुणत्व-व्याप्यजात्यव्याप्यत्वलक्षणं साक्षाद्व्याप्यत्वं धर्मत्वादीनामिति न बाध इति व्याचक्षते ।

मकरन्दः ।

त्वाविशेषात्तमादाय सिद्धसाधनम् । सुखदुःखकारणाऽऽत्मविशेषगुणत्वमीश्वरज्ञानादावपीति तदा-दाय सिद्धसाधनम् । न ह्यग्रिमात्मपदमपि संसारिपरतया व्याख्यातम् । तत्परत्वेऽपि पूर्वदोषानु-द्धारात् । जीवनयोनियत्नमादाय सिद्धसाधनतादवस्थ्याच्च । न च तस्य न सुखदुःखजनकत्वं, किन्तु जनकजनकतेति वाच्यम् । अन्वयव्यतिरेकाभ्यां तद्धेतुत्वात् । अन्यथा प्राणादेरपि तथात्वे तद्धेतुत्वं न स्यात् । एतेन प्रयत्नेत्यादिना विषयान्तेन सुखदुःखयोरेव विवक्षितत्वात् सुखदुःखान्य-तरकारणात्मविशेषगुणत्वे तात्पर्यमित्यपास्तम् ।

अत्र ब्रूमः । सुखदुःखान्यतरकारणात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षविषयजातीयभिन्ने वर्त्तते न वेति विवक्षितम् । साजात्यञ्च गुणत्वसाक्षाद्व्याप्यजात्या । धर्माधर्मोभयसाधारण्यार्थमुभ-यगर्भत्वम् । यथाश्रुतेऽपि सुखदुःखयोरनुगमे तदेव बीजम् । प्रत्येकगर्भतया प्रत्येकं विप्रतिपत्तिद्व-यमेव वा विवक्षितम् । एवञ्चेश्वरज्ञानादिकं निर्विकल्पकं जीवनयोनियत्नञ्चादाय सिद्धसाधनानव-काशः । सर्वेषां तज्जातीयत्वात् । धर्माधर्मौ तु न तथा । न चैवं विशेषपदवैयर्थ्य, संयोगमात्र-स्यैव तादृशप्रत्यक्षाविषयतयाऽऽत्ममनोयोगमादाय सिद्धसाधनापत्तेः । कामिनीरूपवृत्तित्वेन सिद्ध-साधनवारणायात्मपदम् । भावनावृत्तित्वेन तद्वारणाय कारणान्तम् । यदि च निदिध्यासनजन्यभा-वना कायव्यूहादिद्वारा सुखादिकारणं, तदा तदन्यत्वमपि सुखदुःखविशेषणम् । नच लौकिकत्वं योगजधर्माद्यजन्यत्वगर्भं, तच्च तन्मतेऽप्रसिद्धम्, साध्ये उपरञ्जकस्याप्यदानाद् व्यर्थत्वञ्चेति वाच्यम् । संयोगाद्यन्यतमप्रत्यासत्तिजन्यत्वस्य विवक्षितत्वात् । अखण्डाभावे साध्ये चावैयर्थ्यादिति ।

वस्तुतः पूर्वापरितोषादाह । **यद्वेति ।** प्रत्यक्षाविषयत्वमप्रसिद्धमिति लौकिकत्वं विशेषणम् । परमते चोपरञ्जकमेतद् बोध्यम् । सुखत्वादिकमादाय सिद्धसाधनवारणायाविषयान्तम् । गुरुत्वा-दिना सिद्धसाधनवारणायात्मपदम् । गुणपदं स्पष्टार्थम् । साक्षात्पदव्यावर्त्यमाह । **भावनात्व-**

टिप्पणी ।

सिद्धसाधनवारणाय, सुखजनकेश्वरज्ञानमादाय सिद्धसाधनवारणाय द्वितीयस्यात्मविशेषपदस्योपा-दानम् । **अदृष्टत्वन्तु न जातिरिति ।** यतोऽदृष्टत्वन्न जातिरतो धर्मत्वाधर्मत्वयोरदृष्टत्वमादाय

प्रकाशः ।

परलोके तु, समानकालीनानेकावृत्तिशरीरवृत्तिजातित्वं दुःखावच्छेदकत्वासमानाधिकरणवृत्ति

प्रकाशिका ।

**समानकालीनेति** । शरीरं दुःखानवच्छेदकमित्यत्र प्रसिद्धाप्रसिद्धपक्षत्वे बाधाश्रयासिद्धी, जातिपक्षत्वेऽपि तथा, अतो **जातित्वं** पक्षः । एककालीनेऽनेकस्मिन् न वर्त्तते अथ च शरीरवृत्तिर्या जातिस्तत्त्वं दुःखावच्छेदकत्वानधिकरणाधिकरणवृत्ति न वेत्यर्थः । अत्र विधिप्रसिद्धिः पटरूपवृत्तिप्रमेयत्वादौ, निषेधप्रसिद्धिस्त्वाकाशादौ, विधिकोटिर्नैयायिकानां निषेधकोटिश्च परेषाम्। सत्तावृत्तित्वेन सिद्धसाधनवारणायावृ**त्तीत्यन्तम्** । तत्राप्यनेकावृत्तिजातित्वमप्रसिद्धमिति **समानकालीनेत्य**नेकविशेषणम् । न च दुःखानवच्छेदकं यदहोरात्रावच्छिन्नं भिन्नमेव शरीरं तदादाय सिद्धसाधनमिति वाच्यम् । (१)दुःखस्वरूपयोग्यत्वमात्रस्य दुःखावच्छेदकत्वपदार्थत्वात् । यत्तु तदधिकरणानधिकरणत्वमेवासामानाधिकरण्यमिति न तदादाय सिद्धसाधनमिति । तत्तुच्छम् । तथासति सत्तामादाय सिद्धसाधनाप्रसङ्गेनावृत्तीत्यन्तस्य वैयर्थ्यात् । परिमाणभेदभिन्ननानाकालीनकुष्माण्डादि फलवृत्तिजातिमादाय सिद्धसाधनवारणाय **शरीरवृत्तीति** । न च तस्यां जातौ मानाभावः, मीनादिशरीरवृत्तिजात्या सह तुल्यव्यक्तिकत्वात् । मिश्रास्तु कारणविशेषप्रयोज्यशब्दवृत्तिजातिमादाय सिद्धसाधनवारणाय शरीरवृत्तिपदमित्याहुः । तच्चिन्त्यम् । कदम्बगोलकन्यायेन शब्दोत्पत्तौ

मकरन्दः ।

**न्त्विति** । नन्विदं बाधितं, धर्मत्वाधर्मत्वयोः परस्पराव्याप्यत्वाददृष्टत्वस्य च जातित्वाभावादित्यत आह । **अदृष्टत्वञ्चेति** । यत एवादृष्टत्वं न जातिरत एव तद्व्याप्यजात्यव्याप्यतया धर्माधर्मत्वे साक्षाद् व्याप्ये इति भावः ।

**समानेति** । अत्र विधिकोटिर्नैयायिकानाम् । नेति बौद्धानाम् । यद्यपि तादृशजातिर्दुःखावच्छेदकत्वासमानाधिकरणेत्येतावतैव दुःखानवच्छेदकशरीरसिद्धाविष्टसिद्धिस्तथापि चैत्रत्वादेस्तादृशजातेः पक्षीकरणे बाधाद् अन्यस्याश्चाप्रसिद्धेरिति पक्षविकल्पभिया तादृशजातित्वं पक्षीकृतम् । दुःखावच्छेदकत्वासमानाधिकरणवृत्तित्वं दुःखावच्छेदकत्वानधिकरणाधिकरणवृत्तित्वं विवक्षितम् । एवञ्च सत्तावृत्तित्वेन सिद्धसाधनवारणार्थमाह, अवृत्त्यन्तम् । अनेकावृत्तिजातित्वमप्रसिद्धमिति समानकालीनपदम् । तदर्थश्च समानकालोत्पत्तिकत्वम् । एवञ्चात्मत्वमनस्त्वादिवृत्तित्वेन सिद्धसाधनवारणार्थं शरीरवृत्तीति ।

केचित्तु कारणविशेषप्रयोज्यशब्दवृत्तिजातेस्तथात्वेन सिद्धसाधनवारणाय शरीरवृत्तिपदमित्याहुः।

टिप्पणी ।

गुणत्वव्याप्यजात्यव्याप्यत्वरूपसाक्षाद्व्याप्यत्वस्य न हानिः । **शरीरवृत्तिजातित्वमिति** । स्वर्गसद्भावेऽपि नारकीयशरीरवृत्तिजातौ चार्वाकसाध्यप्रसिद्धिः स्यात्, जातित्वावच्छेदेन साध्यतायां गौरवं स्यादतो **जातित्व**पर्यन्तानुधावनम् । जलदे प्रसिद्धाप्रसिद्धपक्षत्वे बाधाऽऽश्रयासिद्धी इत्यतो जातित्वानुधावनमिति । **दुःखावच्छेदकत्वासमानाधिकरणवृत्ती**त्यस्य दुःखावच्छेदक-

(१) इदन्तु चिन्त्यम् । अवच्छेदकतया दुःखं प्रति तादात्म्येन तस्यकारणत्वात् तदवच्छेदकत्वमेव योग्यत्वम् । तदवच्छेदकं च यदि दुःखावच्छेदकचैत्रादिशरीरनिष्ठं तत्तद्व्यक्तित्वं तदोक्तदोषतादवस्थ्यम्, यदि चैत्रत्वादिकं तदा तस्य सुखावच्छेदकेऽपि सत्त्वेन कुतो न तत्र दुःखोत्पत्तिः । न चादृष्टविशेषादिरूपसहकारिविरहान्नेति वाच्यम् । तथासत्यनेककारणत्वापेक्षया शरीरत्वेनैव कारणत्वे लाघवेन तस्यैव स्वीकरणीयत्वापत्तेः । स्वर्गिशरीरे च सहकारिविरहादेव न दुःखमिति साध्याप्रसिद्धिरिति ।

प्रकाशः ।

न वा ? इति स्वर्गे । नरके तु दुःखपदस्थाने सुखपदप्रक्षेपात् संशयः । तादृशी च जातिर्बाल्यादिभेदभिन्नानेकशरीरवृत्तिरसाधारणी चैत्रत्वादिः प्रसिद्धेति विशेषतः । परलोकमात्रे तु सुखदुःखोभयजनक-मच्छरीरातिरिक्तशरीरवानहं न वेति संशयः । चैत्रस्तथा प्रसिद्धः ।

साधने तु, प्रागभावत्वाद्यप्रतियोगि कार्यं; प्रतियोगित्वप्रागभावान्यप्रागभावाविषयकप्रतीत्य-

प्रकाशिका ।

तज्जातेः समानकालीनानेकवृत्तित्वात् वीचीतरङ्गन्यायेनापि नाश्यनाशकशब्दयोः समानकालीनत्वेन तथात्वात् । वस्तुतः समानकालीनत्वं समानकालोत्पत्तिकत्वमिति मनस्त्वादिकमादाय सिद्धसाधनवारणाय शरीरवृत्तिपदम् । जातिपदन्त्वेतच्छरीरभाविघटविशेषान्यतरत्वमादाय सिद्धसाधनवारणाय । **दुःखावच्छेदके**त्यत्र दुःखपदं मरणाजन्यदुःखपरमिति स्वर्गिशरीरस्यापि मरणजन्यदुःखावच्छेदकत्वाद् बाध इति दूषणं निरस्तम् । यदि च स्वर्गिशरीरे आहारपरिणामभेदे मानाभावेन नानात्वाभावात् तादृशी जातिर्नास्ति तदा सुखानवच्छेदकत्वमप्यनेकविशेषणम् । तथा च लोकविशेषजन्यतावच्छेदकजातिमादायैव विधिकोटिरिति ध्येयम् । स्वर्गनरकान्यतरसाधनानुकूलां विप्रतिपत्तिमाह । **परलोकेति** । अत्र मत्पदमप्रसिद्धिवारणाय । अयं च विशिष्टाभावो द्वेधा मच्छरीरातिरिक्तशरीरवत्त्वेन वा सुखदुःखयोरन्यतरमात्रावच्छेदकशरीरवत्त्वेन वा, तत्राद्ये बाधाद् द्वितीयमादायाभिमत सिद्धिरिति भावः । **साधने त्विति** । साधनत्वे त्वित्यर्थः । धर्म्मिणो दण्डादेः प्रागभावाविषयप्रतीतिविषयत्वात् अग्रिमाग्रिमविप्रतिपत्तेस्तत्रैवान्वयाच्च । कारणत्वन्तु प्रागभावगर्भमिति प्रमेयत्वादिनापि तज्ज्ञाने प्रागभावविषयतावश्यकत्वम् । प्रागभावत्वमपि प्रागभावघटितत्वेन प्रागभावाविषयकप्रतीत्यविषय इति तत्प्रतियोगित्वमादायार्थान्तरं मा भूदिति बाधस्फोरणाय **प्रागभावत्वाद्यप्रति-**

मकरन्दः ।

यद्यपि जातिपदं व्यर्थम् । न चैहिकसुखमात्रावच्छेदकशरीरवृत्तिधर्ममादायाऽर्थान्तरवारणाय तदिति वाच्यम् । ऐहिकशरीरस्य दुःखावच्छेदकत्वनियमाद् बाधेनाऽसिद्धेः । अन्यथा जातिपददानेऽप्यप्रतीकारादिति । यदि च दुःखावच्छेदकत्वं तत्स्वरूपयोग्यत्वं, तदा तुल्यम् । एवञ्च समानकालीनपदमपि व्यर्थम् । तथापि पक्षे उपरञ्जकस्यापि दानाज्जातिपदमप्रसिद्धिवारकतया तदपि सार्थकमिति । वस्तुतस्तु एतच्छरीरभाविघटाद्यन्यतमत्वादिकमादायार्थान्तरवारणाय जातिपदम् । तस्य दुःखावच्छेदकस्वरूपयोग्यतानधिकरणघटाद्यधिकरणत्वादिति । विधिनिषेधप्रसिद्धिश्च शब्दत्वादौ चैत्रत्वादौ चेति बोध्यम् ।

**सुखेति** । सुखदुःखोभयजनकमच्छरीरातिरिक्तत्वमुभयथा सुखदुःखोभयजनकत्वविशेषणाभावान्मदीयत्वविशेषणाभावाच्च । तच्चान्त्यनिबन्धनमन्यत्र प्रसिद्धम् । आद्यनिबन्धनञ्च पक्षधर्मताबलात् पक्षे सिद्ध्यतीति भावः । **साधने त्विति** । साधनत्वे त्वित्यर्थः । तत्रैवाग्रे विप्रतिपत्तिद-

टिप्पणी ।

त्वानधिकरणाधिकरणवृत्तित्वमर्थः, तथा सति सत्तामादाय सिद्धसाधनवारणाय **वृत्तित्वा**न्तस्य सार्थकता, यथाश्रुते तद्वैयर्थ्यं स्यादिति जलदे । साङ्कर्य्यस्य जातिबाधकत्वाभावे एकजातीयसुखावच्छेदकचैत्रमैत्रादितत्तच्छरीरव्यक्तिविशेषवृत्तिजातिमादाय सिद्धसाधनवारणाय तत्सार्थक्यसम्भव इति तु वयम् । **बाल्यादिभेदभिन्नानेकशरीरवृत्तिरिति** । बाल्याद्यवस्थाभेदेन प्राप्तभेदमनेकं यच्छरीरं तद्वृत्तिरित्यर्थः । **प्रागभावत्वाद्यप्रतियोगि कार्य्यमिति** । प्रागभावत्वजन्याभावत्वरूपध्वंसत्वस्य प्रागभावघटितस्य विशिष्टरूपस्य सखण्डस्य प्रागभावं विना न प्रतीतिविषयत्वमिति तदादायार्थान्तरं स्यादिति बाधस्फोरणाय**प्रतियोग्य**न्तम् । प्रागभावतत्प्रतियोगित्वपूर्ववर्त्तित्व-

प्रकाशिका

**योगीति** पक्षविशेषणम् । आदिपदग्राह्यन्तु ध्वंसत्वादि, तस्य जन्याभावत्वरूपतया जन्यत्वस्य च प्रागभावगर्भतया तादृशप्रतीत्यविषयत्वात् । प्रागभावघटान्योन्याभावाविति समूहालम्बनविषया-न्योन्याभावप्रतियोगितया सिद्धसाधनमिति तद्वारणाय नञ्द्वयगर्भता प्रागभावतत्प्रतियोगित्वाभ्यां सिद्धसाधनवारणाय प्रतियोगित्वप्रागभावान्येत्यविषयविशेषणम् । न च कार्यत्वावच्छिन्नप्रतियोगि-कान्योन्याभावमादाय सिद्धसाधनम् । तस्यापि प्रमेयत्वादिना ज्ञाने तादृशप्रतीतिविषयत्वात् ।

अत एव ध्वंसस्य जन्याभावतया जन्यत्वस्य च प्रागभावगर्भतया ध्वंसप्रतियोगितया सिद्ध-साधनमिति निरस्तम् । प्रमेयत्वादिना ध्वंसस्यापि तादृशप्रतीतिविषयत्वात् । ननु प्रतियोगित्वमत्र स्वरूपसम्बन्धविशेषः । नच प्रतियोगित्वस्य कार्यं प्रतियोगि किन्त्वाश्रयः, तथा च प्रतियोगित्वान्येति विशेषणं व्यर्थम् । न च प्रतियोगित्वमत्र सम्बन्धित्वमात्रम् । तथासति प्रागभावत्वत्वेनापि समं कार्यस्य परम्परासम्बन्धोऽस्त्येवेति तदादाय सिद्धसाधनाऽऽपत्तेः । न च स्वरूपसम्बन्धित्वं प्रतियो-गित्वम् । प्रकृते परम्परासम्बन्धस्यापि स्वरूपसम्बन्धत्वात् । संयोगसमवायान्यसम्बन्धस्यैव स्व-रूपसम्बन्धत्वात् । परम्परासम्बन्धान्यत्वस्यापि स्वरूपसम्बन्धलक्षणे विशेषणत्वे परम्परासम्ब-न्धस्य सर्वत्र सत्त्वेनासम्भवापत्तेः । न च साक्षात्सम्बन्धित्वमेव प्रतियोगित्वमत्र, प्रकृते च घटस्य कारणतेति प्रतीतिबलादस्त्येव घटस्य कारणतया साक्षात्सम्बन्धित्वमिति वाच्यम् । तथा सति प्रागभावान्यत्वाश्रयत्वलक्षणोपाध्याश्रयत्वेन सिद्धसाधनापत्तेः । न च तदन्यत्वमप्यविषयविशेषणं

मकरन्दः ।

र्शनात् । धर्मिणस्तु दण्डादेः प्रागभावाविषयप्रतीतिविषयत्वात् । साधनञ्च न तथा, तस्य प्राग-भावगर्भतया प्रमेयत्वादिनाऽपिग्रहे प्रागभावविषयत्वनियमादिति प्रागभावविषयप्रतीतिविषयप्रति-योगित्वे साध्ये सिद्धसाधनं, कार्य्यस्य घटादेः प्रागभावघटान्योन्याभावाविति समूहालम्बनविषया-न्योन्याभावप्रतियोगित्वादिति नञ्द्वयम् । प्रागभावतत्प्रतियोगित्वाभ्यां तादृशप्रतीतिविषयाभ्यां सिद्धसाधनवारणार्थं प्रतियोगित्वप्रागभावान्येति ,तादृशप्रतीत्यविषयविशेषणम् । प्रागभावप्रतियो-गित्वप्रागभावान्येत्यर्थः ।

केचित्तु सामान्यत्वेन विशेषोऽपि वारित इति यथाश्रुतेऽप्यदोष इत्याहुः । न च कार्यान्योन्या-भावमादाय सिद्धसाधनम् । तस्य कार्यत्वावच्छिन्नप्रतियोगितया कार्यत्वस्य च प्रागभावप्रतियोगि-त्वरूपतया तादृशप्रतीत्यविषयत्वादिति वाच्यम् । अनेन हि रूपेणाभावग्रहे प्रतियोगितावच्छेदकग्रह-ध्रौव्यं, न त्वन्यथापीति प्रकारान्तरेण तद्ग्रहे प्रागभावाविषयप्रतीतिविषयत्वात् । अत एव ध्वंसस्य जन्याभावतया जन्यत्वस्य प्रागभावगर्भतया तत्प्रतियोगित्वेन सिद्धसाधनमपास्तम् । ध्वंसस्य प्रका-रान्तरेण तादृशबुद्धिविषयत्वात् । ध्वंसत्वस्य तादृशप्रतीत्यविषयत्वेऽपि कार्यस्य तदप्रतियोगित्वात् । तदिदमुक्तं, प्रागभावत्वाद्यप्रतियोगीति । तथा च बाधान्न ध्वंसत्वप्रागभावत्वादिप्रतियोगित्वेनार्था-न्तरमिति बाधस्फोरणाय पक्षविशेषणमिति मन्तव्यम् ।

ननु प्रागभावत्वादेरिव प्रागभावप्रतियोगित्वस्यापि न प्रतियोगि कार्यं, किन्त्वाश्रयः । तथाच तमादाय सिद्धसाधनानवकाशात्तदन्यत्वं विशेषणमयुक्तम् । न हि प्रतियोगित्वं सम्बन्धित्वमात्रं वि-वक्षितम् । तथा सति परम्परासम्बन्धेन प्रागभावत्वादेरपि तथात्वात्तदन्यत्वमपि साध्यविशेषणं

टिप्पणी ।

प्रागभावान्यत्वाश्रयत्वादिकमादाय सिद्धसाधनवारणाय तत्तद्भिन्नत्वोपलक्षक**मन्यत्वान्तम्** । कार्य-त्वावच्छिन्नात्यन्ताभावस्याखण्डस्य प्रमेयत्वतद्व्यक्तित्वादिना प्रतीतौ प्रागभावस्याविषयत्वेन तमा-दाय तु न सिद्धसाधनम् । वस्तुतोऽविषयत्वान्तं स्वप्रतियोगिकान्यथासिद्धान्यवृत्तिनियतपूर्ववर्त्ति-

प्रकाशः ।

विषयप्रतियोगि, न वा ? यद्वा, कार्य्यप्रतियोगित्वं प्रतियोगित्वप्रागभावान्यप्रागभावाविषयबुद्ध्यविषयवृत्ति न वा ? द्वयोरपि प्रागभावत्वे प्रसिद्धिः । यद्वा, कार्य्यपूर्ववर्त्तिनि तन्नियतत्वं वर्त्तते न

प्रकाशिका ।

तथापि पूर्ववर्त्तित्वादिकं कारणताघटकमादाय सिद्धसाधनादिति । अत्र तत्तदन्यत्वमपि विशेषणमिति **केचित्** । तत्पूर्ववर्त्तित्वमात्रमेवैतद्विप्रतिपत्तिजन्यविचारात्सिध्यति नियतत्वादिकञ्चाग्रिमविप्रतिपत्तिमूलकविचारादेवेत्य**न्ये** । वस्तुतो नियतत्वे पूर्ववर्त्तित्वे च विप्रतिपत्तिरेव नास्ति किन्तु नियतपूर्ववर्त्तित्वस्य घटेन समं स्वरूपसम्बन्धविशेषे सा । अत एव स्वरूपसम्बन्धविशेष एव कारणतेति **प्रामाणिकाः** । तथा च प्रतीत्यविषयपर्यन्तपदेन नियतपूर्ववर्त्तित्वमेवोक्तं प्रतियोगित्वञ्च स्वरूपसम्बन्धविशेष एवेति नोक्तदोषावकाशः । न चैवमप्यन्यथासिद्धिविरहासिद्धिः । स्वप्रतियोगिकान्यथासिद्धभिन्नवृत्तिनियतपूर्ववर्त्तित्वप्रतियोगित्वस्य विधिकोटित्वात् । स्वं चरमप्रतियोगिपदार्थः । प्रसिद्धिश्च नियतपूर्ववर्त्तित्वात्यन्ताभाव इति । **कार्यप्रतियोगित्वमिति** । अत्रापि प्रागभावत्वाद्यवृत्तीति विशेषणं बाधस्फोरणाय । यद्यपि पूर्वविप्रतिपत्तौ कार्यत्वस्य प्रतियोगित्वमभिमतमत्र तु कारणतायाः, तथापि स्वरूपसम्बन्धविशेष एव प्रतियोगित्वमत्र तच्चोभयनिरूप्यमेवेत्यविरोध इति भावः । व्याख्या तु पूर्ववदेव । **द्वयोरपीति** । यद्यपि प्रथमविप्रतिपत्तिविधिकोटेस्तादृशप्रागभावत्वत्वाश्रयप्रागभावत्वे प्रसिद्धिरिति युक्तं, द्वितीयविधिकोटेस्तु कथं प्रागभावत्वे, तस्य प्रागभावत्वत्वावृत्तित्वात् प्रागभावस्य च प्रागभावान्यत्वाभावात् । तथापि प्रागभावत्व इति सप्तमी न साक्षादधिकरणतायां किन्तु साक्षात्परम्परासाधारणाधिकरणतामात्रे तथा च प्रागभावत्वत्वे द्वितीयविधिकोटिप्रसिद्धावपि परम्परया प्रागभावत्वस्याधिकरणत्वं सम्भवत्येव । केचित्तु प्रागभावत्व-

मकरन्दः ।

स्यात् । पक्षविशेषणं चासिद्धं स्यात् । तथाच स्वरूपसम्बन्धविशेषो वाच्यः । स च तत्र नास्ति । किञ्च कारणतया समं स्वरूपसम्बन्धविशेषोऽन्यः प्रागभावादिना च समं कार्यस्यान्यः स इति शब्दमात्रसाम्यादनुमानप्रवृत्तिः । न च स्वरूपसम्बन्धत्वेनैवानुगम इति वाच्यम् । तस्य परम्परासम्बन्धसाधारण्येनोक्तदोषानिवृत्तेः । न च तत्र परम्परासम्बन्धस्यैव सत्त्वात् सम्बन्धान्तरमन्तरेणेत्यादिरूपं तत्र तत्रेति वाच्यम् । तस्य संयोगसमवायौ विनेत्यर्थात् । अन्यथा परम्परासम्बन्धस्य सर्वत्र सत्त्वादसम्भवापत्तेरिति चेन्न । साक्षात् सम्बन्धित्वस्य विवक्षितत्वात् । न च कारणतया समं कार्यकारणद्वारक एव सम्बन्धस्तथा च बाध इति वाच्यम् । घटाभाव इत्यत्रेव घटकारणतेत्यत्रापि साक्षात्स्वरूपसम्बन्धानुभवात् । एवञ्च यद्यपि कारणताभिन्नं तादृशं प्रागभावगर्भं पूर्ववर्त्तित्वादिकं नानाधर्ममादायार्थान्तरं सिद्धसाधनं वा भवत्येव । तथापि तत्तदन्यत्वेनापि तादृशप्रतीतिविषयो विशेषणीय इति युक्तमुत्पश्यामः ।

**कार्यप्रतियोगित्वमिति** । यद्यपि पूर्वेण कार्यस्य सप्रतियोगित्वमभिप्रेतमनेन च कारणतायाः, तथापि साक्षात्सम्बन्धित्वमेव प्रतियोगित्वमभिप्रेतं तच्चोभयनिरूपितत्वमुभयत्र तुल्यमित्यविरोध इति भावः । अत एव प्रागभावादिवृत्तित्वेन नार्थान्तरशङ्का, कार्यसाक्षात्सम्बन्धित्वस्य तत्र बाधात् । अन्यच्च पूर्ववत् । **द्वयोरपीति** । ननु प्रथमविप्रतिपत्तौ प्रागभावत्वमादाय प्रसिद्धि-

टिप्पणी ।

त्वपरमेव । प्रसिद्धिश्च तादृशपूर्ववर्तित्वात्यन्ताभावे । एतेन घटस्य कारणत्वमित्यादिप्रतीतिसिद्धस्य प्रतियोगित्वस्य स्वरूपसम्बन्धात्मकस्य प्रागभावादेरभावादन्यत्वान्तं व्यर्थमिति शङ्का परास्ता । **द्वयोरपि प्रागभावत्वे प्रसिद्धिरिति** । द्वयोर्घटकं यदविषयत्वान्तं तस्य प्रागभा-

प्रकाशः ।

वा ? यद्वा, तज्जातीयोत्पत्तिप्राक्क्षणत्वप्रतियोगिव्यापकतावच्छेदकत्वमत्यन्ताभावप्रतियोगिवृत्ति न वा ? ।

प्रकाशिका ।

पदेन प्रागभाववृत्तिधर्म उक्तः, स च प्रागभावत्वं प्रमेयत्वं चेति यथासंख्यं प्रथमद्वितीयविधिकोटिप्रसिद्धिरिति वदन्ति । यद्वा द्वयोरपि विप्रतिपत्त्योरविषयपदान्तार्थस्य प्रागभावत्वे प्रसिद्धिरित्यर्थः । तथाच तत्प्रतियोगिनि प्रागभावे तद्वृत्तौ च प्रागभावत्वत्वे प्रसिद्धिरिति भावः । वस्तुतः कार्यपदं तद्विशेषघटादिपरं तथा च विधिकोटिरपि तत्प्रागभावान्यत्वगर्भा एवं च तादृशपटादिप्रागभाववृत्तितया प्रागभावत्वे प्रसिद्धिः सुलभैवेति दिक् । **कार्येति** । अनन्यथासिद्धकार्यनियतपूर्ववर्त्तिनीत्यर्थः, विशिष्टाप्रसिद्धावपि खण्डशः प्रसिद्धिः सुलभैवेति भावः । एकमेकजातीयं वा कारणमित्यत्र संशयमाह **यद्वेति** । तज्जातीयोत्पत्तिप्राक्क्षणत्वं यत्र, तत्र ब्रह्माधिकरणत्वं प्रधानाधिकरणत्वं वेत्यस्यां व्यापकतायां ब्रह्म प्रधानं वा निरूपकतयावच्छेदकं तदुभयञ्च नित्यतया व्यापकतया च नात्यन्ताभावप्रतियोगीति निषेधकोटिः । परेषां दण्डादीनां कारणतया विशिष्टप्राक्क्षणत्वव्यापकाधिकरणताप्रतियोगितया विधिकोटिर्नैयायिकानां यद्यपि ब्रह्मणोऽप्यत्यन्ताभावप्रतियोगित्वम् । तथापि कालिकदैशिकविशेषणतासम्बन्धावच्छिन्नत्वमत्यन्ताभावविशेषणमिति । मिश्राणामवतारिका व्याख्या च वस्तुतो भवतु सा कारणता तथापि न सा व्यतिरेकिधर्मवृत्तिरिति नादृष्टाधिष्ठातृतया परमेश्वरसिद्धिरिति तस्या व्यतिरेकिवृत्तित्वसाधनाय विप्रतिपत्तिमाह । **यद्वेति** । यदा तदव्यवहितप्राक्क्षणत्वं तदा स्वतो व्यापारतो वा दण्ड इति दण्डस्य व्यापकता, तदवच्छेदकं च तदाश्रय-

मकरन्दः ।

सम्भवेऽपि द्वितीयायामसम्भवः, न हि प्रागभावत्वस्य प्रागभावत्वे वृत्तिरपि तु प्रागभाव एव स च न प्रागभावान्य इति चेत् । प्रागभावत्वपदेन प्रागभावत्वत्वस्य विवक्षितत्वात् । तस्य च तादृशबुद्ध्यविषये प्रागभावत्वे वृत्तेः । तत्प्रतियोगित्वाच्चेत्येके । प्रागभावत्वपदेन प्रागभावधर्मः प्रमेयत्वादिर्विवक्षित इत्यन्ये ।

यत्तु व्यासज्ज्यप्रतियोगिकाभावाश्रयणे प्रतियोगित्वप्रागभावान्यः केवलः प्रागभावोऽपीति तद्वृत्तित्वेन यथाश्रुतमेव सम्यगिति । तत्तुच्छम् । प्रागभावमादाय सिद्धसाधनस्यैवसपरिहारात् । तथा च तदन्यत्वविशेषणं व्यर्थमापद्येत । वस्तुतस्तु कार्यपदं तद्विशेषपटादिपरम् । तथाच तत्प्रागभावतत्प्रागभावप्रतियोगित्वान्यप्रागभावाविषयप्रतीत्यविषयपटादिप्रागभाववृत्तित्वादिना प्रागभावत्वे प्रसिद्धिरिति यथाश्रुतमेव सम्यगिति ।

**कार्येति** । अनन्यथासिद्धकार्यपूर्ववर्त्तिनीत्यर्थः । विशिष्टस्याप्रसिद्धत्वेऽपि खण्डशः प्रसिद्धेरिति भावः । एवं ब्रह्मैव कारणमेकजातीयं प्रधानं वेत्यत्र संशयमाह । **यद्वेति** । तज्जातीयोत्पत्तिप्राक्क्षणत्वं यत्र, तत्र ब्रह्माधिकरणत्वं प्रधानाधिकरणत्वं वेत्यत्र व्यापकीभूताऽधिकरणत्वेऽवच्छेदकं विशेषणीभूतं ब्रह्मैव प्रधानं वा नात्यन्ताभावप्रतियोगि व्यापकनित्यत्वादिति निषेधकोटिः परेषां, विधिकोटिरस्माकम् । अत्यन्ताभावप्रतियोगिनो दण्डादेरपि तादृशत्वाभ्युपगमादिति बोध्यम् । यद्यपि व्यापकनित्यत्वेऽप्याकाशवदत्यन्ताभावप्रतियोगित्वं ब्रह्मादेरविरुद्धं, तथापि तद्वदवृत्तित्वानभ्युपगमात् प्रत्युत सकलदेशकालवृत्तित्वादिदमध्यवसेयम् ।

टिप्पणी ।

वत्वे प्रसिद्धिः, तथा च प्रथमे तादृशप्रागभावत्वमादाय प्रतियोगित्वस्य निरूपकत्वरूपस्याश्रयविधया प्रागेव प्रसिद्धिः । द्वितीये प्रागभावत्वमादाय वृत्तित्वस्य प्रागभावत्वत्वे प्रसिद्धिरिति । यद्वा सप्तम्य-

भावात्। अन्यथापि परलोकसाधनानुष्ठानसम्भवात्। तदभावावेदकप्रमाणसद्भावात्। सत्त्वेऽपि तस्याप्रमाणत्वात्। तत्साधकप्रमाणाभावाच्चेति।

बोधनी।

अन्यथासिद्धं वेति न विवक्षितपुरुषसिद्धिरिति मीमांसकादिविप्रतिपत्तिमाह–**अन्यथेति**। कार्यत्वहेतुरपीश्वरमन्तरेणास्मदादिभिरेवादृष्टद्वारा परमाण्वादिसाधनानां प्रेरणात्मकानुष्ठानसम्भवात् सिद्धसाधनमिति भावः। बाधितविषयं प्रमाणद्वयमित्याह–**तदभावेति**। ननु सत्यपि वेदकर्त्तरि न तत्प्रणीतत्वादागमः प्रमाणं, तत्कर्त्तुरप्रमाणत्वात्, यद्ययं प्रमाणं स्यात् तदा प्रमाणस्य प्रमातृत्वनियमादीश्वरस्याचैतन्यं स्यादित्यनिष्टप्रसङ्गलक्षणप्रतिकूलतर्कप्रतिहतत्वान्न साधनमुपदेशः कार्यत्वं चेत्याह–**सत्त्वेऽपीति**। किञ्च, प्रमासाधनस्य प्रमाणत्वान्नित्यप्रमाश्रयस्य तदसम्भवादप्रमाणत्वम्, किञ्च, अनधिगन्तुः प्रमाणत्वान्नित्यसर्वज्ञस्य च तदसम्भवादप्रमाणत्वम्, किञ्च, ईश्वरज्ञानस्यास्मदादिभ्रमानालम्बने सर्वविषयकत्वाभावः, तदालम्बने च तद्विषयालम्बनस्यापि नान्तरीयकत्वादस्मदादिविभ्रमवदेवाप्रमाणत्वापात इति तर्काः। अत्र **सत्त्वेऽपीति** सत्त्वाभ्युपगमो बाधकाभावात् सम्भावनामात्रेण, न वस्तुत इति। अस्त्वनन्यथासिद्धादुपदेशाद् विशिष्ट उपदेष्टा। तथापि कार्यत्वस्य विपक्षे बाधकाभावेन सन्दिग्धविपक्षव्यतिरेकित्वम्, उपा-

प्रकाशः।

विशिष्टे तु, अलौकिके परलोकसाधनत्वं वर्त्तते न वा ? परलोकसाधनेऽलौकिकत्वं वर्त्तते न वेति विप्रतिपत्तिः। तथाच कार्य्यकारणभावाभावे क्षित्यादिकर्त्तृत्वान्नेश्वरसिद्धिः। परलोकाभावे च तत्साधनयागादिद्रष्टुरभावे तदुपदेशकतयाऽपि नेश्वरसिद्धिः। अदृष्टासिद्धौ तदधिष्ठातृतयापि नेश्वरसिद्धिरिति चार्वाकाभिप्रायः।

**अन्यथेति**। अदृष्टादिसत्त्वेऽपि वेदानामाप्तोक्तत्वेन प्रामाण्यावधारणं विना तद्बोधितस्वर्गादिसाधनयागादौ बहुवित्तव्ययायाससाध्ये न प्रवृत्तिरित्याप्तो वेदकारः सिद्ध्यतीति नास्ति, अन्यथापि वेदानां नित्यनिर्दोषत्वेन स्वतः प्रामाण्यावधारणात्, परतः प्रामाण्येऽपि कर्मयोगसिद्धसर्वज्ञपूर्वकत्वात्तेषां परलोकसाधनयागाद्यनुष्ठानसम्भवादित्यर्थः। **तदभावेति**। भवतु वेदानां पौरुषेयत्वाद् योगसिद्धसर्वज्ञपूर्वकत्वेनाश्वासाच्चाप्तोक्तत्वम्। तथापि तत्र, क्षित्यादेः कर्तृजन्यत्वे च प्रत्यक्षादिबाधान्न तत्सिद्धिरित्यर्थः। **सत्त्वेऽपीति**। बाधकाभावात्तत्सिद्धावपि स न प्रमाणम्, प्रमाणपदं हि भावकरणकर्त्तृव्युत्पत्त्या प्रमातत्साधनतदाश्रयेषु वर्त्तते, यथार्थानधिगतार्थाधिगतिश्च

प्रकाशिका।

त्वमेवेति अवतारिका व्याख्या चेति प्रतिभाति। उभयत्र च कल्पेऽनन्यथासिद्धत्वे सतीति विशेषणं बोध्यम्। **विशिष्टे त्विति**। प्रत्येकसिद्ध्यनन्तरमेवेयं विप्रतिपत्तिरिति नाप्रसिद्धिरिति भावः। कार्य्यकारणभावादौ विप्रतिपत्तिः कथमीश्वरे पर्यवसितेत्यत आह **तथा चेति**। **तत्साधनेति**। तत्साधनत्वेन यागादिद्रष्टुरभाव इत्यर्थः। **प्रमाणपदं हीति**। तथाचाप्रमाणत्वादिति बहुव्रीहितत्पुरुषाभ्यां प्रमितिशून्यत्वात् तत्करणशून्यत्वात् तत्समवायिभिन्नत्वाच्चेति पर्यवसितं पूर्वपक्षं पूरयति

मकरन्दः।

**विशिष्टे त्विति**। विप्रतिपत्तिरिति शेषः। एवं प्रागपि बोध्यम्। अविशिष्टप्रत्येकप्रसिद्धिदशायामेवैतदभिमतमिति प्रसिद्धिरिति भावः। **तद्दिति**। तत्साधनत्वेन यागादिद्रष्टुरभाव इत्यर्थः। **प्रमाणपदं हीति**। तथाचाप्रमाणत्वादिति मूलोक्तस्य बहुव्रीहितत्पुरुषाभ्यां प्रमितिशून्यत्वात्

**तत्र न प्रथमः कल्पः । यतः—**

**सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।**

बोधनी ।

धिसद्भावेनाप्रयोजकत्वम्, व्याप्तिप्रमाणाभावेन व्याप्त्यसिद्धिरिति जगत्कर्तृत्वादिविशिष्टे परमेश्वरे प्रमाणाभावादिति बौद्धमीमांसकचार्वाकाः प्रत्यवतिष्ठन्ते **तत्साधकेति**। केचित् 'पूर्वमुपदेशलिङ्गकमनुमानमेव चिन्तितं न कार्यलिङ्गस्य प्रस्तावः, सम्प्रत्युपदेष्टरि सिद्धेऽपि जगत्कर्त्तरि प्रमाणाभावमेव वदन्तः प्रत्यवतिष्ठन्त' इति व्याचक्षते । अनेन विप्रतिपत्तिप्रदर्शनेन न्यायस्य सन्दिग्धविषयत्वमपि प्रदर्शितं भवति ।

तत्र यथामतस्यालौकिकस्य हेतोः साधकानि सङ्कलय्याह—**सापेक्षत्वादिति** । अत्र तावत् **सापेक्षत्वेन**, सत्येव हेतौ कार्यं भवति नासतीति सर्वलोकप्रसिद्धं प्रत्यक्षं हेतुमत्त्वे प्रदर्शितम् ; अनुमानं च—विवादाध्यासितं हेतुमत् सापेक्षत्वात् । सापेक्षत्वं च कादाचित्कत्वात् ।

प्रकाशः ।

प्रमा। तथा च यदीश्वरः कर्त्ता स्यात्, प्रमावांस्तत्करणेन्द्रियादिमांस्तत्समवायिकारणञ्च स्यात्, न चायं तथेति विपर्य्ययानुमानादित्यर्थः । अप्रमाणपुरुषस्य वचः कः श्रद्धास्यतीति भावः । **तत्साधकेति** । कार्यत्वादेरुपाधिदुष्टत्वात् क्षितिवेदादेः कर्तृजन्यत्वसाधकमेव नास्तीत्यर्थः ।

तत्र चार्वाकस्यायं भावः । कार्य्यकारणभावे प्रत्यक्षं न तावन्मानं, धर्मिस्वरूपप्रत्यक्षेऽपि तत्र संशयात् । नचान्वयव्यतिरेकानुविधानज्ञानसहकारिविरहात् स इति वाच्यम् । तन्मात्रस्य व्यभिचारिसाधारण्यात् । नियमानन्यथासिद्धयोश्च शङ्काकलङ्कितत्वेनानवधारणात् । नाप्यनुमानं, तस्य मया मानत्वेनानभ्युपगमात् । तत्साधने क्वचिदसिद्धावन्वयिनोऽसम्भवात् । तदसिद्धौ व्यतिरेकाज्ञानात् केवलव्यतिरेक्यनवतारात् । मम त्वप्रमितस्यासत्ख्यात्यभ्युपगमान्न निषेध्याप्रसिद्धिरित्यत आह । **तत्रेति** । तेषु मध्ये न प्रथमः पक्षः कल्पो यतः, कल्पनाऽसत्ख्यातिस्तद्विषयः ।

प्रकाशिका ।

**तत्रेति । तदिति**। तस्य मानत्वसाधनेऽपीत्यर्थः । **तदसिद्धाविति** । कारणत्वासिद्धावित्यर्थः । प्रत्यक्षेण तद्ग्रहस्य निषिद्धत्वादिति भावः । नन्वेवं निषेधोऽपि कथमत आह । **मम त्विति। नन्** **न प्रथमः कल्पः** पक्ष इति सामानाधिकरण्येनान्वये यतो हेतुरस्तीति हेत्वन्वये साध्याविशेषः, हेतोरेव हेत्वभावात्मकप्रथमपक्षाभावत्वात् हेत्वभावो न प्रामाणिको यतो हेतुरस्तीति व्यधिकरणमतोऽन्यथा व्याचष्टे । **कल्पः=कल्पनेति** । यद्यपि प्रथमकल्पो न प्रामाणिकोऽसत्ख्यातिविषयत्वादित्यत्रापि पर्यवसिते साध्यादीनामप्रसिद्धिः । तथापि वचने प्रतिपत्तिकारणत्वज्ञानं प्रामाणिकं तन्निष्ठत्वेन व्याहतनिषेधप्रतियोगित्वादित्यत्र तात्पर्यम् । अत एवाग्रे कारणत्वाभावे व्याघातमेवाहेति । केचित्तु तन्मतमवलम्ब्यैवेदमुक्तम् । तन्मते चासत्ख्यातिरूपैव साध्यादीनां प्रसिद्धिरित्याहुः । ननु

मकरन्दः ।

तत्करणेन्द्रियादिशून्यत्वात् तत्समवायिभिन्नत्वादित्यत्र तात्पर्यम् । **तदिति** । तस्य साधनत्वसाधनेऽपीत्यर्थः । **तदिति**। कारणत्वासिद्धावित्यर्थः । प्रत्यक्षेण तद्ग्रहस्य निषिद्धत्वादिति भावः ।

**न प्रथमः पक्ष इति** । न प्रथमः कल्प इति सामानाधिकरण्ये प्रथमकल्पस्य हेत्वभावरूपतया तदभावरूपस्य साध्यस्य हेतुरस्तीति पर्यवसाने यतो हेतुरस्तीत्यत्र साध्याविशेषेण हेतुत्वानुपपत्तिः स्यात्। यदि च न प्रथमः कल्प इत्यस्य हेत्वभावकल्पो न प्रामाणिक इत्यर्थः, तथापि यतो हेतुरस्तीति व्यधिकरणम् । तथाच हेत्वभावकल्पो न प्रामाणिकः असत्ख्यातिविषयत्वादित्यत्र नोक्तदोष इति तदर्थपरतया व्याख्यातमिति मन्तव्यम् । यद्यपि पक्षादेरप्रसिद्धौ नोक्तानुमानमपि सम्भवति, त-

बोधनी।

अत्रोभयत्रापि व्यतिरेकेण गगनं दृष्टान्त इति। ननु सापेक्षत्वेऽपि कादाचित्कत्वानुपपत्तिः, अपेक्षणीयस्य सदातनत्वेन कार्यस्यापि सदातनत्वप्रसङ्गात्। तथाच निरपेक्षादिव सापेक्षादपि व्यावृत्तेः कादाचित्कत्वहेतुरसाधारणः स्यादित्यत्राह—**अनादित्वादिति**। न हि कारणस्य सदातनत्वं, तस्याप्यपेक्षणीयान्तरसम्भवात्, न चानवस्था, कार्यकारणप्रवाहस्या**नादित्वादिति**। यद्वा, कारणान्तरानपेक्षत्वेऽपि भावस्योत्तरकोटिना प्रध्वंसमात्रेण कादाचित्कत्वोपपत्तेर्नेदं सापेक्षत्वव्याप्तमित्याशङ्क्याह—**अनादित्वादिति**। निरपेक्षत्वे कार्यस्यानादित्वप्रसङ्गात् सापेक्षपरम्पराप्रवाह**स्यानादित्वा**दिति।

नन्वेकमेकजातीयं वा किञ्चित् कारणमस्तु, तथा च विवक्षितकारणासिद्धेर्न तदर्थमुपदेशापेक्षेति तत्राह—**वैचित्र्यादिति**। विचित्रकारणाभावे कार्यवैचित्र्यं न स्यात्, अस्ति च तदिति। अस्तु तर्हि दृष्ट एव विचित्रो हेतुर्जगद्वैचित्र्यस्य,तथाच विवक्षितासिद्धिस्तदवस्थेत्यत्राह—**विश्ववृत्तित** इति। तावन्मात्रहेतुत्वे प्रेक्षावतो विश्वस्य पशुपुत्राद्यर्थं यागादौ प्रवृत्तिर्न स्याद्, दृश्यते चासौ, तस्माद्यागादिरपि कारणमिति। तर्हि यागादिस्वरूपमेव कारणमस्तु, तथापि

प्रकाशः।

तथाहि; कार्य्यकारणभावानभ्युपगमे परप्रतिपत्तिफलकवचनप्रयोगानुपपत्तेः। यथा यथा तन्निराकरणाय प्रयत्नस्तथा तथा तस्यैवापत्तेरिति व्याघात एवेत्यर्थः। तथापि साधकं विना न तत्सिद्धिरिति चेत्, तत्राह। **सापेक्षत्वादिति**। विवादपदस्य **सापेक्षत्वात्**=सहापेक्षया वर्त्तमानत्वात् कादाचित्कत्वादित्यर्थः। तच्च किञ्चित्कालासंवन्धित्वे सति किञ्चित्कालसंवन्धरूपं कार्य्याणां प्रत्यक्षसिद्धमित्यनन्यथासिद्धमेतत्। एतस्मादनन्तरमिदं भवत्येतदभावे नेति प्रत्यक्षमेव कार्य्यकारणभावे मानम्। अत एव प्रागभावस्य कादाचित्कत्वेऽपि न तत्र तत्सिद्धिः। प्रागसत्त्वस्य विव-

प्रकाशिका।

प्रामाणिके कारणत्वे निषेधोऽपि नास्माकमिति कुतो व्याघात इत्यभिप्रेत्याह। **तथापीति**। **सापेक्षत्वा**दित्यस्य सहेतुकत्वादित्यर्थे हेतुरस्तीति साध्यवैयधिकरण्यं सहेतुकत्वे च साध्ये साध्याविशेष इत्यत आह। **कादाचित्कत्वादित्यर्थ इति**। साध्यञ्च सहेतुकत्वमिति भावः। **किञ्चिदिति**। कारणत्वाभिमतानुत्तरकालासम्बन्धित्वे सति तदभिमतोत्तरकालसम्बन्धित्वमित्यर्थः। ननु सहेतुकत्वे साध्ये साध्याप्रसिद्धिस्तदवस्थैव निरुक्तकादाचित्कत्वज्ञानसहकृतप्रत्यक्षगम्यत्वेऽपि कारणतायाः प्रागभावप्रतियोगिकक्कारणताग्रहप्रसङ्ग इति प्रत्यक्षं विशिनष्टि **एतस्मादिति**। **मानं**=करणं न तु मितिः,उक्तप्रत्यक्षस्य कारणत्वाविषयकत्वाद्। विशेषणफलमाह **अतएवेति**। उक्त प्रत्यक्षस्य तत्रासम्भवादित्यर्थः। **कादाचित्कत्वेऽपि** यथाश्रुतकादाचित्कत्वेऽपि। लिङ्गत्वपक्षेऽपि न प्रागभावे व्यभिचार इत्याशयेनाह **प्रागिति**। कार्यविशेष्यकं कारणताग्राहकं प्रत्यक्षमुक्त्वा कारणविशेष्यकं तदाह

मकरन्दः।

थापि तन्मतेनैव तत्पक्षाभावसाधनमुपन्यस्तमिति मन्तव्यम्। यद्वा एतदस्वरसादेव व्याघातमालम्बते। **तथाहीति**।

यत्तु, यतः सापेक्षत्वादिति पञ्चमीद्वयमसंलग्नमिति कुसृष्टिव्याख्यानमिति। तन्न। यतो हेतुरस्तीति हेतुहेतुत्वेन सापेक्षत्वादित्यस्य सङ्गतत्वात्। सुहृद्भावेनाह। **तथापीति**। एतावन्मात्रं प्रागभावसाधारणमतः प्रत्यक्षं विशिनष्टि। **एतस्मादिति**। तत्फलमाह। **अत एवेति**। उक्तप्रत्यक्षस्य तत्रासम्भवादेवेत्यर्थः। प्रत्यक्षपरतायां प्रागभावे कादाचित्कत्वस्य व्यभिचारेऽप्यदोषः। लिङ्गत्वेनाप्यग्रे तदभिधानात्। तदभिप्रायेणाह। **प्रागिति**। प्रकारान्तरेण प्रागभावव्या-

प्रकाशः ।

क्षितत्वाद्वा । अपि च, इदमस्मान्नियतपूर्वसदित्यपि प्रत्यक्षं तत्र मानम् । प्रत्यक्षे चानन्यथासिद्धिनियमांशावधारणहेतुशङ्कानिवर्त्तकस्तर्को दर्शयिष्यत इति भावः । यद्वा, प्रत्यक्षसहकारित्वेनाऽनुमानमेवोपन्यस्तम् । यद्वा, प्रथमतोऽनुमानप्रामाण्यं प्रसाध्य, कार्यं सहेतुकं कादाचित्कत्वात् यन्नैवं तन्नैवम्, यथाऽऽकाशम् । न च साध्याप्रसिद्धिः । कियद्भागे प्रत्यक्षेणैव तत्सिद्धौ तदविपर्येऽनुमानात् । नचोत्पत्तेः कादाचित्कत्वेऽपि न सहेतुकत्वम्, तथात्वे चोत्पत्तिमत्त्वापत्तावनवस्थेति वाच्यम् । कार्य्यस्याद्यक्षणेन सह स्वरूपसम्बन्ध एव ह्युत्पत्तिः, कार्य्यक्षणस्वरूपयोश्चोत्पत्तिमत्त्वेन हेतुमत्त्वात् । यद्वा, उत्पत्तिगर्भः किञ्चित्समयसम्बन्धः कादाचित्कत्वम् । अत एव न प्रागभावे व्यभिचारः । न चोत्पत्तेरुत्पत्तिमत्त्वेन हेतुमत्त्वात् स इति न तया व्यभिचारः । एतेनानुमानपक्षे, हेतुरस्ति सापेक्षत्वाद्-इत्यत्र हेतोरसिद्धावाश्रयासिद्धिः । सापेक्षत्वस्य कार्य्यधर्मत्वेन हेताववृत्तौ स्वरूपासिद्धिश्च । कार्य्यस्यैव पक्षत्वे, सापेक्षत्वादित्यस्य हेतुमत्त्वादित्यर्थे साध्याविशेषः, कादाचित्कत्वादित्यर्थे च प्रागभावेन व्यभिचार इत्यपास्तम् ।

प्रकाशिका ।

**अपि चेति । नियतेति ।** अनन्यथासिद्धेत्यपि विशेषणम् । नन्वेवं कादाचित्कत्वोपवर्णनमयुक्तमेवेत्यत आह । **प्रत्यक्षसहकारित्वेनेति ।** सहकारिता च संवादेन प्रामाण्यग्रहद्वारा वा, अन्यथा प्रत्यक्षत्वानुमितित्वसङ्करापत्तेः । ननु अनुमानसम्भवे किं प्रत्यक्षेण ? वादिनं प्रति तस्याप्यनुमानच्छाययैव प्रवृत्तेरित्यस्वरसादाह **यद्वेति । प्रसाध्येत्यनन्तरमित्थं** प्रयोग इति शेषः । अन्वयिसम्भवेऽपि व्यतिरेकिणः सामर्थ्यमित्यभिप्रेत्याह । **यन्नैवमिति । स्वरूपसम्बन्ध एवेति ।** सूर्यस्पन्दात्मककालोपाधिना समं सम्बन्धान्तराभावादिति भावः । ननु यथाश्रुतं कादाचित्कत्वं प्रागभावे व्यभिचारि प्रागसत्त्वविशेषणे च व्यर्थविशेष्यतेत्यरुचेराह । **यद्वेति । उत्पत्तिगर्भः**=उत्पत्तिरूपः । अन्यथा व्यर्थविशेषणत्वादिति । विसर्गशून्यपाठपक्षे तु **उत्पत्तिगर्भः**=उत्पत्तिघटको य आद्यसमयस्तत्सम्बन्ध इत्यर्थः । तथाप्युत्पत्तिमत्त्व एव पर्यवसानम् । **नचोत्पत्तेरिति ।** यद्यप्युत्पत्तेः क्षणघटोभयरूपत्वे उभयोः सहेतुकत्वमेवेति साध्यसत्त्वादेव न व्यभिचारः । तथापि मिलितस्योत्पत्तिरूपत्वं न च तत्र सहेतुकत्वमर्थवशसम्पन्नत्वादिति हेत्वसत्त्वमेवोक्तम् । उत्पत्तिरपि स्वरूपसम्बन्धात्मिका यद्यप्युत्पत्तौ, तथापि मिलिते तादृशसम्बन्धोऽपि नास्तीत्यभिप्रायेणेदमुक्तम् । स्वरूपातिरिक्तसम्बन्धस्यैवोत्पत्तिरूपत्वं स चानवस्थाऽऽत्माश्रयादिदोषभयादुत्पत्तौ ना-

मकरन्दः ।

वृत्तं प्रत्यक्षमाह । **अपि चेति ।** *अनन्यथासिद्धनियतपूर्वसदित्यर्थः । नियमानन्यथासिद्ध्योरि-*त्यत्र समाधिमाह । **प्रत्यक्षे चेति ।** ननु परं प्रति प्रत्यक्षमुपन्यासानर्हमेव, अनुमानच्छाययैव तत्र तस्य गमकत्वाङ्गीकारात् । किञ्च कादाचित्कत्वमुपन्यस्तमलग्नकमेवैवं स्यादित्यत आह । **यद्वा प्रत्यक्षेति ।**

नन्वनुमानप्रामाण्ये किं सहकारितया ? स्वतन्त्रस्यैव समर्थत्वात् । अप्रामाण्ये सहकारित्वमपि न स्यात् । किञ्चैवं प्रत्यक्षानुमितित्वयोः सङ्करापत्तिरित्याशयेनाह । **यद्वेति ।** सूर्यस्पन्दात्मकक्षणेन समं घटादेः सम्बन्धाऽन्तराभावादाह । **स्वरूपेति ।** ननु यथाश्रुतं कादाचित्कत्वं प्रागभावे व्यभिचारि, प्रागसत्त्वविशेषितञ्च व्यर्थविशेष्यत्वग्रस्तमित्यरुचेराह । **यद्वेति ।** नन्वेवमुत्पत्तिमात्रमेव हेतुरस्तु, अधिकस्य व्यर्थत्वादिति चेन्न । इष्टत्वात् । उत्पत्तिपदेनोत्पत्तिरूपत्वस्य विवक्षितत्वात् । तथाचाद्यसमयसम्बन्धस्य हेतुत्वपर्यवसानम् । यद्वा, उत्पत्तिगर्भ उत्पत्तिघटकः किञ्चित्समय आद्यसमयस्तत्सम्बन्ध इत्यर्थः । तत्रैव पर्यवसानं विसर्गशून्यपाठादित्याहुः ।

**प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥**

बोधनी ।

विवक्षितासिद्धिरित्यत्राह–**प्रत्यात्मेति**। यागादिस्वरूपस्यैव हेतुत्वे तस्य क्षणिकत्वात् कालान्तरभाविनः फलस्य भुक्तिर्न स्यात् , तस्मात् तेनान्तरा किञ्चिदपूर्वमनेन जनयितव्यम् , तच्च **प्रत्या-**

प्रकाशः ।

नन्वु हेतुरपि यदि सदातनस्तदा तत्सापेक्षस्य कार्य्यस्यापि तथात्वापत्तिरिति कादाचित्कत्वमहेतोरिवाकाशादेः सहेतोरपि सपक्षात् व्यावृत्तमित्यसाधारणं स्यादिति हेतुः कादाचित्को वाच्यः, तथा च तस्यापि कादाचित्कत्वं हेत्वपेक्षयेत्यनवस्थापत्तिः । अहेतुकत्वे च तद्वदेव कार्य्यमप्यहेतुकं कादाचित्कं स्यादित्यत आह । **अनादित्वादिति** । हेतोरपि कादाचित्कत्वं स्वहेतुकादाचित्कत्वादेव, प्रामाणिकी चेयमनवस्था बीजाङ्कुरवन्न दोषायेत्यर्थः ।

नन्वु कारणमात्रसिद्धावप्येकमेकजातीयं वा कारणमस्तु कार्य्यजातस्य, तच्चास्मदादिनैव शक्यज्ञानमिति न तदर्थमुपदेशो, न वा विलक्षणसामग्रीजन्यं कार्य्यं सिद्ध्यतीत्यत आह । **वैचित्र्यात्** । भिन्नजातीयकारणानन्तरं तथाभूतकार्य्यविषयकं प्रत्यक्षमेव विचित्रे साधने मानमुपन्यस्तम् । यद्वा, वैचित्र्यं कार्य्यस्य विचित्रहेतुकत्वे लिङ्गमेव । उभयत्राप्यभिन्नत्वाभिन्नजातीयत्वयोर्हेतोः कार्य्यस्य भेदविजातीयत्वे आकस्मिके स्यातामिति तर्कः सहकारीत्यर्थः ।

तथापि दृश्यमानविचित्रहेतुकमेव कार्य्यमस्त्विति नादृष्टसिद्धिरित्यत आह । **विश्ववृत्तितः** । **विश्वेषां** प्रेक्षावतां **वृत्तिः**–परलोकार्थितया यागादौ प्रवृत्तिः प्रेक्षावत्प्रवृत्तित्वेन सफला, फलसाधनत्वञ्च यागादेराशुविनाशित्वेन न स्यादिति तज्जन्यफलानुकूलमदृष्टं कल्प्यत इत्यर्थः ।

तथापि तददृष्टं भोग्यनिष्ठमुत भोक्तृनिष्ठम् ? अन्त्येऽपि किं प्रतिभोक्तृनियतं, साधारणं वा ? इत्यत आह । **प्रत्यात्मेति** । **भुक्तेः**=सुखदुःखसाक्षात्कारस्य प्रत्येकात्मनियतत्वाल्लाघवाच्च

प्रकाशिका

स्तीत्यभिप्रायेणेदमिति कश्चित् । वस्तुतः सहेतुकत्वमुत्पत्तिमत्वं च द्वयमप्युत्पत्तौ विशिष्टस्याप्यनतिरेकात् तथा च न तत्र व्यभिचारः । कादाचित्कत्वं तु प्रागभावे व्यभिचारादेव त्यक्तम् । **न चोत्पत्तेरित्यादिर्न तया व्यभिचार इत्यन्तश्च** ग्रन्थ एकदेशिमतेन एकदेशिनश्चाभिप्रायो वर्णित एवेत्यवधेयम्। **असाधारणमिति** अगमकमित्यर्थः । **अहेतुकत्वे** च सदातनहेतुकत्वे च कादाचित्कत्वानुपपत्तेरिति भावः । **शक्यज्ञानमिति** । अल्पतयाऽनुमानावतारसम्भवादिति पूर्वपक्षिणो हृदयम् । ननूपादानगोचरं प्रत्यक्षं कार्यजनकमिति नास्मदादिना ब्रह्म प्रधानं वा साक्षात्कर्त्तुं शक्यमित्यरुचेराह । **न वेति** । तथा च नादृष्टसिद्धिरिति भावः । **अभिन्नेति** । हेतोरभिन्नत्वेऽभिन्नजातीयत्वे चेत्यर्थः । **अभिन्नाभिन्नजातीययोर्हेत्वोरिति** क्वचित् पाठः । तत्रापि फलतोऽयमेवार्थः । अभिन्नत्वाभिन्नजातीयत्वयोर्हेत्वोरिति क्वचित्पाठः । तत्राभिन्नहेतुकत्वाभिन्नजातीयहेतुकत्वयोरापादकयोः सतोरित्यर्थः । ननु दृष्टरूपकारणसाधारण्येऽपि कारणान्तरवैचित्र्यादेव भोगासाधारण्यमत आह । **लाघवाच्चेति** । सामानाधिकरण्यला-

मकरन्दः ।

यद्यप्यत्रापि स्वरूपस्यैव तत्सम्बन्धत्वेत त्र पूर्ववदुत्पत्तिमत्त्वेन चोत्पत्तेरित्यग्रिमग्रन्थविरोधः, तथापि स्वरूपातिरिक्तसम्बन्धस्योत्पत्तिरूपत्वं, तत्र चात्माश्रयादनवस्थानाच्च नोत्पत्तिमत्त्वमिति मताभ्युपगमानुसारेणेदम् ।

**असाधारणंस्यादिति** । अगमकं स्यादित्यर्थः । ननु तद् ब्रह्माऽऽत्मकं प्रधानात्मकं वाऽतीन्द्रियं, नास्मदादीनां शक्यज्ञानमिति यदि ब्रूयात्तदा दोषान्तरमाह । **न वेति** । **अभिन्नत्वेति** ।

**न ह्ययं संसारोऽनेकविधदुःखमयो निरपेक्षो भवितुमर्हति, तदा हि स्यादेव न स्यादेव वा, न तु कदाचित् स्यात् ॥ ४ ॥**

बोधनी ।

त्मसमवेतं, भोगं प्रति नियमदर्शनात् । तथा च तस्यास्मदादिभिरशक्यज्ञानत्वात् तदुपदेष्टा तदधिष्ठाता जगत्कर्त्ता चेश्वरः सिध्यतीति प्रथमपरिच्छेदार्थसंग्रहश्लोकतात्पर्यार्थः ॥ ४ ॥

तत्र तावत् सापेक्षत्वादित्येतदुपपादयन् विवृणोति—**न ह्ययमिति । संसारः**=कार्यवर्गः । **नैकविधः** सर्वकालं नैकरूपः, कादाचित्क इति यावत् । **अनेकविध इति** पाठे वक्ष्यमाणहेतुवैचित्र्योपयुक्ततया कार्यवैचित्र्यमुक्तम् । **दुःखमयत्वं** स्वतन्त्रप्रसिद्ध्या सर्वस्यापि दुःखत्वभावनार्थमुक्तं, न तु साधनोपयोगितया । यद्वा, दुःखमयत्वात् तथापि हेयं हानं हेतुनिर्वृत्त्या । तथाच

प्रकाशः ।

तदुपपादकं प्रतिभोक्तृनियतमेवादृष्टं कल्प्यत इति, **अस्ति हेतुरलौकिक** इत्याद्यस्तवकार्थसंग्रहः॥ ४॥

यथोक्तप्रत्यक्षानुमानयोरन्यथासिद्धिनिरासाय तर्कमाह । **न ह्ययमिति । अनेकविधेति** मुमुक्षुवैराग्यार्थं कार्य्यवैचित्र्यस्फोरणार्थं वा । तच्च विचित्रादृष्टसाधनोपयुक्तम् । निरपेक्षत्वञ्च किञ्चित्पदार्थावधिकोत्तरत्वाव्याप्यकालसम्बन्धित्वम् । न च प्रतियोग्यप्रसिद्धिः । तस्यासत्ख्यातिवादिनः सांव्यवहारिकस्य सापेक्षत्वस्यापि स्वीकारात् ।

ननु, निरपेक्षत्वेनैकेन व्याप्येन स्यादेव, न स्यादेवेति द्विरूपं व्यापकद्वयं विरुद्धं कथमापाद्यते? न ह्येकं मिथोविरोधिद्वयव्याप्यम् । तुशब्दश्चासङ्गतः, कादाचित्कत्वाभावस्य स्वतन्त्रस्यैवानिष्टापादनार्थत्वात् । अत्राहुः । निरपेक्षत्वेन कादाचित्कत्वव्यतिरेक एवाऽऽपाद्यः । स च स्यादेव, न स्यादेवेति पक्षद्वये पर्य्यवस्यति, अत एव तुशब्दोऽपि सङ्गच्छते । यद्वा, कार्य्यं यदि निरपेक्षं

प्रकाशिका ।

घवादित्यर्थः । वस्तुतः कृतहानाकृताभ्यागमदोषप्रसङ्गादेवादृष्टस्य प्रत्यात्मनियतत्वमिति ॥ ४ ॥

**किञ्चिदिति** । अनन्यथासिद्धकिञ्चिदित्यर्थः । असमानाधिकरणेति कृतेऽसम्भव इत्यत उक्तम**व्याप्येति** । अत्र च स्वपूर्ववर्तित्वमप्यवधौ विशेषणम् , अन्यथा परमाण्ववधिकोत्तरत्वव्याप्यकालसम्बन्धसत्वादाकाशे निरपेक्षत्वाभावापत्तेः । **न चेति** । तथा चापादकाप्रसिद्धिः परमते पराभ्युपगतस्यैव चापादकत्वात् स्वमते प्रत्यक्षेणैव प्रसिद्धिरिति परमते तामाह। **तस्येति । तुशब्द इति** परस्पराङ्गाङ्गिभावापन्नत्वस्य तुशब्दवाच्यत्वात् प्रकृते च कादाचित्कत्वाभावस्य स्वतन्त्रस्यैवापादनादिति भावः । **अत एवेति** । पर्यवसितेऽङ्गाङ्गिभावसत्त्वादिति भावः । ननु नित्यत्वालीकत्वान्यतर-

मकरन्दः ।

हेतोरभिन्नत्वेऽभिन्नजातीयत्वे चेत्यर्थः । हेत्वोरिति पाठेऽप्यर्थः स एवेति ॥ ४ ॥

**किञ्चिदिति** । अनन्यथासिद्धकिञ्चित्पदार्थावधिकोत्तरत्वव्याप्यकालसम्बन्धित्वाभाव इत्यर्थः। **न चेति** । परसिद्धमापादकं भवति, न च कारणत्वपर्यवसन्नप्रतियोगिनस्तन्मते प्रसिद्धिरित्यर्थः। स्वमतेप्रत्यक्षेणैव तत्प्रसिद्धेरुक्तत्वादिति भावः । अत एव तन्मतेनैवोत्तरमाह । **तस्येति । तुशब्द इति** । परस्पराङ्गाङ्गिभावस्य तुशब्दार्थत्वादिति भावः । **पक्षद्वय इति** । नित्यत्वालीकत्वान्यतरपक्ष इत्यर्थः ।

टिप्पणी ।

धर्म्म इत्यर्थः । द्वितीये प्रमेयत्वे, प्रथमे प्रागभावत्वत्वे प्रसिद्धिरिति केचित् ॥ ४ ॥

**किञ्चित्पदार्थावधिकोत्तरत्वाव्याप्येति** । असमानाधिकरणेत्युक्तौ आकाशादिनिष्ठकिञ्चित्कालसम्बन्धित्वस्यापि तादृशोत्तरत्वसमानाधिकरणत्वादप्रसिद्धिः स्यादिति तादृशाव्याप्यत्वपर्यन्तानुधावनम् । न चाकाशादिनिष्ठकालसम्बन्धित्वस्य परमाणूत्तरत्वव्याप्यतयाऽप्रसिद्धितादवस्थ्यमिति वाच्यम् । किञ्चित्पदार्थरूपावधौ किञ्चित्कालासम्बन्धित्वस्य विशेषणीयत्वात् । **स्वतन्त्रस्यैवानिष्टापादनत्वादिति** ।

बोधनी।

हेतुमत्त्वमवश्याश्रयणीयमिति प्रदर्शनार्थम्। अत्र कादाचित्कत्वेन **सापेक्षत्वं** साधितमिति। तदाह कीर्तिः—

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥ इति ॥ ४ ॥

प्रकाशः।

स्यात्, **स्यादेव** नित्यं स्यादाकाशवदिति स्वमते। तन्मते तु **न स्यादेव** केवलान्वय्यत्यन्ताभावप्रतियोगि स्यात् खपुष्पवत्। उभयत्र तु **कादाचित्कत्वं न स्यादिति**। यद्वा, एतदुत्तरकालानुत्पत्तिकोऽयं घटो यद्येतदुत्तरकालानुत्पत्तिकत्वे सत्येतत्पूर्वकालोत्पत्तिकानपेक्षोत्पत्तिकः स्या-

प्रकाशिका।

पर्यवसानमयुक्तम्। अलीकत्वस्य मन्मतेऽप्रसिद्धेरित्यरुचेराह। **यद्वेति। केवलेति।** सकलदेशकालव्यापकेत्यर्थः। तन्मते साध्यादीनां प्रसिद्धिरसत्ख्यातिरूपैवेति भावः। **उभयत्रेति।** अत्र च प्रत्येकमापाद्यत्वं तुशब्देन व्यवच्छेद्यमिति भावः। **एतदुत्तरेति।** उत्तरकालोत्पत्तिके मा भूदापादकासिद्धिरिति प्रथमं पक्षविशेषणम्। पूर्वकालीनपक्षत्वे मा भूदिष्टापत्तिरिति **अय**मिति पक्षविशेषणं पूर्वकालावृत्तीत्यर्थः। घटसमानकालोत्पत्तिकसर्वपक्षत्वे आपादके व्यर्थविशेष्यता स्यात् पक्षीयव्यभिचारस्यादोषत्वादिति विशिष्य पक्षयति **घट इति।** उत्तरकालोत्पत्तिके व्यभिचारवारणाय सत्यन्तम्। पक्षीकृतघटसमानकालोत्पत्तिके व्यभिचार इत्येत**त्पूर्वकालेत्यादि।** एतदव्यवहितपूर्वकालेत्यर्थः। तेन चिरतरपूर्वकालोत्पत्तिको दृष्टान्तः, यथाश्रुतस्याप्रसिद्ध्या दृष्टान्तासिद्धेरित्यवधेयम्। चिरतरपूर्वोत्पन्नस्यापि कालाद्यपेक्षतया एतत्पूर्वकालीनानपेक्षोत्पत्तिकत्वं नास्तीति पुनरप्यप्रसिद्धिरिति प्रथमोत्पत्तिपदम्। आपाद्ये च वृत्तिः संयोगरूपा उत्पत्तिरूपा वा विवक्षितेति कालादौ व्यभिचारवारणाय द्वितीयोत्पत्तिपदम्। न च संयोगरूपा चेद् वृत्तिरापाद्येऽभिमता तदा पूर्वोत्पन्नगुणादौ व्यभिचार इति वाच्यम्। तत्पक्षे द्रव्यत्वस्याऽऽपादकविशेषणत्वात्। वस्तुतो नापेक्षा उत्पत्तिर्यस्येत्यर्थे यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यम् यथाश्रुतेऽपीति। मिश्रास्तु नञ्व्यत्यासेन पूर्वकालोत्पत्तिकसापेक्षोत्पत्तिकान्यत्वमुत्तरदलार्थ इति दृष्टान्तलाभाय नाव्यवहितत्वविशेषणापेक्षाऽऽपादके एवं सति गगनादेरेव दृष्टान्तत्वात्, न वा व्यर्थविशेषणता, विशिष्टाभावत्वादित्याहुः।

मकरन्दः।

नन्वस्मन्मते नित्यत्वपक्ष एव पर्य्यवस्यति, न त्वलीकत्वमसत्ख्यात्यनभ्युपगमे साव्यवहारिकस्यापि तस्य तत्रानभ्युपगमादित्यरुचेराह। **यद्वेति। एतदुत्तरकालेति।** एतत्तु पक्षविशेषणमुत्तरकालोत्पत्तिकघटांशे आपादकासिद्धिवारणाय। पूर्वकालीनघटेंऽशतः सिद्धसाधनवारणायायमिति। पूर्वकालावृत्तिरित्यर्थः। एतत्कालवृत्तिसर्वपक्षत्वे आपादके व्यर्थविशेष्यता स्यात्, पक्षीयव्यभिचारवारणायोगादतो विशिष्य पक्षयति। **घट इति।** उत्तरकालोत्पत्तिके व्यभिचारादाह सत्यन्तम्। तद्घटसमसमयोत्पत्तिकपटादौ व्यभिचारादाह। **एतत्पूर्वकालेति।** अव्यवहितपूर्वकालेत्यर्थः। तथा च चिरतरपूर्वकालोत्पन्नो दृष्टान्तः। अन्यथा यथाश्रुतस्याप्रसिद्ध्या तदसिद्धिरित्यवधेयम्। तेनापि तादृशकालाद्यपेक्षणात् दृष्टान्तासिद्धिरेवेत्यत आह प्रथममुत्पत्तिपदम्। चरममुत्पत्तिपदं चिन्त्यम्।

केचित्तु वृत्तिपदेन संयोगस्य, कालस्य कालावृत्तित्वात् तत्र व्यभिचारवारणाय तदुपादानम्। न चैवं प्रागुत्पन्नगुणादौ व्यभिचारः। आपादके द्रव्यत्वस्यापि विवक्षितत्वादित्याहुः। वस्तुतस्तु नञ्व्यत्यासेन एतत्पूर्वकालोत्पत्तिकसापेक्षोत्पत्तिकत्वाभावो विवक्षितः। तथाच नाव्यवहितत्ववि-वक्षा, न वा अखण्डाभावे वैयर्थ्यशङ्का, न वा नित्यस्य दृष्टान्तत्वे तदसिद्धिरिति।

प्रकाशः ।

देतत्पूर्वकालवृत्तिः स्यात् । यद्वा, यद्ययमेतत्कालीनोत्पत्तिको घटः सहेतुको न स्यादेतत्पूर्वकालीनः स्यात् । यद्वा, घटो यदि घटव्यवहितकालानधिकरणपदार्थाधिकरणक्षणोत्तरत्वव्याप्योत्पत्तिर्न स्याद् , घटव्यवहितकालः स्यात् तत्कालवृत्तिघटादिवदिति तत्र तत्र सत्त्वापादानं **स्यादे**वेत्यस्यार्थः । अन्यकालानुत्पत्तिकोऽयं घटो यद्येतत्पूर्वकालानपेक्षोत्पत्तिकः स्यादेतत्कालोत्पत्तिको न

प्रकाशिका ।

**यद्ययमिति** पूर्वकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम् । पक्षविशेषणसिद्धयेऽयमिति प्रत्यक्षविषय इत्यर्थः । **घटो यदीति** । घटव्यवहितकालोऽनधिकरणं यस्य पदार्थस्य तदधिकरणं यः क्षणः तन्निरूपितोत्तरत्वव्याप्योत्पत्तिको न स्यादित्यापादकार्थः । घटानधिकरणकालवृत्तिः स्यादित्यापाद्यार्थः । अत्र च घटाव्यवहितकालाधिकरणेत्येतावति कृते आकाशाधिकरणत्वमादायापादकासिद्धिरिति घटव्यवहितकालानधिकरणत्वं पदार्थविशेषणम् , आकाशादे श्चव्यवहितकालवृत्तितया न तमादायापादकासिद्धिः । नचाव्यवहितोत्पन्नरासभाद्युत्तरोत्पन्नघटे रासभादिकमादायापादकासिद्धिभयेनानन्यथासिद्धेःपदार्थविशेषणत्वावश्यकत्वे तयैवाकाशादिवारणात्कथं तमादायापादकासिद्धिप्रसङ्ग इति वाच्यम् । तादृशरासभादिवारकान्यथासिद्धिविरहस्य विशेषणत्वेऽपि आकाशजनकजनकदण्डत्वादिवारकाणामन्यथासिद्धिविरहाणामप्रवेशात् । आपादके घटव्यवहितपूर्वकालत्वञ्च घटाधिकरणक्षणव्यवहितक्षणत्वं न तु घटानधिकरणक्षणत्वं विपर्यये कारणत्वासिद्धिप्रसङ्गात् । आपादने घटसमानकालत्वनियते व्यभिचाराच्च । विपर्यये कारणत्वासिद्धिप्रसङ्गादेव च व्याप्यत्वपर्यन्तम् । अन्यथा घटत्वावच्छिन्नोत्पत्तेरपि तत्कालोत्पन्नरासभाधिकरणक्षणोत्तरत्वसामानाधिकरण्यात् कारणत्वासिद्धिप्रसङ्गात् । न चानन्यथासिद्धपदेनैव तद्वारणं, घटत्वावच्छिन्नं प्रति रासभस्यान्यथासिद्धत्वादन्यथा कारणतालक्षणे नियमप्रवेशावैयर्थ्यात् । प्रतियोगी च परस्यासत्ख्यात्युपनीत इति ध्येयम् । **तत्कालेति** । घटव्यवहितकालेत्यर्थः । **तत्रतत्रेति** पूर्वकालादावित्यर्थः । एवं च सत्त्वापादनं **स्यादेवे**त्यस्य, असत्त्वापादनं न **स्यादेवे**त्यस्यार्थ इति विभाग इति भावः । **अन्यकालेति** । अन्यकालोत्पत्तिक इष्टापत्तिवारणाय पक्षविशेषणम् । तथाप्यनुत्पन्नस्यापि पक्षत्वेऽसत इष्टापत्तिरिति तद्वारणाय घट इति पक्षविशेषणम् । अयमिति प्रत्यक्षोपन्यासः । पूर्ववद् दृष्टान्तश्च अन्यकालोकात्पत्तिकः । आपादके चोत्पत्तिपदमखण्डाभावतया यथोक्तविशेषणविशेष्यभावेऽव्यर्थतया वा समाधेयम् । आपादके च पूर्वकालपदमव्यवहितपूर्वकालपरं कारणताशरीरसिद्धये तथा च व्यवहितपूर्वकालोत्पन्ने तत्कालविद्यमाने व्यभिचार इत्यापाद्य उत्पत्तिपदम् । वस्तुतः पक्षविशेषणमहिम्नेत्यस्य उभयापादनान्वयितया यथाश्रुतापाद्यस्य च नित्य-

मकरन्दः ।

**यद्यय**मिति पूर्वकालोत्पत्तिक इष्टापत्तिवारणाय पक्षविशेषणम् । **घटो यदीति** । घटव्यवहितकालाऽनधिकरणत्वं घटाव्यवहितकालाधिकरणत्वं पर्य्यवस्यति । यत्तु आकाशादेरपि तथात्वे तदादायापादकासिद्धिः स्यादिति घटव्यवहितकालानधिकरणत्वं यथाश्रुतमेवाभिमतमिति । तन्न । अनन्यथासिद्धत्वस्य पदार्थविशेषणस्यावश्यकत्वात् । अन्यथा दण्डरूपादिकमादाय दोषतादवस्थ्यापत्तेः तस्मादुभयथाऽप्यदोष इति । रासभाद्युत्तरत्वसामानाधिकरण्याद्विपर्ययानुमाने कारणत्वं न सिद्ध्येदिति व्याप्यत्वपर्य्यन्तम् । न चानन्यथासिद्धत्वेनैव तद्वारणमिति वाच्यम् । रासभादेरपि तथात्वात् । अन्यथा कारणतालक्षणे नियमांशोपादानमनर्थकं स्यात् । तत्र च तस्याविवक्षितत्वे प्रकृतेऽपि तथाऽस्त्विति । प्रतियोगी चासत्ख्यात्युपनीत इति स्मर्त्तव्यम् । घटव्यवहितकालत्वं घटानधिकरणकालवृत्तित्वमापाद्यम् । **अन्येति** । अन्यकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम् । उत्त-

बोधनी।

हेतुमत्त्वमवश्याश्रयणीयमिति प्रदर्शनार्थम्। अत्र कादाचित्कत्वेन **सापेक्षत्वं** साधितमिति। तदाह कीर्त्तिः—

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥ इति॥ ४॥

प्रकाशः।

स्यात्, **स्यादेव** नित्यं स्यादाकाशवदिति स्वमते। तन्मते तु **न स्यादेव** केवलान्वय्यत्यन्ताभावप्रतियोगि स्यात् खपुष्पवत्। उभयत्र तु **कादाचित्कत्वं न स्यादिति।** यद्वा, एतदुत्तरकालानुत्पत्तिकोऽयं घटो यद्येतदुत्तरकालानुत्पत्तिकत्वे सत्येतत्पूर्वकालोत्पत्तिकानपेक्षोत्पत्तिकः स्या-

प्रकाशिका।

पर्यवसानमयुक्तम्। अलीकत्वस्य मन्मतेऽप्रसिद्धेरित्यरुचेराह। **यद्वेति। केवलेति।** सकलदेशकालव्यापकेत्यर्थः। तन्मते साध्यादीनां प्रसिद्धिरसत्ख्यातिरूपैवेति भावः। **उभयत्रेति।** अत्र च प्रत्येकमापाद्यत्वं तुशब्देन व्यवच्छेद्यमिति भावः। **एतदुत्तरेति।** उत्तरकालोत्पत्तिके मा भूदापादकासिद्धिरिति प्रथमं पक्षविशेषणम्। पूर्वकालीनपक्षत्वे मा भूदिष्टापत्तिरिति **अय**मिति पक्षविशेषणं पूर्वकालावृत्तीत्यर्थः। घटसमानकालोत्पत्तिकसर्वपक्षत्वे आपादके व्यर्थविशेष्यता स्यात् पक्षीयव्यभिचारस्यादोषत्वादिति विशिष्य पक्षयति **घट इति।** उत्तरकालोत्पत्तिके व्यभिचारवारणाय सत्यन्तम्। पक्षीकृतघटसमानकालोत्पत्तिके व्यभिचार इत्येत**त्पूर्वकालेत्यादि।** एतदव्यवहितपूर्वकालेत्यर्थः। तेन चिरतरपूर्वकालोत्पत्तिको दृष्टान्तः, यथाश्रुतस्याप्रसिद्ध्या दृष्टान्तासिद्धेरित्यवधेयम्। चिरतरपूर्वोत्पन्नस्यापि कालाद्यपेक्षतया एतत्पूर्वकालीनानपेक्षोत्पत्तिकत्वं नास्तीति पुनरप्यप्रसिद्धिरिति प्रथमोत्पत्तिपदम्। आपाद्ये च वृत्तिः संयोगरूपा उत्पत्तिरूपा वा विवक्षितेति कालादौ व्यभिचारवारणाय द्वितीयोत्पत्तिपदम्। न च संयोगरूपा चेद् वृत्तिरापाद्येऽभिमता तदा पूर्वोत्पन्नगुणादौ व्यभिचार इति वाच्यम्। तत्पक्षे द्रव्यत्वस्याऽऽपादकविशेषणत्वात्। वस्तुतो नापेक्षा उत्पत्तिर्यस्येत्यर्थे यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यम् यथाश्रुतेऽपीति। मिश्रास्तु नञ्व्यत्यासेन पूर्वकालोत्पत्तिकसापेक्षोत्पत्तिकान्यत्वमुत्तरदलार्थ इति दृष्टान्तलाभाय नाव्यवहितत्वविशेषणापेक्षाऽऽपादके एवं सति गगनादेरेव दृष्टान्तत्वात्, न वा व्यर्थविशेषणता, विशिष्टाभावत्वादित्याहुः।

मकरन्दः।

नन्वस्मन्मते नित्यत्वपक्ष एव पर्य्यवस्यति, न त्वलीकत्वमसत्ख्यात्यनभ्युपगमे सांव्यवहारिकस्यापि तस्य तत्रानभ्युपगमादित्यरुचेराह। **यद्वेति। एतदुत्तरकालेति।** एतत्तु पक्षविशेषणमुत्तरकालोत्पत्तिकघटांशे आपादकासिद्धिवारणाय। पूर्वकालीनघटेंऽशतः सिद्धसाधनवारणायायमिति। पूर्वकालावृत्तिरित्यर्थः। एतत्कालवृत्तिसर्वपक्षत्वे आपादके व्यर्थविशेष्यता स्यात्, पक्षीयव्यभिचारवारणायोगादतो विशिष्य पक्षयति। **घट इति।** उत्तरकालोत्पत्तिके व्यभिचारादाह सत्यन्तम्। तद्घटसमसमयोत्पत्तिकपटादौ व्यभिचारादाह। **एतत्पूर्वकालेति।** अव्यवहितपूर्वकालेत्यर्थः। तथा च चिरतरपूर्वकालोत्पन्नो दृष्टान्तः। अन्यथा यथाश्रुतस्याप्रसिद्ध्या तदसिद्धिरित्यवधेयम्। तेनापि तादृशकालाद्यपेक्षणात् दृष्टान्तासिद्धिरेवेत्यत आह प्रथममुत्पत्तिपदम्। चरममुत्पत्तिपदं चिन्त्यम्।

केचित्तु वृत्तिपदेन संयोगस्य, कालस्य कालावृत्तित्वात् तत्र व्यभिचारवारणाय तदुपादानम्। न चैवं प्रागुत्पन्नगुणादौ व्यभिचारः। आपादके द्रव्यत्वस्यापि विवक्षितत्वादित्याहुः। वस्तुतस्तु नञ्व्यत्यासेन एतत्पूर्वकालोत्पत्तिकसापेक्षोत्पत्तिकत्वाभावो विवक्षितः। तथाच नाव्यवहितत्वविवक्षा, न वा अखण्डाभावे वैयर्थ्यशङ्का, न वा नित्यस्य दृष्टान्तत्वे तदसिद्धिरिति।

प्रकाशः ।

देतत्पूर्वकालवृत्तिः स्यात् । यद्वा, यद्ययमेतत्कालीनोत्पत्तिको घटः सहेतुको न स्यादेतत्पूर्वकालीनः स्यात् । यद्वा, घटो यदि घटव्यवहितकालानधिकरणपदार्थाधिकरणक्षणोत्तरत्वव्याप्योत्पत्तिर्न स्याद्, घटव्यवहितकालः स्यात् तत्कालवृत्तिघटादिवदिति तत्र तत्र सत्त्वापादानं **स्यादे**वेत्यस्यार्थः । अन्यकालानुत्पत्तिकोऽयं घटो यद्येतत्पूर्वकालानपेक्षोत्पत्तिकः स्यादेतत्कालोत्पत्तिको न

प्रकाशिका ।

**यद्ययमिति** पूर्वकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम् । पक्षविशेषणसिद्धयेऽयमिति प्रत्यक्षविषय इत्यर्थः । **घटो यदीति** । घटव्यवहितकालोऽनधिकरणं यस्य पदार्थस्य तदधिकरणं यः क्षणः तन्निरूपितोत्तरत्वव्याप्योत्पत्तिको न स्यादित्यापादकार्थः । घटानधिकरणकालवृत्तिः स्यादित्यापाद्यार्थः । अत्र च घटाव्यवहितकालाधिकरणेत्येतावति कृते आकाशाधिकरणत्वमादायापादकासिद्धिरिति घटव्यवहितकालानधिकरणत्वं पदार्थविशेषणम्, आकाशादे श्चाव्यवहितकालवृत्तितया न तमादायापादकासिद्धिः । नचाव्यवहितोत्पन्नरासभाद्युत्तरोत्पन्नघटे रासभादिकमादायापादकासिद्धिभयेनानन्यथासिद्धेः पदार्थविशेषणत्वावश्यकत्वे तयैवाकाशादिवारणात्कथं तमादायापादकासिद्धिप्रसङ्ग इति वाच्यम् । तादृशरासभादिवारकान्यथासिद्धिविरहस्य विशेषणत्वेऽपि आकाशजनकजनकदण्डत्वादिवारकाणामन्यथासिद्धिविरहाणामप्रवेशात् । आपादके घटव्यवहितपूर्वकालत्वञ्च घटाधिकरणक्षणव्यवहितक्षणत्वं न तु घटानधिकरणक्षणत्वं विपर्यये कारणत्वासिद्धिप्रसङ्गात् । आपादने घटसमानकालत्वनियते व्यभिचाराच्च । विपर्यये कारणत्वासिद्धिप्रसङ्गादेव च व्याप्यत्वपर्यन्तम् । अन्यथा घटत्वावच्छिन्नोत्पत्तेरपि तत्कालोत्पन्नरासभाधिकरणक्षणोत्तरत्वसामानाधिकरण्यात् कारणत्वासिद्धिप्रसङ्गात् । न चानन्यथासिद्धपदेनैव तद्वारणं, घटत्वावच्छिन्नं प्रति रासभस्यान्यथासिद्धत्वादन्यथा कारणतालक्षणे नियमप्रवेशवैयर्थ्यात् । प्रतियोगी च परस्यासत्ख्यात्युपनीत इति ध्येयम् । **तत्कालेति** । घटव्यवहितकालेत्यर्थः । **तत्रतत्रेति** पूर्वकालादावित्यर्थः । एवं च सत्त्वापादनं **स्यादे**वेत्यस्य, असत्त्वापादनं न **स्यादे**वेत्यस्यार्थ इति विभाग इति भावः । **अन्यकालेति** । अन्यकालोत्पत्तिक इष्टापत्तिवारणाय पक्षविशेषणम् । तथाप्यनुत्पन्नस्यापि पक्षत्वेऽसत इष्टापत्तिरिति तद्वारणाय घट इति पक्षविशेषणम् । अयमिति प्रत्यक्षोपन्यासः । पूर्ववद् दृष्टान्तश्च अन्यकालोकात्पत्तिकः । आपादके चोत्पत्तिपदमखण्डाभावतया यथोक्तविशेषणविशेष्यभावेऽन्यर्थतया वा समाधेयम् । आपादके च पूर्वकालपदमव्यवहितपूर्वकालपरं कारणताशरीरसिद्धये तथा च व्यवहितपूर्वकालोत्पन्ने तत्कालविद्यमाने व्यभिचार इत्यापाद्य उत्पत्तिपदम् । वस्तुतः पक्षविशेषणमहिम्नेत्यस्य उभयापादनान्वयितया यथाश्रुतापाद्यस्य च नित्य-

मकरन्दः ।

**यद्यय**मिति पूर्वकालोत्पत्तिक इष्टापत्तिवारणाय पक्षविशेषणम् । **घटो यदीति** । घटव्यवहितकालाऽनधिकरणत्वं घटाव्यवहितकालाधिकरणत्वं पर्य्यवस्यति । यत्तु आकाशादेरपि तथात्वे तदादायापादकासिद्धिः स्यादिति घटव्यवहितकालानधिकरणत्वं यथाश्रुतमेवाभिमतमिति । तन्न । अनन्यथासिद्धत्वस्य पदार्थविशेषणस्यावश्यकत्वात् । अन्यथा दण्डरूपादिकमादाय दोषतादवस्थ्यापत्तेः तस्मादुभयथाऽप्यदोष इति । रासभाद्युत्तरत्वसामानाधिकरण्याद्विपर्ययानुमाने कारणत्वं न सिद्ध्येदिति व्याप्यत्वपर्य्यन्तम् । न चानन्यथासिद्धत्वेनैव तद्वारणमिति वाच्यम् । रासभादेरपि तथात्वात् । अन्यथा कारणतालक्षणे नियमांशोपादानमनर्थकं स्यात् । तत्र च तस्याविवक्षितत्वे प्रकृतेऽपि तथाऽस्त्विति । प्रतियोगी चासत्ख्यात्युपनीत इति स्मर्त्तव्यम् । घटव्यवहितकालत्वं घटानधिकरणकालवृत्तित्वमापाद्यम् । **अन्येति** । अन्यकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम् । उत्त-

प्रकाशः ।

स्यात् । यद्वा, सकलकालावृत्तिरयं घटो यदि निरपेक्षः स्यात् किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तिर्न स्यात् । तेन पक्षविशेषणमहिम्नाऽलीकत्वं सिद्ध्यति । यद्वा, एतावत्कालपूर्वापरकालावृत्तिर्घटो यद्येतावत्कालपूर्वकालवृत्तित्वे सति एतत्कालाव्यवहितपूर्वकालवृत्तिपदार्थाधिकरणक्षणोत्तर-

प्रकाशिका ।

त्वेनाप्युपपत्तेरन्यथा व्याख्या । तथाहि सर्वत्रोत्पत्तिपदं सत्तामात्रपरं नञ्व्यत्यास आपादके तेन पूर्वापरकालसत्तारहितोऽयं यद्येतदव्यवहितपूर्वकालोत्पत्तिकसापेक्षसत्ताको न स्यादेतावत्कालसत्ताको न स्यात् पूर्वापरोत्पन्नवदाकाशादिवद्वेति दिक् । **सकलकालेति** । इदं च पक्षविशेषणं नित्यत्वेन इष्टापत्तिवारणाय, अतएवोक्तं **पक्षविशेषणमहिम्नेति** । अलीकत्वेन तद्वारणायायमिति । प्रामाणिक इत्यर्थः **किञ्चित्कालेति** । किञ्चित्कालावृत्तित्वसमानाधिकरणकिञ्चित्कालवृत्तित्वस्याभाव आपाद्यः, अत्र विशेष्यमात्रे अभावप्रतियोगिनि सति परमाण्वादौ व्यभिचार इति विशेषणमुक्तं प्रतियोगिनि, तस्य च प्राक्कालावृत्तित्वे सतीत्यर्थोऽतो न प्रागभावे व्यभिचारः, विशेषणमात्राभावे आपाद्ये यद्यपि न व्यभिचारः, तथाप्यखण्डाभावतया न व्यर्थता । केचित्तु आकाशस्यावृत्तिकतया विशेषणाभावमात्रोपादाने तत्रैव व्यभिचार इति विशेष्यपदमित्याहुः । तन्न । वृत्तिपदमात्रोपादानेनैव तन्निरासे किञ्चित्कालपदवैयर्थ्यात्, किञ्चित्पदद्वयञ्च विरोधभञ्जनाय । **तेनेति** । विशिष्टाभावः प्रकृते सकलकालवृत्तितया कालावृत्तितया च, तत्राद्यस्य पक्षविशेषणमहिम्ना बाधात् द्वितीयमादाय पर्यवसानं तच्चानिष्टमिति सापेक्षत्वसिद्धिरिति भावः । एतावदिति पूर्वापरकालवृत्तिपदार्थांशे इष्टापत्तिवारणाय पक्षविशेषणबलेनालीकत्वसिद्ध्ये च पक्षविशेषणं, अलीकत्वेनेष्टापत्तिवारणाय घट इति विशेषणं प्रामाणिक इत्यर्थः । एतावत्कालवृत्तौ पूर्वोत्पन्ने व्यभिचार इति सत्यन्तम् । तत्रापि एतावदिति कालविशेषणमप्रसिद्धिवारणाय, सत्यन्तमात्रं च घटसमानकालोत्पन्नपदार्थे व्यभिचारीति एतत्कालेत्यादि, तत्राप्येतत्पदं प्रतियोग्युपस्थापकतया पूर्वत्वनिरूपकपरमित्यप्रसिद्धिवारणाय । अव्यवहितपदं च दृष्टान्तलाभाय तदनुपादाने नित्य आपाद्याभावात् पूर्वकालोत्पन्ने च सत्यन्ताभावादुत्तरकालोत्पन्ने च पूर्वकालीनदिगादिजन्यत्वात्तदलाभः । तदुपादाने च व्यवहितपूर्वकालतया दिगादेरुत्तरकालोत्पन्न एव दृष्टान्तः । न च दिगादेरव्यवहितपूर्वकालेऽपि सत्त्वादव्यवहितपदोपादानेऽपि तद्दोषतादवस्थ्यमिति वाच्यम् । नञ्व्यत्यासेन व्यवहितकालावृत्तित्वस्य पदार्थविशेषणत्वलाभादिति वदन्ति । तदयुक्तम् । एवमपि

मकरन्दः ।

रकालोत्पत्तिको दृष्टान्तः । **सकलेति** । एतच्च पक्षविशेषणं नित्यत्वेनेष्टापत्तिवारणाय । अलीकत्वेन तद्वारणायायमिति । प्रामाणिक इत्यर्थः ।

किञ्चित्कालवृत्तिर्न स्यादित्येव कृते व्योमादौ व्यभिचार इत्यत आह । **किञ्चिदिति** । प्राक्कालावृत्तित्वे सतीत्यर्थः । तेन न प्रागभावे व्यभिचारः । यद्यपि सत्यन्तमेव समर्थमिति व्यर्थविशेष्यत्वं, तथाऽप्यखण्डाभाव आपाद्य इति ध्येयम् । **तेनेति** । विशिष्टाभाव उभयथा सकलकालवृत्तितया सकलकालावृत्तितया च । तच्चाद्यस्य पक्षविशेषणमहिम्नाऽभावे द्वितीयस्य पर्यवसानम् । तच्चानिष्टमिति सापेक्षत्वसिद्धिरिति भावः ।

**एतावदिति** । पूर्वापरकालमात्रवृत्तिघटांशे सिद्धसाधनवारणाय पक्षविशेषणम् । एतावत्कालवृत्तौ पूर्वकालोत्पन्ने व्यभिचारादाह, सत्यन्तम् । एतावत्पदं कालविशेषणमात्रासिद्धिवारकम् । एतत्कालीनोत्पन्ने घटादौ सत्यन्यमात्रं व्यभिचारीत्यत आह । **एतत्कालाव्यवहितेत्यादि** । ननूत्तरकालोत्पत्तिक एव दृष्टान्तः, अन्यत्रापादकवैकल्यात् । तत्र चैतत्पूर्वकालवृत्तिनित्यदिगादिसापेक्षत्वादापादकवैकल्यमित्यत आह । **अव्यवहितेति** । नञ्व्यत्यासेन एतत्कालव्यवहितपूर्वका-

अकस्मादेव भवतीति चेन्न—

**हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।**

बोधनी ।

कादाचित्कत्वहेतोरन्यथासिद्धिं शङ्कते—**अकस्मादिति ।**

तदेतद् यथासम्भवं विकल्प्य निराकरोति—**हेतुभूति-इति ।** **अकस्माद् भवतीत्यत्र**

प्रकाशः ।

त्वव्याप्यकालो न स्यादेतावत्कालवृत्तिर्न स्यादिति, **न स्यादेवे**त्यस्यार्थः । अत एव कालान्तरावृत्तित्वे सत्येतत्कालवृत्तिः स्यादिति कादाचित्कत्वाभावापादनमपीति **सम्प्रदायविदः** ॥ ४ ॥

कार्य्यकारणभावग्राहकमाने, कादाचित्कभावो निर्हेतुको भावत्वाद् व्योमवदिति सत्प्रतिपक्षं शङ्कते । **अकस्मादिति ।** अत्र किंशब्दो यदा हेतुमात्रपरस्तदा तस्य नञा सम्बन्धाद्धेत्वभावे भवनं लभ्यते । यदा तु भवनक्रियया नञः सम्बन्धस्तदा प्रसज्ज्यप्रतिषेधे भवननिषेधोऽर्थः, किंशब्द-समस्यमानेनापि नञा भवतीत्यस्यान्वयात् । असामर्थ्येऽप्यसूर्य्यम्पश्या राजदारा इतिवत् समासः । अ-शब्दस्यैव वाऽयं समासं विना प्रयोगः । अ मा नो ना प्रतिषेधवचना इति कोषात् ।

प्रकाशिका ।

चरमकारणमादायोत्तरकालोत्पन्न आपादकाभावात् । अत्र ब्रूमः । आपादके पूर्वकालवृत्तिपदं पूर्वकालोत्पन्नपरम्, अतो न नित्यमादाय दृष्टान्तासिद्धिः, नचैवमपि तादृशादृष्टाजन्यतया उत्तरकालीनस्यादृष्टान्तता, उत्तरकालोत्पन्नादृष्टजन्यस्यैव दृष्टान्तत्वात् । एवं चाव्यवहितपदं विपर्ययेऽव्यवधानघटितकारणतासिद्धये, अव्यवहितपदेनैव वा तादृशादृष्टवारणं यदव्यवहितपूर्वकालोत्पन्नादृष्टेनोत्तरकार्यजननं तत्कालस्यैवैतत्कालपदेनोक्तत्वात् । व्याप्यत्वं पूर्वत्वं च विपर्यये पूर्वत्वनियमरूपकारणतालाभाय, एवं च तदर्थमेवानन्यथासिद्धत्वमपि पदार्थविशेषणं प्रवेश्यमिति दिक् । ननु यदिनिरपेक्षः स्यात् किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तिर्न स्यादित्येव कादाचित्कत्वाभावापादनं तच्च न स्यादेवेत्येतदर्थत्वेनैव व्याख्यातमिति, मूले न तु कदाचित् स्यादिति पुनरुक्तमत आह । **अत एवेति ।** पौनरुक्त्यभयादेव कादाचित्कत्वाभावापादनमन्यथा वर्णयन्तीत्यर्थः । **सम्प्रदायविद** इत्यरुचौ, तद्वीजन्तु किञ्चित्कालावृत्तित्वे सतीत्यादेरापादनस्य पक्षविशेषणमहिम्ना अलीकत्वे पर्य्यवसानम्,

मकरन्दः ।

लावृत्तीत्यर्थः । नित्यन्तु व्यवहितेऽपि वर्त्तते इत्यदोष इति वदन्ति । तत्तुच्छम् । उत्तरकालोत्पन्नचरमकारणमादाय दोषतादवस्थ्यापत्तेः । वयन्तु, पूर्वकालवृत्तिपदं पूर्वकालोत्पत्तिकपरमिति न नित्यमादाय दृष्टान्तासिद्धिः । न च तादृशादृष्टादिसापेक्षत्वाद्दोषतादवस्थ्यम् । उत्तरकालोत्पन्नादृष्टसापेक्षस्य दृष्टान्तत्वे तथाप्यविरोधात् । अव्यवहितपदेनैव तद्वारणाद्वा । यदव्यवहितपूर्वकालोत्पत्तिकादृष्टेन नोत्तरकालीनकार्योत्पादनम्, एतत्कालपदेन तस्यैव कालस्य विवक्षितत्वात् । प्रथमकल्पेऽव्यवहितपदं स्फुटार्थमिति युक्तमुत्पश्यामः । व्याप्यत्वं पूर्वत्वञ्च विपर्यये नियमादिगर्भकारणत्वलाभाय । एवञ्चानन्यथासिद्धत्वमपि पदार्थे विशेषणमित्याहुः ।

**अत एवेति ।** यत एव किञ्चित्कालावृत्तित्वे सतीत्यादौ न स्यादेवेत्यस्यैव कादाचित्कत्वाभावपदेन पर्य्यवसानम् अत एव मूले कदाचित् स्यादिति मूलोक्तकादाचित्कत्वाभावापादनं साम्प्रदायिका अन्यादृशमाहुः । अन्यथा पौनरुक्त्यापत्तेरित्यर्थः । तत्र पक्षविशेषणमहिम्नाऽलीकत्वसिद्धिरित्येव भेदो नोक्तदोष इत्यस्वरसोद्भावनं सम्प्रदायपदेनेतीति वदन्ति । केचित्तु सम्प्रदायविद इति प्रकरणान्वयीत्याहुः ॥ ४ ॥

**स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥**

बोधनी ।

नामयोगिनोऽपि नञः प्रतिषेधार्थत्वमाश्रित्य यदा कस्मादिति निर्दिष्टहेतुसम्बन्धो विवक्ष्यते तदा हेतुनिषेधः स्यात् । यदा तु समासान्निष्कृष्य भवनसम्बन्धस्तदा भूतिनिषेधः । यदि पुनः स्वरसप्राप्तो हेतुसम्बन्धः पर्युदासवृत्तिश्चाऽऽश्रीयते तदा तदितरविधिपरत्वाद्धेतुतोऽन्यस्मात् स्वस्मादनुपाख्याच्च भवतीति स्यात् । अथवा, यदा हेतुविशिष्टभवनसम्बन्धो विवक्षितो न हेतोर्भवतीति तदा विशेषनिषेधस्य शेषविधिपरत्वादहेतुतो भवतीति स्यात्, अहेतुश्च **स्वयमनुपाख्यश्चेति,** तयोरेव विधिः प्राप्नोति । यदा त्वश्वकर्णादिवद् व्युत्पत्त्यनपेक्षं, तदा स्वभावत एव भवतीति स्यात् । न चावश्यमत्र सर्वत्र ग्रन्थसंघटनायां यतितव्यं, तात्पर्यमात्रविकल्पनात् । पञ्चानामपि कल्पानां निराकरणहेतुर**वधेर्नियतत्वत इति । अवधेः** = कार्यपूर्वक्षणवर्त्तिनः कस्यचिदन्यस्य **नियतत्वात्** = किञ्चिदेकमवधीकृत्य दर्शनादित्यर्थः । यद्वा, **अवधिः** प्रागसदुत्तरकालसम्बन्धस्तस्य, नियतत्वतः = नियतकालत्वात् कादाचित्कत्वादिति यावत् । यद्वा, अनन्तरोक्तस्यावधेः सहेतुकोत्पत्तिनियतत्वादिति ।

प्रकाशः ।

तदुभयं निरस्यति । **हेतुभूतीति ।** अथ हेतुभवनयोर्निषेधस्य शेषाभ्यनुज्ञाफलकत्वात् पर्य्युदासनञा हेतुव्यतिरिक्ताद्भवनं लभ्यते, अहेतुश्च कार्यस्वरूपमवस्तु च तदा **स्वानुपाख्यविधिः,** तं निषेधति । **स्वानुपाख्येति । स्वं**=कार्य्यम्, **अनुपाख्यो**=निर्द्धर्म्मकोऽलीकः । अथाश्वकर्णादिवद्व्युत्पन्न एवाय**मकस्मा**च्छब्दः, किंशब्दोऽस्वभावपरो वा तदा स्वभावादेव कार्य्यस्य कादाचित्कत्वमित्यर्थः, तत्राह । **स्वभावेति** । सर्वत्र हेतुमाह । **अवधेरिति** । नियतावधिसम्बन्धित्वेनैव विवादपदस्य कादाचित्कस्य कार्यस्य सतर्केण प्रत्यक्षेण विषयीक्रियमाणत्वा-

प्रकाशिका ।

कादाचित्कत्वाभावापादने तु न तत्पर्यवसानं तादृशपक्षविशेषणाभावादिति यथाश्रुत एव न पौनरुक्त्याशङ्केति । केचित्तु यत एव स्यादेवेत्यापादनमेव कादाचित्कत्वाभावापादनं अत एव तदर्थतयैव कादाचित्कत्वाभावापादनमपि व्याख्यातम् । मूलेऽपि कादाचित्कत्वाभावापादनं न स्वतन्त्रमपि तु पूर्वोक्तं स्यादेवेत्यापादने पक्षधर्मतावललभ्यानिष्टोपदर्शनपरमिति व्याचक्षते । सम्प्रदायविद इति च तन्मते प्रकरणान्वयि ॥४॥ **हेतुभवनयोरिति ।** यद्यपि हेतुप्रसक्तभवनस्य विशिष्टस्यैकस्यैव निषेधाद् द्विवचनमयुक्तम् । तथापि भवननिषेधेऽर्थतो हेतुनिषेधोऽपि लभ्यते भवनं विना हेतोरनुपपत्तेरित्येतावता तदुपपत्तिः । **अहेतुश्चेति** । हेतुव्यतिरिक्तश्चेत्यर्थः । हेतुनिषेधे भवनमुत्पत्तिरूपमसम्भवी-

मकरन्दः ।

**हेतुभवनयोरिति ।** यद्यपि हेतोर्यद्भवनं तस्यैव विशिष्टस्यैकस्य निषेधात् तल्लभ्यत इति द्विवचनमयुक्तम् । तथापि विशिष्टमपि तदुभयात्मकमेवेति तथोक्तमिति ध्येयम् । **अहेतु-**

टिप्पणी ।

अङ्गाङ्गिभावस्य शब्दार्थत्वेन स्वतन्त्रापादने तद्विरोध इत्यर्थः ॥४॥ **हेतुभवनयोरिति ।** यद्यपि हेतुप्रसक्तभवनस्यैकस्यैव निषेधाद् द्विवचनमयुक्तम् । तथापि भवननिषेधेऽर्थतो हेतुनिषेधोऽपि लभ्यते भवनं विना हेतोरनुपपत्तेरित्येतावता तदुपपत्तिः । **अस्वभावेति ।** तस्य नञा सम्बन्ध

**हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनम्, अविशेषात् । भवनप्रतिषेधे प्रागिव पश्चादप्यभवनम्, अविशेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्य्यनियमश्च कार्य्यकारणभावः । न**

बोधनी ।

तदेतदनिष्टप्रसङ्गप्रदर्शनमुखेन विवृणोति—**हेतुप्रतिषेध इति** । सर्वदा भवनम्=सत्त्वम् । स्यादिति शेषः । विपर्ययस्तु दृश्यत इति भावः । एतेनैतन्निरस्तं यदाहुः—

कार्यत्वं कारणत्वं च सम्बन्धः सोऽसतां कुतः ।
सच्चेत् कारणवैयर्थ्यमसच्चेदनवस्थितिः ॥

तथा—कुर्वत् कार्यमकुर्वद्वा कारणं कारणं भवेत् ।
कुर्वच्चेदनवस्थानमकुर्वत्यनवस्थितिः ॥ इति ।

पश्चादप्यभवनम्=असत्त्वम् । स्यादिति शेषः । अभवनाविशेषादुत्पत्त्यभावस्य पूर्वापरकालयोरविशेषादिति । एतेनैतन्निरस्तं यदाहुः—

न चेदुत्पत्तिरुत्पत्तेर्नित्यत्वमनवस्थितिः ।
उत्पतावित्यतः कार्यं कारणं चानिरूपितम् ॥

**उत्पत्तेरिति** । न ह्यसतः प्रभुत्वं, नापि स्वस्य प्रभुत्वमिति । नन्वेकस्यैव कार्यकारणभावे को दोषस्तत्राह—**पौर्वापर्य-इति** । **चो** हेत्वर्थः । यस्मात् पौर्वापर्यनियतः कार्यकारण-

प्रकाशः ।

दित्यर्थः । क्रमेण तर्कमेवाह । **हेत्विति** । भवनस्य सत्त्वस्याविशेषात् सदातनत्वे कार्य्यस्य कादाचित्कत्वव्याघात इत्यर्थः । **भवनेति** । भवनस्योत्पत्तेः सदा प्रतिषेधे प्राक् पश्चादिव मध्येऽप्यभवनप्रसङ्गात् कदाचिद्भवनग्राहिप्रत्यक्षबाध इत्यर्थः । **उत्पत्तेरिति** । स्वोत्पत्तेः पूर्वं यदि स्वं भवेत् तदा नियतकालोत्पत्तौ हेतुः स्यात् । न चैवम् । असतोऽपि हेतुत्वे प्राक् पश्चादपि कार्य्यसत्त्वप्रसङ्गेन तदनुपलब्धिविरोध इत्यर्थः । कार्यकारणयोरभेदे विरोधान्तरमाह । **पौर्वापर्य्येति** । पटा-

प्रकाशिका ।

स्यत आह । **सत्त्वस्येति** । **पश्चादप्यभवनमित्यत्रेष्टापत्तिः**, घटोत्पत्तिकालस्यैव पूर्वतानिरूपकत्वेनोपस्थित्या पश्चात्त्वेऽपि तस्यावधित्वलाभात् तदा चाभवनस्यानुपपत्तेः सत्त्वादित्यन्यथा व्या-

मकरन्दः ।

**श्चेति** । हेतुव्यतिरिक्तश्चेत्यर्थः । हेतुनिषेधभवनमुत्पत्तिरूपमसम्भवीत्यत आह । **सत्त्वस्येति** । **अकारणकत्वेऽपीति** । अकारणकत्वाविशेषेऽपीत्यर्थः । **नियतेति** । नियतदेशतद्वृ-

टिप्पणी ।

इति शेषः । **भवनस्य सत्त्वस्याविशेषादिति** । हेतुं विना उत्पत्तेरसम्भवाद् भवनस्य सत्त्वमर्थः । **सदा प्रतिषेधे प्राक्पश्चादिवेति** । घटोत्पत्तिकालस्यैव पूर्वतानिरूपकत्वेनोपस्थित्या पश्चात्त्वेऽपि तस्यावधित्वलाभात् तदाऽभवनस्य सत्त्वादिष्टापत्तेरतः **प्रागित्यादिमूलमन्यथा** व्याचष्टे **प्रागिति** । **स्वोत्पत्तेः पूर्वमिति** । नियमानन्यथासिद्धत्वे आपादकविशेषणे तेनापाद्यापादकव्याप्तेर्न भङ्गः । **न चैवमिति** । अत्र व्यभिचारशङ्कानिवर्त्तकतर्कमाह । **असतोऽपीति** । प्रागसतोऽपीत्यर्थः । तेन नालीकविधिपर्यवसानम्, तदाकारश्च कार्यं यद्यविद्यमानप्राग्हेतुकं स्यान्नियतकालोत्पत्तिकं न स्यादपि तु सदातनमेव स्यात् । अयमापादकः पराभ्युपगत एव । अथवा हेतुत्वं यदि प्रागविद्यमानावृत्ति स्यान्नियतकालोत्पत्तिनियामकताप्रयोजकं न स्यादिति । **पटार्थिनः**=पटनिर्म्माणेच्छावन्तः । तेन पटेच्छाभिः पट उपादीयमानेऽपि न

**चैकं पूर्वमपरञ्च, तत्त्वस्य भेदाऽधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वोपपत्तेः ।**

**स्यादेतत् । नाकस्मादिति कारणनिषेधमात्रं वा, भवनप्रतिषेधो वा, स्वात्महे-**

बोधनी ।

भावस्तस्मादिति । अथवेतश्च न स्वस्मादुत्पत्तिरित्याह—**पौर्वापर्य-इति । तत्त्वस्य** पूर्वापरभावस्येत्यर्थः ।

निराकृतात् पक्षचतुष्टयाद् विविञ्चानः पञ्चमं पक्षं स्वभाववादपक्षमाशङ्कते—**स्यादेतदिति ।** यथा घटादेर्देशविशेषसंसर्गासंसर्गनियमः,यथा वाकाशपरमाण्वादेरशेषदेशव्यापित्वाव्यापित्वनियमः, यथा वानेककारकसाध्यस्यापि कार्यस्य कस्मिंश्चिदेव कारके समवायो न कारकान्त-

प्रकाशः ।

र्थिनः पटमेव नोपाददते किन्तु तत्पूर्वकालवर्त्तिनस्तन्तूनिति लोकव्यवहारसिद्धकार्य्यकारणभावविरोध इत्यर्थः । **तत्त्वस्य**=पौर्वापर्यस्येत्यर्थः । अनुपाख्यस्यार्थक्रियाजनकत्वाभावेऽप्यनिष्टप्रसङ्गान्तरमाह । **अनुपाख्यस्येति** । एतत्पटानुत्पत्तिक्षणो यद्येतत्पटोत्पादकानुपाख्योत्तरक्षणः स्याद् एतत्पटाधिकरणं स्यादित्यर्थः । यद्यपि स्वभावः कार्य्यं तद्धर्म्मो वा, आद्यः अकस्मादिति निरासेनैव निरस्तः, अन्त्ये धर्म्मस्य कारणत्वमङ्गीकृतमेव । तथापि यथा परमाणुतत्परिमाणयोरकारणकत्वेऽपि स्वभावादेव नियतदेशवृत्तित्वं, यथा वा कारणत्वाविशेषेऽपि पटस्य तन्तुदेशवृत्तित्वं न तु वेमादिदेशवृत्तित्वमिति स्वभावादेव नियमः, तथा कार्य्यस्याहेतुकत्वेऽपि तत्तत्कारणत्वाभिमतनियतोत्तरकालवृत्तित्वं न तु कालान्तरवृत्तित्वमिति स्वभावादेव कादाचित्कत्वं स्यादिति शङ्कते ।

प्रकाशिका ।

चष्टे **प्राक् पश्चादिव मध्येऽपीति । एतत्पटेति** । अत्रापादकेऽनुपाख्येति पराभ्युपगमविषयोत्कीर्त्तनम्, व्याप्तिस्त्वनुपाख्यत्वविशेषणं विहायैवेत्यवधेयम् । **अकारणकत्वेऽपि**=अकारणकत्वाविशेषेऽपि । **नियतेति** । नियतदेशत्वं नियततद्वृत्तित्वं चेत्यर्थः । तेन परमाणुतत्परिमाणयोर्यथासं-

मकरन्दः ।

त्तित्वमित्यर्थः । परमाणोर्देशत्वमपरस्य तद्वृत्तित्वमिति स्वभावादेव यथा यथा नियम इति भावः । नियतदेशवृत्तिनियतसम्बन्धित्वं विवक्षितमित्यन्ये । परमाणुपदं भावप्रधाननिर्देशेन पर-

टिप्पणी ।

क्षतिः । **कार्यकारणभावविरोध इति** । तथा च कार्यकारणभावनियमितप्रवृत्तिनिवृत्त्योरनुपपत्तिरिति भावः । **एतत्पटेति** । अत्रापादकेऽनुपाख्येति पराभ्युगमविषयोत्कीर्त्तनम्, व्याप्तेरनुपाख्यत्वविशेषणं विहायैव सम्भवादिति ध्येयम् । स्वभावस्यातिरिक्ततया नियामकत्वे दृष्टान्तमुखेन प्रामाण्यं व्यवस्थापयति । **परमाणुतत्परिमाणयोरिति । अकारणकत्वेऽपीति ।** अकारणकत्वाविशेषेऽपीत्यर्थः । **नियतेति** । नियतदेशत्वं नियततद्वृत्तित्वञ्चेत्यर्थः । तेन परमाणुतत्परिमाणयोर्यथासङ्ख्यमन्वयात् परमाणोर्नियतदेशवृत्तित्वविरहेऽपि न क्षतिः । यद्यपि नित्यपरिमाणस्यातिरिक्तवृत्तित्वे प्रमाणाभावः, अवृत्तित्वे कारणनियमेन समवायिनि सिद्धस्य जन्यपरिमाणस्य दृष्टान्ततयानुमानस्य प्रामाण्यञ्च, तथापि तत्र नातिरिक्तस्वभावापेक्षा । एवं कारणतावच्छेदकसम्बन्धेन कारणानामेव कार्यसत्त्वे नियामकतया तन्तुत्त्वेनैव तादृशसम्बन्धसत्त्वादिति न वेमादिदेशवृत्तित्वम् । नचोभयोः कारणत्वात् कथन्न वेमादिना तादृशसम्बन्ध इति वाच्यम् । तन्तावेव तस्य प्रत्यक्षेण, कल्पनायाः फलवलकल्प्यतया तेनैव तत्कल्पनमिति तत्रापि न स्वभावस्य तथाविधस्य प्रयोजनमिति दृष्टान्तविकलतया स्वभावस्योच्छेद एव, तथापि तत्स्वीकारेऽपि न

तुकत्वं वा, निरुपाख्यहेतुकत्वं वाऽभिधित्सितम्, अपि त्वनपेक्ष एव कश्चिन्नियतदेशवन्नियतकालस्वभाव इति ब्रूमः । न । निरवधित्वे अनियतावधिकत्वे वा कादाचित्कत्वव्याघातात् । न ह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वं, किन्तु प्रागस-

बोधनी ।

रेष्विति देशनियमो हेत्वभावेऽपि सङ्गच्छते, तथा कश्चिद् घटादिर्नियतकालसंसर्गः स्वभावत एवाकाशादिवदिति कालनियमोऽप्यहेतुक एव सङ्गंस्यत इति । अत्राप्यवधेर्नियतत्वत इत्येतदेवोत्तरयति—**न निरवधित्व इति** । किञ्चिदवधिमनुपादाय कादाचित्कत्वं निरूपयितुमशक्यं, कदाचिदित्यस्यैवाभावे कादाचित्कत्वव्याघातात् । तन्नैवं कादाचित्कत्वम् । न हि कस्मिंश्चिदेव देशे सत्त्वं कारणापेक्षामनिरूप्य निरूपयितुं शक्यते । किन्तु निरूपितं सत् स्वाभाविकं सहेतुकं वेति विमृश्यते । अस्ति चात्र सर्वत्रापि नियामको हेतुः, तथाचोन्मोचिता प्रतिबन्दीति भावः । ननु कालविशेषसंसर्गमात्रं कादाचित्कत्वं तच्च गगनादिवन्निरवधित्वेऽपि भविष्यति, तस्मान्न तत्स्वरूपानुप्रवेशित्वमवधेरित्याशङ्क्याह—**न हीति** । इतः पूर्वं नासीदिदानीम-

प्रकाशः ।

**अपि त्विति** । ये ये निरवधयो दृष्टास्तेषां नियमेन कादाचित्कत्वस्वभावविरहान्निरवधिकत्वकादाचित्कत्वयोर्विरोधान्निरवधित्वे कादाचित्कत्वस्वभाव एव न निर्वहेदित्यभिप्रेत्य परिहरति । **निरवधित्व इति** । अयं क्षणो यद्येतत्पटध्वंसानाश्रयः सन्नेतत्पटप्रागभावाश्रयो न स्यादेतत्पटाधिकरणं स्यादिति भाव इत्यन्ये ।

ननूत्तरकालसंसर्गित्वं कादाचित्कत्वम्, तच्च निरवधित्वेऽप्याकाशवत् स्यादित्यत आह । **न हीति** । तथा सति घटाकाशयोः कादाचित्कत्वाकादाचित्कत्वलोकव्यवहारविरोध इति भावः ।

प्रकाशिका ।

स्वयमन्वयः, नियतदेशत्वं नियतसम्बन्धित्वमेवाभिप्रेतमिति कश्चित् । **ये ये निरवधय इति** । आकाशादीनामकादाचित्कत्वं न तत्तद्धर्म्माधीनमननुगमादिति निरवधित्वनिबन्धनमेव मन्तव्यमिति निरवधित्वकादाचित्कत्वयोः परस्परविरोधावधारणमिति भावः । अत एवाननुगमप्रदर्शनार्थं **ये य** इत्युक्तम् । **अयं क्षण इति** । प्रागभावस्वीकारे स एवावधिः स्यादिति निरवधित्वाभ्युपगमे प्रागभावस्याप्यस्वीकार इति पराभ्युपगतमापादकम् । अत्र च कारणत्वमापादकविशेषणमतो न घटरूपादौ व्यभिचारः । इष्टापत्तिवारणायापाद्य **एतदि**त्युक्तम् । दृष्टान्तलाभायापादक **एतत्पदद्वयम्** । **अन्य** इत्यरुचौ । तद्बीजन्तु उक्ततर्केण विरोधावधारणे पूर्वतनमेव सम्यक् । अनवधारणे त्विदमप्यप्रयोजकमिति । **न हीतीति** । इदञ्च कादाचित्कत्वं मूलनिरुक्तं भावाभिप्रायकमिति न प्रागभावाव्याप्तिरित्यवधेयम् । नन्वेवं गौरवमित्यत आह । **तथासतीति** । तथाच लोकव्यवहारविरोधभयेन गौ-

मकरन्दः ।

माणुत्वपरमित्यपरे । **ये ये निरवधय इति** । अकादाचित्कत्वमाकाशादिषु न तत्तद्धर्माधीनमननुगमादिति निरवधित्वनिबन्धनमेव मन्तव्यमन्यस्यासम्भवादिति परस्परविरोधावधारणेन निरवधित्वे कादाचित्कत्वस्वभावविरोध इत्यर्थः । अत एवाननुगमप्रदर्शनार्थं, ये य इत्युक्तमिति वदन्ति ।

**अयं क्षण इति** । अत्र च कालत्वमापादकविशेषणम् । तेन घटरूपादौ न व्यभिचार इति ध्येयम् । अन्ये इत्यस्वरसोद्भावनम् । तद्बीजन्तूक्ततर्कावष्टम्भे यथोक्तमेव युक्तम् । तदनवष्टम्भे त्वेतदप्यप्रयोजकमित्याहुः । **न हीतीति** । भावकादाचित्कत्वमिति न प्रागभावाऽव्याप्तिर्दोषः । नन्वेवं गौरवमित्यत आह । **तथा सतीति** । अन्यथा द्वयोरपि कादाचित्कत्वे घटस्य कादाचि-

टिप्पणी ।

निर्वाह इत्याह । **ये य इति** । आकाशादीनामकादाचित्कत्वं न तत्तद्धर्म्माधीनमननुगमादिति निर-

त्वे सति। सावधित्वे तु स एव प्राच्यो हेतुरित्युच्यते। अस्तु प्रागभाव एवावधिरिति चेन्न। अन्येषामपि तत्काले सत्त्वात्। अन्यथा तस्यैव निरूपणानुपपत्तेः।

बोधनी।

त्तोति पूर्वकालासत्त्वे सत्युत्तरकालसत्त्वं कादाचित्कत्वम्। तच्च कालानवच्छेदे न सम्भवतीति कालावच्छेदात्मकं सावधित्वं कादाचित्कत्वस्वरूपान्तर्गतमेव। तेन निरवधित्वे कादाचित्कत्वं व्याहन्यत एवेति भावः। नन्वेवमपि कादाचित्कत्वेन सावधित्वे सिद्धे हेतुमत्त्वे किमायातं न हि तयोः पर्यायत्वमित्याशङ्कयाह **सावधित्व इति**। सावधित्वाभ्युपगमे हेतुरेव स्वीकृतः स्यादिति। अन्येषां भावानामपि तत्कालनियतत्वादभावेन सह तुल्ययोगक्षेमत्वं भवेदित्यभिप्रायवानाह। **नेति**। विपर्ययेऽनिष्टमाह—**अन्यथा**—**इति**। आश्रयनिरूपणीयत्वनियमाभावेऽप्यदूरविप्रकर्षिणा केनचिद् भावेनैवाभावो निरूप्यत इति अभावकारणत्ववादिना तन्निरूपणार्थो भावस्ताव-

प्रकाशः।

न च सावधित्वेऽपि न हेतुमत्त्वस्वीकारः पर्य्यायत्वादनयोरित्याह। **सावधित्वे त्विति**। नन्वेतावताऽपि प्राचीनोऽवधिः प्रागभाव एव न तु भावोऽपीति स एव हेतुर्न भाव इति न प्रागभावातिरिक्ते कारणत्वं वर्त्तते इति शङ्कते। **अस्त्विति**। किं प्रागभावकाले भावस्यासत्त्वादेवानवधित्वं कार्य्येणानपेक्षितत्वाद्वा ?। आद्यं परिहरति। **अन्येषामपीति**। भावानामपि अनन्यथासिद्धान्वयव्यतिरेकवत्तया प्रागभावतुल्यत्वादवधित्वम्, अन्यथा प्रागभावस्यापि तन्न स्यादिति भावः। **अन्यथेति**। अनिरूपितस्य प्रागभावस्य प्रतिपादयितुमशक्यत्वादवश्यं घटादिप्राक्कालेऽनन्यथासिद्धान्वयव्यतिरेकिणः कपालादयस्तन्निरूपकाः स्वीकार्य्या इत्यर्थः। ननु प्रागभावनिरूपकस्य चक्षुरादेर्न कारणत्वं यथा; तथा तन्निरूपकभावान्तरस्याऽपि, न च प्रागभावः प्रतियोगिसमवायिकारणमात्रनिरूप्यस्तच्च कारणमेवेति युक्तम्। शब्दाभावप्रत्यक्षतायां तस्य निरस्यत्वात्। मैवम्। चक्षुरादेरधिकरणग्रह एवान्यथासिद्धत्वात्, चक्षुरादिव्यापाराभावेऽप्यनुमितेऽधिकरणे प्रागभावप्र-

प्रकाशिका

त्वमपि प्रामाणिकमिति भावः। **न प्रागभावातिरिक्त इति**। तथा च क्षित्यादिकर्तृतया नेश्वरसिद्धिरिति भावः। **नन्विति**। घटप्रागभावनिरूपकचक्षुरादेरिव न तन्निरूपककपालादेर्घटकारणत्वमित्यर्थः। वस्तुतोऽन्यथेत्यादिमूलस्य भावसत्तायां पूर्वकालीनायां परं तात्पर्य्यं न तु निरूपकत्वेन भावकारणत्वसिद्धाविति नैतदाक्षेपावसर इति। **नचेति**। अधिकरणत्वेन प्रागभावनिरूपकत्वं प्रतियोगिकारणताव्याप्यमिति भावः। **तस्येति**। प्रतियोगिसमवायिकारणमात्रनिरूप्यत्वस्येत्यर्थः। वस्तुतोऽयमपि नियमः कारणत्वसिद्धौ ग्राह्यस्तदेव चासिद्धमिति भावः। **चक्षुरादेरिति**।

मकरन्दः।

त्कत्वव्यवहार आकाशस्याकादाचित्कत्वव्यवहारश्च लोकानां विरुद्ध्येतेत्यर्थः। तथाच गौरवमपि प्रामाणिकमिति भावः। **नन्विति**। घटप्रागभावनिरूपकस्य चक्षुरादेर्न घटकारणत्वं यथेत्यर्थः। **न च प्रागभाव इति**। अधिकवलत्वेन प्रागभावनिरूपकत्वं कारणत्वव्याप्यमिति भावः। **तस्येति**। प्रतियोगिसमवायिकारणमात्रनिरूप्य इत्यस्येत्यर्थः। **चक्षुरादेरिति**। तथाच न तस्य प्रागभावनिरूपकत्वं यस्य तु तन्निरूपकत्वं कपालादेस्तस्य हेतुत्वमेवेति नोक्तदोष इत्यर्थः।

नन्विदमनुपलब्धिगम्याभाववादिमतम्, अस्माकन्तु चाक्षुष एवाभाव इत्यपसिद्धान्तः। न च प्रागभावो न चाक्षुष इति न वयं ब्रूमः, किन्तु प्रागभावत्वप्रकारकनिरूपणत्वावच्छिन्नं प्रत्यजनकं चक्षुर्व्यभिचारादिति। तदिह सामग्रीनिविष्टाधिकरणस्य परम्परानिरूपणकारणता प्रागभावप्रतियोगिजनकता चेति युक्तो नियम इति वाच्यम्। शब्दादिना तत्प्रकारकनिरूपणसम्भवेन व्यभि-

**तथाच न तदेकावधित्वम्, अविशेषात् । इतरनिरपेक्षस्य प्रागभावस्यावधित्वे-प्रागपि तदवधेः कार्यसत्त्वप्रसङ्गात् । सन्तु ये केचिदवधयो, न तु तेऽपेक्ष्यन्ते**

बोधनी ।

दवश्याभ्युपगन्तव्य इति । ततः किमित्यत आह—**तथाचेति** । प्राक्कालनियतत्वेनाविशेषादिति । ननु सन्निध्यविशेषेऽपि प्रागभाव एव हेतुर्न भावा अवर्जनीयसन्निधित्वात् तेषामित्यत्राह—**इतर–इति** । तदवधेः प्रागभावैकावधिकस्य कार्यस्य तस्मादवधेर्वेति शङ्कते—**सन्तु–इति** । कार्यपूर्वक्षणे न केचिद् भावाः सन्तीति नायं स्वभाववादः किन्तु सत्स्वपि तेषु कार्येण ते नापेक्ष्य-

प्रकाशः ।

तीतेरिति भावः । अत्रैवार्थे कादाचित्कत्वव्याघातं प्रागुक्तं विपक्षबाधकं स्मारयति । **इतरेति** । यद्ययं घटः प्रागभावान्यावधिको न स्यात् सकलकालीनः स्यादित्यर्थः । द्वितीयं शङ्कते । **सन्त्वि-**

प्रकाशिका ।

ननु नैयायिकैरभावस्यैन्द्रियकत्वाभ्युपगमात् तदनभ्युपगमेऽपसिद्धान्तः । अत्र मिश्राः, प्रागभावो न चाक्षुष इति न ब्रूमः, किन्तु प्रागभावत्वप्रकारकनिरूपणत्वावच्छिन्नं प्रति चक्षुरकारणं शब्दादिनापि तथा निरूपणेन व्यभिचारात्, तथा च सामग्रीनिविष्टाधिकरणस्य परं तथानिरूपणकारणता प्रागभावप्रतियोगिजनकता चेति तादृशनिरूपणत्वावच्छिन्नकारणं प्रतियोगिजनकमिति युक्तो नियमः, तथाचाधिकरणग्रह एवोपक्षयादित्यत्रानुमानिकप्रागभावत्वप्रकारकग्रहस्थल इति शेष इत्याहुः । तन्न । तादृशनिरूपणत्वावच्छिन्नं प्रति अधिकरणस्यापि व्यभिचारात् । प्रत्यक्षत्वावच्छिन्नं प्रत्यव्यभिचारे तु इन्द्रियत्वेन चक्षुरादेरप्यव्यभिचारात्तस्यापि कारणतापत्तेः । किं च अस्तु चक्षुरादेरन्यथासिद्धत्वं तथाप्यधिकरणग्रहादेरनन्यथासिद्धस्य कारणत्वापत्तिः । एतेन परमतमाश्रित्यैव चक्षुरादेरन्यथासिद्धत्वाभिधानमिदमिति परास्तम् । अधिकरणग्रहादिकमादायोक्तदोषानिवृत्तेरिति । अत्र वदन्ति । अधिकरणत्वेन प्रागभावनिरूपकस्य तत्प्रतियोगिजनकता, अधिकरणं च प्रतियोगिसमवायिवदन्यदपि वीणादि तस्यापि च शब्दकारणत्वमेवेति न व्यभिचारः । नचैवं नष्टस्यापि प्रागभावनिरूपकत्वं प्राग् वर्त्तत एवेति शब्दाजनके तस्मिन् निरुक्तनियमव्यभिचार इति वाच्यम् । यद्धर्मपुरस्कारेण निरूपकत्वं तद्धर्माश्रयः किंचिज्जनक इति नियमशरीरत्वात् । निरूपकत्वं च निरूपणप्रयोजकत्वमात्रमित्यधिकरणज्ञाने जनकेऽवच्छेदकतयाधिकरणस्यापि निरूपकत्वमिति । वस्तुतः सामग्रीकाल एव प्रागभावत्वप्रकारिका प्रतीतिरिति मतेनायं ग्रन्थ इति निरूपणकारणत्वमेवाधिकरणस्य लौकिकप्रागभावसाक्षात्कारं प्रति प्रत्यासत्तितया प्रतियोगिजनकत्वञ्चेति यथाश्रुतमेव सम्यक् । नष्टस्यानिरूपकत्वादिति ग्रन्थश्चैवं योजनीयः, अधिकरणग्रह एवान्यथासिद्धत्वात् तद्वारैव कारणत्वान्नाधिकरणत्वेनेति नन्वेवमिन्द्रियजन्याधिकरणज्ञानस्य प्रागभावसाक्षात्कारकारणत्वे तमःसाक्षात्कारो न स्यात् तादृशाधिकरणसाक्षात्काराभावादित्याशङ्कायां **चक्षुरादिव्यापारेत्या**दिग्रन्थः । तथा च क्वचित् परमिन्द्रियजन्यमधिकरणज्ञानं न तु सर्वत्रेत्यधिकरणत्वेनाधिकरणमात्र एव पूर्वफक्किकातात्पर्यमिति भावः । केचित्तु उपस्थिते प्रागभावे घटकारणत्वग्रहः, उपस्थितिश्च प्रत्यक्षेण कपालोपस्थितौ सत्यामेवेति प्रथमोपस्थितकपालस्यैव कारणत्वं न तु प्रागभावेनान्यथासिद्धिः, तस्य चरमोपस्थितत्वात्, चक्षुरादिकं न तदोपस्थितं नवा कपालादिवदनन्यथासिद्धमिति न तत्कारणमित्यत्र तात्पर्यम् । ग्रन्थस्तु अधिकरणग्रह एव जनकतया प्रतियोगिनं प्रत्यन्यथासिद्धत्वात् चक्षुरादिव्यापारविरहेऽपि प्रागभावप्रतीत्या तदाक्षिप्तं प्रतियोगिनं प्रति चक्षुरादेर्व्यभिचाराच्चेत्येवं परत्वेन नेय इत्याहुः ।

यथाश्रुते वैयधिकरण्यादन्यथा तर्कमाह । **यद्ययमिति** । **सकलकालीनत्व**श्चानादित्व-

इति स्वभावार्थ इति चेत् । नापेक्ष्यन्ते इति कोऽर्थः, किं न नियताः ? आहोस्वि-
न्नियता अप्यनुपकारकाः ? प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्यात् , नियाम-

---

बोधनी ।

न्त इति । तदेतद् विकल्प्यानिष्टप्रसङ्गेनेष्टसिद्ध्या च दूषयति—**नापेक्ष्यन्त-इति** । कथमनिय-तस्यैवावधित्वमङ्गीकुर्वतस्तदेवानिष्टत्वेनाऽऽपाद्यते **गर्दभमप्यवधीकुर्यादिति** ? उच्यते । यदि यस्य कस्यचिदानन्तर्यं धूमस्य स्वभावः, तदा नित्यं यस्य कस्यचिद् भावाद् धूमस्य सदातनत्वा-पत्तेरकामेनापि नियतोऽवधिरङ्गीकार्यः, तथाच नियमो दूषणमिति । **नियामकाभावादिति** ।

प्रकाशः ।

**ति** । प्रागभावादन्येषामवधित्वेऽपि तैर्घटादिसत्ताया अनियमनान्न तानि कारणानीत्यर्थः । **प्रथम इति** । ननु यो दहनव्यभिचारी स रासभानन्तरं भवतीत्यत्रापादकाभावः । स्वयमपि व्याप्तेरनभ्युपगमात् । न च धूमत्वं यदि दहनव्यभिचारिवृत्ति स्यात् दहनासमवहितसामग्र्युत्त-

प्रकाशिका ।

मतो न प्रागभावे व्यभिचारः, अत एव मूले **प्रागपीत्येवोक्तम्** । भावत्वे सतीत्यापादक-विशेषणाद्वा । **धूमत्वमिति** । ननु परमाणुत्वादौ व्यभिचारः, न च जन्यवृत्तित्वे सतीत्यापाद-कविशेषणम् , तथापि परमाणुधूमविशेषान्यतरत्वे व्यभिचारात् । न । दहनव्यभिचारि यज्जन्यं तद्वृत्तित्वस्यापादकत्वात् । **दहनासमवहितत्वं** तदसहकृतत्वं तदघटितत्वं वेत्यभिप्रे-

मकरन्दः ।

चारादधिकरणत्वस्याप्यतथात्वात् । प्रत्यक्षनिरूपणमादाय व्यभिचारश्च तुल्यः । चक्षुष्ट्वेन व्यभि-चारेऽपीन्द्रियत्वेनाव्यभिचाराद् विशिष्याधिकरणेऽपि व्यभिचारात् । अस्तु वैवं, तथाप्यनन्यथा-सिद्धस्य प्रागभावनिरूपकस्याधिकरणग्रहादेर्यथा न घटकारणत्वं, तथाऽनादेरपि न तथात्वमिति दोषस्तदवस्थ एव । एतेन परमतमाश्रित्यैव चक्षुरादेरनन्यथासिद्धत्वाभिधानमित्यपास्तम् । अधिक-रणग्रहमादायोक्तदोषानिवृत्तेः । किञ्च यदि चक्षुरादिव्यापाराभावेऽपि तत्प्रतीतेस्तदन्यथासिद्धं, त-दाऽधिकरणग्रहणमपि तथा स्यात् । शब्दादिना तद्विनाऽपि तत्प्रतीतेः । घटोऽप्येवं चाक्षुषो न स्यात् तद्व्यापाराभावेऽप्यनुमानादिना तत्प्रतीतेः । प्रतीतिविशेषे वा व्यभिचारस्तुल्य एवेति चेत् ।

अत्र ब्रूमः । अधिकरणत्वेन प्रागभावनिरूपकस्य तत्प्रतियोगिजनकत्वमिति नियमः । कपालादेश्च तथात्वात्तज्जनकत्वं न चक्षुरादेरित्यत्र तात्पर्यम् । निरूपकञ्च प्रत्यक्षनिरूपण एवेत्य-वधेयम् । न च तत्राप्यधिकरणस्य न निरूपकत्वं, किन्तु तद्बुद्धेरिति वाच्यम् । प्रयोजकत्व-मात्रस्यैव विवक्षितत्वात् । न च प्रतियोगिसमवायिभिन्नस्य देशकालादेरपि तन्निरूपकत्वाभ्युपगमा-द् व्यभिचार इति वाच्यम् । तस्यापि हेतुत्वाभ्युपगमात् । ननु देशकालयोः का गतिरिति चेत् । न । तयोरपि स्वरूपयोग्यत्वात् । वस्तुतोऽधिकरणत्वेन निरूपकजातीयं किञ्चिदवश्यं कारणमिति नियम इति केचित् । उपस्थिते प्रागभावे घटकारणत्वग्रहः, उपस्थितिश्च तस्य न कपालाद्युपस्थि-तिमन्तरेणेति कारणताग्राहकमानेन प्रथमोपस्थितकपालादेरेव कारणत्वं गृह्यते, न तु प्रागभावस्या-पि । उत्पन्नानुत्पत्त्या तु तस्य तथात्वग्रहो, न तु प्रत्यक्षात् । चक्षुरादिकञ्च न तदोपस्थितं न वा-कपालादिवदनन्यथासिद्धमिति न कारणमित्यत्र तात्पर्यम् । आपादके विशेषणमित्यन्ये । न च नित्यत्वमुपाधिः । तस्याप्यापाद्यत्वादिति भावः । **न च धूमत्वमिति** । न च परमाण्वादौ व्य-भिचारः, जन्यवृत्तित्वे सतीत्यापादकविशेषणादित्याहुः । तन्न । परमाणुधूमान्यतरत्वादौ व्यभि-चारात् । तस्माद्दहनव्यभिचारिभूतजन्यवृत्ति स्यादित्यापादकमतो नोक्तदोषः । दहनासमवहित-

**काभावात् । द्वितीये तु किमुपकारान्तरेण ? नियमस्यैवापेक्षार्थत्वात्, तस्यैव च कारणात्मत्वात्, ईदृशस्य च स्वभाववादस्येष्टत्वात् । नित्यस्वभावनियमव-**

बोधनी ।

अनियतत्वाविशेषे दहन एवावधिर्न रासभ इति नियामकाभावादित्यर्थः । **नियमस्येति ।** इदमेव हि कार्यस्य कारणापेक्षित्वं नाम, यत्तस्मिन् सत्येव भवतीति । यदि नियमातिरिक्त उपकारो नाङ्गीक्रियते तर्हि स्वभाववाद एव सिद्धः स्यादित्यत्राह—**ईदृशस्येति ।** चश्चेदर्थे । दहनादिषु सत्स्वेव धूमादयो भवन्तीतीदृशः स्वभाववादश्चेत्, स तर्ह्यस्माभिरिष्यत एवेति । तदेवमन्यथासिद्धिं निराकृत्य सम्प्रति चार्वाकाङ्गीकृतं प्रमाणमाशङ्कते—**नित्य-इति ।** अस्यार्थः । यथा नित्यानामाकाशादीनामाकाशत्वादयः स्वभावविशेषा निरपेक्षा अपि तैस्तैराकाशादिभिर्नियतास्तथानपेक्षमेव कार्यं केनचिदेव कालेन संसृज्यते नान्येनेति नियम्यत इति न सदातनत्वप्रसक्तिः । अनपेक्षत्वसम्प्रतिपत्त्यर्थं नित्यग्रहणम् । अनेन दृष्टान्तावष्टम्भेन प्रयोगं सूचयति, कादाचित्कत्वस्वभावनियमो निर्हेतुकः स्वभावनियमत्वात् नित्यस्वभावनियमवदिति । अनेन कादाचित्कत्वहेतो-

प्रकाशः ।

रकालोत्पत्तिकवृत्ति स्यादित्यर्थः । परस्येष्टापत्तेः । मैवम् । धूमो यदि रासभसमवधानोत्पत्तिकतावच्छेदकरूपवान् स्याद् रासभसमवधानानन्तरोत्पत्तिकः स्यात्, धूमत्वं वा यदि दहनव्यभिचारिवृत्ति स्याद् दहनासमवहितदेशवृत्तिवृत्ति स्यादित्यापादनार्थत्वात् । वस्तुतो यद्यग्निर्धूमकारणं न स्यात्, तदा कथं धूमार्थी नियमतोऽग्निमुपादत्ते न रासभमिति तद्ग्राहिप्रत्यक्षव्याघात इति भावः । **द्वितीये त्विति ।** न ह्युपकारव्याप्ता कारणता येन तदभावे न स्यात्, उपकारेऽपि कर्त्तव्ये उपकारान्तरापेक्षयानवस्थितेः, किन्तु स्वरूपविशेषव्याप्ता, तन्निवृत्तावेव निवर्त्तेत इत्यर्थः । **नियमस्यैवेति ।** नियतान्वयव्यतिरेकवज्जातीयस्यैवापेक्षणीयपदवाच्यतया लोकप्रसिद्धत्वादित्यर्थः । **नित्यस्वभावेति ।** यथा नित्यस्याकाशस्य यः स्वभावो धर्मः शब्दाश्रयत्वम्,

प्रकाशिका ।

त्याह । **परस्येति । धूमो यदीति ।** ननु धूममात्रस्य पक्षत्व आपादकासिद्धिः धूममात्रस्य रासभसमवधानानन्तरोत्पत्तिकत्वेन परेणानभ्युपगमाद्, धूमत्वस्यावच्छेदकत्वानभ्युपगमात् । न च रासभसमवधानानन्तरोत्पत्तिकधूम एव पक्षः, तत्रेष्टापत्तेः । मैवम् । वह्निसमवधानानन्तरोत्पत्तिकतावच्छेदकत्वं यदि वह्निव्यभिचारिवृत्तेरपि धूमत्वस्याभ्युपेयते तदा रासभसमवधानान्तरोत्पत्तिकतावच्छेदकत्वमपि तस्योपेयं, परेणेति पराभ्युपगमसत्त्वात् धूममात्रपक्षत्वेऽक्षतेः । अत एव वास्वरसादाह । **धूमत्वं वेति ।** अत्र च वृत्तिपदं समवेतत्वपरमतो न धूमत्वजातेर्व्यापकतया इष्टापत्तिरित्यवधेयम् । अत्र च नेष्टापत्तिः, धूमस्य वह्निजन्यतानभ्युपगमेऽपि तदसमवहितदेशवृत्तित्वानभ्युपगमादिति भावः । ननु कश्चित् धूमो वह्निं विनापि स्यादित्याशङ्कितुरिष्टापत्तिरत्र, किंच एतावता व्यापकतासिद्धावपि न तद्विशेषकारणतासिद्धिरित्यरुचेराह । **वस्तुत इति ।** तथा च व्याघातान्न तादृशी शङ्का, एवं च सति पूर्वपक्षतर्कोऽपि न सम्यगित्यवधेयम् । **न रासभमित्युपलक्षणम् ।** न व्यापकमप्याकाशादीति द्रष्टव्यम् । तेन व्यापकविशेषेऽपि कारणत्वं तद्धू-

मकरन्दः ।

त्वं तदसहकृतत्वं तदघटितत्वं वाभिप्रेत्याह । **परस्येति । धूमो यदीति ।** धूममात्रस्य पक्षत्व आपादकासिद्धिः, धूममात्रस्य तत्समवधानोत्तरोत्पत्तिकत्वाभावेन धूमत्वादेस्तदनवच्छेदकत्वात् । रासभोत्तरभाविधूमस्य पक्षत्वे सिद्धसाधनं, तद्धूमत्वावच्छिन्नस्य तथाभावादिति चेद् मैवम् । धूमस्य समवधानोत्तरोत्पत्तिकत्वनियमेऽपि दहनस्य तदनियतत्वं परेणाभिप्रेतमिति त-

देतत्, न ह्याकाशस्य तत्त्वमाकस्मिकमिति सर्वस्य किं न स्यादिति वक्तुमुचि-

बोधनी।

स्तुल्यबलत्वाभिमाने सत्प्रतिपक्षत्वमन्यथा बाधः स्वपक्षसाधनं वेति। केचित् पूर्वमपि नियत-देशवदिति प्रयोगः सूचितः तस्मिन् देशनियमस्य कारणापेक्षित्वं परिहर्त्तुं दृष्टान्तान्तरेण प्रत्य-वतिष्ठन्ते, नित्यस्वभावनियमस्य कारणापेक्षायामसम्भवादित्यपौनरुक्त्यं मन्यन्ते। तत्तु पौर्वापर्या-परामर्शविलसितमित्यनादरणीयमिति। उक्तमेवोपपादयति **नहि—इति**। तत्त्वमाकाशत्वं **सर्वस्य** कालादेः। तदुक्तम्—

> नित्यसत्त्वा भवन्त्यन्ये नित्यासत्त्वाश्च केचन।
> विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः॥
> अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः।
> केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः॥

प्रकाशः।

आत्मनश्चात्मत्वमाकस्मिकमिति सर्वस्य तदन्यस्यापि धर्मः कुतो न स्यादिति न वक्तुमुचितम्, प्रामाणिकत्वात्। तथा आकस्मिकत्वाविशेषेऽपि सदातनत्वमाकाशादीनां, कादाचित्कत्वं घटादीनां स्वभावो, न त्वन्यस्य धर्मोऽन्यस्येत्यर्थः। यथाऽऽहुः—

> नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन।
> विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः॥
> वह्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः।
> केनेदं रचितं तस्मात् स्वभावात्तद्व्यवस्थितिः॥ इति।

न च नियतदेशवन्नियतकालस्वभाव इत्यनेनास्य पौनरुक्त्यम्। पूर्वं हि सापेक्षत्वादित्यत्र यथा परमाणुतत्परिमाणादीनां निरपेक्षत्वेऽपि नियतदेशवृत्तित्वं तथा घटादीनां नियतकालत्वं स्यादि-त्यप्रयोजकत्वमुक्तम्, सम्प्रति तु कादाचित्कत्वस्वभावो निर्हेतुकः स्वभावनियतत्वात् नित्य-स्वभाववदिति सत्प्रतिपक्षत्वमुक्तमित्यर्थभेदात्। पूर्वं यन्नियतं तन्न कारणनियम्यं, यथा जातेः क्वाचित्कत्वमित्युक्तम्, सम्प्रति तु स्वभावो न नियम्य इत्युच्यत इत्यपौनरुक्त्यमित्यन्ये।

प्रकाशिका।

लादेव सिद्धमिति भावः। **स्वभावनियतत्वादि**त्यत्र नियतपदं स्पष्टार्थम्। **अन्य** इत्यरुचौ। तद्बी-जन्तु जातेरपि नियतत्वं स्वभावादेव न तु कारणादेरिति स्वभावनियतं यत्तन्न कारणनियम्यमित्यर्थः

मकरन्दः।

द्व्यभिचारित्वमेव तदुत्तरोत्पत्तिकतावच्छेदकत्वेन पराभिप्रेतमिति धूममात्रस्य पक्षत्वेऽप्यदो-षादित्याहुः।

**स्वभावनियतत्वादिति**। अत्र नियतपदं चिन्त्यम्।

टिप्पणी।

वधित्वनिबन्धनमेव मन्तव्यमिति निरवधित्वकादाचित्कत्वयोः परस्परविरोधावधारणमिति भावः। अथवा मास्तु चेत्तदधीनत्वं तस्य तयोरेकदेशनैयत्ये तात्पर्यं तद्ग्रन्थस्येति ध्येयम्। **सापेक्ष-त्वादित्यत्रेति**। कार्य्यं सहेतुकं सापेक्षत्वात् कादाचित्कत्वादित्यत्रेत्यर्थः। **निरपेक्षत्वेऽपीति**। निर्हेतुकत्वेऽपीत्यर्थः। **सम्प्रति त्विति**। स्वभावस्यातिरिक्ततया प्रयोजकत्वे बीजाभावस्योक्त-त्वात्, प्रयोजकत्वेऽपि तत्रैव कारणवादाभ्युपगमः स्यादित्यतो **नियतदेशव**दित्यादिग्रन्थ-मनाकलयन्निव पुनः सर्वथाकारणवादं निरसितुमभिसन्धत्ते **नित्येत्यादीति** ग्रन्थाशयः। **अन्य इति**। जातेरपि नित्यत्वं स्वभावादेव न तु कारणादिति स्वभावनियतं यत्तन्न कारण-

तमिति चेन्न । सर्वस्य भवतः स्वभावत्वानुपपत्तेः । न ह्येकमनेकस्वभावं नाम । व्याघातात् । नन्वेवमिहापि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघात इति

बोधनी ।

तत् परिहरति न—सर्वस्येति । स्वस्य भावः स्वभावः । न च स्वस्मादन्यदपि स्वमेव, येन तस्यापि भवनस्य स्वभावो भवेत्, तेन सर्वस्य भवदाकाशत्वस्वभावतामेव जह्यादित्येतदेव स्पष्टयति—न ह्येकमिति । न ह्येकमेव धर्मि चानेकेषां स्वकीयो भावस्तद्भवितुमर्हति । न ह्येकमनेकस्वभावो नामेति सम्प्रदायवतां पाठः । तत्र न ह्येकमाकाशत्वादिकमनेकेषां कालादीनां स्वभावो भवति, स्वभावत्वव्याघातात् । स्वस्यैव भवतः स्वभावत्वादित्यर्थः । तर्ह्यत्रापि सर्वदा भवने कदाचित्भवनस्वभावत्वव्याघातः ध्रुवश्च इत्याह—नन्वेवमिति ।

प्रकाशः ।

न सर्वस्येति । एकनियतो धर्मः स्वभाव इत्युच्यते, तद् यदि सर्वस्य सम्भवेत् तदा स्वभावत्वमसाधारणत्वं नोपपद्यते सत्तादेरिवेति स्वभावत्वव्याघात इत्यर्थः । नन्वेवमिति । यथाकाशस्याकाशत्वं न सर्वस्य तत्त्वव्याघातादिति विपरीतमनाशङ्कनीयं, तदा कादाचित्कत्वस्वभावस्याहेतुकत्वे सदातनत्वमप्यनाशङ्कनीयम् , कादाचित्कत्वस्वभावभङ्गप्रसङ्गादित्यर्थः । कादाचित्कत्वस्वभावसिद्धौ तद्विपरीतकल्पनायां व्याघातः स्यात्, तत्सिद्धिश्च निरवधित्वस्वभावत्वे वा सावधित्वस्वभावत्वे वा प्रकारान्तराभावात्, द्वितीयेऽप्यनियतावधित्वे तद्विपर्यये वा, तत्र प्रथमद्वितीययोराह । निरवधित्व इति । ये ये निरवधयोऽनियतावधयश्च भावा दृष्टास्तेषां नियमतः कादाचित्कत्वस्व-

प्रकाशिका ।

पर्यवसानेऽभेद एवेति । न ह्येकमनेकस्वभावं नामेति मूलं यद्यप्यनेनैकस्य नानास्वभावकत्वाभावः प्रतिपाद्यते न तु प्रकृतोपयोगी एकस्य नानास्वभावत्वाभावो, नपुंसकत्वानुपपत्तेः । तथापि एकस्य धर्मस्य नानास्वभावत्वे नानाधर्मस्यापि तुल्यन्यायतया एकधर्मत्वमापद्येत, तच्च न सम्भवतीतीदमुक्तम् । तत्त्वेति । स्वभावत्वव्याघातादित्यर्थः । अनियतावधयश्चेति । नियतावधिशू-

मकरन्दः ।

तत्त्वेति । स्वभावत्वव्याघातादित्यर्थः । अनियतावधयश्चेति । यद्यपि अवधित्वं कारणत्वं नियतस्यैवेत्यनियतावधित्वमप्रसिद्धम्, प्रसिद्धत्वे वाऽऽकाशादेरवधित्वमात्रस्याभावाद्घटादावेव तदभ्युपगम इति तेषां कादाचित्कत्वस्वभावविरहादिति विरुद्धम् । तथापि नियतावधिशून्यत्वे तात्पर्यम् । विशिष्टाविशिष्टप्रतियोगिकत्वेन च भेद इत्याहुः । अनियतावधिपदेन शश-

टिप्पणी ।

नियम्यमित्यर्थपर्य्यवसानेऽभेद एवेतीत्यन्य इत्यनेन व्यज्यते । नन्वेवमितीति । न ह्येकमनेकस्वभावमित्यादिमूलेन यद्यप्येकस्य नानास्वभावत्वाभावः प्रतिपाद्यते न तु प्रकृतोपयोगी एकस्य नानास्वभावत्वाभावः, नपुंसकत्वानुपपत्तेः । तथापि शब्दाश्रयत्वात्मत्वाद्येकधर्म्माणां गगनात्मपृथिव्यादिनानाव्यक्तीनां स्वभावत्वे शब्दाश्रयत्वात्मत्वादिनानाधर्म्माणामपि तुल्यन्यायतया गगनाद्येकव्यक्तिस्वभावत्वमपि भवेत्, तच्च न सम्भवतीत्येतद्ग्रन्थस्याशयः । नामव्याघातेनैकस्य नानास्वभावत्वाभाव आपादकवैषम्यादिति । न सर्वस्येति । आकाशत्वमित्यनुषज्यते । तत्त्वव्याघातादिति । स्वभावत्वेत्यर्थः । इति हेतौ । सदातनत्वमिति । कार्य्यस्येति शेषः । ये ये निरवधयोऽनियतावधयश्च भावा दृष्टा इति । निरवधिपदार्था अनियतावधिपदार्थाश्च दृष्टाः प्रमाणसिद्धाः नियतावधित्वशून्या आकाशादयस्तेषान्न कादाचित्कत्वं, ये त्वदभिमता अनियतो योऽवधिस्तन्निरूपकास्ते न दृष्टा एवेत्यत्र तात्पर्य्यमिति नासङ्गतिः । परेणाभ्युपगतस्यै-

तुल्यः परिहारः ? न तुल्यः, निरवधित्वेऽनियतावधित्वे वा कादाचित्कत्वव्याघातात् । नियतावधित्वे हेतुवादाभ्युपगमात् ॥ ५ ॥

स्यादेतत् । उत्तरस्य पूर्वः पूर्वस्योत्तरो मध्यमस्योभयमवधिरस्तु, दर्श-

---

बोधनी ।

सिद्धान्ती पूर्वोक्तमेव परिहारं स्मारयति—**न तुल्य इति** । कादाचित्कत्वसिद्धौ हि तद्विपरीतकल्पनायां व्याघातः । तत्सिद्धिश्च निरवधित्वे तावन्न सम्भवति, कादाचित्कत्वनिर्वचनव्याघातस्योक्तत्वात् । अत एव नानियतावधित्वेऽपि कादाचित्कत्वसिद्धिः । यस्य कस्यचित् सर्वदा सम्भवान्नियतावधित्वेन कादाचित्कत्वाभ्युपगमे तु सम्प्रतिपत्तिरुत्तरम् । एवं च नानुमानस्य बाधविरोधादयो दोषा इति । एवं तावत् **सापेक्षत्वा**दिति हेतुर्विवृतः ॥ ५ ॥

अथा**नादित्वा**दिति हेतुमवतारयितुं निराकरणीयामाशङ्कामाह—**स्यादेतत्**—इति ।

प्रकाशः ।

भावविरहाद्निरवधिस्वभावस्य अनियतावधिस्वभावस्य वा कादाचित्कत्वस्वभावविरोधः । न हि विरुद्धयोरुष्णशीतयोरेकस्वभावत्वम् । तथा च **कादाचित्कत्वव्याघातः**=तत्स्वभावत्वव्याघात इत्यर्थः ।

तृतीयमाशङ्क्य सम्प्रतिपत्तिमुत्तरमाह । **नियतावधित्व इति** ।

वस्तुतोऽस्मित् सतीदं भवति, असति न भवतीति प्रत्यक्षेण नियतपूर्वभावस्य ग्रहात् प्रत्यक्षमेव कारणत्वे मानम्, तस्य चानन्यथासिद्धत्वग्राहकस्तर्कः **स्यादेवे**त्यादिना दर्शित इति रहस्यम् ॥ ५ ॥

ननु कादाचित्कत्वं सापेक्षनिरपेक्षाभ्यां व्यावृत्तत्वेनासाधारणम् । तथा हि न सामग्रीनिर-

प्रकाशिका ।

न्या इत्यर्थः । अन्यथाऽप्रसिद्धेः । केवलविशिष्टप्रतियोगितया च भेदः । **न हि विरुद्धयोरिति** । सावधिनिरवध्योरेकं कादाचित्कत्वं स्वभावो न भवतीत्यर्थः । यद्यपि विरुद्धयोरुष्णशीतयोः प्रमेयत्वमेकं स्वभावो यथा, तथा सावधिनिरवध्योरपि कादाचित्कत्वमेकं स्वभावो भवत्येव । तथापि तत्तत्कार्यार्थं तत्तत्कारणोपादानानुपपत्त्यैव सावधित्वसिद्धिरिति भावः । ननु कादाचित्कत्वेन सहेतुकत्वानुमानं तवाप्यप्रसिद्धं साध्याप्रसिद्धेरतः पूर्वोक्तमेव स्मारयति । **वस्तुत इति** ॥ ५ ॥

अनादित्वपरिहारस्यासङ्गतित्वं मन्वानस्तत्परिहारौपयिकं पूर्वपक्षं पूरयति । **ननु कादाचि-**

मकरन्दः ।

शृङ्गादयस्तन्मतेनोक्ता इत्यन्ये । **न हीति** । यद्यपि यथा विरुद्धयोरपि प्रमेयैकस्वभावत्वं, तथा कादाचित्काकादाचित्कयोरपि निरवधिस्वभावत्वमविरुद्धं, तथापि तत्तत्कार्यार्थं तत्तत्कारणोपादानानुपपत्त्या सावधित्वसिद्धिरिति भावः ॥ ५ ॥

अनादित्वादित्यस्य परिहारस्यासङ्गतत्वनिरासार्थमाशयं पूरयति । **नन्विति** । तथाचाश-

टिप्पणी ।

वास्य प्रसिद्धिः, वस्तुतस्तथाविधपदार्थासत्त्वात् । अथवा नियतावधिशून्यत्वमेव तत्त्वं तच्चाकाशादावेव प्रसिद्धं, परेणावधेर्जन्यत्वनैयत्यस्वीकारादवध्यतिरिक्ते तत्रैव प्रसिद्धिसम्भवेन निरवधेर्भेदोऽपीति चिन्त्यम् ॥ ५ ॥

ननु **उत्तरस्ये**त्यादिग्रन्थस्य यथाश्रुतस्य प्रागभावानुभयावधिकल्पतया अदर्शनमात्रनिष्ठत्वखण्डने दृष्टान्तवैकल्यतयैवोद्धारसम्भवादनादित्वेन परीहारस्यासङ्गतत्वं स्यादिति मन्वानः तत्परिहारौपयिकम्पूर्वपक्षं तद्ग्रन्थाशयरूपमाह । **नन्वित्यादिना** । तथाहि दर्शनाद्विनापि कार्य्याणां सदातनत्वादिदोषभयेन पूर्वावधिकल्पनेऽप्यनवस्था स्यादित्येव नन्वित्यादेरपि निगर्वः । **सापेक्षनिरपेक्षाभ्यामिति** । अत्र कादाचित्कत्वं मूलनिरुक्तम् । **तथाहि न**

नस्य दुरपह्नवत्वात् । त्वयाप्येतदभ्युपगन्तव्यम् । न हि भाववदभावेऽप्यु-

बोधनी ।

अयमत्र भावः–यथा निरपेक्षत्वे कादाचित्कत्वं न सम्भवति तथा सापेक्षत्वेऽप्यपेक्षणीयस्य सदातनत्वेन कार्यस्यापि तथात्वापत्तेः, तस्मान्निरपेक्षाद् गगनादिव सापेक्षादपि व्यावर्त्तमानं कादाचित्कत्वमसाधारणत्वान्न सापेक्षत्वसाधकमिति । अक्षरार्थस्तु— **उत्तरस्या**नुपलभ्यमानोत्तरावधेर्भावस्य **पूर्व** एवावधिरस्तु, **पूर्वस्या**नुपलभ्यमानपूर्वावधेरु**त्तर** एवावधिरस्तु, **मध्यमस्यो**पलभ्यमानोभयावधेरु**भयं** पूर्व उत्तरश्चावधिरस्तु, तथा दर्शनात् । ननु सर्वस्याप्यवधिद्वयं वक्तव्यम् अन्यतरावधेस्तदितरावधिव्याप्तत्वादित्यत आह—**त्वयापि**–इति । एतदेवावधित्वं त्वयाप्यङ्गीकार्यं प्रागभावप्रध्वंसयोरेकावधित्वस्य सिद्धत्वात् । प्राक्प्रध्वंसाभाववद**नुपलभ्यमानैककोटि**केषु भावेष्वपि पूर्वैकावधित्वमुत्तरैकावधित्वं वा स्यात् । अत्रानुपलभ्यमानप्राक्कोटेर्भावस्य पूर्वावधिविरह एव साध्यः । अवशिष्टस्य दृष्टान्ततयोपन्यासः ।

अथवायमर्थः । **उत्तरस्य**=प्रध्वंसस्य **पूर्व** एवावधिरवच्छेदकः नोत्तरः, भावोन्मज्जनप्रस-

प्रकाशः ।

पेक्षं कार्यं, सदातनत्वापत्तेः । नापि तत्सापेक्षं, सामग्र्यपि हि न तन्निरपेक्षा, तत्सदातनत्वे तत्कार्यसदातनत्वापत्तेः । नापि तत्सापेक्षा, अनवस्थानात् । ततः प्रागभाववद् यथा सामग्री निरपेक्षापि कादाचित्की तथा भावोऽपि घटादिः स्यादित्याशयवानाह—

**स्यादेतदिति । उत्तरस्य** ध्वंसस्य । **पूर्वो** घट एवावधिर्न तु ध्वंसः । **पूर्वस्य** तु प्रागभावस्य **उत्तरः** प्रतियोग्येवावधिर्न तु प्रागभावः । **मध्यमस्य** तु घटादेः प्रागभावो ध्वंसश्चेत्युभयमत्र**धिर्निरूपको**ऽस्त्वित्यर्थः । **दर्शनस्येति** । सर्वलोकसिद्धत्वादित्यर्थः । दर्शनेन चेत्कारणं सिद्ध्यति, तदा क्षित्यादौ कर्तुरदर्शनाद्धर्मादेश्चादर्शनात्तदसिद्धौ न तदधिष्ठातृसिद्धिरिति निगर्वः । अनङ्गीकारे दण्डमाह । **न हीति** । अन्यथा प्रागभावप्रध्वंसोरप्यनुपलभ्यमानपूर्वो-

प्रकाशिका ।

**त्कत्वमिति** । न च तथापि मूलस्य पूर्वपक्षानुद्धारे न्यूनता सिद्धान्तस्येति वाच्यम् । उत्तरस्येत्यादेर्यथाश्रुतार्थस्यैव विपक्षपदार्थतया तदुद्धारेणैव तदुद्धरणात् । सामग्रीधारास्वीकारेऽनवस्थेति निरपेक्षसामग्रीसापेक्षत्वं सामग्र्यपेक्षत्वं वा कार्यस्य वाच्यमुभयथापि कादाचित्कत्वमसाधारणं सर्वतो व्यावृत्तमसाधारणमप्रसिद्धमिति यावत् । अतो निरपेक्षत्वे सत्यपि सामग्र्याः कादाचि-

मकरन्दः ।

यस्थितानवस्थापरिहारपरत्वेन तत्सङ्गतिरिति भावः । नन्वनवस्थाभयात् प्रागभाववन्निरपेक्षापि सामग्री कादाचित्कीत्यनेन विपक्षगामितया साधारणानैकान्तिकप्रदर्शनात् कथमसाधारण्यम् ?

टिप्पणी ।

**सामग्रीति** । अनवस्थाभयेन निरपेक्षसामग्रीसापेक्षन्तन्निरपेक्षत्वाकार्य्यमवश्यं वाच्यम् , तथा च कादाचित्कत्वमुभयतोऽसाधारणमर्थादप्रसिद्धमित्येवार्थम्पूर्वफक्किकाविवरणमाह । **तथाहीत्याद्यनवस्था स्यादित्यन्तेन** । यद्वा अपदं व्यवच्छिद्य योजनीयम् । तेनाव्यावर्त्तत्वेन साधारणमित्यर्थः । अत्र **तथाहीत्यादि स्या**दित्यन्तेन निरपेक्षसामग्रीसापेक्षघटादौ निरपेक्षायां सामग्र्यां तस्य वृत्तित्वमिति सम्पाद्यते । **ततः प्रागभाववदित्यादि । ततः**=कादाचित्कत्वस्य प्रसिद्धितः । तथा चात्र कादाचित्कत्वं न मूलनिरुक्तमपि तु यत्किञ्चित्कालासम्बन्धित्वे सति यत्किञ्चित्कालसम्बन्धित्वरूपं तस्यैव च व्यवहारः प्रागभावघटादावपीति न तेन हेतुमत्त्वसिद्धिः । केचित्तु तस्य तथाप्रसिद्धितः सापेक्षत्वव्याप्यत्वं न स्वीकरणीयमिति कथमव्याप्येन हेतुना हेतुमत्त्वसिद्धिः ।

**भयावधित्वमस्ति। तद्वद्भावेष्वप्यनुपलभ्यमानैकैककोटिषु स्यात्। न स्यात्। अनादित्वात्।**

---

बोधनी।

ङ्गात्। **पूर्वस्य** प्रागभावस्योत्तर एवावधिर्न पूर्वः, पूर्ववत्प्रसङ्गात्। **मध्यमस्य** प्राक्प्रध्वंसाभावयोर्मध्यमध्यासीनस्य कार्यस्योभयमवधिरस्तुदर्शनबलात्। **त्वया** सिद्धान्तिनाप्येतत्त्रयं व्यवस्थितमभ्युपगन्तव्यम्। ततः किमित्यत आह–**तद्वत्**–इति। तथाचानुपलभ्यमानप्राक्कोटेः कारणस्यानादित्वसम्भवात् तदनपेक्षामलभमानानां कार्याणामपि सदातनत्वप्रसङ्ग इत्युभयत्रापि समानो वाक्यशेषः। यद्वा, अयमत्र भावः, यस्य कार्यस्य योऽवधिर्दृश्यते पूर्व उत्तर उभयं वा तत्तदवधिकमेवास्तु, दुर्लङ्घ्यत्वाद्–**दर्शनस्य**। न चान्यतरावधेरितरावधिव्याप्तिः, अभावेन व्यभिचारात्। तत्र विधात्रयेऽपि कार्यस्यावधिमत्त्वेनैव कादाचित्कत्वं सिध्यति, सदातनत्वप्रतिपक्षमात्ररूपत्वात् तस्य। तथाचानुपलभ्यमानपूर्वावधेः कार्यस्योत्तरावधिमात्रेणैव कादाचित्कत्वे सिद्धे न तेन कारणपरम्परानुमानमित्यन्यथासिद्धिः। सर्वस्यापि कार्यस्य पक्षीकरणाद् भागे बाधितविषयत्वं चेति। हेतुमवतारयति—**न स्यादनादित्वात्** इति।

प्रकाशः।

त्तरावधिकल्पनप्रसङ्ग इति भावः। **तद्वदिति**। तथाचावधिसिद्धावपि न तत्प्राच्यत्वनियमसिद्धि

प्रकाशिका।

रकत्वं स्वीकरणीयं तथा च साधारणमित्याक्षेपार्थः। यद्वा अपदं व्यवच्छिद्य योजनीयम्। तेनाव्यावृत्तत्वेन साधारणमित्यर्थः। अत एव परिमले साधारणमेवोक्तम्। वस्तुतोऽसाधारणमगमकं सापेक्षत्वनिरपेक्षत्वयोरसम्भवित्वेनेत्यर्थः। मिश्रास्तु सामग्रीधारायां कस्याश्चिन्निरपेक्षत्वस्वीकारे तत्रैव

मकरन्दः।

अत एव परिमले तदेवोक्तमिति चेत्। मैवम्। अनवस्थाभिया सामग्री निरपेक्षा आकाशादिवन्न कादाचित्की। तथाच निरपेक्षसामग्रीरूपविपक्षाद्व्यावृत्तिरुक्ता। आकाशादिविपक्षव्यावृत्तेश्च स्फुटत्वादप्रदर्शनम्। निरपेक्षसामग्रीसापेक्षं कार्यमप्यकादाचित्कमिति सपक्षाद्व्यावृत्तं कादाचित्कत्वमसाधारणं स्यात्। तथाच तद्भयेन निरपेक्षस्यापि कादाचित्कत्वस्वीकारेण साधारणानैकान्तिकतया नायं हेतुः सापेक्षत्वसाधक इत्याशयवानाहेत्यत्र तात्पर्यात्। न च प्रागभावरूपविपक्षव्यावृत्तत्वाभावान्नासाधारण्यं स्यादिति वाच्यम्। प्रागसत्त्वादिघटितकादाचित्कत्वस्य प्रागेव निरुक्तेः। तद्विपक्षत्वानिश्चयदशायां वा तथात्वात्। यद्यप्येवं पक्षवृत्त्यपि न कादाचित्कत्वमित्यप्रसिद्धं, न त्वसाधारणं तथापि विशेषादर्शनदशायां तदित्येके। अगमकत्वमेव तेनोपलक्षितमित्यन्ये। केचित्तु असाधारणमित्यत्र अ–पदं निषेधवाचकं विभिद्य व्यावृत्तपदेन योजनीयम्, तथाच सपक्षविपक्षाभ्यामव्यावृत्तेः साधारणमित्यर्थः। अत एव साधारण्यमेवाग्रे व्युत्पादितम्। तथाच परिमलसंवादोऽपीति वदन्ति। सामग्र्याः सापेक्षत्वेऽनवस्था, निरपेक्षत्वे व्यभिचारादसाधारणं न पक्षदृष्टान्तसाधारणमव्याप्यमितियावदित्यर्थ इत्याहुः।

टिप्पणी।

न च प्रागभावेन सह दृष्टान्तासम्भवः तस्य प्रागसत्त्वाभावादिति वाच्यम्। यथा निरपेक्ष एव प्रागभावः कदाचित् प्रतिपाद्यस्तथा सामग्र्यादिरपीति कादाचित्कत्वान्तेन प्रतिपादनात् तत्सम्भव इदानीं निरपेक्षाया अपि सामग्र्या नेत्रे निमील्यैव प्रागसत्त्वं स्वीकरणीयमेव अन्यथानवस्थामात्रपरिहारकत्वे सदातनत्वापत्तिसन्दर्भे तत इत्यादेर्विरोधः स्यादिति विभाव्यमिति प्राहुः ॥०॥ **तद्वदिति**। तथा च नावधिसिद्धावपीति तद्वदित्यादिमूले भावः सामग्रीरूप एव द्रष्टव्यस्तेन मूलस्थाशयस्य

## प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान् ।

बोधनी ।

तदेतत् प्रसङ्गमभिधाय विपर्यये पर्यवसानमिति व्याचष्टे—**प्रवाहो नादिमानेषः**-इति । अनुपलभ्यमानपूर्वकोटेः कारणस्य पूर्वावधिविरहे तस्यानादित्वात् कादाचित्कत्वव्याघातः स्यात् । तस्मात्तस्यापि कश्चित् पूर्वावधिरस्ति, एवं तस्यापीति कारणप्रवाहोऽयमादिमान्न भवति । पश्चिमे तु व्याख्यानेऽनुपलभ्यमानपूर्वावधेरपि कार्यस्य पूर्वावधिसापेक्षत्वम्, अन्यथा तत्कार्यस्यानादित्वप्रसङ्गादिति परिहारार्थः । नन्वस्तु कारणप्रवाहोऽनादिस्तथाप्येकजातीयं कार्यमेकजातीयात् कारणाद् भवतीति नियमो नास्ति, विजातीयेभ्य एव तृणादिभ्य एकजातीयाग्नेरुत्पत्तिदर्शनात् । न चैवमाकस्मिकः कार्यजातिनियमः, विजातीयेष्वपि कारणेषु एकशक्त्यङ्गीकारादेव तदुपपत्तेरित्यत आह—**न विजाति**-इति । विविधा जातिर्यस्य तद् विजाति । एका शक्तिर्यस्य तदेक-

प्रकाशः ।

रिति न तावतैव कारणसिद्धिरंशतः सिद्धसाधनं चेति भावः ।

**प्रवाह** इति । **एष** कार्यकारणप्रवाहः । **अनादिमान्** । तत्तत्सामग्रीमान्, तत्तत्सामग्र्यपि स्वसामग्रीपरम्पराधीनेति न तज्जन्यकार्यस्यानादित्वप्रसङ्गः । न चानवस्था । बीजाङ्कुरवदनादितया प्रमाणिकत्वादित्यर्थः । प्रागभावध्वंसयोस्तु पूर्वोत्तरकोटिकल्पने भावोन्मज्जनमेव बाधकमिति भावः । अनादित्वं च ध्वंसव्याप्यप्रागभावप्रतियोगित्वम् । तथापि यद्व्यक्तितो यत्कार्यं सैव व्यक्तिस्तत्र कारणं, न तु तज्जातीयमिति नैतावता कार्यजातीये कर्तृजातीयं

प्रकाशिका ।

व्यभिचारेण, सर्वत्र स्वीकारे च सापेक्षत्वस्यानवस्थया कादाचित्कत्वमसाधारणं न पक्षदृष्टान्तसाधारणं न व्याप्यतया ग्रहीतुं शक्यमित्यर्थ इत्याहुः । **अंशत इति** । उभयावधित्वेनोपलभ्यमानघटादौ स्वीकारात् उभयावधित्वस्यैत्यर्थः । केचित्तु अवध्यंशस्य सिद्धस्यैव साधनादित्याहुः । तद्वदित्यादिमूले **भावः** सामग्रीरूप एव द्रष्टव्यः, तेन मूलस्थाशयस्थपूर्वपक्षयोरेकवाक्यतया न परीहारन्यूनतेति । नन्वेकापि सामग्री न प्रागभावप्रतियोगिनीत्यत आह । **अनादित्वञ्चेति** । येन

मकरन्दः ।

**अंशत इति** । अवधेर्मयाऽपि स्वीकारेण तदंशस्य सिद्धस्यैव साधनादित्यर्थः । **तत्त्वदिति** । तथाच नासाधारण्यमित्यर्थः । ननु बीजाङ्कुरादेः सादितया कथमनादित्वमित्यत आह । **अनादित्वञ्चेति** । ध्वंसव्याप्यत्वं सजातीयध्वंसव्याप्यत्वम् । तथाच, तद्घटत्वेन सादित्वेऽपि

टिप्पणी ।

पूर्वपक्षयोरेकवाक्यतया न परिहारन्यूनतेति । **अंशतः सिद्धसाधनञ्चेतीति** । उभयावधित्वेनोपलभ्यमानघटादौ स्वीकारादुभयावधित्वस्येत्यर्थः । केचित्ववध्यंशस्यासिद्धस्यैव साधनमित्यर्थत्व इत्याहुः । **भावोन्मज्जनमेव बाधकमिति** । तथा च प्रागभावपूर्वावधिकालस्य ध्वंसोत्तरावधिकालस्य च घटप्रागभावध्वंसयोरनधिकरणत्वेन घटाधिकरणत्वम्भवेदित्यर्थः । नन्वेकापि सामग्री न प्रागभावप्रतियोगिनीत्यत आह—**अनादित्वञ्चेति** । येन रूपेणानादित्वमभिमतं तद्रूपाश्रयध्वंसव्याप्यप्रागभावप्रतियोगित्वम् । अस्ति च साक्षात् परम्परासाधारणघटसामग्रीत्वाश्रयस्य तथात्वमिति भावः । व्याप्तिश्च कालिकी । समानाधिकरणेत्येतावति कृते तु प्रथमशरीरध्वंससमानाधिकरणप्रागभावप्रतियोगित्वं द्वितीयशरीरस्येति चैत्रत्वादिनाप्यनादित्वापत्तिरतो व्याप्येतिपर्यन्तानुधावनम् । **यद्व्यक्तित इति** । यद्व्यक्त्यनन्तरमित्यर्थः । **नतावतेति** ।

## तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

बोधनी ।

**शक्ति विजाति चकशक्ति** च कारणं **विजात्येकशक्ति, तद्वान्** कारणप्रवाहो न भवति । नैकजातीयस्य विजातीयं कारणमिति चार्वाकस्य निरासः, न च तदेकशक्तिकमिति प्रसङ्गान् मीमांसकस्येति । कारणवैजात्ये कार्यसाजात्यस्याऽऽकस्मिकत्वप्रसङ्गात् तृणादिभ्यो भवतोरवान्तरजातिभेदोऽस्तीति तत्रैव तेषामुपयोगः । स चाग्न्यवान्तरजातिभेदस्य तृणादेश्च कार्यकारणभावोऽवहितैरन्वयव्यतिरेकैर्गम्यः । तदुक्तं—**तत्त्वे-** इति । **तत्त्वे**-कार्यकारणभाव इति । यद्वा, **तत्त्व** इति साध्यानङ्गीकारप्रदर्शनम् । ततः परमनिष्टप्रसञ्जनं **विजात्येकशक्तिमत्त्वे**ऽङ्गीक्रियमाणेऽ**न्वयव्यतिरेकयोर्यत्नवता** भवितव्यम् । तावन्वेष्टव्यौ कार्यकारणभावावधारणाय, तौ तु न लभ्येते इति भावः । सूक्ष्मजात्यभ्युपगमे सर्वत्र तदाशङ्कया दृश्यजातीययोर्व्याप्तिग्रहः स्यादिति चेत्, तत्राप्येतदेवोत्तरं–**तत्त्वे**–इति । **अन्वयव्यतिरेकयोस्तत्त्वे** = याथात्म्ये यत्नवान् भव । सम्भाव्यमानेऽपि जातिभेदे दृश्यसामान्यविशेषाक्रान्तयोरन्वयव्यतिरेकाभ्यां व्याप्तिं गृह्णीष्वेत्यर्थः॥६॥

प्रकाशः ।

कारणम् । अव्यवहितप्राक्कालीनव्यक्तेरेव कारणत्वापत्तौ यागादीनामकारणत्वान्नालौकिकसाधनसिद्धिः, अतो न क्षित्यादिकर्तृत्वेनादृष्टाधिष्ठातृत्वेन वेश्वरसिद्धिः । न चैवं नियतजातीयकार्यानुत्पत्तिः । एकजातीयकार्यानुकूलशक्तिमत्त्वेन तदुपपत्तेरत्राह । **न विजातीति** । विलक्षणजातीयेष्वेका या शक्तिस्तद्वान्न प्रवाह इति सम्बन्धः । **विजाति**र्विरुद्धजातिरेकशक्तिमांश्चेति वा । वक्ष्यमाणयुक्तेरित्यर्थः । तर्हि तृणादौ व्यभिचारेणाग्निकारणत्वं कथं ग्राह्यमिति तत्राह । **तत्त्व** इति । सामान्यविशेषाक्रान्तगोचरयोरन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे ग्राह्ये यत्नवता पुरुषेण भाव्यमित्यर्थः ।

प्रकाशिका

*रूपेणानादित्वमभिमतं तद्रूपाश्रयध्वंसव्याप्यप्रागभावप्रतियोगित्वमित्यर्थः । अस्ति च साक्षात्परम्परासाधारणघटसामग्रीत्वाश्रयस्य तथात्वमिति भावः । व्याप्तिश्च कालिकी । समानाधिकरणेत्येतावति कृते प्रथमशरीरध्वंससमानाधिकरणप्रागभावप्रतियोगित्वं द्वितीयशरीरस्येति चैत्रत्वादिनाप्यनादित्वापत्तिरतो* **व्याप्येति** ।

मकरन्दः ।

घटत्वेन तद्घटस्याप्यनादित्वमिति ध्येयम् । व्याप्तिश्च कालगर्भा । ननु घटादेः प्रागभाव-

टिप्पणी ।

पूर्वोक्तप्रयासेनेत्यर्थः । **कर्तृजातीय**मिति कर्तृपदङ्कारणमात्रपरमतो दण्डादेः कृत्याश्रयत्वविरहेऽपि न क्षतिः । **नालौकिकसाधनसिद्धिरिति** । अत्रेयं योजना, यतो न यागकर्त्रादेः कारणत्वमतो न सिद्धिरिति । यागस्याव्यवहितपूर्ववर्त्तित्वाभावात्तस्य कारणत्व एव फलपर्यन्तस्थायी व्यापारः कल्प्यत इति स एवादृष्टरूपः सिद्ध्यतीति तदभावे नेति भावः । **क्षित्यादिकर्तृत्वेनेति** । कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन सामान्यतः कारणत्व एव कार्यत्वेन सामान्यतः कर्तृजन्यत्वानुमानेऽस्मदादीनां तदसम्भवेनेश्वरः सिद्ध्यति तदेव न, कर्तुर्घटादिकार्यं प्रति विशिष्यैव कारणत्वादुक्तानुमाने व्यभिचारशङ्का स्यादिति भावः । **विजातिर्विरुद्धजातिमानिति** विजातीयनिष्ठैकशक्तेः सत्त्वे तन्निषेधानुपपत्तिः, असत्त्वेऽलीकप्रतियोगिकाभाव इति सिद्ध्यसिद्धिभ्यां व्याघात इत्यत आह **विजातारित्यादि** । तथाहि एकशक्तेरेकजातिमति मीमांसकमतप्रसिद्धतया विजातिमति तस्य खण्डनं नासङ्गतमिति । वस्तुतः पराभ्युपगतस्यैव तस्य खण्डनमिति । अन्यथा शक्तेरपि स्वमतेऽन-

**प्रागभावो ह्युत्तरकालावधिरनादिः, एवं भावोऽपि घटादिः स्यात् । अनुपलभ्यमानप्राक्कोटिकघटादिविषयं नेदमनिष्टमिति चेन्न । तावन्मात्रावधिस्वभा-**

बोधनी ।

तत्र प्रवाहो नादिमानित्येतद् विघ्नणवन्नस्योत्तरैकावधित्वेऽभिसंहितं प्रसङ्गमाह—**प्रागभाव**-इति । **एवमुत्तरैकावधिर्भावोऽ**नादिः स्यादिति । चार्वाकस्तु नेदमनिष्टप्रसञ्जनमित्याह—**अनुपलभ्यमान**-इति । सिद्धान्ती त्वनिष्टतामापादयति-**न-तावन्मात्र इति** । उत्तरैकावधिस्वभावत्वे कारणस्यानादित्वेन तस्मिन्नहनि कार्योत्पत्तिवत् पूर्वेद्युरपि तमेव भावमवधिं कृत्वा तदुत्तरस्य कार्यस्य सत्त्वप्रसङ्गः, तमन्तरेणापेक्षणीयाभावात्तस्य च तदानीमपि सत्त्वात् । एवं पूर्वेद्युरपि सत्त्वप्रसङ्गात् कार्यस्य तदेव सदातनत्वमायातं यन्निरवधिपक्ष आपादितम् । प्रागभावे तु प्राक्कोटिकल्पनायां भावोन्मज्जनप्रसक्तिर्बाधिका, साधिका च न काचिद् युक्तिरिति भावः । नन्वनादित्वेऽपि कारणस्य यस्मिन्नह्नि कार्यं दृश्यते तस्मिन्नेवाह्नि भवनं कार्यस्य स्वभाव इत्याह—

प्रकाशः ।

**प्रागभावो हीति** । यद्यदृष्टप्राक्कोटितयैव भावरूपमपि कार्यं पूर्वावधिशून्यं स्यादिति शेषः । अत्रेष्टापत्तिमाह । **अनुपलभ्यमानेति** । यत्र **प्राक्कोटिः** सामग्री नोपलभ्यते, तत्रानादित्वमिष्टमेवेत्यर्थः । **तावन्मात्रेति** । अदृष्टपूर्वकोटित्वेनानादिभावमात्रावधिस्वभावत्वे यथा तत्र दिवसे तस्य सत्त्वं तथा गतदिवसेऽपि तदित्यनादिभावोत्तरस्य तत्कार्यस्य सत्त्वप्रसङ्गः । एवं तत्पूर्वपूर्वदिनवृत्त्यपि तत्कार्यं स्यादित्यर्थः । तथाचाऽऽगन्तुकादेव तस्मात् कार्यस्य कादाचि-

प्रकाशिका ।

ननूत्तरैकावधित्वमापादकं परानभ्युपगतमत आपादकं पूरयति । **यद्यदृष्टेति । भावरूपमपीति** । सामग्रीरूपमित्यर्थः । तेन **तावन्मात्रावधी**त्यादिमूलसङ्गतिः । अनादिभावान्तरस्येत्यत्रापि भावपदं सामग्रीपरम् । एवं **भावोऽपि घटादि**रित्यत्र मूले भावपदं साम-

मकरन्दः ।

वत् तदुत्तरैकाऽवधित्वं परानभ्युपगतमेवेति कथमापादनमित्यत आह । **यद्यदृष्टेति** । तथाच तद्धद्भावेष्वित्यादिना तदभ्युपगतमिति भावः । **अदृष्टपूर्वकोटित्वेनेति** । नन्वत्रेष्टापत्तिः । अदृष्टपूर्वकोटिकेऽनादित्वाभ्युपगन्तारं प्रत्येवापादनात् । न च पूर्वदिने सत्त्वापादनेन प्रत्यक्षत्वापादन-

टिप्पणी ।

क्षीरादुक्तदोषतादवस्थ्यात्, **विजातीत्यादि** ग्रन्थस्तु प्रत्येकस्यैव निषेधप्रदर्शको नञाऽपि प्रत्येकेनैव सम्बन्धात् , तत्र तस्य विजातिश्च एकशक्तिश्च विजात्येकशक्ती ते विद्येते अस्य इति **विजात्येकशक्तिमा**निति द्वन्द्वान्ते मतुपा सम्बन्धादिति । तर्हि तृणादा**वित्यादा**विति । जात्यपेक्षया नियम इत्यर्थः । **तत्त्वे नियतत्वे** इति । **अवधेर्नियतत्वत** इत्यत्र नियतशब्दोपस्थानात्तच्छब्देनात्र तत्प्रतिपादने नासङ्गतिः ।

**प्रागभावो हीतीति** । प्रागभावेत्यादिदृष्टान्तविधयोक्तम् । तथा च यद्यदृष्टेत्यादिशून्यं स्यात्तदा यथा प्रागभावो ह्युत्तरैकावधिरनादिस्तथा तत् स्यादनादिः स्यादित्यर्थः । आपादकस्यासत्त्वात् सामान्यत उत्तरैकावधित्वस्य परेणानभ्युपगतत्वादापादकं पूरयति **यदी**त्यादि । **भावरूपमपीति** । सामग्रीरूपमपीत्यर्थः, तेन **तावन्मात्रावधीत्यादि** मूलसङ्गतिः । सर्वत्र भावपदं सामग्रीपरम्, मूले **घटादि**पदमपि सामग्रीपरमेवेति । अथवा अस्तु तत्र तथा उपलभ्यमानप्राक्कोटिकघटादेरिति **तावन्मात्रे**त्यतः पूर्वं पूरणीयम् । **घटादिपदं** यथाश्रुततात्पर्य्यकमेवेति । तथाच तत्रानादित्वस्येष्टत्वसम्भवेऽपि अत्रोभयोरनिष्टत्वान्नासङ्गतिः ।

**वत्वे तदहर्वत् पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात्, अपेक्षणीयान्तराभावात्। एवं पूर्वपूर्वमपि। भावे, तदेव सदातनत्वम्। तदहरेवानेन भ-**

बोधनी।

**तदहरेव**–इति।

प्रकाशः।

त्कत्वं निर्वहतीति भावः। **तदहर्वदि**ति, समासान्तविधेरनित्यत्वात् समाधेयम्। तदवधिस्वभावत्वे यत्र दिनेऽयमध्यक्षस्तत्रैवानेनोत्पत्तव्यमित्येषोऽपि तस्य स्वभाव इति शङ्कते। **तदहरेवे**ति। अत्राहःपदेन कालमात्रमभिप्रेतम्। तदनादित्वे तावन्मात्रावधेर्घटादेरप्यनादित्वप्रसङ्गादित्यनाद्यनित्यप्रवाहसिद्धये तथाविध एव कालोपाधिर्वाच्यः, तथाच तस्याप्यनादिरूपाद्दृष्टावधि-

प्रकाशिका।

ग्रीपरमेव। एवमग्रिममूलेऽपि। **तावन्मात्रावधेर्घटादेरि**ति। यद्यप्यह्नोऽवधित्वं पूर्वपक्षिणा नोक्तं किन्तु कार्यस्य तन्नियतोत्पत्तिस्वभावकत्वम्। तथापि निरवधित्वे तदेवानुपपन्नमिति तस्यैवावधित्वं वाच्यं तथासति दूषणमिदमिति भावः। **अदृष्टावधी**ति। अदृष्टप्राक्कोटिकावधीत्यर्थः। घटसामग्रीवद्दिनसामग्र्या अप्यदृष्टप्राक्कोटिकत्वेनानादित्वेन तदुत्तरस्य दिनस्यानादित्वप्रसङ्ग

मकरन्दः।

मभिमतमिति वाच्यम्। तथापि तस्योत्तरैकाऽवधित्वाभ्युपगमेन पूर्वावधिशून्यतयानादिभावमात्रावधिस्वभावत्व इत्यसङ्गतापातादिति चेन्मैवम्। दृष्टप्राक्कोटिकघटाभिप्रायेणैव प्रकृतापादनात्। नचादृष्टपूर्वकोटित्वेनेत्यसिद्धम्। अदृष्टपूर्वकोटित्वेनानादिर्यो भावः सामग्रीरूपस्तावन्मात्रावधिस्वभावत्व इत्यर्थात्। तथाच नादृष्टप्राक्कोटितयैवानादित्वम्। अन्यथा कस्याश्चिद् घटसामग्र्या अपि तथात्वेनानादितया तदुत्तरस्य घटस्यानादित्वं स्यादिति भावः। **अदृष्टावधी**ति। अदृष्ट-

टिप्पणी।

**समाधेयमि**ति। अस्तु घटादिप्राक्कोटिकत्वेनोपलब्धा सामग्री सापेक्षाऽपेक्षणीयस्य नापेक्षान्तरमित्याकाङ्क्षायां मूले। **एवमि**ति। **तदेव** पूर्वेद्युरित्यादि प्रतिपाद्यसत्त्वमेवेत्यर्थः। तथाच तन्निबन्धनं प्रागभावाप्रतियोगित्वरूपमनादित्वमेव तत्र सदातनत्वमिति भावः। **तदवधिस्वभावत्व इ**ति। अदृष्टप्राक्कोटिकत्वेनानादिभावमात्रावधिस्वभावत्व इत्यर्थः। **तस्य स्वभाव इती**ति। तथा च दर्शनं विनाऽवधेरस्वीकारेऽपि प्रागसत्त्वघटितकादाचित्कत्वस्य निर्वाह्यादेवेति भावः। **कालमात्रमभिप्रेतं तदनादित्व** इति। कालत्वरूपसामान्यधर्म्मेण प्रागुक्तस्वभावघटककालस्यानादिकालसाधारणतया तस्य स्वभावघटककालस्यानादित्व इति भावार्थः। **तावन्मात्रावधेरि**ति। यद्यप्यह्नोरवधित्वं पूर्वपक्षिणा नोक्तं किन्तु तन्नियतकालोत्पत्तिकत्वमिति **तावन्मात्रावधेरि**त्यसङ्गतम्, तत्पदस्यानुपदोक्तपरामर्षत्वस्यैव व्युत्पन्नतया तत्पदेन कालस्यैव बोधनात्। तथापि निरवधित्वे तदेवानुपन्नमिति तस्यैवावधित्वं वाच्यमित्यभिप्रेतम्। अत्रा**दृष्टावधिस्वभावत्व** इत्यस्यावधित्वप्राक्कोटिकावधित्व इत्यर्थः। **तदुत्तर**मित्यत्र तत्पदङ्कालोपाधिपरमिति कश्चित्। वस्तुतः, **तावन्मात्रस्वभावत्व** इत्यस्यैकदेशस्य विभक्तिसहकारेण तदर्थस्यानुवादोऽयम्। अत एव **तदवधिस्वभावत्व** इत्यनुपदमेवोक्तम्। अत्रादृष्टप्राक्कोटिकावधिमत्त्व इत्यर्थः। तत्पदं तथाविधावधिपरम्। तथा च द्वितीयस्वभावघटककालस्यानादित्वेऽदृष्टप्राक्कोटिकत्वेनानादिभावेतरावधिशून्यस्यानादित्वं दुष्परिहरणीयमेव स्यादिति भावः ॥०॥ **अनाद्यनित्यप्रवाहे**ति। नचानादित्वस्य ध्वंसव्याप्यप्रागभावप्रतियोगित्वरूपस्यैव वाच्यतया अनित्यपदं व्यर्थमिति वाच्यम्। तादृशानादित्वतात्पर्यग्राहकमेव तदिति न वैयर्थ्यम् ॥०॥ सामानाधिकरण्यमुपपादय-

**वितथ्यमित्यस्य स्वभाव इति चेन्न । तस्याप्यह्नः पूर्वन्यायेन पूर्वमपि सत्त्वप्रसङ्गात् । तस्मात् तस्यापि तत्पूर्वकत्वमेवं तत्पूर्वस्यापीत्यनादित्वमेव ज्यायो, न त्वपूर्वानुत्पादे कस्यचिदपूर्वस्य सम्भव इति । तथापि व्यक्त्यपेक्षया नियमोऽस्तु, न जात्यपेक्षयेति चेन्न । नियतजातीयस्वभावताव्याघातात् । यदि हि यतः**

बोधनी ।

निराकरोति—**न**—इति । अहर्नामावच्छेदकोपाधिभिन्नः कालः, तस्याप्युपाधेर्यदिपूर्वन्यायेनानुपलभ्यमानप्राक्कोटिकारणत्वसम्भवेन पूर्वमपि सत्त्वादह्नोऽपि सत्त्वमेव स्यात्, ततश्च तदहर्भावस्वभावत्वेऽपि सदातनत्वप्रसङ्गो दुस्तर इति भावः । उपसंहरति—**तस्मात्**–इति । यस्मात् कार्यस्य परिदृश्यमानकादाचित्कत्वव्याघातप्रसङ्गः, **तस्मात्** । **तस्या**नुपलभ्यमानप्राक्कोटेरपि कारणरूपस्य पूर्वावध्यपेक्षित्वम् । एवं तस्य तस्यापीत्यनादित्वं कारणप्रवाहस्य युक्तम् । **न त्वपूर्वस्य** पूर्वमविद्यमानस्य कारणस्योत्पत्त्यनभ्युपगमे कादाचित्कस्य कार्यस्य सम्भव इति । पश्चिमे व्याख्याने तु—**न तावन्मात्र**–इति । उत्तरैकावधिस्वभावत्वे कार्यस्य **तदहर्वत् पूर्वेद्युरपि** तदेकावधिस्वभावत्वाविशेषादुत्तरेद्युर्जायमानस्य कार्यस्य सत्त्वं स्यात् । तच्च नोपलभ्यत इति । तस्मात् **तस्यापि**–इति । अनुपलभ्यमानपूर्वावधेरपि कार्यस्येति । सुगममन्यत् । **न विजात्येकशक्तिमा**नित्येतदवधारयितुं शङ्कते—**व्यक्त्यपेक्षया**–इति । जात्यपेक्षया कारणनियमस्य भङ्गे व्यक्त्यपेक्षया नियमभङ्गः सुकर इति गूढोऽभिसन्धिः । **न**–इति । कारणस्य जातिनियमाभावे कार्यजातिनियमो हेत्वभावेन व्याहन्येतेति । विजातीयेभ्योऽपि भवतः कार्यस्य जातिनियमः स्वभावादेव भविष्यतीत्याशङ्का तत्र कार्यस्यैष स्वभावो यद् भिन्नजातीयेभ्योऽपि भवतः प्रतिनियतजातीयत्वमिति, उत कारणस्य यदसत्यप्येकजातीयत्वे नियतजातीयकार्यजनकत्वमिति विकल्पं मनसि कृत्वा प्रथमे दूषणमाह—**यदि यतः कुतश्चित्**–इति । घटजातीय-

प्रकाशः ।

स्वभावत्वे तदुत्तरस्यापि दिनस्यानादित्वप्रसङ्गो घटस्येवेति परिहरति । **तस्यापी**ति । वस्तुतस्तु, उत्पत्तिगर्भकादाचित्कत्वानुरोधादवधिस्वीकारः । न चोत्तरेण उत्पत्तिर्नियम्यत इत्यवधेः प्राच्यत्वनियतत्वसिद्धौ कारणत्वं सिद्धम् । तथाचोत्पत्तिर्यदि किञ्चिदुत्तरत्वनियता न स्यादनादिः स्यादिति निगर्वः । **न त्वपूर्वे**ति । आगन्तुककारणघटितसामग्र्यजन्यं कार्यं नियतकालोत्पत्तिकं न स्यादित्यर्थः । **तथापी**ति । जात्यपेक्षया कारणत्वे निरस्ते व्यक्त्यपेक्षया व्यभिचारेण तत्सुनिरसमिति पूर्वोक्त एवाभिसन्धिः । **नियते**ति । कार्यनियतजातीयत्वे कारणजातिनियमस्य हेतुत्वादित्यर्थः ।

प्रकाशिका ।

इति भावः । सामानाधिकरण्यमुपपादयन्नाह । **आगन्तुके**ति । **पूर्वोक्त एवे**ति । कार्य-

टिप्पणी

माह । **आगन्तुके**ति । नियतकालोत्पत्तिकं न स्यादित्यर्थ इति । अथैतावता प्रयासेनापि यत्रैव प्राक्कोटिकत्वेनोपलब्धा सामग्री तत्रैव कार्यकारणधारा सिद्धा यत्र तु तन्न तत्रानादित्वस्य तेषामिष्टतया न क्षित्यादिकर्त्ता कश्चिदीश्वरः सिद्ध्यतीति चेन्न । एकत्राप्यप्रत्यक्षसार्थवस्तुकल्पनेऽदृष्टवादस्यैव निरस्ततया यत्र घटादौ प्राक्कोटिरनुपलब्धैव तत्रापि सावयवत्वमध्यमपरिमाणवत्त्वादिनानुमानेऽदृष्टस्यापि प्राक्कोटेः कल्पनं सम्भवतीति क्षित्यादावपि कर्तृजन्यत्वसिद्धिस्तद्दृष्टान्तेन स्यादित्यस्य ग्रन्थस्य निगर्वः ॥०॥ **व्यभिचारेण तत्सुनिरसमिति** । सिद्ध्यतु तावत् कारणत्वमुभयवादिसिद्धं व्यक्तेरेव जात्यपेक्षयालमित्यास्तिकविरुद्धवादितया खण्डनमेव विकल्पस्यैककोटिः । **व्यभिचारोऽत्र** रासभादिसाधारण्यम् ॥०॥ **पूर्वोक्त एवाभिसन्धिरि**ति । अकस्माद् भवतीत्यादिकारणत्वासिद्धिरेव पर्य्यवसितेति भावः ।

प्रकाशः ।

अथ स्वभावादेव कार्यं नियतजातीयं स्यात्, तत्राह । **यदि हीति** । किमयं कार्यस्यैव महिमा, यद्भिन्नजातीयेभ्योऽपि जायमानं सजातीयमेव भवति, हेतोरेव वा यद्भिन्नजातीयमपि

प्रकाशिका ।

जातीये कर्तृजातीयं कारणं न स्यादित्येवंरूप इत्यर्थः एवमित्यादिना पौनरुक्त्यमाशङ्क्याह । **किम-**

मकरन्दः ।

प्राक्कोटिकावधीत्यर्थः । घटसामग्रीवद्दिनसामग्र्या अप्यदृष्टप्राक्कोटिकत्वेनानादित्वसम्भवात् तदुत्तर दिनस्यानादित्वप्रसङ्ग इति भावः ।

एवमित्यग्रेतनेन पौनरुक्त्यमाशङ्क्याह । **किमथमिति** । सर्वजातीयत्वाप्रसिद्धेरन्यथा तर्क-

टिप्पणी ।

अथ घटादौ पटादिजनकयावज्जन्यत्वं पूर्वपक्षिणा न स्वीकृतं किन्तु दण्डादीनामेव तद्व्यक्तित्वेन कारणत्वमिति **अयं घट** इत्यादितर्कावतारः प्रकाशकृतां सन्दर्भविरुद्ध इति चेन्न । व्यक्त्यपेक्षया कार्यकारणभावे घटपटजनकजन्यत्वमभिमतमप्यायात्येव । तथाहि व्यक्तिं प्रति व्यक्तेः कारणत्वे व्यक्तित्वं सामन्यनियतं विशेषवद्वा । नाद्यः, सर्वस्य घटकारणत्वापत्त्या तस्य सर्वजातीयत्वं सर्वदेशवृत्तित्वं च स्यात् । नान्त्यः, विशेषत्वं सामान्यतस्तदव्यवहितपूर्ववर्त्तिनियतत्वम् । तदधिकरणदेशावच्छेदेन तन्नियतपूर्ववर्त्तित्वं वा, तदुभयमपि न, तथाहि पटादिसामग्र्या अपि घटादिरूपतद्व्यक्त्यव्यवहितपूर्ववर्त्तित्वेन तद्व्यक्तित्वेन कारणतया तज्जातीयजन्यघटस्य पटजातीयत्वादिकमपि स्यादिति सर्वस्य सर्वजातीयत्वमापतितमिति न **अयं घट** इत्यादि ग्रन्थविरोधः । द्वितीये तु तादृशावच्छेदेन घटादिरूपव्यक्त्यव्यवहितपूर्ववर्त्तित्वस्य सकलव्यक्तिसामग्र्या विरहेण यद्यपि सर्वजातीयत्वापादनं न स्यात् परन्तु यत्सामग्र्यास्तथाविधत्वं तमादाय नियतजातीयताभङ्गस्तु स्यादेव मुख्यतो ग्रन्थकर्तुस्तत्रैव तात्पर्यम् । अथवा कस्यचिद् घटादिव्यक्तेः पटजातीयत्वं कस्यचिन्मठजातीयत्वमिति पटादिजातीयसामान्यस्य सर्वजातीयत्वमिति सर्वपदं सर्वजातीयपरम्, न तु सकलव्यक्तिपरमित्येतत्कल्पेऽपि सर्वसङ्गतिः । न च भवतां जातिपक्ष इवास्माकमपि व्यक्तिपक्षे दण्डादिव्यक्तीनामेव कारणत्वमिति न सर्वजातीयत्वाद्यापत्तिरिति वाच्यम् । अस्माकन्तु घटत्वावच्छिन्नं प्रति दण्डत्वाद्यवच्छिन्नातिरिक्तस्यानन्वयव्यतिरेकतया न कारणत्वं युष्माकन्तु तद्व्यक्तिं प्रति निरुक्ताव्यवहितपूर्ववर्त्तिनो दण्डादेरिव पटादिसामग्र्या तत्रान्वयव्यतिरेकवत्तया कारणताया उपकारव्याप्तत्वस्य च दूरनिरस्ततया च विनिगमकाभावात् कारणत्वं वारयितुमशक्यम् । न च कार्येण सह समवायेनैव तत्र तत्रान्वयव्यतिरेकस्य कारणताग्राहकत्वम् घटादिसमवायिनि दण्डादीनामेव सम्बन्धो नेतरेषामिति न तेषां कारणत्वप्रसक्तिरिति वाच्यम् । प्रथमतः संयोगादिना-कार्येण सहान्वयव्यतिरेकाग्रहेण कारणत्वानिर्णये कार्य्योत्पादेन सह सामानाधिकरण्योपपादनाय कारणतावच्छेदकसम्बन्धगवेषणमिति दण्डादिस्थल एव पटसामग्र्या अपि तेन कारणत्वनिश्चये तत्रापि तथाविधः कश्चित् परम्परासम्बन्धः कल्प्य इत्युभयत्र तुल्यम् समवायमात्रेणैव तथात्वे रासभादौ तेनान्वयस्याभावेन कारणत्वशङ्कैव न स्यादिति सर्वं स्थिरचित्तेन विभाव्यमित्यलमावेशेनेति(१)॥०॥ एवमित्यादिना पौनरुक्त्यमपाकर्त्तुमाह **किमयमिति** ॥०॥ **भिन्नजातीयेभ्योऽपीति** । **जातिपदं-** धर्ममात्रपरम् विभिन्नजातीयजायमानत्वं विभिन्नधर्मावच्छिन्नकारणघटितसामग्रीजन्यत्वम् । तेन तत्तद्दण्डादीनामेकजातीयत्वेऽपि न क्षतिः । अन्यथा घटस्थले परमतेऽपि तस्यासम्भव एव स्यात्-॥

---

(१)अथ घटादावित्यारभ्य अलमावेशनेनेत्येतत्पर्यन्तं शिष्यबुद्धिवैशद्यायेति विभाव्यमेतस्याग्रे भवितुं युक्तमिति० आ० पु० टी० ।

कुतश्चिद् भवन्नेव तज्जातीयस्वभावः स्यात्, सर्वस्य सर्वजातीयत्वमेकजातीयत्वं

बोधनी ।

स्यापि पटजातीयत्वं घटस्य पटस्य च घटाद्येकजातीयत्वं हेतोस्तत्र कार्यत्वस्याविशेषादिति ।

प्रकाशः ।

सजातीयमेव जनयति ? आद्ये कार्यपक्षकं तर्कद्वयमाह । **सर्वस्येति** । अयं घटो यदि पटजनकयावज्जन्यः स्यात् पटजातीयः स्यात् । एवं यदि यावद्धूमजनकजन्यः स्याद् धूमजातीयः स्यात् । एवमन्यजातीयत्वमप्यापाद्यम् । पटादावपि तत्तज्जातीयत्वमापाद्यमिति सर्वजातीयत्वापादनार्थः । घटभिन्नं कार्यं यदि यावद्घटजनकजन्यं स्याद् घटजातीयं स्यादित्येकजातीयत्वापादनार्थः ।

प्रकाशिका ।

**यमिति** । सर्वजातीयत्वमप्रसिद्धमित्यन्यथा तर्कमाह । **अयं घट इति** । यद्यपि व्यक्त्यपेक्षयापि नियमे पटजनकयावज्जन्यत्वं घटे परानभ्युपगतमेव, तथापि व्यक्त्यपेक्षया नियमे पूर्ववर्त्तित्वमात्रं प्रयोजकमिति तथानियमस्वीकारे घटेऽपि पटजनकयावज्जन्यत्वं स्वीकरणीयमेवेत्यभिप्रायेणेदमुक्तम् । वैयधिकरण्यनिरासायाह । **घटभिन्नमिति** ।

मकरन्दः ।

माह । **अयमिति** । यद्यपि व्यक्त्यपेक्षया नियमेऽपि पटजनकतद्व्यक्तिजन्यत्वस्य घटेऽनभ्युपगमादिदमयुक्तम् । तथापि पूर्ववर्तिव्यक्तित्वेनैव तथात्वे घटपूर्ववर्त्तिपटजनकवेमादिव्यक्तेरपि घटजनकत्वाभ्युपगमादिदमिति ध्येयम् । **वैयधिकरण्यादाह** । घटभिन्नमिति ।

टिप्पणी ।

तर्कद्वयमाह **सर्वस्येतीति** । अत्र स्वर्गकामो यजेदित्यादिवाक्यतः स्वर्गं प्रति यागस्य कारणत्वे निर्णीते तस्याव्यवहितपूर्ववर्त्तित्वनियामकः स्वजन्यादृष्टरूपः सम्बन्धः कल्प्यते, अन्यथा कारणत्वानुपपत्तेरित्यदृष्टस्य व्यापाररूपस्य कारणत्वमुपपद्यते, कार्य्यमात्रस्य कर्तृत्वजन्यत्वदर्शनेन तयोर्नियमग्रहे क्षित्यादौकर्त्तृत्वजन्यत्वानुमानेऽस्मदादेस्तदसम्भवेनेश्वरः सिद्ध्यति। तदुभयमपि न सम्भवति सर्वत्रैव स्थिरकारणे सन्ततौ सत्यपि कार्यविलम्बदर्शनात् काचिदपूर्वव्यक्तिः कल्प्या यदसत्त्वेन कार्यविलम्ब इति लाघवात् तत्कार्य्यव्यक्तौ सैव कारणमिति यागस्याप्यतथात्वेनाकारणतया तत्कारणतानिर्वाहकमदृष्टं न सिद्ध्यति सत्त्वे यागादेः कार्य्यविलम्बदर्शनात् । एवं सत्त्वेऽपि कुलालादेः कार्य्यविलम्बदर्शनेन पूर्वव्यक्तेरवश्यकल्प्यतया तस्यैव कारणत्वात् कर्तृकुलालादेरकारणतया कार्य्यत्वकर्त्तृत्वजन्यत्वयोर्व्यभिचारेणानुमानस्याप्रयोजकतया न क्षित्यादिकर्त्तृत्वेनापीश्वरसिद्धिरित्यभिप्रायो यद्यपि-तथापीत्यादिपूर्वपक्षकृतां तत्र नायं दोषः संभवी । तथापि तत्र तथाविध एव पटाद्यागन्तुककारणमादाय नियतजातीयताभङ्गः स्यादेव स्वभावनियमोऽपि निमामकं विनाऽसम्भाव्य एवेति सामान्यतो व्यक्तिपक्षखण्डनकृतो मूलकृतो न न्यूनतावकाशः । अत्र प्रवृत्तिनिवृत्तिव्याघातादिकमपि दोषत्वेनावधारणीयम् सर्वमित्याद्ययं दोषस्तु तद्व्यक्तिपक्षं बहुधा विकल्प्य शिष्यबुद्धिर्वैशद्यायेति विभाव्यम् ॥०॥**कार्य्यनियतजातीयत्व** इत्यादि । अथ कारणजातिनियमो न कारणस्यैकजातीयत्वं तथा हि यत्किञ्चिदेकजातीयकारणजन्यत्वस्य धूमदाहादौ सत्त्वेन तयोरेकजातीयत्वं स्यात् । तत्तत्कार्य्यजनकयावत्कारणकजातीयत्वस्यैवाभावात् । न च तद्घटस्य यद्यज्जातीयं कारणमपरघटस्यापि तत्तज्जातीयमेवेति तदवृत्तिजातिशून्यत्वरूपस्यैकजातीयत्वस्य सकलघटप्रयोजकयावत्कारणात्मकसामग्र्याः सत्त्वेनैकजातीयसामग्र्या एवैकजातीयत्वनियामकत्वम्, तत्र कारणपदं सामग्रीपरमिति

वा स्यात्। एवं तज्जातीयेन यतःकुतश्चिद्भवितव्यमित्यस्य स्वभावः ? तदपि

बोधनी।

द्वितीयकल्पमाशङ्क्य दूषयति—**एवम्**—इति। नियतजातीयेन कार्येण यतः कुतश्चिद् भवित-

प्रकाशः।

द्वितीये कारणपक्षकं तर्कद्वयमाह। **एवमिति**। घटसामग्री यदि पटप्रयोजकयावद्रूपवती

टिप्पणी।

न दोष इति वाच्यम्। संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणत्वेऽपि कुत्रचित् संयोगव्यक्त घटरूपद्रव्यघटिता कुत्रचित् पटादिरूपद्रव्यघटिता सेति न संयोगसामग्र्या निरुक्तैकजातीयत्वसम्भव इति संयोगादिव्यक्तीनामैकजात्यं न स्यात्। अत एव व्यक्तिपक्षेऽप्येकजातीयसामग्र्या जातिनियामकत्वसम्भवेन व्यर्थमेव जातिपक्षादरणमिति निरस्तम्। अपि तु कारणजात्यानियमः पौर्वापर्य्यभावनियमः। तथाहि तत्तत्कार्य्याणामेकजातीयतानियामकं सामग्रीविशिष्टसमग्रीजन्यत्वम्। वैशिष्ट्यञ्च स्वघटकतानवच्छेदकधर्म्मावच्छिन्नाघटितत्व–स्वघटकतावच्छेदकं-यद् यत्तद्धर्म्मावच्छिन्नघटितत्वोभयसम्बन्धेन। तथाच संयोगादिस्थलेऽपि घटपटादेः सामग्र्य द्रव्यत्वेनैकरूपेण प्रवेशान्नैकजातीयत्वनियमभङ्गः। व्यक्तिपक्षे तत्तद्व्यक्तित्वेन घटादेः सामग्रीघटकत्वात् सामग्रीविशिष्टत्वासम्भवान्न जातिनियमः। न्यूनाधिकसामग्रीप्रभवकार्य्याणामेकजातीयत्ववारणाय सम्बन्धद्वयनिवेशनम्। अत्र घटकतावच्छेदकतात्वावच्छिन्नेत्यादिरूपवृत्तित्वस्यैव वा निवेशः। अत्र घटपटादीनामेकजातीयत्वापादने सामग्रीविशिष्टेत्यत्र कस्याश्चिदपि सामग्र्या ग्रहीतुमशक्यत्वादिति न तेषामेकजातीयत्वसम्भवः। अथवा तत्तज्जातिनियामकं तत्तज्जात्यवच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकधर्म्मावच्छिन्नघटितसामग्रीजन्यत्वमिति न कोऽपि दोषः। अथ विभिन्नजातीयजायमानत्वविशिष्टैकजातीयत्वरूपापादकस्याप्रसिद्धेः पराभ्युपगतत्वेन तत्त्वेऽपि जातित्वपर्य्याप्त्यवच्छेदककूटत्वावच्छिन्नत्वरूपसर्वजातीयत्वस्य परेणापि सर्वत्रानभ्युपगमात्तदभाववति घटादावेव तस्य वृत्तित्वेनापाद्यव्याप्यत्वविरहेणापादकत्वासिद्धेर्मूलस्य सर्वजातीयत्वापादनं विशेषापादकेन विशिष्याह—**अयं घट** इत्यादिना। आपाद्यापादकयोर्विशेष्यत्वे सर्वत्वेन पक्षत्वेन सर्वस्मिन् पटत्वादयोऽपि तेषामभावा इति प्रतीतेः सर्वकार्य्यत्वावच्छिन्ने आपाद्यव्यतिरेकनिश्चयां स्यैवाभावादित्यतो विशिष्यैतद्घटत्वादिना पक्षोल्लेखः। अथ योग्यानुपलम्भसहकृता प्रत्यक्षेण निर्णीतापाद्यव्यतिरेकजाया आपत्तेरसम्भावितसंशयतया महदनिष्टरूपत्वात् प्रथमैकमानवादिनंप्रत्येव तदापत्तेः। सावकाशत्वाच्च अध्यक्षवाचिनेदम्पदेन घटितं तथाविधापत्तिस्वरूपबोधकं शब्दप्रयोगं प्रथमेव कुरुते। **अयं घट** इत्यादिना। एतेन घटत्वावच्छेदेन पक्षत्वसम्भव एतत्पदं व्यर्थमिति निरस्तम्। एवं तत्र प्रत्यक्षापाद्यव्यतिरेककात्मना लिङ्गेन सिद्ध आपादकव्यतिरेकेऽन्यत्रापत्तौ व्यतिरेकदृष्टान्तविधया आपादकाभावसाधनेऽन्वयितया च तत्प्रसिद्धिः सुलभेति व्यतिरेकिदृष्टान्ताधिकस्याग्रे वक्ष्यमाणत्वादत अध्यक्ष घटत्वेन प्रथमं पक्षोल्लेख इत्यपि बोध्यम्। पटजनकयावजन्यत्वं पटविशिष्टसामग्रीजन्यत्वम्, तेनातीतानागतपटजनकस्य तदव्यवहितपूर्वत्वविरहेऽपि न क्षतिः। अथ घटो यदि घटभिन्नजनकयावज्जन्यः स्याद् घटवृत्तिजातिमान् स्यादित्यनुगतरूपेण सकलजातेरापत्तिसम्भ विशिष्य सर्वजातीयत्वापादनं सन्दर्भविरुद्धमिति चेन्न। आपाद्याभावेनापादकाभावसाधने सामान्याभावस्य विशेषाभावकूटनियतत्वेन तत्र विशेपतर्कतुल्यफलत्वेऽपि यथा वन्हित्वेन वन्हेः सिद्धावपि न सकलवह्निसिद्धिः, तथा सामान्यरूपेणापत्तौ सत्यामपि न सर्वजातेरापत्तिः। सर्वस्यापादकविरहेऽपि तथाविधतर्कोत्थानसम्भवादित्यस्याः सर्वजातीयत्वरूपत्वापत्तिविरहेणमां परित्यक्तवान्। न चोभयोस्तुल्यफलत्वे कल्पनालाघवमवादित्वमेव वक्तुमुचिता अनिष्टप्रसञ्जनस्य तुल्यत्वेन तथावि-

**सर्वस्मात् सर्वजातीयमेकजातीयं वा स्यात् । कथं तर्हि तृणारणिमणिभ्यो भवन्नाशुशुक्षणिरेकजातीयः ? । एकशक्तिमत्त्वादिति चेन्न । यदि हि विजातीयेष्वप्येकजातीयकार्यकारणशक्तिः समवेयाद्, न कार्यात् कारणविशेषः क्वाप्यनुमीयेत । कारणव्यावृत्त्या च न तज्जातीयस्यैव कार्य्यस्य व्यावृत्तिरवसीयेत । तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवात् । यावद्दर्शनं व्यवस्था भवि-**

बोधनी ।

व्यमित्यस्य यस्य कस्यचित् कारणस्य स्वभावस्तदापि तत्कारणस्वभावप्रयुक्तजातीयत्वं सर्वेषां तत्कार्याणां भवेत् । तत्र यदि यस्य कस्यचित् कारणस्यानेकजातीयजनकत्वं स्वभावस्तदा सर्वस्यापि तत्कार्यस्य प्रत्येकं सर्वजातीयत्वं भवेत् । अथैकजातीयत्वं तर्हि सर्वस्याप्येकजातीयत्वं भवेदिति । यद्वा, पूर्वं यतः कुतश्चिद्भवतस्तज्जातीयत्वस्वभाव इति भवनोद्देशेन तज्जातयीस्य भावविधिमाशङ्क्य यतः कुतश्चिद् भवतोऽनेकजातीयस्वभावत्वं विधीयते, एकजातीयस्वभावत्वं वा । पूर्वत्रैकस्यैव सर्वजातीयत्वं भवेत्, यतः कुतश्चिद् भवनाविशेषात्; उत्तरत्र सर्वस्याप्येकजातीयत्वं भवेत्, तत एव हेतोरिति परिहृतम् । पश्चात्तु तज्जातीयस्य यतः कुतश्चिद्भवनं स्वभाव इति तज्जातीयोद्देशेन यतः कुतश्चिद् भवनविधिमाशङ्क्य तज्जातीयस्य सर्वस्यापि यतः कुतश्चिद् भवनस्वभावत्वं वा स्यात्, नियतजातेः कस्यचिदेव वा, पूर्वत्र सर्वस्माद् यतः कुतश्चिद् भवदेकमेव सर्वजातीयं भवेद्, उत्तरत्र सर्वस्मादपि यतः कुतश्चिद् भवदनेकमेकजातीयं भवेदिति परिहार इति । अत्र व्याख्याद्वये ग्रन्थार्थयोरौचित्यविशेषोऽवहितानां सुगम इति । न च नित्यजातिनियमतद्धेत्वनपेक्षत्वं कार्यजातिनियमस्य वाच्यम् । हेत्वनपेक्षव्यक्तिप्रयुक्तत्वात् तस्येति कारणवैजात्यवादी स्वाभिप्रायमुद्घाटयति—**कथं तर्हि**—इति । पूर्वपक्षस्थ एव विजातीयेषु कारणेष्वेकशक्तित्वमाशङ्क्य कार्यानुपलब्धिलिङ्गभङ्गप्रसङ्गेन निराकरोति—**एकशक्तिमत्त्वात्**–इति । अनुमानद्वयभङ्गेऽपि हेतुस्**तदभावेऽपि तज्जातीयेति** लिङ्गद्वयं समाधित्सुः शङ्कते—**यावद्दर्शनम्**–इति । कार्यदर्शनानुसारिणी शक्तिकल्पना विजातीयेष्वपि यथाकार्यदर्शनं व्यवतिष्ठते । ततश्च कार्यात् क्लृप्तशक्तिकमेवान्यतमदनुमीयते । समस्ततद्व्यतिरेके च कार्यव्यतिरेक इति भावः । तत्र निमित्ते वा शक्तिः कल्प्यते दृष्टे-

प्रकाशः ।

स्यात् पटजातीयजननी स्यात् । एवं धूमादिजातीयजनकत्वमप्यापाद्यम् । घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्धर्मवती स्याद् घटजातीयजनिका स्यादिति क्रमेणापादनीयम् । ननु यद्येकजातीयकारणनियमात् कार्यजातिनियमस्तर्हि भिन्नजातीयेभ्यः कारणेभ्यो नाभिन्नजातीयं कार्यं जायेतेत्याह । **कथमिति** । अत्र मीमांसकमुत्तरयति । **एकेति** । कार्यानुपलब्धिलिङ्गकानुमानद्वयभङ्गप्रसङ्गेन तन्निराकरोति । **यदि हीति** । **यावदिति** । यत्र क्लृप्तकारणभावं विनाऽप्यन्यस्मादेकजातीयं दृश्यते तत्र विजातीयेष्वेककार्यानुकूला शक्तिः कल्प्यते, न त्वन्यत्रापि । ततो नोक्त-

प्रकाशिका ।

**कार्यानुपलब्धीति** । कार्यलिङ्गकमनुपलब्धिलिङ्गकञ्चेत्यर्थः । अनुपलब्धिश्च कारणाभावोपलब्धि-

मकरन्दः ।

अनुपलब्धिलिङ्गकम् = अभावलिङ्गकम् । अत एव मूलं–कारणव्यावृत्त्या चेति ।

टिप्पणी ।

यत्किञ्चिद्विजात्यापत्तिरेवोचिता स्यात् । अनिष्टांशेऽविशेषस्योभयत्र तुल्यत्वात् इति निपुणतरं विभाव्यम् । **कार्यानुपलब्धिलिङ्गकेति** । कार्यलिङ्गकमनुपलब्धिलिङ्गकञ्चेत्यर्थः । न

ष्यतीति चेन्न। निमित्तस्यादर्शनाद् दृष्टस्य चानिमित्तत्वात्। एतेन सूक्ष्मजातीया-दिति निरस्तम्। अवह्नेरपि तत्सौक्ष्म्याद् धूमोत्पत्त्यापत्तेः। कार्य्यजातिभेदाभे-दयोः समवायिभेदाभेदावेव तन्त्रं, न निमित्तासमवायिनी इति चेन्न। तयोरका-रणत्वप्रसङ्गात्। न हि सति भावमात्रं तत्, किन्तु सत्येव भावः। न च जाति-

बोधनी।

वेति विकल्पं हृदि निधायाह—**निमित्तस्य**–इति। यस्मिन् सत्येव यद् भवति तत् तस्य निमित्तं, इह तु न तथाविधनिमित्तं दृश्यते, ये तु दृश्यन्ते तृणादयो, न ते निमित्तं, तद्व्यतिरे-केऽपि कार्यव्यतिरेकाभावात्; अन्वयमात्रेण शक्तिकल्पनायां रासभादिष्वपि प्रसङ्गः। तेन च ये निमित्ततया दृष्टास्तेषु शक्तिकल्पनमिति नायं समाधिरिति। नन्वस्ति तृणादिष्वपि दृश्यमानस्थूल जातिभेदेषु सूक्ष्मा काचिदेका जातिः, ततः कार्यजातिनियम इत्याशङ्क्याह—**एतेन** इति–कार्यका-रणनिवृत्तिभ्यां कारणकार्यनिवृत्त्यनुमानभङ्गप्रसङ्गेनेति। यद्यस्ति जातिः किमिति नोपलभ्यते इत्य-त्रोक्तं—**सूक्ष्मजातीयात्**-इति। अतिदिष्टमेव हेतुं स्पष्टयति—**अवह्नेः** इति। धूमप्रयोजक-सूक्ष्मजातिमतोऽप्यवह्नेरिति शङ्कते—**कार्य**–इति। निमित्तासमवायिनी भिन्नाभिन्ने इति शेषः। तृणा-दीनां तु निमित्तकारणत्वात् तद्वैजात्येऽपि न कश्चिद् दोष इति भावः। **न**–इति। यदि निमित्तासमवा-यिभेदेऽपि तज्जातीयमेव कार्यमनुवर्त्तते ततस्तयोरकारणत्वमेव स्यादिति। नन्वस्तु कार्यान्वयादेव तयोः कारणत्वमिति तत्राह—**न हि**–इति। तत्कारणत्वं नान्वयमात्रं किन्तु सत्येव कारणे कार्य-भावः, व्यतिरेकोऽप्यङ्गमित्यर्थः। किञ्च, समवाय्यभेदेऽपि अतज्जातीयकार्यदर्शनाच्च तद्भेदाभेदौ कार्यभेदाभेदयोर्निदानमित्याह—**न च**–इति। ननु मा भूत् कार्यमात्रभेदस्य समवायिभेदो निब-न्धनं, किन्तु द्रव्यस्य सतः कार्यस्य प्रकारोऽयं यत् समवायिमात्रभेदेन भेद इति। अतो न गुणा

प्रकाशः।

दोष इत्यर्थः। **निमित्तस्येति**। तृणादिषु कारणतावच्छेदकरूपस्यादर्शनात्। न च शक्तिरेव तथा। अन्योन्याश्रयात्। कारणत्वग्रहे तत्कल्पनम्, अन्यथा रासभेऽपि तदापत्तेः, तत्कल्पनेन च कारणत्वग्रहः। तस्यान्वयव्यतिरेकावच्छेद्यत्वात्, **दृष्टस्य च** तृणत्वादेः, **अनिमित्तत्वात्** कार-णतानवच्छेदकत्वादित्यर्थः। तृणादिषु व्यभिचारमग्निकुर्वद्रूपत्वादतीन्द्रियजातिविशेषाद् ये परि-हरन्ति, तेऽप्यत एव निरस्ता इत्याह। **एतेनेति**। ननु तृणादयोऽग्नौ निमित्तकारणानि। न च तत्साजात्यवैजात्याभ्यां कार्यसाजात्यवैजात्ये, किन्तु समवायिनस्तथात्वात्। तच्चाग्नावस्त्येवेति शङ्कते। **कार्येति**। तथापि तृणादेर्व्यभिचारेण कारणत्वं न स्यादिति परिहरति। **तयोरिति**। **न हीति**। व्यभिचारिणोऽपि कारणत्वापातादिति भावः। **किन्त्विति**। तृणादौ चैकैकाभावेऽप्यग्ने-र्भावात् कारणत्वं न स्यादित्यर्थः। न च समवायिकारणसाजात्यादिकमपि कार्यस्य तथात्वे तन्त्रम्। तदभावेऽपि कार्यवैजात्यदर्शनादित्याह। **न चेति**।

प्रकाशिका

रत्र। अत एव मूले कारणव्यावृत्त्या चेति। **तथापि तृणादेरिति**। यद्यपि व्यक्त्यपेक्षयैव नियमोऽस्त्विति पूर्वपक्षोपक्रमात्, व्यभिचारेऽपि व्यक्त्योः कार्यकारणभावोऽविरुद्ध एव। तथापि रासभादेरपि व्यक्त्यपेक्षया नियमसत्त्वात् कारणत्वं स्यादिति भयेन जात्यपेक्षयैव कारणत्वं वाच्य-

टिप्पणी।

तु कार्य्यानुपलब्धेरेकस्या लिङ्गत्वं विवक्षितम् ग्रन्थविरोधात्। अनुपलब्धिः कारणाभावोपलब्धिः, न तु कारणोपलब्ध्यभावः। ग्रन्थे तल्लिङ्गकानुमानभङ्गस्याप्रदर्शनात्। अत एव **कारणव्यावृत्त्येति** मूले व्यावृत्तिरभावः। अवसीयेतानुमीयेतेत्यर्थः। तथा च कारणाभावस्य लिङ्गत्वं मूलप्राप्तमिति भावः

**नियमे समवायिकारणमात्रं निबन्धनमपि तु सामग्री । अन्यथा द्रव्यगुणकर्म्मणामेकोपादानकत्वे विजातीयत्वं न स्यात् । न च कार्यद्रव्यस्यैषा रीतिरिति युक्तम् । आरब्धदुग्धैरेवावयवैर्दध्यारम्भदर्शनात् ।**

बोधनी ।

दिभिर्व्यभिचार इत्यत्राह—**न च कार्यद्रव्यस्य**-इति । न च दुग्धमेव दध्यारभते न तदवयवा इति वाच्यम् । कार्यद्रव्यस्यानेकद्रव्यारभ्यत्वनियमाद् दधिकाले दुग्धानुवृत्त्यभावाच्च । न च दुग्धाम्लद्रव्याभ्यामेवारम्भः, विजातीयानां सहारम्भानुपपत्तेः । तेन दुग्धावयवा अम्लसंयोगाद् विनष्टदुग्धकार्या दध्यारभन्त इति न समवायिभेदनिबन्धनः कार्यद्रव्यभेदोऽपीति ।

प्रकाशः ।

**अपि त्विति** । सामग्री च तृणादिघटिता भिन्नैवेति भावः । **अन्यथेति** । न च समवायिनो द्रव्यस्याभेदेऽपि कारणतावच्छेदकधर्मभेदाद् द्रव्यादीनां जातिभेदः स्यात् । तथाहि द्रव्यजनने स्पर्शवत्त्वमवच्छेदकं, गुणकर्मजनने तु द्रव्यत्वमूर्त्तत्वे तथेति वाच्यम् । द्रव्यत्वेनैकेनैव रूपेण संयोगविभागौ प्रति कारणत्वेऽपि तयोर्जातिभेदात्, कारणतावच्छेदकस्याकारणत्वाच्चेति भावः । न च कार्यमात्ररीतिरेषा, अपि तु द्रव्यस्य सतः, अतो न द्रव्यादिभिः समानोपादानैर्व्यभिचार इत्याह । **न चेति** । एवं सति समवाय्यभेदे कार्यद्रव्यं दधिदुग्धरूपं न भिद्येत क्षीरपरमाणव एवाम्लसंयोगान्नष्टकार्यद्रव्या दध्यारभन्ते । अत एव, क्षीरं नष्टं दधि जातमिति लौकिकोऽयमनुभव इत्याह । **आरब्धेति** ।

नन्वतीन्द्रियेषु परमाणुषु दर्शनाभावाद् दध्यारम्भको योग्योऽवयवो वाच्यः । तत्र च क्षीरत्वं योग्यानुपलब्धिबाधितम् । प्रत्युतावयवावयविवृत्तिजातित्वेन पृथिवीत्ववद् दधित्वस्य परमाणुवृत्तित्वमनुमेयम् । न च तन्तुत्वेन व्यभिचारः, तस्य पटावयवे अंश्ववयविनि वृत्तेरिति वाच्यम् ।

प्रकाशिका ।

मिति स्वमतावष्टम्भेनेदमुक्तं **कारणतावच्छेदकधर्मेति** । अवच्छेदकभेदादेव च कार्यभेद इत्यर्थः । कारणतावच्छेदकस्येति लाघवात्, कारणभेदस्यैव कार्यभेदप्रयोजकत्वादिति भावः । **क्षीरपरमाणव एवेति** । तादृशदुग्धध्वंसविशिष्टाः पाकजाम्लरससहकृताश्चेति शेषः । **अत एवेति** । क्षीरनाशदध्युत्पत्त्योः सामानाधिकरण्यानुभवान्नाशस्य च प्रतियोगिसमवायिवृत्तित्वादेकमधिकरणं क्षीरदध्नोरित्यर्थः ।

**प्रत्युतेति** । तथा च दधित्वाश्रयपरमाणोरेव दुग्धनाशे सति दध्यारम्भ इति नैकोपादानकत्वं तयोरिति भावः । **अवयवावयवीति** । कार्यकारणवृत्तित्वमात्रोक्तौ रूपत्वादौ व्यभिचार इत्यवयवावयवीति । अत्रापि समवायिसमवेतवृत्तित्वादित्येवार्थो न तु कारणत्वघटितो व्यर्थविशेषणत्वादित्यवधेयम् । जातिपदं च द्वित्वादौ व्यभिचारवारणाय । **कार्यत्वे सतीति** । द्वितीयस्य घटादौ व्यभिचारवारकतया प्रथमस्यानवस्थावारकतया व्याप्तिग्राहकत्वमित्यवधेयम् । अनवस्थाभिया कस्यचन दध्नो

मकरन्दः ।

**कारणताऽवच्छेदकस्येति** । कारणभेदस्यैव तद्भेदप्रयोजकत्वादिति भावः । **प्रत्युतेति** । तथाच तत्तत्परमाणुभिरेव तत्तदारम्भ इति नैकोपादानकत्वं तयोरिति भावः । अत्र च जातिपदं द्वित्वादौ व्यभिचारवारणाय । न च कार्यकारणोभयवृत्तित्वादित्येवास्तु कृतमवयवादिपर्यन्तेनेति वाच्यम् । रूपत्वादौ व्यभिचारात् । न चैवमपि समवायिकार्यवृत्तित्वादित्येवास्तु, तत्रैव तात्पर्यादित्याहुः ।

दधि ससमवायिकारणकं भावकार्यत्वादित्यनुमानं लाघवाख्यतर्कसहकृतं दुग्धारम्भकपरमाणुमेव विषयीकरोति, अन्यथा गौरवात् । दुग्धं विनाऽपि कदाचिद् दध्यापत्तेश्चेत्याशयवानाह ।

प्रकाशः ।

तदवयविवृत्तित्वे सति तदवयववृत्तित्वस्य विवक्षितत्वात्, द्व्यणुकवृत्तिजातित्वस्य लिङ्गत्वाद्वा । न च दधित्वं न परमाणुवृत्ति पृथिवीत्वव्याप्यजातित्वात् पटत्ववदिति वाच्यम् । व्यञ्जकाभावस्योपाधित्वात् । पटत्वव्यञ्जकसंस्थानविशेषस्य परमाणावभावाद्दधित्वव्यञ्जकरसविशेषस्य च तत्र सत्त्वात् । न च रसविशेषवदवयवित्वं तद्व्यञ्जकं, गौरवात् । गन्धवदवयवित्वस्य पृथिवीत्वव्यञ्जकत्वे तस्यापि परमाणाववृत्त्यापत्तेश्च । यद्वा, दधिद्व्यणुकं दधित्वाश्रयोपादानकं, कार्यत्वे सति दधित्वात् । स्थूलदधिवत् । न च कार्यत्वं व्यर्थं, स्वतोऽनैकान्तिकपरिहारार्थत्वात् । दधिद्व्यणुकोपादानं वा न क्षीरारम्भकं, दध्यवयवत्वात् दध्यारम्भकदध्यवयववत् ॥

अत्रोच्यते । क्षीरपरमाणूनां तत्रावश्यकत्वाद् य एवावयवाः क्षीरमारब्धवन्तस्त एव सहकारिविशेषाद्दध्यारभन्ते, लाघवात् । अनुमाने चानुकूलतर्काभावः । दधित्वं यदि पार्थिवपरमाणुवृत्तिजातिः स्यात् पटवृत्ति स्यादिति प्रतिकूलतर्कप्रतिहतत्वं च । न च लाघवोपकार्यमानाभावः ।

प्रकाशिका

दध्यनारभ्यत्वे तत्रैव व्यभिचार इत्याशयेनाह । **स्वत इति** ।

**क्षीरपरमाणूनामिति** । तथाच दधिद्व्यणुकं ससमवायिकारणकं भावकार्यत्वादित्यनुमानं लाघवसहकृतं दुग्धोपादानोपादेयत्वं विषयीकरोतीति भावः। **अनुमाने चेति** । पूर्वपक्षानुमान इत्यर्थः । **दधित्वं यदीति** । अत्र जलत्वे व्यभिचार इति पार्थिवपदम् , स्वमते दुग्धत्वादौ व्यभिचार इति परमपदम् , घटत्वे व्यभिचार इति अणुपदम् , परमाणुपरिमाणे व्यभिचार इति जातिपदम् । नच तर्कोऽप्ययं शिथिलमूल इति वाच्यम् । परमाणूनाम् हि परम्परया पटारम्भे पार्थिवपरमाणुत्वमेव प्रयोजकं पटप्रयोजकजातेस्तत्राभावात् , तत्स्वीकारे तज्जातेर्द्व्यणुकवृत्तिजातित्वापत्तेः । तथासति चावयविवृत्तिजातित्वेन तदारब्धपरम्परावृत्तित्वे पटवृत्तित्वापत्तेः । तत्र चानुपलम्भबाधः । एवं च पार्थिवपरमाणुत्वस्यैव पटारम्भप्रयोजकत्वे दधित्वाश्रयेण परमाणुनापि नित्येन स्वरूपयोग्येन च कदाचित् पटारम्भेऽवयवावयविवृत्तिजातित्वेन दधित्वस्य पटवृत्तित्वापत्तेरिति भावः । न च द्रव्यत्वसाक्षाद्व्याप्यपार्थिवपरमाणुवृत्तिजातित्वमेव पटवृत्तिताप्रयोजकमिति वाच्यम् । गौरवात् सत्तायाः पटावृत्तित्वप्रसङ्गाच्चेति । तर्कस्य स्वातन्त्र्येणासाधकत्वमित्याशयेनाह । **न चेति** ।

मकरन्दः ।

**क्षीरपरमाणूनामिति** । अनुमाने पूर्वपक्षानुमाने । **दधित्वमिति** । जलत्वे व्यभिचारादाह । **पार्थिवेति** । स्वमते दुग्धत्वे व्यभिचारादाह । **परमाण्विति** । परमाणुपरिमाणादौ व्यभिचारादाह, जातिपदम् । न च तादृशद्रव्यत्वसाक्षाद्व्याप्यजातित्वं पटवृत्तित्वप्रयोजकमिति वाच्यम् । साक्षात्त्वस्य गुरुत्वात् । सत्तायाः पटावृत्तित्वप्रसङ्गाच्च । नन्वेवमप्रयोजकतयाऽस्यैव तर्कस्य शिथिलमूलत्वमिति चेत् । अत्राहुः । न हि परम्परया पटारम्भके परमाणौ दध्यारम्भकपरमाणुवृत्तिदधित्ववत्तयाऽपि जातिरङ्गीक्रियते । तस्या अपि पटे प्रत्ययापत्तेः । अवयवावयविवृत्तिजातेरवयविवृत्तित्वनियमात् । तथाचान्यस्यावच्छेदकस्याभावात् पृथिवीपरमाणुत्वादिकमेव तत्तद्द्व्यणुकजनकतावच्छेदकम् । एवञ्च दधिद्व्यणुकाद्याश्रयपरमाणवोऽपि तत्र स्वरूपयोग्या इति नित्यस्य सहकार्यवश्यम्भावे तैरपि पटजनने पूर्वोक्तयुक्त्या तज्जातेः पटवृत्तिताऽऽपत्तिरित्यत्र तात्पर्यमि-

टिप्पणी ।

**व्यञ्जकाभावस्योपाधित्वादिति** । स्वव्यञ्जकाभाववत्परमाणुकत्वे तात्पर्य्यम्, व्यञ्जकाभावश्च व्यञ्जकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकः । विशेष्यत्वविशेषसम्बन्धेन पटत्वादिप्रत्यक्षं प्रति संस्थानविशेषादेः स्वसमवायिसमवेतत्वविशेषेण व्यञ्जकत्वात् । तेन च तस्य परमाणावसम्भवाद् दधित्वव्यञ्जकस्य रसविशेषस्य समवायेन परमाणौ सम्भवादिति भावः ।

प्रकाशः ।

दध्यारम्भकः परमाणुर्न दधित्वाश्रयः नित्यपार्थिवत्वात् पटारम्भकपरमाणुवदित्यनुमानस्य सत्त्वात् । न च व्यञ्जकाऽसत्त्वमुपाधिः ? दधित्वाश्रयपरमाणौ च रसविशेषवत्त्वं दधित्वव्यञ्जकमस्तीति वाच्यम् । प्रतिकूलतर्केण रसविशेषवदवयवित्वस्य तद्व्यञ्जकत्वात् । किञ्चैवं दुग्धोत्कर्षाप-

प्रकाशिका ।

न च क्षीरपरमाणुतदन्यपरमाणुविषयकत्वसम्भवेन पूर्वोक्तं लाघवं सहकारि वक्ष्यमाणञ्चानुमानं न साक्षात्परमाणुसाधकमिति वाच्यम् । दधिद्व्यणुकं ससमवायिकारणकं भावकार्यत्वादित्यनुमानस्य लाघवोपकार्यस्य वक्ष्यमाणानुमानोपकारतया न च लाघवोपकार्यमानाभावः । प्रकृतानुमानस्यैव तादृशस्य सत्त्वादिति ग्रन्थाशयात् । **नित्यपार्थिवत्वादिति** । पार्थिवपदं कालादौ व्यभिचारवारणाय दधित्वाधारत्वाभावस्य साध्यत्वात् । नच सोऽप्यभावः कालेऽस्त्येवेति साध्यसत्त्वान्न व्यभिचार इति वाच्यम् । तथासति हेतोः साध्याभावसामानाधिकरण्यात् । नच सोऽभावः प्रतियोगिसमानाधिकरणतया न व्यभिचारप्रयोजक इति वाच्यम् । स्वसत्ताविरोधिप्रतियोगिसत्तासमानाधिकरणस्य प्रतियोगिसमानाधिकरणपदार्थत्वात् । संयोगाभावस्य चैकावच्छेदेन स्वसत्ताविरोधिसंयोगसत्तासामानाधिकरण्यादिति दिक् । **दधित्वाश्रयेति** । तत्त्वेनाभिमतपरमाणावित्यर्थः । **प्रतिकूलतर्केणेति** । पटवृत्तित्वापादकपूर्वोक्ततर्केणेत्यर्थः । एवं च गौरवमप्यवयवित्वप्रवेशे प्रामाणिकतया न दोषाय । न वा गन्धवदवयवित्वव्यञ्जकत्वप्रतिवन्दिः । तत्र गौरवस्याप्रामाणिकत्वात् । किं च तत्रावयवित्वप्रवेशे पृथिवीत्वस्य परमाणावभावे गन्धस्याप्यभावः स्यात् । पृथिवीत्वस्यैव तत्समवायिकारणतावच्छेदकत्वात् । तथाच परमाणौ गन्धाभावे तदारब्धपरम्पराया अपि निर्गन्धत्वापत्तिरसमवायिकारणाभावात् । न च रसविशेषसमवायिकारणतावच्छेदकदधित्वाभावे परमाणौ रसविशेषाभावे तदारब्धपरम्पराया अपि तादृशरसविशेषो न स्यादिति वाच्यम् । पृथिवीत्वस्यैव तादृशरससमवायिकारणतावच्छेदकत्वात् अन्यत्र च न रसविशेषोत्पत्तिः, सहकारिविरहात् । परमाणावपि न सर्वदा तदुत्पत्तिः, अव्यवहितदुग्धध्वंसादिसहकारिविरहात् । सर्वत्र च परमाणौ तादृग्रस-

मकरन्दः ।

ति । **न चेति** । यद्यपि प्रमाणविषयीभूतविषयस्य लाघवस्य सहकारितया वक्ष्यमाणस्य न लाघवोपकार्यत्वं तथाप्युक्तस्य भावकार्यस्य तथात्वम् । तथाच तेनैव तदवयवतायां सिद्धायामेतस्य कथञ्चित्तदुपकार्यत्वम् । एवञ्च लाघवोपकार्योपकार्यमानाभावो न चेति फक्किकार्थ इत्याहुः ।

**नित्येति** । एतच्च दध्यवयविनि व्यभिचारवारणाय । काले व्यभिचारवारणाय, **पार्थिवत्वादिति** । न च समवायगर्भत्वम्, अन्यथा परम्परासम्बन्धमादाय व्यभिचारापत्तेरिति वाच्यम् । एवमपि साक्षात्सम्बन्धगर्भस्य निर्दोषत्वात् । **दधित्वाश्रयेति** । दधित्वाश्रयाभिमतपरमाणावित्यर्थः । अवयवित्वप्रवेशे गौरवादिति भावः । **प्रतिकूलेति** । पूर्वोक्तप्रतिकूलतर्केणेत्यर्थः । तथाच गौरवमपि प्रामाणिकमिति भावः । अत एव गन्धवदवयवित्वस्य पृथिवीत्वव्यञ्जकत्वे तदपि परमाणौ न वर्तेतेति प्रतिवन्दिः परास्ता, तत्र गौरवस्य प्रामाणिकत्वाभावात् । किञ्चैवं गन्धसमवायिकारणतावच्छेदकपृथिवीत्वस्याभावे निर्गन्धत्वापत्तौ तदारब्धकार्यस्य निर्गन्धत्वप्रसङ्गात् । नचैवं दधित्वव्यञ्जकरसविशेषसमवायिकारणतावच्छेदकतया दधित्वं परमाणावपि, अन्यथा परमाणौ तद्रसाभावेन तदारब्धदध्न्यपि तदभावापत्तेरिति वाच्यम् । पृथिवीत्वस्यैव तदवच्छेदकत्वात् । घटादौ सहकारिविरहे तदनुत्पादात् । तदारम्भकपरमाणौ च तदुत्पत्तिरिष्टैव । अत एव तेन कदाचिद् दध्यारम्भोऽपि । अत एव मधुराम्लरससमवायिकारणतावच्छेदकतया पृथिवीत्वसिद्धिरुक्ता वर्द्धमानचरणैरिति दिक् ।

प्रकाशः ।

कर्षयोर्दध्युत्कर्षापकर्षप्रयोजकत्वानुपपत्तिः । अनुपादानोत्कर्षादेरनुपादेयोत्कर्षाद्यप्रयोजकत्वात् । न चेन्धनोत्कर्षादिना वह्नेस्तथात्वेन व्यभिचारः । यस्योद्भूतरूपस्योत्कर्षार्थं तद्वृत्तिद्रव्यत्वव्याप्यजातीयं यदुपादीयते, तत् तदुपादानोपादेयमिति व्याप्तेः । इन्धने तु तद्वृत्तिद्रव्यत्वव्याप्यजातेरभावः । उद्भूतरूपस्येति विशेषणान्नानुद्भूतरूपवह्न्युत्कर्षार्थमुपात्तवह्न्युत्कर्षेण व्यभिचारः । उपादेयता च साक्षात्परम्परासाधारणी विवक्षितेति न पटोत्कर्षार्थोपात्ततन्तूत्कर्षेण व्यभिचारः ।

प्रकाशिका ।

विशेषः स्यादित्यत्रेष्टापत्तिरेव, कदाचित् तत्सत्त्वात् । अत एव मधुराम्लादिरससमवायिकारणतावच्छेदकतया पृथिवीत्वसिद्धिरिति **वर्द्धमानचरणाः** । एवं च व्यञ्जकासत्त्व उपाधौ साधनव्यापकत्वमिति भावः । यस्येति अत्रानुद्भूतरूपभर्जनकपालीयवन्ह्युत्कर्षार्थमुपादीयमान उद्भूतरूपोत्कृष्टवह्नौ व्यभिचार इति उद्भूतरूपस्येति विशेषणम् । वन्ह्युत्कर्षार्थमुपादीयमाने उत्कृष्टेन्धने सति व्यभिचार इति तद्वृत्तीत्यादि । इन्धनेऽपि वह्निवृत्तिसत्तासत्त्वेन स एव व्यभिचार इति द्रव्यत्वव्याप्येति । वह्नीन्धनान्यतरत्वमादाय स एव दोष इति जातिपदम् । व्याप्यत्वञ्च भेदगर्भमतो न द्रव्यत्वमादाय स एव व्यभिचारः । अतितप्ततैलस्थोद्भूतरूपदहनोत्कर्षार्थमुपादीयमाने भर्जनकपालीयोत्कृष्टानुद्भूतरूपवह्नौ सति व्यभिचार इति । उपादीयत इति । उपादानम्=प्रवृत्तिः सा, चाप्रत्यक्षे तस्मिन् न सम्भवतीति भावः । अत एव घटोत्कर्षार्थके तत्परम्परारम्भकपरमाणौ न व्यभिचारः । न च दुग्धस्य दधिप्रतिबन्धकतया न तदर्थकत्वमिति वाच्यम् । नियमतो यदनन्तरं यद् भवति तस्यैव तदर्थकत्वात् । अत एवोद्भूतरूपस्येत्यादि विशेषणं सार्थकम् । अन्यथोद्भूतरूपस्यानुद्भूतरूपवह्न्युत्कर्षार्थकत्वाभावे तद्वैयर्थ्यात् । यदि चोद्भूतरूपस्यापि तदर्थकत्वं तदानुद्भूतरूपे व्यापकसत्त्वेन व्यभिचारप्रसङ्गात् । घटार्थमुपादीयमाने दण्डस्थले व्यभिचार इति उत्कर्षपदम् । उपादानत्वमुपादेयत्वञ्च साक्षात्परम्परासाधारणमित्याकर एव व्यक्तमतो न दध्युत्कर्षार्थोपात्तस्थूलदुग्धे व्यभिचारः । ननु शरीरोत्कर्षार्थोपात्तोत्कृष्टभक्ष्ये सति व्यभिचारः । अथ तुल्ययुक्तिकतया तत्रापि साध्यसत्वान्न व्यभिचारः, अत एव उपादेयतावच्छेदकधर्मावच्छिन्नस्य तद्वृत्तिद्रव्यत्वव्याप्यजातीयत्वं विवक्षितम् । नच भक्ष्यस्थले तत् उपादेयतावच्छेदकस्य जलसाधारण्येन तदवच्छिन्ने तज्जातीयत्वाभावादिति मिश्रमतमपास्तम् यथाश्रुत एवा-

मकरन्दः ।

**तद्व्यञ्जकत्वा**दिति । तथाच साधनव्यापकत्वमुपाधेरिति भावः । **यस्ये**ति । वह्न्युत्कर्षार्थमुपादीयमानेन्धने व्यभिचारादाह । **तद्वृत्ती**ति । सत्तामादाय दोषतादवस्थ्यादाह । **द्रव्यत्वव्याप्ये**ति । व्याप्तिश्च भेदगर्भेति न द्रव्यत्वमादाय दोषतादवस्थ्यमिति भावः । तथाऽपि तैलोत्थितोद्भूतरूपदहनार्थकेऽनुद्भूतरूपतैलस्थदहने व्यभिचारः । अनुद्भूतान्नोद्भूतमिति मतेनैवास्य कृतत्वादित्यत आह । **उपादीयत** इति । **उपादानं**=प्रवृत्तिः । तस्य चाप्रत्यक्षत्वान्न तद्योग्यतेति न दोषः । अत एव घटाद्युत्कर्षार्थके मृदारम्भके परमाण्वादौ न व्यभिचारः । न चैतन्मते अनुद्भूतरूपस्योद्भूतरूपार्थकत्वाभावादेव न व्यभिचार इति किं तद्वारणार्थं विशेषणोपादानेनेति वाच्यम् । नियमतो यदनन्तरं यद्भवति तस्यैव तदर्थकत्वेन विवक्षितत्वात् । तस्य च तत्सहचरितावयवान्तरमादाय तत्रापि सत्त्वात् । अन्यथा दुग्धस्यापि दधिप्रतिबन्धकतया तथात्वं न स्यात् । ननु धूमार्थोपादीयमानार्द्रेन्धनोत्कर्षे व्यभिचारः । न चाऽऽर्द्रत्वं जलसम्बन्धो, न तद्विशिष्टे तद्वृत्तिद्रव्यत्वव्याप्यजातिरस्तीति वाच्यम् । एवमपि शरीरोत्कर्षार्थोपादीयमानभक्ष्योत्कर्षे व्यभिचारावारणादित्याशङ्क्य उपादेयतावच्छेदकधर्मावच्छेदेन तद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षितम् । न च शरीरोत्कर्षार्थोपादीयमाने उपादेयतावच्छेदकावच्छिन्नं पार्थिवमात्रम्,

प्रकाशः ।

न च यद्दधि न तद् दुग्धारभ्यमिति स्थूले दर्शनाद्दधिद्व्यणुकं न दुग्धत्वाश्रयपरमाण्वारभ्यमिति वाच्यम् । दधिद्व्यणुकारम्भके परमाणौ दुग्धत्वस्याऽवृत्तेः । सत्तान्यद्रव्यत्वसाक्षाद्व्याप्यजातेरेव

प्रकाशिका ।

व्यभिचारादितिचेन्न ।तथापि पात्रोत्कर्षप्रयुक्तपरिमाणोत्कर्षे दध्नि व्यभिचारादिति मैवम् । तदजनकमित्यस्योपादीयत इत्यत्र विशेषणत्वात् । नचैवमुक्तविशेषणेनैव दण्डवारणे उत्कर्षपदवैयर्थ्यम् ।दण्डावयवमादाय व्यभिचारवारकत्वात् । नच पात्रावयवमादाय तथापि व्यभिचार इति वाच्यम् । आधारत्वेन तस्यापि जनकत्वात् । दृष्टान्तश्चात्रमहापटमुपादाय खण्डपटो द्रष्टव्यः । नचैवमिन्धनमादाय वह्नौ व्यभिचार एव नेति तद्वृत्तीत्यादि व्यर्थमिति वाच्यम् । शरीरोत्कर्षार्थकजलोत्कर्षस्थले व्यभिचारवारकत्वात् । अग्रिमप्रकाशे च पटोत्कर्षार्थोपात्ततन्तूत्कर्षेणेत्यत्र तन्तुपदमंशुपरमतो न तेन विरोधः । केचित्तु तदुपादानोपादेयत्वं तद्योग्यतामात्रमिति पात्रोपादानोपादेयत्वं दध्नो वर्त्तत एवेति न व्यभिचार इत्याहुः । उत्कर्षपदं च तन्मते सम्पातायातमिति द्रष्टव्यम् । उभयमतेऽपि च उद्भूतस्पर्शस्येति विशेषणम्, तेनालोकोत्कर्षार्थोपात्तदीपोत्कर्षस्थले न व्यभिचारः ।नचार्द्रेन्धनोत्कर्षे धूमोत्कर्षार्थमुपाते सति व्यभिचार इति वाच्यम् । तत्र हीन्धनमात्रस्य न तदर्थमुपादानमपित्वार्द्रेन्धनस्य, आर्द्रता च जलसम्बन्धरूपेति तद्वृत्तीत्यादिपदेनैव वारणात् । मिश्रास्तु यदर्थं यदुपादीयते तत्तदुपादानोपादेयमित्यत्र वैजात्यं गुणविरोधश्च बाधकमिति विशेषणाभ्यां तदुभयाभावोपवर्णनं बाधकसामान्याभावपरमिति न क्वापि व्यभिचार इति वदन्ति । **न दुग्धत्वेति** । परमाणुग्रहणं सम्पातायातम्, न चाग्रेतनसिद्धसाधनाभावः, द्व्यणुकारम्भकस्य परमाणुतानियमेन तत्सम्भवादिति मिश्राः । केचित्तु कालं दुग्धत्वाश्रयमादाय बाध इति परमाणुपदमित्याहुः । **दधिद्व्यणुकेति** । तथाच प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः । मिश्राणां तुमते परमाणुपदत्यागे सिद्धसाधनमिति भावः । नच यद्दधि तन्न दुग्धारम्भकारभ्यमिति व्याप्तिः ।अप्रयोजकत्वादिति ध्येयम् ।

**सत्तान्येति** । सत्तान्यपरमाणुवृत्तिजातेर्द्रव्यत्वसाक्षात्व्याप्यत्वनियमादित्यर्थः । नन्वेवं

मकरन्दः ।

जलस्यापि तथाभावेनौदर्य्यानलदाह्यमात्रस्य रसवन्मात्रस्य तथाभावादिति समादधुः । तच्चिन्त्यम् । तत्र पक्षसमत्वेन व्यभिचाराभावात्तद्विवक्षाया वैयर्थ्यात् । आहारपरिणतिभेदेन शरीरभेदाभ्युपगमाच्च । किञ्चैवमपि घटोत्कर्षार्थोपादीयमानदण्डोत्कर्षेण व्यभिचारः । यदि च योग्यताविवक्षायां दण्डारम्भकपरमाणुना कदाचिद्घटारम्भात् साध्यसत्त्वे न व्यभिचारः, तदा भक्ष्यारम्भकपरमाणुनापि शरीरारम्भाविरोधः । अपि चालोकोत्कर्षार्थोपादीयमानोत्कृष्टप्रदीपादौ व्यभिचारः । तस्मादुद्भूतस्पर्शस्येत्यपि विशेषणं देयम् । यद्यपि योग्यताविवक्षायां दण्डघटवत् कदाचित् दध्नोऽपि दुग्धोपादानोपादेयत्वे विवक्षितसाध्यस्य फलोपधानगर्भस्य न सिद्धिः । तदविवक्षायां घटोत्कर्षार्थकदण्डोत्कर्षेण व्यभिचार एव । तथापि परिमाणोत्कर्षनिबन्धन एवोत्कर्षो विवक्षितः । घटे च स न दण्डोत्कर्षनिबन्धनः, किन्त्ववयवोत्कर्षनिबन्धन एवेत्येके । एतदनुशयादेव **यद्द्रव्येत्यादिकमित्यन्ये** । यदर्थं यदुपादीयते तत्तदुपादानोपादेयमित्यत्र वैजात्यं गुणविरोधश्च बाधकमिति प्रकृते तदुभयाभावोपवर्णनम् । उपलक्षणतया च बाधकाभावे सतीत्यत्र तात्पर्यमिति न व्यभिचारशङ्केत्यप्याहुः ।

**न दुग्धत्वेति** । दुग्धत्वाश्रयस्य कालस्य जनकत्वाद् बाध इत्यत उक्तं, **परमाण्विति** । एतेन, परमाणुग्रहणं स्वरूपकथनाय । न चाग्रेतनसिद्धसाधनासम्भवः, द्व्यणुकारम्भकस्य परमाणुत्वनियमेन तत्सम्भवादित्यपास्तम् । **दधिद्व्यणुकेति** । तथाच प्रतियोग्यप्रसिद्ध्या साध्याऽ

प्रकाशः ।

परमाणौ वृत्तेः, द्रव्यत्वस्यापि द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् । तद्भिन्नतद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वस्यैव साक्षाद्व्याप्यत्वरूपत्वात् । नचान्ये परमाणवस्तत्रादृष्टाकृष्टा दध्यारम्भकाः । तदुत्कर्षाद्यनुविधानानुपपत्तेरुक्तत्वात् । दध्यर्थं दुग्धोपादानानुपपत्तेश्च । अपि च, यद्द्रव्यध्वंसजन्यं यद् द्रव्यं

प्रकाशिका ।

द्रव्यत्वमेव परमाणौ न वर्त्तत इत्यत आह—**द्रव्यत्वस्यापीति** । **तद्भिन्नेति** । घटत्वस्यापि द्रव्यत्वसाक्षाद्व्याप्यत्वं मा भूदिति सत्यन्तम् । तस्य तद्व्याप्यजात्यव्याप्यत्वमर्थः, अन्यथोपाधिमादायासम्भवापत्तेः । तत्रापि पृथिवीत्वं द्रव्यत्वं च द्रव्यत्वव्याप्यमादायासम्भव इति तद्भिन्नपदं तच्छब्दश्च व्याप्यव्यापकत्वाभिमतोभयपरामर्षकः, सत्ताया द्रव्यत्वसाक्षाद्व्याप्यत्वं मा भूदिति तद्व्याप्यत्वं विशेषणम् । नन्वेवमात्मत्वादौ जात्यन्तराव्यापकेऽव्याप्तिः, तद्भिन्नतद्व्याप्यजात्यप्रसिद्धेरिति । अत्र केचित् द्रव्यत्वसाक्षाद्व्याप्यस्यैवात्र लक्ष्यतया उक्तव्याप्तेरदोषत्वमिति । वस्तुतो व्याप्यपदस्याव्यापकपरतया तदव्यापकजात्यव्याप्यत्वं सत्यन्तार्थ इति व्यधिकरणजातिमादायैव प्रसिद्धिः । अत्राद्यं तत्पदं साक्षाद्व्याप्यत्वाभिमतपरम् । अन्यच्च व्यापकत्वाभिमतपरम् । मिश्रास्तु खण्डशः प्रसिद्ध्या तद्व्याप्यजातित्वाभावात्तदुभयभिन्नयावत्स्वव्यापकधर्माकत्वमुक्तलक्षणार्थः । अत्र चाद्यं तत्पदं व्यापकत्वाभिमतपरम् । तदुभयपदं व्याप्यव्यापकत्वाभिमतपरम् स्वपदं च व्याप्यत्वाभिमतपरम् । एवं च स्वव्यापकमुपाधिमादाय चरमजातौ प्रसिद्धिरिति वदन्ति । वयं तु तद्भिन्नेत्यत्र तत्पदं व्यापकत्वाभिमतपरं व्याप्यपदं प्रथमं तत्समानाधिकरणात्यन्ताभावप्रतियोगिपरं द्वितीयव्याप्यपदन्तु न्यूनवृत्तिपरम् । एवं च द्रव्यत्वभिन्नद्रव्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगिपृथिवीत्वादिन्यूनवृत्तित्वाभावः पृथिवीत्वे । घटत्वभिन्नघटत्वसमानाधिकरणात्यन्ताभावप्रतियोगिगुणत्वन्यूनवृत्तित्वाभावो घटत्वे चरमजातौ, साधारणतदधिकरणवृत्तित्वे सति यत्किञ्चित्तदधिकरणावृत्तेर्न्यूनवृत्तिपदार्थत्वादिति ब्रूमः । उत्कर्षाद्यनुविधानं दध्यर्थं दुग्धोपादानं च निमित्तकारणत्वेऽप्युपपद्यत इत्यरुचेराह । **यद्द्रव्येति** । अत्रापि विपक्षे बाध-

मकरन्दः ।

प्रसिद्धिरिति भावः । सिद्धसाधनमिति भाव इत्यन्ये । तर्हि द्रव्यत्वमपि तत्र न वर्त्ततेत्यत आह—**द्रव्यत्वस्यापीति** । **तद्भिन्नेति** । तद्व्याप्यत्वमात्रं परम्पराव्याप्येऽतिव्याप्तमित्यत उक्तं **सत्यन्तम्** । तथापि तद्व्याप्याऽव्याप्यत्वमसम्भवि, पृथिवीत्वादेर्द्रव्यत्वादिव्याप्यीभूतद्रव्यत्वादिव्याप्यत्वात्, द्रव्यत्वादिव्याप्यीभूतपृथिवीत्वादिव्याप्यत्वाच्च । अभेदेऽपि व्याप्तिसत्त्वादित्यत उक्तं, **तद्भिन्नेति** । साक्षाद्व्याप्यव्यापकाभिमतोभयभिन्नेत्यर्थः । सत्तादेरपि द्रव्यत्वादिसाक्षाद्व्याप्यत्वापत्तिरिति चरमं **तद्व्याप्यत्वमुक्तम्** । न च तदुभयभिन्नद्रव्यत्वादिव्याप्यगुणवत्त्वादिव्याप्यतया पृथिवीत्वादावसम्भव इति वाच्यम् । तद्भिन्नतद्व्याप्यजात्यव्याप्यत्वे सतीत्यर्थात् । नन्वेवं चरमजातेः स्वसाक्षाद्व्याप्यत्वं न स्यात् । स्वभिन्नस्वव्याप्यजात्यप्रसिद्धेः । न च स्वस्य स्वसाक्षाद्व्याप्यत्वं न विवक्षितमिति वाच्यम् । द्रव्यत्वस्यापि स्वसाक्षाद्व्याप्यत्वमित्युपक्रमविरोधादिति चेत् । मैवम् । द्रव्यत्वसाक्षाद्व्याप्यत्वमात्रस्यैव प्रकृतत्वेन लक्ष्यत्वादित्याहुः । वस्तुतस्तु, तद्भिन्नतदव्यापकजात्यव्याप्यत्वे सति तद्व्याप्यत्वं विवक्षितम् । तत्पदं साक्षाद्व्याप्यत्वाभिमतमात्रपरम् । अन्यच्च व्यापकत्वाभिमतपरमित्यवधेयम् ।

**यद्द्रव्येति** । घटध्वंसजन्ये घटरूपादिध्वंसे व्यभिचारादाह चरमद्रव्यपदम् । यद्द्रव्याभावजन्यमिति कृते प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारः स्यादिति ध्वंसपर्य्यन्तमुपात्तम् । न च तद्ध्वंसस्यापि जनकत्वाद् दोषतादवस्थ्यम् । ध्वंसत्वेन जनकत्वस्यात्र विवक्षणात् ।

प्रकाशः ।

भवति तत्तदुपादानोपादेयं यथा महापटध्वंसजन्यः खण्डपट इति नियमाद् दुग्धध्वंसजन्यं दधि दुग्धोपादानोपादेयम् । न च प्रतिबन्धकद्रव्यध्वंसजन्यद्रव्येण व्यभिचारः । ध्वंसत्वेन कारणत्वस्य विवक्षितत्वात् । प्रतिबन्धकाभावस्य च संसर्गाभावत्वेन हेतुत्वात् । न च स्थूलदुग्धध्वंसजन्यं दधि न तदवयवजन्यमिति व्यभिचारः । परमाणुश्च न तदवयव इति वाच्यम् । साक्षात्परम्परा-साधारणोपादानोपादेयत्वस्य विवक्षितत्वात् ॥

प्रकाशिका

कमुपादानान्तरकल्पनागौरवमेवावसेयम् । कपालध्वंसजन्ये घटध्वंसे व्यभिचार इति चरमद्र-व्यपदम् प्रतिबन्धकाभावजन्ये द्रव्ये व्यभिचार इति ध्वंसपर्यन्तमुपात्तम् । न च प्रतिबन्ध-कध्वंसस्यापि जनकतया तद्दोषतादवस्थ्यमिति वाच्यम् । ध्वंसत्वेन जनकत्वस्याग्रे विवक्षणात् । न च महापटस्य प्रतिबन्धकतया तत्संसर्गाभावत्वेनैव हेतुतेति दृष्टान्तासिद्धिरिति वाच्यम् । तदत्यन्ताभावस्याजनकतया तत्तत्संसर्गाभावत्वेनाहेतुत्वात् । अन्यथा नित्यस्य स्वरूपयोग्यस्या-त्यन्ताभावस्य कदाचित् फलोपधानापत्तेः । न चैवं प्रथमखण्डपटोत्पत्तिर्न स्यादिति वाच्यम् । इष्टत्वात् । पटप्रतीतिस्तत्र तथाविधसंस्थानयोगितयाप्युपपत्तेः । वस्तुतः समानाधिकरणपट-नाशसमानकालीनपटत्वावच्छिन्नं प्रति समानाधिकरणपटनाशत्वेन कारणतेति दृढतरवेमाभि-घातजन्यद्वितन्तुकादिनाश एव त्रितन्तुकादिपटं प्रति कारणमिति सन्नपि महापटप्रागभावस्त-त्रान्यथासिद्धः । नचैवं महापटेऽपि पटध्वंसजन्यतया खण्डपटव्यवहारापत्तिः । जनकीभूतध्वं-सप्रतियोगिन्यूनसमवायिकारणकस्यैवावस्थितसंयोगजन्यस्य खण्डपटपदार्थत्वात् । एवं च यदि द्वितन्तुकादौ खण्डपटव्यवहारस्तदा गौणो द्रष्टव्यः । द्रव्यप्रकाशे च महापटसंसर्गाभावत्वेन कारण-त्वाभिधानमेकदेशिमताभिप्रायेण । प्रथमद्रव्यपदं तु कामिनीचरणसंयोगध्वंसजन्याशोकपुष्पे व्य-भिचारवारणाय । यत्तु मिथ्याज्ञानध्वंसजन्यकायव्यूहे व्यभिचारवारणाय प्रथमं द्रव्यपदमिति तच्चि न्त्यम् । तत्त्वज्ञानस्यैव प्राथमिकतया भावरूपतया च कायव्यूहकारणत्वात् । केचित्तु निष्कासितत-न्तुसंयोगध्वंसजन्ये खण्डपटे तन्तुसंयोगोपादानानुपादेये व्यभिचारवारणाय द्रव्यपदमिति । तद-पि तुच्छम् । संयोगध्वंसस्य महापटध्वंसमात्रजनकतया खण्डपटं प्रत्यन्यथासिद्धिः । अन्यथा तन्तुना-

मकरन्दः ।

नचैवं दृष्टान्तासिद्धिः, महापटस्य प्रतिबन्धकतया तदभावस्य संसर्गाभावत्वेनैव हेतुत्वादिति वा-च्यम् । महापटं विनाऽपि खण्डपटोत्पादापत्तेः । अत्यन्ताभावस्य नित्यस्य स्वरूपयोग्यस्य सह-कार्यवश्यम्भावापत्तेश्च । नचैवं तत्प्रागभावस्याहेतुत्वे महापटोत्पत्तेः प्राक् खण्डपटो न स्यादिति तन्तुमात्रमुपलभ्येतेति वाच्यम् । इष्टापत्तेः । तथाविधसंस्थानयोगितया पटव्यपदेशः । यद्वा, द्वितन्तुकादिमहापटध्वंसजन्य एव त्रितन्तुकादिः पटो जायते । मूर्त्तानां समानदेशताविरोधेन वे-माद्यभिघाताद् द्वितन्तुकादिनाशे त्रितन्तुकाद्युत्पादाभ्युपगमात् । तत्र च सर्वतन्तुकमहापटप्राग-भावः सन्नप्यन्यथासिद्ध एव । एवञ्च त्रितन्तुकादौ पटध्वंसजन्यपटत्वेन खण्डपटत्वं, पटजनक-ध्वंसप्रतियोगिपटत्वेन महापटत्वञ्च न विरुद्धम् । द्वितन्तुके च यदि खण्डपटव्यपदेशः, तदाऽ-ग्रिमापेक्षया परिमाणापकर्षनिबन्धनो गौणः । वस्तुतः प्रथमपटन्यूनसमवायिकारणक एव खण्ड-पट इति त्रितन्तुकादीनामपि महापटत्वमेवेति तत्रापि गौण एव तद्व्यपदेश इति । द्रव्यप्रकाशे च संसर्गाभावत्वेन तस्य कारणत्वाभिधानं मतान्तरेणेति मन्तव्यम् । आद्यद्रव्यपदं किमर्थमित्यव-शिष्यते । तत्र ब्रूमः । तत्त्वसाक्षात्कारजन्यमिथ्याज्ञानध्वंसस्य ध्वंसत्वेन कायव्यूहं प्रति जनक-तया व्यभिचारवारणाय तदिति । यत्तु प्रयागमरणस्य संयोगध्वंसात्मकस्य स्वर्गहेतुत्वश्रुतेः स्व-र्गिशरीरजनकतया तत्र व्यभिचारवारणाय तदिति । तन्न । अदृष्टाद्वारकत्वस्य साक्षाज्जनकत्वस्य

प्रकाशः ।

रत्नकोषकृतस्तु, रसविशेषवृत्तिरेव दुग्धत्वादिजातिः । द्रव्यवृत्तित्वेऽपि तद्व्यञ्जकस्य रसस्यावश्यकत्वात् । द्रव्यत्वादिसामानाधिकरण्यबुद्धिश्च परम्परासम्बन्धात् । तथाच दुग्धारम्भका एवावयवाः पाकजरसविशेषशालिनो दध्यारम्भका इति न विरोध इत्याहुः ॥

प्रकाशिका

शस्यापि कदाचिन्महापटध्वंसद्वारा खण्डपटजनकतया द्रव्यपदोपादानेऽपि व्यभिचारतादवस्थ्यात् यत्तु मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिजनकत्वं समाप्तिश्च चरमसमुदायिरूपा एवं च मङ्गलजन्यायां द्रव्यसमाप्तौ व्यभिचारो विघ्नध्वंसस्य तज्जनकत्वादिति व्यपदमिति तत्तुच्छम् । विघ्नध्वंसस्य मङ्गलजन्यत्वेऽपि समाप्तिजनकतायां संसर्गाभावत्वस्यैव प्रयोजकत्वात् । अन्यथा कदाचिद्विघ्नस्य द्रव्यरूपत्वेन द्रव्यपदे दत्तेऽपि व्यभिचारतादवस्थ्यात् । यत्तु प्रलयजनकादृष्टध्वंसस्य सर्गजनकतया व्यभिचार इति द्रव्यपदमिति । तदपि तुच्छम् । प्रलयात्मककालोपाधिसंसर्गाभावमात्रस्यैव सर्गजनकत्वात् । मिश्रास्तु दण्डप्रागभावध्वंसात्मकदण्डजन्ये घटे व्यभिचार इति द्रव्यपदम् । न च तस्य ध्वंसत्वेन न कारणता उत्तरग्रन्थविरोधः ध्वंसत्वनियतकारणताकत्वस्योत्तरग्रन्थार्थत्वात् । अन्यथा दृष्टान्तासङ्गतेः, न हि महापटध्वंसस्य ध्वंसत्वेन कारणत्वं तथाहि खण्डपटं प्रति समानाधिकरणपटध्वंसत्वेन कारणत्वम् यावत् तादृशपटध्वंसत्वेन वा पूर्वोत्पन्नयावत्तादृशपटध्वंसत्वेन वा, आद्ये द्वितीयखण्डपटोत्पत्त्यनन्तरं तत्काले वा तृतीयखण्डपटोत्पत्तिः कालविलम्बेन तु विलम्बे ध्वंसस्याहेतुत्वमेव कुतो ध्वंसत्वेन हेतुत्वशङ्का । द्वितीये द्वितीयखण्डपटोत्पत्तिर्न स्यात् । तृतीयखण्डपटध्वंसस्याभावात् । तृतीये संसर्गाभावत्वमेव जनकतावच्छेदकं, वारणीययोरत्यन्ताभावप्रागभावयोः समानाधिकरणपूर्वोत्पन्नपदाभ्यामेव वारणात् । यदि च ध्वंसत्वसंसर्गाभावत्वयोर्विशिष्टयोरसमनियतत्वे शरीरतौल्ये च संसर्गाभावत्वेन जनकत्वे मानाभावः । तथापि मास्तु दृष्टान्तासङ्गतिः । तथा विवक्षाबीजं द्रव्यपदसार्थक्यायैव तथाविवक्षास्ति । नच दण्डप्रागभावोपादानाप्रसिद्ध्या व्यभिचाराप्रसिद्धेः कथं द्रव्यपदस्य तद्वारकता। नियतसामानाधिकरण्यरूपायाव्याप्तेरप्रसिद्ध्या ग्रहासम्भवेन व्याप्तिग्रहौपयिकत्वाद्विशेषणस्य समानोपादानकत्वस्य व्यापकस्यान्यत्र

मकरन्दः ।

वावश्यं वाच्यतया तत एव तदुद्धारात् । अन्यथा ब्राह्मणशरीरशालग्रामध्वंसादेरधर्मद्वारा नारकिशरीरजनकतया व्यभिचारतादवस्थ्यापत्तेः । अन्ये तु प्रागभावध्वंसात्मककपालजन्यघटे व्यभिचारवारणाय तदुपादानम् । न च ध्वंसत्वेन जनकत्वविवक्षयैव तद्वारणमिति वाच्यम् । ध्वंसत्वेनेत्यस्य ध्वंसत्वनियताया जनकताया विवक्षितत्वादित्यर्थात् , तावतैव प्रतिबन्धकाभावजन्ये व्यभिचारस्य निरासात् । यद्यपि प्रागभावोपादानाप्रसिद्ध्या व्यभिचारोऽपि तत्राप्रसिद्ध इति कथं तद्वारणाय तत् , तथापि नियतसामानाधिकरण्यरूपव्याप्तिग्रहौपयिकतया सार्थकत्वम् । यद्वा, यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तदुभयमेकोपादानकमित्यत्र तात्पर्यम् । एकोपादानकत्वञ्चान्यत्र प्रसिद्धमिति तत्र व्यभिचारप्रसिद्धिरिति वदन्ति । यत्तु, अवयवसंयोगध्वंसजन्यखण्डपटे व्यभिचारवारणाय द्रव्यपदम् । न च तत्र साध्यमस्त्येवेति वाच्यम् । तत्संयोगाश्रयतन्तूनामपि नाशे तद्भिन्नमात्रसमवेतखण्डपटे तथापि व्यभिचारादिति । तत्तुच्छम् । तस्य महापटध्वंसोपक्षीणत्वेन खण्डपटं प्रत्यहेतुत्वात् । अन्यथा तन्तुनाशजन्यखण्डपटमादाय दोषतादवस्थ्यापत्तेः । एतेन जन्यत्वेन प्रयोज्यत्वमात्रं विवक्षितमित्यपास्तम् ।

**तथाचेति** । दुग्धरूपरसविशेषारम्भका एवावयवाः पाकजरसविशेषशालिनो यतोऽत एव दध्यारम्भकाः । तस्य रसविशेषात्मकत्वादित्यर्थः । यद्वा, दुग्धादिपदं द्रव्यपरमेव । दुग्धत्वादेः परम्परासम्बन्धेन द्रव्यवृत्तित्वाभ्युपगमादिति । **न विरोध** इति । नैकोपादानकत्वविरोधः । रस-

**एतेनाऽपोहवादे नियमो निरस्तः । (१)कार्यकारणभावाद्वा''इत्यादिविप्लव-**

बोधनी

**एतेन**–इति · तृणाद्यन्यापोहात्मनैकजातीयानामेव तृणादीनाम् अग्न्यन्यापोहात्मना एकजातीयं कार्यं प्रति कारणत्वमिति जात्यपेक्षयैव नियम इति बौद्धादयः, तान् प्रत्याह **एतेन**–इति । कार्यादिना कारणादीनामननुमानप्रसङ्गेनापोहजात्यपेक्षयापि कार्यकारणभावो निरस्त इति । तमेव प्रसङ्गं स्मारयति=**कार्य**–इति । तृणादित्रयमात्रानुगतान्यनिवृत्तेरभावात् प्रत्येकमन्यनिवृत्तेर्व्यभिचारादन्यमात्रनिवृत्तेश्च तृणादिष्वप्यभावात् कार्यकारणयोरविनाभावो न सिध्येत्, तदसिद्धौ च स्वभावनियमोऽपि न सिध्यतीति । यद्वा, **एतेन**-विजातीयेभ्योऽप्येकजातीयकार्यदर्शनेन । अपोहवादेऽपि कार्यकारणभावनियमो निरस्तः । तृणाद्यनुगतायास्तदितरनिवृत्तेरनुपलम्भात् तस्याः सूक्ष्मायाः शक्तेर्वाभ्युपगमेन नियमाङ्गीकारे कार्यकारणयोः स्वभावतद्वतोश्चाविनाभावस्य दुर्ग्रहत्वेनासिद्धेरिति । तस्मान्नियतजातिशक्तिव्याेवृत्तीनामभावात् कार्यजातिनियतिं प्रति नियतजातीयस्वभावेन कारणेन

प्रकाशः ।

तृणादेरग्निं प्रति तृणाद्यन्यान्यत्वेन कारणत्वं गृह्यते, इति न व्यभिचार इति व्यावृत्तिपदार्थवादिना यत् समाहितं, तत्राप्यनुमानभङ्ग इत्यतिदिशति ।

**एतेनेति । नियमः**=अविनाभावः । वह्निं विना तदन्यस्मादपि धूमसम्भवेन ततो वह्न्यनुमानाभावापातात्, तृणादिवदतद्व्यावृत्त्या तत्रापि कारणत्वग्रहसम्भवादित्यर्थः । कार्यकारणभा-

प्रकाशिका ।

प्रसिद्धस्य प्रकृतेऽभावेन व्यभिचारस्यापि प्रसिद्धेश्चेति । अत्र च सर्वत्र कल्पेऽदृष्टाद्वारकत्वं विशेषणम् । अन्यथा शालिग्रामशिलाध्वंसजन्यनारकिशरीरे व्यभिचारात् । अत एव गङ्गामरणजन्यस्वर्गिशरीरे व्यभिचारवारणाय द्रव्यपदं मरणस्य संयोगध्वंसरूपत्वादिति परास्तम् । आवश्यकादृष्टाद्वारकत्वविशेषणेनैव तद्वारणादिति । **तथा चेति ।** दुग्धस्तामकरसविशेषारम्भका एवावयवाः पाकजरसविशेषशालिनो यतोऽत एव दध्यारम्भका इत्युच्यन्ते । दध्नो रसविशेषात्मकत्वादित्यर्थः । यद्वा दधिदुग्धपदाभ्यामत्र रसविशेषाश्रयद्रव्यमेवोक्तम् । दधित्वदुग्धत्वयोरपि परम्परासम्बन्धेन द्रव्ये वृत्तेः । यद्यपि प्रकृतासम्बद्धमिदम् । द्रव्ययोरेकोपादानकत्वे साजात्यनियम इत्यत्र दधिदुग्धयोर्व्यभिचार इति हि प्रकृतम् । तस्य चासङ्गतिरेव दधिदुग्धयो रसात्मकत्वे । तथापि दधिदुग्धाश्रयरूपद्रव्ययोर्विजातीययोरेकोपादानत्वमेव तन्मतेऽपीति भवति प्रकृतसङ्गतिः । केचित्तु मूलाक्षेपपरमेवैतन्मतं दधिदुग्धयो रसात्मकत्वे मूलोक्तव्यभिचारोद्धारादिति । तन्न । तदाश्रयद्रव्ययोस्तथापरत्वेऽपि व्यभिचारेणाक्षेपतात्पर्यकल्पनाभावात् । अत्राहुरित्यरुचौ । तद्वीजन्तु महद्दधि शुक्लरूपवद्दधीत्यादिप्रतीतौ परम्परासम्बन्धविषयत्वे गौरवमेव । अन्यथा पृथिवीत्वादेरपि गन्धादिवृत्तित्वापत्तिः । व्यञ्जकत्वयुक्तेस्तुल्यत्वादिति । अपोहवादे विषये नियम इत्यन्वये कदाचिदपोहस्वीकारः स्यादत आह । **नियमोऽविनाभावः**, वह्निधूमयोरिति शेषः । अपोहवाद इति च सति सप्तमीति भावः । **तृणादिवदिति ।** यद्यपि कार्यवैजात्यपक्षेऽपि न धूमसामान्याद् दहनादिसिद्धिः । धूम-

मकरन्दः ।

विशेषात्मकयोर्दधिदुग्धयोरेकत्र प्रमाणसिद्धत्वादित्यर्थः । अनभिमतिवीजञ्चात्र द्रव्यत्वादिसामानाधिकरण्यबुद्धेः साक्षात्सम्बन्धविषयकत्वे वाधकाभावान्न परम्परासम्बन्धविषयत्वम् । अन्यथा पृथिवीत्वादेरप्यभिव्यञ्जकगन्धादिवृत्तितापत्तेरिति ।

---

(१) कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न तु दर्शनात् ॥ इति ।

**प्रसङ्गात्। तस्मान्नियतजातीयतास्वभावभङ्गेन व्यक्त्यपेक्षयैव नियम इति। न। फूत्कारेण तृणादेरेव, निर्मन्थनेनारणेरेव, प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रका-**

बोधनी।

भवितव्यमिति नियमस्य भङ्गात् कार्यस्य यया कयाचिद् व्यक्त्या भवितव्यमित्येव नियमः स्यादित्युपसंहरति—**तस्मात्**-इति। सिद्धान्त्याह—**नेति**। **एव**शब्दो भिन्नक्रमः, तृणादेः **फूत्कारेणैवे**त्यादि योजनीयः। **प्रकारनियमः**=सहकारिनियमः। फूत्कारादिस्तृणादीनां नि-

प्रकाशः।

वासिद्धौ स्वभावनियमोऽपि दुरवगमः। कार्यानुपलब्धिप्रसङ्गरूपविपक्षबाधकसाध्यत्वात्तस्येति भावः। तदेवं गत्यन्तराभावाद् व्यक्तीनामेव कारणत्वमित्युपसंहरति। **तस्मादि**ति। वह्नयवान्तरजातीये तृणादीनां प्रत्येकं कारणत्वस्वीकारादेव सर्वं समञ्जसमित्याह। **फूत्कारेणे**ति। **प्रकारनियमः**=सहकारिनियमः। वह्नयनुकूलशक्तिमत्त्वेन कारणत्वे मणिफूत्कारादिस्तोमादपि कार्या-

प्रकाशिका।

विशेषस्यैव वह्निजन्यत्वमिति शङ्कायाः सम्भवात्। यदि चोपस्थितरूपस्यावच्छेदकत्वे बाधके सत्येव कल्पनीयजातेः कार्यतावच्छेदकत्वमिति न तत्र शङ्का तर्हि कारणतावच्छेदकत्वमपि तत्रैवान्यान्यत्वस्य यत्रोपस्थितरूपस्यावच्छेदकत्वे बाधकमिति तुल्यम्। एवञ्च शक्तिवैजात्यान्यतरकल्पनावसरे तयोरक्लृप्तत्वादन्यान्यत्वस्य च क्लृप्तत्वात्तदेवावच्छेदकं कारणतायामिति। तथापि तन्मते सहकारिनियमानुपपत्तिरेव बाधिका शक्तिपक्षवत्। अत एव मूलं **प्रकारनियमव**दिति। यद्यपि फूत्कारतृणसंयोगादीनामन्यान्यत्वेन जनकत्वपक्षे नैतद् दूषणम्। नचैवं तृणादेरकारणत्वम्। संयोगविशिष्टस्यैव तृणादेः कारणत्वात्। अन्यथा तृणत्वेन कारणत्वस्वीकारेऽपि अनतिप्रसङ्गाय संयोगकारणत्वे वाच्ये तृणाद्यकारणतापत्तेस्तुल्यत्वात् कारणतावच्छेदकन्तु तृणादावन्यान्यत्वमेव। नचैवं जन्यज्ञानत्वावच्छिन्न इन्द्रियसन्निकर्षादीनामन्यान्यत्वेन जनकत्वे एकप्रमाणपरिशेषापत्तिः। तत्र ज्ञाने वैजात्यस्यानुभवसाक्षिकतया तन्नियामकत्वेनासाधारणधर्म्मस्य कारणतावच्छेदकत्वात् जन्यज्ञानत्वस्य कार्यतावच्छेदकत्वे मानाभावात्। तत् सत्त्वेपि तदवच्छिन्नेऽन्यान्यत्वेन जनकत्वे विशेषमादायैव प्रमाणानां भेदात्। एवं च यत्र कार्ये न वैजात्यमनुभूयते कारणानामननुगमश्च तत्रैवान्या-

मकरन्दः।

**तदेवमि**ति। नन्वेवं तवापि वह्निप्रयोज्यवैजात्यशङ्कया न धूमसामान्यमग्निं गमयेत्। यदि चोपस्थितधूमत्वावच्छेदेन व्यभिचाराग्रहात्तेनैव रूपेण कार्यत्वग्रहः, तदा यत्रोपस्थितरूपे व्यभिचारस्तत्रैव रूपान्तरेण कारणत्वकल्पनमतो न रासभमन्तर्भाव्य तत्कल्पनम्। किञ्च, शक्तिवैजात्ययोरन्यतरकल्पनावसरे तयोः कल्पनीयतया लाघवेन क्लृप्तान्यान्यत्वस्यैवावच्छेदकत्वकल्पनादिति। तत्र ब्रूमः। वैजात्यस्यापि प्रमाणान्तरसिद्धतया तत्राप्यवच्छेदकत्वकल्पनैव। अन्यथा सहकारिनियमानुपपत्तेः। तदिदमुक्तं मूले, **तेनैव व्यज्यमानस्ये**ति। न च सामग्रीत्रयकल्पने गौरवं, तस्यावश्यकत्वात्। अन्यथा सहकारिनियमानुपपत्तिरेव। स हि कार्यतावच्छेदकभेदेन फलविरोधे सत्येव स्यात्। अन्यथा प्रत्यक्षादिप्रमाणानामपि जन्यज्ञानत्वावच्छिन्ने तदन्यान्यत्वेन हेतुतापत्तेः। यदि च सहकारिनियमानुपपत्त्या सामग्रीभेद–फलवैजात्यावश्यकत्वे गौरवान्न तथा, तदा प्रकृतेऽपि तुल्यं, तत्तत्सहकारिसम्बन्धानामपि तदन्यान्यत्वेन हेतुत्वान्नियमोपपत्तेरित्यपि तुल्यम्। यद्विशेषयोः कार्यकारणभावग्रह इत्यादिकमपि तुल्यम्। तेन रूपेणान्वयव्यतिरेकग्रहाश्च तथेति च तुल्यम्। अपि चैवं भौमत्वस्यापि विशेषतया गुरुत्वेन वह्नित्वसामान्यावच्छिन्ने औदर्यादिवह्निकारणमप्यन्तर्भाव्य तदन्यान्यत्वेन हेतुत्वापत्तिः। किञ्चैवं, जन्यतावच्छेदकमपि तत्

**रनियमवत्तेनैव व्यज्यमानस्य कार्य्यजातिभेदस्य भावात् । दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्यापकमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहनो, न तराञ्च कारीषः ॥**

बोधनी ।

यमानियतसामग्रीव्यङ्ग्यया जातेर्भेदोऽस्ति । नहि सामग्री भिद्यते न भिद्यते च कार्यमिति सम्भवति । तथा च प्रयोगः—तार्णाद्यग्नयोऽग्नित्वावान्तरजातिभेदवन्तः विलक्षणसामग्रीजन्यत्वात् तैलवर्त्यां विलक्षणसामग्रीकप्रदीपादिवदिति । न च साध्यविकलो दृष्टान्त इत्याह—**दृश्यते—च—** इति । प्रदीपादौ कार्यभेददर्शनादवान्तरजातिभेदोऽवश्यमभ्युपगन्तव्य इति ।

प्रकाशः ।

पत्तेरित्यर्थः । न चानुपलब्धिबाधितं वैजात्यमित्याह । **तेनेति** । विवादपदमग्नयो वह्नित्वव्याप्यजातिमन्तः नियतसंहकार्यनुप्रवेशेन जायमानवह्नित्वात् प्रदीपदारुदहनवदिति कारणविशेषसम्बन्धव्यङ्ग्यत्वात्तज्जातीनामित्यर्थः । न च दृष्टान्तः साध्यविकल इत्याह । **दृश्यते चेति** । तत्र तैलादिकारणविशेषव्यङ्ग्यत्वं यथा जातीनां, तथाऽत्रापीति नादृष्टचरकल्पनमित्यर्थः । यद्यपि दुरूहत्वान्नैष विशेष आपाततः स्फुरति, तथापि विशेषानाकलनेऽपि तदनुकूलकारणमात्रमनुमीयते,

प्रकाशिका

न्यत्वमवच्छेदकं न तु सर्वत्रेति न दण्डवेमादीनां घटपटाद्यन्यान्यत्वावच्छिन्नकारणत्वशङ्का न तु वह्नौ तृणादिजन्ये वैजात्यमनुभूयत इति । तथाप्येवं मणेरपि तृणफूत्कारविशेषसंयोगसहकारित्वे तरणिकिरणासमवहितमणेरपि रात्रौ वह्न्यर्थिप्रवृत्तिविषयतापत्तिः । न च तरणिकिरणसम्बद्धमणेरेव जनकत्वं सम्बद्धानां तृणादीनां च स्वस्वनिष्ठान्यान्यत्वेन जनकत्वे भवदुक्तनियमस्यैवानुपपत्तेः । न च सम्बन्धमात्रमेव कारणं न तु मण्यादीति वाच्यम् । उपजीव्यबाधात् । अन्वयव्यतिरेकगृहीततृणादिकारणतारक्षार्थमेव कारणप्रत्यासत्तितया सम्बन्धानां कारणत्वस्वीकारादिति । मिश्रास्तु अन्यान्यत्वं न कारणतावच्छेदकम् तथासति तृणाद्यन्यस्य वन्ह्यवयवादेरकारणतापत्तेः, भावाभावयोरेकत्राप्रयोजकत्वात् । नचैवं भवन्मतेऽपि तृणतदन्ययोः कथं वह्निप्रयोजकत्वमिति वाच्यम् । प्रयोजकप्रतियोगिकाभावस्याप्रयोजकत्वमिति नियमशरीरत्वात् । तथा च कारणीभूतवह्न्यवयवादि प्रतियोगिकस्यान्योन्याभावस्यावच्छेदकतया प्रयोजकत्वाभ्युपगमादिति वदन्ति । तच्चिन्त्यम् । भावाभावयोरेकत्राजनत्वेऽपि एकाप्रयोजकत्वे मानाभावात् । वस्तुतस्तु तदपि न । घटघटान्योन्याभावाविति समूहालम्बनस्थले व्यभिचारात् । नच कारणाभावस्य न कारणतावच्छेदकत्वमिति नियमः, अप्रयोजकत्वादिति दिक् । **विवादपदमिति** । प्रदीपादावंशतः सिद्धसाधनवारणाय विशेषणमिदम् ।

मकरन्दः ।

स्यादिति घटपटान्यान्यत्वावच्छेदेन दण्डवेमान्यान्यत्वेन हेतुत्वापत्तिः । तथाचोक्तगौरवादतिप्रसङ्गाच्च न तदन्यान्यत्वमवच्छेदकमिति दिक् । यत्तु, नैकं विरुद्धद्वयप्रयोज्यम् । भावाभावयोरेककार्यजनकतापत्तेः । अत एव न यागध्वंसेनापूर्वस्यान्यथासिद्धिः । तदिह वह्नित्वं यदि तृणाद्यन्यान्यप्रयोज्यं स्याद् , न स्यात्तदन्यवह्न्यवयवादिप्रयोज्यं विरोधादिति । तच्चिन्त्यम् । एवं हि तृणप्रयोज्यत्वेऽपि तदन्यवह्न्यवयवादिप्रयोज्यत्वं विरुद्ध्येत । यदि च तयोः परस्परविरहरूपत्वाभावात्तदुभयप्रयोज्यत्वं न विरुद्धं, तदा तुल्यम् । वह्न्यवयवत्वेनैव तस्य प्रयोजकत्वं, न तु तृणाद्यन्यान्यत्वेनेत्यपि तुल्यमिति ।

**विवादपद**मिति । एतच्च प्रदीपादौ साध्यसिद्ध्या अंशतः सिद्धसाधनवारणार्थम् ।

**नियते**ति । ननु वृश्चिकादौ हेतुसत्त्वेऽपि साध्यासत्त्वाद्व्यभिचार इति चेत् । मैवम् । नियत-

यस्तु तं नाकलयेत्, स कार्य्यसामान्येन कारणमात्रमनुमियादिति किमनु-

बोधनी।

ननु कार्य्यावान्तरजातिभेदस्य दुरूहत्वात् कथं ततस्तृणादिविशेषानुमानमित्यत्राह—**यस्त्विति**। तमवान्तरजातिभेदं तृणादिजन्यमन्वयव्यतिरेकयोर्बलवानेवाकलय्य तृणादिकारणविशेषमनुमिनोति, यस्त्वलसो दुरूहमवान्तरजातिभेदं नावगच्छति स सामान्यमात्रात्सामान्यमात्रं तन्निवृत्तेश्च तन्निवृत्तिमनुमिनुयात् का नो हानिरिति। ननु यदि तृणादीनामनुपलभ्यमानमग्न्यवान्तरजातिभेदं प्रत्युपयोगान्नाग्निमात्रदर्शिनस्तृणाद्यनुमानसिद्धिः, एवं तर्ह्यनुपलक्ष्यमाणधूमाद्यवान्तरजातिभेदं प्रत्येव

प्रकाशः।

तदाकलने तु विशेषोऽप्यनुमीयत एवेत्याह। **यस्त्विति**। नन्वग्न्यवान्तरजातीये तृणादीनां कारणत्वं न युक्तम्, कारणगतैकशक्तिरूपमपहाय कार्यगतबहुतरजातिकल्पने गौरवात्। तृणादिजन्याग्निष्ववान्तरजातेर्योग्यानुपलम्भबाधितत्वात्। यत्र च तत्तत्कारणप्रयोज्यं प्रदीपादौ वैजात्यमनुभूयते। तत्रैकशक्तिमत्त्वमपि कारणे नास्ति। अत एवानुमानमप्रयोजकम्। अथास्ति तृणादीनां फूत्कारादिसहकारिता। तत्र फूत्कारादीनां सहकारित्वं तृणत्वाद्यवच्छिन्नं प्रति स्यात्? तृणादिसाधारणैकशक्तिमन्तं प्रति वा। नाद्यः। तृणत्वाद्यवच्छिन्नस्य प्राक्कालनैयत्याभावेन कारणत्वाभावात् तत्सहकारित्वस्य दूरनिरस्तत्वात्। नान्त्यः। तृणादिवाऽरणेरपि फूत्कारसमवहितादग्न्युत्पत्त्यापत्तेः। न च फूत्कारादिविशिष्टे तृणादौ शक्तिर्न केवल इति वाच्यम्। तस्य तृणादिभिन्नत्वे तृणादीनामजनकत्वापत्तेः। तदभिन्नत्वे च यत् तृणं फूत्कारेणोपधीयते, तत्र वा शक्तिः,

प्रकाशिका।

अत्र कारणविशेषप्रयोज्यधर्म्मवत्त्वमेव साध्यं, यथाश्रुतेन च पक्षधर्म्मताबललभ्यसाध्योपदर्शनं तेन न घटादौ, न वा ध्वंसे व्यभिचार इत्यवधेयम्। यद्यपि यथानिरुक्तसाध्ये सिद्धसाधनं जायमानत्वस्यैव हेतुत्वे व्यर्थविशेषणत्वञ्च वन्ह्यवयवादिकारणप्रयोज्यवह्नेः सत्वात् तत्तत्कारणप्रयोज्यतत्तदवच्छेदकधर्म्मवत्त्वाच्च कार्यमात्रस्य। तथापि तृणादिप्रयोज्यधर्म्मवत्त्वमेव साध्यम् नियततत्तदर्थप्रवेशेन, जायमानत्वं हेतुः। सामान्यव्याप्तौ च प्रदीपो दृष्टान्त इति भावः, प्रदीपादिदृष्टान्तोपादानप्रयासश्चातेजस्त्वाद्युपाधेः साध्याव्यापकत्वप्रदर्शनपरः। सहकारिपदञ्चानन्यथासिद्धपरं नियतरासभोत्तरभाविघटे व्यभिचारवारकमिति मिश्राः। वस्तुतो वह्नित्वादिति हेतुः यथाश्रुतमेव च साध्यं नियतेत्यादिकञ्च विपक्षबाधकतर्कप्रदर्शनपरमिति ध्येयम्। **अत एवेति**। वस्तुतः स्वरूपासिद्धिरेव नियतेत्यादिहेतोर्नियतत्वं हि तृणादीनां वह्नित्वावच्छिन्ने वा तदवान्तरजात्यवच्छिन्ने वा उभयथापि स्वतः परतो वाऽसिद्धिः। नचोभयमतेऽपि शक्तिमत्त्वेन तृणत्वेन वा नियमोऽस्त्येवेति साधारणरूपो हेतुः सिद्ध एवेति वाच्यम्। तथा सति तृणादिप्रयोज्यवह्नौ सिद्धसाधनापत्तेः। तस्मात् तृणत्वावच्छिन्ननियमाश्रयजन्यत्वेन तृणत्वावच्छिन्नप्रयोज्यधर्मवत्त्वं साध्यमिति स्वरूपासिद्धिरेव परमते। न च स्वमतेनैवाऽयं हेतुः साध्यसिद्धिनियतसिद्धिकत्वादिति। **तदभिन्नत्वे चेति**। फूत्कारप्राक्काल एव तृणे

मकरन्दः।

सहकारिप्रयोज्यजातिकत्वस्य साध्यत्वात्। प्रकृते च पक्षधर्मताबलेन वह्नित्वव्याप्यैव सा जातिः सिद्ध्यतीति तथा प्रतिज्ञानात्। न चैवमपि ध्वंसे व्यभिचारः। जातिपदस्य धर्ममात्रपरत्वात्। प्रदीपादिदृष्टान्तोपादाननिर्बन्धश्चातेजस्त्वाद्युपाधेः साध्याव्यापकत्वप्रदर्शनार्थमित्याहुः। वस्तुतस्तु साध्यदृष्टान्तालोचनेन वह्नित्वादिति हेतुरभिमतः। स्फुटत्वात् कण्ठरवेण नाभिहितः। **नियतेत्यादिकञ्च** विपक्षबाधप्रदर्शनपरमिति युक्तमुत्पश्यामः।

ननु प्रागुक्तसहकारिनियम एव विपक्षबाधक इत्याह। **अथेति**। **तदभिन्नत्वे चेति**। फू-

प्रकाशः ।

फूत्कारसमवधाने सति वा ? नाद्यः । फूत्काराद्यसमवधानेऽपि तस्मात् तृणादेरग्न्युत्पत्त्यापत्तेः । नापरः । तथा सति सैव शक्तिस्तृणे फूत्कारादरणौ निर्मन्थनादिति शक्तावनियतहेतुकत्वापत्तेः । तत्राप्येकशक्तिमत्त्वेन हेतुत्वेऽनवस्थापत्तेरिति ॥

मैवम् । यथा ह्यन्वयव्यतिरेकाभ्यां तृणफूत्कारयोरन्योन्यसहकारित्वं तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वम् । तथैव कार्यदर्शनात् । न तु मणिफूत्कारयोः सहकारित्वमिति, न तच्छक्त्योरपि परस्परसहकारित्वम् । कार्यविशेषात् कारणविशेषानुमानं तु वह्निवृश्चिकादौविष्यत एव । निरूपितनियतवह्न्यादिकारणके धूमादौ अनुमानं स्यादेव । अन्यथा कार्य्यवैजात्येऽपि वह्नित्वेन धूमविशेष एव कारणत्वं, न धूममात्र इति शङ्कया तवाप्यनुमानं न स्यादिति ।

अत्रास्मत्पितृचरणाः । तृणारणिमणिफूत्कारादिव्यक्तीनामनन्तत्वेन प्रतिव्यक्ति भावहेतुजानित्यानन्तशक्तिस्वीकारे गौरवम् । तावदनन्तव्यक्तिजन्यानन्तवह्निव्यक्तिषु जातित्रयकल्पने लाघवमिति तदेव कल्प्यते । न च जातौ योग्यानुपलब्धिबाधः । गोमयवृश्चिकप्रभववृश्चिकयोरीषच्छयामत्वकपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात् । तृणादिजन्याग्निष्वपि तृणजन्यत्वज्ञानानन्तरं मणिजन्यव्यावृत्तानुगतबुद्धेर्जातिविषयत्वाद् बाधकाभावात् । ननु तृणादीनामग्नौ कारणत्वग्रहे शक्तिवैजात्ययोरन्यतरकल्पनम् । तद्ग्रहश्च नान्वयव्यतिरेकाभ्याम् । व्यभिचारात् । अथारणिमण्यभाववति स्तोमविशेषे तृणं विना न वह्निः तृणान्वयेऽवश्यं वह्निरित्यन्वयव्यतिरेकाभ्यां, तत्रैव स्तोमे इतरकारणसमवधाने तृणान्वयेऽवश्यं वह्निरिति नियतेनान्वयेन वा रासभव्यावृत्तेन तृणादिकारणताग्रह इति चेन्न । तृणं विनाऽपि वह्निरिति ज्ञाने सति वह्निनियतपूर्ववर्तित्वस्य कारणत्वस्य ग्रहीतुमशक्यत्वात् । अबाधिताभावग्रहे भावग्रहस्याभावात् ॥

प्रकाशिका

शक्तिः फूत्कारजन्या वेति विकल्पार्थः । **अनवस्थेति** । उत्तरोत्तरमपि भिन्नभिन्नसहकारिपरंपराया एव स्वीकारादिति भावः । **तथैव तच्छक्त्योरपीति** । तथा च कारणतावच्छेदकसाम्येऽपि तृणफूत्कारयोरेव समवहितयोः फलोपधानं स्वभावादिति भावः । वस्तुतः सम्बन्धानामेकशक्तिमत्त्वेन कारणत्वमित्यभिप्रायः । कारणतावच्छेदकयावद्धर्म्माश्रयैकैकव्यक्तिसमवधाने स्वभावविरहप्रयुक्तस्य फलानुपधानस्यादृष्टत्वात् यद्यप्ययमभिप्रायो न युक्तस्तरणिकिरणसमवहितमणेरपि वह्न्यर्थिप्रवृत्तिविषयत्वापत्तेरुक्तत्वात् । तथापि स्फुटत्वात् तदुपेक्ष्यान्यदाह । **तृणेति** । ननु जातित्रयकल्पनमपि किमर्थं वह्न्यन्वयव्यतिरेकानुविधायित्वस्यैव तृणादौ वह्निकारणतावच्छेदकत्वात्, धर्म्मिकल्पनातो धर्म्मकल्पना लघीयसीति न्यायात् । मैवम् । अन्वयव्यतिरेकानुविधानस्य सहकार्यन्तरसाधारण्येन तृणादि-

मकरन्दः ।

त्कारप्राक्काल एव तृणे शक्तिस्तत्समवधाने तज्जन्या वेति विकल्पार्थः । **तथैव तच्छक्त्योरपीति** । यद्यप्येवं कार्यवैजात्यमावश्यकम् । एकजातीयकार्ये सहकारिनियमानुपपत्तेः । तथापि तृणफूत्कारसम्बन्ध–तरणिकिरणमणिसम्बन्धादिष्वप्येकजातीयशक्तिमत्त्वं कारणतावच्छेदकम् । तथा च तदन्यतमसम्बन्धाभावे तृणनिर्मन्थनसमवधानेऽपि नाग्न्युत्पत्त्यापत्तिरिति भावः । **तृणेति** । ननूक्तगौरवेण मा भूच्छक्तिकल्पना, जातिकल्पनाऽपि कुतः । यावता वह्न्यनुविधायित्वमेव धर्मिकल्पनात इति न्यायेनावच्छेदकमस्तु । नचेदमेव वह्निजनकत्वं, येनात्माश्रयान्नावच्छेद्यावच्छेदकत्वं, किन्त्वनन्यथासिद्ध्यादिघटितमिति चेन्न । तदनुविधायित्वस्य सहकार्यन्तरसाधारणतया तत्सत्त्वे तृणाद्यन्यतमासत्त्वेऽपि वह्न्युत्पादापत्तेः । कारणतावच्छेदकावच्छिन्नयत्किञ्चित्सत्त्व एव कार्योत्पादनात् ।

प्रकाशः ।

मैवम् । उक्तग्राहकैर्वह्निनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणस्य तृणनिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वा अकार्यकारणव्यावृत्तं परिच्छिद्यते, न तु तृणत्वेन कारणत्वं, वह्नित्वेन कार्यत्वं वा । तच्चोभयथाऽपि सम्भवति । वह्नित्वेन कार्यत्वमेकशक्तिमत्त्वेन कारणतया वा, तृणत्वेन कारणता वह्निविशेषत्वेन कार्यतया वा । तत्र च विनिगमकमुक्तमेव । एतेन मण्याद्यजन्यवह्नौ तृणादीनां हेतुत्वं गृह्यते इत्यपास्तम् । अन्योन्याश्रयाच्च । मणिजन्यत्वग्रहे हि तदजन्यत्वग्रहः, तृणजन्यत्वेन च तद्ग्रह इति । तथापि यत्र कार्ये वैजात्याभावः सामग्रीभेदश्च तत्र का गतिः ? यथा द्रव्यनाशः क्वचित् प्रतियोग्याश्रयनाशात्, क्वचिदसमवायिकारणनाशात् । नचाश्रयनाशाजन्यद्रव्यध्वंसत्वावच्छिन्नं प्रत्यसमवायिनाशस्य नियतत्वात् कारणत्वग्रहः । उक्त-

प्रकाशिका ।

त्रयासत्त्वे अन्यकारणसत्त्वे च वन्ह्यापत्तेः । कारणतावच्छेदकाश्रययत्किञ्चित्समवधानस्य सत्त्वात् । यत्तु व्यभिचारादन्वयाद्यनुविधानमेव नास्तीति दूषणम् । तन्न । अरणिमण्यभाववति स्तोमे अन्वयव्यतिरेकानुविधानस्य तृणे सत्त्वादेवमितयोरपि । अन्यथा तृणादिकारणताग्रहाभावे कल्पनाभावे न शक्तिवैजात्यान्यतरकल्पनस्याप्यभावादिति । मिश्रास्तु वैजात्यमपि तत्रैवावच्छेदकं यत्रानुभवसिद्धः, न तु कारणनियमानुरोधेन वैजात्यकल्पनं तद्व्यक्तिं प्रति तद्व्यक्तित्वेन नियमात् । अत एवोभयजन्यध्वंसे तद्व्यक्तिरेव नियम इति प्रकाशोऽपि सङ्गच्छते । नचैवमपूर्वतृणे वह्न्यर्थिप्रवृत्त्यनुपपत्तिः । कारणतावच्छेदकानिश्चयादिति वाच्यम् । कारणताज्ञानस्यैव प्रवर्तकत्वात् न तु विशेषतः कारणतावच्छेदकज्ञानस्य । अत एवेदं ते ज्वरहरमित्याप्तवाक्यादनवगतेऽपि कारणतावच्छेदके प्रवर्तन्ते कारणताज्ञानञ्च वैजात्यकल्पकत्वेन त्वयापि स्वीकरणीयमेव । तस्माद् यत्र वृश्चिकादावीषन्नीलत्वपीत्वादिकं प्रतीयते तत्र तन्नियामकत्वेन गोमयवृश्चिकादीनां कारणत्वेऽपि यत्र तृणादिजन्याग्निषु न विशेषप्रतीतिः तत्र तद्व्यक्त्योरेव कारणत्वं कार्यत्वं च । नचैवं यागदानादिजन्यस्वर्गेष्वपि नावान्तरवैजात्यं स्यादिति वाच्यम् । तत्र बहुवित्तव्ययायाससाध्ये कर्मणि प्रवृत्त्यनुपपत्त्या वैजात्यस्यानुमानसिद्धत्वात् नहि प्रत्यक्षैव प्रमितिः, नच तृणजन्यत्वज्ञानानन्तरं वैजात्यप्रतीतिः प्रकृतेऽपीति वाच्यम् । तस्यास्तृणजन्यत्वोपाधिविषयकत्वात् । अन्यथा वह्निजनकतावच्छेदिका जातिरेकैव तृणादौ किमिति न कल्प्या त्रयाणां पार्थिवतया जातिसङ्कराप्रसङ्गात् । न च तथा सति सहकारिनियमानुपपत्तिः, तृणोत्तरभाविवह्नित्वाद्यवच्छिन्नं प्रति फूत्कारादीनां जनकत्वात् । नच तस्यां जातौ योग्यानुपलब्धिबाधः कार्यव्यङ्ग्यतया तद्ग्रहादित्याहुः । **उक्तग्राहकै**रिति । अन्वयव्यतिरेकाभ्यां नियतेनान्वयेन चेति व्यक्तीरादाय बहुवचनम् । **अकार्यकारणव्यावृत्तमिति** । कार्यकारणभावः सामान्यतः अत एव विशेषनिषेधमाह—**न तु तृणत्वेनेत्यादि** । **एतेनेति** । व्यवस्थापितजातीनामेव लाघवादवच्छेदकत्वेनेत्यर्थः । **अन्योन्याश्रयाच्चेति** । मणिजन्यत्वग्रहे मणिजन्यवन्हित्वमपि सकलवन्हिवृत्तित्वेनैव ज्ञातमिति न तृणजन्यतावच्छेदकत्वेन ज्ञातुं शक्यते तथाच मणिजन्यत्वज्ञानमपेक्षणीयं तच्च तृणाजन्यत्वेन ग्राह्यं तदपि क्वचित्तृणजन्यग्रहे

मकरन्दः ।

**उक्तग्राहकै**रिति । अन्वयव्यतिरेकाभ्यां नियतेनान्वयेन चेति बहुवचनोपपत्तिः । अधिकञ्चानुमानप्रकाशे प्रपञ्चितम् । **एतेने**तीति । व्यवस्थापितजातीनामेव लाघवादवच्छेदकत्वेनेत्यर्थः । **अन्योन्याश्रयाच्चे**ति । वह्नौ मणिजन्यत्वे गृहीत एव मणिजन्यवह्निभिन्नवह्नित्वेन तृणजन्यत्वग्रहः, तृणजन्यत्वे च वह्नौ गृहीत एव तृणजन्यवह्निभिन्नवह्नित्वेन मणिजन्यत्वग्रह इत्यन्योन्याश्रयादित्यर्थः । अन्यथा वह्निमात्रस्यैव तदजन्यत्वेनोपस्थितौ वह्नित्वावच्छिन्न इतरव्यभिचारादेव

प्रकाशः ।

रीत्याऽन्योन्याश्रयात् । उच्यते । निमित्तकारणेतरकारणनाशत्वेन कारणत्वम् । यद्वा, विद्यमानाश्रयद्रव्यनाशे असमवायिनाशो हेतुरेवं साऽसमवायिकारणकद्रव्यनाशे प्रतियोग्याश्रयनाशः । तथाप्युभयजन्ये द्रव्यनाशे का गतिः ? आश्रयनाशाजन्यद्रव्यनाशं प्रत्यसमवायिनाशस्य हेतुत्वात् तस्य चाश्रयनाशजन्यत्वात् । अत्राहुः । तत्रेतरसमवधाने तदुभयभावाभावाभ्यां व्यक्तिविशेषभावाभावाद्

प्रकाशिका ।

सत्येवानतिप्रसक्तत्वेन ग्राह्यमिति परस्पराश्रय इत्यर्थः । न तु प्रतियोगिप्रसिद्ध्यर्थं मणिजन्यत्वग्रहोवह्नावपेक्षणीय इत्यर्थो रूपादावेव मणिनिष्ठे प्रतियोगिप्रसिद्धेरिति । **निमित्तकारणेति** । नचैवमपीन्धननाशजन्यवह्निनाशेऽदृष्टनाशजन्यशरीरनाशे च व्यभिचार इति वाच्यम् । इन्धननाशादेवानलान्तरं नोत्पद्यते पूर्वानलस्तु स्वावयवक्रियाविभागादिन्यायेनैव नश्यति, एवं शरीरमपीति स्वीकारात् । नच निमित्तकारणत्वं समवाय्यसमवाय्यन्यत्वमिति तदन्यकारणनाशत्वेन कारणत्वमायातम् । नचान्यान्यत्वमवच्छेदकमिति वाच्यम् । तस्य कारणतानवच्छेदकत्वेऽपि तत्कोटिप्रवेशे बाधकाभावात् सामान्ये सामान्यस्याप्रयोजकत्वेऽपि विशेषे विशेषस्य प्रयोजकत्वमविरुद्धमेवेत्याशयेनाह । **यद्वेति । तथाप्युभयेति** । उभयनाशोत्तरभाविनीत्यर्थः । आश्रयनाशाजन्येत्याद्युपलक्षणम् । अव्यवहितपूर्वविद्यमानासमवायिकारणकद्रव्यनाशेऽपि समवायिकारणनाशस्य हेतुत्वात् प्रकृतनाशस्य चासमवायिकारणनाशोत्तरकालीनत्वादित्यपि द्रष्टव्यम् । **तत्रेतरेति** । अव्यवहितविद्यमानोभयद्रव्यनाश उभयनाशस्य दण्डचक्रवत्कारणत्वमिति भावः । यथाश्रुतेऽनन्तकारणताकल्पनापत्तेः । यत्त्वसमवायिकारणनाशसहितसमवायिकारणनाशत्वेन हेतुत्वे तात्पर्यमिति । तन्न । विशेष्यविशेषणभावे विनिगमकाभावात् । किञ्च समवायिकारणसमानकालीनद्रव्यस्य नाशेऽसमवायिकारणनाश एवासमवायिनाशसमानकालीनस्य तस्य नाशे समवायिनाशो हेतुरेवं चोभयोत्तरकालीने फलत उभयनाशो हेतुः । वस्तुतो द्रव्यनाशं प्रत्यसमवायिकारणनाशस्य द्व्यणुकादिनाशस्थले कारणत्वावधारणात् यत्रापि समवायिकारणनाशानन्तरं द्रव्यनाशस्तत्राप्यसमवायिकारणनाश एव नाशकः, न चैवं क्षणद्वय आश्रयं विना कार्यस्वीकारापत्तिः । प्रथमक्षणेऽनाश्रितत्ववत्, द्वितीयक्षणेऽपि तथास्वीकाराविरोधात्, एवं च सति गुणकर्मादिनाशे समवायिकारणनाशस्य कारणत्वे कल्प्यमाने सामान्यत एव समवायिकारणनाशसमानकाली स्य समवेतस्य नाशे समवायिकारणनाशः कारणत्वेन कल्प्यते अनुगमानुरोधादित्येव बीजमाश्रयनाशस्य द्रव्यनाशहेतुत्वे, तथा चोदाहृतनाशे-

मकरन्दः ।

हेतुत्वग्रहानुपपत्तेः । तथा च विशेषणोपादानायासोऽपि व्यर्थ इति भावः । **निमित्तकारणेति** । न चेन्धननाशादपि वह्निनाशादननुगमः । तत्रेन्धननाशाद्वह्न्यन्तरं नोत्पद्यते । पूर्ववह्निस्त्ववयवविभागन्यायेनैव नश्यतीत्युपगमात् । एवं शरीरनाशोऽपि नादृष्टनाशजन्य इत्यभ्युपगमेनेदम् । ननु निमित्तकारणत्वं समवाय्यसमवायिभिन्नकारणत्वमिति कारणत्वान्तर्भावे गौरवम् । तदनन्तर्भावे तदन्यान्यत्वमवच्छेदकं पर्यवस्यति । तच्चानभ्युपगतमिति चेन्न । तदन्यान्यनाशत्वस्यात्र तत्पर्यवसानात् । तथाच प्रतियोग्यननुगमकतया तत्प्रवेशे तद्घटितस्यावच्छेदकत्वं, न तु तस्यैव । अनभ्युपगतञ्च तदिति भावः । केचित्तु, एतदस्वरसादेवाह–**यद्वेति** ।

**तथापीति** । न चाश्रयनाशे तदाश्रितद्रव्यतदसमवायिनोर्युगपदेव नाशादिदमसम्भवीति वाच्यम् । समवायिनाशसमकालं विभागाद् यत्रासमवायिनाशस्तत्र तत्सम्भवात् । **आश्रयनाशाजन्येत्युपलक्षणम्** । असमवायिनाशाजन्यद्रव्यनाशं प्रत्याश्रयनाशस्य हेतुत्वात्, तस्य चासमवायिनाशजन्यत्वादित्यपि द्रष्टव्यम् । **तत्रेतरेति** । नचाविद्यमानोभयकद्रव्यनाशत्वावच्छिन्ने अस-

पपन्नम् । एवं तर्हि धूमादावपि कश्चिदनुपलक्षणीयो विशेषः स्याद् यस्य दहनाऽपेक्षेति न धूमादिसामान्याद्वह्निसामान्यादिसिद्धिः ।

एतेन व्यतिरेको व्याख्यातः । तथा च कार्य्यानुपलब्धिलिङ्गभङ्गे स्वभावस्थाप्यसिद्धेर्गतमनुमानेनेति चेत् ।

बोधनी ।

दहनादीनामुपयोग इत्यपि सम्भवाच्च धूमादिमात्राद्दहनाद्यनुमानसिद्धिरित्याह—**एवं तर्हि**-इति । एतेन धूमादिविशेषस्य दहनाद्यपेक्षत्वसम्भावनाप्रतिपादनेन दहनादिव्यतिरेकाच्च धूमादिमात्रव्यतिरेकोऽपि सिद्ध्यतीत्याह—**एतेन**-इति । एवं चानुमानमात्रोच्छेद एव स्यादित्याह—**तथाच**-इति । शिंशपाया वृक्षत्वस्वभाव इत्येतद् वृक्षे शिंशपात्वानुपलब्ध्या लिङ्गेन शिंशपात्वव्यतिरेकोऽनुमानात् सिद्ध्यति, तेन व्यतिरेकासिद्धौ स्वभावस्यासिद्धेरनुमानमात्रोच्छेद एव इति ।

प्रकाशः ।

व्यक्तिविशेषं प्रति तदुभयव्यक्त्योरनन्यथासिद्धयोः कारणत्वं गृह्यते इत्येषा दिक् ।

ननु कार्यवैजात्ये तृणस्य वह्निविशेष इव वह्नित्वेन धूमविशेष एव कारणत्वं, न धूममात्रे इति शङ्कया न कार्यात् कारणं क्वाप्यनुमीयेत । यदि चोपस्थितरूपे व्यभिचाराभावात्तेनैव रूपेण कार्यत्वग्रहस्तर्हि कारणतायामपि यत्रोपस्थितरूपे व्यभिचारस्तत्रैव रूपान्तरेण कारणताग्रह इति तुल्यमित्याह । **एवं तर्हीति** । एवं वह्नेर्धूमविशेष एव प्रयोजकत्वाद् वह्निमात्रव्यतिरेकाद् धूममात्रव्यतिरेको नानुमीयेतेत्याह । **एतेनेति** । निषेध्यतयेति शेषः । **तथा चेति** । विपक्षबाधकमानवेदनीयो हि स्वभावनियमो बौद्धानाम् । बाधकं च कार्यानुपलब्धी, ततस्तद्भङ्गे कथमनुपायकः सिद्ध्येदित्यनुमानमात्रविलयान्निधैव तदुपगमादित्यर्थः । तदेतद् दूषणं बीजत्वसामान्यं प्रत्यक्षसिद्धमङ्कुरे न प्रयोजकं, किन्तु तद्विशेषः कुर्वद्रूपत्वमतीन्द्रियमिति वदतो बौद्धस्य,

प्रकाशिका

ऽस्ति द्वयमवच्छेदकं समवायिकारणनाशसमानकालीनसमवेतनाशत्वमसमवायिनाशसमानकालीनद्रव्यनाशत्वञ्चेति उभयावच्छेदेनोभयोः कारणत्वमित्यभिसन्धायाह । **दिगिति** ।

मकरन्द

भवायिनाशसहितसमवायिनाशत्वेन हेतुत्वमस्तु । तथाच कथं व्यक्तिविशेषे व्यक्तिविशेषस्य हेतुत्वम् ? अन्यथा अनन्तसामग्रीकल्पनापत्तेरिति वाच्यम् । तत्रैव तात्पर्यात् । नचात्राप्यन्यतरस्यावच्छेदकत्वे विनिगमकाभावः । असमवायिनाशत्वादिना तदुभयोरपि हेतुत्वादेव । अत एव सामग्रीभेदः । अन्यत्रान्यतरस्यैव हेतुत्वात् । नचात्राप्यन्यतरस्यैव हेतुत्वमस्तु, कार्यतावच्छेदकभेदाच्च सामग्रीभेद इति वाच्यम् । विनिगमनाविरहेणोभयोरपि तुल्यत्वात् । वस्तुतस्तु समवायिकारणनाशाद् द्रव्यगुणकर्म्मणां नाशदर्शनात् तत्तन्नाशस्याननुगमादनुगतस्य सति सम्भवे त्यागायोगादविद्यमानाश्रयकासमवेतकार्यनाशत्वावच्छेदेनास्य हेतुत्वकल्पनाद् द्रव्यनाशेऽपि तथा । तथाच युगपत् समवाय्यसमवायिनाशयोरुत्पत्तावपि तन्निष्ठकार्यमात्रनाश एवाश्रयनाशो हेतुः । तथाच न सामग्रीभेदः । अत एव समवायिनाशस्थलेऽपि तज्जन्यासमवायिनाशस्यैव द्रव्यनाशकत्वं क्लृप्तत्वादित्यपास्तम् । गुणादिनाशे तस्यापि क्लृप्तत्वात् । किञ्चाविद्यमानाश्रयकद्रव्यनाशे आश्रयनाशो हेतुरविद्यमानासमवायिकारणकद्रव्यनाशेऽसमवायिनाशो हेतुरस्तु । तथाच क्लृप्तसामग्रीत एव प्रकृतकार्योपपत्तौ न सामग्रीभेदः । अविद्यमानता च द्रव्यनाशपूर्वक्षणे बोध्या । तेन सत्समकालाविद्यमानत्वमादाय न व्यभिचार इति विद्वद्भिः परिचिन्तनीयमिति । एतत् सर्वमभिसन्धायोक्तं दिगिति ॥

प्रत्यक्षानुपलम्भगोचरो जातिभेदो न कार्य्यप्रयोजक इति वदतो बौद्धस्य शिरस्येष प्रहारः(१) । अस्माकन्तु यत्सामान्याक्रान्तयोर्ययोरन्वयव्यतिरेकवत्ता तयोस्तथैव हेतुहेतुमद्भावनिश्चयः । तथाचावान्तरविशेषसद्भावेऽपि न नो विरो-

बोधनी ।

परिहरति–न–इति । प्रत्यक्षानुपलम्भाभ्यां गृहीतान्वयव्यतिरेकं बीजत्वादिजातीयसङ्कुरादिकार्यं न प्रयोजकं कारणं किन्तु तद्विशेषः कुर्वज्जातीयत्वमिति **वदतो बौद्धस्यैष** प्रसङ्गो बाधक इति तस्याप्रामाणिकं कारणगतं विशेषमिच्छतोऽप्रामाणिकस्यैव कार्यगतस्यापि विशेषस्य सम्भावनया तस्यैव तत्कारणप्रयोज्यत्वं, नतु तद्विजातीयस्येति शङ्कावशादनुमानोच्छेदप्रसङ्गात् । एतच्च क्षणभङ्गे स्फुटीभविष्यति । **अस्माकं** पुनः परिदृश्यमानजातीययोरेव कार्यकारणभावं नियच्छतां कार्यगतविशेषसम्भावनायामपि तज्जातीयमात्रात्तज्जातीयानुमाने न कश्चिद्विरोधः । न च तृणादिजन्योऽन्य-

प्रकाशः ।

नास्माकमित्याह । **प्रत्यक्षेति** । अप्रामाणिकबीजकुर्वद्रूपत्ववदप्रामाणिक एव कार्यविशेषो यस्य कारणविशेषापेक्षेति बौद्धस्य दोष इत्यर्थः । अस्माभिस्त्वप्रामाणिको विशेषो नोपेयत इति भावः । **अस्माकं त्विति** । यत्र कारणसामान्यं कार्यसामान्ये व्यभिचारि दृश्यते, तत्रैव विशिष्य कारणताग्रहः । यत्र तु स न दृश्यते तत्रोपस्थितसामान्येनैव कार्यकारणताग्रहः । यदि च तृणादिवह्निविशेषाद् धूमविशेषः स्यादित्युच्यते, तदा नेदमनिष्टमित्यर्थः ।

ननु, कार्यकारणभावग्रहो न तावद्व्यक्त्योरेव । स हि व्यक्तिमात्रमपेक्ष्य ? तद्विशेषं वा ? । नाद्यः । घटो यदि यावत्पटजातीयपेक्षणीयापेक्षः स्यात् पटजातीयः स्याद् , घटजातीयो न स्यादित्यत एव बाधकात् । विशेषोऽपि पूर्ववर्त्तित्वमात्रं वा ? तत्तद्व्यक्तित्वं वा ? । नाद्यः । यावत्पटादिजनकजन्यत्वे घटादिव्यक्तीनामभेदाद्वैजात्यापत्तेः । रासभादिसाधारण्याच्च । अत एव नान्त्यः । व्यक्त्योरेव कार्यकारणभावे पूर्वं तदनिश्चये प्रवृत्त्याद्यनुपपत्तेश्च । नाऽपि जात्यपेक्षया । भक्षितविनष्टबीजादिव्यक्तिष्वप्यापत्तेः । न चेष्टापत्तिः । तस्य सर्वथा कार्याजननाच्छिलाशकलतुल्यत्वात् । मैवम् । बीजादिव्यक्तीनामेव बीजत्वादिना सामान्येनानन्यथासिद्धान्वयव्यतिरेकवत्त्वेन कारणत्वात् । क्वचित् कार्यव्यतिरेकश्च सहकारिवैकल्यात् । अत एव शिलाशकलवैषम्यम् । न हि यस्मिन् सति कार्यं भवत्येव तत्कारणम् , अपि तु यस्मिन् सत्येव भवति । एतच्च भक्षितविनष्टेऽपि सामान्यतोऽस्त्येव । न च सामान्येनापि रूपेण या व्यक्तिः कार्यं जनयत्येव सा कारणं

प्रकाशिका ।

**अस्माभिरिति** । वह्निवैजात्यं चोक्तयुक्त्या प्रामाणिकमेवेति भावः । **घटो यदीति** । व्यक्तिमात्रकारणत्वे यावत्पटापेक्षत्वाभ्युपगमे घटस्येति बोध्यम् । एवं पूर्ववर्त्तिव्यक्तिमात्रकारणत्वेऽपि । यावत्पटजनकजन्यत्वाभ्युपगम इत्यवधेयम् । **रासभादीति**। पूर्ववर्त्तित्वमात्रस्य तत्रापि सत्त्वादित्यर्थः । **अत एवेति** । रासभादिसाधारण्यादेवेत्यर्थः। ननु रासभादिविलक्षणव्यक्तीनामेव कारणत्वं तत्त्वेनेत्यरुचेराह । **द्रव्यत्वे सतीति** । तद्व्यक्तेः कारणताप्रमाणकाभावादिति भावः । **यस्मिन् सत्येवेति** । यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने सत्येवेत्यर्थः । तदुक्तम् । **सामान्यत इति** ।

मकरन्दः ।

उभयत्र व्यक्तिमात्रापेक्षित्वेन यावत्पटापेक्षणीयापेक्षित्वं घटस्य बोध्यम् । एवं पूर्ववर्त्तिमात्रापेक्षित्वेन यावत्पटादिजनकजन्यत्वं घटादेर्बोध्यम् । **अत एवेति** । रासभादिसाधारण्यादेवेत्यर्थः । **यस्मिन् सत्येवेति** । यद्धर्मावच्छिन्ने सत्येव सहकारिसमवधानात् कार्य्यं भवति तदवच्छिन्नं कारणमित्यर्थः । तदिदमाह । **सामान्यत इति** । यागादौ बहुवित्तव्ययायाससाध्ये फलावश्यम्भाव-

( १ ) प्रसङ्ग इति पाठान्तरम् ।

धः। किं पुनस्तार्णादौ दहनसामान्यस्य प्रयोजकम्? तृणादीनां विशेष एव नियतत्वादिति चेत्। न। तेजोमात्रोत्पत्तौ पवनो निमित्तम्, अवयवसंयोगोऽसमवायी, तेजोऽवयवाः समवायिनः। इयमेव सामग्री गुरुत्ववद्द्रव्यसहिता

---

बोधनी।

वान्तरजातिभेदोऽप्रामाणिको येन तदङ्गीकारे सर्वत्रानाश्वासः स्यादिति **किं पुनः**-इति। किमाक्षेपे। **विशेषे** स्वे स्वे कार्यविशेषे नियतत्वेनाभ्युपगमादिति। अनुवृत्तं तु न किञ्चित् दृश्यते इति भावः। **न**-इति। समवाय्यसमवायिनिमित्तानामनुवृत्तिरस्ति तावत् सामान्यप्रयोजकम्। अनुवृत्तैव च सामग्री तत्तत्सहकारिभेदवशात्पिण्डितादिविशेषोत्पत्तौ निबन्धनमुद्भूतस्पर्शतेजोऽवयवतत्संयोगपवनास्तार्णतार्णसामान्यसामग्रीति न कुत्रचिद्विरोध इति ॥ ६ ॥

प्रकाशः।

न त्वन्येति वाच्यम्। यागादौ बहुवित्तव्ययायाससाध्ये यागत्वसत्त्वेऽपि किमियं व्यक्तिः स्वर्गजनिका, न वेति संशये प्रवृत्त्यभावापत्तेः। यदि सा पापव्यक्तिर्नरकजनिका, तदा कृतेऽपि प्रायश्चित्ते नरकं जनयिष्यत्येव, अन्यथा तु प्रायश्चित्तं विनाऽपि न नरकमित्युभयथापि प्रायश्चित्ते प्रवृत्त्यनुपपत्तेश्चेति। **किं पुनरि**ति। दहनगतं सामान्यं **दहनसामान्यं** तेजस्त्ववह्नित्वादि। तेन नोत्तरविरोधः। **तृणादीना**मिति। तथा च सामान्यमाकस्मिकं स्यादिति भावः। **तेजोमात्रे**ति। तेजः पदं कार्यतेजःपरम्। न च सूर्यालोके व्यभिचाराद् न पवनस्तेजोमात्रे निमित्तमिति वाच्यम्। निर्वातस्थितस्य दीपस्य वातं विना नाशदर्शनेन तत्र पवननिमित्तकत्वनिश्चयादन्यत्रापि तेजस्त्वेन पवनजन्यत्वानुमानात्। न च वह्नित्वमुपाधिः। तैजसशरीरस्य पाञ्चभौतिकत्वेन पवनजन्यतया

प्रकाशिका।

**यदि सेति**। नचाजनकत्वेऽपि तस्या जनकजातीयनाशार्थं प्रायश्चित्ते प्रवृत्तिरिति वाच्यम्। दुःखाजनकत्वेन द्वेषाविषयतया तन्नाशार्थमप्रवृत्तेः, निष्प्रयोजनकत्वेन द्वेषमात्रात् **कृतेरनुत्पत्ते**श्चेत्याशयात्। **निवातस्थेति**। ननु वाताभावे दीपध्वंस इत्येतावता तस्य कारणत्वं नायाति कार्यानुत्पादप्रयोजकव्यतिरेकप्रतियोगिन एव कारणत्वात्। न वा वाताभावो वह्निनाशे कारणं समवायिकारणासमवायिकारणनाशयोरेव द्रव्यनाशकत्वादिति चेन्न। विनाशपदेन सजातीयानुत्पादप्रयुक्तसन्तानोच्छेदस्य विवक्षितत्वात्। तथाचाशुविनाशितया पूर्वदीपनाशे वातरूपकारणाभावेनाग्रिमानुत्पादे सति सन्तानोच्छेद इत्यत्र तात्पर्यम्। तेजस्त्वेन=जन्यतेजस्त्वेन। **न चेति**। साधनावच्छिन्नसाध्यव्यापको यः स उपाधिरतो न वातध्वंसे साध्याव्यापकत्वम्। नन्वेवमपि वह्नित्वावच्छिन्ने पवनस्य कारणत्वमायाति न तु जन्यतेजोमात्रे,पवनोत्कर्षेण वह्न्युत्कर्षादपि वह्नित्वावच्छिन्ने पवनस्य कारणत्वमिति चेत्? वह्नित्वापेक्षया जन्यतेजस्त्वस्य सामान्यतया तस्यैवावच्छेदकत्वात्। नच वह्नित्वं जातिरूपतया लध्विति वाच्यम्। भास्वररूपसमवायिकारणतावच्छेदकतया जन्यतेज-

मकरन्दः।

निश्चये सत्येव प्रवृत्तेरिष्टापत्तिरिति यदि ब्रूयात्, तदा दोषान्तरमाह। **यदि सेति**। नचाजनकव्यक्तेरपि तज्जातीयतया द्वेषात्तन्नाशार्थं प्रवृत्तिरिति वाच्यम्। दुःखाजनकत्वे द्वेषस्याप्यभावात्, निष्प्रयोजने द्वेषमात्रात् कृतेरनुत्पत्तेश्चेति भावः। **निर्वातस्थितस्येति**। ननु नैतावता कारणत्वम् न हि कारणाभावेन कार्यध्वंसः, किन्त्वनुत्पाद इति चेन्न। नाशपदेन प्रवाहानुत्पादेनात्यन्तोच्छेदस्य विवक्षितत्वात्। तथाचाऽऽशुनाशितया पूर्वं प्रदीपनाशेऽपि वातं विनाऽग्रिमतदनुत्पादादित्यत्र तात्पर्यम् ॥

तेजस्त्वेन=कार्यतेजस्त्वेन। **न चेति**। न च पवनध्वंसादिषु साध्याऽव्याप्तिः। साधनावच्छि-

**पिण्डितस्य। इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनं, तत्रापि जलं प्राप्य दिव्यं, पार्थिवं प्राप्य भौमम्, उभयं प्राप्यौदर्यमारभत इति स्वयमूहनीयम्॥ ६॥**

**तथाप्येकमेकजातीयमेव वा किञ्चित् कारणमस्तु, कृतं विचित्रेण। दृश्यते**

बोधनी।

अथ वैचित्र्यादिति हेतुमवतारयितुं शङ्कते—**तथापि**–इति। यद्यपि कार्यस्य नियतजातीय-कारणनियमस्तथापीति। कथं तर्हि कार्यवैचित्र्यमित्यत आह—**दृश्यते** हीति। न चात्र

प्रकाशः।

तत्र साध्याव्यापकत्वात्। आगमोऽप्यत्रास्त्येवेत्येके। पवनोत्कर्षेण वह्न्युत्कर्षदर्शनात् तेजोमात्रे तस्य निमित्तत्वं न वह्निमात्रे, सामान्यस्य सामान्यं प्रति प्रयोजकत्वे विशेषस्योपाधितायामतिप्रस-ङ्गादित्यन्ये। **पिण्डितस्य**=सुवर्णस्य। दिव्यमिति दृष्टान्तार्थम्। तत्राप्रश्नात्॥ ६॥

एतावता कारणमात्रे सिद्धेऽपि सापेक्षत्वादित्यत्र सिद्धसाधनं शङ्कते।

**तथापीति। एकमिति** त्रिदण्डिमतसमुत्थानम्, तेषां ब्रह्मण एव सकलकारणत्वात्। **एक-जातीयमिति** साङ्ख्यमतम्। तेषां पुरुषाणां भेदात् प्रतिपुरुषं च महत्तत्त्वानां भेदेऽपि प्रकृति-विकारत्वात् प्रकृतेश्चैकत्वादेकजातीयत्वात्। तथाच कारणस्यैकव्यक्तित्वेनैकजातीयत्वेन वा नेश्वर-सिद्धिरस्मदादिनापि तद् द्रष्टुं शक्यत्वादिति प्रकृतसङ्गतिः। न चाविचित्राद् कारणाद्विचित्रं कार्य-

प्रकाशिका।

त्त्वस्यापि जातेः सिद्धेः। अत एव तेजस्त्वापेक्षया द्रव्यत्वमेव सामान्यमिति तदेव पवनजन्य-तावच्छेदकं किमिति न स्वीक्रियत इत्यनुयोगो निरस्तः। द्रव्यत्वस्य नित्यवृत्तित्वात्, जन्यद्रव्य-त्वस्य पृथिवीत्वसङ्करेणोपाधित्वात्। ननु पृथिवीजन्यत्वमेवोपाधिः स्यादत आह। **आगमो-ऽपीति**। तथाच पक्ष एव साध्यव्यापकत्वमिति भावः। आगमस्तु—

वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम्। ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते॥ इत्यादिः।

यद्विशेषयोरित्यादिन्यायावतारे निर्वातस्थदीपस्येत्यादिकमेव सम्यक्। तदनवतारे त्वेताव-तापि वह्निमात्रे कारणत्वमायाति न तु जन्यतेजोमात्र इत्यरुचिं विभावयति। **अन्य** इति। **तत्राप्रश्नादिति**। यद्यपि तत्गतसामान्यमपि प्रश्नाविषय एव दिव्यस्यापि दहनत्वात्, तथापि तार्णादिदहनसामान्यस्यैव प्रस्तुततया प्रश्नविषयत्वमित्याशयेनेदमुक्तम्। एवं च पिण्डितस्य सुवर्णस्य दिव्यमिति दृष्टान्तार्थमित्येको ग्रन्थः, तेन पिण्डितस्यापि दृष्टान्तता लभ्यते। अन्यथा तस्यापि प्रश्नाविषयत्वेनासङ्ग्रहापत्तेः। न च औदर्य्यस्यापि प्रश्नाविषयतया तत्रोत्तरविरोधः, तार्णपदेन पार्थिवेन्धनजन्यवह्नेरेवोक्तत्वेन तस्यापि प्रश्नाविषयत्वात्। दृष्टान्तपरत्वाद्वा॥ ६॥

**प्रकृतेरिति**। एकप्रकृतिविकारत्वादेकजातीयत्वं महत्तत्त्वानां पुरुषभेदेन भेदेपीऽत्यर्थः। **अस्म-**

मकरन्दः।

**न्न**साध्यव्यापकत्वादिति भावः। अत एवाह। **तैजसेति। आगमोऽपीति**। "ज्योतिरुत्पद्यते वायो"रित्यादिविष्णुपुराणरूप इत्यर्थः। यद्विशेषयोरिति न्यायात्तावता वह्निसामान्यमात्रे तद्धेतुत्वं सिद्ध्यति, न तु तेजोमात्रे। अन्यथा द्रव्यमात्र एव तदापत्तेरित्यनुशयादाह। **अन्य** इति। **दिव्य-मितीति**। यद्यपि दिव्यस्यापि दहनतया तद्गतसामान्यमपि प्रश्नविषयः;तथापि तार्णाऽऽदिदह-नसामान्यस्य प्रश्नविषयत्वादस्यातथात्वमित्याशयः। यद्यप्येवं पिण्डितस्येत्यप्ययुक्तं, तत्राप्य-प्रश्नात्। तथापि तदपि दृष्टान्तार्थमेव। एवञ्च पिण्डितस्य सुवर्णस्य दिव्यमिति दृष्टान्तार्थमित्ये-कग्रन्थो बोध्यः। दिव्यमितीत्युपलक्षणम्, उदर्यस्यापि दृष्टान्तत्वमित्येके। तार्णपदस्य पार्थिवेन्धन-दहनपरतया तत्र प्रश्न एवेत्यन्ये॥ ६॥

**प्रकृतेश्चेति**। तथाचैकप्रकृतिविकारत्वान्महत्तत्त्वादीनामेकजातीयत्वमित्यर्थः। **तद् द्रष्टु-**

ह्यविलक्षणमपि विलक्षणाऽनेककार्यकारि। यथा प्रदीप एक एव तिमिरापहारी, वर्त्तिविकारकारी रूपान्तरव्यवहारकारीति चेन्न। वैचित्र्यात् कार्यस्य।

**एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।**
**शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः॥ ७॥**

---

बोधनी।

दृश्यते स्वरूपसहकारिवैलक्षण्यमिति भावः। अत्र हेतुमवतारयति—**वैचित्र्यात्**-इति। कथं साध्यमेव कारणवैचित्र्यं हेतुरित्यत्राह-**कार्यस्य**—इति।

व्याचष्टे-**एकस्य**-इति। न तावदेकमेव कारणम्, एकस्याक्रमत्वेन कार्यक्रमानुपपत्तेः। अनेन कालकृतवैचित्र्यं कारणवैजात्ये हेतुर्दर्शितः। यद्वा, प्रथमसंग्रहश्लोकानुपन्यस्तमेव कार्यक्रममत्रैवाशङ्कितस्य कारणैकत्वस्य निराकरणायोक्तासंग्रहोक्तं वैचित्र्यमवतारितमिति। समस्यापि शक्तिभेदात्कार्यवैचित्र्योत्पत्तिमाशङ्क्याह-**शक्तिभेदो न च**-**इति**। धर्मिव्यतिरेकाव्यतिरेकविकल्पदुःस्थत्वात्तस्येति भावः। यद्वा, भावादभिन्नः शक्तिभेदो न कारणं भावमात्रकारणत्वेन समानयोगक्षेमत्वादिति। एकप्रसरेण योजनाभेदे तु कारणवैचित्र्यस्वीकार इति भावः। ननु स्वभाव एवायं भावस्य यत्सम च विषमं कार्यं करोतीति तत्राह-**अभिन्नस्वभाव**-**इति**। य एवास्यैकस्मिन् जनयितव्ये स्वभावः स एवान्यस्मिन् जनयितव्येऽपि, स्वभावस्य दुर्लङ्घ्यत्वात्। ततश्चाभिन्नस्वभावस्य कथं विलक्षणकार्यनिर्माणमिति भावः। अभिन्न इत्यस्य पूर्वशेषत्वे त्वयमर्थः

प्रकाशः।

मदृष्टचरमित्याह। **दृश्यते हीति**। **तिमिर**मालोकाभावः। **तदपहार** आलोकः। तत्कारी दीपः पिण्डितरूपः। **रूपान्तरं** घटादिरूपम्। प्रदीपे च न स्वरूपभेदसहकारिभेदावित्यर्थः। तथाच तद्दृष्टान्तेनान्येषामपि विचित्रकार्याणामविचित्रकारणजन्यत्वमनुमेयमिति भावः॥ **न वैचित्र्यादिति**। दृष्टान्तेऽप्यविचित्रकारणजन्यत्वमसिद्धमिति भावः॥

**एकस्येति**॥ एकस्य कारणस्य सम्बन्धी न क्रमः कार्याणाम्। समस्यैकजातीयस्य च कारणस्य सम्बन्धि न वैचित्र्यं कार्याणाम्। शक्तिविशेषो न कार्यवैचित्र्यहेतुः, धर्म्यभिन्नो यतः। चो हेत्वर्थे। विचित्रकार्यजननस्वभावादपि कार्यवैचित्र्यमुपपाद्यम्। एकत्र कार्ये यत्स्वभावो जनकस्तदितरकार्यजननेऽपि तत्स्वभावो वाच्यः। अन्यथैकस्य स्वभावभेदादेकत्वादिहानिप्रसङ्ग इत्येकस्व-

प्रकाशिका।

**दादीनापीति**। यद्यपि ब्रह्मणास्मदादिना वा शक्याधिष्ठानं तथापि तावन्मात्राभिज्ञसिद्धावपि न सकलदर्शीश्वसिद्धिरित्यत्र तात्पर्यम्। तदित्यव्ययं षष्ठ्यन्तम्। तथाच तस्य द्रष्टुं शक्यत्वादित्यर्थः। तिमिरस्य तेजोऽभावतया तदपसारस्तेज एव न च तत्कारित्वं तस्येत्यत आह। **पिण्डितरूप इति**। तथा च तेजःकारित्वं तेजसो व्यक्तिभेदादविरुद्धमिति भावः। **प्रदीपे चेति**। अयं पूर्वपक्षिणोऽभिमान इति भावः। अत एवाग्रेऽभिमानखण्डनमेव करिष्यति **दृष्टान्तेऽपीत्यादिना**। एकस्य क्रमः परैरपि नाभ्युपगत इत्यतः पूरयति **सम्बन्धी कार्याणामिति चेति**। एवमग्रे-

मकरन्दः।

मिति। तदित्यव्ययं षष्ठ्यन्तम्। तेन, तस्य द्रष्टुं शक्यत्वादित्यर्थः।

ननु तिमिरं तेजोऽभावः, तदपहार एव प्रदीपो, न तु तत्कारी, अभेदे जन्यजनकभावानुपपत्तेरित्यत आह। **तिमिरमिति**। तथा च व्यक्तिभेदमादायाविरोध इति भावः। प्रदीपे चेत्यापाततः अत एव दूषयति। **दृष्टान्तेऽपीति**। एकस्य कारणस्य क्रमो न पराभ्युपगतोऽपीत्यनाक्षिप्तसमाधानमिति पूरयित्वा व्याचष्टे। **एकस्येति**। एवमग्रेऽपि। अक्रमा

**न तावदेकस्मादनपेक्षादनेकम् । अक्रमात् क्रमवत्कार्यानुपपत्तेः । क्रमवत्तावत्कार्यकारणस्वभावत्वात्तस्य तत्तथा यौगपद्यवदिति चेत् । अयमपि क्षणभङ्गे परिहारो न तु सहकारिवादे, पूर्वपूर्वानपेक्षायां क्रमस्यैव व्याहतेः । क्रमनियमे**

---

बोधनी ।

स्वभावः कार्यान्तरे जनयितव्येऽपि नापैति यावद्भावभावित्वात् स्वभावस्येति ।

आद्यं पादं विवृणोति—**न तावत्**-इति । नैकस्मात् क्रमवत्सहकारिविधुरादनेकं क्रमवत् कार्यं, भवतीति शेषः । **अक्रमात्**-इति । क्रमवत्सहकारिवैधुर्येणासम्भवायितक्रमादिति । यद्वा, कार्यस्य भेदस्तावत् कारणभेदात् स्यात् यथा घटपटयोः, तदभावेऽपि कालभेदाद्वा यथा दुग्ध-दध्नोः । अत्र तु पूर्वः कल्पो न भवति कारणस्यैकत्वाभ्युपगमादित्यभिप्रत्योत्तर आह—**न तावत्**-इति । सहकार्यभावेन कालक्रमायोगादिति । अत्र तु नानेककार्यं भवतीति यथास्थित एव ग्रन्थः सङ्गच्छत इति । शङ्कते—**क्रमवत्**-इति । **तस्य** कारणस्य । **तत्** कार्यं । **तथा** क्रमवद् । यथा ह्येकस्य यौगपद्यम् । अनेकेषामेककालता हि यौगपद्यं, तत् कथमेकस्य भवेत् तत्रापि स्वभावत एव युगपत् कार्याणि कुर्वन् दृष्टान्त इत्यर्थः । एवं वदता चार्वाकवराकेण सहकारिवाद एवाभ्युपगतः स्यादिति प्रतिपादयन्नाह—**अयमपि**-इति । यावत्कार्यकरणसमर्थस्वभावो भावो जातः स तावन्त्यपि कार्याणि तदैव कुर्यात् समर्थस्य क्षेपायोगात् । ततः स क्षणान्तरे अर्थक्रियाभावादसत्त्वमेवेति यदा बौद्धः क्षणभङ्गं ब्रूयात् तत्रैष परिहारः सङ्गच्छते । एकस्यैव स्वभावतः क्रमेणानेककार्यकरणमुपपद्यत इति । अपि चेति समुच्चयो बौद्धस्यैष शिरसि सम्प्रहार इत्येतदपेक्ष्येति । सहकारिसन्निधिक्रमेणैकमेव तत्तत्कार्यं करोतीति सहकारिवादः, न तस्यायं बाध इति । कथमबाधकं यावता स्वेतरनिरपेक्षमेकमेव क्रमेण कार्याणि करोतीत्युक्तिः सहकारिवादं बाधेतैवात आह—**पूर्व**-

प्रकाशः ।

भावजन्यत्वेन विजातीयकार्याणामप्यैकजात्यं स्यादित्यर्थः । **अक्रमादिति** । क्रमप्रयोजकसहकारि-विधुरादित्यर्थः । **क्रमवदिति** । सहकारिविरहेऽपि क्रमिककार्याजननशीलत्वादक्रमस्यापि क्रमिककार्यजनकत्वं स्यादित्यर्थः । **यौगपद्यवदिति** सप्तमीसमर्थाद्वतिः । यथा कार्ययौगपद्ये अयुगपत्स्वभावोऽपि दीपः कारणमेवमक्रमोऽपि क्रमिककार्येषु कारणं स्यादित्यर्थः । **तत्**-कार्यम् । **तथा**-क्रमवदित्यर्थः । **अयमपीति** । समर्थस्य विलम्बानुपपत्तेरनेकानि क्रमिकाणि कार्याण्युत्पत्त्यन्तरमेव कुर्यादित्यत्र समर्थोऽपि न तथा, क्रमवत्तावत्कार्यकरणस्वभावस्योत्पादादिति न विरुद्धधर्माध्यास इति क्षणभङ्गपक्षे परिहारः सम्भवी । स्थैर्य्यपक्षे तु क्रमिकसहकार्यपेक्षां विना तादृशः स्वभाव एव न स्यादित्यर्थः ।

पूर्वपूर्वक्रमिककार्यानपेक्ष उत्तरकार्योत्पादः ? तत्सापेक्षो वा ? । आद्ये, **पूर्वेति** । विलम्बे

प्रकाशिका ।

ऽपि नित्यस्य कालादेः क्रमिककार्यजनकत्वमस्त्येवेत्यत आह । **क्रमप्रयोजकेति** । ननु प्रथमासमर्थत्वे वैरूप्यम् न हि यौगपद्यं कारणस्वभावजन्यं किन्तु युगपत्कालीनानि कार्याणीत्यत आह । **सप्तमीसमर्थादिति** । ननु स्वभाववादेन परिहारः स्थैर्यपक्षेऽपि संभवत्येव तत्कुतो न सहकारिवाद इत्युक्तमत आह । **समर्थस्येत्यादि स्वभाव एव न स्यादित्यन्तम्** । तथा च परैः सहकारिविलम्बेन विलम्बाभ्युपगमात्, स्वभावस्य कुर्वद्रूपात्मकस्य नियामकत्वं वक्तुं शक्यते स्थिरवादिनान्तु तादृशस्वभावस्य सहकारिणं विनानुपपत्तिः । तत्स्वीकारे तु विजातीयं कारणं सिद्धमेवेत्यर्थः । ननु कारणाभेदे कार्याभेदः सत्यदहनत्वे दहनत्वे चोपपद्यत इति कुतो नियतं-

मकरन्दः ।

दपि नित्यात् कालादेः क्रमेण कार्याणीत्यत आह । **क्रमप्रयोजकेति** ।

त्वनपेक्षाऽनुपपत्तेः ।

नाप्यनेकमविचित्रम् । यदि ह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुर्नासावदहनो दहनो वा स्यादुभयात्मको वा स्यात् । न चैवम् ।

बोधनी ।

इति । पूर्वपूर्वमुत्पाद्योत्तरोत्पादनं हि क्रमः, अन्यथा यौगपद्यप्रसङ्गात् । तत्र स्वेतरनिरपेक्षस्य कार्योत्पादने पूर्वोत्पादनमपेक्ष्योत्तरोत्पादनमित्येवमात्मकः क्रमो बाध्येत । क्रमाङ्गीकारे च पूर्वपूर्वमुत्पादनमुत्पाद्यमानं वापेक्षमाणस्य कार्यकरत्वमिति स्यात् । तत्र स्वेतरापेक्षालक्षणसहकारिवादः सिद्धः स्यादिति ।

द्वितीयपादं व्याचष्टे—**नाप्यनेकम्**—इति । नानेकमप्यविचित्रमेकजातीयं कारणं विचित्रस्य कार्यस्येति । कुतो नैवमित्याशङ्क्य किं तत् कारणं दहनैकजननस्वभावम्, अदहनैकजननस्वभावम् उभयजननस्वभावं वेति विकल्पं हृदि निधाय प्रथमे दोषमाह—**यदि हि**—इति । असावदहनाभिमतो नादहनः स्यात् किन्तु दहनसामग्रीजन्यत्वेन दहन एव स्यादिति भावः । द्वितीयेऽप्याह–**दहनो वा**–इति । अदहनसामग्रीजन्यत्वादिति । तृतीयेऽप्याह–**उभयात्मक**–इति । उभयमप्युभयात्मकं भवेदिति । विपर्ययस्तु दृश्यत इति । शक्तिभेदो नचेत्येतदवतारयितुं

प्रकाशः ।

हेत्वभावादित्यर्थः । अन्त्ये, **क्रमेति** । तस्यैव द्वितीयस्य कारणस्यापेक्षणादित्यर्थः । एकजातीयं कारणं दहनजनकैकस्वभावं वा ? अदहनजनकैकस्वभावं वा ? उभयजनकस्वभावं वा ? । आद्ये दोषमाह । **नासाविति** । कारणाभावादित्यर्थः । भवन् वा दहनात्मको भवेदित्याह । **दहनो वेति** । इतरदहनवत्तद्धेतुस्वभावप्रसूतत्वादित्यर्थः । दहनजनकैकस्वभावस्य अदहनजनकत्वे व्याघातोऽपीति भावः । द्वितीये तु यथाव्याख्यातवैपरीत्यं फक्किकार्थः,- नाऽसौ दहनोऽदहनो वा स्यादिति, कृत्वा । तृतीये, **उभयात्मक** इति ॥ अत्र च पटो यदि यावद्दहनजनकजन्यः स्यात् पटो न स्याद्, दहनो वा स्यादित्यदहनदहनत्वयोरापादनम् । अदहनो वा यदि तथा स्याद् दहनः

प्रकाशिका ।

दहनत्वमेवापादनीयमतो विकल्पयति । **एकजातीयमित्यादि** । अदहनत्वाभावदहनत्वयोः पौनरुक्त्यमतोऽन्यथार्थप्रतिपत्तये हेतुं पूरयति । **कारणाभावादिति** । तथा चादहनेऽनुत्पत्तिदहनत्व आपाद्य, इत्यर्थः । एवमग्रेऽपि । यथाश्रुते वैयधिकरण्यं तृतीये चोभयात्मकत्वमापाद्यमप्रसिद्धमित्यन्यथा तर्कमाह । **अत्र च पटो यदीति** । **इत्यदहनदहनत्वयोरिति** । यद्यप्यदहनत्वं प्रथमतर्केण नापाद्यं किन्तु तदभावो दहनजकस्वभावत्वे तर्कोनुपदर्शनं च,तथाप्यत्रेतिशब्दः प्रकारवची तथा च दहनो यद्यदहनजनकस्वभावजन्यः स्याद्दहनो न स्यात अदहनो वा स्यादिति द्वितीयस्तर्कः। स च द्वितीकल्पे यथाव्याख्यातवैपरीत्यमित्यादिग्रन्थेन दर्शितप्रयोग इति तत्फलमेव दर्शितं अदहनदहनत्वयोर्यथायोग्यं प्रथमद्वितीयात्वयः । तृतीयतर्कमाह **अदहनोऽयमिति** ।

मकरन्दः ।

यथाश्रुते वैयधिकरण्यादाह । **अत्र चेति** ।

---

श्रीगणेशाय नमः ।

**यदि हि अन्यूनमनतिरिक्तं वेति** । अन्यूनानतिरिक्तं दहनकारणमेव तदेकजातीयं कारणं यदि स्यादसौ प्रसिद्धोऽदहनो न स्यात् नोत्पद्येत दहन एव वा स्यादित्येका योजना । अन्यूनानतिरिक्तमित्यत्र विभक्तिविपरिणामेन अदहनस्यापि हेतुर्यद्यन्यूनानतिरिक्तास्तदेकजातीयकारणं स्यादसौ दहनो न भवेत् अदहन एव वा स्यादिति द्वितीया । तदेकजातीयं कारणमन्यूनानतिरिक्तं दहनकारणमदहनस्यापि हेतुः स्यादसावुभयात्मको भवेदिति तृतीया ॥

**शक्तिभेदादयमदोष इति चेन्न । धर्म्मिभेदाभेदाभ्यां तस्यानुपपत्तेः । असङ्कीर्णो-भयजननस्वभावत्वादयमदोष इति चेत् । न । न हि स्वाधीनमस्यादहनत्वम्, अपि तु तज्जनकस्वभावाधीनम् । तथाच तदायत्तत्वाद्दहनस्यापि तत्त्वं केन वारणीयम् । न हि तस्मिञ्जनयितव्ये नासौ तत्स्वभावः । तस्माद्विचित्रत्वात्**

बोधनी ।

शङ्कामाह-**शक्तिभेदात्**-इति । नानात्वादेकस्यैव कार्यवैचित्र्योपपत्तेर्न पूर्वोक्तदोष इति । **न-इति** । सा हि शक्तिर्धर्मिणो स्याद् भिन्ना वा ऽभिन्ना वा भिन्नाभिन्ना वा, प्रथमे शक्तिरेव कारण स्यात् तदन्वयव्यतिरेकानुविधानात् कार्यस्य । न द्वितीयः, शक्तेरेवापलापात् । न तृतीयः, प्रमाणा भावात् तद्व्याघाताच्च । तेन भेदाभेदाभ्यामिति ग्रन्थश्च प्रत्येकसमुदायपरो योजनीयः । यद्वा, दहनादहनजननशक्तिमतः कारणाज्जातस्य कार्यस्य दहनादहनात्मकत्वप्रसङ्गेन विरुद्धधर्मसंसर्गाद् भेदः स्यात् एकसामग्रीजन्यत्वेनाभेदश्च स्यादिति शक्तिभेदानुपपत्तिरिति । श्लोकशेषं विवरीतुं शङ्कते- **असङ्कीर्ण**-इति । नायं दहनादहनाद्यात्मकत्वप्रसङ्गदोषोऽस्तीत्यर्थः । **न-इति** । यदि हि स्वाधीनमस्यादहनस्यादहनत्वं तदा दहनस्यादहनप्रसङ्गो वक्तुं न शक्येतापि, न चैवं, किन्तु कारणगतादहनजननस्वभावायत्तम्, तथा च दहनस्यापि तदेकसामग्रीकस्य तत्त्वमदहनत्वं दुर्वारमिति । एतदेव श्लोकशेषेणोपपादयति **नहि**-इति । तस्मिन् दहने जनयितव्ये नासौ भावो दहजननस्वभाभो न भवति, स्वभावभेदाभ्युपगमे तु कारणवैजात्यं स्यादिति भावः । उपसंहरति-**तस्मात्**-इति । वस्तु कार्यवैचित्र्यात् कारणवैचित्र्यमभ्युपगम्यैव क्षणभङ्गित्वाद् भावानां स्वरूपत एव वैचित्र्यं न त्वेकस्यैवानुयायिनः सहकारिनिवन्धनं वैचित्र्यमिति

प्रकाशः ।

स्यादित्युभयापादनमिति नाप्रसिद्धिः । ननु, दहनजनकस्यैव धर्मभेदमुपादायादहनजनकत्वान्नोक्तदोष इति शङ्कते । **शक्तिभेदादिति** । स धर्मभेदो न धर्म्मभिन्नः तथा सति धर्मिणोऽभिन्नत्वात्तदभिन्नस्य शक्तिरूपधर्मस्य भेदानुपपत्तेः । नापि धर्मिभिन्नः, तस्यैव कारणान्तरत्वे प्रतिज्ञातैकजातीयकारणत्वव्याघातापत्तेः । नापि धर्मिणो भिन्नाभिन्नो, विरोधादिति परिहरति । **धर्मिभेदाभेदाभ्यामिति** । परस्परविलक्षणानेकजनकस्वभावस्य कारणत्वमिति नोभयात्मकत्वमेकस्येत्याह ।

**असङ्कीर्णेति** । जनितादहनस्य दहनेऽपि जनयितव्ये अदहनजनकस्वभावत्वमनुवर्त्तते न वा? आद्ये, **न हीति** । अस्य अदहनत्वेनाभिमतस्य । अन्त्ये पुनरेकजातीयकारणव्याघातः । तस्यैवादहनजनकस्वभावत्वमतिक्रम्य स्वभावान्तरेण दहनजनकत्वादिति भावः । **तथा चेति** । दहनो यद्यहन जनकस्वभावजन्यः स्याददहनः स्यादिति । एवं विपरीतमप्यापाद्यमित्यर्थः । विचित्रकार्याणां विचित्रकारणजन्यत्वे प्रत्यक्षानुमाने प्रमाणमुपसंहरन्नेवाह । **तस्मादिति** । ननु स्वरूपमेव विचित्र-

प्रकाशिका ।

**उभयापादनमिति** । यद्यपि दहनत्वमेवापाद्यं तथापि पक्षतावच्छेदकमहिम्ना तदुभयापादनमित्यभिप्रेत्येदमुक्तम् । यद्यपि पटपक्षकदहनत्वापादकतर्कादविशेषोऽस्य, तथापि तत्र पटत्वमात्रादहनत्वं पक्षतावच्छेदकमिति भेदः । वस्तुतोऽत्र तथात्वेनोभयजनकस्वभावजन्यत्वस्यापादकत्वे, न लाभः तत्र दहनजनकैकस्वभावजन्यत्वमापादकमिति भावः । **नाप्रसिद्धिरित्युपलक्षणं** न वैयधिकरण्यमित्यपि द्रष्टव्यम् । ननु शक्तिभेदेऽपि शक्तस्य भेदादेककारणकत्वं भज्येतेत्यत आह । **नन्विति** । तथाचैवमपि धर्मानभिन्न इत्यर्थः । उभयशब्दस्य द्वितयार्थकत्वेन सर्वसङ्गतिरित्यन्यथा व्याचष्टे । **परस्परेति** । तत्वं दहनत्वमिति भ्रमं निवारयन्नेव वैयधिकरण्यादन्यथातर्कमाह । **दहनो यद्यदहनेति** ॥ ७ ॥

मकरन्दः ।

**नाप्रसिद्धिरित्युपलक्षणं**, नापि वैयधिकरण्यमित्यपि द्रष्टव्यम् ॥ ७ ॥

कार्यस्य कारणेनापि विचित्रेण भवितव्यम् । न च तत् स्वभावतस्तथा । ततः सहकारिवैचित्र्यानुप्रवेशः । न तु क्षणोऽपि तदनपेक्षस्तथा भवितुमर्हतीति ॥ ७ ॥

अस्तु दृष्टमेव सहकारिचक्रं किमपूर्वकल्पनयेति चेन्न । विश्ववृत्तितः ।

**विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा ।**
**दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥**

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं, न परलोका-

---

बोधनी ।

बौद्धो मन्यते तं प्रत्याह—**न च**—इति । न च **तत्**=कारणम् । **स्वभावतः**=स्वरूपतः । **तथा**=विचित्रं, तत्त्वेन प्रत्यभिज्ञायमानत्वादिति । यद्वा, प्रदीपवत् स्वभावत एव विचित्रमस्तु कारणं किं सहकारिवैचित्र्येणेत्युक्तमिति चेत्, तत्राह—**न च**—इति । प्रदीपे तिमिरापहारादिकार्यभेदस्य तैलवर्त्यादिसहकारिभेदनिबन्धनत्वादित्यर्थः । क्षणभङ्गवादेऽपि सहकारिवैचित्र्यमादरणीयमित्याह—**न च क्षणोऽपि**—इति । न चान्त्यक्षणोऽपि सहकार्यनपेक्षस्तथा विचित्रकार्यसन्ततिहेतुर्भवति । सोऽपि हि यदृच्छया सिद्धसहकारिमध्यमध्यासीन एव विचित्रकार्ये हेतुः. अन्यथा कुसूलनिहितः वीजः कृषीवलः कृतार्थः स्यादिति ॥ ७ ॥

अथ विश्ववृत्तित इत्येतदवतारयितुं शङ्कते—**अस्तु**—इति । ततोवेश्वरसिद्धिरिति अवतारयति—**न, विश्ववृत्तितः**—इति । अस्यानन्यथासिद्धिं दर्शयन् विवक्षितसाध्यकत्वमुपपादयति—**विफला**—इति । यागादौ तावद्विश्वस्य जगतः प्रवृत्तिर्दृश्यते, नेयं विफला, नापि दुःखैकफला, विश्ववृत्तित्वादेव । नापि दृष्टपूजादिफला स्वरूपतो हेतुत्वात् । परैर्विप्रलब्धत्वात् परविप्रलिप्सया वा प्रवृत्तिरित्यपि न युक्तम् । ईदृशविप्रलम्भासम्भवात् तस्मात् यागादौ विश्ववृत्तिरनन्यथासिद्धा तस्यापि तावत् कारणत्वं कल्पयति । न तु दृष्टमेव सहकारिचक्रं कारणमित्यर्थः । तदेतद् व्या-

प्रकाशः ।

मस्तु कृतं सहकारिवैचित्र्येणेत्यत आह । **न चेति** । ननु सहकावैचित्र्यानुप्रवेशं विनैव यथोत्पन्नक्षणस्वरूपमुपादाय कार्यवैचित्र्यमुपपत्स्यत इत्यत आह । **न त्विति** । **तदनपेक्षः**=सहकार्यनपेक्षः । **तथा**=विचित्रकार्योर्जकः । बौद्धमते सहोत्पन्नविचित्रसहकारिसहितस्यैव विचित्रकार्यजनकत्वादित्यर्थः । तदेवं विलक्षणसामग्री विचित्रकार्यजनिकेति प्रसाधितम् ॥ ७ ॥

सम्प्रति दृष्टकारणमेलकात्मिकैव सा तथा, तदधिष्ठानं चास्मदादिभिरेव शक्यमिति पुनरपि सिद्धसाधनमित्याक्षिपति —

**अस्त्विति** । **विश्ववृत्तितः**=विश्वेषां=लोकानां **वृत्तेः**=प्रवृत्तेरदृष्टं शिद्धयतीत्यर्थः । तदेव प्रपञ्चयति । **विफलेति** । भूतचैतन्ये भूतानामेव परिणतिभेदाद्वासनात एवोत्तरकार्यमिति न परलोकसिद्धिरित्यत्र दोषमाह—**यदि हीति** ।

प्रकाशिका

**भूतचैतन्ये हीति** । परिणतिभेद एव वासनेत्यभेदेनैवान्वयो विकल्पेन वा परिणतिभेदावसानयोरन्वयः । भूतचैतन्यपक्ष आत्मनोऽनङ्गीकारात् भूतस्य शरीरादेर्भस्मीभावाच्च परलोकसिद्धिरिति

मकरन्दः ।

**भूतचैतन्य इति** । भूतस्य शरीरादेर्भस्मीभावादात्मनश्चानङ्गीकारात् कस्य परलोक इति न तत्सिद्धिरित्यर्थः ॥

---

**क्षणोऽपीति** । क्षणिकपदार्थोऽपीत्यर्थः ।

र्थी कश्चिदिष्टापूर्त्तयोः प्रवर्त्तेत, न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत् । लाभपूजाख्यात्यर्थमिति चेद् ? लाभादय एव किन्निबन्धनाः? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः, यतो वाऽनेन लब्धव्यं, वो वैनं पूजयिष्यति । स किमर्थम् ? ख्यात्यर्थमनुरागार्थञ्च, जनो दातरि मान-

बोधनी ।

ख्यास्यन्ननन्यथासिद्धिं तावत् प्रतिजानाति-**यदि हि**- इति । भूतानां परिणतिः कार्यं, तत्परम्परा, उप्तं बीजमङ्कुरं जनयति, तत् सस्यं, तद्व्रीह्यादिकमिति पूर्वं पूर्वं दृष्टमेवोत्तरोत्तरं प्रति कारणमिति **यद्युच्येतेति** । यद्वा भूतानां सहकारिणां परिणतिः साकल्यम् । **इष्टं**=यागादि श्रौतं कर्म । **पूर्त्तं**=खातादि स्मार्त्तमिति । अत्र हेतुत्वेन संग्रहं व्याचष्टे—**न हि**—इति । शङ्कते-**लाभ** इति । दुःखात्मकयोरपि श्रौतस्मार्त्तयोर्लाभादिदृष्टसिद्ध्यर्थमथं प्रवर्तेत इति दूषयति-**लाभादय**-इति । तेऽप्यदृष्टनिबन्धना इत्यर्थः । कुत इत्यत आह—**न हि**-इति । न हीयं यागादौ प्रवृत्तिः स्वरूपेणैव लाभादिहेतुः, तेषां प्रवृत्त्यानन्तर्यनियमाभावात्; तेनादृष्टद्वारेणैव हेतुत्वमिति भावः । **यतो वा**-इति । स किमर्थं लम्भयति पूजयति वेति शेषः । तत्र प्रवृत्तिरपि नादृष्टमन्तरेणोपपद्यत इति भावः । शङ्कते-**ख्यात्यर्थम्** इति । ननु पारलौकिकं किञ्चिल्लिप्समानः पूज-

प्रकाशः ।

**इष्टं** यागादि । **पूर्त्तं** तडागादि । **न हीति** । बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानजन्यत्वात् प्रवृत्तेरिति भावः । **प्रागेवेति** निपातसमुदायोऽतिशयार्थः । **लाभेति** । तथाच दृष्टेष्टसाधनताज्ञानादेव तत्र प्रवृत्तिर्न पारलौकिकेष्टसाधनताज्ञानादिति भावः । **न हीति** । चिरातीतायामेव यागादिक्रियायां लाभाद्युत्पादादिति भावः । यद्वा, स्वरूपतो लाभादिहेतुत्वे, नास्तिकैरपि तत्करणप्रसङ्गादिति भावः । **यतो वेति** । लाभाद्युद्दिश्य यागादौ प्रवर्त्तमानाय परेण धनदानमदृष्टार्थमेवेति तत्सिद्धिरित्यर्थः । **ख्यात्यर्थमिति** । दृष्टार्थमेव तद्दानमिति नादृष्टमुद्देश्यमिति भावः ।

टिप्पणी ।

[ पृ० ८७-१ ] **यद्वा विद्यमानाश्रयेत्यादि** । स्वाश्रयाधिकरणक्षणोत्पन्नद्रव्यनाश इत्यर्थः । [पृ० ८७-२] **सासमवायिकारणक** इति । असमवायिकारणसहितस्य द्रव्यस्य नाशे । अर्थादसमवायिकारणनाशोत्पत्तिक्षणोत्पन्नद्रव्यनाश इत्यर्थः । [पृ० ८७-३] **उभयजन्ये द्रव्यनाश** इति । पूर्वोत्पन्नविभागादाश्रयनाशक्षण एव यत्रासमवायिनाशस्तत्रोभयजन्यत्वं प्रसिद्ध्यति । [पृ० ८८-१२] **व्यक्तिविशेषम्प्रतीति** । अव्यवहितविद्यमानोभयनाशकद्रव्यनाश उभयनाशस्य दण्डचक्रादिवत्कारणत्वम्बोध्यम् । यथाश्रुते कार्य्यकारणभावानन्त्यापत्तेः ॥ ६ ॥

[पृ० ९१-१४] **एकजातीयत्वात्** इति । महत्तत्वादीनां पुरुषभेदेन भेदेप्येकप्रकृतिविकारत्वादेकजातीयत्वमिति पर्य्यवसितार्थः । [पृ० ९१-१५] **द्रष्टुं शक्यत्वादिति** । ज्ञातुं शक्यत्वादित्यर्थः । तेन दृशधातोश्चाक्षुषप्रत्यक्षार्थकतया तदभावेऽपि न क्षतिः । अल्पविषयतयाऽनुमानावतारसम्भवात् । यद्यप्युपादानगोचरप्रत्यक्षस्यैव कार्य्यजनकतया ब्रह्म नास्मदादिना द्रष्टुं शक्यम् । तथापि तन्मात्राभिज्ञसिद्धावपि न सकलदर्शीश्वरसिद्धिः । यद्वा **द्रष्टुं शक्यत्वादि**त्यनेनादृष्टव्यवच्छेदः । तथाच नादृष्टाधिष्ठातृतयेश्वरसिद्धिरित्यत्र तात्पर्य्यम् । **स्वरूपभेदसहकारिभेदावित्यर्थं** इति पूर्वपक्षिणोऽभिमानमिति शेषः । अग्रे **दृष्टान्तेऽपी**त्यादिना तत्खण्डनमेव करिष्यति । [पृ० ९२-२१] **दृष्टान्तेऽप्यविचित्रकारणेति** । कारणपदं सामग्रीपरम् , तस्यैव वैचित्र्यनियामकत्वं "तदेवमित्यादि प्रसाधितम्" इत्यन्तेनोपसंहरिष्यति । तथा च दृष्टान्तस्थलेऽपि यस्या वैचित्र्यप्रयोजकत्वं सा विचित्रैवेति भावः । [पृ० ९२-२२] **सम्बन्धी न क्रम** इत्यादि एकस्य क्रमः, एवं समस्य वैचित्र्यम् परैरपि नाभ्युपगतमित्यतः पूरयति **सम्बन्धी कार्य्याणा**मिति ॥ ७ ॥

**यितरि च रज्यते, जनानुरागप्रभवा हि सम्पद इति चेत्। न। नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवस्थापनात्। त्रैविद्यतपस्विनो धूर्त्तबका एवेति चेन्न। तेषां दृष्टसम्पदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न। नास्तिकैरपि तथाकरणप्रसङ्गात्, सम्भोगवत्। लोकव्यवहारसिद्धत्वादफलमपि क्रियते, वेदव्यवहारसिद्धत्वात् संध्योपासनवदिति चेद्, गुरुमतमेतन्न तु गुरोर्म-**

---

बोधनी।

यति ददाति वेति। अनुरागो वा किमर्थ इत्यत्रोक्तं-**जनानुराग** इति। परिहरति-न-इति। ख्यात्यनुरागार्थयोर्दानपूजयोर्यथाक्रमं नर्मनीतिसचिवयोर्व्यवस्थितत्वादत्र च तदभिसन्धिविरहान्न तादर्थ्यमिति। पुनः शङ्कते-**त्रैविद्य**-इति। वैदिका यागादिकर्त्तारो विप्रलम्भका दृष्टार्थमेव भावयन्तोऽदृष्टार्थमिवाचरन्ति, तेऽपि तेन नर्मसचिवप्राया इत्यर्थः। **परिहरति** न-इति। नीतिनर्मसचिवा हि दृष्टोपयोगिनः, नैवं त्रैविद्याः, अतस्तेषु पूजादि न दृष्टार्थमिति। ननु तेषां पूजादिकमनुतिष्ठतः किञ्चिद् दृष्टमेव सुखं जायते, ततस्तदर्थमेव पूजानुष्ठानमित्याह **सुखार्थम्**-इति। **न-इति**। न हि तात्त्विकं किञ्चिद् दानादिजन्यं सुखमस्ति, पारलौकिकसुखाध्यवसायादेव हि तदनुष्ठायिनस्तदा प्रीतिरिति भावः। शङ्कते-**लोक**-इति। अनादिना लौकिकाचारेण कर्तव्यतया सिद्धत्वादफलमपि दानादि क्रियते, वैदिकविधानेन सिद्धसन्ध्योपासनवत्। तद्विधायकवाक्येषु फलाश्रवणाज् जीवनादिकर्माधिकारलाभाच्च विधित एव अनुष्ठानसिद्धौ फलकल्पनायां प्रमाणाभावादफलमेव सन्ध्योपासनादिकमिति भावः। **गुरुमतमेतत्**-इति। निष्फलं कर्मेति प्राभाकरगुरोरयं

प्रकाशः।

**नीतिनर्मेति**। राजादिभिः प्रयोजनमुद्दिश्यैव दानाद्वनस्थतपस्विभ्यः प्रयोजनाननुसन्धानेन दानाभावादित्यर्थः। **त्रैविद्येति**। त्रिवेदीविदोऽपि तपस्विनः परप्रतारणार्थं तपसि प्रवर्तन्त इत्यर्थः। **तेषामिति**। दृष्टप्रयोजनमुद्दिश्यैव परप्रतारणात् तेषाञ्च दृष्टे निस्पृहत्वात् तदसम्भवः। प्रच्छन्नमपि परोपनीतधननिःस्पृहैस्तपःकरणादित्यर्थः। **वेदेति**। सन्ध्योपासनमकरणे निन्दोपदेशात् प्रायश्चित्तोपदेशाच्च नित्यम्, नित्ये च यदि फलाऽर्थिनः प्रवृत्तिः स्यात् तदा यागवन्नित्यताभङ्गप्रसङ्ग इत्यफलैव तत्र प्रवृत्तिः। कार्यताज्ञानं हि तत्र प्रवर्तकम्, तच्च लोके पाकादाविष्टसाधनताज्ञानात् कार्यताऽनुमित्या निर्वहति। वैदिके च नित्ये कार्यताज्ञानं वेदाधीनमिति किमिष्टसाधनताज्ञानेन। न च नित्यापूर्वमेव फलं, तथापि नित्यताभङ्गात्। काम्यस्थले धर्मिग्राहकमानात् काम्यसाधनत्वेनैव सिद्धेर्गौणप्रयोजनतया स्वतःप्रयोजनत्वाभावाच्च लोके प्रवृत्ताविष्टज्ञानान्वयव्यतिरे-

प्रकाशिका।

भावः। **चिरेति**। तथा च तद्धेतुत्वमप्यदृष्टद्वारैवेत्यर्थः। **दानाभावादिति**=दानाभावापत्तेरित्यर्थः। दृष्टप्रयोजनस्य तत्राभावाददृष्टस्य चानभ्युपगमादिति भावः। सन्ध्योपासनस्य निष्फलत्वे मानमाह। **सन्ध्योपासनमिति**। निष्फलत्वेऽपि प्रवृत्तिमुपपादयति। **कार्यताज्ञानं हीति**।

मकरन्दः।

**चिरेति**। तथाच तद्धेतुत्वमप्यदृष्टद्वारैव स्यादिति भावः। **दानाभावादिति**। दानाभावापत्तेरित्यर्थः। दृष्टप्रयोजनस्य तत्राभावाददृष्टस्य चानभ्युपगमादिति भावः। निष्फलत्वेऽपि तत्र प्रवृत्तिमुपपादयति। **सन्ध्योपासनमिति**। **काम्यस्थल इति**। अपूर्वस्येति शेषः।

टिप्पणी।

**नच नित्यापूर्वमेव फलमिति**। एवकारेण स्वतः प्रयोजनत्वलाभः। अपूर्वसम्पादनीयस्य प्रयोजनस्याश्रुतत्वात्। स्वतः **प्रयोजनत्वाभावाच्चेति**। उभयसम्प्रतिपन्नस्य काम्यस्थली-

**तम्, ततो नेदमनवसर एव वक्तुमुचितम् । वृद्धैर्विप्रलब्धत्वाद् बालानामिति- चेन्न । वृद्धानामपि प्रवृत्तेः । न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते । तेऽपि वृद्धतरैरित्येवमनादिरिति चेत् । न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रता- रणशङ्का स्यात् । इदं प्रथम एव कश्चिदनुष्ठायापि धूर्त्तः परानुष्ठापयतीति**

बोधनी ।

राद्धान्तः, नास्मद्गुरोः, तस्य निष्फलोपदेशासंभवात् । तत्राप्युपात्तदुरितक्षयादिफलमस्तीति राद्धान्तः । यद्वा, गुरु श्लाघ्यं तन्मतमित्युपालम्भगर्भः, न तु गुरोर्हितोपदेशिनः कस्यचिन्मतं–त स्मादप्रस्तुतमिदानीं न वक्तव्यमिति । तस्माद् यागादिकर्तृपूजादेर्दृष्टहेत्वभावादवश्यं धार्मिक इति बुद्ध्या तदाचार इत्यभ्युपगन्तव्यम् । तेन यागादेस्तदनुष्ठातृपूजादेश्चामुष्मिकं फलं सिद्धमिति रह- स्यम् । तुरीयपादमवतारयितुं शङ्कामाह—**वृद्धैः**-इति । बालानां प्रवृत्तिरिति शेषः । **न**- इति । विप्रलम्भका यत्र परं प्रवर्त्तयन्ति न तत्र स्वयमपि प्रवर्त्तन्त इति । स्वैरेव विप्रलब्धाः प्रवर्त्तन्त इति मन्दाशङ्कां निराकरोति–**न-च** इति । आत्मवञ्चनमशक्यमप्रयोजनं चेति भावः । तर्हि सर्वेऽपि पूर्वैर्विप्रलब्धाः प्रवर्त्तन्त इत्याह—**तेऽपि**-इति । सर्वेषामेव भावाभ्युपगमेनेयं विप्र- लम्भकमूला प्रवृत्तिः । अन्यथा संविदानोऽन्यथोपदिश्य प्रवर्त्तको विप्रलम्भकः, न चात्र तादृशः कश्चित्; अतः प्रमाणमूलत्वमेवोपपन्नमिति भावः । पुनः शङ्कते—**इदं प्रथमः**-इति । विप्रलि- प्सातिशयेन हि स्वयमप्यनुष्ठानोपपत्तिरिति भावः । तदतिशयप्रदर्शनार्थमुक्तं-**धूर्त्तः**-इति । किमसाविति धूर्तविप्रलम्भकास्तावदुपदेशमात्रेण विप्रलभन्ते । क्वचित्तु केचिदल्पायाससाध्येषु कर्मसु स्वयमनुष्ठायापीति संभाव्येत । न तु सर्वस्वदक्षिणादिसाध्ये वैदिककर्मकलापानुष्ठाने कश्चिद्

प्रकाशः ।

काविष्टसाधनताज्ञानजननद्वारा कार्यताज्ञान एवोपक्षीणाविति फलज्ञानं न प्रवृत्तिहेतुः । न चान्य- त्राऽपि निष्फले प्रवृत्तिप्रसङ्गः । वेदस्येष्टसाधनत्वस्य वा लिङ्गस्य कार्यताज्ञानहेतोरभावादिति जर- न्मीमांसकमतं दृष्टान्त इत्यर्थः । अत्र सोपहासमाह । **गुरुमतमिति । गुरोः** प्रभाकरगुरोः, **गुरु** महद्वा मतमेतद्, न त्वस्मद्गुरोर्म्मतमित्यर्थः । निष्फले प्रेक्षावतां प्रवृत्तेरनुत्पादनियमात् प्रयोजनज्ञानस्य प्रवृत्तिहेतुत्वेन निष्फले कार्यत्वस्यायोग्यतया वेदेन बोधयितुमशक्यत्वात् प्रवर्त्तक- स्य कार्यत्वज्ञानस्यासम्भवात् । अत एव नेष्टज्ञानं कार्यताज्ञान एवोपक्षीणम् । अनन्यथासिद्धत्वा- दिति भावः । **वृद्धैरिति** । तथाच निष्फल एवान्यैः प्रतारणादाकुमारं प्रवृत्तिरिति न तत्र प्रयोजन- गवेषणमिति भावः । विप्रलिप्सुरन्यथाज्ञातमर्थमन्यथा बोधयति, भ्रान्तो वा? । आद्ये **वृद्धानामिति** ।

प्रकाशिका ।

कार्यस्य साधनत्वेनैव सिद्धेरपूर्वस्येति शेषः । तथा च नापूर्वं स्वतःप्रयोजनम्, काम्यापूर्ववदिति भावः । उपहासबीजमाह । **निष्फल इति** । **तथाचेति** । प्रयोजनमिति भावः । **अनन्यथासि- द्धत्वादिति** । यद्यपि फलेच्छाद्वारेष्टसाधनताज्ञाने तदुपक्षीणम् । तथापि प्रवृत्तिप्रयोजकतायामपि निष्फले प्रवृत्तिरिति मतनिराकरणमात्रे तात्पर्यम् । नचैवं नित्यताभङ्गः, त्रिकालकाम्यस्तवपाठवत्

मकरन्दः ।

तथाच तद्वन्नित्यापूर्वस्यापि न स्वतः प्रयोजनत्वमिति भावः ।

उपहासबीजमाह **निष्फल** इति । **अनन्यथासिद्धत्वादिति** । यद्यपि फलेच्छाद्वारेष्टसाध- नताज्ञानेऽपि तदन्यथासिद्धमित्युपपादितं प्रत्यक्षप्रकाशेऽन्यथाख्यात्यवसरे । त्रिसूत्रीस्वरसोऽप्ये- वमेव । तथापि तस्य प्रवृत्तिप्रयोजकत्वान्निष्फलेऽपि प्रवृत्तिरिति मतनिराकरणमात्रे तात्पर्यम् । न चैवं नित्यताभङ्गप्रसङ्गः । त्रिकालकाम्यस्तवपाठवत् कामनाऽवश्यम्भावादिति भावः ।

---

**वृद्धतरैरिति** । विप्रलब्धा इति शेषः ।

चेत्। किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्य्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति, कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः। केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः? न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः। (१)यतः पाखण्डाभिमतेष्वप्येवं दृश्यते इति चेद्। न। हेतुदर्शनादर्शनाभ्यां विशेषात्। अनादौ चैवम्भूतेऽनुष्ठाने प्रतीयमाने प्रकारान्तरमा-

बोधनी।

विप्रलम्भक इत्युत्प्रेक्षितुमपि क्षममिति। अस्तु वा तथाविधो धूर्त्तः कश्चित्, नत्वेकस्यास्य प्रेक्षावद्भिर्बहुभिरनुविधानं संभवतीत्याह-**कथं च** इति। यदि वा सर्वप्रेक्षावदनुविहिताचारस्तथाविधः पुरुषः, किमस्य विप्रलिप्सायां भवतः प्रमाणमित्याह-**केन वा**-इति। न केवलं प्रमाणाभावः प्रमाणबाधितैव तस्य विप्रलिप्सेत्याह-**न हि** इति। तस्माद् वैदिकेषु कर्मसूपदेशानुष्ठानाभ्यां परान् प्रवर्त्तयन् सकलप्रेक्षावदनुविहिताचारो लोकोत्तरः कश्चिदिति निश्चेतव्यम्। न च तस्मिन्ननाश्वासो युक्त इति भावः। विश्वप्रवृत्तेर्भ्रममूलत्वमप्यत एव निरस्तं वेदितव्यम्। चोदयति-**अथ**-इति। बाह्याभिमतेषु चैत्यवन्दनादिषु विश्वप्रवृत्तिर्द्वीपान्तरापेक्षं दृश्यते, ततः साप्युक्तप्रकारेणान्यथासिद्धा तेषामामुष्मिकफलत्वं कल्पयेदिति भावः। **न**-इति। ज्योतिष्टोमचैत्यवन्दनयोर्न तुल्यत्वं, दृष्टहेतुसंभवाच्चैत्यवन्दनादिपरिग्रहस्य तदभावाच्चेतरपरिग्रहस्य। अयं च विशेषः प्रपञ्चयिष्यते द्वितीये परिच्छेदे। हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुमानादितरत्र विश्वप्रवृत्तिरभिमताऽसावन्यत्र नास्तीति भावः। किञ्च, यत्र यत्र प्रतारणं तत्र सर्वत्रापि पूर्वसिद्धे कस्मिंश्चिदनुष्ठाने प्रतीयमाने ततः प्रकारान्तरमाश्रित्य प्रतारयितुमात्मनोऽर्थप्रदानादिसुकरोपायोपदेशमात्रेण प्रतारणं भवति, न तु स्वयमनुष्ठानेन। यथा रोगापगमहेतौ भेषजभेदानुष्ठाने पूर्वसिद्धे प्रतारणं 'मम हस्ते किञ्चित् प्रदीयतामिदानीमेव सर्वं शमयिष्यामि' इति। इह दुःखात्मके कर्मणि स्वयमनुष्ठायैव परमनुष्ठापयति, तस्मान्न प्रतारणेयमित्याह—**अनादौ**-इति। एवं सत्याप्तप्रणीतत्वेन वेदानामेव प्रामाण्यात् तद्विरोधिनां बौद्धाद्यागमानां प्रमाणविरोधनिबन्धना पाखण्डत्वप्रसिद्धिः सिध्येत्, नत्वन्यथेत्याह

प्रकाशः।

अन्त्ये, **कथं चैनमिति**। प्रत्युतानादिप्रवृत्तितया दृष्टफलनिरपेक्षतया चादृष्टफलत्वमेवानुमेयमिति भावः। **यत इति**। एवं पाखण्डप्रवृत्तिरपि दृष्टफलनिरपेक्षा परलोकसाधनं स्यात्। अन्यथाऽयं परिशेषस्तत्रैव व्यभिचरेदित्यर्थः। **हेत्विति**। हेतुदर्शनेन कर्मलाघवादिना तादृशी तत्प्रवृत्तिरन्यथासिद्धा। अत्र तु ब्रह्मचर्यादिदुःखमयकर्मप्रधानतया न तत्सम्भव इत्यादेर्द्वितीयस्तवके वक्ष्यमाणत्वादित्यर्थः। नन्विष्टापूर्तादीनां हेतुदर्शनशून्यत्वेऽपीदम्प्रथम एव प्रतारकस्तद्बोधकागमस्य प्रामाण्यं भ्रमेण ग्राहयित्वा प्रेक्षावतः प्रवर्त्तयेदित्यत आह। **अनादाविति**। एवम्भूतेऽनादौ अविगीते परलोकसाधने। **प्रकारान्तरं** = सादित्वं विगीतत्वञ्च। यदि वैदिकव्यवहारा-

प्रकाशिका।

कामनावश्यंभावादिति भावः। **प्रत्युतेति**। अनादिप्रवृत्तितया सफलत्वानुमानमेव दृष्टफलाभावज्ञानसहकृतमदृष्टफलकत्वं विषयीकरोतीत्यर्थो यथाश्रुते साध्याप्रसिद्धेः। **अयं परिशेष इति**। विफलेत्यादिकारिकोक्त इत्यर्थः। **एवं भूत इति** मूलस्य परलोकसाधन इति व्याख्यानमवगीते चे-

मकरन्दः।

**प्रत्युतेति**। क्वचिददृष्टफलत्वसिद्धावेव तत्। अन्यथा साध्याप्रसिद्धेरिति ध्येयम्। **अय-**

---

गरीय इति। तथात्वे त्वयाऽपि तत्करणप्रसङ्गादिति भावः। (१) अथेतिपाठान्तरम्।

**श्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्याद्, न त्वनुष्ठानागोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् ॥ ८ ॥**

**अस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न ।**

---

बोधनी ।

**अन्यथा इति ।** अन्यथा-यदि वैदिकमनुष्ठानं प्रतारणायत्तं भवेदित्यर्थः । यद्वा, यदि वञ्चकः स्वयमप्यनुतिष्ठेत् ततो बौद्धागमानां प्रतारणपरत्वे प्रमाणाभावादाप्तोक्तत्वसिद्धौ प्रमाणं विरोधासंभवात् तन्निबन्धना पाखण्डत्वप्रसिद्धिर्न स्यादिति ।

अनादावित्यादेरपरा व्याख्या—कस्यचिदनुष्ठाने प्रागसिद्धे ह्यनुष्ठानमात्रस्यैवाज्ञानाद्विप्रलिप्सोपदेशमात्रेण प्रतारणानुपपत्तेरवश्यमनुष्ठानायैव प्रतारणं स्यात् । प्रागेव तु ज्योतिष्टोमाद्यनुष्ठानसिद्धौ प्रकारान्तरोपदेशमात्रेण स्वयमनुष्ठायैव प्रतारणं संभवति । नन्वनुष्ठानायैवेति विपरीतं किमिति न स्यादित्यत आह—**अन्यथा इति ।** चैत्यवन्दनादीनां प्रमाणमूलत्वे प्रमाणविरोधासंभवात् तदागमानां पाखण्डत्वप्रसिद्धिर्न स्यादित्यनुष्ठानागोचरेण कर्मणेति केचित् पठन्ति । तत्रायमर्थः—यदि वैदिकानुष्ठानात् पूर्वसिद्धं किञ्चिदनुष्ठानं स्यात् ततः पश्चात्तनं वैदिकमनुष्ठानं तत्र प्रतारणपरं स्यात् । न तु पूर्वसिद्धानुष्ठानागोचरेण कर्मणा प्रतारणं संभवति । सर्वत्र पूर्वसिद्धानुष्ठानविषयत्वात् प्रतारणस्येति । अयं च प्रथमव्याख्यायां संगच्छेत ॥ ८ ॥

प्रत्यात्मनियमाद् भुक्तेरित्यत्रापूर्वसद्भावहेतुः कालान्तरे फलोपभुक्तिरपूर्वस्यात्मसमवाये हेतुश्च भुक्तेः प्रत्यात्मनियमः संगृहीतः । तत्रापूर्वसिद्धौ तस्यात्मसमवायः शक्यसाधन इति तत्सिद्धिहेतुं तावद् भुक्तिमवतारयितुमाशङ्कते—**अस्तु इति ।** अत्रैवकारोऽपूर्वव्यवच्छेदार्थः, जगद्वैचित्र्यस्यामुष्मिकफलस्येत्यर्थः । परिहरति—**न-इति ।**

प्रकाशः ।

तिरिक्तोऽनादिरविगीतश्च व्यवहारः प्रामाणिकः स्यात् तदायमाधुनिको वैदिकव्यवहारः परप्रतारणपर इति व्यवतिष्ठेत यथाऽनादिसिद्धः पिपासोपशमनं तोयपानमिति व्यवहारः । अन्नभक्षणं पिपासोपशमनमित्याधुनिक उपदेशः परप्रतारणपर इति निश्चीयते । न त्वेवमित्याह । **न त्विति ।** तस्मादयमेव व्यवहारः प्रामाणिको, न परप्रतारणपर इत्यभ्युपेयमिति भावः । अनभ्युपगमे त्वप्रामाणिकत्वाविशेषात् पाखण्डापाखण्डमतभेदो न स्यात् । तथाच प्रमाणेन खण्डिताः पाखण्डा इत्यपि न स्यादित्याह । **अन्यथेति ॥ ८ ॥**

**अस्त्विति ।** न तु तज्जन्यमदृष्टमित्येवकारार्थः । तथाचादृष्टाधिष्ठातृत्वेन ईश्वरानुमानमा-

प्रकाशिका ।

त्यपि द्रष्टव्यम् । तेनाग्रे प्रकारान्तरकथने विगीतत्वोपादानं घटते । **आधुनिक इति ।** सादिरुपदेशो विगीतश्चेत्यपि द्रष्टव्यम् । अन्नभक्षणं पिपासोपशमनसाधनमित्युपदेशे च विगीतत्वं शिष्टव्यवहाराविषयत्वमप्रामाणिकत्वं वा बोध्यमिति । **इत्यपीति ।** असाधारण्येनेति शेषः । तथाचोभयोः पाखण्डत्वमपाखण्डत्वं वा व्यवह्रियेतेति भावः ॥ ८ ॥

मकरन्दः ।

**मिति ।** विफला विश्ववृत्तिरित्यादिरित्यर्थः । **आधुनिक इति ।** सादिरुपदेश इत्यर्थः । अविगीतश्चेत्यपि द्रष्टव्यम् । यद्यपि वेदानिषिद्धत्वमविगीतत्वं न तत्र, तथापि शिष्टव्यवहाराविषयत्वमप्रामाणिकत्वं वा तदित्येके । परदुःखहेतुतया सामान्यतस्तत्रापि निषेध इत्यन्ये ।

**इत्यपीति ।** असाधारण्येनेति शेषः । तथाचोभयस्यापि पाखण्डत्वमन्यतरस्यापि वा नेति भावः ॥ ८ ॥

क्षणिकत्वात्, अपेक्षितस्य कालान्तरभावित्वात्।

**चिरध्वस्तं फलायालं न कर्मातिशयं विना।**
**सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥९॥**

तस्मादस्त्यतिशयः कश्चित्। ईदृशान्येवैतानि स्वहेतुबलायातानि, येन नियत भोगसाधनानीति चेत्। तदिदममीषामतीन्द्रियं रूपं सहकारिभेदो वा ?।

बोधनी।

एतदेव विभजते—**चिरध्वस्तम् इति**। फलाय कालान्तरभाविन इति शेषः। अपूर्वसिद्धावपि तस्य प्रत्यात्मसमवायः न तु प्रतिभूतमिति कथं सिध्येदित्यत्र *प्रत्यात्मनियमाद् भुक्तेरिति* हेतुं व्याचष्टे—**सम्भोग-इति**। अपूर्वसंस्कृतेष्वपि शरीरेन्द्रियादिभूतेषु नित्यत्वविभुत्वाभ्यां सकलशरीरप्राप्तानामात्मनामपूर्वेणाविशेषितत्वे संविभज्य भोगः प्रतिनियतभोगो न सिध्येद्, दृश्यते चासौ, तस्मादात्मसमवाय्यपूर्वमिति निगदव्याख्यातत्वेन पूर्वोधार्थं निगमयति—**तस्मात्-इति**। तत्र शङ्कते—**ईदृशानि-इति**। क्षणभङ्गुराण्यपि कर्माणि स्वकारणवशादीदृशान्येव सिद्धानि येनापूर्वजननमन्तरेण कालान्तरभावित्वेन नियतानामेव फलानां साधनानि स्युः। तेषां कालान्तरफलानुगुणं किञ्चिद् रूपमस्तीत्यर्थः। ईदृशशब्दविवक्षितं रूपं तद्विकल्पयति-**तदिदम्-इति**। न तावद् दृश्यमानं रूपं फलानुगुणं क्षणिकत्वात्; अतस्तदतीन्द्रियमभ्युपगन्तव्यम्।

प्रकाशः।

अयासिद्धमिति भावः। **क्षणिकत्वादिति**। आशुतरविनाशित्वादित्यर्थः। **चिरध्वस्तमिति**। फलस्य स्वर्गादेः कालान्तरभावितया न तत्राशुविनाशिनः साक्षात्साधनत्वमिति प्रतीतसाधनत्वानुपपत्त्या तज्जन्यापूर्वकल्पनमित्यर्थः। अतिशयं विना चिरध्वस्तं कर्म्म न फलायालं समर्थमिति योजना। साक्षात्साधनत्वाभावेऽपि साधनत्वस्य फलसमयपर्यन्तस्थायिव्यापारव्याप्तत्वादिति भावः। ननु चादृष्टसिद्धावपि भूतधर्म्म एव तदस्त्वित्यत आह। **सम्भोग इति**। **सम्भोगः**=समीचीनो नियतो भोगो, **निर्विशेषाणाम्**=अदृष्टरूपविशेषरहितानामात्मनां न स्यात्, संस्कृतानां भूतानां साधारणत्वादित्यर्थः। अत्र स्वहेतुबलोत्पन्नस्वरूपविशेषवन्ति शरीरादीनि नियताऽऽत्मभोगसाधनानि सन्त्विति शङ्कते। **ईदृशानीति**। एतद्विकल्प्य व्याघाताभिमतसिद्धिभ्यां परिहरति। **तदिदमिति**। रूपं स्वरूपम्, अतीन्द्रियस्वभावत्वमित्यर्थः। सहकारिभेदोऽतीन्द्रि-

प्रकाशिका

एकक्षणावस्थायित्वमप्रसिद्धमित्यत आह। **आशुतरेति**। **साक्षात्साधनत्वाभाव इति**। अव्यवहितपूर्ववर्त्तित्वाभाव इत्यर्थः, चिरनष्टे दण्डे चक्रभ्रमिद्वारा घटजनके व्याप्तिग्रहः। न च विपक्षबाधकाभावः, स्वस्वव्यापारान्यतराव्यवहितपूर्वसत्ताया एव कारणतात्वात्, अन्यथा घटत्वावच्छिन्नं प्रति रासभस्य कदाचित् पूर्वसत्तानियमेन कारणत्वापातात्। केचित्तु कार्यकादाचित्कत्वनियामकत्वेन कारणकल्पना तच्चाव्यवहितपूर्ववर्त्तिनैव नियम्यते, अन्यथा पूर्वमपि स्वोत्पत्तेः कार्य्यस्य कालसम्बन्धापत्तिरित्याहुः। तदयुक्तम्। तथासति योग्यस्य व्यापारद्वाराप्यकारणत्वापत्तेः। तस्मात् कादाचित्कत्वं कारणमात्रनियम्यं स्वोत्पत्तिपूर्वमनुत्पत्तौ त्वव्यवहितकारणव्यक्त्यभाव एव प्रयोजको नैतावता कारणमात्रेऽतीते व्यापारकल्पनमिति ॥ ९ ॥

मकरन्दः।

एकक्षणमात्रस्थायित्वमसिद्धमित्यत आह। **आशुतरेति**। **फलसमयेति**। यद्यपि चिरध्वस्तकारणत्ववादिनः क्वचिदपि व्यापाराप्रसिद्धेर्व्याप्तिरन्यतरासिद्धा, तथापि चिरातीतदण्डादिना घटाद्यजननात् परोऽपि तथाऽङ्गीकारयितव्य इति स्वमतावष्टम्भेनोक्तमिदम् ॥ ९ ॥

टिप्पणी।

यापूर्वस्य स्वतः प्रयोजनत्वाभावे नित्यापूर्वस्यापि तत्त्वस्यायुक्तत्वादित्यर्थः ॥ ८-९ ॥

**न तावदैन्द्रियकस्यातीन्द्रियं रूपम्, व्याघातात । द्वितीये त्वपूर्वसिद्धिः ॥ ९ ॥**

**सिद्ध्यतु भूतधर्म एव गुरुत्वादिवदतीन्द्रियः । अवश्यं त्वयाऽप्येतदङ्गीकरणीयम् । कथमन्यथा मन्त्रादिभिः प्रतिबन्धः । तथाहि । करतलानलसंयोगाद्**

---

बोधनी ।

तच्चातीन्द्रियममीषां कर्मणां स्वरूपं वा सहकारिभेदो वेति । न तावत् पूर्वः कल्पः, ऐन्द्रियकत्वादतीन्द्रियत्वलक्षणविरुद्धधर्मसंसर्गाद्भेदप्रसङ्गेनैकत्वव्याघातादित्यत आह—**न तावत्**-इति । द्वितीयस्तु सिद्धसाधनमित्याह । **द्वितीये तु**-इति । कर्मणां फलोत्पत्त्यनुगुणोऽतीन्द्रियः सहकारिभेद एवापूर्वम् । तु शब्दोऽभ्युपगमसूचनार्थः । अत्र कश्चिद् विपश्चिदन्यो व्याचष्टे-समस्तस्यैव श्लोकस्यार्थं निगमयति-**तस्मादस्त्यतिशयः कश्चिदिति** । आत्मसमवेत इति शेषः । **ईदृशानीति । भूतानि**=ईदृशान्येवात्मसमवेतमपूर्वमन्तरेणास्मदाद्यनुपलक्षणीयरूपविशेषविशिष्टानि जायन्ते । येन भूतानि नियतोपभोगसाधनानीति । सुगममन्यत् ॥९॥ सम्भोगो निर्विशेषाणामिति विवरीष्यम् तद्विपरीतं चोदयति-**सिध्यतु**-इति । सत्यं, यागादिजन्यमपूर्वमस्ति, तच्च भूतधर्म एवास्तु न त्वात्मधर्मः, गुरुत्ववेगादिवदिति । ननु रूपादय एव भूतधर्मा दृश्यन्ते कथं तदतिरेकिणोऽपूर्वस्य भूतधर्मत्वमित्यत आह—**अवश्यम्**-इति । त्वया नैयायिकमानिनापि कश्चिदतीन्द्रियः कार्योदयानुकूलो भूतधर्मः शक्त्यादिपदवेदनीयोऽङ्गीकरणीयः, तथाऽपूर्वमपि भूतधर्मो भविष्यतीति भावः । शक्तेर्वा कथमङ्गीकरणीयतेत्यत आह—**कथमन्यथा**-इति । मन्त्रादिभिर्दाहादिकार्यप्रतिबन्धस्तावद् दृश्यते, स चान्यथानुपपद्यमानः शक्तिं कल्पयतीति । तदेव विभजते-**तथा हि**-इति- । यादृशादग्नेः पूर्वं दाहो जातः तादृशादेव दृष्टवैकल्यरहितादेव न जायते दाहः । तेन दृष्टस्य व्यभिचाराददृष्ट-

प्रकाशः ।

यसहकारी । यद्वा, रूपं धर्मो जातिरूपोऽजातिरूपो वा ? आद्ये । **न तावदिति** । व्यक्तियोग्यतयैव जातेर्योग्यत्वादित्यर्थः ॥ ९ ॥

अन्त्यं शङ्कते । **सिद्ध्यत्विति** । नैतावताऽप्यात्मधर्मापूर्वसिद्धिः । भूतवृत्त्यतीन्द्रियधर्मादेवोपपत्तेरिति भावः । **गुरुत्वादि**वदित्यादिपदेन मीमांसकाभिमतशक्तिर्गृह्यते । तत्र शक्तावर्थापत्तिं प्रमाणयति । **तथाहीति** । शक्तौ विप्रतिपत्तिः । कारणानि स्वजन्यानुकूलादृष्टा-

प्रकाशिका ।

**अन्त्यमिति** । द्वितीयव्याख्यानुसारेणेदम् । प्रथमव्याख्यायान्तु सहकारिभेदोऽपूर्वमेवास्तु भूतधर्म्म एव कश्चनातीन्द्रियोऽस्त्वित्याशङ्केति ध्येयम् । **कारणानीति** । पण्डापूर्वे भागबाधा इति कारणत्वपर्यन्तं पक्षतावच्छेदकं, गुरुत्वस्थितिस्थापकादिमत्यंशतः सिद्धसाधनमिति **स्वजन्यानुकूलेति** । तदर्थश्च स्वनिमित्तकारणानुकूलत्वं स्थितिस्थापकश्च स्वाश्रयसमवायिकारणककर्म्मानुकूलमिति तस्य व्युदासः । केचित्तु स्वजन्यानुकूलत्वं ताद्रूप्यसिद्धये विशेषणं यथाश्रुतार्थकमेव, स्थितिस्थापकाश्रयभिन्नस्यैव च पक्षत्वमतो न सिद्धसाधनमंशत इत्याहुः । अद्विष्टपदं च अदृष्टवदा-

मकरन्दः ।

**कारणानीति** । वस्तुमात्रपक्षत्वे भागबाधादिरजनके पण्डापूर्वादौ तन्मते स्यादिति कारणानीत्युक्तम् । नचादृष्टस्थितिस्थापकगुरुत्वादिकमादायापि पृथिव्यादिष्वंशतः सिद्धसाधनम् । तद्भिन्नकारणस्यैव पक्षत्वात् । न च पक्षतावच्छेदकैक्ये तद्दोष एव नेति वाच्यम् । प्राचीनमतेनैवोक्तत्वात्, अन्यथा अद्विष्टपदप्रक्षेपानुपपत्तेः । अत एव वक्ष्यमाणहेतुपक्षतावच्छेदकयोर्नाभेदः । स्वजन्यानुकूलत्वं ताद्रूप्यसिद्धये । यद्वा, स्थितिस्थापकवतोऽपि पक्षान्तर्भावात् तमादायांशतः सिद्धसाधनवारणार्थं तत् । तदर्थश्च स्वनिमित्तकारणकानुकूलत्वमित्याहुः । अद्विष्टपदमदृष्टवदात्मसं-

यादृशादेव दाहो दृष्टः, तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते, असति

बोधनी।

किमपि कार्यान्यथानुपपत्त्या कल्पनीयमिति भावः। तत्र दृष्टादृष्टयोरन्यतरवैगुण्येनान्यथोपप-

प्रकाशः।

तीन्द्रियभावभूतधर्मवन्ति न वा? आत्मन्यदृष्टं तथा प्रसिद्धम्। यद्वा, कारणतावच्छेदकत्व-मतीन्द्रियत्वव्याप्यं न वेति सामान्यतः। विशिष्य तु, वह्निर्दाहानुकूलाद्दृष्टातीन्द्रियभावभूतधर्म-वान्न वा? करतलानलसंयोगो वा तादृशधर्मसमवायी न वा? आत्मा तथा प्रसिद्धः। अनुकूलत्वञ्च

प्रकाशिका।

त्मसंयोगमादायांशतः सिद्धसाधनवारणाय(१) प्राचीनमते तस्य पक्षतावच्छेदकैक्येऽपि दोषत्वात्। अत एव स्थितिस्थापकादिमति तद्वारणाय पूर्वं प्रयत्नः कृतः। अदृष्टपदं चाव्यासज्यवृत्त्यर्थकमतोऽधि-करणभेदेनाभावभेदाभावादद्दृष्टपदेनैवाभाववारणे भावभूतपदमनर्थकमितिदूषणं परास्तम्। अती-न्द्रियपदमुष्णपर्शादिना सिद्धसाधनवारणाय, अनुपलब्धिगम्याभाववादिनो भट्टस्य मतेऽभावस्य सर्व-स्याप्यतीन्द्रियत्वम्। न्यायमतेऽचादृष्टाद्यभावस्यातीन्द्रियत्वमिति तद्वारणाय **भावभूतेति**। धर्मपदञ्च साक्षात् सम्बन्धलाभाय तेन न परम्परासम्बद्धतादृशधर्मेणार्थान्तरम्। **यद्वेति**। तन्मते शक्तेरेव सर्वत्र कारणतावच्छेदकतया तस्याश्चातीन्द्रियत्वाद् विधिकोटिप्रसिद्धिः। न च तन्मतेऽभावस्या-तीन्द्रियतया तस्यैवावच्छेदकत्वमस्त्वित्यर्थान्तरं धर्मपदस्य समवेतपरत्वात् न्यायमते तु दण्ड-त्वादेरपि कारणतावच्छेदकत्वान्निषेधकोटिप्रसिद्धिः। **वह्निरिति**। दाहानुकूलत्वं ताद्रूप्यसिद्धये-विशेषणम्। **तादृशेति**। दाहानुकूलातीन्द्रियेत्यर्थः। अतीन्द्रियपदमत्र संयोगत्ववारणाय। नन्वनु-कूलत्वं यदि जनकत्वं तदा बाधः शक्तेरजनकत्वात् यदि च जनकतावच्छेदकत्वं तदा दृष्टान्ता-सिद्धिः, अदृष्टस्यानवच्छेदकत्वादत आह। **अनुकूलत्वं चेति**। व्याप्तिरत्र कालिकी। न च प्रागभावगर्भस्यास्य नित्यस्थलेऽसम्भवः, तदगर्भस्य च दण्डाभावे सत्यपि घटसत्त्वेन व्यभिचाराद्व्या-

मकरन्दः।

योगेन सिद्धसाधनवारणार्थमव्यासज्ज्यवृत्तिपरम्। अन्यथा अधिकरणभेदेनाभावभेदानभ्युपगमे तत एव प्रतिबन्धकाभावव्यवच्छेदे भावपदमनर्थकं स्यात्। उष्णस्पर्शादिना अंशतः सिद्धसाधन-वारणायातीन्द्रियेति। न च तत एव प्रतिबन्धकाभाववारणे भावपदवैयर्थ्यं, भट्टमतेऽनुपलब्धि-गम्यतया तस्यातीन्द्रियत्वात्। दुरदृष्टादिप्रतिबन्धकाभावस्याऽतीन्द्रियत्वाच्च। यथाकथ-ञ्चित् सम्बन्धितयाऽदृष्टेनैवार्थान्तरवारणाय धर्मपदम्। न हि तदन्यधर्मस्तदनाश्रितत्वादित्याहुः। **यद्वेति**। न च प्रतिबन्धकाभावमादाय भट्टमतेऽर्थान्तरम्, धर्मपदस्य भावपरत्वादिति वदन्ति। दाहानुकूलत्वमत्र ताद्रूप्यसिद्ध्यर्थमेव। **तादृशेति**। दाहानुकूलातीन्द्रियेत्यर्थः। अत्र च संयो-गत्वेनार्थान्तरवारणायातीन्द्रियेति।

नन्वनुकूलत्वं यदि जनकत्वं, तदा तन्मतेऽपसिद्धान्तः। अथाऽवच्छेदकत्वं, तदास्मन्मतेऽ

(१)पक्षतावच्छेदकस्य साध्यतावच्छेदकधर्माक्रान्ततया साध्यरूपत्वे पक्षतावच्छेदकीभूत-साध्यमादायापि सिद्धसाधनं दोषः प्राचीनमते, तन्मते तद्व्यावृत्तमेव साध्यतावच्छेदकं कर-णीयम्। नवीनमते पक्षतावच्छेदकीभवत्साध्येन सिद्धसाधनं न दोषः, साध्यतावच्छेदकस्यासिद्धसा-धारणस्येष्टतावच्छेदकत्व भवात् तन्मते तत्साधारणमपि साध्यतावच्छेदकं भवत्येव, समानप्रका-रकसिद्धेरेव नव्यमते विरोधित्वादिति भावः। अदृष्टवदात्मसंयोगविशिष्टवह्नेरेव कारणत्वेन स्थिति-स्थापकविशिष्टस्यैव वंशस्य कर्मकारणत्वेन कारणपक्षकानुमाने तेषां पक्षतावच्छेदकत्वं बोध्यम्।

तु जायते, तत्र न दृष्टवैगुण्यमुपलभामहे । नापि दृष्टसाद्गुण्येऽदृष्टवैगुण्यं सम्भावनीयम्, तस्यैतावन्मात्रार्थत्वात् । अन्यथा कर्मण्यपि विभागः कदाचिन्न

बोधनी ।

त्तिमाशङ्क्याह—तत्र-इति । एतावन्मात्रार्थत्वादिति । दृष्टकारणसमवधानमात्राद्यर्थत्वाददृष्टस्येति । एतदेव कुत इत्यत आह-अन्यथा-इति । यदि दृष्टकारणसाद्गुण्यातिरेकेणादृ-

प्रकाशः ।

कार्याभावव्याप्याभावप्रतियोगित्वं कारणतदवच्छेदकोभयसाधारणमिति नापसिद्धान्ताप्रसिद्धी । अर्थापत्तौ दृष्टादृष्टान्यतरवैगुण्येनान्यथोपपत्तिं निराकरोति । तत्रेति । दाहकोष्णस्पर्शस्य पूर्ववत् सत्त्वादित्यर्थः । न च मन्त्रादिना स एव नाश्यते, पुरुषान्तरे गौण्यानुभवादिति भावः । तस्येति । अदृष्टस्य दृष्टसाकल्यमात्रार्थत्वादित्यर्थः ।

ननु परमाणुकर्मणि, अध्ययनतुल्यत्वेऽप्येकत्र फलाभावे, वन्ध्यासम्प्रयोगे चादृष्टविलम्बो दृष्टो दृष्टोपसंहारे सत्यपि । मैवम् । अदृष्टविलम्बो हि न तावन्नाशानुत्पादो । मण्याद्यपसारणानुपदं दाहाभावापत्तेः । अदृष्टोत्पादकस्य तत्राभावात् । अदृष्टजनकशौचाऽऽचमनादेः साधारणस्याप्यत्रान्वयापत्तेः । अशुचेरेव च तदुत्पादे शौचे सति तदभावापत्तेः । अदृष्टात्यन्ताभावस्य च तत्राभावात् । कदाचिद्दाहात् । दाहादिकार्यविशेषे यावद्दृष्टसमवधानेऽवश्यमदृष्टसद्भावात्तदभिप्रेत्य एतदुक्तमित्यन्ये ।

ननु मण्यादिना दाहप्रतिपक्षस्यादृष्टभेदस्योत्पादनाद्दाहस्याभावः स्यात् । न चान्यन्तरेणापि तस्य दाहाभावापत्तिः । प्रतिनियताग्निसाध्यदाहप्रतिपक्षस्यैवादृष्टस्यानेन जननात् । औषधिलिप्तकाष्ठादिषु लेपकारिपुरुषनिष्ठस्य तस्योत्पादनात् । अदृष्टविशेषार्जितप्रतिपक्षसमवधानस्य वा प्रतिबन्धकत्वम् । स च दाहाभावकल्प्यः । मैवम् । तस्योत्तेजकाभावविशिष्टमण्यजन्यत्वे नियमेनादाहार्थिनस्तत्राप्रवृत्त्यापत्तेः । तज्जन्यत्वे तु प्रथमोपस्थितोपजीव्यत्वेन तदुत्पादकस्यैव हेतुत्वौचित्यात् । प्रतिबन्धकाभावहेतुत्वस्य तथाप्यभ्युपगमात् ।

अन्यथेति । अविनश्यदवस्थकर्मण्यपीत्यर्थः । अतो यदभावात् कार्याभावस्तद्द्वयादावभ्यु-

प्रकाशिका ।

सिरिति वाच्यम् । अनित्यकारणमात्रपक्षत्वे प्रागभावगर्भस्यैवादुष्टत्वात् । इदञ्चात्मनोऽपि दृष्टान्तार्थमुक्तम् वस्तुतोऽनुकूलत्वमवच्छेदकत्वमेव दृष्टान्तश्च धर्मत्वादिकमादाय धर्मादिरेवेति ध्येयम् । अशुचेरेवेति । यद्यपि शौचाशौचयोरन्यतरसत्त्वेऽपि कस्य चिददृष्टस्योत्पत्तिर्भवत्येव, तथाप्यदृष्टजनकत्वमेव तत्र नास्ति, न चोत्तेजकाभावसहितमणिरेव तथा, तस्यादृष्टजनकत्वे मानाभावादित्येव दूषणम् । क्वचिददृष्टस्य साक्षात्प्रतीतिप्रतिबन्धकत्वं यदि सिद्धं तदान्यत्रापि तथैव कल्प्यते क्लृप्तजातीयत्वादित्यरुचिं विभावयति । अन्य इति । लेपेति । स्वयमौषधलिप्तकाष्ठस्थले चौषधलेपकारिपुरुषसमवेतमेवादृष्टमिति भावः । तज्जन्यत्वे त्विति । वस्तुतस्तस्य जनकत्वे मानाभाव एवेत्युक्तम् ।

मकरन्दः ।

प्रसिद्धिरित्युभयानुगतमाह । कार्येति । व्याप्तिश्च कालिकी । न च प्रागभावगर्भतया नित्यशक्ताव्याप्तिः । अनित्यकारणमात्रपक्षत्वे तथाप्यदोषात् । लेपेति । दैववशादौषधलेपाद्दा अदाहप्र-

टिप्पणी ।

नापसिद्धान्ताप्रसिद्धी इति । कारणतावच्छेदकतारूपत्वेऽदृष्टस्यातथात्वाद् दृष्टान्ताप्रसिद्धिः । कारणतारूपत्वे शक्तेरतथात्वाभ्युपगमादपसिद्धान्तः । ननु परमाणुकर्मणीति । इतरसकलकारणे सत्यपि परमाणुक्रियायाः प्रलयादौ विलम्बे । अध्ययनतुल्यत्वेऽपीति । शिष्ययोरिति शेषः । वन्ध्यासम्प्रयोगे चेति । फलाभाव इत्यनुषज्यते । हेतुत्वौचित्यादिति । नचेष्टापत्तिः, 'नच प्रतिबन्धके'त्यादिना मूल एव निराकरिष्यमाणत्वात् । तथाप्यभ्युप-

जायेत। न च प्रतिबन्धकाभावविशिष्टा सामग्री कारणम्। अभावस्याकारणत्वात्। तुच्छो ह्यसौ। प्रतिबन्धकोत्तम्भकप्रयोगकाले च तेन विनापि कार्योत्पत्तेः। प्राक्प्रध्वंसादिविकल्पेन चानियतहेतुकत्वापातात्। अकिञ्चित्करस्य प्रति-

बोधनी।

ष्टस्य कार्यं प्रति व्यापारोऽङ्गीक्रियते तर्हि कर्मणि सत्यपि कार्यविभागः कदाचिन्न जायेत अदृष्टवैगुण्यसंभवादिति। उभयवादिसिद्धप्रतिबन्धकाभावेनान्यथोपपत्तिमाशङ्क्याह—न च-इति। किमिति कारणं न भवतीत्यत आह-तुच्छ-इति। विधिरूपविरहस्तुच्छत्वमिति। ननु विधिरूपेण तुच्छत्वेऽपि स्वरूपेण सतः कथं कारणत्वानुपपत्तिरित्यत आह—प्रतिबन्धक इति। उत्तम्भकप्रयोगकाले प्रतिबन्धकस्य सत्त्वात् तेन प्रतिबन्धकाभावेन विनापि कार्योत्पत्तेर्व्यभिचारादकारणमभाव इति। इतश्चाकारणमभाव इत्याह-प्राक्-इति। न तावत् प्रागभावः कारणं, प्रध्वंसे व्यभिचारात्, न च प्रध्वंसः, प्रागभावे व्यभिचारात्, नात्यन्ताभावः, इतरत्र व्यभिचारात्, न च समुच्चयेन, प्रत्येकं व्यभिचारात् असम्भवाच्च, नापि विकल्पेन, अनियतहेतुकत्वप्रसङ्गादिति। तथाचान्वयव्यतिरेकयोर्व्यभिचारादिति। एवं कार्यान्यथानुपपत्तिं शक्तिसद्भावे प्रमाणयित्वा प्रतिबन्धकत्वान्यथानुपपत्तिमपि प्रमाणयति-अकिञ्चित्करस्य-इति। दृष्टेऽग्न्यादिस्वरूपे प्रतिबन्धादर्शनाददृष्टमनभ्युपगच्छतो मण्यादीनां प्रतिबन्धकत्वं न संभवतीति। अस्तु किञ्चित्करस्ततः

प्रकाशः।

पेयम्। तेन विना तदभावाधीनदाहाद्यभावानुपपत्त्याऽर्थापत्तेः शक्तिसिद्धिरिति भावः। ननु यत्किञ्चिद्दाहप्रयोजकाभावस्तत्र सिद्ध्यति, न तूक्तरूपः। यद्भावे दाहाभावस्तदभाव एव प्रयोजकोऽस्तु, अन्वयाद्यनुविधानादुभयसिद्धत्वाच्चेत्यत आह। न चेति। तुच्छो हीति। तुच्छत्वं विधिरूपरहितत्वम्। अत्र कारणत्वं विधित्वव्याप्यमित्याशयात्। न त्वलीकत्वम्, मीमांसकैस्तथाऽनङ्गीकारात्। एतच्चाग्रे स्फुटम्। व्यतिरेकव्यभिचारमाह। प्रतिबन्धकेति। एकप्रतिबन्धकसत्त्वे तदन्यप्रतिबन्धकाभावे कार्यानुदयादन्वयव्यभिचारोऽपीति भावः। सामान्यतो व्यतिरेकव्यभिचारमुक्त्वा विशिष्य तमाह। प्रागिति। परस्परव्यभिचारेण प्रतिबन्धकाभावहेतुत्वस्य ग्रहीतुमशक्यत्वाद् न तेनान्यथोपपत्तिरित्यर्थः। तावतामुपसंग्राहकश्चैक उपाधिर्नास्तीत्यभिमानः। अत्र प्रागभावेति वक्तव्ये प्रध्वंसपदगम्याभावविशेषणतया प्रागभावस्य प्राप्तेः प्रागित्येतावन्मात्रमुक्तम्। प्रतिबन्धकत्वान्यथानुपपत्तिरूपामप्यर्थापत्तिमाह। अकिञ्चिदिति। प्रतिबन्धजननं विना प्रतिबन्धकत्वानुपपत्तेरित्यर्थः। अथ शक्तिनाशरूपप्रति-

प्रकाशिका।

अदृष्टविशेषार्जितमणिसमवधानस्य प्रतिबन्धकत्वमाशङ्कितमपि न निराकृतम्। दृष्टेनैव विशिष्टाभावेनान्यथोपपत्तेः। तत्कल्पनायां मानाभावात्। अत एव मणिसमवधानजनकादृष्टस्यापि न प्रतिबन्धकत्वमाशङ्कितं समवधानपूर्वं दाहापत्तेश्च, अदृष्टस्य तस्य पूर्वत एवानुवृत्तेः, तदा तदुत्पत्तौ कारणाभावात्। अविनश्यदवस्थकर्मणीति षष्ठीसमासः। मीमांसकैरिति। भट्टैरतिरिक्तस्य प्राभाकरैरधिकरणरूपस्यानलीकस्यैव स्वीकारादित्यर्थः। अन्वयव्यभिचारोऽपीति। प्रतिबन्धकाभावत्वेन कारणत्वात् कारणतावच्छेदकावच्छि नियतकिञ्चित्समवधान एव च कार्योत्पादादिति भावः। अत्रेति। अभाववाचकध्वंसपदसन्निहितस्य प्राक्पदस्य लक्षणया प्रागभावोपस्थापकत्वमिति भावः। प्रतिय-

मकरन्दः।

योजके पुरुषे तदुत्पत्तिरिति भावः।

मीमांसकैरिति। यद्यपि तैरभावो नाङ्गीक्रियत एव, तथाप्यधिकरणात्मकस्यापि

वन्धकत्वायोगात् । किञ्चित्करत्वे चातीन्द्रियशक्तेः स्वीकारात् । मन्त्रादिप्रयोगे चेतरेतराभावस्य सत्त्वेऽपि कार्यानुदयात् । अतोऽतीन्द्रियं किञ्चिद्दाहानुगुणमनुग्राहकमग्नेरुन्नीयते, यस्यापकुर्वतां प्रतिबन्धकत्वमुपपद्यते । यस्मिन्नविकले कार्यं जायते । यस्यैकजातीयत्वाद्नियतहेतुकत्वं निरस्यत इति । अत्रोच्यते ।

**भावो यथा तथाऽभावः कारणं कार्यवन्मतः ॥**

---

बोधनी ।

किमित्यत आह—**किञ्चित्करत्वेऽपि इति** । यत् किञ्चित् करोति सैवास्माकं शक्तिरिति । सिंहावलोकितन्यायेन कार्यार्थापत्तिमेवोपसंक्रम्याह—**मन्त्रादि इति** । प्रयुज्यमाने मन्त्रादौ प्रतिबन्धके तदितराभावोऽस्त्येव तथापि कार्यं न जायत एवेति । अथवा मन्त्रप्रयोगे मण्यादिप्रतिबन्धकाभावे सत्यपि कार्यस्यानुदयः । एवं मणिप्रयोगे मन्त्राभावेऽपि । एवमेकतरमण्यादिप्रतिबन्धकप्रयोगे तदितरमण्यादिप्रतिबन्धकाभावस्य सत्त्वेऽपि कार्यानुदय इति । तदुभयथाप्यन्वयव्यभिचाराच्चाभावः कारणमिति । अर्थापत्तिभ्यां साध्यसिद्धिं निगमयति—**अतोऽतीन्द्रियम् इति** । तत्र यस्यापकुर्वतामिति प्रतिबन्धकार्थापत्तेरुपसंहारः, यस्मिन्नित्यादिना त्वितरस्य इति । तथाच सति शक्तिवादिनो न कश्चित् पूर्वोक्तदोष इति भावः ॥ सिद्धान्तमाह—**अत्रोच्यते** ।

**भाव इति** । अत्र पूर्वार्धेन कार्यार्थापत्तेरन्यथोपपत्तिरुपपाद्यते, उत्तरेणोत्तरस्याः । अयमर्थः—येन हेतुना भावः कारणं भवति तेनैवाभावोऽपि । न भावो भाव इत्येव कारणं किन्तु कार्येणानुविहितान्वयव्यतिरेक इति, तच्चाविशिष्टमभावस्यापीति सोऽपि कारणम् । तुच्छत्वादकारणत्वे तत एव कार्यत्वमपि न स्यात्, क्रियते च प्रध्वंस इत्याह—**कार्यवत् इति** । यथा

प्रकाशः ।

वन्धजनकत्वात्तत्त्वं तत्राह । **किञ्चित्करत्व इति** । प्रतिबन्धकाभावमात्रकारणत्वे दूषणान्तरमाह । **मन्त्रादीति** । यदि प्रागभावादिष्वनुगमकमभावत्वमेव, तदाऽन्योन्याभावेऽपि तदस्तीति प्रतिबन्धकसत्त्वेऽपि तदन्योन्याभावमादाय कार्योत्पत्तिप्रसङ्गः । संसर्गाभावत्वञ्च तद्व्यावृत्तं निर्वक्तुमशक्यमित्यर्थः । सिद्धमर्थमुपसंहरति । **अतीन्द्रियमिति** ।

ननु अनुगुणत्वं कार्याभावव्याप्याभावप्रतियोगित्वं सहकारिणोऽप्यस्तीति शक्तेः सहकारित्वाभ्युपगमेऽपसिद्धान्तः । शक्तिमत्कारणं न शक्तिरिति स्वीकारादिति विशिनष्टि । **अनुग्राहकमिति** । कारणतावच्छेदकमित्यर्थः । **यस्यापकुर्वतामिति** । कर्म्मणः कारकस्यैव सम्बन्धमात्रविवक्षया षष्ठी । यस्येत्यनन्तरं स्वरूपमिति शेष इत्यन्ये। तथाच कारणतावच्छेदकशक्तेः प्रतिबन्धकेन नाशात् सति प्रतिबन्धके कार्याभाव उपपद्यते । नित्यानित्यघटितसामग्र्यां नित्यकारणशक्तेरनुत्पन्नभावत्वेनानाशेऽप्यनित्यकारणशक्तिनाशात् कार्याभावः । नचैवं पुरुषान्तरस्यापि ततोऽग्नेर्दाहानुत्पत्तिः । प्रतिनियतकरतलानलसंयोगगतदाहानुकूलशक्तेर्नाशादिति भावः । शक्तेः प्रदेशान्तरेऽप्युपयोगमाह । **यस्येति** । तृणादीनां व्यभिचारात्कारणत्वमनुपपद्यमानमनुगतसामर्थ्यमतीन्द्रियं कल्पयतीत्यर्थः ।

**भावो यथेति** । यथा येन प्रकारेणान्वयाद्यनुविधानेन कारणत्वग्राहकेन भावः कारणं

प्रकाशिका ।

न्धकत्वेति । प्रतिबन्धकपदवाच्यत्वेत्यर्थः । **संसर्गाभावत्वं** चेति । संसर्गप्रतियोगिकत्वं च तत्प्रतियोगिकान्योन्याभावेऽतिव्याप्तमिति भावः । **प्रतिनियतेति** । फलबलेन तथा कल्पनादिति भावः ।

मकरन्दः ।

तस्याभ्युपगमादेतदुक्तमित्येके । तदेकदेशिमतेनेदमित्यन्ये । **प्रतिनियतेति** । फलबलेन तथा

**प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥**

न ह्यभावस्याकारणत्वे प्रमाणमस्ति। न हि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा, निषेधरूपाभावे विधेरपि तुच्छत्वप्रसङ्गात्। कारणत्वस्य भावत्वेन व्याप्तत्वात्तन्निवृत्तौ तदपि निवर्त्तत इति चेन्न। परिवर्त्तप्रसङ्गात्। अन्वयव्यतिरेकानुविधानस्य च कारणत्वनिश्चयहेतोर्भाववदभावेऽपि तुल्यत्वात्। अभा-

बोधनी।

नियतोत्तरभावित्वेनाभावः कार्यं, तथा नियतपूर्वकालवर्त्तित्वेनाभावः कारणमपीति भावः।

**विसामग्री**=सामग्र्यन्तर्गतकारणविगमः, सामग्रीवैकल्यमिति यावत्, मन्त्रादिश्च तथा, तदभावस्य सामग्र्यनुप्रवेशात्। तेन मन्त्रादेः प्रतिबन्धकत्वाभावादकिञ्चित्करत्वं न दोषाय। कस्तर्हि प्रतिबन्धक इत्यत्रोक्त—**तद्धेतुः इति**। मन्त्रादिप्रयोक्तारः प्रतिबन्धकाः ते तु किञ्चित्करा एवेति भावः॥१०॥

कारिकां व्याचष्टे—**न हि इति**। तुच्छत्वमत्र प्रमाणमुक्तमित्यत्राह—**न हि विधीति**। किमत्र तुच्छत्वं?—यद्यलीकत्वं तदसिद्धं, यद्यन्यरूपेणासत्त्वं तत्तर्हि भावस्याप्यविशिष्टं भावाभावयोरितरेतरानात्मकत्वात्। अत ईदृशं तुच्छत्वमनैकान्तिकमिति। शङ्कते—**कारणत्वस्य इति**। स्पष्टम्। **न इति**। कारणत्वस्याभावत्वेन व्याप्तत्वादभावत्वनिवृत्तौ कारणत्वमपि निवर्त्तत इति वक्तुं शक्यत इति। ननु न वयं तावत्त्वमात्रेण कारणत्वं ब्रूमः येनैवमुपालभ्येमहि, किन्तु कारणत्वनिदानमन्वयव्यतिरेकौ, तौ चाभावस्येति तत्राह—**अन्वय इति**। नन्वाकाशादिवदवर्जनीयसन्निधितया नाभावः कारणमित्याह—**अभावस्य इति**। न तावदाकाशादिवन्नित्यत्वविभुत्वा-

प्रकाशः।

मतः, तेनैवाभावोऽपि कारणम्। तथात्वेऽपि भावत्वव्याप्तं कारणत्वमिति यदि ब्रूयात्तत्राह। **कार्यवदिति**। तर्ह्यभावो नियतोत्तरवर्त्तित्वेन कार्योऽपि न स्यात्, भावत्वव्याप्यत्वात् कार्यत्वस्य। अथ वैपरीत्यस्यापि सुवचत्वान्न तथा, एवमभावः कारणमपि, तत्त्वस्य भावत्वव्याप्यत्वे मानाभावादित्यर्थः।

द्वितीयामथोपपत्तिं दूषयति। **प्रतिबन्ध इति**। सामग्र्यन्तर्गतमन्त्राद्यभावविगम एव प्रतियोगिरूपः प्रतिबन्धः, तत्कारणञ्च प्रतिबन्धकः पुरुषो न तु मण्यादिः, स च किञ्चित्कर एवेत्युभयसिद्धमित्यन्यथोपपत्तिरित्यर्थः। ननु तुच्छत्वमेव तत्र मानमुक्तमित्यत आह। **न हीति**। तुच्छत्वं हि भावनिषेधरूपत्वमुक्तम्। तच्चाप्रयोजकम्। अन्वयादिरहितत्वस्योपाधित्वात्। न चान्यनिषेधरूपत्वेनैवाकारणत्वं, भावस्याप्यभावनिषेधरूपत्वेनाकारणत्वापातात्। अथाकारणत्वे तन्त्रमस्वरूपत्वम्, भावश्च स्वरूपमेवेति मतं, तर्ह्यभावेऽपि तुल्यमित्यर्थः। **परिवर्त्तेति**। कारणत्वमभावत्वव्याप्यमिति भावः, कारणं न स्यादित्यर्थः। नियतपूर्ववर्त्तित्वमात्रं कारणत्वं, तच्चाभावेऽप्यस्तीति भावः। कारणत्वग्राहकमप्युभयसाधारणमित्याह। **अन्वयेति**। न च सत्ताविशिष्टस्य कारणत्वं, जात्यादेरप्यतत्त्वापातादित्यर्थः।

**अभावस्येति**। अन्वयाद्यनुविधाने तुल्येऽप्यभावसन्निधिराकाशस्येवाऽन्यथासिद्ध इत्यर्थः।

मकरन्दः।

कल्पनादिति भावः।

---

**विधिरूपेणेति**। तृतीयार्थः प्रतियोगितानिरूपकत्वरूपं वैशिष्ट्यम्।

वस्यावर्जनीयतया सान्निधिर्न तु हेतुत्वेनेति चेत्, तुल्यम्। प्रतियोगिनमुत्सार्य-तस्तस्यान्यप्रयुक्तः सन्निधिरिति चेत्, तुल्यम्। भावस्याभावोत्सारणं स्वरूपमेवेति चेद्भावस्यापि भावोत्सारणं स्वरूपान्नातिरिच्यते। तस्माद्यथा भावस्यैव भावो जनक इति नियमोऽनुपपन्नः, तथा भाव एव जनक इत्यपि। को ह्यनयोर्विशेषः। प्रतिबन्धकोत्तम्भकप्रयोगकाले तु व्यभिचारस्तदा स्यात, यदि यादृशे सति कार्यानुदयस्तादृश एव सत्युत्पादः स्यात्। न त्वेवं, तदाऽपि प्रतिपक्षस्याभावात्। असत्प्रतिपक्षो हि प्रतिबन्धकाभिमतो मन्त्रः प्रतिपक्षः। स च तादृशो नास्त्येव। यस्त्वस्ति, नासौ प्रतिपक्षः। तथापि विशेष्ये सत्येव विशेषणमात्राभावस्तत्र स

---

बोधनी।

भावादवर्जनीयसन्निधिरभावस्तथाप्यवर्जनीयत्वे भावस्यापि तत्तुल्यत्वमित्याशयवानाह—**तुल्यम्** इति। ननु अनन्यथासिद्धान्वयव्यतिरेकवतः कारणत्वम्, अभावस्तु कार्यविरोधिनं स्वप्रतियोगिनं प्रतिबन्धकमुत्सारयन् सन्निधत्ते न तु कार्यार्थमित्याह—**प्रतियोगिनम्** इति। तर्हि भावोऽपि कार्यविरोधिनं स्वाभावमुत्सारयन् सन्निधत्त इति शक्यते वक्तुमित्याह—**तुल्यम्** इति। अथ भावस्याभावाभावात्मकत्वेन न स्वरूपव्यतिरिक्तमभावोत्सारणं नाम किञ्चिदस्ति कार्यं, तेन कार्यप्रयुक्त एव भावसन्निधिरिति चेत्तर्हि अभावस्यापि भावाभावात्मकत्वान्न स्वव्यतिरेकेण भावोत्सारणं नाम कार्यमस्तीति शङ्कोत्तराभ्यामाह—**भावस्य** इति। उपसंहारव्याजेन कार्यवन्मत इत्येतद् विवृणोति—**तस्मात्** इति। यथा प्रमाणबाधितत्वादेको नियमोऽनुपपन्नस्तथाऽपरोऽपि, द्वयोर्नियमयोर्बाधितत्वाविशेषात्। यद्वा, कार्यत्वकारणत्वयोः प्रमाणसिद्धत्वाविशेषादिति। यत्तूक्तम् उत्तम्भकप्रयोगे सत्येव कार्योत्पत्तेर्व्यतिरेकव्यभिचारः प्रतिबन्धकाभावस्येति तत्राह—**प्रतिबन्धक** इति। **यादृश** इति उत्तम्भकरहिते प्रतिबन्धे, सतीति प्रतिबन्धोत्तम्भकप्रयोगकालेऽपि कार्यप्रतिपक्षः प्रतिबन्धको नास्तीत्यर्थः। कीदृशस्तर्हि प्रतिबन्धकः यदभावात्तदा कार्यमुत्पद्यत इति। अत उक्तम्—**असत्प्रतिपक्षो हि** इति। उत्तम्भकापरपर्यायस्वप्रतिपक्षाभावविशिष्टो हि मन्त्रादिः-

प्रकाशः।

**तुल्यमिति**। अभावस्यैव कारणत्वे भावसन्निधिस्तथेत्येव किन्न स्यादित्यर्थः। **प्रतियोगिनमिति**। विध्युत्सारणप्रयुक्तसन्निधिरभावस्येत्यन्यथासिद्ध इत्यर्थः। **तुल्यमिति**। भावस्याप्यभावोत्सारणप्रयुक्तः सोऽप्यन्यथासिद्धः स्यादित्यर्थः। **अभावस्यापीति**। भावाभावयोः स्वरूपमेव मिथो विरोधी, न तूत्सारणमन्यदित्युभयसमानमित्यर्थः। वस्तुतस्तु कुड्यसंयोगाभावस्य गतौ, अनुपलब्धेश्चाभावज्ञाने, विहिताकरणस्य प्रत्यवाये, निर्दोषत्वस्य वेदप्रामाण्यज्ञाने जनकत्वस्य मीमांसकैरपि स्वीकारादभावस्य कारणत्वानभ्युपगमेऽपसिद्धान्त इति रहस्यम्। **अनुपपन्न इति**। प्रमाणाभावादिति शेषः। **प्रतिबन्धकेति**। तत्रापि प्रतिबन्धकस्याऽभावो, न तु तत्सद्भाव इति, न व्यतिरेकव्यभिचार इत्यर्थः। ननु प्रतिबन्धकोत्तम्भकसत्त्वे कथं प्रतिबन्धकस्याभाव इत्यत आह। **असत्प्रतिपक्षो हीति**। उत्तम्भकाभावविशिष्टो यः प्रतिबन्धकस्तस्याभावः कारणम्, स चोभयसद्भावेऽप्यस्तीत्यर्थः। **प्रतिबन्धकाभिमत** इति। प्रतिबन्ध एव प्रतिबन्धकः, स्वार्थे कः। तत्त्वेनाभिमत इत्यर्थोऽतो न विरोधः। **यस्त्विति**। कार्याभावोन्नेयं प्रतिपक्षत्वं कार्यसत्त्वे नास्तीत्यर्थः। **तथापीति**।

यत्रोत्तम्भकाभावे सति प्रतिबन्धकस्याभावस्तत्र विशेष्यप्रतिबन्धकस्यैवाभावः कारणम्। यत्र तु प्रतिबन्धकसद्भावे सत्युत्तम्भकसद्भावात् कार्यं, तत्रोत्तम्भकाभावस्य विशेषणस्याभाव एव

चोत्तम्भकमन्त्र एवेत्यन्यैव सामग्रीति चेत् । न । विशिष्टस्याप्यभावात् । न हि दण्डिनि सत्यदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैव केवलस्येति युक्तम् । यथा हि केवलदण्डसद्भाव उभयसद्भावे द्वयाभावे वा केवलपुरुषाभावः सर्व-

बोधनी ।

प्रतिबन्धकः, तदभावश्च कारणमित्युक्तेऽपि तत्रोत्तम्भकाभावविशेष्यस्य मन्त्रादेः सत्त्वेऽपि विशेषणमात्रस्योत्तम्भकाभावस्याभावः, नतु विशिष्टस्य । स चोत्तम्भकाभावाभाव उत्तम्भकमन्त्र एव । तस्मादुत्तम्भकाभावविशिष्टप्रतिबन्धकाभावस्याभावादन्यैव सामग्री । न हि प्रतिबन्धकोत्तम्भकाभावविशिष्टा तत्सद्भावविशिष्टा च सामग्री न भिद्यत इति च सम्भवति । अत्र स चोत्तम्भकमन्त्र एवेति सामग्रीभेददर्शनायोक्तम् । यद्वा, सत्त्वकार्यस्योत्तम्भक एव मन्त्रो न तु प्रतिबन्धकस्य प्रतिबन्धकत्वविघातमात्रहेतुरिति दर्शयति । यद्वा, न परं सामग्रीभेद एव किन्तु भाव एव, सामग्री स्यादिति दर्शयितुमिति । **न इति** । न केवलं विशेषणमात्रस्येति शेषः । न चोभयोः सत्त्वमसत्त्वं वा कारणं, किन्त्वसत्प्रतिपक्षप्रतिबन्धकाभावः स चाविशिष्टः सर्वत्रेति न सामग्रीभेद इति भावः । विशेष्ये विशेषणाभावेन न केवलं विशेषणमात्रस्यैवाभावः किन्तु विशिष्टस्यापीत्येतद् दृष्टान्तेनोपपादयति-**न हीति** । दण्डिनि सत्यदण्डत्वं विशेषणमेव नास्ति । तद्विशिष्टस्त्वदण्डः पुरुषोऽस्तीति । न हि वक्तुं युक्तमित्युपपादितं दृष्टान्तीकरोति **यथा हि इति** । केवलदण्डसद्भावे विशेषणमदण्डत्वं विशेष्यः पुरुषश्चोभयं नास्ति । सदण्डपुरुषसद्भावे तु विशेषणमदण्डत्वं नास्ति

प्रकाशः ।

कारणमिति सामग्रीभेद इत्यर्थः । **विशिष्टस्यापीति** । विशेषणाद्यभावे सर्वत्र विशिष्टाभावोऽप्यस्तीति स एवानुगतः कारणमित्यर्थः । तदेवोदाहरणेनोपपादयति । **न हीति** । दण्डिनि सत्यदण्डानां दण्डाभाववतामन्येषान्नाभावः, किन्तु दण्डाभावस्यैवेति न, किन्त्वभावोऽस्त्येवान्येषामपीति लोकसिद्धमित्यर्थः । तदेव स्पष्टयति । **यथा हीति** । पुरुषे दण्डाभाववैशिष्ट्यं कैवल्यम् , प्रतिबन्धके तूत्तम्भकाभाववैशिष्ट्यम् । यथा केवलदण्डसद्भावे विशेषणविशेष्योभयाभावाद्दण्डपुरुषसद्भावे विशेषणदण्डाभावविरहादुभयाभावे विशेष्यपुरुषाभावात् कैवल्यविशिष्टपुरुषाभावोऽनुगतोऽबाधितव्यवहारबलात् सर्वप्रतीतिसिद्धः, तथा केवलोत्तम्भकसद्भावे विशेषणविशेष्यद्वयाभावादुत्तम्भकप्रतिबन्धकसद्भावे विशेषणोत्तम्भकाभावविरहादुभयाभावे च विशेष्यप्रतिबन्धकाभावादुत्तम्भकाभावविशिष्टप्रतिबन्धकाभावोऽनुगतो विशेषणाद्यभावव्यापको दाहकारणमित्यर्थः ।

ननु विशिष्टं नार्थान्तरं येन तदभावोऽनुगतः स्यात् किन्तु विशेषणविशेष्यसम्बन्धा इति तेषां प्रत्येकाभावस्य कारणत्वे सामग्रीभेदस्तदवस्थः । न च व्यासज्यप्रतियोगिताकोऽन्य एवायमभावः,

प्रकाशिका ।

**अन्य एवेति** । प्रत्येकप्रतियोगिकाभावद्वयादन्य एवायं मिलितप्रतियोगिकस्तदुभयाभावव्या-

मकरन्दः ।

**अन्य एवेति** । प्रत्येकोभयाभावादन्य एव प्रत्येकाभावव्यापकोऽयमभाव इत्यर्थः । व्यासज्यवृत्तिधर्मावच्छिन्नोत्तम्भकाभावप्रतियन्धकप्रतियोगिकाभावत्वेन कारणत्वं ? तदुभयमात्रप्रति-

टिप्पणी ।

**गमादिति** । अदृष्टस्य प्रतिपक्षत्वेऽपीति । **न च व्यासज्यप्रतियोगिताक इति** । तेषामुत्तेजकाभावप्रतिबन्धकोभयप्रतियोगिकाभावत्वेनानुगतेन कारणता तदुभयत्वावच्छिन्नाभावत्वेन

प्रकाशः ।

केवलप्रतिबन्धकसत्त्वेऽपि तदभावाद्दाहापत्तेः । एकसत्त्वेऽपि द्वयमिह नास्तीति प्रतीतेः । तस्य समुदायविरोधिनो यावत्समुदायिसत्त्वे एव विरहात् । तादृशाभावानभ्युपगमाच्च । व्यासज्यवृत्तिधर्मसमानाधिकरणप्रत्येकपर्यवसितप्रतियोगिताकाभावादेव तज्जन्यप्रतीत्युपपत्तेः ।

अथ विशिष्टविरोधित्वमेवानुगतं विशेषणाद्यभावानां कारणतावच्छेदकम्, यत्र विशिष्टं न

प्रकाशिका ।

पकोऽभाव इत्यर्थः। **केवलेति** । ननु कैवल्यमुत्तेजकाभाववैशिष्ट्यं, न च तादृशे मणौ तदुभयवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकोऽभावोऽस्तीति कथमेतदुच्यते व्यासज्यवृत्तिधर्मावच्छिन्नोत्तेजकाभावमणिप्रतियोगिकाभावत्वेन कारणत्वं तदुभयमात्रवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकाभावत्वेन वा, अन्त्ये **तादृशेत्यादि** दूषणमनुपदमेवाग्रे । आद्ये तदुभयसत्त्वेऽपि तृतीयमादायाभावोऽस्त्येवेति दूषणमिति । अत एवैकसत्त्वेऽपि त्रयमिह नास्तीति युक्तः पाठः । द्वयमिह नास्तीपि पाठपक्षेऽपि द्वयपदमनेकपरम् । मिश्रास्तु केवलेत्यस्यैकेत्यर्थः । तथा च मणिसत्त्वेऽपि मन्त्राभावमादाय दाहापत्तिरित्यर्थः । एवं च द्वयमिति पाठोऽपि सङ्गच्छत इत्याहुः । तच्चिन्त्यम् । उत्तेजकमण्यभावयोरेककारणत्वपर्य्यवसानेऽननुगम इत्याक्षेपे तदुभयस्थलानुगताभावस्य कारणत्वाऽऽशङ्कायामेतद्दूषणस्यार्थान्तरत्वात् । **तादृशेति** ।

मकरन्दः ।

योगिकतादृशाभावत्वेन वा ? । आद्ये दोषमाह । **केवलेति** । उत्तम्भकाभावविशिष्टमणिसद्भावेऽपि घटादिकमादाय तदुभयप्रतियोगिकतादृशाभावसत्त्वाद्दाहापत्तेरित्यर्थः । एवं द्वयमित्यनेकोपलक्षणम् । अत एव लीलावतीप्रकाशे त्रयमिति पाठः । अन्त्ये त्वाह । **तादृशेति** । यद्यपि सामान्याभाववदुभयासत्त्वे व्यासज्यप्रतियोगिकाभावोऽप्यभ्युपगन्तुमुचित एव । अन्यथा यावद्विशेषाभावैस्तदन्यथासिद्ध्यापत्तेः । तथापि तद्धेतुत्व उत्तेजकविशिष्टमणिसत्त्वेऽपि दहो न स्यादित्येव दूषणं द्रष्टव्यम् ।

टिप्पणी ।

वा तत्राद्यस्य निराकरणं **केवलेति** । तस्मादुभयप्रतियोगिकाभावात् त्रितयाभावात्मकाद् दाहापत्तेः । **द्वयमित्यनेक**मित्यर्थः । तथाचैकसत्त्वे द्वयन्नास्त्युभयसत्त्वे त्रयन्नास्तीत्यादिप्रतीतेरिति पर्य्यवस्यति । **तस्य** त्रितयाभावस्येत्यर्थः । द्वितीयं निराकरोति । **तादृशाभावानभ्युपगमाच्चेति** । यद्वा व्यासज्य सर्वान् प्रतिबन्धकमणीनुत्तेजकाभावञ्च व्याप्या या प्रतियोगिता तदाश्रयप्रतियोगिकाभावः । मणित्वोत्तम्भकाभावत्वव्यापिका या सङ्ख्या तदवच्छिन्नप्रतियोगिताकाभावेत्यर्थः । तदुभयसमानाधिकरणसङ्ख्यावच्छिन्नाभावनिवेशे यत्किञ्चिन्मण्युत्तम्भकाभावोभयाभावस्य सर्वत्रैव सत्त्वाद्दाहापत्तेः । तादृशव्यापिका च संख्या यावन्मणिगतैव, तदवच्छिन्नाभावस्य तादृशसंख्यावच्छिन्नयावन्मणिसत्त्वविरोधिन उत्तेजकाभावविशिष्टैकमणिसत्त्वेऽपि सत्त्वे क्षत्यभावात् । एकमणिसत्त्वेऽपि मणिद्वयाभावप्रतीतेः समुदायाभावप्रत्यये बाधकाभावात् । यदि च एक उत्तेजकाभाव एको मणिरिति सामान्यापेक्षाबुद्ध्या जायमानद्वित्वं सर्वान् मणीन् व्याप्यैव वर्त्तते, तथापि यत्किञ्चित्तदुभयसत्त्वमेव तद्विरोधि तत्र स त्रैव सामान्यत उत्तेजकाभावप्रतिबन्धकमणी स्त इति प्रत्ययात् । या च एकोऽयं मणिरेकोऽयं मणिरित्याद्यखिलमणिगोचरापेक्षाबुद्ध्या एकश्चोत्तेजकाभाव इत्यपेक्षाबुद्ध्या सर्वान् मणीन् व्याप्य समुदायत्वलक्षणा संख्या जन्यते तदवच्छिन्नाभाव एव यत्किञ्चित्तदुभयविरोधीति प्रकृते नानुपपत्तिस्तादृशद्वित्वानभ्युपगमेऽपि यत्किञ्चित्तदुभयविरोधिद्वित्वत्वेनानुगतेन द्वित्वेन मणित्वेनोत्तम्भकाभावत्वेन चावच्छिन्नप्रतियोगिताक एव वा तादृशाभावोऽननुगतस्तथापि नानुपपत्तिरिति ब्रूयात् तमाह । **तादृशाभावानभ्युपगमादिति** ।

प्रकाशः ।

तत्र तदभाव इति सहानस्थाननियमस्य विरोधस्यानुभवसिद्धत्वादिति चेन्न । स हि परस्पराभावरूपतया, परस्पराभावव्याप्यतया वा, तदाक्षेपकतया वा ? । नाद्यः । विशेषणाद्यभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशेषणादेर्विशिष्टत्वापत्तेः । तदभावाभावस्य तत्त्वात् । न चोभयाभावाभाव एवोभयं विशिष्टम् । तथासत्यभावद्वयस्य विशिष्टाभावत्वे प्रत्येकाभावाद्विशिष्टाभावव्यवहारानापत्तेः । नान्त्यौ । विशेषणाद्यभावस्य विशिष्टाभावत्वे तदव्याप्यत्वात्, तदनाक्षेपकत्वाच्च । अभेदे तयोरभावात् ।

अथ विशिष्टानतिरेकेऽपि प्रतियोगिभेदादिव प्रतियोगितावच्छेदकविशेषणभेदादप्यभावो भिद्यते । यथा वायौ पृथिव्यादित्रयप्रत्येकरूपाभावे निश्चितेऽपि रूपत्वावच्छिन्नस्य तस्याभावानिश्चयाद्वायौ रूपं न वेति संशयः । एवमुत्तम्भकाभाववत्त्वेन मण्यादीनामभावः प्रतिबन्धकसत्त्वेऽप्युत्तम्भकाभावविरहादस्त्येवेति स एवानुगतो हेतुः स्यादिति चेत् । न । एवं क्षणरूपातीतविशेषणावच्छिन्नरूपत्वेन प्रतिक्षणं घटादिनाशे क्षणभङ्गापत्तेः प्रत्यभिज्ञानानुपपत्तेश्च । दण्डित्वावस्थायां

प्रकाशिका ।

न च प्रतीतिरनुगता घटाभावपटाभावस्थल इति स स्वीक्रियतामिति वाच्यम् ।

विद्यमानप्रतियोगितावच्छेदकाश्रयप्रतियोगिविरोधित्वमभावस्य लाघवान्न तु प्रतियोगितावच्छेदकावच्छिन्नविरोधित्वं गौरवादित्याशयात् । न च सामान्याभावान्तरवत् द्वित्वावच्छिन्नप्रतियोगिताकोऽपि सामान्याभावः स्वीक्रियतामिति वाच्यम् । उभयानधिकरणे तत्स्वीकारात् । तस्य च कारणत्व उत्तेजकविशिष्टमणिसत्त्वेऽपि दाहो न स्यादित्याशयात् । अभेदे **तयोरिति** । यद्यपि व्याप्यत्वमभेदेऽपि संभवति । तथापि विशिष्टाभावपदार्थस्य विशेषणाद्यभावरूपतया तद्व्याप्यत्वं नोभयानुगतमिति भावः । **प्रतियोगिभेदादिवेति** । न च प्रतियोगितावच्छेकस्य भेदकत्वे कुत्र प्रतियोगिभेदो भेदक इति वाच्यम् । व्यवहारानुरोधेन समनियतजातिद्वयस्वीकारे स्वाश्रयावच्छिन्नतदुभयात्यन्ताभावयोः प्रतियोगिभेदादेव भेदात् । तदस्वीकारे च यथा प्रतियोगिभेदादभावभेदस्तव, तथा प्रतियोगितावच्छेदकभेदान्ममेति फक्किकार्थः । **स एवेति** । व्यापकीभूयानुगमकतया हेतुतावच्छेदकः स्यादित्यर्थः । तेनात एवेत्याद्यग्रेतनमपुनरुक्तमेवेति ध्येयम् । **क्षणभङ्गापत्तेरिति** । यद्यपि विशेष्यतावच्छेदकावच्छिन्नध्वंसः परमुत्पत्तेरव्यवहितक्षणे न

मकरन्दः ।

**क्षणभङ्गेति** । यद्यपि तादृशक्षणभङ्गो न दोषावहः, किन्तु विशेष्यतावच्छेदकावच्छिन्नप्रतियोगिक एव तथा । तथापि प्रत्यभिज्ञानात् समवाय्यादिनाशाभावाच्च न घटादेर्नाशः, किन्तु विशेषणस्यैव । न च विशेषणनाशसामग्र्येव विशेष्यनाशिका । नित्यमात्रापलापापत्तेरित्यर्थः ।

टिप्पणी ।

**तदाक्षेपकतया वेति** । तद्व्यापकाभावप्रतियोगितया तदभावस्येयं व्यतिरेकव्याप्तिः । **तथासत्यभावद्वयस्य विशिष्टाभावत्वे इति** । विशेषणाभावाभावस्य विशेषणमात्ररूपस्य विशेष्याभावाभावस्य विशेष्यमात्ररूपस्य मेलनं कृत्वा विशिष्टरूपत्वाभ्युपगमेऽभावद्वयस्यापि मिलितस्य विशिष्टाभावत्वापत्तिः । न चेष्टापत्तिः । तत्प्रत्येकाश्रये विशिष्टाभावव्यवहारानापत्तेरिति भावः । **अभेदे तयोरभावात् इति** । विशिष्टविरोधित्वस्य विशिष्टाभावव्याप्यविशिष्टाभावाक्षेपकत्वरूपतया तयोरनुगतस्याभावात् । विशिष्टाभावस्य विशेषणाद्यभावाभेदे सति विशेषणाभावव्याप्यत्वप्रवेशे विशेष्याभावस्य, विशेष्याभावव्याप्यत्वप्रवेशे विशेषणाभावस्यासङ्ग्रहादतिरिक्तस्य विशिष्टाभावस्याभावात् विशिष्टाभावत्वस्य चानुगतस्य निरूप्यमाणत्वात् । विशिष्टविरोधितारूपस्यैव प्रवेशे-

**प्राविशिष्टः, तथा केवलोत्तम्भकसद्भावे प्रतिबन्धकोत्तम्भकसद्भावे द्वयाभावे वा**

बोधनी ।

विशेष्यस्त्वस्ति पुरुषः । द्वयाभावे तु विशेषणमस्ति, नास्ति विशेष्यम् । अत्र सर्वत्र केवलस्य कैवल्यविशिष्टस्य पुरुषस्याभावः समान इति पक्षं निगमयति-**तथा-इति** । कार्योत्पत्तिसमयेषु सर्वेषु केवलोत्तम्भकसद्भावप्रतिबन्धोत्तम्भकसत्भावद्वयाभावेषु प्रत्येकं समुच्चितयोश्च विशेषणविशेष्ययोरभावात् केवलस्योत्तम्भकाभावविशिष्टस्य प्रतिबन्धकस्याभावोऽनुवृत्तः । अत्र

प्रकाशः ।

केवलोऽयमासीत् पुरुष इत्यादौ विशेष्यवति, "सविशेषणे ही"ति न्यायेन कैवल्याद्यभावस्यैव प्रतीतेः । अत एव विशेषणावच्छिन्नप्रतियोगिताको विशेष्याभाव एव विशिष्टाभाव; प्रत्येकाभावानुगतो हेतुरित्यपास्तम् ।

अत्रास्मत्पितृचरणाः-विशेषणविशेष्ययोः सम्बन्धाद्विशिष्टव्यवहार इति तयोः सम्बन्धाभावा-

प्रकाशिका ।

स्वीक्रियत इत्येवंविधक्षणिकतायामिष्टापत्तिः, न च नाशकाभावो विशेषणनाशसामग्र्या एव तथात्वात् । अत एव प्रत्यभिज्ञानमप्युपपन्नं विशेष्यतावच्छेदकावच्छिन्नाभावाभावात् । किं च विशिष्टाभावस्यात्यन्ताभावात्मकतया कथं तत्स्वीकार उत्पत्त्यव्यवहितक्षणवृत्तिध्वंसप्रतियोगितात्मकक्षणिकताप्रसङ्गः, तथापि लाघवात् प्रतियोगिविरोधित्वमेवाभावस्येति कथं मणिसत्त्वे तदभाव इत्यत्र तात्पर्यम् । **स एवेति** । व्यापकीभूयानुगमकतया हेतुतावच्छेदकः स्यादित्यर्थः । तेनात एवेत्याद्यग्रेतनं न पुनरुक्तमिति ध्येयम् । **अत एवेति** । तद्वति तदभावास्वीकारादेवेत्यर्थः । **विशेषणविशेष्ययोरिति** । यद्यपि सम्बन्धमात्राभावः क्वचिदपि नास्तीति तदुभयप्रतियोगिकत्व विशिष्टसम्बन्धाभावो वाच्यः, सोऽपि विशिष्टाभाव एवेति तन्निर्वचनपरम्परायामनवस्था । किंचैवं दण्डिपुरुषसद्भावेऽपि भूतले दण्डिपुरुषाभावप्रतीत्यापत्तिः, तदानीमपि भूतले दण्डपुरुषसम्बन्धाभावात् , । तथापि सम्बन्धत्वावच्छिन्नउत्तेजकाभावमणिप्रतियोगिकाभावः कारणं प्रतीतिबलेन तस्य स्वीकारात् । दण्डिपुरुषाभावस्थले तु संयोगावच्छिन्नतदुभयाभावस्य प्रतीतिविषयत्वमित्यत्र तात्पर्यम् । अत एव ननूत्तम्भकेत्याद्यग्रिमशङ्काप्युदेति , अन्यथा दाहपूर्वं सम्बन्धस्यासत्त्वेन प्रतियोग्यसमानकालत्वादित्यादेस्तत्रत्यहेतोरनन्वयादिति । वस्तुतो विशेषणावच्छिन्नविशेष्याभाव

मकरन्दः ।

**अत एवेति** । प्रतियोगितावच्छेदकभेदस्याभावभेदकत्वाभावादित्यर्थः । यद्यपि पूर्वाभेदः, तथापि पूर्वं विशेष्यस्य सत एव विशेषणान्तरविरहादभाव इत्युक्तम् । संप्रत्यविद्यमानविशेष्यकाभिप्रायेणोच्यत इति न दोषः । **विशेषणविशेष्ययोरिति** । यद्यपि यत्किञ्चित्संबन्धाभावो न विशिष्टाभावोऽतिप्रसङ्गादिति विशेषणविशेष्योभयप्रतियोगिकसंबन्धाभावस्तथा वाच्यः, तदभावश्च विशेषणविशेष्योभयप्रतियोगित्वरूपविशेषणाभावात् क्वचिद् विशेष्याभावादित्यननुगमस्तदवस्थ एव । अधिकश्चानुमानप्रकाशे दूषणमुक्तम् । तथापि विशेषणावच्छिन्नविशेष्यात्यन्ताभावस्तथेति विपञ्चितमनुमानप्रकाशे द्रष्टव्यम् । किञ्च, यदि संबन्धाभावो विशिष्टाभावस्तदा भूतलादौ दण्डिनि सत्यपि नेह दण्डीति प्रत्ययप्रसङ्गः । दण्डपुरुषसंबन्धस्य दण्डपुरुषोभयमात्रनिष्ठतया तत्र तदानीमपि तदभावात् । न च भूतलावच्छिन्ने पुरुषे विशेषणसंबन्धाभावः स इति भूतलस्याधिकरणकोटिप्रवेश इति वाच्यम् । तथा सति विशेष्याभावे तादृशबुद्ध्यनुदयप्रसङ्गात् । तस्माद्विशेषणविशेष्यतदुभया-

टिप्पणी ।

ऽन्योन्याश्रयत्वापत्तेः । एतेनाभेदे व्याप्यव्यापकभावेऽपि न क्षतिः । **केवलोऽयमासीदिति** ।

प्रकाशः ।

द्विशिष्टाभावव्यवहारः, यतो यद्व्यवहारस्तदभावात्तदभावव्यवहारस्योचितत्वात्। अत एव यत्र यस्य सम्बन्धः स एव तत्र तस्य वैशिष्ट्यमिति नाननुगमः । तदिह प्रतिबन्धकोत्तम्भकाभावयोः सम्बन्धाभावः प्रत्येकाभावव्यापकोऽनुगतो दाहादिहेतुः, सर्वत्र प्रतिबन्धकोत्तम्भकाभावयोः सम्बन्धो नास्तीति प्रतीतेः । न चैवं प्रतिबन्धकोत्तम्भकाभावौ यत्र तत्रापि दाहापत्तिः, अभावाधिकरणयोरतिरिक्तसम्बन्धाभावादिति वाच्यम् । तदभावेऽपि स्वरूपसम्बन्धस्य भावात् । अथ तदुभय स्वरूपस्वरूपसम्बन्धाभावस्य हेतुत्वे तदुभयस्वरूपाभाव उत्तत्तम्भककाल एवेत्युत्तम्भकसत्त्व एव दाहः स्यात्। प्रतिबन्धकाभावोत्तेजकयोरेव तदुभयस्वरूपाभावरूपत्वादिति चेन्न। सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वस्य स्वरूपसम्बन्धत्वात् तदभावस्य च प्रतिबन्धकाभावे प्रति-

प्रकाशिका ।

एव सर्वत्र प्रतीतिविषयो दाहादिकारणं चेति सम्प्रदायमतमेव रमणीयमिति। **अत एवेति** । लक्ष्यस्याप्यननुगतत्वमेवेति भावः । आशयमविद्वान् शङ्कते । **अथेति** । आशयमाविष्करोति । **योग्यत्वस्येति** । तदालिङ्गितस्वरूपद्वयस्येत्यर्थः । एवं च विशिष्टप्रतीतिविषयत्वलक्षणसम्बन्धत्वस्य

मकरन्दः ।

भाव एव विशिष्टाभावः । तदनुगमकञ्च विशिष्टधीविषयाभावत्वम् । विशिष्टधीविषयत्वस्य त्रितयानुगतत्वेन तदभावत्वेन तदभावानामप्यनुगतत्वसम्भवादित्याहुः । **अत एवेति** । लक्ष्यस्याप्यननुगतत्वमिति भावः। **तदभावेऽपीति** । अतिरिक्तसंबन्धाभावेऽपीत्यर्थः । **संबन्धान्तरं विनेति** । एतत् प्रत्यक्षप्रकाशे व्याख्यातम् । अस्यातिरिक्तसंबन्धरूपत्वे अपसिद्धान्तः । तदुप-

टिप्पणी ।

तत्रेति शेषः। अत्र केवलोऽयञ्चास्तीत्यत्र तात्पर्यम् , अन्यथात्यन्ताभावप्रत्ययस्यैवाप्राप्तेः। **तदिह प्रतिबन्धकोत्तम्भकाभावयोः सम्बन्धाभाव इति** । इदञ्च विशेषणविशेष्ययोः सम्बन्धस्य स्वरूपसम्बन्धरूपतास्थले, तत्र सम्बन्धत्वस्य व्यासज्यवृत्तेस्तदुभयसाधारणत्वात्। अन्यत्र सम्बन्धरूपवैशिष्ट्यावच्छिन्नाभाव एव तात्पर्य्यम् । अतिरिक्तस्य विशिष्टाभावस्योभयाभावस्य च स्वीकर्तुरयमाशयः, अनुगताकारबुद्धेरनुगतैकविषयत्वे विषयत्वसम्बन्धस्यैकत्रैव कल्पनाल्लाघवमन्यथानेकस्य तत्कल्पने गौरवम् प्रतीतिलाघवञ्च वस्तुलाघवादभ्यर्हितम् , तदेकशरणत्वाद्वस्तुनाम् । अन्यथा जात्यवयविसामान्याभावादीनामप्यसिद्धिः स्यात् । एतेन प्रत्येकाद्यभाव एव विशिष्टधर्म्मद्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वं कल्प्यं नातिरिक्तोऽभाव इति निरस्तम् । किञ्च द्वयोर्म्मध्य एकस्याभावनिश्चयेऽपरसत्त्वानिश्चये विशिष्टाभावोभयाभावादिसंशयो न स्यात् । अतिरिक्तस्य तस्य तदभावस्य चानिश्चयात् । मास्तु वा संशयप्रतिबध्यप्रतिबन्धकभावानुरोधेनाभ्युपेयः सः, उभयाभावबुद्धिप्रतिबध्यतावच्छेदकस्य वक्तुमशक्यत्वात्। प्रत्येकधर्म्मावच्छिन्नाभावबुद्धित्वेन तथात्वेऽनेकप्रतिबध्यत्वापत्तेः । तत्प्रतिबध्यत्वस्य प्रत्येकधर्म्मावच्छिन्नप्रतिबध्यत्वानतिरिक्तत्वे प्रत्येकधर्म्मावच्छिन्नबुद्धौ उभयाभावबुद्ध्यनापत्तेः । प्रतियोगितासम्बन्धेनोभयविशिष्टाभावबुद्धित्वेन तथात्वे ह्यप्रसिद्धिः । उभयाभावबुद्धेर्नियमेन भ्रमत्वापत्तिश्च। घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्य तत्संसर्गत्वासम्भवात् । उभयधर्मावच्छिन्नप्रतियोगिताकत्वस्य प्रत्येकाभावे स्वीकारे स्वीकृतमतिरिक्तं प्रतियोगित्वम् । विवादोऽपि तत्रैव अनुगमस्यापि च सम्भवेनाभिलषितसिद्धिश्च घटत्वपटत्वयोरेवास्त्ववच्छेदकत्वं द्वित्वस्य नेति न वाच्यम् । प्रतियोगिकोटौ द्वित्वमनवगाह्य तादृशाभावप्रत्ययात् । विनिगमकाभावेन तस्याप्यभ्युपेयत्वात् । लाघवमपि तत्रैव यत्र तद्विनापि प्रतीतिर्यथा प्रमेयत्वं विनापि वह्निर्नास्तीतिबुद्धिरित्यायूह्यम् ॥०॥ **सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वस्य**

प्रकाशः ।

वन्धकोत्तम्भकसद्भावे तदुभयाभावे वाऽविशिष्टत्वात् ।

ननु उत्तम्भकप्रयोगे मणेरभावो न प्रागभावप्रध्वंसात्मा । तयोः प्रतियोग्यसमानकालत्वात् । न चोत्तम्भकाभावप्रध्वंसप्रयुक्तेनोत्तम्भकाभाववत्त्वेन मणेर्ध्वंस एवेति वाच्यम् । क्षणभङ्गापत्तेरुक्तत्वात् । ध्वंसस्यानन्तत्वेनोत्तम्भकापनयेऽपि दाहप्रसङ्गाच्च । नाप्यत्यन्ताभावः । कादाचित्कत्वात् । न च विशेषणाद्यभावप्रत्यासत्तिकादाचित्कत्वात् कादाचित्कप्रतीतिकार्योनुदयाविति वाच्यम् । प्रत्यासत्तित्वावच्छेदकानुगतधर्माभावात् । विशिष्टविरोधित्वस्य च निरस्तत्वात् । मण्यादेः स्वावयववृत्तितया करादौ तदत्यन्ताभावस्य सदातनत्वात् । मणिसमवधानेऽपि दाहापत्तेश्च । मैवम् । क्लृप्तसंसर्गाभावत्रयवैधर्म्येऽप्यबाधितप्रतीतेस्तुरीयस्यैव तस्य सिद्धेः । क्लृप्तविशेषबाधतः सामान्यबाधे क्लृप्तानादिसंसर्गाभाववैधर्म्याद् ध्वंसस्याप्यसिद्ध्यापत्तेः । अबाधितसामान्यबुद्धेर्विशेषा-

प्रकाशिका ।

*व्यासज्यवृत्तितया तदवच्छिन्नाभावः प्रत्येकाभावेऽप्यस्तीति ।* **प्रध्वंसप्रयुक्त इति** । तद्व्यापक इत्यर्थो न तु तज्जनित इति समानकालत्वादित्यवधेयम् । **क्षणभङ्गेति** । इदमापाततो वस्तुतो निमित्तेतरकारणनाशस्य द्रव्यनाशकत्वात् प्रकृते च तदभावान्न मणिनाश इति तात्पर्यम् । **प्रत्यासत्तित्वेति** । तत्स्वीकारे वा तदेव कारणतावच्छेदकं(१) प्रतीतिविषयतावच्छेदकं चेति किमतिरिक्तविशिष्टाभावेनेति भावः ।

मकरन्दः ।

हितस्वरूपद्वयात्मकत्वे उक्तदोषतादवस्थ्यमिति चिन्त्यम् ।

**नन्विति** । यद्यपि सम्बन्धाभावस्य सिद्धान्तितत्वान्मण्यभावमादाय शङ्का न युक्ता, तथापि विशेषणावच्छिन्नविशेष्याभाव एव विशिष्टाभाव इति तात्पर्यविषयीभूतमते निर्भरतया तदभिप्रायेण शङ्केयमिति बोध्यम् । **प्रत्यासत्त्वेति** । भावे वा विशेषणाभावादेरेव तेन रूपेण हेतुत्वमस्त्विति भावः । तन्मताभिप्रायेणैव सिद्धान्तमाह । **क्लृप्तेति** । प्रकृते स्वरूपसंबन्धतया मणेरेव तत्संबन्धरूपत्वात्तदादाय शङ्कादिकमित्यप्याहुः । क्लृप्तेनैवोपपत्तावक्लृप्तरूपकल्पने गौरवादित्य-

टिप्पणी ।

**स्वरूपसम्बन्धत्वादिति** । तादृशयोग्यत्वाळिङ्गितस्वरूपस्येत्यर्थः । योग्यत्वस्य निरूपयितुमशक्यत्वाद् व्यासज्यवृत्तिविशिष्टप्रत्ययविषयत्वं सम्बन्धत्वं तयोः स्वीकृत्य तदवच्छिन्नप्रतियोगिताकोऽयमभावः । वैशिष्ट्यावच्छिन्नविशेष्यनिष्ठप्रतियोगिताकोऽयमभावः स्वीक्रियत इत्यत्र तात्पर्य्यम् । तेन मण्यभावविकल्पविषयकस्य ननूत्तेजकेत्याद्युत्तरग्रन्थस्य नासङ्गतिः । सम्बन्धाभावे तस्योत्थानासम्भवात् । अत एव तदुभयसम्बन्धस्य भूतलादावभावेन दण्डिपुरुषसत्त्वेऽपि दण्डीपुरुषो नास्तीति प्रत्ययप्रसङ्ग इति शङ्का सुसमाहिता । अन्यथावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो वाच्यः । कालिकेन कार्य्यावच्छेदकदेशावच्छिन्नकार्यहेतुत्वं वा तस्य वाच्यम् । अवच्छेदकत्वस्यैव तन्नियामकत्वञ्च, अवच्छेदकत्वञ्चेह गृहे भूतले वा दण्डपुरुषयोः सम्बन्धो न सर्वत्रेत्यनुभवसिद्ध इत्येव समाधेयं स्यादिति ॥०॥ **नचोत्तम्भकाभावप्रध्वंसप्रयुक्तेनेति** । उत्पत्तिविनाशशालितुरीयाभावाभिप्रायेण प्रागभावाभिप्रायेण वा ०॥ **न च विशेषणाद्यभावप्रत्यासत्तीति** । विशेषणाद्यभावरूपविशिष्टात्यन्ताभावरूपा प्रत्यासत्तीत्यर्थः । **कादाचित्कत्वात्** । कादाचित्कत्वप्रतीतीतिविशिष्टात्यन्ताभावकादाचित्केत्यर्थः । **प्रत्यासत्तित्वावच्छेदकानुगत-**

(१) तत्तत्प्रतीतिविषयप्रतियोगितावच्छेदकमित्यर्थः ।

केवलप्रतिबन्धकाभावोऽविशिष्ट इत्यवधार्यताम्। अथैवम्भूतसामग्रीत्रयमेव किं नेष्यते? कार्यस्य तद्व्यभिचारात्। जातिभेदकल्पनायाश्च प्रमाणाभावात्। यथोक्तेनैवोपपत्तेः। भावे वा काममसावस्तु, का नो हानिः। प्राक्प्रध्वंसविकल्पोऽपि नानियतहेतुकत्वापादकः, यस्मिन् सति कार्यं न जायते तस्मिन्नसत्येव जायत

बोधनी।

च प्रतिबन्धकोत्तम्भकसद्भावे विशिष्टाभावः प्रतिपाद्यः निदर्शनत्वेनेतरयोरुपादानमिति। प्रकृतं विधात्रयमवलम्ब्य चोदयति-अथ-इति। केवलोत्तम्भकवती काचित् सामग्री, अन्या तु प्रतिबन्धकोत्तम्भकवती, द्वयाभाववती चान्येति सामग्रीत्रयं कार्यस्यास्तु किमिति सर्वत्रैकरूप्यं प्रयासेन साध्यत इति। परिहरति-कार्यस्य-इति। एकैकव्यतिरेकेऽपि कार्योत्पत्तेस्त्रयाणामप्यकारणत्वप्रसङ्गादिति। तृणारणिमणिन्यायमाशङ्क्याह-जाति-इति। ननु सामग्रीभेद एव तत्र प्रमाणमस्तीत्यत आह-भाव-इति। एवं सामान्यव्यभिचारं परिहृत्य प्राक्प्रध्वंसादिविशेषव्यभिचारं परिहरति-प्राक्-इति। कुत इत्यत आह-यस्मिन्-इति। यस्मिन् केवलप्रतिबन्धके

प्रकाशः।

न्तरमादाय पर्यवसानमिति तु तुल्यम्। यद्वा इह भूतले घटो नास्तीतिवत् संसर्गावच्छिन्नप्रतियोगिकाभावविशेषस्य सति प्रतिबन्धके तत्राभावः। स च समयावच्छेदेन संसर्गितयाऽत्यन्ताभाव एव। तादृशश्च मण्याद्यभावो घटाभाव इव भूतले करेऽपि वर्त्तते। नचैवं प्रागभावप्रध्वंसयोरप्यसिद्धिरत्यन्ताभावेनैव कालभेदात् कपाले घटो नास्तीति तज्जन्यबुद्ध्युपपत्तेरिति वाच्यम्। अत्यन्ताभावस्य घटसत्त्वकालेऽपि सत्त्वात्तदापि घटो भविष्यतीति घटसत्त्वविरोधिबुद्ध्यापत्तेः, प्रतियोगिसत्त्वविरोध्यभावस्वीकारात्। न च मणिसंयुक्तकरेऽपि तत्संयोगात्यन्ताभावोऽस्त्येव तस्याव्याप्यवृत्तित्वादिति तत्रापि दाहापत्तिः। समानाधिकरणप्रतियोगिसत्त्वविरोधिनस्तस्य हेतुत्वात्। प्रहरं मा दहेत्यत्र सावधिमन्त्रपाठे तु मन्त्रनाशेऽप्युद्देश्यत्वज्ञानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वमिति। अथेति। विशेषणाद्यभावत्रयघटितं सामग्रीत्रयमेव दाहहेतुरस्तु, किमनुगतेन विशिष्टाभावेनेत्यर्थः। कार्यस्येति। अन्योन्यव्यभिचारेणान्वयव्यतिरेकयोरशक्यग्रहत्वादित्यर्थः। ननु तत्तत्कारणप्रयोज्यो दाहे जातिभेद इति न व्यभिचार इत्यत आह। जातिभेद इति। दाहे वैजात्यस्य योग्यानुपलब्धिबाधितत्वाद् योग्यव्यक्तौ चायोग्यजात्यभावादित्यर्थः। ननु तृणादिजन्याग्निष्विव कारणभेदव्यङ्ग्यो जातिभेदः स्यादित्यत आह। यथोक्तेनेति। गौरवादिति भावः। तत्सत्त्वेऽपि न सिद्धान्तक्षतिरित्याह। भावे वेति। विशेषव्यभिचारमपाकरोति। प्रागिति। प्रतिबन्धकसंसर्गाभावसत्त्वस्योपाधेरनुगतानतिप्रसक्तस्य सत्त्वादित्यर्थः।

प्रकाशिका।

विचित्राभावकल्पनागौरवादाह यद्वेति। संयोगावच्छिन्नकालविशेषसंसर्गी चेत्यर्थः। तेन समवायसम्बन्धावच्छिन्नात्यन्ताभावमादाय यत्पूर्वं दूषणमाशङ्कितं तदपि निरस्तम्। विशेषव्य-

मकरन्दः।

नुशयेनाह। यद्वेति। नचोभयपक्षेऽपि संसर्गाभावत्वेन तद्धेतुत्वमिति सिद्धान्तोऽनुपपन्नः। प्रागभावादेर्विशिष्टाभावत्वाभावादत्यन्ताभावत्वादिनैव तथात्वादिति वाच्यम्। यत्र प्रतिबन्धक उत्तेजकमप्रसिद्धं तदभावे विशिष्टाभावत्वाभावेन तथात्वसम्भवादिति भावः। समानाधिकरणेति। प्रतियोगिवैयधिकरण्यावच्छिन्नस्येत्यर्थः। उद्देश्यत्वज्ञानाहितेति। एतच्चानुमानप्रकाशे विपश्चितम्।

**इत्यत्र संसर्गाभावमात्रस्यैव प्रयोजकत्वात् ।**

**यस्तु संसर्गाभावतादात्म्यनिषेधयोर्विशेषमनाकलयन्नितरेतराभावेन प्रत्यवतिष्ठते, स प्रतिबोधनीयः । तथाप्यभावेषु जातेरभावात् कथं त्रयाणामुपग्रहः स्यात्, अनुपगृहीतानाञ्च कथं कारणत्वावधारणमिति चेत् । मा भूज्जातिः । न**

---

बोधनी ।

सति संसर्गिणि कार्यं न जायते तस्मिन्नसत्यसंसर्गिणि जायत इत्यभ्युगमे संसर्गाभाव एक एव कारणम् । प्रागभावादयस्तु तद्विशेषा इति नानियतहेतुकत्वमिति । ननु संसर्गाभावः कारणमित्युक्तेऽपि संसर्गप्राक्प्रध्वंसादिविकल्पेनानियतहेतुकत्वं, तत्रापि संसर्गाभावस्वीकारेऽनवस्थेति चेत्, न । न ह्यत्र संसर्गस्याभावः कारणं यतो विकल्प्येत, किन्तु संसृज्यमानस्य मन्त्रादेः । न हि संसर्गः प्रतिबन्धकः संसृज्यमानस्यैव मन्त्रादेस्तथात्वादिति ।

यत्तूक्तमितरेतराभावस्य सत्त्वेऽपि कार्यानुदयादिति तत्र प्रथमव्याख्यानेन यानुपपत्तिरुक्ता तां निराचष्टे-**यस्तु**-इति । प्रतिबोधनीयः=,तादात्म्याभावविलक्षणं संसर्गाभावम् । तद्द्विविधो ह्यभावः-इदमिह इदानीं वा नास्तीति संसर्गतया यत्र प्रतियोगी निषिध्यते स संसर्गाभावः । तत्र संसर्गाभावभेदाः प्रागभावप्रध्वंसात्यन्ताभावाः, तेषामेव संसर्गितामापन्नप्रतियोगिनिरूप्यत्वात् ततश्चेतरेतराभावस्याप्रसक्तिरिति । नन्वस्तु तादात्म्याभावसंसर्गाभावयोर्विशेषः, तथापि प्रागभावादित्रयानुगतायास्तादात्म्याभावव्यावृत्ताया जातेरभावात् कथं त्रयाणामुपसंग्रहः, कथं वा तदनुपसंग्रहे व्यभिचाराच्छक्यावधारणं कारणत्वमित्याह-**तथापि**-इति । विनापि जातिमेकोपाध्युपगृहीतानां त्रयाणां कारणत्वमवधारयामः, उपाधिश्चात्र संसर्गितापन्नप्रतियोगिनिरूप्यत्वमित्याशयवानाह-**मा भूत्**-इति । तथापि न तावन्मात्रेण कारणत्वं शक्यावधारणमिति चेत् । न, भवतो-

प्रकाशः ।

नन्वन्योन्याभावव्यावृत्तस्य संसर्गाभावत्वस्योपाधेरभावात् । प्रतिबन्धकसत्त्वेपि तदन्योन्याभावात् कार्यं स्यादित्यत आह—

**यस्त्विति । प्रतिबोधनीयः**=प्रतिबन्द्या बोधनीय इत्यर्थः । तथाहि अन्वयव्यतिरेकाभ्यां व्याप्तिकारणत्वयोर्ग्रहे मीमांसकैरपि संसर्गाभावस्य कारणत्वाङ्गीकारः । अन्यथा व्यापकसामग्र्योः सत्त्वेऽपि तदन्योन्याभावाद् व्याप्यकार्याभावापत्तेः । तवापि प्रतिबन्धकाभावेऽपि शक्तिरस्तीति प्रतिबन्धकसत्त्वे तदन्योन्याभावमादाय शक्तिसत्त्वप्रसङ्गश्चेति भावः । **मा भूदिति ।**

प्रकाशिका ।

**भिचारमिति** । यद्यपि विशिष्टाभावस्य सर्वत्रात्यन्ताभावतया नोक्तव्यभिचारशङ्का, अत एव संसर्गाभावत्वेन कारणत्वमिति सिद्धान्तोऽप्यनुपपन्नः । तथाप्युत्तेजकशून्यप्रतिबन्धकस्थलाभिप्रायेण शङ्का सिद्धान्तौ । नच तदसम्भवः । रूपादेः सजातीयप्रतिबन्धकतायामुत्तेजकाभावात् । नच तत्र समानाधिकरणरूपत्वेन प्रतिबन्धकतेति तदत्यन्ताभावस्याकारणतया संसर्गाभावत्वेनाहेतुत्वात्कथं सिद्धान्तसङ्गतिरिति वाच्यम् । लाघवेन रूपत्वेनैव प्रतिबन्धकत्वात् संसर्गाभावपदस्य कादाचित्काभावपरत्वाद् वा । **व्याप्यकार्याभावेति** । न चान्योन्याभावमादायेष्टापत्तिरिति वाच्यम् । व्य-

मकरन्दः ।

**व्याप्यकार्येति** । नचान्योन्याभावमादायेष्टापत्तिरिति वाच्यम् । तथा सति व्यभिचारिणोऽपि तथात्वपत्तेः ।

**प्रतिबन्धकाभावे** इति सति सप्तमी । वह्न्यादाविति शेषः । संसर्गाभावलक्षणमनुमानप्रकाशे द्रष्टव्यम् ।

हि तदुपगृहीतानामेव व्यवहाराङ्गत्वम्। सर्वत्रोपाधिमद्व्यवहारविलोपप्रसङ्गात्। एतेन प्रतिबन्धके सत्यपि तज्जातीयान्यस्याभावसम्भवात् कार्योत्पादप्रसङ्गोऽनुत्पादे वा ततोऽप्यधिकं किञ्चिदपेक्षणीयमस्तीति निरस्तम्। यथा हि तज्जातीये सति कार्यं जायते यथार्थदसति न जायत इति स्थिते तद्भावेऽपि तज्जातीयान्तराभावान्न भवितव्यं कार्येणेति न, तथैतदपि। अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिञ्चित्करत्वादिति। यत्त्वकिञ्चित्करस्येति। तदप्यसत्।

बोधनी।

ऽपि बीजे सत्यङ्कुरो जायते तदभावे तु न जायते इत्यत्र व्यतिरेकादौ यदि बीजप्रागभावो विवक्षितः प्रध्वंसे जायेत, अथ प्रध्वंस इतरत्र जायेतेत्यादिप्रसङ्गः, बीजाभावमात्रविवक्षायां तादात्म्याभावेऽप्यङ्कुरानुदयप्रसङ्ग इत्यभिहिते च तादात्म्याभावव्यावृत्तस्य प्रागभावादित्रयानुगतस्य च संसर्गाभावत्वस्याङ्गीकार एव परिहार इति इतरेतराभावस्य सत्त्वेऽपीत्यत्र द्वितीयव्याख्यानोक्तामनुपपत्तिमनुभाष्य दूषयति। **एतेन**-इति। प्रतिबन्धके सति कार्यं न जायते तस्मिन्नसति जायत इति प्रतिपादिते कथमनेनैतन्निरस्तमित्यत्रातिदेशमेव भावकारणवादसाम्येन विशदयति—**यथा हि**-इति। बीजजातीये सत्यङ्कुरोत्पत्तिरित्युक्तेऽर्थात्तदभावे तदनुत्पत्तिरिति सिद्धे एकस्मिन् बीजे सति बीजजातीयान्तराणामभावादङ्कुराख्येन कार्येण न भवितव्यमिति न प्राप्नोति **तथैतदपि**। प्रतिबन्धके सति कार्यानुदयस्तदभावे सति कार्योदय इत्यत्रापि एकस्मिन् प्रतिबन्धके सति सजातीयान्तराणामभावाद् भवितव्यं कार्येणेत्येतदपि न प्राप्नोतीति। कुत इत्यत आह—**अनुकूलवत्**-इति। कार्यानुकूले कारणे सति यथा तज्जातीयान्तराणामभावो न तस्य कार्यं निषेधति तथा प्रतिकूलेऽपि कस्मिंश्चित् प्रतिबन्धके सति प्रतिबन्धकान्तराभावेऽपि न कार्यं विधत्ते अकिञ्चित्करत्वं निषेधे विधौ चेति द्रष्टव्यम्। अथ प्रतिबन्धकत्वान्यथानुपपत्ति दूषयितुं प्रतीकेनानुभाषते-**यत्तु**-इति। सङ्ग्रहं व्याचक्षाणो दूषयति-**तदपि**-इति। पूर्वार्थापत्तिसमुच्चयेऽपि सामग्रीवैकल्यं सामग्र्यन्तर्भूतानामन्यतमस्य विगमः प्रतिबन्धकः। उभयवादिसिद्धिप्रदर्शनार्थो

प्रकाशः।

जात्यभावेऽपि संसर्गाभावत्वरूपैकोपाधिनैव कारणत्वमित्यर्थः। न च तद् निर्वक्तुमशक्यम्। अधिकरणे प्रतियोगिनमारोप्य यत्र निषेधबुद्धिस्तत्र संसर्गाभावो, यत्र तु प्रतियोगितावच्छेदकमारोप्य निषेधधीस्तत्र सोऽन्योन्याभाव इत्यस्मद्गुरवः।

ननु प्रतिबन्धकाभावो न हेतुः। एकदण्डान्वये घटोत्पत्तिवदेकप्रतिबन्धकसत्त्वेऽपि तदन्याभावात् कार्योत्पत्त्यापत्तेः। न हि यावत्कारणत्वावच्छिन्नं तावदन्वये कार्यमित्यत आह। **एतेनेति**। अभावकारणत्वाङ्गीकारेण। *यथा बीजजातीये सत्यपि बीजान्तराणामभावादङ्कुरेण न भाव्यमित्ययुक्तं, तथेदमपीत्यर्थः*। प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकः प्रतिबन्धकसामान्याभावः कारणम्। स च यावद्विशेषाभावनियत इति नैकप्रतिबन्धकसत्त्वे तदन्याभावात् कार्योत्पत्तिः। यद्वा, प्रतिबन्धकाभावत्वेन न कारणत्वम्। अन्योन्याश्रयात्।

प्रकाशिका।

भिचारिणोऽपि तमादय तथासति नियतत्वापत्तेः। प्रतिबन्धकाभाव इति सति सप्तमी वह्न्यादाविति-शेषः। **अधिकरण इति**। यद्यप्यधिकरणे प्रतियोगी संसर्गाभावप्रतीतौ नारोप्यो न वा प्रतियोगितावच्छेदकमारोप्यमन्योन्याभावप्रतीतावधिकरणे किन्तु भूतलवृत्तित्वं घटे प्रथमप्रतीतौ प्रतियोगीन्याधिकरणे तादात्म्येन द्वितीयप्रतीतौ, तथापि प्रतियोगिसंसर्गतादात्म्ययोरधिकरणे संसर्गविषया

सामग्रीवैकल्यं प्रतिबन्धपदार्थो मुख्यः, स चात्र मन्त्रादिरेव, न त्वसौ प्रतिबन्धकः। ततः किं तस्याकिञ्चित्करत्वेन। तत्प्रयोक्तारस्तु प्रतिबन्धारः। ते च किञ्चित्करा एवेति किमसमञ्जसम्।

ये तु व्युत्पादयन्ति, कार्यानुत्पाद एव प्रतिबन्ध इति। तैः प्रतिबन्धमकुर्वन्त एव प्रतिबन्धका इत्युक्तं भवति। तथाहि, कार्यस्यानुत्पादः प्रागभावो वा स्यात्, तस्य कालान्तरप्राप्तिर्वा ? न पूर्वः तस्यानुत्पाद्यत्वात्। न द्वितीयः, कालस्य

बोधनी।

मुख्यशब्दः। स च प्रतिबन्धोऽत्राभावकारणत्वस्थितौ मन्त्रादिरेव स्यात्, अभावाभावस्य भावात्मकत्वात्। न त्वसौ मन्त्रादिः प्रतिबन्धकः। अतो मन्त्रादेरकिञ्चित्करत्वेऽपि न प्रतिबन्धकस्याकिञ्चित्करत्वं भवति प्रतिबन्धकस्य किञ्चित्करापेक्षायामनवस्थाप्रसङ्गात् प्रतिबन्धकत्वप्रसङ्गाच्चेति। के तर्हि प्रतिबन्धका इत्यत्राह–तत्प्रयोक्तारः–इति। मन्त्रादिप्रयोक्तारः पुरुषाः प्रतिबन्धकाः, ते च मन्त्रादीन् प्रयुञ्जानाः किञ्चित्करा एवेति नानुपपद्यमानं किञ्चिदस्तीति।

कार्यानुत्पादः प्रतिबन्धः, तं च कुर्वन्तो मन्त्रादयः प्रतिबन्धका इत्येकदेशिनां मतमुपन्यस्य निरस्यति–ये तु–इति। तस्य कालान्तरप्राप्तिरिति सामग्रीसमवधाने हि कार्यस्य प्रागभावो विनश्यति। सति तु प्रतिबन्धके पश्चात्तनमपि कालं व्याप्नोति। तेन प्रागभावस्य पाश्चात्यकालप्राप्तिः प्रतिबन्धकाधीनेति। तस्यानुत्पाद्यत्वात् इति। प्रागभावस्यानादित्वेनानुत्पाद्यत्वादिति। कालस्य स्वरूपत–इति। मुख्यतस्तावत् कालस्यैकत्वात् कालान्तरमिति न संभ-

प्रकाशः।

कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वात्। किन्तु मण्याद्यभावकूटस्य। स च तत्र नास्त्येवेति भावः। मुख्य इति। प्रतिबन्धपदस्य सामग्र्यन्तर्गतकारणविगमार्थत्वादित्यर्थः।

ये त्विति। तथाच कार्यानुत्पादहेतुतया मन्त्रादिरेव प्रतिबन्धक इत्यस्त्वित्यर्थः। कालस्येति। कालप्रागभावस्वरूपातिरिक्तायास्तत्प्राप्तेरभावात्, स्वरूपस्य च तदजन्यत्वादित्यर्थः।

प्रकाशिका।

कारणीभूतप्रतीतौ विषयत्वं लक्षणप्रविष्टम्। कारणीभूतेति। न च मण्याद्यभावत्वेनोपस्थितानां कारणताग्रहे कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वग्रहे प्रतिबन्धकाभावत्वेन कारणताग्रहादन्योन्याश्रय इति वाच्यम्। प्रथमोपस्थितमण्यभावत्वादेरेव बाधकाभावेऽवच्छेदकत्वग्रहात्। उत्तेजकस्य मण्यादौ भिन्नभिन्नात्मकत्वेन विशिष्टाभावहेतुतायामेतस्य प्रकारस्याभावाच्च। एतेन कार्यानुत्पादप्रयोजकत्वमेव प्रतिबन्धकत्वं तदवच्छिन्नाभावत्वेनैव च हेतुत्वमिति नान्योन्याश्रय इति निरस्तम्। अनुपदमेवानुत्पादजनकत्वस्य मूलकृता दूष्यत्वाच्च। मण्याद्यभावेति। मणित्वाश्रययावदभावकूटस्य मन्त्रत्वाश्रययावदभावकूटस्य चेत्यर्थः। न तु मणिसामान्याभावस्य मन्त्रसामान्याभावस्य चेत्यर्थः। उत्तेजकशून्यतापक्षे प्रागभावादिरूपतयाऽसम्भवात्। उत्तेजकतापक्षे च भिन्नभिन्नोत्तेजकत्वेनासंभवात्, यस्य त्वेकजातीयस्य प्रतिबन्धकस्य एकजातीयमेवोत्तेजकं तत्रास्तु सामान्याभावस्य कारणत्वमिति तत्रैव ग्रन्थतात्पर्यम्।

मकरन्दः।

कारणीभूतेति। न च कार्यानुत्पादजनकत्वं तदिति नान्योन्याश्रय इति वाच्यम्। तस्यानुपदमेव दूष्यत्वादिति भावः। मण्यादीति। मणिमन्त्रादिसामान्याभावकूट इत्यर्थः। यद्यपि तत्तन्मण्यत्यन्ताभावकूटस्यापि हेतुतया न क्षतिस्तथापि मणित्वावच्छिन्नप्रतियोगिकसामान्याभावस्यैकत्वेन लघुत्वाद्धेतुत्वमिति मन्तव्यम्।

**स्वरूपतोऽभेदात्। तदुपाधेस्तु मन्त्रमन्तरेणापि स्वकारणाधीनत्वात्। प्रागभावावच्छेदककालोपाधिस्तदपेक्ष इतिचेन्न। मन्त्रात् पूर्वमपि तस्य भावात्। तस्मात् सामग्रीतत्कार्ययोः पौर्वापर्यनियमात्तदभावयोरपि पूर्वापरभाव उपचर्यते। वस्तुतस्तु तुल्यकालत्वमेवेति नायं पन्थाः।**

---

बोधनी।

वति यत्प्राप्तिर्मन्त्राद्यधीना भवेदिति। नन्वौपाधिककालभेदप्राप्तिर्मन्त्राद्यधीना स्यादित्याशङ्क्याह— **तदुपाधेः–इति।** अत्र हि पक्षे कालान्तरप्राप्तिर्नामावच्छेदकोपाध्यन्तरप्राप्तिरित्यवशिष्यते। तत्र कालोपाधिः सूर्यगत्यादिर्मन्त्रमन्तरेणापि स्वकारणाधीनः, तत्प्राप्तिश्च प्रागभावस्यानुत्पाद्यत्वेन स्वयमेव सिद्धेति किमत्र मन्त्रादिना क्रियत इति। ननु कालमात्रभेदोपाधेर्मन्त्राद्यनपेक्षत्वेऽपि प्रागभावव्यवच्छेदककालान्तरोपाधिर्मन्त्रादिकमपेक्षते। न हि सूर्यगत्यादिमात्रभेदितः कालः प्रागभावं व्यवच्छिनत्ति कार्योत्पत्त्युत्तरकालमपि तस्य भावादित्याह– **प्रागभाव–इति।** अस्ति हि मन्त्रादेः पूर्वमपि प्रागभावावच्छेदककालोपाधिः, यदि पूर्वमपि प्रागभावस्तदवच्छेदकश्च कालस्तदुपाधिश्च कश्चिन्न स्यात् तर्हि तदानीं प्रागभावव्यवहारो न स्यादिति। यद्यनादित्वात् कार्यप्रागभावो नोत्पाद्यः कथं तर्हि कारणाभावात् कार्याभाव इति कार्यकारणाभावयोः कार्यकारणभावव्यवहारः।

कालभेदे व्यपदेशश्च लौकिकानामिति शङ्कामुपपादयन्नाह– **तस्मात्–इति।** प्रागभावस्यानुत्पाद्यत्वादौपचारिकः प्रयोग इत्यर्थः। अथोपपादितं कार्यानुत्पादस्याप्रतिबन्धकत्वमुपसंहरति– **इति–इति।** कार्यानुत्पादविपरीतः प्रतिबन्ध इत्ययं न प्रतिबन्धत्वोपपादनमार्गः किन्तु पूर्वोप-

प्रकाशः।

**प्रागभावावच्छेदके**त्यत्र कर्मधारयः। कालोपाधिमात्रस्य मन्त्राद्यजन्यत्वेऽपीति शेषः।

लोके कारणाभावात् कार्याभाव इति हेतुपञ्चमीप्रयोग औपचारिक इत्याह—**तस्मादिति।**

मुरारिमिश्रास्तु—न प्रतिबन्धकाभावः कारणं, न वा शक्तिः, किन्तु तत्तत्कालीनदाहविशेषं प्रति तत्तत्कालप्रतिबद्धेतरवह्नेः कारणत्वमिति प्रतिबन्धकाभावः कारणतावच्छेदको दण्डत्ववत्, न कारणम्। आकाशादौ त्वेकव्यक्तिके क्वचित् प्रतिबन्धेऽप्यन्यत्र शब्दोत्पत्तेरतथात्वेऽपि भेर्यादेरेव तथात्वेन कारणत्वमित्याहुः।

तन्न। दण्डसंयुक्तचक्रत्वेन कारणत्वे सहकार्युच्छेदापत्तेः। अन्वयव्यतिरेकतौल्येनोभयस्यापि हेतुत्वं विनिगमकाभावादित्यस्यापि तुल्यत्वात्।

यद्धर्मवत्त्वमवगम्यैव यत्र यदवगमस्तत्र तस्य तदवच्छेदकत्वात्। प्रतिबन्धकाभावमनवग-

प्रकाशिका।

प्रागभावावच्छेदकोऽन्यः कालोपाधिर्नास्त्येवेत्यत आह। **कर्मधारय इति।** तथा च प्रागभावाच्छेदककालोपाधिरित्यर्थः। यद्वा प्रागभावावच्छेदकस्य कालोपाधिरिति निरासायाह। **कर्मधारय इति।** प्रागभावावच्छेदकपदस्य कालोपाधिपदेन सममित्यर्थः। **औपचारिक इति।** कारणकार्ययोरेव पौर्वापर्यं परम्परासम्बन्धेनाभावनिष्ठत्वेन विवक्षितमित्यौपाचारिकत्वं न तु लाक्षणिकत्वं सुब्विभक्तौ तदभावादिति ध्येयम्। **भेर्यादेरिति।** अतद्गुणसंविज्ञानबहुव्रीहिणा भेरीसंयोगादेरित्यर्थः। **यद्धर्मवत्त्वमिति।** न चैवं दृढदण्डत्वमपि सहकारि स्यात् तदनवगम्यापि दण्डत्वेन हेतोरग्रहादिति वाच्यम्। तस्य दण्डद्वारा चक्रादिसमवधानात्। इह तु तुल्यवदेवोभयोः सहका-

मकरन्दः।

**यद्धर्मवत्त्वमिति।** एवं दृढदण्डत्वमपि सहकारि स्यादित्युक्तमनुमानप्रकाशे द्रष्टव्यम्।

न चेदेवं, शक्तिस्वीकारेऽपि कः प्रतीकारः । तथाहि । प्रतिबन्धकेन शक्तिर्वा विनाश्यते तद्धर्म्मो वा, धर्म्मान्तरं वा जन्यते, न जन्यते वा किमपि ? इति पक्षाः । तत्राकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तेः । विपरीतधर्म्मान्तरजनने तदभावे सत्येव कार्यमित्यभावस्य कारणत्वस्वीकारः प्रागभावादिविकल्पावकाशश्च । तद्विनाशे तद्धर्मविनाशे वा पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वं, पूर्वं स्वरूपोत्पादकादिदानीमुत्तम्भकादुत्पत्तेः । न च समानशक्तिकतया तुल्यजातीयत्वान्नैवमिति साम्प्रतम् । विजातीयेषु समानशक्तिनिषेधात् । न च प्रतिबन्धकशक्तिमेवोत्तम्भको विरुणद्धि, न तु भावशक्तिमुत्पादयतीति साम्प्रतम् । तदनुत्पाद-

बोधनी ।

दर्शित एवेति । एवमेकदेशिनं निराकृत्य शक्तिवादिनमेव प्रत्याह-न चेदेवम्-इति । मन्त्रादेः प्रतिबन्धत्वं तत्प्रयोक्तॄणां प्रतिबन्धकत्वमित्यनभ्युपगमे शक्तिस्वीकारेऽपि त्वदुक्तसकलदूषणानां न निस्तार इति प्रतीकाराभावमेव दर्शयितुं यथासम्भवं विकल्पयति-तथा हि-इति । शक्तिविनाशः प्रतिबन्धः इति प्रथमः कल्पः, यावद्भावभावित्वाच्छक्तेर्विनाशः तस्यास्तु कार्योदयानुकूल इति द्वितीयः, कार्यप्रतिकूलधर्मान्तरजननमिति तृतीयः, अकिञ्चित्करस्यैव प्रतिबन्धकत्वमिति चतुर्थः । अत्राऽऽनन्तर्यादन्तिमं पक्षं दूषयति-तत्र-इति । अतिप्रसङ्गान्निर्वचनानुपपत्तेश्चेति भावः । तदनन्तरं कल्पं दूषयति-विपरीत-इति । विपरीतधर्माभावस्य कारणत्वं तावत् प्रसज्येत, तत्र च प्रागभावादिविकल्पावकाशः पूर्ववदेव स्यादिति । प्रथमद्वितीयकल्पाविकप्रसरेण दूषयति तद्विनाश—इति । शक्तितद्धर्मयोर्विनाशे सति पुनरुत्तम्भके सति कार्यदर्शनात् तेन तयोरुत्पत्तिरङ्गीकार्या, तथा चानियतहेतुकत्वं, पूर्वं शक्तिमदुत्पादकेनेदानीमुत्तम्भकेन तयोरुत्पत्तेरिति । ननु स्वरूपोत्पादकोत्तम्भकयोर्विजातीयत्वेऽप्येकशक्तित्वेन तुल्यत्वे संभवति नानियतहेतुकत्वप्रसक्तिरित्याशङ्क्याह-न च-इति । कारणमाह-विजातीयेषु इति । प्रवाहेणानादिमानेषनविजात्येकशक्तिमानित्यत्र । ननु नोत्पादकः कारणशक्तिं तद्धर्मं वा जनयति, केवलं स्तम्भकस्य स्तम्भनशक्तिं निरुणद्धि, तेन नानियतहेतुकत्वप्रसङ्ग इत्यत्राह-न च-इति । तदनुत्पादेति । पूर्वं प्रतिबन्धकविनष्टयोः शक्तिधर्मयोः पुनरुत्तम्भकेनाजनने तयोरनुत्पाद एव स्यात् , ततश्च कार्यस्याप्यनुत्पादप्र-

प्रकाशः ।

स्यापि वह्नेर्दाहहेतुत्वावगमात् । अन्यथा शक्तिस्वीकारेऽपि त्वदुक्तदोष इत्याह । न चेदेवमिति तदभावे=विपरीतधर्मान्तराभावे । पूर्वमिति । "नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा" इति पराभ्युपगमादित्यर्थः । विजातीयेष्विति । शक्त्यनुकूलशक्त्यन्तरपरम्परानुसरणेऽनवस्थानन्वेति भावः । तदनुत्पादेति । प्रतिबन्धकेन वह्निशक्तिनाशादुत्तेजकेन प्रतिबन्धकशक्तिनाशेऽपि पुनर्वह्नौ शक्तिर्न स्यात् । पूर्वस्या नाशादन्यस्याश्च हेतोरभावादित्यर्थः ।

नन्वनुमानमस्तु शक्तौ मानम् । तथाहि कारणानि स्वजन्यानुकूलादिष्टभावभूतातीन्द्रियधर्मवन्ति, कारणत्वात् , आत्मवत् । तत्रादृष्टं तथा सिद्धम् । नचाऽऽत्मत्वमुपाधिः । अन्त्यश-

प्रकाशिका ।

रिसमवधानात् । कारणानीति । एतच्च विप्रतिपत्तिस्थल एव व्याख्यातम् । अन्त्यशब्देति । अधि-

मकरन्दः ।

कारणानीति । तादृशधर्मवत्त्वेनानिश्चितानि नित्यकारणानीत्यर्थः । शेषं प्रागेव व्याख्यातम् ।

[पृ० ११८ पं.५] न भवितव्यं कार्येणेति । यथा तत्राङ्गीक्रियते तथैतदपि नाङ्गीकरणीयम् । तदुक्तौ तदात्मकानिष्टप्रसङ्गस्तवापि स्यात् । त्वया तत्परिहारे कृते तेनैतदपि परिहृतम्भवेदित्यर्थः १०

प्रकाशः ।

ब्दध्वंसकारणकालाकाशयोः साध्याव्यापकत्वात्, तत्रान्त्यशब्दस्यैव तथात्वादिति सामान्यतः। विशिष्य तु, पिण्डीभूतो वह्निः कार्यानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी जनकत्वात् आत्मवत्। न चात्मत्वं नित्यत्वं वोपाधिः, स्पर्शैकत्वादिमति द्व्यणुके साध्याव्यापकत्वात्। करवह्निसंयोगो वा पक्षः। नचात्मत्वं द्रव्यत्वं वोपाधिः, द्व्यणुकैकत्वस्पर्शादौ साध्याव्यापकत्वात्। मण्यादिसमवहि-

प्रकाशिका ।

करणत्वेन कालादिवदाकाशस्यापि शब्दध्वंसकारणत्वादिति भावः। **पिण्डीभूत इति**। वह्निमात्रपक्षत्वे द्व्यणुकेऽशतः सिद्धसाधनमिति तद्वारणाय पिण्डीभूत इति विशेषणम्—तस्य च प्रत्यक्षस्पर्शाश्रयत्वमर्थः। कार्यानुकूलत्वं च दाहानुकूलत्वं तदपि ताद्रूप्यसिद्धये, स्थितिस्थापकस्य च वह्नावभावेन व्यावर्त्तनीयाभावात्। यदि च तत्रापि स्थितिस्थापको मास्तु वा तथापि तमादायैवार्थान्तरमिति तद्वारणाय कार्यानुकूलत्वं विशेषणम्। तदापि दाहानुकूलत्वपरमेव तत्। अन्यथा तज्जन्यं कर्मादाय दोषतादवस्थ्यात् अदृष्टवदात्मसंयोगोष्णस्पर्शप्रतिबन्धकाभावैः सिद्धसाधनवारणायाद्विष्ठेत्यादिविशेषणत्रयम्। न च प्राभाकरमतेऽभावस्याधिकरणात्मकतया समवायिपदं व्यर्थमेवेति वाच्यम्। भट्टमतेऽर्थान्तरवारकत्वात्। प्राभाकरमतेऽपि अतिरिक्ताभावसिद्ध्यैव प्रकृतानुमानपर्यवसानेनार्थान्तरवारकत्वात्। वस्तुतोऽन्वयार्थसम्बन्धवाचकपदोपादाने प्राप्ते समवायिपदस्यैवाखण्डार्थकस्योपादानादिति। **द्व्यणुकैकत्वेति**। समवायिपदस्य तन्निरूप्यसमवायाश्रयत्वमात्रमर्थ इति द्व्यणुकमादाय साध्यसत्त्वं तत्र द्रष्टव्यम्। **मण्यादीति**। दाहजनकवह्नौ हेत्वसिद्धिबाधयोः वारणाय मण्यादिसमवहित इति। आदिपदात् प्रतिबन्धकाभावेतरसकलदाहकारणलाभोऽतो न तद्व्यतिरेकमादायांशतः सिद्धसाधनम्। कारणान्तरवर्त्तिकारणताव-

मकरन्दः ।

**पिण्डीभूत** इति। कार्यानुकूलत्वं स्वकार्यानुकूलत्वम्। तदपि स्वनिमित्तकारणानुकूलत्वम्। तेन कर्मानुकूलस्थितिस्थापकेन नार्थान्तरम्। कर्मणि तु वह्निः समवायिकारणमिति नोक्तदोषः। वह्नौ स्थितिस्थापकानभ्युपगमे उद्देश्यसिद्ध्यर्थं तदिति ध्येयम्। अदृष्टवदात्मसंयोगोष्णस्पर्शप्रतिबन्धकाभावादिनार्थान्तरवारणायाद्विष्ठादिपदम्। यद्यपि गुरुमतेऽभावोऽधिको नास्त्येवेति समवायिपदं व्यर्थं, तथापि परस्यार्थान्तरं स्यादिति तदुपात्तम्।

**करवह्नीति**। अत्र चाद्विष्ठपदं साध्ये त्याज्यम्। **द्व्यणुकैकत्वेति**। तत्समवायित्वस्य तन्निरूप्यसमवायाश्रयत्वार्थकतया समवायिद्व्यणुकमादाय तत्र साध्यवत्त्वं बोध्यम्। **मण्यादिसमवहित** इति। आदिपदात् प्रतिबन्धकाभावेतरसकलदाहकारणमभिमतमिति न तद्व्यतिरेके

टिप्पणी ।

**धर्माभावात्** इति। विशिष्टाभावस्याप्रत्तिर्विशेषणाद्यभाव एवाभ्युपगतोऽन्यस्य कादाचित्कत्वस्वाभावात्। विशेषणाभावविशेष्याभावनिष्ठप्रत्यासत्तित्वस्येत्यर्थः। तथा च विशेषणाद्यभावसम्बन्धेन प्रत्येकेन विशिष्टाभावस्य कारणत्वादिकं वक्तुमशक्यमिति भावः॥ **स्पर्शैकत्वादिमति-द्व्यणुक इति**। त्रसरेणुपरिमाणे द्व्यणुकैकत्वस्य तत्स्पर्शे द्व्यणुकस्पर्शस्य जनकत्वात् तस्य कार्य्यानुकूलत्वम् स्वकार्य्यानुकूलेति विवक्षायां यद्यपि तयोर्न साक्षात् द्व्यणुककार्य्यत्वं तथापि द्व्यणुकस्पर्शादिद्वारा तदस्ति। **द्व्यणुकैकत्वस्पर्शादौ साध्याव्यापत्वात् इति**। वह्नित्रसरेणुरूपकार्य्यानुकूलाद्विष्ठातीन्द्रियत्रसरेणुरूपधर्म्मसमवायसम्बन्धित्वरूपस्य साध्यस्यास्ति सत्वन्तत्रेति भावः। वस्तुतस्तु तत्समवायित्वं तन्निरूपितसमवायनिरूपकत्वमेव तथा च त्रसरेणुपरिमाणस्प-

प्रकाशः ।

तो वा वह्निर्दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्मशून्यो, दाहाजनकत्वात् , दाह्यासंयुक्ताग्निवत् । अत्रानुकूलत्वं न स्थितिस्थापकेनार्थान्तरवारणाय, तत्र तदभावात् , क्रियाया वेगेनादृष्टवदात्मसंयोगेन वोत्पत्तेः, किन्तु तथाभूतो धर्मः सिद्ध्यत्वित्येतदर्थम् , तच्च कारणतदवच्छेदकसाधारणं निरुक्तम् । अदृष्टवदात्मसंयोगवारणार्थमद्विष्ठेति । न च तज्जनकत्वे मानाभावः, कार्यस्यादृष्टजन्यतया व्यधिकरणगुणजन्यत्वात् । तस्य च तत्समानाधिकरणगुणजन्यत्वव्याप्तत्वात् , स्पर्शवद्वेगवद्द्रव्या-

प्रकाशिका ।

च्छेदकीभूतदाहानुकूलधर्मशून्यतामादाय सिद्धसाधनमिति । **दाहजनकदशावृत्तीति** । दाहजनकतादशायां वह्निवृत्तीत्यर्थः । तेन शून्यपदात् ध्वंसप्रागभावान्यतरलाभ इति नोक्तदोषः । हेतौ च वह्नित्वं विशेषणमतो नाकाशादौ दाहाजनके व्यभिचारः । न च तथापि दाहानुपहितवह्नौ व्यभिचारः, तत्राप्युष्णस्पर्शप्रागभावसत्त्वात् । न चैवमपि भाविसंयोगान्तरप्रागभावमादाय सिद्धसाधनमिति वाच्यम् । दाहानुकूलैकैकदाह्यसंयोगाद्याश्रयवन्हेरेव पक्षत्वात् । न च वह्निकर्मणः संयोगद्वारा दाहानुकूलत्वमिति तद्ध्वंसमादाय सिद्धसाधनमिति वाच्यम् । दाह्यकर्मजसंयोगाश्रयवन्हेरेव पक्षत्वात् । केचित्तु शून्यपदं कादाचित्काभावपरं उक्तकर्माभावमादायोक्तदोष इति वृत्तीत्यन्तं विशेषणम् । कर्म च दाहोपधानकाले नास्तीति नोक्तदोष इत्याहुः । प्रतिबन्धकाभावेनार्थान्तरमिति । **भावभूतेति** । **दाहाजनकत्वादिति** । तदनुपहितत्वादित्यर्थः । तेन नासिद्धिः । **अत्रेति** । कार्यानुकूलेत्याद्यनुमान इत्यर्थः । **तत्रेति** । पृथिव्यामेव तदुपगमादिति भावः । न च स्थितिस्थापकस्य द्रव्यचतुष्टयवृत्तित्वप्रतिपादकगुणभाष्यविरोधः, तस्य वैशेषिकमतानुसारित्वात् , न्यायमते तद्विरोधस्याकिञ्चित्करत्वात् । **तस्य चेति** । अत्र यत् कार्यस्य व्यधिकरणयद्गुणजन्यं तत्कार्यस्य तद्गुणस्य च समानाधिकरणो यो गुणः तज्जन्यमिति व्याप्तिः, तज्जन्यत्वं च तन्निमित्तकारणकत्वमतो न कपालरूपजन्यघटरूपे व्यभिचारः । तस्य तत्रासमवायिकारणत्वात् । कार्ये च मूर्त्तवृत्तित्वं विशेषणमतो नेश्वरज्ञानजन्यास्मदादिज्ञाने व्यभिचार इति कश्चित् । तन्न । तथापि घटादिरूपे व्यभिचारात् , ईश्वरज्ञानजन्यस्य तस्येश्वरघटसंयोगजन्यत्वात् तथासति क्षणद्वयं घटस्य नीरूपत्वापत्तावपसिद्धान्तात् । तस्मात् कारणत्वं तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं विवक्षितमतो नेश्वरज्ञानमादाय व्यभिचार इति तत्त्वम् । अत्र चोभयसमानाधिकरणसंयोगजत्वं व्यापकमतो न द्वित्वमादायार्थान्तरम् । अत एव च गुरुत्वजन्यपतनक्रियायां व्यभिचारवारणाय व्यधिकरणपदम् । न च निमित्तकारणत्वविवक्षयैव तन्निरासः, असमवायिकारणभिन्नत्वं हि प्रकृते निमित्तकारणत्वं तत्र चासमवायिकारणपदेन कारणैकार्थप्रत्यासन्नकारणमात्राभिधानं तावतैव कपालरूपजन्यघटरूपे व्यभिचारावारणादिति । निमित्तकारणपदेन गुरुत्वजन्यपतने व्यभिचारवारणात् । न चात्र व्याप्तावप्रयोजकत्वम् अप्रत्यासन्नस्याजनकत्वादिति दिक् ।

मकरन्दः ।

णार्थान्तरम् । हेत्वसिद्धिबाधयोर्वारणाय । **मणीति** । वह्नौ तादृशात्यन्ताभावेनार्थान्तरप्रसक्तौ नेष्टसिद्धिस्तत्रेत्यत आह । **वृत्त्यन्तमित्येके** । तच्चिन्त्यम् । भावभूतपदेनैव तन्निरासात् । केचित्तु संयोगद्वारा वह्निकर्मणोऽपि दाहानुकूलतया तस्य च पिण्डीभूतवह्न्यावभावादर्थान्तरवारणाय तदिति । तस्य च संयोगनाश्यत्वेन तदानीमभावादित्याहुः । **हेतुः** फलोपधानाभाव इति नासिद्धिः । दृष्टान्ते दाह्यसंयोगाभाव उभयसिद्धः । **तत्रेति** । पृथिव्यामेव तदुपगमादिति भावः । न च 'स्थितिस्थापकस्तु चतुर्षु वर्त्तमान'' इति गुणभाष्यविरोध इति वाच्यम् । वैशेषिकमते तथात्वादिति भावः ।

**कार्य्यस्येति** । ननु कार्यपदं यदि स्पन्दपरं तदा प्रकृतासङ्गतिः । स्पन्दस्यातथात्वात् । यदि च जन्यमात्रपरं तदा कपालरूपजन्ये घटरूपे व्यभिचार इति चेन्न । यत् कार्यं यदीयगुण-

प्रकाशः ।

भिघातजन्यक्रियायां तथा दर्शनात् । उष्णस्पर्शव्यावर्तनायातीन्द्रियेति । तत्त्वं च साक्षात्कारनियामकप्रत्यासत्त्यनाश्रयत्वम् । प्रतिबन्धकाभावनिवारणाय **भावभूतेति** ।

उच्यते । अनुमानानां विपक्षबाधकाभावेनाप्रयोजकत्वम् । उभयसिद्धप्रतिबन्धकाभावेनैवोपपत्तेः । न च सहचारदर्शनव्यभिचारादर्शनाभ्यामेव व्याप्तिग्रहः । साध्ये शक्त्यतिरिक्तेति विशेषणात्तेनैव हेतुना तत्सिद्धावेवं तत्तदतिरिक्तेति विशेषणपरम्परातस्तादृशानन्तधर्मसिद्ध्यापत्तेः । न च घटवत् क्षितिः क्षितिवद्घट इतीश्वरानन्त्यवच्छक्त्यानन्त्यम् कार्यमात्रे नेश्वरत्वेन द्विकर्तृकत्वेन वा कारणता, गौरवात्, किन्तु कर्तृत्वेनेति तदपादकाभावः । प्रतिकूलतर्कप्रतिघातश्च । शक्तेर्भावहेतुत्वे शक्त्यनुकूलाप्यन्या शक्तिरेवं तत्तदनुकूलाऽप्यन्याऽन्येत्यनवस्थापातात् । भावभूतेति च व्यर्थम् । न च व्यापके न व्यर्थविशेषणता व्याप्यताग्राहक इव व्यापकताग्राहकेऽपि लाघवस्य सहकारित्वात् । द्वितीयाद्यनुमानेषु बहिरिन्द्रियाप्रत्यक्षत्वमुपाधिः । तुल्ययोगक्षेमत्वेऽपि सन्दिग्धोपाधित्वात् ।

प्रकाशिका ।

नन्वतीन्द्रियत्वं साक्षात्काराविषयत्वं लौकिकसाक्षात्काराविषयत्वं वा, आद्ये न्यायमतेऽप्रसिद्धिः अन्त्ये परमते व्यावर्त्याप्रसिद्धिरत आह । **तत्त्वञ्चेति** । संयोगादिषड्न्यतमप्रत्यासत्त्यनाश्रयत्वमित्यर्थः । यद्वा साक्षात्कारपदं विषयजन्यज्ञानपरम्, विशिष्टाभावतया च न व्यर्थविशेषणता, **उभयेति** । भट्टमतेऽभावस्यातीन्द्रियत्वाभिप्रायेणातीन्द्रियप्रतिबन्धकप्रतियोगिकाभावाभिप्रायेण वा इदमुक्तम् । वस्तुतो भावभूतपदवदतीन्द्रियपदमपि व्यापके गौरवेण त्याज्यमेवेत्यभिप्रायेणैवेदम् । कारणमात्रपक्षकानुमान उपाधिव्यतिरेकस्य न सत्प्रतिपक्षोत्थापकत्वं भागासिद्धत्वादित्याशयेनाह । **द्वितीयादीति** । वह्निपक्षकानुमानद्वयसंयोगपक्षकानुमानेष्वित्यर्थः । न च पिण्डीभूत इत्यनुमाने संयोगपक्षकानुमाने च साध्याव्यापकत्वमुपाधेर्गुरुत्वस्थितिस्थापकवति वृक्षादाविति वाच्यम् । उभयत्र कार्यानुकूलपदस्य दाहानुकूलार्थकत्वात् । न च तत्र तथा विवक्षायामात्मत्वोपाधेर्द्व्यणुके द्रव्यत्वोपाधेरेकत्वादौ साध्याव्यापकत्वाभिधानं ग्रन्थकृतो विरुध्येतेति वाच्यम् । द्व्यणुकपदेनोभयत्र वह्निद्व्यणुकस्योक्तत्वात् । तदीयस्पर्शैकत्वयोश्चावयविमहत्त्वे

मकरन्दः ।

निमित्तकारणकं तत् तदुभयसमानाधिकरणगुणजन्यमित्यत्र तात्पर्यात् । कपालरूपन्तु तत्रासमवायिकारणमिति नोक्तदोषः । नचाजसंयोगाभावेनेश्वरज्ञानादिजन्यसुखादिषु व्यभिचार इति वाच्यम् । मूर्तवृत्तित्वस्य कार्यविशेषणत्वाद् घटादावीश्वरसंयोगहेतुत्वस्येष्टत्वात् । अत एव लीलावतीप्रकाशे कण्ठरवेणैव तथोक्तम् अत एव मन्त्रपाठजन्यविषचलनेऽपि व्यभिचारो निरस्तः । अदृष्टाद्वारकत्वेन विशेषणाद्वा, मन्त्रस्याऽऽशुविनाशित्वेनादृष्टद्वारकत्वात् । नचात्र विपक्षबाधकाभावः । अप्रत्यासन्नस्य जनकत्वेऽतिप्रसङ्गादिति दिक् ।

नन्वतीन्द्रियत्वं यदि साक्षात्काराविषयत्वं तदा अस्मन्मते अप्रसिद्धिः । लौकिकत्वविशेषणे परस्य व्यावर्त्याप्रसिद्धिरित्यत आह **तत्त्वञ्चेति** । संयोगाद्यन्यतमप्रत्यासत्त्यनाश्रयत्वमित्यर्थः । साक्षात्कारपदं विषयजन्यज्ञानपरम् । साक्षात्कारश्च सन्निकर्षविशेषणमिति न व्यर्थविशेषणतेत्यन्ये । अतीन्द्रियप्रतियोगिकाभावाभिप्रायेणाह । **प्रतिबन्धकेति** । भट्टमतेन वा ।

प्रथमानुमाने अतीन्द्रियस्यापि पक्षत्वादुपाधिः पक्षाव्यापकविपर्यय इत्यत आह । **द्वितीया-**

टिप्पणी ।

र्थ्यनुकूलातीन्द्रियाद्विष्टद्व्यणुकैकत्वतत्स्पर्शनिरूपितो यः समवायस्तन्निरूपकत्वस्य स्वस्मिन्नपि सत्त्वात् साध्याव्यापकत्वं बोध्यम् । तेन द्व्यणुकस्याद्विष्टत्वेऽपि न क्षतिः । **तुल्ययोगक्षेमत्वेऽपी इति** । एकसाधकसाध्यत्वेऽपि यथा कारणानि तादृशधर्म्मवन्ति कार्य्यत्वात् आत्मवदि-

**प्रसङ्गात्। कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वमिति ॥ १० ॥**

**स्यादेतत्। मा भूत् सहजशक्तिः, आधेयशक्तिस्तु स्यात्**

बोधिनी।

सङ्ग इति भावः। उत्तम्भकेनानुत्पादेऽपि नानुत्पादप्रसङ्ग इत्याशङ्क्याह-**कालविशेषात्**-इति। यदुत्तम्भकेन तदुत्पादे वर्णितं **तदेवेति** ॥ १० ॥

अपूर्वस्य भूतधर्मत्वे सहजा शक्तिर्मा भूद् दृष्टान्त आधेयशक्तिस्तु दृष्टान्तः स्यात् दुरपह्नवत्वात् तस्या इति पूर्वपक्षयति—**स्यादेतत्**-इति। अत्र च भूतानामेव स्वहेतुवशेनातीन्द्रियातिप्रकाशः।

**अस्मत्पितृचरणास्तु**, जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्ध्या नान्वयव्यतिरेकित्वम्। न च शक्तावेव तत्प्रसिद्धिरन्योन्याश्रयात्। नापि पण्डापूर्वपरार्द्धसङ्ख्योस्तत्प्रसिद्धिः। अप्रत्यक्षयोः शब्दैकवेद्ययोस्तयोर्व्याप्तिग्राहकेण प्रत्यक्षेण साध्यहेतुव्यतिरेकस्य ग्रहीतुमशक्यत्वादित्याहुः १०।

प्रोक्षणजन्यः कालान्तरकार्यानुकूलोऽतीन्द्रियो धर्मोऽस्तीत्युभयसिद्धम्, स व्रीहिसमवेतो न वेति नाधेयशक्तौ संशयः, ग्रन्थे प्रथमं संस्कारसाधनस्यार्थान्तरतापत्तेः, किन्तु प्रोक्षणं व्रीहिनिष्ठा-

प्रकाशिका।

प्रयोजकतया दाहानुकूलत्वात्। **अप्रत्यक्षयोरिति**। न च मानान्तरात्तदुपस्थितौ मनसा जनकत्वाभावग्रहः। शब्दस्य सिद्धार्थकस्याप्रमाणत्वात्, तन्मतेऽनुमानस्य च व्याप्तिग्रहाधीनतया तत्साधकानुमानान्तरापेक्षायामनवस्थानात्। उपमानस्य च नियतविषयत्वात्। यत्तु पण्डापूर्वपरार्द्धसंख्ययोरपि स्वध्वंसजनकतया तत्र व्यतिरेकप्रसिद्धिशङ्केति। तन्न। अभावस्य गुरुमतेऽधिकरणात्मकत्वात्। एतेन स्वनिष्ठस्य महत्त्वसमानाधिकरणोद्भूतरूपत्वाभावस्य ग्रहे प्रत्यासत्तिघटकतया तयोः कारणत्वान्न तत्र व्यतिरेकप्रसिद्धिशङ्केत्यपास्तम् ॥ १० ॥

**किन्तु प्रोक्षणमिति**। जलसंयोगवारणायातीन्द्रियेति। व्रीहिनिष्ठत्वं च समवायेन विव-

मकरन्दः।

**क्षितेति**। न चात्रापि गुरुत्वस्थितिस्थापकादिकमादाय वृक्षादौ साध्याव्याप्तिः। कार्यानुकूलत्वेन दाहानुकूलत्वाभिधानात्। अगुरुत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादित्याहुः। **नान्वयेति**। तन्मते केवलान्वयिनो हेत्वाभासत्वादिति भावः। **अप्रत्यक्षयोरिति**। न च मानान्तरात्तद्ग्रहः। तद्धि न शब्दः। तस्य सिद्धार्थत्वात्। नाप्यनुमानम्, जनकत्वसत्त्वे तादृशधर्मवत्त्वस्याऽऽवश्यकतया जनकत्वाभावेन साध्याभावोऽनुमेयः। जनकत्वाभावानुमानञ्च तादृशधर्माभावेन तादृशधर्मस्य जनकतावच्छेदकस्य सत्त्वे जनकत्वस्यावश्यकत्वादित्यन्योन्याश्रयात्। अनवस्थानादित्यन्ये। उपमानस्य नियतविषयत्वादनभ्युपगमाच्चेति भावः। न च पण्डाऽपूर्वादौ स्वध्वंससाक्षात्कारजनकतया जनकत्वाभाव एव नेति वाच्यम्। अतीन्द्रियत्वेन योगिज्ञानस्य विषयाजन्यतया च साक्षात्काराजनकत्वात्। तन्मते ध्वंसस्याधिकरणादिरूपतया तदसाध्यत्वाच्चेति भावः ॥ १० ॥

**किन्त्विति**। जलसंयोगेनार्थान्तरवारणायातीन्द्रियेति। न चादृष्टस्यापि स्वरूपसम्बन्धेन

टिप्पणी।

त्यनुमानं क्रियते तथा कारणानि वहिरिन्द्रियाप्रत्यक्षाणि कारणत्वादात्मवदित्यपि कर्त्तुं शक्यते पक्षे च व्यभिचारो न यथापूर्वानुमाने दोषस्तथोत्तरत्रापि स्यात्। पूर्वसाधनस्य साधनाव्यापकत्वविरहे उत्तरस्यापि तत्त्वं स्यादिति तुल्ययोगक्षेमत्वेनोपाधित्वसम्भवो यद्यपि तथापि पक्ष एव साधनाव्यापकत्वसन्देहेनोभयोः सोपाधित्वात् अनुकूलतर्कविरहे सन्दिग्धोपाधेरपि दूषकत्वादिति भावः॥१०॥

**प्रोक्षणजन्यः कालान्तरकार्यानुकूलोऽतीन्द्रिय इति**। अतीन्द्रियधर्म्मे गुरुत्वादौ व्रीहिसमवेतत्वस्योभयसिद्धत्वेन विप्रतिपन्नत्वासम्भवात् **प्रोक्षणजन्य इति**। प्रोक्षणजन्यस्यातथाभूतस्य व्रीहिसमवेतत्वसिद्धावपि न प्रकृतसिद्धिः स्यादतः **कालान्तरेत्यादि**। **प्रथमं सं-**

**स्यादेतत्**। एतत् मा भूदित्यादि वक्ष्यमाणम्।

**दृश्यते हि प्रोक्षणादिना व्रीह्यादेरभिसंस्कारः। कथमन्यथा कालान्तरे तादृशाना-**

बोधनी।

शयशालित्वेनोत्पन्नानां भोगनियामकानुपपत्तावपि यागादिजन्यातिशयभाजां शरीरादिभूतानां त-दुपपत्तेस्तेष्वेवाधीयतामपूर्वप्रोक्षणादिवन्न त्वात्मनीति भावः। आधेयशक्तिसद्भावे प्रमाणमाह। **दृश्यते हि**–इति। व्रीहीन् प्रोक्षतीति द्वितीयाश्रुत्या प्रोक्षणस्य व्रीहयः कर्मत्वेनावगम्यन्ते। क्रियाजन्यफलभागित्वं च कर्मत्वम्। अतः प्रोक्षणादिना व्रीह्यादिषु संस्कारापरनामा शक्तिराधीयत इत्यत्र श्रुतिरेव प्रमाणमिति। तदनुग्राहकं तर्कमाह—**कथम्**–इति। यदि तद्गतः कश्चिदतिशयो

प्रकाशः।

तीन्द्रियधर्मजनकं, न वा ?। व्रीहिगुरुत्वजनके तज्जनकत्वं प्रसिद्धम्। तत्राधायकं शक्तावाह। **दृश्यते हीति**। ननु व्रीहीन् प्रोक्षतीत्येतावन्मात्रं श्रूयते, न तु प्रोक्षणस्य संस्काराधायकत्वमपीत्यत आह। **कथमिति**। कालान्तरेऽवघातादौ प्रोक्षितस्यैव व्रीहेर्विनियोगो न स्यादित्यवश्यं प्रोक्षणजन्यः संस्कारो व्रीहिनिष्ठः स्थिरोऽभ्युपगन्तव्य इत्यर्थः। नन्ववघातादौ कथं प्रोक्षितस्यैव व्रीहेरन्वयः, व्रीहीनवहन्तीत्यस्य व्रीहिमात्रान्वयेऽप्युपपत्तेः। अथावघाते व्रीहिविशेषाकाङ्क्षायां प्रोक्षितानामेवान्वयो व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति न्यायात्। अन्यथा प्रकरणोपस्थितहाने तदन्योपस्थितिकल्पने च गौरवमिति चेत्। तर्ह्येकस्य द्वयं यत्र प्रोक्षणं तत्रावघातो, न तु

प्रकाशिका।

क्षितम्। अन्यथाऽदृष्टस्यापि स्वरूपसम्बन्धेन व्रीहिनिष्ठतया सिद्धसाधनापत्तेः। तटस्थः शङ्कते।

मकरन्दः।

व्रीहिनिष्ठत्वाभ्युपगमात् सिद्धसाधनम्। व्रीहिसमवेतेत्यर्थात्।

तटस्थः शङ्कते॥ **नन्विति**॥ प्रोक्षणस्य कालान्तरभाविफलजनकत्वे मानाभावाच्च व्यापार-

टिप्पणी।

**स्कारसाधनस्यार्थान्तरतापत्तेरिति**। पश्चाद्विप्रतिपाद्य संस्कारसाधनस्यार्थान्तरत्वं न स्यात् प्रथममिति। प्रोक्षणजन्यत्वेन संस्कारसाधनस्येत्यर्थः। तथा हि सिद्धस्यैव पक्षत्वेन सिद्धे-प्रोक्षणाजन्यातीन्द्रियधर्मे व्रीहिसमवेतत्वं विप्रतिपन्नं सत् साधनीयं तत्र प्रोक्षणजन्यत्वेन संस्कार-साधनस्यार्थान्तरत्वं तस्य प्रकृताननुगुणत्वात्, तादृशसंस्कारस्य सिद्धत्वाच्च, "दृश्यते ही"त्यादि-ग्रन्थस्येदानीं व्रीहिनिष्ठत्वसाधकत्वे "न चे"त्यादिना ग्रन्थेन संस्कारेऽन्यथासिद्धिशङ्कायामप्रयोजकत्वं स्यात्, द्वितीये तु प्रोक्षणेऽतीन्द्रियधर्मजनकत्वं विप्रतिपन्नं तत्साधनं न प्रोक्षणजन्यत्वेन संस्कारसाधनं विना, तादृशधर्मस्यैवासिद्धत्वे व्रीहिनिष्ठातीन्द्रियधर्मजनकत्वस्य बाधितत्वादित्यालोचनीयम्। **प्रोक्षितस्यैव व्रीहेर्विनियोग इति**। प्रोक्षणस्य तदानीमविद्यमानत्वात् तेनातिशयाजननाच्च प्रोक्षिताप्रोक्षितयोरविशेषादिति भावः। **नन्ववघातादौ कथं प्रोक्षितस्यैवेति**। वादिनापि प्रोक्षितस्यैवावघातस्वीकारात् तटस्थस्येयं शङ्का। **व्रीहिमात्रान्वयेऽप्युपपत्तेरिति**। तथा च प्रोक्षणस्यैवाकारणत्वे कुतस्तन्निर्वाहायातिशयकल्पनमिति भावः। **व्यक्तिवचनानां सन्निहितेति**। ननु बहुव्रीहीनवहन्तीत्यत्र व्रीहिपदस्य व्यक्तिवचनत्वमेवेति कुतोऽवधार्य्यत इति चेद्, जातिपरत्वे बहुवचनवैयर्थ्यादिति। **तदन्योपस्थितिकल्पने गौरवमितीति**। तथा च प्रोक्षणविशिष्टेऽवघातान्वयेऽसति बाधके उद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावनियमाद् प्रोक्षणेऽवघातजनकत्वप्रतीतिसम्भवादिति भावः। **तर्ह्येकस्य द्वयं यत्र प्रोक्षणमिति**। **तर्हि-**

**दृश्यते**=अनुमीयते। **अन्यथा**=संस्कारं विना। **तादृशानामेव**प्रोक्षितानामेव।

मेव कार्यविशेषोपयोगः । न च मन्त्रादीनेव सहकारिणः प्राप्य ते कार्यकारिण इति

बोधनी ।

नाधीयेत प्रोक्षितानामेव पुरोडाशादिकार्योपयोगो नान्येषामिति न स्यादप्रोक्षितेभ्यः तेषामविशेषादिति । प्रोक्षणादिस्वरूपसहकृतानामेव कार्योपयोगोऽस्तु, अन्यथाऽदृष्टकल्पनानुपपत्तेरित्याशङ्क्याह– न च–इति । सन्तु तर्हि प्रोक्षणादिप्रध्वंसादयः कालान्तरेऽप्यनुवर्त्तमानाः सहकारिण इत्याशङ्क्याह–

प्रकाशः ।

प्रोक्षणविशिष्ट इति तस्य कारणत्वाज्ञानान्न तज्जन्यातिशयकल्पनम् । प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते इति वाक्यशेषादिति चेत् । न । तेनाप्यतीतप्रोक्षणे व्रीहावघातान्वयो बोध्यत इति प्रोक्षणध्वंसस्य हेतुतापत्तेः । मैवम् । प्रोक्षणमवघातजनकं प्रमाणतस्तदर्थमुपादीयमानत्वाद् व्रीहिवत् । न च हेत्वसिद्धिः । अप्रोक्षितेऽवघातासम्भवादिति भावः ।

एतावता तज्जन्यव्यापारमात्रसिद्धावपि न संस्कारः सिद्ध्यति, ध्वंसेनैवोपपत्तेरित्याशङ्क्य

प्रकाशिका ।

**नन्विति ।** तथा च न प्रोक्षणस्यावघातजनकत्वमिति न व्यापारकल्पनेति भावः । **प्रमाणत इति ।** अवघातोद्देश्यकप्रमाणमूलकोपादानविषयत्वादित्यर्थः । ननु प्रमाणमिदमेवान्यद्वा नाद्यः, अन्योन्याश्रयात् । नान्त्यः, तदभावात् , भावे वा तेनैव सिद्धसाधनादिति चेत् । न । "दर्शपौर्णमासाभ्यां यजेत् स्वर्गकाम" इत्यधिकारविधिना निरपेक्षेण तयोः कर्त्तव्यतायां बोधितायामिति-कर्त्तव्यताकाङ्क्षायां व्रीहीनित्यादिविधिप्रवृत्तिः, तेन चोपस्थितस्यावघातद्वारा प्रोक्षणस्य परमापूर्वजनकत्वबोधनात् संसर्गविधया च जनकत्वमवघातं प्रति प्रोक्षणस्य शब्देन बोधितमिति न तत्प्रकारकानुमाने सिद्धसाधनमित्याशयात् । वस्तुतो व्यक्तिवचनन्यायेन व्रीहेरवघातकारणत्वे बोध्यमानउत्सर्गसहकारेण प्रोक्षणस्य विशेषणत्वं बोध्यत इति प्रोक्षणस्यावघातकारणत्वे प्रमाणं तदुक्तं अप्रो-

मकरन्दः ।

त्वेनातिशयकल्पनमिति भावः ॥ **प्रमाणत इति** ॥ प्रमाणमूलकावघातोद्देश्यकोपादानविषयत्वादित्यर्थः । ननु प्रमाणमिदमेव तदुपादानहेतुरन्यद्वा ? । नाद्यः । हेतुज्ञाने सत्येतत्प्रमाणप्रवृत्तिरेतत्प्रमाणप्रवृत्तौ च तद्घटितहेतुज्ञानमित्यन्योन्याश्रयात् । नापरः । तदसत्त्वात् । सत्त्वे वा तन्न साक्षादुपादानहेतुः । प्रवृत्तेर्ज्ञानजन्यत्वात् । किन्तु प्रोक्षणमवघातजनकमिति ज्ञानद्वारा । तथा च सिद्धसाधनमिति । अत्र वदन्ति । प्रकरणादिसहकृतवेदस्यैवावघातजनकत्वबोधकत्वमिति । सिद्धान्तानुसारादेतदुक्तम् । संसर्गविधया च ततस्तद्धेतुत्वावगम इति तत्प्रकारकबुद्ध्यभावान्न सिद्धसाधनावकाशः । शब्दादेरपि परं प्रति लिङ्गविधया प्रयोगाच्चेति । वस्तुतो व्यक्तिवचनन्यायेनावघाते प्रोक्षितव्रीहेरन्वये प्रोक्षणस्य बाधकं विना विशेषणत्वं, नोपलक्षणत्वमिति । एतदभिप्रायेणाह । **अप्रोक्षित इति ।**

टिप्पणी ।

तथापीत्यर्थः । **एकस्य** एकस्यैवेत्यर्थः । **द्वयं** प्रोक्षणावघातौ । सम्पन्नमिति शेषः । तदेव विवृणोति । **यत्रेति । न तु प्रोक्षणविशिष्टेति ।** अवघात इति शेषः । तस्य कारणत्वाज्ञानान्न तज्जन्यातिशयकल्पनमिति । तस्य प्रोक्षणस्येत्यर्थः । प्रोक्षणविशिष्टेऽवघातबोधेऽप्रोक्षितानवघातप्रोक्षितावघाताभ्यामन्वयव्यतिरेकाभ्यां प्रोक्षणावघातजनकताज्ञानं स्यात्तदेव नेति भावः । कारणत्वानुपपत्त्यैव तत्कल्पनादिति भावः । **वाक्यशेषादिति चेन्नेति ।** शङ्कानिवर्त्तकं वाक्यं वाक्यशेषः । शङ्का ह्यत्र व्रीहिन् प्रोक्षति व्रीहिनवहन्यादित्यत्र-किं व्रीहिः प्रोक्षितव्यः अवघातोऽपि कर्तव्यः । किंप्रोक्षितव्रीहिरवहन्तव्य इति । **अतीतप्रोक्षण इति ।** प्रोक्षणध्वंसविशिष्ट इत्यर्थः ।

---

ते=व्रीहयः ।

साम्प्रतम्। तेषु चिरध्वस्तेष्वपि कार्योत्पादात्। नापि प्रध्वंससहायास्ते तथा। एवं हि यागादिप्रध्वंसा एव स्वर्गादीनुत्पादयन्तु, कृतमपूर्वकल्पनया। तेषामनन्तत्वादनन्तफलप्रवाहः प्रसज्ज्येत इति चेत्, अपूर्वेऽपि कल्पिते तावानेव फलप्रवाह

बोधनी।

नापि–इति। तथाकालान्तरकार्यकारिण इत्यर्थः। अतिप्रसङ्गपरिहारमाशङ्कते—तेषाम्–इति। यागादिप्रध्वंसानामेव फलसाधनत्वे तेषामनन्तत्वेन फलविनाश्यत्वाभावादुत्पन्नेऽपि पुनरपि तत एव फलोत्पादप्रसङ्गेन फलप्रवाहोऽनन्तः स्यात्, तत्र च कर्मान्तरफलोपभोगोऽपवर्गश्च न स्याताम्; अतो यागादिजन्यमपूर्वमवश्यमभ्युपगन्तव्यमिति। तर्हि कल्पितमप्यपूर्वं किञ्चित् स्वर्गादिसुखमुत्पाद्य नानन्तरमेव नश्यति सहस्रसंवत्सरादिभोगश्रुतेः, तेन परिमितफलप्रवाहस्तदापि न स्यादित्याह–अपूर्वे–इति। यदि तु परिमितफलप्रवाहजनकत्वमपूर्वस्य स्वभावः स तर्हि प्रध्वंस-

प्रकाशः।

निराकरोति। नापीति। तेषामिति। ननु ध्वंसव्यापारत्ववादिनां व्यापारस्य यावत्सत्त्वं फलोत्पादकत्वाप्रसिद्धिः। न च व्यापारकालस्य फलपूर्वत्वनियमेन फलानन्त्यापत्तिः। उत्तरकालीनकीर्त्तनादिनाश्यापूर्वे व्यभिचारात्। मैवम्। विवादाध्यासितः कालो यदि चैत्रस्वर्गोत्तरत्वे सति

प्रकाशिका।

क्षितेऽवघातासंभवादिति। सिद्धसाधननिरासस्तु पूर्ववदेवेति। ध्वंसव्यापारवादिनामिति। प्रकृतमपेक्ष्य वस्तुतः सर्वेषामेवेदमप्रसिद्धमन्ततो व्यापारोत्पत्तिकाल एव व्यभिचारात्। उत्तरकालीनकीर्त्तनेति। जनितफलव्यापारकालगर्भाव्याप्तिराशङ्कितुरभिमतेत्यजनितफलकीर्त्तननाश्यापूर्वस्थले न व्यभिचार इत्युत्तरकालीनत्वं कीर्त्तनविशेषणम् नाश्यापूर्वस्य किञ्चित्फलजननोत्तरकालीनत्वं च तदर्थः। न च व्यापारे भोगेतरनाशकालानाश्यत्वमपि विशेषणं किञ्चित्फलजननोत्तरं प्रतिकृत्यापूर्वप्रतिरुद्धकृत्यापूर्वे व्यभिचारात्। न च तत्रापूर्वस्य प्रथमस्य नाश एवेति वाच्यम्। तथा सति प्रतिकृत्यापूर्वेण फलजननापत्तेः। न च सुन्दोपसुन्दन्याय इति वाच्यम्। मानाभावात्। आपाततः सन्देहेऽप्यनैकान्तिकसन्देहाच्च विवादाध्यासित इति। कालमात्रपक्षत्वे चैत्रस्वर्गपूर्वकाल आपादकासिद्धेश्चैत्रस्वर्गाधिकरणकाले च इष्टापत्तिरिति तद्वारणाय प्रथमविशेषणम् तदर्थश्च तद्व्यापारजन्यचैत्रस्वर्गोत्तरं यथाभूतस्वर्गानधिकरणम्। अजनितस्वर्गव्यापारकाले व्यभिचार इति सत्यन्तम्, किञ्चित्स्वर्गोत्तरत्वं तत्रापीति सत्यन्ते चैत्रपदं तद्व्यापारजन्यस्वर्गोत्तरत्वे

मकरन्दः।

कीर्त्तनादीति। न च शब्दबोधितनाशकानाश्यत्वं विशेषणम्। प्रतिकृत्यापूर्वप्रतिरुद्धे कृत्यापूर्वे व्यभिचारात्। न च तत्र प्रतिरोधो नाशो वेति कथं निर्णय इति वाच्यम्। तथापि सन्दिग्धानैकान्तादिति भावः। विवादाध्यासित इति। उभयसिद्धचैत्रस्वर्गाधारकालोत्तरकाल इत्यर्थः। तेन कालमात्रपक्षत्वे स्वर्गकालभाग इष्टापत्तिः। तत्पूर्वकाले सत्यन्तापादकासिद्धिरिति दूषणमलग्नकं बोध्यम्। स्वर्गपूर्वकाले व्यभिचारादाह सत्यन्तम्। किञ्चित्स्वर्गोत्तरत्वं तत्रापीत्यत उक्तं, चैत्रेति। तद्व्यापारजन्यस्वर्गोत्तरत्वे सतीत्यर्थः। स्वर्गान्तरजनकव्यापारान्तरवति स्वर्ग-

तेषु=मन्त्रादिषु। तथा=कार्यविशेषोपयोगिनः। ननु प्रोक्षणादीनां परमापूर्वं प्रत्येव हेतुतया तस्य ध्वंसव्यापारकत्वेऽपि परमापूर्वहेतुयागादिक्रियायाः कालान्तरेऽसत्त्वात् फलानन्त्यापत्त्यसम्भवात् तत्र तदेवास्तु यागस्य ध्वंसव्यापारकत्वे व्यापारमात्रोच्छेद्यस्वर्गादिफलस्यानन्त्यापत्तिः स्यादिति न तत्र तद्वक्तुमुचितमिति क्व प्रतिबन्द्यवकाश इति मीमांसकं प्रत्याशङ्कते। तेषामिति।

अनन्तेति। न अन्तो ध्वंसो यस्य सोऽनन्तः ध्वंसाप्रतियोगीति यावत्। प्रवाहेऽनन्तत्वञ्च प्रागभावव्याप्यध्वंसप्रतियोगित्वम्।

इति कुतः । अपूर्वस्वाभाव्यादिति चेत्तुल्यमिदमिहापि । तावतापि तत्प्रध्वंसो न विनश्यतीति विशेषः ।

बोधनी ।

स्यापि भविष्यतीति शङ्कोत्तराभ्यामाह—अपूर्व—इति । तावता—इति । परिमितफलोत्पादकत्वाभ्युपगमे नामान्तरेणापूर्वमेवाङ्गीकृतं स्यादित्याशङ्क्य फलविनाश्यत्वाविनाश्यत्वाभ्यां विशेषोऽस्तीत्याह—तावता—इति ॥

प्रकाशः ।

तत्स्वर्गजनकयागव्यापारवान् स्यात्, तत्स्वर्गाधारः स्यादित्यापादनार्थत्वात् । अपूर्वेति । प्रतिनियतकालावच्छिन्नस्वर्गजनकस्वभावत्वादित्यर्थः । तुल्यमिति । तर्हि तद्ध्वंसस्यापि स एव

प्रकाशिका ।

सतीति च सत्यन्तार्थः । अन्यथैकस्मिन्नपूर्वे जनितफले चैत्रस्य नष्टे सति चैत्रस्यैव स्वर्गजनकेऽपूर्वान्तरेऽजनिफले तिष्ठति व्यभिचारापत्तेः । अजनितफलेऽपूर्वे नष्टे सति व्यभिचार इत्युत्तरदलम् । स्वर्गान्तरजनकव्यापारान्तरवति स्वर्गपूर्वकाले व्यभिचार इति तदिति । सुखप्राप्त्यनन्तरं मे राज्यं भूयादिति कामनाकृतप्रयागस्नानजन्यापूर्वेण सुखजनने कृते व्यभिचार इति यागेति ।

मकरन्दः ।

पूर्वकाले व्यभिचारादाह । तदिति । तथा च फलोपहितयागव्यापारस्य यावत् सत्त्वं फलोपपादकत्वमिति नियमेन फलानन्त्यापत्तिरिति तात्पर्यम् । अन्यस्वर्गाधारत्वेनेष्टापत्तिवारणायापाद्ये तदिति । तद्व्यापारजन्यस्वर्गाधारः स्यादित्यर्थः । आद्यस्वर्गोत्तरतत्स्वर्गाधारकालो दृष्टान्तः ।

टिप्पणी ।

क्त्वाप्रत्ययस्य भूतार्थकत्वात् प्रोक्षणध्वंसस्य हेतुतापत्तेरिति । प्रोक्षणध्वंसविशिष्टेऽवघातान्वये तेन सहान्वयव्यतिरेकाभ्यां ध्वंसस्यैव कारणत्वप्रतीतेः । प्रमाणतस्तदर्थमुपादीयमानत्वादिति [पृ.१२७]। अवघातोद्देश्यकप्रमाणमूलकतदर्थोपादानविषयत्वादित्यर्थः । नन्ववघातार्थप्रोक्षणप्रवृत्तेर्मूलभूतं किं प्रमाणम्? उच्यते "व्रीहीन् प्रोक्षति" 'व्रीहीनवहन्यात्" इति वाक्यद्वयम्, प्रोक्षिता व्रीहयोऽवघाताय कल्पन्त इति वाक्यशेष एव वा । तथा हि व्यक्तिवचनन्यायेनोक्तवचनाभ्यां यत्र प्रोक्षणं तत्रावघाते बोधित एवं वाक्यशेषाच्च प्रोक्षिते तद्बोधिते प्रोक्षणेऽवघातपूर्वत्वावगतौ जनकत्वाग्रहेऽपि पूर्वस्य तस्यासत्त्वे परोऽवघातः कथमित्यतः प्रोक्षणगोचरावघातार्थं जनानां प्रवृत्तिः प्रमाणमूलिकेति भावः । अवघातासम्भवादिति । अवघातादर्शनादित्यर्थः । ननु ध्वंसव्यापारत्वादिनामिति । इदन्तु प्रकृतमपेक्ष्य, वस्तुतः सर्वेषामेव यावत्सत्त्वं व्यापारस्य फलोत्पादकत्वमप्रसिद्धमेवेति बोध्यम् । फलोत्पादकत्वाप्रसिद्धिरिति । तथा च व्यापारस्य यावत्सत्त्वं फलोत्पादकत्वनियमो यदि स्यात् तदैवानन्तफलप्रवाहः प्रसज्येत, तदेव नेति भावः । न च व्यापारकालस्य फलपूर्वत्वेति । व्यापारस्य यावत्सत्त्वं फलोत्पादकत्वाभावेऽपि यावतो व्यापारकालस्य फलपूर्वत्वमस्त्येव । न च प्रायशो व्यापारस्य फलपूर्वक्षणस्थायित्वेन तत्रैव व्यभिचारः फलोत्पत्तिक्षणान्यत्वेन विशेषणीयत्वादित्यनुशयेनाह । व्यापारेत्यादि । फलानन्त्येति । तथा च ध्वंसस्य व्यापारत्वे फलोत्तरकालस्यापि व्यापारकालत्वेन तस्य फलपूर्वत्वरक्षार्थं तदुत्तरं फलं स्वी-

---

अपूर्वस्वाभाव्यादिति । अत्र स्वभावेत्युपलक्षणम् कालविशेषघटितेश्वरेच्छातोऽपि नियमः स्यादेव । एवं यज्ञानां कालविशेषावच्छिन्नफलान्वयित्वेनेच्छाविषयतया तदिच्छाजन्यत्वमपि नियामकं स्यादेवदुभयमपि ध्वंसपक्षेऽपि तुल्यमेवेति । तुल्यमिति । इदम्=स्वभाववर्णनम् । इहापि । ध्वंसव्यापारत्वपक्षेऽपि । तावतापि=फलमुत्पाद्यापि । न विनश्यति=अपूर्वं तु विनश्यतीति शेषः ।

स्यादेतत् । उपलक्षणं प्रोक्षणादयो, न तु विशेषणम् । तथा चाविद्यमानै रपि तैरुपलक्षिता व्रीह्यादयस्तत्र तत्रोपयोक्ष्यन्ते । यथा गुरुणा टीका कुरुणा क्षेत्रमिति चेत् । तदसत् । न हि स्वरूपव्यापारयोरभावेऽपि उपलक्षणस्य कारणत्वं·

बोधनी।

स्यादेतत्-इति । यदि प्रोक्षणादयो विशेषणं भवेयुस्तदा कार्यान्वयिन एव विशेषणत्वात् कार्यकाले तेषामसत्त्वेन विशेषणत्वायोगाद् विशिष्टस्य कारणत्वं न सिध्येत् । तेषां तूपलक्षणत्वे बुद्धिसन्निहितानामेवेतरव्यवच्छेदेन विशेष्यविषयबुद्धिजननद्वारेण कार्योपयोग इत्यविद्यमानत्वेऽपि न कश्चिद् दोषः । अविद्यमानस्यैवोपलक्षणत्वे तदुपलक्षितस्य कार्यविशेषोपयोगे च दृष्टान्तः-यथा-इति । अविद्यमानेनैव हि गुरुणा कुरुणा च प्राभाकरकुरुक्षेत्रत्वोपलक्षिते टीकाक्षेत्रे तेषु कार्यविशेषेषूपयुज्येते-यथा-इति । तदसदिति । उपलक्षणत्वे प्रोक्षणादीनां कार्यान्तरोपयोगिव्रीह्युद्देशेन विधानेन तत्कार्येऽपि साधनत्वावगमात् कार्योत्पत्तिं यावत् स्वरूपेण वा स्वोत्पादितातिशयद्वारेण वा तेषां सत्त्वमङ्गीकार्यम् । अन्यथातिप्रसङ्गादिति । कथं तर्ह्यसत एव गुर्वादेरुपलक्षणत्वेन कार-

प्रकाशः।

स्वभाव इत्यग्रे सन्नपि न स्वर्गोत्पादक इत्यर्थः । अथ यागध्वंसो न व्यापारः, प्रतियोगिध्वंसयोरेकत्राजनकत्वादुपजीव्ययागकारणत्वभङ्गापत्तेः, प्रत्युत प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगित्वादिति मतम् । तदपि तुल्यमिति भावः ।

स्यादेतदिति । यथाऽन्यत्रातीतेनाप्युपलक्षणेनोपलक्ष्यव्यावृत्तिबुद्धिस्तथा प्रोक्षणेनापि व्रीहेरिति तादृशानामेवोपयोगोऽन्यथासिद्ध इत्यर्थः । न हीति । अन्यत्राप्यतीतेनोपलक्ष्यव्यावृत्तिबोधो न जन्यते । स्वरूपव्यापारयोरसत्त्वात् । किन्तु तज्ज्ञानेनेत्यर्थः । तर्हि तज्ज्ञानमेव, तज्जन्यं स्या·

प्रकाशिका।

यागपदेन चात्र स्वर्गमात्रहेतुक्रिया विवक्षितेति नोक्तदोषः । सा पि च निरन्तरैकसन्तानापन्नस्वर्गमात्रजनिका विवक्षितेति नानाजन्मव्यापकस्वर्गजनकापूर्वस्थले न व्यभिचारः । अन्यस्वर्गाधारत्वेनेष्टापत्तिवारणायापाद्ये तदिति । तद्व्यापारजन्येति च तस्यार्थः । दृष्टान्तश्चात्र तज्जन्यैकस्वर्गोत्तरकालस्तद्व्यापारजन्यद्वितीयस्वर्गकालः ।

टिप्पणी।

कार्य्यम्, एवं तत्क्षणस्यापि तादृशकालत्वेन एवं तदुत्तरक्षणस्यापि तथात्वेन तत्र तत्र तदनुरोधेन फलधाराप्रसक्तिरिति भावः । जनितफलव्यापारगर्भा व्याप्तिराशङ्कितुरभिमतेत्यजनितफलकीर्त्तनादिनाश्यापूर्वे न व्यभिचार इत्यत उत्तरकालीनत्वं कीर्त्तनविशेषणम्, किञ्चित्फलजननोत्तरकालीनकीर्त्तनेति तदर्थः । विवादाध्यासितः काल इत्यादि । कालमात्रस्य पक्षत्वे स्वर्गपूर्वकाल आपादकासिद्धिः, स्वर्गकाल इष्टापत्तिरित्यतो विवादाध्यासित इति कालविशेषणम्, तदर्थश्च तद्व्यापारजस्वर्गोत्तरत्वे सति तथाभूतस्वर्गाधिकरणत्वमिति । स्वर्गापूर्वे, एवं चैत्रस्य जनितफलके नष्टेऽजनितफलके तिष्ठत्यपूर्वे, एवं कालान्तरवर्त्तिस्वर्गापूर्वे एवं जनितस्वर्गकापूर्वनाशकाले एवं तत्रैव स्वर्गान्तरजनकव्यापारकाले, एवं स्वर्गोत्तरं मे राज्यं भूयादिति कामनया कृतप्रयागस्नानजन्यापूर्वे जनितस्वर्गे व्यभिचारवारणाय क्रमेण सत्यन्तम् । चैत्रीयतद्व्यापारजन्यार्थकं चैत्रपदम् । स्वर्गपदोत्तरदलं चैत्रीयतद्व्यापारजन्यार्थकं तत्प ' पूर्वपदस्य स्वर्गमात्रजनकार्थकत्वे तात्पर्य्यग्राहकं यागपदमुपादेयं स्वर्गान्तरमादायेष्टापत्तिवारणायापाद्ये तदिति ध्येयम् । तदपि तुल्यमितीति । प्रोक्षणध्वंसेऽपि तुल्यमित्यर्थः । यथान्यत्रातीतेनापीति । अविद्यमानस्य कारणत्वमत्यन्तमेवालीकमित्यतो मूलमन्यथा व्याचक्षते यथेति । उपयोगोऽन्यथासिद्ध इति । संसारं विनापि

विद्यमानं सत्प्रयोजकं विशेषणमेव, उपलक्षणन्त्वविद्यमानमपि प्रयोजकमित्याह । उपलक्षण-

कश्चिदिच्छति, अतिप्रसङ्गात् । व्यवहारमात्रन्तु तज्ज्ञानसाध्यं, न तु तत्साध्यम् । तज्ज्ञानमपि स्वकारणाधीनं, न तु तेन निरन्वयध्वस्तेन जन्यते । अस्तु वा तत्राप्यतिशयकल्पना किन्नश्छिन्नम् ! । यद्वा, यागादेरप्युपलक्षणत्वमस्तु तदुपलक्षितः कालो यज्वा वा स्वर्गादि साधयिष्यति, कृतमपूर्वेण । न च देवदत्तस्य स्वगुणाऽऽकृष्टाः शरीरादयो भोगाय, तद्भोगसाधनत्वात्, स्नगादिवदित्यन्वयिबलादपूर्वसिद्धेर्नाविशेष इति साम्प्रतम् । इच्छाप्रयत्नज्ञानैर्यथायोगं सिद्धसाधनात् । न च तद्रहितानामपि भोग इति युक्तिमद्, येन ततोऽप्यधिकं सिद्ध्येत् । नापि स्वगुणोत्पादिता इति साध्यार्थः, मनसाऽनैकान्तिकत्वात । नापि कार्यत्वे सतीति विशेषणायो हेतुः, तथासत्युपलक्षणैरेव सिद्धसाधनात् । असतां तेषां कथमुत्पाद-

बोधनी ।

णत्वमित्यत्राह—व्यवहार-इति । न तावद् गुर्वादिना टीकादौ किञ्चित्कार्यं क्रियते किन्तु तदीयत्वेन व्यहारमात्रमेव तत्राऽस्ति, तदपि तेन न क्रियते किन्तु गुर्वादिज्ञानेन, तज्ज्ञानमप्याप्तवादिकारणाधीनं न त्वनुत्पादितव्यापारध्वस्तेन गुर्वादिना जन्यते; प्रत्यक्षज्ञान एव ह्यर्थः कारणं नान्यत्रेति भावः । अथ गुर्वादिनापि टीकादौ तत्तत्कार्यानुगुणः कश्चिदाधीयतामतिशयः, न तेन संस्कारवादिनामस्माकं काचित् क्षतिः, भवतस्तु साध्यविकलो दृष्टान्तः स्यादित्यभिप्रायेणाह—अस्तु वा-इति । यदि वा प्रोक्षणादीनामतिशयमन्तरेणोपलक्षणत्वेन कारणत्वं स्यात् चेत् तदा यागादीनामपि तथात्वप्रसङ्गादपूर्वं दत्तजलाञ्जलि स्यादित्याह—यद्वा-इति । ननूपलक्षणत्वेन यागादीनां फलसाधनत्वोपपत्तावपि प्रमाणबलादेव तत्रापूर्वसिद्धिरित्यत्राह—न च इति । स्नगादयो हि स्वगुणेन प्रयत्नादिना सन्निधापिता भोगाय भवन्ति, तथा पश्वादयोऽप्यपूर्वाख्येन गुणविशेषेण सन्निधापिता इत्यपूर्वसिद्धेः प्रोक्षणादिभ्यो यागादीनां नाविशेषः। इच्छा-इति । क्वचिद् ज्ञानेच्छाप्रयत्नैः समुदितैरुपगृहीताः पश्वादयो भोगाय भवन्ति । क्वचित् त्वन्यतमेन यथा निदाघतप्तस्य मेघच्छायादयः, न तेन तदतिरिक्तापूर्वसिद्धिरिति । यदीच्छादेर्व्यतिरेकेऽपि भोगः स्यात् ततस्तदतिरिक्तं सिध्येत् । न त्वेवमस्तीत्याह-न च-इति । इच्छाभावे भोगत्वमेव न स्यात्, इष्टत्वलक्षणात् सुख-

प्रकाशः ।

दित्यत आह । तज्ज्ञानमपीति । ननु स्वकारणमपि तदेवेत्यत आह । न त्विति । निरन्वयध्वस्तेन=अनुत्पादितव्यापारध्वस्तेनेत्यर्थः । तत्रापीति । उपलक्षणाभिमतेऽपीत्यर्थः । स्नगादिस्तन्निर्मितो दृष्टान्तः । स्वगुणाकृष्टा इति । स्वगुणसहकारिण इत्यर्थः, स्वगुणोत्पादिता इति वा, आद्ये, इच्छेति । अन्त्यमाशङ्क्य निराचष्टे । नापीति । उपलक्षणैरिति । जन्मान्तरीयज्ञानेच्छाप्रयत्नैरित्यर्थः । सिद्धसाधनपदमत्रेष्टहानिपरम् । यथाश्रुतेऽपसिद्धान्तापातात् ।

प्रकाशिका ।

जन्मान्तरीयेति । निरन्वयध्वस्तस्यापि जनकत्वाभ्युपगमादिति भावः ।

मकरन्दः ।

जन्मान्तरीयेति । निरन्वयध्वस्तस्यापि जनकत्वाभ्युपगमादिति भावः ।

टिप्पणी ।

सिद्धः।उपलक्षणाभिमतेऽपीति । कुरुक्षेत्रादावित्यर्थः। सिद्धसाधनपदमत्रेष्टहानिपरमिति। सिद्धसाधनस्य यथाश्रुतार्थत्वेऽविद्यमानस्योत्पादकत्वस्य सर्वैरस्वीकृततया तस्य सिद्धत्व एव तेन सिद्धसाधनसम्भवेनापसिद्धान्त इति भावः । अपसिद्धान्तप्रसङ्गादिति । तथा चार्थान्तर-

मित्यादिना । व्यवहारमात्रमित्यादि । तदेतदभिमन्त्रणादिष्वित्यादिग्रन्थदर्शनात् ।

कुरोः पूर्वमपि तादृशक्षेत्रस्य सद्भावात् तदानीमतादृशत्वेनावश्यं तत्र कुरुजनितातिशयः स्वीकरणीयः । एवमविद्यमानस्य कस्यापि न जनकत्वमिति नियमात् तत्रापि तत्कल्प्यमेवेति दृष्टान्तासङ्गतिरित्याह । अस्तु वेति । अभ्युपगमे त्वाह । यद्वेति ।

देवदत्तस्येति । अत्र शरीरं पक्षः, देवदत्तस्वगुणाकृष्टत्वं साध्यम् । साध्यस्य स्वगुणसहकारित्वार्थकत्वं मन्वान आह इच्छेति । यथाक्रमं क्वचिदिच्छायाः क्वचित्प्रयत्नस्य क्वचिज्ज्ञानस्य

कत्वमिति चेत् तदेतदभिमन्त्रणादिष्वपि तुल्यम् । तस्माद्भावभूतमतिशयं जन-

बोधनी ।

स्येति । स्वगुणाकृष्टत्वं नाम स्वगुणोत्पादितत्वं विवक्षितं तथा न सिद्धसाधनं पश्वादीनामिच्छाद्यनुत्पाद्यत्वादित्याशङ्क्याह—**नापि**—इति । मनो हि नित्यत्वान्न केन चिदुत्पाद्यतेऽथ च भोगसाधनमिति तेनानैकान्तिकमिति । तर्हि कार्यत्वे सति भोगसाधनत्वादिति हेतुं विशेषयिष्याम इत्यत्राह—**नापि**—इति । अस्माभिरुपलक्षणत्वेनापादिता यागादयो ह्यात्मगुणास्ततत्संकल्पप्रयत्नाद्यात्मकत्वात् तेषाम् । अतस्तैरेव जन्मान्तरीयैरैहिकैर्वा पश्वाद्युत्पत्तिसिद्धेर्न तदतिरिक्तजन्यापूर्वसिद्धिरिति । ननु चिरविनष्टा यागादयः कथं कालान्तरभाविनः पश्वादेः साधनं यतस्तैः सिद्धसाधनं स्यादित्याह—**असताम्**—इति । तर्हि अभिमन्त्रणादिष्वपि कालान्तरभाविने फलाय संस्कारमभ्युपगच्छेत्याह—**तत् इति** । उक्तमर्थमुपसंहरन् प्रमाणयति—**तस्मात्**—इति । प्रध्वंसेन सिद्धसाधनं मा भूदि-

प्रकाशः ।

**तस्मा**दिति । यद्यपि पुरुषनिष्ठातिशयेन सिद्धसाधनम्, तथापि व्रीह्यादिगतेति साध्यं विशेषणीयम् । यो यदुद्देशेनोपादीयते स तत्रातिशयजनक इति व्याप्तेरिति संप्रदायविदः ।

**अस्मत्पितृचरणास्तु**—सोऽतिशयो लाघवात् फलसमानाधिकरण इति व्रीहिनिष्ठ एव । तेन

टिप्पणी ।

मिति भावः । **अतिशयेन सिद्धसाधनमिति** । अथ विप्रतिपक्षस्य व्रीहिनिष्ठातिशयस्य प्रोक्षणजन्यस्य यथोक्तानुमानासिद्धेरुच्यत इत्यादि ग्रन्थेन प्रोक्षणजन्यातिशये व्रीहिनिष्ठत्वखण्डनं ग्रन्थकृतां विरुद्धमित्याशङ्कां निरसितुमुपक्रमते । **यद्यपित्यादि आहुरित्यन्तेन** । **न च मन्त्रादीनेवेत्यादतुल्यमित्यन्त**मूलग्रन्थेन प्रोक्षणजन्यसंस्कार एव तर्काभिसन्धिः तदुपकार्य्यमेव मानं तस्मादित्यादिना दर्शितं तथा च प्रोक्षणेऽतिशयजनकत्वस्यैवासिद्धेः कुतःसिद्धसाधनावकाश इति वाच्यम् । अत्रापि सिद्धसाधनपदस्येष्टहानिपरत्वात् व्रीहिनिष्ठातिशयस्यैवेष्टत्वात् । अथ व्रीहिगतत्वस्य साध्यविशेषणत्वे व्रीहीनिष्ठातिशयजनकत्वप्रयोज्यकालान्तरभाविफलजनकत्वरूपसाध्याप्रसिद्धिः । अवघातजनकीभूतक्रियान्तरमादाय कालान्तरभाविसुखाद्यर्थोपादीयमानयागादिकमादाय च व्यभिचारप्रसङ्गः दृष्टान्तासङ्गतिश्चेति चेन्न । यो यदुद्देशेनोपादीयते स तत्रातिशयजनक इति सामान्यव्याप्तौ गृहीतायां प्रोक्षणं व्रीह्याद्युद्देश्यकमिति पक्षधर्म्मताज्ञानसहकारात् शुद्धातिशयजनकत्वघटितधर्म्मावच्छिन्ननिरूपितव्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानादेव व्यापकतानवच्छेदकीभूतेन विधेयतानवच्छेदकेन व्रीहिनिष्ठातिशयजनकताघटितधर्म्मे विधेयानुमितिरितरबाधादिसहकृतयथोक्तज्ञानजन्यानुमितिवत् इतरबाधादियाँस्तु विशेषः, अत्र व्रीह्यादिदिनिष्ठत्वविषयताया पक्षधर्म्मज्ञानप्रयोज्यत्वेन विधेयत्वरूपत्वादिति, एवञ्च नोक्तदोषावकाशः । अनुमितेरेववाक्षेपे शुद्धातिशयघटितधर्म्मावच्छिन्नमतिशये व्रीहिनिष्ठत्वमित्येवं रीतिकत्वस्वीकारो लाघवज्ञानादिसहकृतप्रमाजन्यविशिष्टवैशिष्ट्यबोधस्थले विशेषणतावच्छेदकप्रकारकज्ञानस्य विलक्षणकार्य्यकारणभावस्वीकाराच्च व्रीहिनिष्ठत्वविशेषितधर्म्मावच्छिन्नज्ञानस्य पूर्वमभावेऽपि नाननुमानम् । अत एव विशेष्यविशेषणविशिष्टवैशिष्ट्यरीतिद्वयेऽपि साध्यघटकातिशये व्रीहिनिष्ठत्वस्य विशेषणाद् व्रीह्यादीत्यादिग्रन्थसङ्गतिः । साध्यतावच्छेदकावच्छिन्नाभाववद् त्तित्वस्यैव व्यभिचारत्वेन साध्यतावच्छेदकशुद्धातिशयघटितधर्म्मावच्छिन्नाभावस्य तत्र विरहान्न व्यभिचारः । दृष्टान्ते साध्यतावच्छेदकावच्छिन्नस्यैवापेक्षितत्वेन नापि दृष्टान्तासिद्धिरिति विभावनीयम् । **सम्प्रदाय इत्यस्वरसन-**

सहकारित्वात् । **अधिकम्**=इच्छादितो भिन्नमपूर्वमित्यर्थः । **उपलक्षणैरिति** । अविद्यमानैर्जन्मान्तरीयैरित्यर्थः । तैरिति शेषः । **तदेतत्**=असतामुत्पादकत्वम् । **अभिमन्त्रणादीति** ।

यन्त एव प्रोक्षणादयः कालान्तरभाविने फलाय कल्पन्ते प्रमाणतस्तदर्थमुपादीयमानत्वात्, यागकृषिचिकित्सावदिति । अन्यथा कृष्यादयो दुर्घटाः प्रसज्ज्येरन् । बीजादीनामापरमाण्वन्तभङ्गात् तेषु चावान्तरजातेरभावान्नियतजातीयकार्यारम्भानुपपत्तेः ।

अत्रोच्यते--

**संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ॥**

बोधनी ।

त्युक्तं—**भाव**–इति । भ्रमादिकृतेनोपादानेनानैकान्तिकं मा भूदित्याह—**प्रमाणत**–इति । श्रुतिप्रमाणादित्यर्थः । न च कृष्यादौ साध्यवैकल्यमित्याह–**अन्यथा**–इति । कथमित्याह–**बीजादीनाम्**–इति । परिकर्षितायामुर्व्यामुप्तं बीजावयवि पाथःपवनसंयोगात् क्रियोत्पत्तावव-

प्रकाशः ।

तत्समवहितत्वं व्रीहेः साक्षात् सम्बन्धात् । पुरुषनिष्ठत्वे व्रीहीणां साक्षात् सम्बन्धाभावात् परम्परासम्बन्धे गौरवं च, न च विहितत्वेन पुरुषनिष्ठातिशयजनकत्वमनुमेयम् । अप्रयोजकत्वात् । चिकित्सादिना व्यभिचाराच्चेत्याहुः । दृष्टान्तस्य साध्यवैकल्यमपाकरोति । **अन्यथेति** । प्रोक्षणादिजन्यातिशयसिद्धावपि तस्य व्रीहिनिष्ठत्वं न सिद्ध्यतीत्याह—

**संस्कार इति** । अतिशयधर्मिग्राहकमानादेव लाघवसहकृतात् स एक एव सिद्ध्यति, पुरुषनिष्ठश्च । तथाहि, व्रीहिगतत्वे न तावत्सकलव्रीहिनिष्ठ एक एव, एकव्रीहिनाशे तन्नाशापत्तेः । न च यावदाश्रयनाशात्तन्नाशः, लाघवादाश्रयनाशस्यैव तन्त्रत्वात् । वृक्षादौ किञ्चिदाश्रयनाशात्तन्नाशेऽपि खण्डपटन्यायेन पुनरुत्पत्तिरित्यनेको वाच्यः । न चैवमेकव्रीहिनाशे फलानुदयः, तावत्संस्काराणामभावादिति वाच्यम् । संस्कारत्वेनैव प्रयोजकत्वात् । किंचित्तत्समवधानेऽपि दण्डादिवत् कार्यसत्त्वादिति गौरवम् । न च विनिगमकाभावः । प्रोक्षणमपूर्वजनकं, दृष्टद्वाराभावे सति

प्रकाशिका ।

**संस्कारत्वेनेति** । न चैवं तावतां व्रीहीणां किमित्युपादानमिति वाच्यम् । होमनिर्वाहाय तावदुपादानात् । यद्यपि विनिगमकं लाघवमेव, तथाप्यपूर्वं तदित्यत्र विनिगमकं नास्तीत्याशङ्क्य निराकरोति **न चेति** । वस्तुतो लाघवोपकार्य्यमानाभाव इति शङ्कार्थः । **दृष्टद्वाराभाव इति** ।

मकरन्दः ।

**संस्कारत्वेनेति** । न चैवमनेकव्रीह्युपादानानुपपत्तिः । होमादिनिर्वाहार्थं तदुपगमात् । यद्यपि विनिगमकमुक्तमेव, तथाप्यपूर्वं तदित्यत्र विनिगमकाभावमाशङ्क्य निराकरोति । **न चेति** । **दृष्टद्वारेति** । मङ्गलादौ व्यभिचारवारणाय सत्यन्तम् । दृष्टत्वं–क्लृप्तत्वम् । तत्तद्दृष्टत्वं विशिष्यैव वक्तव्यमिति

टिप्पणी ।

नाय । पक्षधर्मताज्ञानस्य प्रमाणान्तरसहकारित्वस्य यथोक्तरूपेण कुत्राप्यस्वीकारात् उक्तव्याप्तौ मीमांसकानामनिर्भरत्वाच्चेति भावः । **इत्यनेको वाच्य इति** । न च छिन्नायामपि शाखायां सोऽयं वृक्ष इति व्यवहाराद् यावदाश्रयनाशस्य हेतुत्वं वाच्यमिति वाच्यम् । साजात्यावलम्बनेनैव तादृशव्यवहारोपपत्तेरिति । **संस्कारत्वेनैवेति** । प्रोक्षणजन्यसंस्कारत्वेनेत्यर्थः । **इति गौरवमिति** । इति हेतोरतिशयोऽनेको वाच्यस्तथा च तस्यानेकस्य कल्पने कारणत्वे चातीव गौरवम्, तदपेक्षया परम्परासम्बन्धकल्पन एव लाघवमिति भावः । **आपत्तेरिति** । कथञ्चित् व्रीहावेकसंस्कारक-

---

आदिपदात् प्रोक्षणादिपरिग्रहः । **उपादीयमानत्वादिति** । अनेनानुमानेन तथाभूतातिशये सिद्धे यो यदुद्देशेनेत्यादिव्याप्त्या व्रीहिनिष्ठत्वसिद्धिः स्यात् ।

## स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥११॥

बोधनी ।

यवानां विभागेनासमवायिकारणतत्संयोगविनाशाद् विनश्यति । एवमापरमाण्वन्तं विभागात्, तेषु च यवकलमादिविजातीयाङ्कुरारम्भकनियामिकाया जातेरभावात्, कलमबीजावापे कलमाङ्कुर एव यवबीजावापे यवाङ्कुर एवेत्येवं कार्यजातिनियमानुपपत्तिः । अतिशयाङ्गीकारे कृष्याद्याहितातिशयास्ते ते परमाणवस्तं तं कार्यविशेषमारभन्त इति नियमोपपत्तिरिति भावः ।

तदेवं प्रोक्षणादिजन्यातिशयवद् यागादिजन्यमपूर्वं भूतधर्मोऽस्त्विति पूर्वपक्षिते सिद्धान्तमारभते—**मत्र**—इति । यदि तावत् प्रोक्षणादयः क्वचिदतिशयमादधतीति साध्येत ततः सिद्धसाधनम्, अथोद्देश्यगतमादधतीति, ततोऽनैकान्तिकता; ततः पुंस एव संस्कार इष्यताम्, कृष्यादावपि क्लृप्तैरेव पाकजादिगुणविशेषैः कार्यनियमोपपत्तौ नाप्रसिद्धातिशयकल्पनेति साध्यवैकल्यमिति भावः।

प्रकाशः ।

कालान्तरभाविफलजनकतया विहितत्वात्, यागवत् । न चाऽप्रयोजकत्वम्, यागादीनामपूर्वजनकतायामुक्तरूपस्यैव प्रयोजकत्वात्, अन्यस्याननुगतत्वादिति भावः। कृष्यादिना व्यभिचाराभावं परोक्तदृष्टान्तस्यासिद्धिं चाह । **स्वगुणा इति** । तत्र दृष्टद्वारस्यैव सम्भवान्न व्यभिचारः । न वा तत्र परमाणौ अतिशय इति दृष्टान्तः साध्यविकल इत्यर्थः । यद्यपि पाकजा रूपादयोऽपि तन्निष्ठातिशया एवेति न साध्यवैकल्यं, तथाप्याधेयशक्त्यभावमात्रे तात्पर्यम् । न त्वाधेयशक्तिपाकजयोरतीन्द्रियत्वाविशेषात् कल्पनायामविशेषः । परमाणाववयविरूपादिसजातीयपाकजरूपाद्युत्पत्तेरावश्यकत्वात् । तत एव नियतकार्यजननोपपत्तौ शक्त्याधानकल्पने गौरवादिति भावः ।

प्रकाशिका ।

चिकित्सायां व्यभिचार इति सत्यन्तम्। दृष्टत्वं च क्लृप्तत्वं न त्वदृष्टान्यत्वमन्यतरासिद्धेः। पापध्वंसफलकप्रायश्चित्ते व्यभिचार इति । **कालान्तरेति** । कालान्तरत्वं च स्वोत्पत्त्यव्यवहितक्षणान्यत्वं न तु स्वानधिकरणकालत्वं विहितपदवैयर्थ्यात् यथाविवक्षिते त्वपूर्व एव व्यभिचार इति तत्पदम्। अपूर्वं च तन्मते कल्प्यमिति भावः । केचित्तु धर्मजनकत्वं साध्यमिति निषिद्धकर्मणि व्यभिचारवारणाय विहितपदमिति कालान्तरत्वं स्वानधिकरणकालत्वमेवेत्याहुः । **कृष्यादिनेति** । यद्यपि मदुक्तानुमाने व्यभिचाराभावः मूलकृदाहेत्यनन्वितं मूले चैतादृशानुमानं नोक्तमेव । तथापि मूलकृत्तात्पर्यस्यमेवानुमानं प्रकाशकृता प्रकाशितमिति स्वतात्पर्यानुमाने कृष्यादिना व्यभिचाराभावमाहेत्यर्थः । **परोक्तेति**। परेण ग्रन्थ-उक्तस्येत्यर्थः । **तत्र दृष्टद्वारस्यैवेति** । यद्यपि विहितत्वाभावादेव न तत्र व्यभिचारः, तथापि वर्णोपायविभागावसरे कृष्यादेरपि विहितत्वमेवेत्यनेनाभिप्रायेण

मकरन्दः ।

नान्यतरासिद्धिरित्यप्याहुः । मदुक्तमनुमानप्रकाशे द्रष्टव्यम् । साक्षात् पापध्वंससाधने प्रायश्चित्ते व्यभिचारवारणाय कालान्तरेति । कालान्तरत्वञ्च स्वानन्तरक्षणान्यत्वम् । अन्यथा विहितपदवैयर्थ्यापत्तेः । एवञ्चापूर्व एव व्यभिचारवारणाय तत् । तच्च मन्मते कल्प्यमिति भावः । वस्तुतो धर्मजनकत्वमत्र साध्यम् । तथा च निषिद्धकर्मणि व्यभिचारवारणाय । **तदिति** । **कृष्यादिनेति** ।

टिप्पणी ।

ल्पनासम्भवेऽप्यनेकव्रीहौ तत्सम्बन्धकल्पनापेक्षयाप्यारम्भनिष्ठत्वे लाघवं द्रष्टव्यम् । **फलजनकतया विहितत्वादिति** । चिकित्सादौ व्यभिचारवारणाय सत्यन्तम् । कालान्तरत्वं चोत्पत्त्यव्यवहितक्षणान्यत्वं न त्वव्यवहितोत्तरत्वसम्बन्धेन स्वाधिकरणत्वं तथा सति विहितत्वपदवैयर्थ्यात् ।

---

**जातेरभावादिति** । तथा च व्रीह्यादिभिन्नकपरमाणूनां विशेषाभावेन व्रीहिनिर्वपने कदाचि-

यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतयः समन्त्राः प्रयुक्ताः पुरुषमभिसंस्कुर्वते, न वह्निं नापि देवताः । तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः

बोधनी ।

कथं व्रीह्याद्युद्देशेन तत्र प्रयुज्यमानः प्रोक्षणादिः पुरुषं संस्कुर्वीतेत्याशङ्कां निराकुर्वन्ननैकान्तिकतामेव स्फोरयति—यथा हि—इति । व्रीह्याद्युद्देशेन तत्रैव प्रयुज्यमान इत्युपस्कारः कथं पुरुष-

प्रकाशः ।

यो यदुद्देशेनोपादीयते इत्यत्र परोक्तानुमाने व्यभिचारमाह । यथा हीति । देवतायाः सिद्धत्वे यथा प्रीतिभागितयोद्देश्यत्वं तथा व्यापारभागितया व्रीहेरपीत्यर्थः । न च यद्गतफलार्थितया यत्क्रियते तत् तद्गतमेव तदनुकूलमतिशयं जनयतीति व्याप्तेरनुमानं स्यादिति वाच्यम् । शत्रुवधमुद्दिश्य प्रवर्तितेन श्येनयागेन व्यभिचारादिति भावः । अथात्मनिष्ठसंस्कारस्य व्रीहिणा सम्ब-

प्रकाशिका ।

दम् । शत्रुवधमिति । तत्र शत्रोरेव वधाश्रयत्वेनोद्देश्यत्वादिति भावः । न च वैरिणि तदपूर्वमिति पञ्चमटीकाविरोधः । तस्या एकदेशिमताख्यानपरत्वात् तस्य धर्मरूपत्वे वैरिमरणजनकत्वानुपप

मकरन्दः ।

न च विहितत्वाभावादेव न तत्र व्यभिचार इति वाच्यम् । प्रत्येकवर्णोपायविभागविधिना वैश्यस्य कृषिविधानादिति भावः ।

शत्रुवधमिति । यद्यपि शत्रुवधो न शत्रुगत उद्देश्यः । तथा सति स्ववध एवोद्देश्यः प्रस-

टिप्पणी ।

यथा व्याख्यातार्थे स्वपूर्वमादायैव व्यभिचारात् तदुपादानम् । न चैककर्तृकानेकपित्रुद्देश्यकगयाश्राद्धस्थलेऽपि लाघवबलात् कर्त्तर्य्येवादृष्टस्वीकारापत्तिः, उद्देश्यस्यानेकत्वेनानेकादृष्टकल्पनायां गौरवात् । न चास्तु तथैव, तथा सति पितर्य्यदृष्टसिद्धान्तभङ्गप्रसङ्गादिति वाच्यम् । अनेकपुत्रादिकर्त्तृकैकोद्देश्यकगयाश्राद्धस्थलीयादृष्टेन दत्तोत्तरत्वात् तत्र कर्तरि कल्पनायां गौरवात् । तस्मात् पितर्य्येव साक्षात्सम्बन्धेनादृष्टं स्वीकार्य्यं लाघवात् , फलसामन्यानुरोधेन परम्परासम्बन्धे गौरवादिति भावः । देवताया इति । उद्देश्यत्वम् = इच्छाविषयत्वम् । तथा हि सिद्ध इच्छाविरहात्कथं देवतादीनामुद्देश्यत्वमित्याकाङ्क्षायामाह । तथा व्यापारभागितयेति । अवघातादिरूपव्यापारैरित्यर्थः । यथा प्रीतिभागितयोद्देश्यमिति । ननु प्रीतिभागित्वेन देवताया उद्देश्यत्वे यागादः प्रीतिरेव व्यापारोऽस्तु, अलमदृष्टेन, न च फलपूर्वं कथं तस्या स्थितिः । संस्काररूपस्ववासनया स्वजनकवासनया तत्र स्थितिसम्भवादिति चेन्न । बहुकालव्यापकस्वर्गजनकयागस्थले प्रीतेर्व्यापारत्वे स्वर्गस्य सुखरूपत्वेन क्षणिकतयाऽनन्तत्वेनानन्तानां तेषां नियतपूर्वत्वानन्यथासिद्धत्वयोः कल्पनायामतीव गौरवात् प्रीतेर्ज्ञानस्वरूपाया इच्छादिस्वरूपाया वा तावत्कालपर्य्यन्तं स्थित्यसम्भवादिति । शत्रुवधमुद्दिश्येति । शत्रोरेव वधाश्रयत्वेनोद्देश्यतया श्रुतेः शत्रुवधस्यैव फलत्वेन तज्जनकीभूतश्येनयागजन्यापूर्वस्य कर्त्तरि स्वीकारात् । ननु तादृशापूर्वस्य कथं नशत्रुनिष्ठतेति चेत्तस्य धर्म्मत्वे स्वसमानाधिकरणवधादिरूपफलजनकत्वानुपपत्तिः । अधर्म्मरूपत्वे विहितश्येनसाध्यत्वानुपपत्तिरिति शत्रुवधसाध्यसुखनिष्पादकमपूर्वं धर्म्मरूपं कर्तर्येवोत्पद्यते, स एव पूर्वोपार्जितशत्रुनिष्ठाधर्म्मस्य शत्रुवधे जननीये सहकारी भवतीति विभाव्यम् ॥०॥ सस्यन्धा-

च्छाल्यङ्कुरः स्यात् शालिनिर्वपणे व्रीह्यङ्कुरः स्यादिति शङ्कया व्रीह्याद्यर्थिनां विशेषदर्शिनां कृष्यादौ प्रवृत्तिर्न स्यादिति भावः ।

हुताशन इति । आहुरित्यादिना परमापूर्वस्य जननात् तस्य देवतायां स्वीकारे फलव्यधिक-

**पुरुषमेव संस्कुरुते, न तम्। यथा च कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचां सञ्चरणजलक्षरणरूपा क्रिया, तथा व्रीह्यादीनां तत्तदुत्तरक्रियाविशेषाः। यथा चैकत्र कर्त्तृकर्मसाधनवैगुण्यात् फलाभावस्तथा परत्रापि। आगमि-**

बोधनी।

संस्काराणां व्रीह्याद्यसम्बन्धानामेव तत्सहकारित्वमित्यत आह—**यथा च**–इति। यथा हि कारीरीजनितसंस्कारानाधारा एव जलधरास्तदाधारयजमानात्मसंयोगादेव गगनं संचरन्ति वर्षन्ति च, तथा व्रीह्यादयोऽपि संस्कृतात्मसम्बद्धाः कार्योपयोगिन इति। ननु पुरुषसंस्कारपक्षे यदा तस्य पातकादिदोषस्तदा तस्मिन् संस्काराधानायोगाद् वैफल्यमेव प्रोक्षणादेः स्यात्। व्रीहिसंस्कारत्वे तेषामदुष्टत्वान्नायं दोष इत्यत्राह—**यथा च**–इति। कर्त्तृदोषे यथैकत्र कर्तरि फलस्य संस्कारस्याभावः, तथापरत्र व्रीह्यादिष्वपि कर्त्तृत्ववैगुण्ये क्वचिदपि न संस्कार उत्पद्यत इत्यर्थः। यद्वा, एकत्र कारीर्यामपरत्र प्रोक्षणादावपि उभयत्र पक्षद्वये कर्मद्वये वाप्यागमिकत्वस्य तुल्यत्वाददुष्टानामेवाधिकारः। अत्र कर्मसाधनयोरुपादानं दृष्टान्तार्थम्। यद्वा, कृमिकीटाद्युपहतेष्वपि व्रीहिषु व्रीह्यन्तरापादानं न स्यादसंस्कृतत्वाविशेषादित्यत आह—**यथा**–इति। कर्मादिवैगुण्य इव व्रीह्यादिदोषेऽपि फलाभावश्रुतेस्तुल्यत्वेन व्रीह्यन्तरोपादानमुपपद्यत इत्यन्या व्याख्या। ननु पुरुषसंस्कारपक्षे प्रोक्षणादीनां कारीर्यादिवदनियतफलत्वं प्राप्नोतीत्यत्राह—**यथा च**-इति। कर्मादिवैगुण्यनिमित्तं हि

प्रकाशः।

न्धाभावान्न मिथः सहकारित्वं स्यादित्यत आह। **यथा चेति**। संस्कारवदात्मसंयोगो मेघस्येव व्रीहेरपि तुल्य इत्यर्थः।

न च परम्परासम्बन्धे गौरवम्, प्रामाणिकत्वादिति भावः। नन्वात्मनोऽनधिकृतस्यापि सम्भवान्न तन्निष्ठः संस्कारः सम्भवतीति व्रीहिनिष्ठ एव स स्यादित्यत आह। **यथा चेति**। कर्तृवैगुण्ये संस्कारो नोत्पद्यते। तस्मादगुण्यस्यापि हेतुत्वादित्यर्थः। न चाग्रे प्रधानयागाद्यभावाद् यत्र

प्रकाशिका।

त्तेरधर्म्मरूपत्वे च विहितश्येनसाध्यत्वानुपपत्तेः, तस्मात् शत्रुवधसाध्यसुखादिनिष्पादकमपूर्वं कर्त्तर्य्येव धर्मरूपं स च धर्म्मः पूर्वकृतशत्रुनिष्ठाधर्म्मस्य शत्रुमरणे जननीये सहकारीत्येव रमणीयम्।

मकरन्दः।

ज्ज्येत। तस्यैव तच्छत्रुत्वात्। किन्तु स्वगतशत्रुवधमुद्दिश्य श्येनः क्रियते। तथापि वधस्य संयोगध्वंसात्मकमरणरूपस्य शत्रुनिष्ठतया तथोक्तम्। एतदपि परमते। अस्मन्मते श्येनापूर्वस्य शत्रुनिष्ठत्वमेव, फलोपपादकमपूर्वं फलाश्रये कल्प्यते इति वक्ष्यमाणयुक्तेरिति बोध्यम्। अस्मन्मते त्वप्रयोजकत्वे तात्पर्यम्।

टिप्पणी।

**भावादिति**। अवघातादिरूपकार्य्यजनन इति शेषः। **प्रामाणिकत्वादिति**। अतिशयस्य साक्षात्सम्बन्धेन व्रीहिनिष्ठत्वापेक्षया उक्तयुक्त्या आत्मनिष्ठत्व एव लाघवेन तादृशसम्बन्धस्य प्रमाणसिद्धत्वेन गौरवस्याकिञ्चित्करत्वादि भावः ॥०॥ **व्रीहिनिष्ठ एव स स्यादिति**। अनधिकृतात्मस्थले व्रीहेर्वैगुण्यात्प्रोक्षणजन्यस्यावघातजनकस्योत्पादो भवत्येवेति शङ्कयितुरभिप्रायः ॥०॥ **कर्त्तृवैगुण्ये संस्कार इति**। कर्तृवैगुण्यस्थले परमापूर्वाजननस्योभयसिद्धत्वेन तत्र तद्धेतुभूतसंस्कारादेरपि मानाभावः प्रयोजनाभावात्। तथाचाङ्गापूर्वादावपि कर्त्तृकर्मसाधनवैगुण्याद्यभाव-

रणस्य स्वीकारापत्तेः, देवतायां तस्यास्वीकारात्। एवं फलव्यधिकरणस्य परमापूर्वस्य सर्वैरस्वीकाराद् देवतायां नातिशयसम्भव इति यो यदुद्देशेनेत्यादिव्याप्तौ व्यभिचार इति भावः। **तथा**=संस्कारवदात्मसंयोगादिरित्यर्थः।

**क्रियाविशेषाः**=प्रोक्षणाभ्युक्षणादयः। **एकत्र**=परमापूर्वस्थले, अथवाऽऽत्मनिष्ठत्वपक्षे। **परत्रापि**=अङ्गापूर्वस्थलेऽपि व्रीहिनिष्ठत्वपक्षेऽपीति वा।

**कत्वस्योभयत्रापि तुल्यत्वात् ।**

**न तर्हि बर्हिष इव व्रीह्यादेः पुनरुपयोगान्तरं स्यात्, उपयोगे वा तज्जातीयान्तरमप्युपादीयेत, अविशेषात् । न । विचित्रा ह्यमिसंस्काराः केचिद्व्याप्रियमाणोद्देश्यसहकारिण एव कार्ये उपयुज्यन्ते । किमत्र क्रियतां, विधेर्दुर्लङ्घ्यत्वात् ।**

---

बोधनी ।

कारीर्यामनियतफलत्वं, तच्चाविशिष्टं प्रोक्षणादिष्वपि । उभयं ह्यागमेन फलाय विधीयत इति । अतः प्रोक्षणादिष्वपि वैगुण्यनिबन्धनः फलाभावोऽविशिष्ट इति ।

ननु यदि भाविप्रयोजनार्थं व्रीहयः संस्क्रियन्ते तदा तेषां स्वकार्यान्तरोपयोगो युज्यते । यदि तु पुरुषः संस्क्रियेत, तदा न यदेकस्मादपूर्वं तदेतरत्तदर्थमिति न्यायात् सक्तुवद् विनियोगभङ्गेन व्रीह्यादेः प्रोक्षणादिशेषतैव स्यात्, तत्र च प्रोक्षणादिनिर्वृत्त्यैव कृतार्थानां व्रीह्यादीनां कार्यान्तरोपयोगो न स्यात् । "बर्हिषि हवींष्यासादयती"ति हविरासादने विनियुक्तस्य बर्हिष इवेत्याह–**न तर्हि**–इति । अथ व्रीहिभिर्यजेतेति व्रीहीणां यागसाधनत्वेन विधानात् कृतकार्याणामपि यागार्थमुपादानमिति चेत् तत्राह—**उपयोगे वा**–इति । तदा हि प्रोक्षितैर्यष्टव्यमिति नियमाभावाद् व्रीहिजातीयं व्यक्त्यन्तरमुपादीयेत प्रोक्षिताप्रोक्षितयोर्व्रीहिवर्हिषोर्वा विशेषाभावादिति । सिद्धान्त्याह–**न**–इति । वैचित्र्यमेवाह–**केचित्**–इति । कस्मैचित् कार्याय यल्लक्ष्यीकृत्य या क्रिया प्रयुक्ता तज्जनितः संस्कारः कश्चित्पुरुषाधारोऽपि तदुद्देश्यव्यापारसहकार्येव कार्यं करोति, कश्चित्तु तन्निरपेक्षः । तत्र

प्रकाशः ।

प्रधानापूर्वाभावस्तत्र प्रोक्षणजन्यापूर्वस्य कथं नाशः, तस्य भोगेतरानाश्यत्वादिति वाच्यम् । इतराङ्गापूर्वतुल्यत्वादिति भावः । **बर्हिष इवेति** । उत्पादिताङ्गापूर्वस्य बर्हियागस्यैव विनियुक्तविनियोगविरोधादित्यर्थः । यद्वा बर्हिस्तृणाति, बर्हिषि हविरासादयतीति वचनाद्यथा बर्हिषः पुनरुपयोगो, न तथा व्रीहेरिति व्यतिरेके दृष्टान्तः । ननु व्रीहिभिर्यजेतेति यागसाधनत्वेन व्रीहीणां विधानात्तत् स्यादित्यत आह । **उपयोगे वेति** । **विचित्रा हीति** । संस्कारमाहात्म्यमेवेदं यन्निष्ठव्यापारेण पुरुषसंस्कारो जनितस्तस्य व्रीह्यादेः संस्कारः सहकारी, नान्यस्येत्यर्थः । **विधेरिति** । व्रीहीनवहन्तीति विधेः पूर्वोक्तन्यायेन प्रोक्षितव्रीहिष्वेव तात्पर्यादित्यर्थः । प्रोक्षिता व्रीहयोऽवघाताय कल्पन्त इति वाक्यशेषसहितस्यैव विधेर्दुर्लङ्घ्यत्वादित्यर्थः । व्याप्रियमाणोद्देश्यसहकारित्वं

प्रकाशिका ।

वस्तुतोऽप्रयोजकत्वे तात्पर्यमिति । **भोगेतरेति** । फलेतरेत्यर्थः । तेनाङ्गापूर्वस्य प्रधानापूर्वना-

टिप्पणी ।

समुदायस्य हेतुत्वं तथा च न दोष इत्युत्तरयितुराशयः । **अनाश्यत्वादिति** । तस्माद् व्रीहिनिष्ठ एव स स्वीकर्तव्य इति शेषः । **उत्पादिताङ्गापूर्वस्येति** । उत्पादिताङ्गापूर्वतत्तद्व्यक्तीनां पुनर्विनियोगस्यासांदृष्टिकत्वेन व्रीहेरुत्पादिताङ्गापूर्वत्वेन पुनर्विनियोगो न स्यादिति प्रोक्षितव्रीहेः संस्कार एवाभ्युपेतव्य इति भावः । बर्हिःशब्दस्य यागार्थकत्वे हेतुमाह **विनियुक्तेति** । तस्यैवेति शेषः,

---

**तर्हि**=प्रोक्षणेन व्रीह्यादीनामात्मन्यपूर्वस्वीकारे । **उपयोगान्तरम्**, अपूर्वजनकव्यक्तीनां पुनर्विनियोगादर्शनात् ।

**अविशेषात्**=प्रोक्षणजन्यसंस्काराणां स्वाश्रयसंयुक्तत्वरूपसम्बन्धस्य प्रोक्षितव्रीहिवदन्यत्रापि सत्त्वाविशेषादित्यर्थः ।

**दुर्लङ्घ्यत्वात्**=व्रीहीनवन्तीत्यादिविधेस्तथाविधव्रीहितात्पर्यकत्वादित्यर्थः ।

यथा चाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तस्तदपेक्ष एव तत्संबद्धस्यैव दुःखमुपजनयति, नान्यस्य । न वा तदनपेक्षः । एवमभिमन्त्रणादिसंस्कारा अपि भवन्तो न मनागपि नोपयुज्यन्ते । कथं तर्हि व्रीह्यादीनां संस्कार्यकर्मतेति चेत्, प्रोक्षणादिफलसम्बन्धादेव ।

---

बोधनी ।

च विधिरेव प्रमाणमिति । अत्रोभयसिद्धं निरूपयति—**यथा हि**–इति । श्येनेष्वेकद्वित्रिकायभिचारकर्मजनितसंस्कारो हि कर्त्रात्मसमवेतत्वेन भ्रातृव्यदेहानाधारोऽपि उद्देश्यदेहापेक्षस्तत्सम्बद्धस्य तस्यैवात्मनो मरणादिदुःखं जनयति नान्यस्य, नापि तस्यैव भवान्तरीयसम्बद्धस्येति । दार्ष्टान्तिकेऽतिदिशति–**एवम्**–इति । एवं भवन्तः=उद्देश्यसहकारिणो भवन्त इत्यर्थः । **कथं तर्हि**–इति । व्रीहीनिति द्वितीयया तावत् कर्मत्वमवगम्यते, तच्च प्रोक्षणादिक्रियाजन्यफलभागित्वमन्तरेण नोपपद्यत इति । **प्रोक्षणादि**–इति । प्रोक्षणक्रियायास्तावज्जलसंयोगः फलं, तत्फलं च संस्कारः,

प्रकाशः ।

संस्कारस्य नासांदृष्टिकमित्याह । **यथा चेति** । ननु, व्रीहीन् प्रोक्षतीति द्वितीयाश्रुतेः क्रियाजन्येष्टफलभागित्वं व्रीहीणां प्रतीयते । न चापूर्वस्य व्रीहिवृत्तित्वं, साक्षात्सम्बन्धस्यौत्सर्गिकत्वादित्याह । **कथमिति** । प्रोक्षणक्रियाजन्यजलसंयोगेन धात्वर्थावच्छेदकफलेन साक्षात्सम्बन्धाद् व्रीहेः कर्मत्वमित्याह । **प्रोक्षणादीति** । न च जलसंयोगस्य कृत्स्नव्रीहिष्वभावः, कपिञ्जलन्यायेन व्रीहित्रयजलसंयोगेनैव बहुवचनोपपत्तेः । कालान्तरे कृत्स्नोपादानस्य च कृत्स्नोद्देश्यतामात्रप्रयुक्तत्वात् । अन्यथा शक्त्याधानपक्षेऽपि तुल्यत्वात् । न च विध्यपेक्षितफलभागित्वं द्वितीयाऽर्थः, तदव्युत्पत्तेः ग्रामं गच्छतीत्यादौ तदभावात्, संयोगस्यापि विध्यपेक्षितत्वाच्च । अन्यथा तदनुपयोगापत्तेः । न

प्रकाशिका ।

श्यतयासङ्गतिरपास्ता । **पूर्वोक्तन्यायेन** । व्यक्तिवचनन्यायेन । **अन्यथा शक्त्याधानेति** । सकलव्रीहिजन्यसंयोगाभावेन शक्त्याधानानुपपत्तेरित्यर्थः । उक्तं हि द्वितीयामात्रार्थो वा वैदिकद्वितीयार्थो वा । आद्ये दोषमाह **ग्राममिति** । अन्त्ये दोषमाह । **संयोगस्यापीति** । विधिविषयक्रियाजन्यफलस्यैव विध्यपेक्षितपदार्थत्वादिति भावः । संयोगस्येति प्रतीतौ विशेषणत्वमेव, अन्यथा त्यजिगम्योः पर्यायता स्यात्, संयोगस्य प्रोक्षणसाध्यत्वान्वये च संयोगोपलक्षितकर्मणः साधनत्वेनान्वय इति प्रकाशार्थः, इष्टसाधनताविधिपक्षे क्रियोपलक्षणस्यापीष्टस्य प्रतीतिविशेषणतावदविरोधात्, चिन्तामणौ तु त्यजेः स्पन्दमात्रं शक्यं गमेः स्पन्दविशेष इति वस्तुतो लेखनाद् भिन्नयोः स्पन्दत्वगमनत्वयोः फलानवच्छिन्नयोरेवोभयत्र शक्यतावच्छेदकत्वमिति न पर्यायता-

मकरन्दः ।

**विध्यपेक्षितेति** । जलसंयोगश्चावघातविरोधितया न तथेति भावः । **संयोगस्यापीति** ।

टिप्पणी ।

तथा च बर्हिःशब्दस्य यथाश्रुतार्थकत्वे तस्य विनियुक्तस्य विनियोगादर्शनादसङ्गत्यापत्तेः ॥ **अन्यथा शक्त्याधानेति** । अन्यथा कृत्स्नोद्देश्यत्वस्याप्रयोजकत्वे सकलव्रीहिषु जलसंयोगाभावेन शक्त्याधानानुपपत्तेः कृत्स्नानुपपत्तिरिति । **फलभागित्वं द्वितीयार्थ** इति । यजेतेत्यादौ यागजन्यस्व-

---

**संस्कार्यकर्मेति** । अत्र संस्कार्यपदोपादानं दोषसंघटनाय तथा हि प्रोक्षणजन्येष्टफलवत्त्वस्यैव तादृशकर्मतात्वेन संस्कारस्य तत्रास्वीकारानुपपत्तिः ।

स्यादेतत् यदि क्रियाजन्येष्टफलशालित्वं कर्मत्वं तदेव न । धात्वर्थतावच्छेदकफलवत्त्वस्यैव तत्त्वात् तस्य संयोगादिरूपस्य सत्त्वान्न कर्मत्वहानिरित्याह । **प्रोक्षणेति** ।

बोधनी ।

तेन संस्कारानाधारत्वेऽपि क्रियाफलजलसंयोगभाजां व्रीहीणां कर्मत्वोपपत्तिः, नाप्यनीप्सितकर्मत्वम्, आग्नेयाद्यपूर्वेषु उपयोक्ष्यमाणत्वादित्यर्थः ।

प्रकाशः ।

च जलसंयोगावच्छिन्नक्रियाविशेषः प्रोक्षणमिति कथं तदेकदेशस्य तत्साध्यतान्वय इति वाच्यम् । संयोगस्योपलक्षणत्वेनापदार्थत्वात् । अन्यथा यत्र नाधेयशक्तिः सक्तून् प्रोक्षतीत्यादौ, तत्र का गतिः । वस्तुतो ज्ञानविषययोरिव व्रीहिपुरुषसंस्कारयोः स्वरूपमेव साक्षात्सम्बन्धो, न तु समवाय इति भावः ॥

प्रकाशिका ।

प्रसङ्ग इत्यपि प्रतिभाति । **वस्तुत** इति । तथा च न परम्परासम्बन्धकल्पनागौरवमपीति भावः । न चैवमदृष्टान्तरस्यापि कपालेन साक्षात् सम्बन्धे प्रत्यासत्तितयाऽऽत्मसंयोगकारणत्वस्वीकारो

मकरन्दः ।

तथा च प्रकृतावघातविशेषे तस्य न विरोधित्वं नियमतस्तदनन्तरमेव तद्भावादिति भावः । **संयोगस्येति** । ननु फलस्योपलक्षणत्वे तत्तद्व्यापारमात्रस्यैव धात्वर्थत्वे त्यजिगम्योः पर्यायताऽऽपत्तिः । अवच्छेदकीभूतफलयोर्विभागसंयोगयोर्धात्वर्थाप्रवेशे स्पन्दमात्रस्यैव धात्वर्थत्वादिति चेन्न । व्यापारे ह्युपलक्षणीभूतस्यापि फलस्य प्रतीतौ विशेषणत्वमेव, इष्टसाधनताविधिपक्षे क्रियोपलक्षणस्यापीष्टस्य ज्ञानविशेषणतावत् । तदत्र फलविशिष्टो व्यापारो यदि वाच्यस्तदा शब्दात् फलविशिष्टव्यापारप्रतीतिः । अपरथा फलोपलक्षितव्यापारधीरित्युभयथाऽपि फलांशेऽपि शक्तेः क प्रतीत्यविशेषो येन पर्यायता । विशेषणत्वे प्रकृते कर्मत्वानुपपत्तिरिति । वस्तुतस्तु त्यजेः स्पन्दमात्रं शक्यं, गमेः स्पन्दविशेष इति चिन्तामणिस्वरसात् स्पन्दत्वगमनत्वयोर्भेदे पर्यायत्वशङ्काऽपि न । गमनत्वं कर्मत्वव्याप्यसामान्यमिति लीलावतीस्वरसोऽपि तथा । अन्यथा उत्क्षेपणादेरपि गमनत्वे विभागव्याघातादिति । **वस्तुत** इति । तथा च परम्परासम्बन्धगौरवमपि नेति भावः । न चैवमदृष्टान्तरस्यापि तथात्वे अदृष्टवदात्मसंयोगो हेतुरिति न स्यादिति वाच्यम् । प्रोक्षणाद्यनन्तरं

टिप्पणी ।

गोत्पादकफलभावनाया एव प्रतीतेरन्यत्रापि विध्यपेक्षितत्वमपूर्वस्यैवेति तस्यात्मनिष्ठत्वे व्रीहिपदोत्तरं द्वितीयानुपपत्तेरिति भावः। **तदव्युत्पत्तेरिति**। विध्यपेक्षितफलस्य द्वितीयार्थत्वबोधकशास्त्रस्याभावादित्यर्थः । **संयोगस्यापि विध्यपेक्षितत्वादिति** । विध्यपेक्षितत्वञ्च विधिविषयक्रियाजन्यत्वं मीमांसकनये फलभावनाया एव विध्यर्थत्वेन तस्य विधिवाक्यजज्ञानविषयत्वे विधिविषयत्वमस्त्येवेति संयोगस्य विध्यनापेक्षितत्वे व्रीहिमुद्दिश्य भूम्यादावपि जलादिसेकेनापूर्वोत्पादाद् व्रीहौ जलसंयोगकरणस्य वैफल्यापत्तेरिति। **तत्साध्यतान्वय** इति । तत्साध्यतेति यदुक्तं तदुत्तरमानसबोधाभिप्रायेण, शाब्दे तु द्वितीयार्थस्य धात्वर्थ एवान्वयेन साधनत्वस्यैव प्रतीयमानत्वादिति बोध्यम्। **अपदार्थत्वादिति**। संयोगादिफलानवच्छिन्नव्यापारस्य धात्वर्थत्वे त्यजिगम्यादीनां पर्य्यायता स्यादिति वाच्यम्। त्यजेः स्पन्दमात्रं शक्यं गमेः स्पन्दविशेष इति चिन्तामणिकारलेखनात् ,विभिन्नयोः स्पन्दनत्वगमनत्वयोः फलानवच्छिन्नयोरुभयत्र शक्यतावच्छेदकमिति न पर्य्यायताप्रसङ्गः, अन्यथा फलस्य विशेषणत्व इत्यर्थः । **वस्तुतो ज्ञानविषययोरिति** । ज्ञानविषययोरिव व्रीहिपुरुषसंस्कारयोरपि साक्षादेव सम्बन्ध, एवञ्च परम्परासम्बन्धकल्पनमपि नास्माकम्, अस्तु विध्यपेक्षितफलमेव द्वितीयार्थः, संयोगादिविशेषितव्यापारोऽपि धात्वर्थः, तथापि न किमप्यनुपपन्नमित्याह । वस्त्वितिस्वरूपमेव साक्षात्सम्बन्ध इति । न चैवमदृष्टान्तरस्यापि फलेन साक्षादेव

ननु यदुद्देशेन यत् क्रियते तत्तत्र किञ्चित्करम्, यथा पुत्रेष्टिपितृयज्ञौ। तथा चाभिमन्त्रणादयो व्रीह्याद्युद्देशेन प्रवृत्ता इत्यनुमानमिति चेत्, तन्न। हवि·

बोधनी।

पूर्वपक्षी स्वाभिप्रायमुद्घाटयति—ननु-इति। तत्र किञ्चित्करमित्यत्र संयोगादिकरत्वात् सिद्धसाधनतां निराकर्तुं कालान्तरभाविफलानुकूलं किञ्चिदित्युपस्कर्तव्यम्। अत एवानैकान्तिकं प्रदर्शयन् वक्ष्यति "न हि ते कालान्तरभाविफलानुगुणम्" इति। वैश्वानरेष्टिर्हि पुत्रे तेजस्वितां करोति, पितृयज्ञश्च पितरि तृप्तिमिति। न-इति। अनैकान्तिकतामेव लौकिकोदाहरणेन विशदयति—

प्रकाशः।

पराभिप्रेतमनुमानमुद्भाव्यानैकान्तिकत्वं स्फुटयति—

नन्विति। पुत्रेति। "वैश्वानरं द्वादशकपालं चरुं निर्वपेत् पुत्रे जाते"इति पुत्रजन्मनिमित्तको यागो यस्यायमर्थवादो "यस्मिञ्जात एतामिष्टिं निर्वपति स पूत एव तेजस्वी अन्नादः पशुमान् भवती"ति। पितृयज्ञः=पितृश्राद्धादि। ननु ताभ्यां पितृपुत्रगतमेवापूर्वं जन्यते, विहितक्रियाया यागस्येव कर्तृगतापूर्वजनकत्वात्। न च मुक्ते कर्तरि तददृष्टनाशात् पुत्रादौ फलाभावोपपत्तिरिति वाच्यम्। अदृष्टस्य फलनाश्यतया पुत्रादिफलाभावेनादृष्टानाशात्। अत्राहुः। फलोपपादकमदृष्टं फलाश्रये कल्प्यते, तस्य प्रथमोपस्थितत्वात्, साक्षादुपपादकत्वाच्च। मुक्ते च पितरि श्राद्धेन दोषाभावान्नादृष्टं जन्यते। न चैवं साङ्गश्राद्धस्य निष्फलत्वापत्तिः, अदृष्टोत्पत्तौ स्वरूपसतो दोषस्याङ्गस्य वैकल्यात्। अत्र किञ्चित्करत्वमात्रं साध्यम्, अतीन्द्रियत्वेन विशेषितं वा ?। आद्ये संयोगजननेन सिद्धसाधनम्, अन्त्ये च वह्न्यावपूर्वहेतुहविःसंयोगेन हविस्त्यागेनानैकान्तिकमित्याह। हविरिति।

प्रकाशिका।

विरुद्ध इति वाच्यम्। संस्कृतो व्रीहिरितिवत् तत्र स्वरूपसम्बन्धकल्पकप्रतीत्यभावात्। अत एवोपनयनादिजन्यादृष्टरूपसंस्कारस्यापि माणवकशरीरवृत्तित्वं संस्कृतो माणवक इति प्रतीतेः। पुत्रेष्टिपदस्य पुत्रजन्मार्थकेष्टिपरत्वे न प्रकृतसङ्गतिरिति पुत्रेष्टिपदं जातेष्टिपरमित्याह। वैश्वानरमिति। तस्य प्रथमेति। भोगनियामकत्वेन सामान्यतो भोगसमानाधिकरणापूर्वसिद्धौ तदपूर्वं कुतो जायतामित्यपेक्षायां जातेष्ट्यादिविधिप्रवृत्त्या भोगाधिकरणस्य प्रथमोपस्थितत्वात् तदा कर्तुरनुपस्थितेरित्यर्थः। साक्षादिति। साक्षात्सम्बन्धेनेत्यर्थः। दोषस्येति। फलाश्रयगतस्ये-

मकरन्दः।

संस्कृतो व्रीहिरिति व्यवहारात् संस्काररूपादृष्टस्य तथात्वेऽपि अदृष्टान्तरस्य साक्षात् सम्बन्धत्वे मानाभावादिति भावः। अत एवोपनयनादिसंस्कारस्य माणवकशरीरनिष्ठत्वं, संस्कृत इति व्यवहारादिति बोध्यम्। प्रकृतसंलग्नतया पुत्रेष्टिपदं जातेष्टिपरमित्याह। वैश्वानरमिति। तस्येति। पितृस्वर्गकाम इत्यादिना पित्रादेः प्रथमोपस्थितत्वादिति भावः। साक्षादिति। साक्षात् सम्बन्धेनोपपादकत्वादित्यर्थः।

टिप्पणी।

सम्बन्धोऽस्माकं प्रत्यासत्तितयाऽऽत्मसंयोगकल्पनमिति वाच्यम्। संस्कृतो व्रीहिरितिवत् संस्कृतः स्वर्ग इत्यादि प्रत्ययादर्शनात् नान्यत्र स्वरूपकल्पनम्। संस्कृतो माणवक इत्यादिदर्शनात्तत्रोपनयनादिना संस्कारादीनां माणवकशरीरवृत्तित्व कल्पत एवेति आत्मना तु समवाय एवेति बोध्यम्। वैश्वानरं द्वादशकपालमिति पुत्रेष्टिपदस्य पुत्रजन्मनिमित्तेष्टिपरत्वे प्रकृतासङ्गतेः, पुत्रजन्मजन्यसुखादिरूपफलस्य कर्तृगतत्वेन तन्निष्टिजनितापूर्वस्य कर्तर्येव सिद्धान्तितत्वात्-अतस्तद् व्याचष्टे वैश्वानरमिति। साक्षादुपपादकत्वाच्चेति। साक्षात्सम्बन्धेन फलोपपादकत्वादित्यर्थः।

स्त्यागादिभिरनैकान्तिकत्वात् । न हि ते कालान्तरभाविफलानुगुणं किञ्चिद् हुताशनादौ जनयन्ति । किं वा न दृष्टमिन्द्रियलिङ्गशब्दव्यापाराः प्रमेयोद्देशेन प्रवृत्ताः प्रमातर्यैव किञ्चिज्जनयन्ति, न प्रमेय इति । कृषिचिकित्से अप्येवमेव स्यातामिति चेन्न । दृष्टेनैव पाकजरूपादिभेदेनोपपत्तावदृष्टकल्पनायां प्रमाणाभावात् । तथा च लाक्षारसावसेको व्याख्यातः । अत एव बीजविशेषस्याऽऽपरमाण्वन्तभङ्गेऽपि परमाणूनामवान्तरजात्यभावेऽपि प्राचीनपाकजविशेषादेव विशिष्टाः परमाणवः, तं तं कार्यविशेषमारभन्ते । यथा हि कलमबीजं यवादेः, नरबीजं वानरादेः, गोक्षीरं माहिषादेर्जात्या व्यावर्त्तते, तथा तत्परमाणवोऽपि मूलभूताः

---

बोधनी ।

किञ्चित्-इति । प्रमेयगतं तु प्राकट्यं निराकरिष्यत इति भावः । कृषिः-इति । ते अपि हि प्रोक्षणादिवददृष्टरूपसंस्काराधानद्वारेण कार्यकरे स्यातामिति । न इति । परिणतिर्निष्पत्तिः सहकारीति वा । इममेव प्रकारमुदाहरणान्तरेष्वप्यतिदिशति-तथा च — इति । लाक्षारसावसिक्तबीजपूरादिबीजजनिततत्कुसुमारुणिमापि न संस्काराधानतद्द्वारा लाक्षारसावसेकेन जायते । किन्तु दृष्टेनैव रूपविशेषजननद्वारेणेति व्याख्यातमिति । तेनैतन्निरस्तं यदाह महाव्रतः—

कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते ।
शक्तिराधीयते तेन काचित्तां किं न पश्यसि ॥

यदुक्तमन्यथा कृष्यादयो दुर्घटाः प्रसज्येरन्निति तदुत्तरमुत्तरमर्धं संग्रहस्य व्याचष्टे-अत एव-इति । यत एव दृष्टे सत्यदृष्टकल्पना न न्याय्या अत एव यवबीजारम्भकाः परमाणवः पूर्वं कलमबीजारम्भकपरमाणुव्यावृत्तैर्यैः पाकजविशेषैः कलमबीजविलक्षणं यवबीजमारब्धवन्तः प्राचीनैस्तैरेव तज्जातीयैरेव वा विशिष्टाः परमाणवो यवाङ्कुरमेवारभन्ते नान्यमिति । ननु व्यावर्तकगुणविशेषसिद्धौ हि त एव विशेषका भवेयुः, तत्सिद्धिरेव कुतस्त्येत्यत आह—यथा हि—इति । यथा हि तदवयविनां जात्या व्यावृत्तिस्तथा तदारम्भकपरमाणूनां गुणविशेषैर्व्यावृत्तिरिति । दृष्टा

प्रकाशः ।

किं वा नेति । प्राभाकरं प्रत्यनैकान्तिकत्वम् , भाट्टानां प्रमेये ज्ञातताजननात् । कृषीति । प्रोक्षणवदपूर्वद्वारैवानागतकार्यहेतू स्यातामित्यर्थः । दृष्टेनैवेति । पाकजानामावश्यकतया तत एव नियतकार्योपपत्तेरित्यर्थः । ननु बीजपूरलाक्षारसावसेकस्याशुतरविनाशिनः कालान्तरीयारुणपुष्पजनकत्वं तदाधेयशक्त्या विना न निर्वहतीत्यत आह । तथा चेति । तत्रापि तत्साहित्येनोत्पन्नपाकजादेरावश्यकत्वात् तथेत्यर्थः । अत एव शाल्यादिनियतकार्यारम्भान्यथानुपपत्त्या परमाणावपि न तत्कल्पनमित्याह । अत एवेति । कार्यसजातीयपाकजवत्त्वं परमाणूनामप्याव-

प्रकाशिका ।

ति शेषः । प्राभाकरं प्रतीति । इदं च तन्निष्ठकिञ्चिज्जनकमित्यत्र यदि जनकत्वं प्रयोजकत्वमात्रं तदा भट्टानामपि प्रमाज्ञानेन ज्ञाततजननात् यथाश्रुताऽसंगतेः । वस्तुतः सामान्यत एव व्यभिचा-

टिप्पणी ।

तस्य प्रथमोपस्थितत्वादिति । फलनियामकतया सामान्यतो फलसमानाधिकरणो दृष्टसिद्धौ कथन्तदित्याकाङ्क्षायां जातेष्ट्यादिविधिप्रवृत्तेः, तत्र तेन विधिनाऽपूर्वे बोधिते फलाश्रयस्य कर्त्रपेक्षया प्रथमोपस्थितत्वात्तद्गतापूर्वमेव सिद्ध्यति। दोषाभावादिति। मिथ्याज्ञानादिरूपदोषाभावादित्यर्थः॥

---

एवमेव । प्रोक्षितवदपूर्वद्वारैवानागतकार्यहेतू । दृष्टेनैव = अवश्यक्लृप्तेनैव । लाक्षारसावसेक इति । आशुविनाशिलाक्षारसावसेकितबीजपूरेण कालान्तरारुणपुष्पजननस्थलेऽपि न

पाकजैरेव व्यावर्त्त्यन्ते। न ह्यस्ति सम्भवो गोक्षीरं सुरभि मधुरं शीतं, तत्परमाणवश्च विपरीताः। तस्मात्तथाभूताः पाकजा एव परमाणवो यथाभूतैरेव आद्यातिशयोऽन्त्यातिशयोऽङ्कुरादिर्वेति किमत्र शक्तिकल्पनया?। कल्पादावप्येवमेव। इदानीं बीजादिसन्निविष्टानामस्मदादिभिरुपसंपादनं तदानीन्तु विभक्तानामदृष्टादेव केवलान्मिथः संसर्ग इति विशेषः। न च वाच्यमिदानीमपि तथैव किं न स्यात्? यतः कृष्यादिकर्म्मोच्छेदे तत्साध्यानां भोगानामुच्छेदप्रसङ्गात्। अव्य-

बोधनी।

न्तमात्रेणापरितुष्यन् प्रमाणमाह—न हि—इति। तत्तदवयविषु दृश्यमानविलक्षणगुणा एव तत्तदारम्भकपरमाणुषु गुणविशेषमावेदयन्ति। अन्यथा कार्येऽपि न स्युः कारणविशेषगुणपूर्वकत्वात् कार्थविशेषगुणानामिति। उपसंहरति—तस्मात्—इति। भूमावुप्तबीजस्याङ्कुरजननानुगुणमवान्तरकार्यमतिशयः, तत्रोच्छूनत्वमाद्यातिशयः, उच्छूनतमत्वमन्त्यः यतोऽङ्कुरो जातः, उच्छूनतरत्वलक्षणस्तु मध्यमः सम्पातगृहीत इति। ननु महाप्रलये सकलकार्यविनाशाभ्युपगमात्—पाकजविशेषा अपि विनश्येयुः, कथं तदानीं परमाणवो नियतजातीयकार्यमारभेरन्नित्यत्राह—कल्पादौ—इति। कार्यदर्शनीयस्य पाकजविशेषस्यादृष्टसंस्कारवत् प्रलयेऽप्यविनाशः। यद्वा, तदानीमप्यग्न्यादिपरमाणुसंयोगात् पाकजविशेषोत्पत्तिरिति भावः। यद्युभयत्राविशेषः, तर्हीदानीमपि कृषीवलापेक्षा न स्यादित्यत्राह—इदानीम्-इति। बीजादिरूपेण सन्निविष्टानामारब्धबीजमृत्सलिलाद्यवयविनां परमाणूनां यथाङ्कुराद्यारम्भकभावस्तथोपसर्पणमस्मदादिभिरिदानीमिति। कथं तर्हि कल्पादौ कृषीवलाद्यभावे बीजादिसमवधानमित्यत्राह—तदानीम्—इति। यथोक्तम् "अणुमनसोश्चाद्यं कर्मादृष्टकारितम्" इति। इदानीमप्यदृष्टादेवोपपत्तेः किं कृषीबलेनेत्यत्राह—न च—इति। हेतुमाह—कृष्यादि—इति। तत्र कृषीवलस्य कायसंक्षोभसाध्यानां दुःखात्मकानां भोगानां कृष्यादिकर्मलभ्यमृत्यादिभोगानां चोच्छेदः स्यात्। अव्यवस्थानामाप्रसङ्गातिप्रसङ्गौ, सा च स्यात्। कृतकृषेरपि सस्याधिगमो न स्यात्, स्याच्चेतरस्येत्यर्थः। यद्वा, अदृष्टस्यैव हेतुत्वे केवलं कृषीवलभोग एव न स्याद् यस्य व्रीहितण्डुलादयोऽपि दृष्टहेतवो न स्युरिति। अयमत्र भावः, यत्र दृष्टकारणानि सन्ति तत्र तदुपहारेणैवादृष्टस्योपयोगः न स्वतन्त्रस्य, तेन हेतुत्वमवश्यमास्थेय-

प्रकाशः।

श्यकमिति न तत्कल्पनं, येन कल्पनायामविशेषः स्यादित्याह। न ह्यस्तीति। शीतमित्युपष्टम्भकजलाभिप्रायम्। सौरभशैत्ययोरेकाधारत्वाभावात्। आद्यातिशयो द्व्यणुकम्, अन्त्यातिशयोऽङ्कुरादिरित्यभेदेनान्वयः। अन्त्यातिशयो वाऽङ्कुरादिरिति पाठेऽन्त्यातिशयोऽङ्कुरादिसमवायिकारणमित्यर्थः। यद्वा आद्यातिशयो बीजस्योच्छूनत्वम्। अन्त्यातिशय उच्छूनतरत्वम्। प्रलये कार्यद्रव्याभावेऽपि परमाणुषु नियतकार्योन्नीतस्वभावानां पाकजानामात्मन्यदृष्टस्येव सद्भावात्तत एव सर्गादावपि नियम इत्याह। कल्पादाविति। उपसंपादनं सहकारिसमवधानोत्पादनम्। न चेति। यत इति। यद्यपि कृष्यादिसाध्यभोगयस्मदादिव्यापारं विना सर्गादावङ्कुरोत्पत्तिरिति शेषः। यत इति। यद्यपि कृष्यादिसाध्यभोगहेत्वदृष्टबलात् कृषिसंभवेऽपि सर्गादाविवेदानीमपि कृष्यादि विनाऽङ्कुरः स्यादेव, तथापि तथादर्शन-

बीजपूरेऽतिशयः कल्प्यते लाक्षारसावसेकसाहित्योत्पन्नपाकजादेव निर्वाहादित्यर्थः। कल्पादावप्येवमेवेति। प्रलये कार्यद्रव्याभावेऽपि नियतकार्योन्नीतस्वभावानां पाकजानामात्मन्यदृष्टस्येव सद्भावात् तेन यथेदानीं नियमस्तथा तत एव सर्गादावपि।

उपसम्पादनम्=सहकारिसमधानोत्पादनम्। तथैव यथाऽस्मदादेर्व्यापारं विनापि केवलाददृष्टादेव कार्यनियमः सर्गादौ तथेत्यर्थः।

**वस्थाभयाच्च अदृष्टानि कर्माणि दृष्टकर्मव्यवस्थयैव भोगसाधनानीत्युन्नीयते । तस्मात्, पाकजविशेषैः संस्थानविशेषैश्च विशिष्टाः, परमाणवः कार्यविशेषमार-**

---

बोधनी ।

मिति । दृष्टकर्मव्यवस्थयैवादृष्टानि भोगसाधनानीत्युपसंहरति–**तस्मात्**—इति । पाकजादय इत्या-दिशब्दव्याख्यानं संस्थानविशेषैरिति । अत्र पाकजविशेषः पूर्वबीजादिसजातीयाङ्कुरारम्भे हेतुः । संस्थानविशेषः कार्यसन्निवेशविशेषहेतुरिति । तेषु पाकजविशेषेषु तत्कारणपरम्परायां च न

प्रकाशः ।

बलात् कृष्यादिहेतुत्वदृष्टस्यैव तत्प्रतिबन्धकत्वमुन्नीयते। यद्वा, सर्गाद्यङ्कुरविजातीय एवेदानीमङ्कुरो यस्य कृष्याद्यपेक्षा । अत एव वैजात्याभावे दूषणमाह । **अव्यवस्था इति** । व्यभिचारेण कृष्यादीनां कारणत्वव्यवस्थैव न स्यादित्यर्थः । यद्वा भोगानियमप्रसङ्गाच्चेत्यर्थः । **अदृष्टानीति** । कृष्यादि-जन्याङ्कुरजनकमदृष्टं दृष्टकृष्यादिद्वारैव हेतुरित्यर्थः । **संस्थानेति** । संस्थानपदं संयोगमात्रपरम् । परमाणावषयवसंयोगाभावादित्येके । क्वचित् पाकविशेषं, क्वचित्परम्पराजन्ये समानजातीयरूपादौ शरीरादौ संस्थानविशेषमपेक्षन्ते परमाणव इत्यन्ये । एतच्च उभयमुपलक्षणम् । तुल्यपाकजसंस्थाने

प्रकाशिका ।

रो भट्टानामप्यतीतादिस्थले ज्ञाततानुत्पत्तेः । **तत्प्रतिबन्धकत्वमिति** । तथा च कृष्यादिसाध्य-भोगेन तददृष्टनाशे प्रतिबन्धकाभावादङ्कुरोत्पत्तिरित्यर्थः । नन्वेवमपि कृष्यादेरनुपयोगे बीजं वि-नाप्यङ्कुरः स्यादित्याक्षेपस्तदवस्थ एवेत्यरुचेराह । **यद्वा सर्गादीति** । न चैवमपि सर्गादिस-जातीय एवाङ्कुर इदानीमुत्पद्यतां बीजादिकं विनापीति वाच्यम् । तज्जातीयं प्रति सर्गादिकालस्य कारणत्वादिदानीं च तदभावात्। **अत एवेति** । अत एव वैजात्ये तात्पर्यमित्यर्थः । ननु मूले न वैजात्यवार्तेति तत्परतया व्याख्यानमयुक्तमत आह **यद्वेति** । तत्कृत्यजन्यत्वे तेनाङ्कुरेण तस्यैव भोग इत्यत्र नियामकाभावादित्यर्थः । यद्यपि तददृष्टोत्पादितत्वमेव नियामकं, तथापि तस्यापि दृष्टमेव कृष्यादिकं द्वारमित्याशयः । एवं च प्रथमव्याख्यानपक्षेरव्यवस्थाभयादेवमुन्नीयत इति

मकरन्दः ।

**यद्वा सर्गादीति** । तत्सामग्रीसत्त्वात् सर्गाद्यङ्कुरजातीयोऽपीदानीमुत्पद्यतामित्यत्र नेदं बाधकम् । तथापीदानीन्तनाङ्कुरत्वावच्छेदेनैव कृष्यादिहेतुत्वान्न तथेति भावः ॥ ननु मूले वैजा-त्यवार्त्ताऽपि नेति तत्परतया व्याख्यानमलग्नकमित्यपरितुष्यन्नाह । **यद्वेति** । कृष्यादिकं विना

टिप्पणी ।

**तत्प्रतिबन्धकत्वमुन्नीयत इति** । इदानीन्तस्याङ्कुरादिप्रतिबन्धकत्वमित्यर्थः । तथा च कृष्या-दिकरणे कृष्यादिजन्यभोगेन तद्धेतुभूतादृष्टनाशे प्रतिबन्धकाभावादङ्कुरोत्पत्तिर्भवतीति भावः ॥ **यद्वा-सर्गाद्यङ्कुरेति** । कृष्यादेस्तूपयोगो बीजं विनाप्यङ्कुरः स्यादित्याक्षेपस्तदवस्थ एवेत्यरुचे-राह । **यद्वेति** । सर्गादिसजातीयाङ्कुरस्य तत्प्रतिकारणीभूतकालविशेषस्याभावान्नेदानीमापत्ति-सम्भवः । **अत एव वैजात्याभाव इति** । अत एव वैजात्ये तात्पर्य्यमिति भावः । व्यभि-चारेण कृष्यादीनां कारणत्वव्यवस्थैवेति । कारणत्वव्यवस्थापिका चाङ्कुरार्थिनां सर्वेषां कृष्यादि-प्रवृत्तिरेवेति ॥ **यद्वा भोगानियमप्रसङ्गाच्चेति** । तत्कृत्यजन्यत्वे तेनाङ्कुरेणास्यैव भोगो नान्यस्येति नियमो न स्यादित्यर्थः । ननु सुखादावपि तददृष्टोत्पादितत्वमेव नियामकमित्याश-ङ्कयाह । **मूले दृष्टानीति** । **तद्व्याकरोति** कृष्यादीति । तथा च तददृष्टजत्वेन तदी-यत्वादिव्यवहारः, तद्भोगसाधनत्वादिव्यवहारो वा, न तददृष्टजत्वमज्ञात्वा, तज्ज्ञानञ्च न भोग-

भन्ते। ते च तेजोऽनिलतोयसंसर्गविशेषः, ते च क्रियया, सा च नोदनाभिघातगुरुत्ववेगद्रवत्वादृष्टवदात्मसंयोगेभ्यो यथायथमिति न किञ्चिदनुपपन्नम्। निमित्तभेदाश्च पाके भवन्ति। तद् यथा हारीतमांसं हरिद्राजलावसिक्तं हरिद्राग्निप्लुष्टमुपयोगात् सद्यो व्यापादयति, दशरात्रोषितं कांस्ये घृतञ्चापि विषायते, ताम्रपात्रे पर्युषितं क्षीरमपि तिक्तायते इत्यादि ॥ ११ ॥

यत्र तर्हि तोये तेजसि वायौ वा न पाकजो विशेषस्तत्र कथमुद्भवानुद्भव-

बोधनी।

क्वचिद् दृष्टकारणव्यतिरेकेण शक्तिरङ्गीकार्येत्याह—ते च–इति। नोदनादीनां परस्परनिरपेक्षाणामेव क्रियाहेतुत्वमिति दर्शितम्। यथायथम्–इति। क्वचित्तु पाकजविशेषस्याविशेषेऽपि मरणादिरूपकार्यविशेषदर्शनात् तदतिरिक्तशक्तिभेदोऽङ्गीकार्य इत्यत्राह–निमित्तभेदाश्च–इति। पाकजानां निमित्तकारणानि भिन्नानि दृश्यन्ते, तेन निमित्तभेदहेतुकः पाकजेष्वपि विशेषोऽस्ति यतः कार्यविशेष इति भावः। निमित्तभेदं कार्यविशेषं च निदर्शयति। तद्यथा–इति। यदाह वाहटः—

हारीतमांसं हारिद्रशूलकप्रोतपाचितम्।
हरिद्रावह्निना सद्यो व्यापादयति चर्वितम्॥ इति।

सर्पिःक्षीरयोश्च पार्थिवत्वात् पाकजोत्पत्तिः सम्भवतीति ॥ ११ ॥

अस्तु पार्थिवेषु पाकजविशेषादेव कार्यविशेषः, अबादिषु तदभावाच्छक्तिरङ्गीकार्येत्याह–यत्र तर्हि–इति। केचिदाप्याः परमाणव उद्भूतद्रवत्वं कार्यमारभन्ते, केचित्त्वनुद्भूतद्रवत्वं करकादिकम्। तैजसाश्चोद्भूतस्पर्शमुद्भूतरूपमनुद्भूतस्पर्शमुद्भूतरूपं च प्रदीपं चक्षुर्दर्शनं चारभन्ते। वायवीयाश्च स्तिमितादीति। किञ्च, पार्थिवेष्वपि केषुचित् पाकजाभावेऽपि कार्यविशेषः

प्रकाशः।

व्राह्यादावदृष्टविशेषस्यापि तैरपेक्षणात्। तर्हि पाकजोत्पत्त्यर्थमप्याधेयशक्तिरभ्युपेयेत्यत आह। ते चेति। ननु हारीतमांसं हरिद्राजलावसिक्तं हरिद्रानलप्लुष्टं सद्यो भोक्तारं व्यापादयतीत्युभयवादिसिद्धम्। तत्रावश्यं तेन शक्तिराधेया। न चावश्यकात् पाकजादेवोत्पत्तिः। तस्य पलालानलसाधितस्याव्यापादनेनानैकान्तादित्यत आह। निमित्तेति। पाकजभेदमात्रं न हेतुः, किं तु निमित्तभेदेनासादितः पाकजविशेष इत्यर्थः। अग्नौ सहकारित्वमुक्त्वा सौरालोके तदाह। दशरात्रेति। ताम्रपात्र इत्यनेन पाकजविशेषस्य प्रत्यक्षत्वं वदता शक्त्यपेक्षया तत्र विनिगमकमुक्तम्।११।

उद्भवानुद्भवौ विशेषगुणप्रत्यक्षत्वाप्रत्यक्षत्वप्रयोजकौ तद्वृत्तिजातिभेदौ। पाकजवत्यवान्तर

प्रकाशिका।

मूलयोजना। द्वितीयव्याख्यानपक्षे चादृष्टस्यैव भोगनियामकत्वमस्त्वित्याशङ्कया "मदृष्टानीति" मूलमित्यवधेयम्॥ ११ ॥

उद्भवानुद्भवाविति। इदं च मतभेदेन। एकमत उभयोर्जात्योरनङ्गीकारादिति।

मकरन्दः।

उत्पन्नाङ्कुरेणास्यैव भोगो जननीय इत्यत्र नियामकाभावादित्यर्थः। यद्यपि तददृष्टोत्पादितत्वमेव नियामकमन्यथा सर्गाद्यङ्कुरे का गतिः। तथापि पूर्वोक्ते तात्पर्यम् ॥ ११ ॥

जातिभेदाविति। मतभेदेन। एकमते उभयजात्यनङ्गीकारात्।

टिप्पणी।

मन्तरेणेति भोगात् पूर्वं तादृशव्यवहारो न स्यात्। एवं प्रेक्षावतां बहूनां भोगात् पूर्वं तत्तद्वस्तूपादानव्ययादौ कलहमापद्येत। इदानीमदृष्टस्य दृष्टद्वारैव हेतुत्वं स्वीकरणीयमिति भावः ॥११॥

तद्वृत्तिजातिभेदाविति। व्यापकजातिमति व्याप्यैकजातिशून्ये तद्विरुद्धजातिनियमा-

द्रवत्वकठिनत्वादयो विशेषाः ? कथं वा पार्थिवे प्रतिमाऽऽदौ प्रतिष्ठाऽऽदिना संस्कृतेऽपि विशेषाभावात् पूजनादिना धर्मो, व्यतिक्रमे त्वधर्मोऽप्रतिष्ठिते तु न किञ्चित् ? । न च तत्र यजमानधर्मेणान्यस्य साहायकमाचरणीयम् । अन्यधर्मस्यान्यं प्रत्यनुपयोगात्, उपयोगे वा साधारण्यप्रसङ्गात् ॥

अत्रोच्यते—

**निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ॥**

---

बोधनी ।

प्रतिमादिषु दृश्यत इत्याह—**कथं वा**—इति । विशेषाभावात्=पाकजदृष्टरूपादिविशेषाभावादित्यर्थः । ननु प्रतिष्ठादिजनितेन प्रतिष्ठापकात्मसमवेतेनैव धर्मेण सहकृतः पूजादिर्धर्मं तद्व्यतिरेकश्चाधर्मं प्रसूते, ततश्च न प्रतिमादावतिशयोऽङ्गीकार्य इत्याशङ्क्याह—**न च**—इति । साहायकं=सहायकारित्वं यजमानः=प्रतिष्ठापकः, अन्यः=पूजकादिः । **उपयोगे वा**—इति । क्वचिदन्यधर्मस्यान्यधर्मं प्रत्युपयोगाङ्गीकारे नियामकाभावात् सर्वस्य धर्माधर्मजातस्य सर्वपुरुषसाधारण्यप्रसङ्ग इति ।

अर्द्धद्वयेन शङ्काद्वयं परिहरति—**निमित्तभेद**—इति । निमित्तभेदः=सहकारिभेदः, तस्मा-

प्रकाशः ।

विशेषानुपपत्त्या शक्तिरास्थेयेत्यत आह । **पार्थिवेति** । नन्वन्यधर्मस्यान्यत्र सहकारित्वम्, यथा पात्राय दानेऽधिकपुण्यम्, धर्मविशेषवत्त्वस्य पात्रत्वादित्यत आह । **उपयोगे वेति** । यजमानधर्मस्य भोगादिना क्षये पूजकस्य धर्मानुत्पादप्रसङ्गात् । तत्सत्त्वेऽपि चण्डालादिस्पर्शेनेनापूज्यत्वाच्चेति ।

**निमित्तभेदेति** । यद्यप्युद्भूतानुद्भूतपरमाणुरूपादेव तत्कार्य्यमुद्भूतमनुद्भूतं चोत्पद्यते इति निमित्तभेदस्तत्राप्रयोजकस्तथापि साक्षात्कारप्रयोजकतयोद्भूतत्वकल्पनात् परमाणुगुणेषु तदभावात् तत्रास्तीत्यदृष्टविशेषादेवानुद्भूतरूपादप्युद्भूतरूपं जायते इत्यभ्युपेयम् । न च या-

प्रकाशिका ।

केचित् । वस्तुतो व्यापकजातिमति तद्व्याप्यैकजातिशून्ये गुणे तद्विरुद्धजातिनियमाद् द्वे अपि जाती साक्षात्कारेऽननुगतत्वादनुद्भूतत्वाभाव एव कारणम् । मिश्रा अपि प्रत्यक्षालोके चिन्तामणिं तथैव व्याख्यातवन्त इति यथाश्रुतमेव सम्यक् । **उपयोगे चेतीति** । प्रतिष्ठिताप्रतिष्ठितयोश्चण्डालस्पृष्टास्पृष्टयोश्च तददृष्टवदात्मसंयोगाविशेषादविशेषप्रसङ्ग इति मूलार्थः । **तत्सत्त्वेऽपीति** । मन्मते तु समानाधिकरणेन तेन शक्तिरेव नाश्यत इति भावः । परमाणुगुणेष्वित्युपलक्षणं व्यणुकगुणेष्वपीति

मकरन्दः ।

**यजमानेति** । तथा च प्रतिष्ठिताप्रतिष्ठितयोः साधारण्यप्रसङ्गः । चण्डालस्पृष्टास्पृष्टयोरपि स एव प्रसङ्ग इति मूलार्थः । **तत्सत्त्वेऽपोति** । तथा च तत्स्पर्शस्य तन्निष्ठाधेयशक्तिनाशकत्वमिति भावः । परमाणुगुणेष्वित्युपलक्षणं, व्यणुकगुणेष्वपीति द्रष्टव्यम् । **अनुद्भूतरूपादपीति** । व्यणु-

टिप्पणी ।

द् द्वे अपि जाती प्रत्यक्षे त्वनुगमानुरोधादनुद्भूतत्वाभावकूटस्यैव कारणत्वमिति भावः । **पाकजवत्त्वयान्तरेति** । शक्तिभिन्नविशेषानुपपत्त्येत्यर्थः । **परमाणुरूपादेव तत्कार्य्यमिति** । तस्मात् प्रतिमायामेव शक्तिकल्पनमुचितम्, तथा सति समानाधिकरणेनास्पृश्यस्पर्शेन सैव नाश्यत इत्यपूज्यत्वनिर्वाह इति भावः । **उद्भूतरूपं जायत इत्यभ्युपेयमिति** । तथा चात्र निमित्तभेदस्यैव प्रयोजकत्वं निमित्तभेदस्य मूलेऽदृष्टविशेषे परिगणनात् । नचैवं महत्त्व-

---

**साधारण्यप्रसङ्गात्** । तत्राधेयशक्तिः कल्प्येति शेषः ।

**देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥१२॥**

उपनायकादृष्टविशेषसहाया हि परमाणवो द्रव्यविशेषमारभन्ते। तेषां विशेषादुद्भवविशेषाः प्रादुर्भवन्ति। यथा स्वभावद्रवा अप्यापो निमित्तभेदप्रतिबद्धद्रवत्वाः कठिनं करकाद्यमारभन्त इत्यादि स्वयमूहनीयम्। प्रतिमाऽऽदयस्तु तेन तेन विधिना सन्निधापितरुद्रोपेन्द्रमहेन्द्राद्यभिमानिदेवताभेदास्तत्र तत्राऽऽराधनीयतामासादयन्ति, आशीविषदष्टमूर्च्छितं राजशरीरमिव विषापनयन-

बोधनी।

देवोद्भवादिविशेषोपपत्तिः प्रतिष्ठादिजनितापूर्ववदात्मसंयोगादेव देवतानां सन्निधानादाराधनीयाः—प्रतिमादय इति स्वमतेन परिहारः। परमतेन तु तत्र देवतासदृशप्रतिमादर्शनजनितेन प्रत्यभिज्ञानेन, पूर्वैः प्रतिष्ठापिता सेयं प्रतिमेति वा प्रत्यभिज्ञानेन सहकारिभेदेनार्थक्रियाविशेषः संभवतीति॥

पूर्वार्द्धं तावद् विवृणोति—**उपनायक**—इति। दृष्टकारणसंयोजनद्वारेणादृष्टस्योपकारकत्वात् परमाणूनां परस्परसंयोजकक्रियाहेतुरदृष्टमुपनायकादृष्टमुच्यत इति। ततः किमित्यत आह—**तेषाम्** इति। पाकजविशेषाभावेऽपि तत्तद्विशेषसहकृतानां परमाणूनां विशेषादेव कार्यविशेषप्रादुर्भाव इति अतिशयान्तरकल्पनातः क्लृप्तादेवादृष्टविशेषात् कार्यविशेषकल्पना साधीयसी, दृष्टं च केवलादृष्टस्यैव सामर्थ्यमग्न्यूर्द्ध्वज्वलनादिष्विति भावः। तथापि चेदपरितोषस्तत्राह—**यथा इति**। दृष्ट एव वैद्युताग्निसंयोगादिनिमित्तभेदस्तत्र तत्रानेक इति। उत्तरमर्द्धं व्याचष्टे—**प्रतिमादयस्तु**—इति। तेन तेनेति तत्तच्छास्त्रोक्तेनेत्यर्थः। पूर्वमनाराधनीयस्यैव पश्चादाराधनीयत्वे दृष्टान्तः—**विषदष्टेति**। मूर्च्छामूषितचैतन्ये हि वपुषि व्युत्क्रमेण प्रत्यवायाभावेऽपि पश्चादाराधनीयो राजेति। ननु

प्रकाशः।

ऽवयविरूपवृत्तिजातिः सा परमाणुरूपवृत्तिरिति व्याप्तिः। चित्रत्वजातौ व्यभिचारात्। उद्भवानुद्भवादय इत्यतद्गुणसंविज्ञानबहुव्रीहिणा कठिनकरकाविद्युदादीनां संग्रह इत्यप्याहुः। देवता इत्यत्राराधनीयतामासादयन्तीत्यध्याहार्यम्। **उपनायकेति**। परमाणुक्रियाजनकमदृष्टमित्यर्थः।

प्रकाशिका।

द्रष्टव्यम्। अनुद्भूतरूपाद्=द्व्यणुकनिष्ठात्। उद्भूतरूपं त्र्यणुकगतम्। **अतद्गुणेति**। न चैवमुद्भूतानुद्भूतभेदाः प्रादुर्भवन्तीत्यभेतनमूलेन तयोरुपसंग्रहविरोध इति वाच्यम्। ताभ्यां भेदो येषां विद्युदादीनामिति तदर्थात्, अभेतनमूले व्यधिकरणबहुव्रीहिकल्पनं परमाण्वादौ च निष्प्रमाणकोद्भूतरूपस्वीकर्तृमतावलम्बनं चायुक्तमित्यरुचेराह। **इत्यप्याहुरिति**। न चैवं महत्त्वस्य चा-

टिप्पणी।

स्य साक्षात्कारहेतुत्वं न स्यात्, उदभूतरूपमात्रस्यैवानतिप्रसक्तत्वादिति वाच्यम्। द्रव्यसामान्यसाक्षात्कार एवात्मादिस्थले महत्त्वस्य कारणत्वात् तदुत्कर्षेण चाक्षुषोत्कर्षाच्चेति भावः। परमाणावुद्भूतरूपं स्वीकृत्य यद्यपीत्यादिशङ्कामुद्धरति। **उद्भवानुद्भवादय इति**। तथा च तत्र परमाणुरूपानियमसम्भवेऽपि करकाविद्युदादिकाठिन्ये निमित्तभेदं विनाऽगतिरेवेति भावः। अपीत्यस्वरससूचनाय। स चोद्भूतत्वानुद्भूतत्वे हि प्रत्यक्षाप्रत्यक्षाभ्यां कल्पनीये

---

**देवताः** आराधनीयतामासादयन्तीति शेषः।

**उपनायकादृष्टेति**। उपनायकं परमाण्वादिक्रियाजनकम् तेन चावश्यकता तत्र दर्शिता तथाचावश्यकात् तस्मादुद्भवानुद्भवादिनिर्वाह आधेयशक्तिर्न कल्प्येति भावः।

**निमित्तभेदात्**=अदृष्टविशेषात् अयञ्च प्रतिरोधे हेतुः।

विधिनाऽऽपादितचैतन्यम् । सन्निधानञ्च तत्र तेषामहङ्कारममकारौ, चित्रादाविव स्वस्वाद्दृश्यदर्शिनो राज्ञ इति नो दर्शनम् । अन्येषान्तु पूर्वपूर्वपूजितप्रत्यभिज्ञानविषयस्य प्रतिष्ठितप्रत्यभिज्ञानविषयस्य च तथात्वमवसेयम् । एतेनाभिमन्त्रितपयःपल्लवादयो व्याख्याताः ॥ १२ ॥

---

बोधनी ।

सर्वगतत्वाद् देवतानां नित्यमेव सन्निधानं किं प्रतिष्ठाविधिना तत्राह—**सन्निधानं च**-इति । नो दर्शनं देवतावादिनामास्तिकानामित्यर्थः । कथमिदं नास्तिकस्य मीमांसकस्योत्तरं स्यादित्याशङ्क्य प्रत्यभिज्ञानतोऽपि वेत्येतदुत्तरतया व्याचष्टे—**अन्येषाम्**-इति । यो नामुनेयं प्रतिष्ठापितेति प्रतिष्ठायामनुसन्धातुमीष्टे तस्य प्रतिष्ठा प्रत्यभिज्ञासहकारिणी, इतरस्य तु पूर्वपूर्वपूजितप्रत्यभिज्ञा । तथात्वम्=पूजातिक्रमाभ्यां धर्माधर्मजनकत्वमिति । अभिमन्त्रितस्य पयःपल्लवादेर्विषरोगादिप्रतीकारान्यथानुपपत्त्या शक्तिकल्पनमाशङ्क्य तत्राप्युक्तमेव प्रकारमतिदिशति-**एतेन इति** ॥१२॥

तत्रापि हि तत्तन्मन्त्रप्रतिपाद्यगरुडादिदेवतापरिग्रहादभिमन्त्रितत्वप्रत्यभिज्ञानाद्वा प्रोक्षणादि-

प्रकाशः ।

**अहङ्कारेति** । न च देवतानां विशेषदर्शनवत्त्वान्न भ्रम इति वाच्यम् । अभिमानीत्यनेनाहार्यारोपरूपत्वस्य दर्शितत्वात् । ज्ञानस्य नाशेऽपि तज्जन्यसंस्कारस्य सत्त्वात् । अस्पृश्यस्पर्शादिना च तन्नाशात । अचेतनदेवतापक्षे त्वाह । **अन्येषान्त्विति** । आद्यपूजायां न पूजितप्रत्यभिज्ञानमित्यत उक्तम् । **प्रतिष्ठितेति** । अत्रापि प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शानादिसंसर्गाभावसहकृतस्येति द्रष्टव्यम् । "प्रतिष्ठितं पूजये"दिति विधिबलात् तज्ज्ञानस्यावश्यकत्वात् । अत एव तदभावे पूजा निष्फलैवेति भावः ॥ १२ ॥

प्रकाशिका ।

क्षुपसाक्षात्कारे जनकत्वं न स्यात् उद्भूतरूपमात्रस्यैवातिप्रसङ्गादिति वाच्यम् । द्रव्यसाक्षात्कारसामान्य एवात्मादिस्थले तस्य कारणत्वकल्पनात् , तदुत्कर्षेण चाक्षुषोत्कर्षाच्च । **अत्रापीति** । अपिशब्दः पूजितत्वप्रत्यभिज्ञानसमुच्चयपरः । **अस्पृश्येति** । प्रतिष्ठाकालीनत्वमनाद्यभावे विशेषणं, यावत्पदं समसंख्यापरम्, एवं च प्रतिष्ठोत्तरमस्पृश्यस्पर्शे प्रागभावनाशेऽपि स्पर्शध्वंसानन्तरं तमादाय समसंख्यत्वादतिप्रसङ्ग इत्यनादिपदम् । अपूज्यताप्रयोजकपरम्परासम्बन्धावच्छिन्नास्पृश्यस्पर्शे प्रतिष्ठोत्तरं जाते पूज्यता न स्यादिति संसर्गपदं संसर्गविशेषावच्छिन्नाभावलाभायेति दिक् ॥ १२ ॥

मकरन्दः ।

कानुद्भूतरूपादपि त्र्यणुकोद्भूतरूपं जायते इत्यर्थः । **अत्रापीति** । प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शादीत्यर्थः । अत्र विस्तरोऽनुमानप्रकाशे ॥ १२ ॥

टिप्पणी ।

परमाणुरूपस्याप्रत्यक्षत्वे किमर्थमुद्भूतत्वसिद्धिः, तद्गुणसंविज्ञानबहुव्रीहिकल्पनं च निर्युक्तिकमिति । अत्रापीति । प्रतिष्ठाकालीनत्वमनादिसंसर्गाभावस्य विशेषणं वाच्यम्, यावदिति=समसंख्यकेत्यर्थः, तथा च प्रतिष्ठाकालीनास्पृश्यस्पर्शाभावसमसंख्यकास्पृश्यस्पर्शाद्यनादिसंसर्गाभावः सहकारीत्यर्थः । प्रतिष्ठोत्तरमस्पृश्यस्पर्शनाशकाले विद्यमानोऽप्यभावो न तादृशाभावसमसंख्यकानादिसंसर्गाभावः, ध्वंसस्यानादित्वाभावात् प्रागभावस्याविद्यमानत्वादिति विशेषणद्वयस्य सार्थक्यम् । पुनः प्रतिष्ठायां द्वितीयप्रतिष्ठामादायैव तादृशाभावसम्पत्तिः कार्य्येति भावः ॥ १२ ॥

घटादिषु का वार्त्ता? कुशलैवेति चेन्न। न हि सामग्री दृष्टं विघटयति, नाप्यदृष्टं, ज्ञापकत्वात्, नाप्यदृष्टमुत्पादयति, धर्मजनने सर्वदा विजयप्रसङ्गात्। विपर्यये सर्वदा भङ्गप्रसङ्गात्।

अत्रोच्यते—

**जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्॥**
**परीक्ष्यसमवेतस्य परीक्षाविधयो मताः॥१३॥**

यद्यपि धर्माद्यभिमानिदेवतासन्निधिरत्रापि क्रियते, ताश्च कर्मविभवानुरूपं लिङ्गमभिव्यञ्जयन्तीत्यस्माकं सिद्धान्तः, तथापि परविप्रतिपत्तेरन्यथोच्यते। तेनापि हि विधिना तदेव जयस्य पराजयस्य वा निमित्तमभिव्यक्तं कार्यमुन्मोल-

---

बोधनी।

वदभिमन्त्रणासहकाराद्वोपपत्तिरिति गूढाभिसन्धिः पृच्छति—**घटादिषु**–इति। तुलातप्तमाषादिष्वित्यर्थः। गूढाभिसन्धिरेवोत्तरमाह–**कुशला**–इति। इतरः स्वाभिप्रायमुद्घाटयति–**न हि सामग्री** इति। तुलारोहणाङ्गत्वेन विहिताभिमन्त्रणादिसामग्री न तावदभिशस्तसमवेतं जयस्य पराजयस्य वा निमित्तं किञ्चिद् दृष्टं लघुत्वं गुरुत्वं वा विघटयति ज्ञापकत्वेनाकारकत्वात् तस्यादर्शनाच्चेति भावः। **नाप्यदृष्टम्**–इति। विघटयतीत्यनुषङ्गो ज्ञापकत्वादेव। किञ्च, धर्मविघटने सदा भङ्गप्रसङ्गः, अधर्मविघटने सदा विजयप्रसङ्गः, उभयविघटनं त्वेकस्याः सामग्र्या न सम्भवतीति वक्ष्यमाणन्यायोऽत्राप्यनुसन्धेय इति। नन्वभिशस्तसमवेतमर्थतथात्वज्ञापकं किञ्चिददृष्टमुत्पादयति, तेन तद्द्वारा ज्ञापकोऽयं विधिर्भविष्यतीत्याशङ्कयाह–**नाप्यदृष्टमुत्पादयतीति**–इति। न चैकस्मिन् धर्ममितरस्मिन्नधर्ममिति सम्भवति, सामग्र्यभेदे कार्यभेदानुपपत्तेरिति भावः। प्रतिमादौ तत्तद्देवतासन्निधानादिसम्भवात् पूजातिक्रमलक्षणसामग्रीभेदेन धर्माधर्मजननसम्भवाच्च सम्भवेदपि परिहारस्तुलायामभिमानिकदेवताभावात् सामग्र्याश्चैकरूपत्वेन धर्माधर्महेतुत्वायोगात् संस्काराधानमेवाङ्गीकार्यमिति पुनः प्रत्यवस्थानमिति।

सिद्धान्ती स्वाभिप्रायमुद्घाटयति—**जयेतर**–इति। वृत्तिः=अभिव्यक्तिः, सा च सहकारिलाभ इति स्वयमेव व्याख्यास्यति। अभिशस्तसमवेतयोर्जयेतरनिमित्तधर्माधर्मयोरभिव्यक्तिद्वारेणार्थतथात्वं ज्ञापयति परीक्षाविधिः, अतोऽत्रापि न संस्कारकल्पनेत्यत्रापि पूर्वोक्तमेव परिहारं स्मारयति—**यद्यपि**–इति। परिक्षाविधिनापि धर्मसत्यादिषु शरीरवदभिमानिनीनां सन्निधिः क्रियते। सन्निहिताश्चाभिशस्तस्तेयादिकर्मविभवानुरूपं तुलानमनोन्नमनादिकं लिङ्गमभिव्यञ्जन्ति। ततो जयः पराजयो वेति। यद्यप्यभ्युपगमः सिद्धस्तथाप्यत्र मीमांसकस्यासम्प्रतिपत्तेरभ्युपगम्यैवान्यथा परिहार उच्यत इति श्लोकं व्याचक्षाणस्तमेव परिहारमाह–**तेनापि**–इति। तद्विधानाभिव्यक्तमभिशस्तकृतस्तेयाद्यनुमापकं कार्यं नमनोन्नमनादि जनयति। कथमनेन धर्माधर्माभिव्यक्तिरित्यत्राह—

प्रकाशः।

घटः=तुला। **न हीति**। सामग्री=परीक्षासामग्री। अवनतिहेतोर्दृष्टस्यादृष्टस्य वा विघटने सदैवोन्नमनप्रसङ्गादित्यर्थः। तस्माद् भूतार्थपरिच्छेदिका शक्तिस्तुलादिसामग्रीजन्येत्यभ्युपेयमिति भावः।

**जयेतरेति**। जयभङ्गनिमित्तस्य परीक्ष्यात्मसमवेतस्यादृष्टस्य वृत्तिः स्वकार्यजननाभिमुख्यं तल्लाभायैवेत्यर्थः। **यद्यपीति**। पापवान् पुण्यवान् वाऽयमनेन विधिना तुलामारूढ इति यद्देवताज्ञानं, स एव देवतासन्निधिरतः परीक्षाविधेरविक्षेपेऽपि कर्मोन्नायकं नमनादिकं लिङ्गमभिव्यञ्जयन्ति। तादृशञ्च ज्ञानं न परीक्षाविधिं विनेति सोऽपि प्रयोजक इत्यर्थः। परविप्रतिपत्तिर्देवता-

यति । कर्मणश्चाभिव्यक्तिः सहकारिलाभ एव । तच्च सहकारि, सोऽहमनेन विधिना तुलामधिरूढो योऽहं पापकारी निष्पापो वेति प्रत्यभिज्ञानम् । यदाहुः
"तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः" इति ।

अथवा प्रतिज्ञानुरूपां विशुद्धिमपेक्ष्य तेन धर्मो जन्यते निमित्ततो विधानाद्विजयफलश्रुतेश्च । अविशुद्धिञ्चापेक्ष्याधर्मः । पराजयलक्षणानपेक्षितफलोपदर्शनेन फलतो निषेधात् ।

---

बोधनी ।

कर्मणश्च-इति । सहकारिलाभे फलोत्पत्त्या कर्माभिव्यज्यते, तेनाभिव्यक्तिहेतुत्वात् सहकारिलाभोऽभिव्यक्तिरुपचर्यत इति । कथं लोकपालार्च्चनादिकर्मणां क्षणिकत्वेन साहित्यानुपपत्तेः सहकारितेत्यत्राह-तच्च-इति । कर्मक्षणानां स्वरूपतः साहित्याभावेऽपि तद्विषयज्ञानद्वारा तत्साहित्यात् सहकारित्वोपपत्तिः तत्र निष्पापत्वेन प्रत्यभिज्ञानं जयनिमित्तं कर्माभिव्यनक्तीतरदितरदिति विवेकः । सुगूढमपि पापं चरद्भिरात्मनः पापकारित्वं ज्ञायत एवेत्यत्र स्मार्त्तवचनमुदाहरति-यदाहुः-इति । एवं तावत् संग्रहो व्याख्यातः । इदानीं तु न तावज्जयपराजयमात्रफलमनेनानुष्ठितं कर्मास्ति यदनेनाभिव्यज्येत, तादृशकर्मणामश्रुतत्वात् । न चानुष्ठितं स्तेयादि पराजयहेतुस्तस्य नरकादिफलत्वात् , न च विजयमानेन विजयहेतुः कश्चित् धर्मोऽनुष्ठितः किन्तु स्तेयादिरनुष्ठितः, न चाननुष्ठानस्य किञ्चित्फलमस्तीति तत्रापरितुष्यम् परिहारान्तरमाह । अथवा इति । प्रतिज्ञानुरूपशुद्धिसहकृतेन परीक्षाविधिना धर्मो जन्यत इति । ननु किञ्चिदुद्दिश्य विहितात् कर्मणो धर्मो जन्यते न त्विह किञ्चिदुद्दिश्यारोहणविधिरस्तीत्यत्राह—निमित्ततः—इति । मिथ्याभिशस्ततां निमित्तीकृत्य विधिरस्ति । न चाविहितस्य फलश्रुतिः सम्भवतीति निषेधलक्षणमधर्महेतुत्वं, न चात्राविशुद्धो नारोहेदिति निषेधः श्रूयते इत्यत्राह—पराजय इति । अप्रस्तुतोऽपि

प्रकाशः ।

चैतन्ये । सोऽहमिति । ननु यत्र पापविस्मरणान्निष्पापत्वप्रत्यभिज्ञानं, तत्र कुतो न जयः । न च सत्यं तादृशं प्रत्यभिज्ञानं जयहेतुः, तथापि भङ्गहेतुपापवत्त्वप्रत्यभिज्ञानाभावेन भङ्गानुपपत्तेः । न च स्वरूपसदेव पापवत्त्वं भङ्गहेतुः । तस्यैव प्रयोजकत्वे परीक्षाविधेरतत्त्वापत्तेः । मैवम् । पापतदभावयोः स्वरूपसत्त्वे सति, योऽहं पापवत्त्वादिना सन्दिह्यमानः सोऽहमनेन विधिना तुलामारूढ इति तस्य प्रत्यभिज्ञानस्य तन्त्रत्वात् । तच्च न परीक्षाविधिं विनेति तस्यापि तत्त्वात् । यत्र तु सभाक्षोभादिना तादृशप्रत्यभिज्ञानाभावस्तत्र गत्यन्तरमाह । अथवेति । तेन=परीक्षाविधिना । ननु तादृशविधिवाक्याभावात् परीक्षाविधेर्धर्मजनकत्वे मानाभाव इत्यत आह । निमित्तत इति । साक्षात्तादृशविधिवाक्याभावेऽप्यभिशापनिमित्तकत्वात् परीक्षाविधेरितरनैमित्तिकवदभिशप्तः सत्यप्रत्यभिज्ञो जयकामस्तुलामारोहेदिति विधिकल्पनमित्यर्थः । विजयेति । कालान्तरभाविजयसाधनताऽनुपपत्तेरपूर्वकल्पनाच्चेत्यर्थः । पराजयेति । भङ्गलक्षणानिष्ट-

प्रकाशिका ।

पापतदभावयोरिति । सत्यन्तमात्रस्य प्रयोजकत्वे परीक्षावैयर्थ्यमित्युत्तरदलम्, तच्च न परीक्षाविधिं विनेति परीक्षाविधेः कथञ्चित् स्वज्ञानद्वारा प्रत्यभिज्ञानप्रयोजकत्वमिति मन्तव्यम् । निमित्तत इतीति । निमित्ते सति विधानादिति मूलार्थः । भङ्गेति । कालान्तरभाविभङ्गेत्यर्थः ।

मकरन्दः ।

पापतदभावयोरिति । सत्यन्तमात्रस्य तन्त्रत्वे परीक्षावैयर्थ्यमेवेति विशिष्टस्य तथात्वमुक्तमिति भावः । भङ्गेति । कालान्तरभाविभङ्गलक्षणफलश्रुतेरित्यर्थः । यद्यप्यकरणे प्रत्यवाया-

अथ शक्तिनिषेधे किं प्रमाणम्? । न किञ्चित् । तत् किमस्त्येव? बाढम् । न हि नो दर्शने शक्तिपदार्थ एव नास्ति । कोऽसौ तर्हि? कारणत्वम् । किं तत्? पूर्वकालनियतजातीयत्वं, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वेति । ततोऽधिक-

बोधनी ।

निषेधः कल्प्यते, अविशुद्धं प्रत्यारोहणस्यानिष्टहेतुत्वाभिषिद्धस्यैव च तथात्वादिति ।

तदेवम्भूतसमवायिनी शक्तिः सहजा आधेया वास्तीति न किञ्चित्प्रमाणमस्तीत्युक्तम् । इतरस्तु वादजल्पयोरन्यतरेण कथाप्रवृत्तिं कृत्वा तयोर्न स्वपक्षसाधनमन्तरेण परसाधनस्य दूषणमात्रेण पर्यवसानमिति मन्वानः पृच्छति-अथ इति । गूढाभिसन्धिः प्रतिब्रूते-न किञ्चित् इति । अज्ञातपराभिसन्धिः पुनः पृच्छति—तत् किमस्त्येव—इति । निषेधकाभावे त्वस्तित्वमेवावशिष्यत इति । गूढाभिसन्धिरेव सम्प्रतिपत्तिमुत्तरमाह-बाढम्-इति । यद्येवमपसिद्धान्तप्रसङ्ग इत्यत्र स्वाभिसन्धिमुद्घाटयितुमाह-न हि-इति । अस्मत्सिद्धान्तानभिज्ञो भवानिति भावः । पुनरप्यनभिज्ञः पृच्छति-कोऽसौ-इति । आशयमाविष्करोति—कारणत्वम्-इति । शक्तिमत्त्वैव कारणत्वमिति मन्वानः पृच्छति—किं तत्-इति । ज्ञातपराभिसन्धिराह—पूर्वकाल-इति । पूर्वकालनियतत्वमित्येव वक्तव्ये नियतजातीयत्वाभिधानं जात्यपेक्षयैव नियम इति स्मारयितुमिति । अन्यथा कारणत्वं निरूपयति-सहकारि-इति । यस्य सहकारिवैकल्यप्रयुक्तः कार्यप्रागभावो न तु स्वरूप-

प्रकाशः ।

फलसाधनत्वेन निषेधविधेरुन्नयनाद्भङ्गफलश्रुतेश्चाधर्मजनकत्वं कल्प्यत इत्यर्थः । यद्यपि तुलारोहणादेरधर्मजनकत्वे मानाभावः । पूर्वाधर्मादेवावनमनोपपत्तेः । तथापि परीक्षाविधिं विनाऽवनमनेऽपि भङ्गाभावान्नियमेन तस्याधर्महेतुत्वम् ।

जल्पकथामाश्रित्य पृच्छति—

अथेति । उत्तरं नेति । शक्तिपदार्थमेव न निषेधाम इत्यर्थः । तर्हि स्वीकार एव शक्तेः स्यादित्यभिप्रेत्याह । कोऽसाविति । पूर्वकालेति । ननु पूर्वत्वं प्रागभावावच्छिन्नकालत्वम्,

प्रकाशिका ।

यद्यपि नैमित्तकत्वे तदकरणे प्रत्यवायापत्तिः । तथापि निमित्ते सति कर्त्तव्यत्वमित्येवात्र नैमित्तिकत्वम् । तन्मात्रकरणेऽपि न प्रत्यवायो जातेष्ट्यादावकरणे प्रत्यवायाभावात् देवतासन्निधान एव तात्पर्य्यमत एव मूलमित्यस्माकं सिद्धान्त इति कश्चित् । अधर्म्मजनकत्वे मानाभाव इति । जयपक्षे भवतु धर्म्मजनकता अगम्यागमनायनाचरणस्य धर्म्महेतुत्वेनोनूनमकारणस्य तस्य स्वीकरणीयत्वादिति भावः । तथापोति । परीक्षाविधिजन्याधर्मेणावनमनस्यैव भङ्गहेतुत्वमिति परीक्षाया आशु विनाशिन्याः कारणतानिर्वाहाय व्यापारत्वेनाधर्म्मः कल्पनीय इति भावः । वस्तुतोऽगम्यागमनजन्याधर्म्मस्यावनमनहेतुत्वे मानाभावो नरकफलत्वेन तस्य श्रुतेरिति ध्येयम् ।

जल्पेति । तत्रैवोभयसाधनोपन्यासनियमादिति भावः । नाशस्येति । प्रागभाव-

मकरन्दः ।

श्रुतेः परीक्षाविधेरभिशापनिमित्तकत्वाभावाच्च विधिकल्पनं, न वा भङ्गलक्षणाऽनिष्टसाधनत्वेन निषेधविध्युन्नयनम् । व्यभिचारादप्रयोजकत्वाच्च । तथापि देवतासन्निधिपक्षे तात्पर्यम् । अत एवोक्तं मूले, इत्यस्माकं सिद्धान्त इति । अधर्मजनकत्वे मानाभाव इति । विजयपक्षे धर्मजननं भवतु । अगम्यागमनायनाचरणस्य धर्महेतुत्वेन प्राक्तनधर्माभावादिति भावः । तथापीति ।

टिप्पणी ।

जल्पकथामाश्रित्येति । उक्तरीत्या शक्तिनिरासे शक्तिसाधकस्य मीमांसकस्य तद्धेतौ

निषेधे का वार्त्ता ? । न का चित् । तत् किं विधिरेव ? सोऽपि नास्ति प्रमाणाभावात् । सन्देहस्तर्हि ? । कथमेवं भविष्यति, अनुपलब्धचरत्वात् । विवादस्तर्हि ? कुत्र ? । अनुग्राहकत्वसाम्यात् सहकारिष्वपि शक्तिपदप्रयोगात् । सहकारिभेदे तत्रापि दहनादेरनुग्राहकोऽधिकोऽस्त्येव, यः प्रतिबन्धकैरपनीयत इति

बोधनी ।

प्रयुक्तः, यः सहकारिषु सत्सु करोत्येवेत्यर्थः । न स्वभावादकारणत्वमिति । तर्हि कारणत्वातिरिक्तमदभिमतातीन्द्रियशक्तिनिषेधः किंप्रमाण इत्याह—तत इति । एकत्र हि सिद्धस्यान्यत्र निषेधः न त्वत्यन्तानुपलब्धस्येत्याशयवानाह—न काचित्—इति । अविदितपराशयः पृच्छति—तत् किम्—इति । विधिः=अस्तित्वम् । यदि निषेधो नास्ति तर्हि विधिरेव स्यात् भावाभावयोरितरेतराभावात्मकत्वादिति । न हि निषेधवद् विधिरपि निष्प्रमाणः सिध्यतीत्युत्तरमाह—सोऽपि—इति । निषेधे प्रमाणं नास्तीत्युक्तं न तु निषेधो नास्तीति भावः । तर्हि साधकबाधकयोरभावाच्छक्तेरस्तित्व नास्तित्वयोः सन्देह एव स्यात्, एवमपि भवदभिमतं न सिध्येदित्यभिप्रायवानाह—तर्हि—इति । उत्तरं कथमेवम्—इति । न तावानेव सन्देहहेतुरपि तर्हि धर्म्युपलब्धिरपि, ततश्चानुपलब्धे शक्तिरूपे धर्मिणि कथं सन्देह इति । यदि शक्तेर्उद्भावनारोह एव तर्हि तत्सत्त्वासत्त्वविषयो विवादः कथमावयोर्भवेत् तस्यापि सामान्यतो ज्ञाते धर्मिणि विशेषविषयत्वादित्याह—विवादः—इति । सुहृद्भावेनोत्तरमाह—अनुग्राहकत्व इति । अत्रोभयसिद्धसहकारिपदार्थमधिकृत्य तद्विशेषवि

प्रकाशः ।

प्रागभावश्च न प्रतियोगिजनकोऽभावः । अन्योन्याश्रयात् । नापि विनाश्यभावः । नाशस्य प्रागभावनिरूप्यत्वात् । उत्पत्तिमानभावो ध्वंस इति चेत् । काऽसावुत्पत्तिः । आद्यसमयसम्बन्धः सेति चेत् । किमाद्यत्वम् । स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्ध

प्रकाशिका ।

प्रतियोग्यभावत्वस्यैव नाशलक्षणत्वादित्यर्थः । तथा चान्योन्याश्रय इति भावः । किमाद्यत्वमिति । क आद्यसमयसम्बन्ध इत्यर्थः, तेन नोत्तरविरोधः । स्वेति । प्रतिक्षणं कस्य

मकरन्दः ।

तथा च परीक्षाविधिजन्यावनमनस्यैव भङ्गहेतुत्वम् । तस्य चाशुविनाशित्वेनाध्व्यापारकत्वमिति भावः । अगम्यागमनादिजन्याधर्माणामपि नरकफलश्रवणात् पराजयहेतुत्वे मानाभावाच्चेत्यपि द्रष्टव्यम् ।

नाशस्येति । प्रागभावप्रतियोग्यभावस्यैव नाशत्वादित्यर्थः । किमाद्यत्वमिति । किमाद्यसमयसम्बन्धत्वमित्यर्थः । तेन नोत्तरविरोधः । स्वेति । तथा च तादृशध्वंसानाधारत्वमाद्यत्वं,

टिप्पणी ।

पृच्छा विजिगीषुकथारूपे जल्प उभयसाधनोपन्यासनियमादिति । प्रागभावनिरूप्यत्वादिति । प्रागभावप्रतियोग्यभावरूपत्वात् तथा चान्योन्याश्रय इति भावः । किमाद्यत्वमिति । क आद्यसमयसम्बन्ध इत्यर्थः । तेन सम्बन्धपर्यन्तविवक्षणे न दोषः । स्वसमानकालीनपदार्थेति । स्थितिक्षणस्यापि स्वप्रतियोगिकध्वंसानाधारत्वात् तदानीमुत्पन्नत्ववारणाय स्वसमानकालीनेति । अत्र समानत्वमविवक्षितम्, वैयर्थ्यादुक्तदोषाच्च । इदन्तु प्रतिक्षणं कस्य चिदुत्पादः कस्य चिद् विनाश इति मतानुसारेणैव, अन्यथा कल्पान्तरस्थितिक्षणस्य ? ध्वंसानाधारत्वे तदुपादानेऽपि तद्दोषतादवस्थ्यं

सन्देहस्तर्हि साधकबाधकमानाभावे तस्य तत्कारणत्वात् । कथमेवं भविष्यतीति । कोटयुपस्थितेरभावात् । अनुपलब्धचरत्वादिति संदेह इति शेषः ।

प्रकाशः ।

इति चेन्न । परस्पराश्रयात् । नापि प्रतियोग्यन्यूनानतिरिक्तकालीनाऽवधिकसामयिकयावत्परत्वाश्रयसमानकालीनकादाचित्काभावः । प्रलयकालीनपरमाणुक्रियाप्रागभावाव्याप्तेः । न च तदाऽपि ब्रह्माण्डान्तरवर्तिद्रव्येणापरत्वाश्रयेण परत्वनिरूपणम् । तस्य विशिष्याज्ञानात् ।

प्रकाशिका ।

चिदुत्पत्तिः कस्यचिद् विनाश इति मतानुसारेणेदम् । न च महाप्रलयोत्पत्तावव्याप्तिः, तत्र समानकालपदार्थध्वंसाप्रसिद्धेरिति वाच्यम् । स्ववृत्तिध्वंसाप्रतियोगियावत्समानकालपदार्थकसमयसम्बन्धस्य तदुत्पत्तित्वात् । **प्रतियोग्यन्यूनेति** । प्रतियोग्यवधिकेति कृते गुणप्रागभावाव्याप्तिरपरत्वाश्रयस्यैव परत्वावधित्वादित्यन्यूनानतिरिक्तकालीनपदम् । एवं च तादृशद्रव्यमादायैव गुणप्रागभावेऽपि लक्षणं नेयम् । तदन्यूनानतिरिक्तकालत्वं च तद्व्यापककालकत्वमतोऽन्त्यशब्दस्यैव क्षणिकतया तदन्यूनानतिरिक्तकालीनद्रव्याप्रसिद्धेः, तत्प्रागभावाव्याप्तिरपास्या, प्रतिक्षणं कस्य चिद् द्रव्यस्य उत्पत्तिः कस्य चिद् विनाश इति मतेनेदम् ।प्रतियोगिकालीनेत्येतावति कृते प्रागभावस्य प्रतियोग्युत्पत्त्यनन्तरोत्पत्तिकावधिकपरत्वाश्रयप्रतियोग्यसमानकालत्वाद् यावदर्थाभावादव्याप्तिरिति व्यापकत्वपर्यन्तम् । अत्र केचित् प्रतियोगिकालीनत्वमेव सम्यक् । नचोक्तदोषः, प्रतियोगिकालीनयत्किंचित्पदार्थावधिकयावत्परत्वाश्रयगर्भमेव हि तल्लक्षणम् न तु प्रतियोगिकालीनेऽपि यावत्त्वं विशेषणम् तथा च तत्प्रतियोग्युत्पत्तिकालीनद्रव्यमादायैव सर्वत्र लक्षणमित्याशयादिति । ते भ्रान्ताः,

मकरन्दः ।

तत्समयसम्बन्ध उत्पत्तिरिति भावः । प्रतिक्षणं कस्य चिदुत्पत्तिः कस्य चिन्नाश इति मतानुसारेणेदम् । **प्रतियोग्यन्यूनेति** । **प्रतियोग्यवधिकेति** कृते गुणादिप्रागभावाव्याप्तिः । तदवधिकपरत्वाभावात् । अपरत्वाश्रयस्यैव तथात्वादिरयत उक्तम**न्यूनानतिरिक्तेति** । तथा च तादृशं द्रव्यमादाय तत्र लक्षणगमनमिति नोक्तदोषः । प्रतियोगिकालीनेत्येतावति कृते घटध्वंसाव्यवहितपूर्वक्षणोत्पन्नं प्रतियोगिकालीनं द्रव्यान्तरमादाय तद्घटध्वंसेऽतिव्याप्तिः । तस्य तदवधिकयावत्परत्वाश्रयसमानकालीनत्वात् , परत्वापरत्वयोः परस्पराश्रयावधिकत्वस्वीकारेण तत्कालविद्यमानस्यैव

टिप्पणी ।

स्यादिति ध्येयम् । **नापि प्रतियोग्यन्यूनातिरिक्तकालीनावधिकेति** । अत्र प्रतियोग्यवधिकेति कृते गुणादिप्रागभावेऽव्याप्तिः, अपरत्वाश्रयस्यैव परत्वनिरूपकत्वात् , प्रतियोगिकालीनेत्युक्तावपि न सामञ्जस्यम् प्रतियोग्यनन्तरोत्पन्नावधिकपरत्वाश्रयप्रतियोग्यसमानकालीनत्वात् प्रागभावस्येत्यव्याप्तेः। नापि प्रतियोगिकालीनयत्किञ्चिदवधिकत्वोक्तावपि । प्रतियोगिक्षणोत्पन्नपदार्थमादाय लक्षणसम्भवेऽपि प्रतियोगिनाशाव्यवहितपूर्वक्षणोत्पन्नावधिकपरत्वस्य नाशकालोत्पत्तिकतया तदानीं तदाश्रयस्यावश्यम्भावनियमेन तत्कालीनत्वाद् ध्वंसस्यातिव्याप्तिः। नापि प्रतियोगिकालीनयावदवधिकपरत्वाश्रयकालीनत्वम् । यत्किञ्चित्प्रतियोगिकालीनं वस्तु प्रतियोग्याश्रयकमेव परत्वमुत्पाद्य नष्टं तमादायाव्याप्तेः । सामयिकव्यापकत्वार्थकं प्रतियोग्यन्यूनानतिरिक्तकालीनत्वानुधावनम् । व्यापकत्वव्यापकव्याप्यत्वयोर्विवक्षणे प्रयोजनाभावः । क्षणिकान्त्यशब्दप्रागभावेऽव्याप्तिश्च, प्रतियोगिनस्तथाविधद्रव्याभावात् यावत्त्वाविवक्षायां ध्वंसपर्य्यन्तस्थायिप्रतियोगिज्येष्ठपदार्थमादाय ध्वंसेऽतिव्याप्तिः । अत्र सर्गाद्यकालीनपदार्थप्रतियोगिकप्रागभावाव्याप्तिः, तद्व्यापकं हि द्रव्यं नित्यमनित्यं वा तत्कालोत्पत्तिकं तस्य परत्वनिरूपकत्वाभावादिति चेत् । तस्य मन्योक्तदोषतुल्यत्वादत्रापि ब्रह्माण्डान्तरवर्तिद्रव्यमादाय समाधानस्य सम्भवात् , तदस्वीकारे दोषः, अत्र वदन्ति । नानासर्गस्थायिन्यदृष्टप्रागभावेऽव्याप्तिः, तादृशादृष्टव्यापकद्रव्याप्रसिद्धेः, एवं

बोधनी ।

षयो विवादः कथं तर्हि शक्तिविषय इत्यत्रोक्तं-**अनुग्राहकत्वेन**-इति । सहकारिविशेषो भवदभिमतया शक्त्या सहानुग्राहकत्वेन साम्यात् शक्तिपदास्पदं भवति । ततश्च सहकारिविशेषविषय एव विवादः शक्तिविषय इत्युच्यते । नन्वसावपि सहकारिभेदः सम्प्रतिपन्नश्चेत् न विवादगोचरः, असम्प्रतिपत्तौ सुतरां शक्तिवद् बुद्ध्यावनारोहादतः पुनरपि विवादविषयाभाव इत्यत्राह—**तत्रापि-इति** । दहनादेरधिकः प्रतिबन्धकापाकरणीयः कश्चिदनुग्राहकः सम्प्रतिपन्न इति न तस्य

प्रकाशिका ।

तथा सति प्रतियोगिनाशाव्यवहितपूर्वक्षणोत्पन्नद्रव्यमादाय ध्वंसातिव्याप्तेः तदवधिकपरत्वस्य तद्ध्वंसानन्तरमुत्पत्तेः, दैशिकपरत्वाश्रयं प्रतियोग्यनन्तरोत्पत्तिकं द्रव्यमादाय यावदर्थाभावादव्याप्तिरिति **सामयिकेति** । इदन्तु विजातीयपरत्वपरं यत्किञ्चित्प्रतियोगिज्येष्ठसमानकालीनत्वं ध्वंसस्यापीति यावदिति । यावत्त्वञ्चाश्रयविशेषणम् । अन्यथा यावत्परत्वाश्रयस्यैकस्याप्रसिद्धेः, विशेषणावधित्वोदेवच विशिष्टस्य सावधिकत्वान्वयः । प्रत्येकं यावत्परत्वनिरूपिताश्रयप्रसिद्ध्या यावत्त्वं परत्वविशेषणमेवेत्येके । यावत्परत्वेत्येतावति च कृते प्रतियो-

मकरन्दः ।

तदवधिकपरत्वाश्रयत्वादिति विशिष्टमुपात्तम् । तदर्थश्च कालिकव्याप्त्या प्रतियोगिव्यापकत्वम् । तच्च द्रव्यान्तरं, न तद्घटव्यापकमिति नोक्तदोषः । एतेनान्यूनपदेनैव तद्दोषनिरासेऽनतिरिक्तपदं तथापि व्यर्थमेव । कारणनाश्यत्वेनान्त्यशब्दस्य क्षणिकतया तत्प्रागभावाव्याप्तिः । तदन्यूनानतिरिक्तकालीनद्रव्याप्रसिद्धेरित्यादि दूषणमपास्तम् । प्रतियोगिव्यापकञ्च किञ्चिदेव विवक्षितं, न तु यावत् । तेन तादृशव्योमाद्यवधिकपरत्वाप्रसिद्ध्या नासम्भव इति ध्येयम् । प्रतियोगिव्यापकावधिकदैशिकपरापरत्वाश्रयः प्रतियोग्यपि कदाचिद्भवतीति तत्प्रागभावस्य तत्समानकालीनत्वाभावादव्याप्तिरित्यत उक्तं, **सामयिकेति** । समयपिण्डसंयोगासमवायिकारणकेत्यर्थः । प्रतियोगिव्यापकावधिकपरत्वाश्रयेण येन केन चित् पर्वतादिना समानकालत्वाद् घटध्वंसेऽतिव्याप्तिरित्यत उक्तं, यावदिति । प्रतियोगिन्युत्पन्ने ज्येष्ठे यत्परत्वमुत्पद्यते तत्समानकालीनत्वाभावात् तत्प्रा-

टिप्पणी ।

ध्वंसप्रागभावेऽव्याप्तिः, ध्वंसव्यापकद्रव्याप्रसिद्धेः । न च तस्यालक्ष्यत्वम् । ध्वंसकारणत्वस्य प्रतियोगिनो निर्वाहाय लक्ष्यत्वात् । अत्र ब्रूमः । प्रतियोगिकालीनपदार्थावधिकपरत्वाश्रयकालीनकादाचित्कोऽभावः प्रागभावः, उक्तध्वंसातिव्याप्तिश्च परत्वाश्रयं प्रतियोगिकालावृत्तित्वेन विशिष्य वारणीया । ध्वंसस्य च प्रतियोगिकालमात्रवृत्तिपरत्वाश्रयसमानकालीनत्वात् । एवमदृष्टप्रागभावे ध्वंसप्रागभावे च नाव्याप्तिः । तत्कालीनयत्किञ्चित्पदार्थावधिकपरत्वाश्रयसमानकालीनत्वसत्त्वात्, एतादृशार्थलाभश्चैतादृशार्थतात्पर्यग्राहकसकलपदसमभिव्याहारात् । अत्र कादाचित्कत्वानुपादानेऽत्यन्तान्योन्याभावातिव्याप्तिः । अभावपदानुपादानेभावेऽतिव्याप्तिः । न च चरमध्वंसप्रागभावेऽव्याप्तिः, चरमध्वंसकालीनद्रव्याप्रसिद्धेः, विभाजकोपाधिपक्षेऽप्यस्यालक्ष्यत्वात् । तस्य कर्म्मस्वरूपतयैवोपपत्तेः, कारणानिर्वचने तु सुतरां तथेत्यलमधिकं पल्लवितेनेति । **यावत्परत्वाश्रयसमानकालीनेति** । इदञ्च परत्वं कालिकम् अन्यथा दैशिकपरत्वाश्रयप्रतियोग्यनन्तरोत्पन्नपदार्थसमानकालीनत्वाभावेन यावदर्थाभावादव्याप्तिः स्यादिति । प्रवृत्त्याद्युपयोगिकारणत्वस्यैव लक्ष्यत्वात् यावत्परत्वसमानकालीनत्वोक्तौ पूर्वोत्पन्नत्वज्ञानस्य परत्वकारणतया तेन प्रतियोग्यन्तरोत्पन्नपरत्वसमानकालीनत्वाभावादव्याप्तिः स्यादत आश्रयपर्य्यन्तानुधावनम् । **प्रलयकालीनपरमाणुक्रियेति** । प्राच्यादृष्टसहकृतानां परमाणूनां सर्गान्तरोत्पत्त्यर्थं प्रलयकालेऽपि क्रियास्वीकारादिति भावः ।

प्रकाशिका ।

गिज्येष्ठावधिकप्रतियोग्यनन्तरोत्पत्तिकपरत्वासमानकालीनत्वात् प्रागभावस्याव्याप्तिरित्याश्रयेति । अत्यन्ताभावान्योन्याभावयोरतिव्याप्तिरिति कादाचित्कपदम् । अभावपदं च सम्पातायातम् कादाचित्कभावस्य पूर्वविशेषणनिरस्ततया व्यावर्त्तनीयाभावात् । न च महाप्रलयाव्यवहितप्राक्कालिककर्मप्रागभावाव्याप्तिः तद्व्यापककालावधिकपरत्वाप्रसिद्धेरिति वाच्यम् । तदनभ्युपगन्तृमतेनैवास्य लक्षणत्वात् । ननु सर्गाद्यकालीनघटप्रागभावाव्याप्तिः, तत्कालव्यापकं हि द्रव्यं नित्यं वा स्यात् तत्कालोत्पन्नमेव वा, न च नित्यावधिकं परत्वं क्वचित्, न वा तत्कालोत्पन्नावधिकम् । आश्रयाभावात् । नित्यस्य परत्वानधिकरणत्वात्, अनित्यस्य तु ज्येष्ठस्याभावादिति चेत् । न । प्रलयकालीनपरमाणुक्रियाप्रागभावतुल्यतया ब्रह्माण्डान्तरवर्त्तिद्रव्यमादाय समाधानस्य सत्त्वात् । तदनभ्युपगमे ग्रन्थकृदुक्ताव्याप्तितुल्यतयैव तदव्याप्तेरपि दोषत्वेनेष्टत्वमेव । अत एव खण्डप्रलयाव्यवहितपूर्वक्षणोत्पन्नक्रियाप्रागभावाव्याप्तिरपि न दोषः । प्रलयकालीनपरमाणुक्रियाप्रागभावतुल्यत्वादिति **सम्प्रदायः** । अत्र वदन्ति । नानासर्गस्थायिनोऽदृष्टस्य प्रागभावेऽव्याप्तिः, तत्र प्रतियोगिकालव्यापकस्यानित्यस्य द्रव्यस्याभावाद् । नित्यस्य च परत्वावधित्वाभावात् । किं च भावरूपे प्रागभावेऽव्याप्तिः, न च तदलक्ष्यमेव, कारणताघटकस्य हि प्रागभावस्य लक्षणमिह प्रकृतं तथा च ध्वंसे प्रतियोग्यादेः कारणतानिर्वाहाय भावरूपस्यापि तस्य लक्ष्यत्वात् । एतेन द्रव्यप्रागभावमात्रस्यैवेदं लक्षणं, तेन नोक्तादृष्टप्रागभावेऽव्याप्तिः । तस्यालक्ष्यत्वात् । यावद्द्रव्यप्रागभावसमानकालत्वं च प्रागभावसामान्यलक्षणम्, तदुपयोगितयैव च विशेषलक्षणमपि निरुक्तम्, उक्तसामान्यलक्षणं तूक्तादृष्टप्रागभावादावविकलमेवेत्यपास्तम् । ध्वंसप्रागभावात्मकभावाव्याप्तेरिति । अत्र वयं ब्रूमः । प्रतियोगिसमानकालीनत्वमात्रमत्र लक्षणे प्रविष्टमित्यदृष्टप्रागभावे लक्षणमविकलम् । न च विनश्यत्क्षणोत्पन्नद्रव्यमा-

मकरन्दः ।

गभावाव्याप्तिरित्यत उक्तमाश्रयेति । न च यावत्परत्वानामाश्रयाप्रसिद्ध्याऽसम्भव इति वाच्यम् । प्रत्येकनिरूपिताश्रयस्यैव विवक्षितत्वात् । केचित्तु यावत्त्वमाश्रयविशेषणमेव । विशेषणस्य सावधिकत्वेन विशिष्टे तदवधिकत्वान्वय इत्याहुः । अत्यन्तान्योन्याभावयोरप्यनादितया तथात्वादतिव्याप्तेराह कादाचित्केति । कादाचित्कभावस्यानादित्वानभ्युपगमेन व्यावर्त्याभावादभावपदं स्वरूपाख्यानपरमित्याहुः । न च महाप्रलयपूर्वक्षणभाविकर्मादिप्रागभावाव्याप्तिः । तदा ब्रह्माण्डान्तरस्याप्यभावादिति वाच्यम् । तदनभ्युपगन्तृमतेनैवास्योक्तत्वात् । अत एव लीलावतीप्रकाशे सिद्धान्तितमिदमेव लक्षणम्; ननु तथापि सर्गाद्यकालीनघटादिप्रागभावाव्याप्तिः । तत्र हि प्रतियोगिव्यापकं सर्गाद्यकालीनमेव स्याद् नित्यं व्योमादि वा ? तदवधिकञ्च परत्वमप्रसिद्धम् । नित्यस्य तदवधिकत्वाभावात् । अपरावधिकपरत्वस्य चाश्रयाभावादनुत्पत्तेः । न हि नित्यद्रव्यं तदाश्रयः । बहुतरतपनपरिस्पन्दान्तरितजन्मत्वाभावेन तत्र तदनभ्युपगमात् । नापि कार्यद्रव्यम् । तज्ज्येष्ठस्य तदानीमभावात् । सर्गान्तरे तत्सत्त्वेऽपि तदानीमवधेरेवानुत्पन्नतया तदवधिकपरत्वानुत्पत्तेः । यदवधिकं यत्र परत्वं तदवधिकमेव तत्र परत्वमित्यभ्युपगमादिति चेत् । मैवम् । जन्मांशस्य गुरुत्वेन नित्यद्रव्येऽपि तदभ्युपगमादित्याहुः । अवधिर्न परत्वकारणं, किन्तु तज्ज्ञानम् । तथा चानागतस्यैवावधेरीश्वरादीनां ज्ञाने सर्गान्तरद्रव्येषु तदुत्पाद इत्यप्याहुः । वस्तुतो ब्रह्माण्डान्तरद्रव्यमादाय अत्रापि समाधिसम्भवे प्रलयकालक्रियाप्रागभाववदत्राप्यव्याप्तिरभिप्रेतैवेति न दोषः । अत एव खण्डप्रलयपूर्वक्षणक्रियाप्रागभावाव्याप्तिशङ्काऽपि न दोषायेति मन्तव्यम् । वस्तुतस्तु प्रतियोगिव्यापकत्वविवक्षायामपि क्षणिकशब्दाऽऽदिध्वंसे पूर्वोक्तन्यायेनातिव्याप्तिरेवेति प्रतियोगिकालीनत्व एव तात्पर्यम् । परत्वाश्रयत्वयोरपरत्वविवक्षया च नोक्तातिः

प्रकाशः ।

नियतत्वमपि व्यक्त्यपेक्षया, जात्यपेक्षया वा ? । नाद्यः । वह्निव्यक्तेः पूर्वं रासभस्यापि भावात् । अत एव नान्त्यः । न हि क्वापि वह्निजातीयपूर्वकाले न रासभसत्त्वम् । देशतोऽपि नियम इति चेत् । सोऽपि संयोगी समवायी वा प्रत्यासन्नमात्रं वा ? आद्ये गुणादीनामकारणत्वप्रसङ्गः । द्वितीये धूमं प्रति वह्नेरकारणत्वप्रसङ्गः । तयोरेकदेशसमवायित्वाभावात् । अन्त्ये व्योम्नः कार्यमात्रं प्रति कारणत्वप्रसङ्गः । अन्यथासिद्धत्वेऽसतीति चेन्न । कारणेतरत्वेन तत्सिद्धेः कारणज्ञानापेक्षित्वात् । नापि कार्याभावव्यापकाभावसमूहैकदेशप्रतियोगित्वं कारणत्वम् । व्योमादेः कार्यमात्रे तत्त्वापत्तेः ।

प्रकाशिका ।

दाय तथा सति ध्वंसातिव्याप्तिरित्युक्तमेवेति वाच्यम् । प्रतियोगिकालावृत्तित्वस्याऽऽश्रयविशेषणत्वात् । ध्वंसस्य च प्रतियोगिकालमात्रवृत्तितया तथाविधपरत्वाश्रयसमानकालत्वात् । यावत्पदसमभिव्याहारेणैव च प्रतियोगिकालावृत्तित्वलाभो अन्यथाधिक्यादिति न्यायादिति न यावत्पदव्यर्थताशङ्कापि । सामयिकपदं तु ध्वंसातिव्याप्तिवारणाय । प्रतियोगिनाशोत्तरानुवर्त्तमानप्रतियोगिसमानकालीनावधिकदैशिकपरत्वाश्रयप्रतियोगिनाशोत्तरजातपदार्थसमानकालत्वात्तस्य । एवं च भावरूपप्रागभावाव्याप्तिरप्यपास्ता । तस्यापि ध्वंसरूपप्रतियोगिकालावृत्तिध्वंससमानकालतत्पूर्वोत्पन्नपदार्थावधिकपरत्वाश्रयसमानकालत्वात् । अभावपदं तु विरोधिमात्रपरं तत्तत्प्रागभावलाभाय । यदा च विभाजकोपाधिनिर्वचनं तदा भावातिव्याप्तिवारणायाभावपदम् । एवं च महाप्रलयाव्यवहितकर्मप्रागभावाव्याप्तिरपि निरस्ता । तत्रापि कर्म्मसमानकालीनानित्यद्रव्यावधिकपरत्वाश्रयकर्मपूर्वनिष्ठपदार्थसमानकालतासत्त्वात् । यावदनित्यद्रव्यनाशानन्तरं परमाणुकर्मोत्पत्तौ च मानाभावात् । न च चरमध्वंसप्रागभावरूपे कर्म्मण्यव्याप्तिः, विभाजकोपाधिपक्षे तस्यालक्ष्यत्वात्, कारणतानिर्वचनेऽपि तदसंग्रहे क्षतेरभावात् । तत्कारणताया भिन्नत्वेऽपि प्रवर्त्तकज्ञानविषयकारणताया अनुगमात्, चरमध्वंसार्थं तत्प्रतियोगिन्यप्रवृत्तेः । महाप्रलयानभ्युपगमनैवेदं लक्षणमित्यप्युक्तमेवेति दिक् । **कारणेतरत्वेनेति ।** कारणेतरत्वस्यैवान्यथाशब्दार्थत्वादिति भावः । **व्योमादेरिति ।** तद-

मकरन्दः ।

व्याप्त्यादिदोषः । एतन्मतेनैवाभावपदस्य स्वरूपाख्यानपरत्वमुक्तम् । अन्यथा पर्वतादिकमादाय व्यावर्त्यसम्भवादित्यवधेयम् । नन्वेवमपि ध्वंसप्रागभावात्मनि घटादावव्याप्तिः, तच्च लक्ष्यमिति चेद्, भ्रान्तोऽसि । न हि प्रागभावलक्षणमिह प्रकृतं, किन्तु कारणत्वलक्षणम् । तच्च सामान्यत एव लक्ष्यं, मूलस्वरसात् । तथा च ध्वंसप्रागभावस्यालक्ष्यत्वे ध्वंसकारणसाधारणं लक्षणं न स्यात् । किञ्चैवमनुगतं कारणत्वमपि न स्यादिति तदननुगमात् प्रवृत्त्यननुगम इति चिन्त्यम् ।

अन्यथेत्यस्यार्थमाह । **कारणेतरत्वेनेति । व्योमादेरिति ।** तदभावस्य केवलान्वयित्वा-

टिप्पणी ।

**व्यापकाभावसमूहेति ।** कार्याभावव्यापकतावच्छेदकसमुदायत्वाश्रयैकदेश इत्यर्थः । अवच्छेदकत्वञ्च स्वरूपेण, न पर्य्याप्त्या, एवञ्च कारणाभावस्य कार्य्याभावव्यापकत्वेऽपि प्रत्येकन्न क्षतिः । **घटत्ववदिति ।** युगपत्सर्वब्रह्माण्डनाशपक्षे घटत्वस्य दृष्टान्तता । वस्तुतस्त्वैन्द्रत्वादिरेव दृष्टान्तः । तदाश्रयानधिकरणकालस्य प्रसिद्धत्वादिति । ननु गन्धानधिकरणकालसिद्धावपि तदवृत्तित्वं प्रागभावस्य कथं सिद्धम् । शब्दप्रत्यक्षयोरभावात् । अनुमानस्य च साध्यप्रसिद्धिमात्रेणासम्भवादिति चेन्न । प्रागभावत्वावच्छिन्नो गन्धानधिकरणकालावृत्तिः, गन्धप्रागभावावितिप्रतीतिविषयत्वाद् गन्धवदित्यनुमानात्तत्सिद्धिः । गन्धे साध्यप्रसिद्धिश्च प्रकाशोक्तानुमानादेव । तेन च काले गन्धानधिकरणत्वसिद्धौ गन्धेऽपि तुल्यवित्तिवेद्यतया

प्रकाश ।

नापि सामग्र्येकदेशत्वं कारणत्वं, कारणसमूहस्यैव सामग्रीत्वात् । उच्यते । गन्धानधिकरणका-

प्रकाशिका ।

भावस्य केवलान्वयित्वाभ्युपगमादिति भावः । गन्धानधिकरणेति । स्नेहप्रागभावेऽव्याप्तिरिति कालपदम् । अभावपदं तु विरोधिपरं तत्प्रागभावलाभाय । तत्तत्कारणतायास्तत्तत्प्रागभावघटितत्वात् । यत्तु भावातिव्याप्तिवारणायाभावपदं यथाश्रुतार्थकमेवेति । तत्तुच्छम् । प्रकृते कारणतानिर्वचनाय प्रागभावनिर्वचनमिति ध्वंसे प्रतियोगिनः कारणत्वनिष्पत्तये भावस्यापि लक्ष्यत्वात् यदा तु विभाजकोपाधिनिर्वचनं तदा तद्व्याख्यानं समीचीनमिति । ननु गन्धानाधारसमयो नास्तीत्यवधारितवतो मीमांसकस्य कथं प्रागभावघटितकारणताज्ञानं तदज्ञाने च कथं प्रवृत्तिः, इष्टसाधनताज्ञानसाध्यत्वात् प्रवृत्तेः, किञ्चैवं कारणताबोधकशब्दस्यैव महाप्रलये प्रमाणमिति तत्र विप्रतिपत्तिरपि कथं मीमांसकादेरिति चेत् । न । अनुगतप्रागभावत्वाज्ञानेऽपि तत्तत्कार्यनिरूपिततत्तत्प्रागभावत्वज्ञानात् तत्तत्कार्यनिरूपिततत्तत्प्रागभावव्यक्तिघटिततत्तत्कारणताज्ञानेन तत्तत्कार्यार्थिनः प्रवृत्तेः शब्देनापि प्रतियोग्यनुगतीकृततत्तत्प्रागभावघटितकारणताया एवाभिधानात् प्रागभावलक्षणानुगतमेवेदं स्वमते । वस्तुतः कारणत्वं स्वरूपसम्बन्धविशेषो विषयस्य ज्ञानेनैव कार्येण कारणस्य प्रतीतिसिद्धः तज्ज्ञानमेव च प्रवृत्त्यनुकूलम् इदन्तु नियामकमात्राभिधानम् । अत एव गन्धानाधारत्वेनेव नीलानाधारत्वादिनापि स कालो लक्षयितुं शक्य एवेति विनिगमकाभावादुभयगर्भप्रागभावत्वघटितकारणत्वज्ञानस्य प्रवर्त्तकत्वेऽननुगम इत्यपास्तम् । नियामकानेकत्वस्या-

मकरन्दः ।

दिति भावः । गन्धानधिकरणेति । निर्गन्धान्योन्याभावादावतिव्याप्तेराह । कालेति । अभावपदञ्च घटादिवारणायेत्याहुः । तन्न । कारणत्वसामान्यलक्षणार्थं तस्य लक्ष्यतौचित्यमित्युक्तत्वात् । तस्मात् तत्प्रतियोगिकाभावलाभार्थमभावपदम् । न हि प्रागभावसामान्यगर्भं कारणत्वं, किन्तु तत्प्रतियोगिप्रागभावावच्छिन्नसमयवृत्तित्वं तत्कारणत्वम् । तथा च तादृशकालावृत्तिस्तदभावस्तत्प्रागभाव इति पर्यवस्यति । ननु गन्धानाधारसमयो नास्तीति निर्णयवतो मीमांसकस्येष्टसाधनतालिङ्गककार्यताज्ञानेन प्रवृत्तिदर्शनान्नैतत्प्रागभावगर्भं कारणत्वम् । किञ्च, कारणत्वबोधकशब्दादिरेवैवं महाप्रलयकाले प्रमाणं स्यात् । तस्य तद्घटितत्वात् । तथा च तदनभ्युपगमोऽपि तस्य व्याहन्येतेति चेत् । मैवम् । विशेषतो बाधावतारेऽपि सामान्यतस्तस्य तद्ग्रहाभ्युपगमादित्येके । वस्तुत इदं कारणत्वं न प्रवृत्त्यनुकूलम् । अनन्यथासिद्धिघटितत्वेन गुरुत्वात् । तथा च स्वमतेन लक्ष्यतावच्छेदकतया निरुक्तं, वक्ष्यमाणं तदनुकूलं लाघवादिति । एतेन गन्धानाधारगर्भत्वन्नीलाधारगर्भत्वादिनाऽपि तन्निर्वचनात्तद्गर्भं कारणत्वमपि भिद्येत । तथा च विनिगमकाभावादुभयगर्भेष्टसाधनताज्ञानप्रवर्त्तकतायां प्रवृत्त्यननुगम इत्यपास्तम् । अन्ये तु आकाशादिपदात् कदा-

टिप्पणी ।

तदवृत्तित्वस्यापि सिद्धेः, पक्षतावच्छेदकप्रागभावत्वञ्च प्रतीतिविशेषविषयाभावत्वमेवेति न परम्पराश्रयः । प्रतीतेर्व्यावृत्तिश्च कालविशेषपुरुषविशेषादेवेति न प्रतीतिविषययोः परस्परव्यावर्त्तकत्वेऽन्योन्याश्रय इति दिक् । गन्धानधिकरणकालावृत्तिरभाव इति । ननु गन्धानधिकरणसमयो नास्तीत्यबाधितज्ञानवतो मीमांसकस्य कथं प्रागभावघटितकारणताज्ञानं तदज्ञाने च कथं वृत्तिः, कारणताबोधकशब्दस्यैव प्रलये मानत्वात्कथं महाप्रलये विप्रतिपत्तिरिति चेन्न । अनुगतप्रागभावत्वाज्ञानेऽपि तत्तत्प्रागभावव्यक्तिघटितकारणताविशेषज्ञानादेव प्रवृत्तेः ।

प्रकाशः ।

त्त्वावृत्तिरभावः प्रागभावः । न च तत्र मानाभावः । गन्धत्वं स्वाधिकरणानधिकरणकालवृत्ति,

प्रकाशिका ।

दोषत्वात् । वस्तुतोऽननुगमोऽपि न, कालोपाधिविशेषघटितत्वात् प्रागभावस्य स च नीलानाधारत्वेन वोपलक्ष्यतां गन्धानाधारत्वेन वेति न कश्चिद् विशेषः, उपलक्ष्यस्यैकत्वात् । केचित्तु प्रागभावगर्भं कारणत्वं लक्ष्यतावच्छेदकं, लक्षणं तु सहकारिवैकल्येत्यादिवक्ष्यमाणमिति नाननुगमादिदोषाशङ्केत्याहुः । **स्वाधिकरणेति** । स्वाधिकरणत्वावच्छिन्नभिन्नवृत्तीत्यर्थः । गन्धवृत्तितया सिद्धसाधनवारणाय कालपदम् । **कार्यमात्रेति** । आत्मत्वादौ व्यभिचार इति कार्येति । सत्तादौ व्यभिचार इति मात्रेति । ध्वंसत्वे व्यभिचार इति जातीति । तदर्थश्च समवेतत्वमात्रमितरदलप्रवेशस्य व्यर्थत्वात् कार्यत्वं च क्षेमसाधारणकृतिसाध्यत्वमात्रमतः प्रागभावप्रतियोगित्वरूपं कार्यपदार्थमादायान्योन्याश्रयशङ्कापा-

मकरन्दः ।

चिच्छब्दाश्रयत्वेन कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेनेतिवत् कदाचिन्नीलाधारत्वेनापि समयविशेषोपलक्षणान्न काऽपि क्षतिः । तत्समयविशेषावृत्त्यभावावच्छिन्नसमयत्वस्यैव हेतुत्वरूपतया च न प्रवृत्त्यननुगम इति वदन्ति । स्वरूपसम्बन्धविशेषः कारणता प्रतियोगित्वादिवत् , तत्परिचायक एवायं धर्मविशेष उक्त इत्याहुः ॥

**स्वाधिकरणेति** । स्वाधिकरणतावच्छिन्नेत्यर्थः । अत एव गन्धवृत्तित्वेन सिद्धसाधनवारणाय, **कालेति** । आत्मत्वादौ व्यभिचारवारणाय **कार्येति** । द्रव्यत्वादौ व्यभिचारवारणाय **मात्रेति** । ध्वंसत्वादौ व्यभिचारवारणाय **जातीति** । जातिपदार्थनिर्वचने यदि व्यर्थत्वशङ्का तदा तावन्मात्र एव तात्पर्यम् । ननु कार्यत्वं प्रागभावप्रतियोगित्वमित्यन्योन्याश्रय इति चेन्न । प्रागभावसाधारणकृतिसाध्यत्वमात्रस्य तत्त्वेनाभिमतत्वादित्याहुः । खण्डप्रलयवृत्तितया घटत्वस्य दृष्टान्तत्वम् । तदसिद्धावपि चैत्रत्वादेर्दृष्टान्तत्वं बोध्यम् । ननु सिद्ध्यतु गन्धानाधारसमयस्तथापि प्रागभावस्य तदनधिकरणत्वं कथं ग्राह्यम् ? न हि तत्र प्रत्यक्षमागमो वा सम्भवति । अनुमानञ्च सम्भवेत् तत्प्रसिद्ध्युत्तरम् । तथा चानुमानप्रवृत्तौ प्रागभावत्वेन धीस्तस्याञ्चानुमानप्रवृत्तिरित्यन्योन्याश्रय इति चेन्न । तादृशसमयो नास्तीति निर्णयवतो मीमांसकस्य, भविष्यतीति बुद्धिर्निरुक्तातिरिक्तरूपेण प्रागभावस्यावश्यं तद्बुद्धिविषयत्वात्तेन रूपेण तद्बुद्धिविषयत्वेन वोपस्थितस्य प्रागभावस्य लिङ्गाभासादिनापि तादृशसमयानाधारत्वमिति सम्भवाद् गन्धस्यैव दृष्टत्वात् । यद्वा, कादाचित्काभावत्वेनैवोपस्थितस्य तदनुमानं ध्वंसांशे बाधादेवानुमानात् । तदनवतारे तदंशे भ्रमत्वेऽपि न क्षतिरिति ।

टिप्पणी ।

अनुगतप्रागभावत्वञ्चेदं स्वमतेनैव । अन्यथा तु शब्देनापि प्रतियोग्यनुगतीकृत्य तत्तत्प्रागभावघटितकारणताया एवाभिधानात् । अन्यथा विषयस्य ज्ञानेनैव कार्त्स्न्येन कारणस्य स्वरूपसम्बन्धविशेषः कारणत्वं तज्ज्ञानेनैव प्रवृत्त्यादिनिर्वाहः । प्रागभावघटितकारणत्वं तु नियामकमात्रम् । अत एव च गन्धानाधारत्वेनेव नीलानाधारत्वादिनापि स काल उपलक्ष्यतां विनिगमकाभावादित्यननुगतकारणत्वाज्ञानादप्रवृत्तिरित्यप्यपास्तम् । नियामकाननुगमस्यादोषत्वात् । यद्वाननुगमोऽपि न कालोपाधिविशेषघटितत्वात् प्रागभावस्य स कालो नीलानाधारत्वेन वा गन्धानाधारत्वेन वोपलक्ष्यतां तथापि नानुगमः । उपलक्ष्यस्यैक्यात् । अथवा प्रागभावघटितकारणत्वं लक्ष्यतावच्छेदकम् ,

प्रकाशः ।

कार्यमात्रवृत्तिजातित्वात्, घटत्ववत् । स एव सर्वमुक्तिकालः । अन्यथासिद्धिश्च पञ्चधा । येन सहैव

प्रकाशिका ।

स्ता । **घटत्ववदिति** । युगपत् सर्वेषां ब्रह्माण्डप्रलयपक्ष घटत्वं दृष्टान्तः । अन्यथा तु चैत्रत्वादिकं दृष्टान्त इति ध्येयम् । ननु गन्धानधिकरणकालसिद्धावपि तदवृत्तित्वं प्रागभावस्य कथं ग्राह्यं प्रत्यक्षशब्दयोरभावात्, अनुमानस्य च साध्यप्रसिद्धिमन्तरेणाप्रवृत्तेरिति चेत् न, प्रागभावत्वावच्छिन्नो गन्धानधिकरणकालावृत्तिः गन्धप्रागभावाविति प्रतीतिविशेष्यत्वात् गन्धवदित्यनुमानेन तद्ग्रहात् प्रतीतिविशेषविषयाभावत्वमेव च प्रागभावत्वमतो नान्योन्याश्रयाद्यवकाशः, पक्षनिर्वचने तत्पुरुषीय तत्कालीनत्वमेव च प्रतीतेर्व्यावर्त्तकमिति न विषयप्रतीत्योः परस्परव्यावर्त्तकत्वेनान्योन्याश्रयः, प्रतीतिश्चेत् प्रागभावीयेदानीं स्मृतेत्यनादितैव इयञ्च कल्पना भविष्यतीति मीमांसकादिसाधारणप्रतीत्यनुरोधेन गन्धे च साध्यं प्रकाशोक्तानुमानसिद्धमेव गन्धे तत्तत्कालावृत्तित्वस्य तत्तत्काले गन्धानधिकरणत्वग्राहकेन तेन समानसंवित्संवेद्यतया विषयीकरणात् विपक्षबाधकं च प्रागभावस्य विनाशत्वनियम एवाविनाशे च प्रागभावत्वव्याघात इति । ननु गन्धानधिकरणकालेऽपि कर्मप्रागभावानुवृत्तिसन्देहेनाव्याप्तिसन्देहादलक्षणमिदमत आह **स एवेति** । तथा च कोऽपि प्रागभावो न तदेति नाव्याप्तिरिति भावः । ननु युगपन्नाशे मानाभावः, यावद्गन्धनाशो हि यावददृष्टनाशात् कालविशेषद्वारा वाच्यः, स च सर्वनाशे साधारण एवेत्याशयात् पूर्वोक्तदोषभयेन योगार्थमपहाय रूढ्या अन्यथासिद्धपदार्थमाह । **अन्यथासिद्धिश्चेति** । एतन्निर्वचनञ्च निरुक्तकारणतालक्षणानुसारेण, स्वरूपसम्बन्धात्मककारणताभ्युपगमे तु नैतदुपयोग इति मन्तव्यम् । **येन सहैवेति** । येन पृथगन्वयादिमताऽवच्छेदकीभूतेन सह यस्यापृथगन्वयादिमतः पूर्ववर्त्तित्वं गृह्यते तेन तदन्यथासिद्धमित्यर्थः । पृथगित्यादिविशेषणेन दण्डत्वेन न दण्डाद्यन्यथासिद्धिः, अपृथगित्यादिविशेषणेन न दण्डेन दण्डसंयोगोऽन्यथासिद्धः । घटं प्रति अवच्छेदकीभूतेनेति विशेषणाद्दण्डत्वस्याप्यनेनैव संग्रहे तत्संग्राहकान्यथासिद्ध्यन्तरवैयर्थ्यमिति दूषणमपास्तम् । अत्र ह्यवच्छे-

मकरन्दः ।

**स एवेति** । नन्वत्र मानाभावः, युगपन्नाशे मानाभावात् । तथा च यावद्गन्धनाशानन्तरमपि वस्त्वन्तरसत्त्वसम्भावनया तत्प्रागभावस्य गन्धानाधारत्वसंशयेन तत्कारणेऽपि तद्गर्भकारणत्वलक्षणाऽव्याप्तिसन्देहः । एवञ्च व्यर्थविशेषणतासन्देहात्तद्वारणाय विशेषणमप्यदेयमिति । अत्राहुः । यावद्गन्धनाशो ह्यदृष्टाभावात् । अन्यथा संयोगविभागयोरन्योन्यनाश्यतयान्यतरावस्थितौ सर्वमुक्त्यनुपपत्तेः । तथा च सर्वादृष्टाभावाद् यावत्कार्याभावो वाच्य इति युगपदेव सर्वनाश इति । कारणेतरत्वेनेत्यादिदोषभिया योगार्थमपहाय रूढमन्यथासिद्धिपदार्थमाह । **अन्यथासिद्धिश्चेति** ।

**येन सहैवेति** । ननु शब्दादिना दण्डपूर्ववर्त्तित्वज्ञानं विनापि तद्रूपपूर्ववर्त्तित्वग्रहसम्भवान्नियमोऽसिद्धः । न च प्रत्यक्षेणेति विशेषणीयम् । अतीन्द्रियान्यथासिद्ध्यव्याप्तेः । नियमाविवक्षायां दण्डरूपेणैव दण्डस्यान्यथासिद्ध्यापत्तेरिति चेन्न । रूपत्वमात्रस्यातिप्रसक्ततया दण्डरूपत्वेनैव पूर्ववर्त्तित्वग्रहो वाच्यः । तथा च साहित्यनियमात् । न चैवं द्रव्यत्वादेरतिप्रसक्ततया दण्डत्वेनैव

टिप्पणी ।

लक्षणन्तु सहकारिवैकल्येत्यादि वक्ष्यतीति न किमप्यनुपपन्नमिति ध्येयम् । **येन सहैवेति** । येन पृथगन्वयादिमता अवच्छेदकीभूतेन यस्यापृथगन्वयादिमत इत्यर्थः । यथाश्रुते दण्डत्वेन दण्डोऽन्यथासिद्धः स्यात् । पृथगिति विशेषणात् परमाण्वादिनीलघटादिनीलयोर्नीलत्वस्यैक्याद्

प्रकाशिका ।

दकेनावच्छेद्यमन्यथासिद्धमित्यर्थोऽग्रे तु विपरीतमिति भेदात् । न चोद्भूतरूपतेजसोरेकेनापरस्यान्यथासिद्धिः । तत्रोभयोरुभयावच्छेदेनैव पूर्ववर्तित्वग्रहात् पृथगित्यादि विशेषणेनैव निरासात् । ननु कुम्भकारपितृत्वेनापि कारणत्व इयमेवान्यथा सिद्धिरिति किमिति तत्संग्राहकान्यथासिद्ध्यन्तराभिधानमिति चेत् न । यस्येत्यत्र स्वनियतपूर्ववर्तिभिन्नस्येति विशेषणात् मननव्यापारकश्रवणत्वेन कारणत्वरक्षार्थमेव तद्विशेषणस्यावश्यकत्वात् । न च तथापि रूपत्वेन दण्डरूपस्य कारणत्वमस्तु तत्रोक्तान्यथासिद्धिविरहादिति वाच्यम् । तेन रूपेणान्यत्रेत्याद्यन्यथासिद्धावेव प्रवेशात् । न च दण्डरूपत्वेनापि तदन्यथासिद्धिप्रवेशोऽस्तु तथा च किमनयान्यथासिद्धयेति वाच्यम् । तत्र ह्यवश्यकल्पनीय पूर्ववर्तिसाहित्यनियतत्वमित्यर्थः । तथा सति उद्भूतरूपतेजसोरुभयोरुभाभ्यामन्यथासिद्धि

मकरन्दः ।

दण्डपूर्ववर्तित्वग्रहात्तेन दण्डस्यान्यथासिद्धिरस्त्विति वाच्यम् । येन पृथगन्वयवता सहेत्यर्थात् । अत्रापृथगन्वयादिमत इत्यपि यस्येति विशेषणं देयम् । तेन दण्डेन दण्डसंयोगस्य नान्यथासिद्धिः । एतद्विशेषणद्वयमहिम्नैव यत्रोभयोरुभयविशेषणावच्छेदेनैवान्वयाद्यनुविधानं, तत्र नैकेनापरस्यान्यथासिद्धिः, यथोद्भूतरूपतेजसोरिति । यत्रोभयविशेषणावच्छेदेनान्वयाद्यनुविधानं, तद्भिन्नत्वेन विशेषणान्न तादृशस्थलेऽतिप्रसङ्ग इत्यन्ये । ननु रूपवत् कुम्भकारपिताऽप्यत्रैवान्यथासिद्धावन्तर्भवति, कुम्भकारत्वेन तदनन्यथासिद्धत्वस्येष्टत्वात् कुम्भकारपितृत्वेनैव तदन्यथासिद्धिरवं वाच्यम् । तत्र तत्साहित्यनियमाद् अन्यं प्रतीत्यत्राप्यन्तर्भावयितुं शक्यते । कुम्भकारं प्रति पूर्ववर्तित्वे ज्ञात एव तत्पितृत्वेन घटपूर्ववर्तित्वग्रहात् । तथा च तत्संग्रहार्थमन्यथासिद्ध्यन्तरोपवर्णनमयुक्तम् । एवञ्च एतत्त्वेनान्यथासिद्धस्यापि कुम्भकारत्वेनेव दण्डरूपत्वेनान्यथासिद्धस्यापि रूपत्वादिनाऽनन्यथासिद्धत्वमस्तु । ननु तदतिप्रसक्तमिति चेत् । तत् किमतिप्रसक्तत्वमप्यन्यथासिद्धिः ? तथा चानन्यथासिद्धत्वनियतपूर्ववर्तित्वयोरप्रतिक्षेपे किं तेन ? किञ्च, फलानुपहितवृत्तित्वस्यातिप्रसक्तत्वस्य दण्डत्वादिसाधारणत्वाद् एतादृशस्य चाभावात् । न च तेन रूपेणान्यत्र क्लृप्तेत्यत्रान्तर्भवतीति वाच्यम् । तर्हि दण्डरूपत्वेनाऽपि तथाऽस्तु । एवञ्च दण्डसाहित्येनैव दण्डत्वेन घटपूर्ववर्तित्वग्रहाद्दण्डत्वमप्यत्रान्तर्भवति । यदि च रूपान्तरेण तस्य तद्ग्रहे साहित्यनियमाभावान्न तथा, तदा दण्डरूपेऽपि तुल्यम् । तथा च तत्संग्रहार्थमपरान्यथासिद्धिनिर्वचनमप्यसङ्गतम् । अत एवावच्छेदकजनकजनकयोरपि त्रयेणैव संग्रहसम्भवात् त्रिधैवान्यथासिद्धिरिति गङ्गेशः । न चोभयेनापि तत्संग्रहे को दोष इति वाच्यम् । कारणत्वस्य तदभावगर्भत्वे गौरवादिति चिन्तनीयम् ।

टिप्पणी ।

घटान्तर्भावेण महत्त्वसम्बन्धात् । उष्मरूपवह्न्यादिरूपयोरूपत्वस्यैक्यात् उद्भूतरूपसम्बन्धस्य वह्न्यन्तर्भावेण सत्त्वात् परमाण्वादिनीलान्तर्भावेण नीलत्वादिप्रत्यक्षापत्तिः । एवं यत्रैकदेशावच्छेदेन चक्षुःसंयोगोऽपरदेशावच्छेदेनाऽऽलोकसंयोगस्तत्र प्रत्यक्षापत्तिरतः प्रत्यक्षकारणानां महत्त्वोद्भूतरूपालोकादीनां विशेष्यविशेषणभावापन्नानां कारणत्वं वाच्यम् । तथा चैकेनापरान्यथासिद्धिप्रसङ्गो वारितः । एतेनान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वरूपस्य तस्य तत्राभावात् तेषां परस्परविशेष्यविशेषणभावेन विशिष्टसत्त्वस्य विशेषणसत्त्वाधीनत्वात् समवायेन कपालद्वयसंयोगसत्त्वस्य कपालसत्त्वाधीनत्वेन पृथगन्वव्यतिरेकवत्त्वात् पृथगितिसत्त्वेन तस्यान्यथासिद्धिवारणम् , अवच्छेदकीभूतत्वविशेषणेन दण्डत्वेन दण्डस्यान्यथासिद्धत्वात् संग्राहकमन्यथासिद्ध्यन्तरानुधावनं विफलमिति निरस्तम् । ननु कुलालेन कुलालपितुरत्रैवान्तर्भावस्तत्सङ्ग्राहकान्यथासिद्ध्यनुधावनं व्यर्थमिति चेत् । न । मोक्षं प्रति मननव्यापारकश्रवणत्वेन हेतु-

प्रकाशः।

यस्य यं प्रति पूर्ववर्त्तित्वज्ञानम्, यथा घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववर्तित्वज्ञानम्, यथा शब्दं प्रति पूर्ववर्तित्वे ज्ञात एव घटं प्रत्याकाशस्य।

प्रकाशिका।

प्रसङ्ग इति अवश्यकल्पनीये स्वावच्छेदकभिन्नत्वस्यापि विशेषणात्। अन्यं प्रतीति। अन्यम्=उदासीनमित्यर्थः, तेन कुम्भकारपिता नास्यामन्यथासिद्धौ प्रविशतीति तदर्थमन्यथासिद्ध्यन्तरमुक्तम्। मननव्यापारकश्रवणत्वेन कारणत्वरक्षार्थमुदासीनत्वविवक्षाया आवश्यकत्वात्। न चापूर्वे यागस्यान्यथासिद्धिः स्वर्गापूर्ववर्त्तिताग्रहोत्तरमेव तस्य तत्पूर्ववर्त्तित्वग्रहादिति वाच्यम्। यं प्रत्यन्यथासिद्धत्वं तन्निरूपितनियतोत्तरवर्त्तित्वनियतपूर्ववर्त्तित्वान्यान्यशून्यस्योदासीनपदार्थत्वात्। पूर्ववर्त्तित्व इत्यत्र साक्षादिति विशेषणाद्वा। तत्पक्षे च नियतपूर्ववर्तिभिन्नस्योदासीनपदार्थत्वमित्यवधेयम्। मिश्रास्तु यस्य पूर्ववर्तित्वमित्यत्र तत्पूर्ववर्त्तित्वानुपपादकमिति विशेषणमित्याहुः। न च परत्वादि पूर्ववर्तित्वग्रहोत्तरमेव कालादेः कार्यान्तरपूर्ववर्तित्वग्रह इति तत्र कालादेरन्यथासिद्ध्यापत्तिः, तत्पूर्ववर्तिताग्रहं विनापि अधिकरणत्वेन कार्यमात्रे घटं प्रति कपालकारणत्वग्रहे तद्ग्रहात्। एतेन संयोगं प्रति आकाशस्यान्यथासिद्धिः स्यादित्यपास्तम्। द्रव्यत्वेन सामान्यत एव तद्ग्रहसम्भवात्, आकाशत्वेनान्यथासिद्धत्वस्येष्टत्वात्। ननु शब्दपूर्ववर्त्तित्वग्रहं विनापि शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितो अष्टानाश्रितत्वेसत्याश्रितत्वादित्यनुमानेनाकाशोपस्थितौ तस्य घटपूर्ववर्तित्वग्रहात् तं प्रति कथमाकाशमन्यथासिद्धम्। न चात्राप्यनुमाने शब्दपूर्ववर्तित्वमेव विपक्षबाधकमिति वाच्यम्। तथा सति मीमांसकानां शब्देनाकाशसिद्धिप्रसङ्गादनुकूलतर्कान्तरस्यावश्यवाच्यत्वादिति चेन्न। नियतजातीयसिद्ध्यधीनसिद्धिकस्य तज्जातीयान्यकार्यं प्रत्यन्यथासिद्धिस्तेन रूपेणेति विवक्षितत्वात्। नियतजातीयत्वञ्च गुणत्वव्याप्यजात्या। नन्वेवमपि द्रव्यत्वेन ज्ञानं प्रत्याकाशस्य कारणत्वमस्तु, नच तत्र ग्राहकाभावः, ग्राह्यसत्त्वे तस्यावश्यकत्वादिति चेन्न। तेन रूपेणान्यत्रेत्यादावन्तर्भावात्। न चाकाशत्वेनापि तत्रैव प्रवेशोऽस्तीति वाच्यम्। अवश्यकल्प्यपूर्ववर्तिनियमसहवृत्तिधर्म्मवत्त्वस्य तदर्थत्वात्। आकाशस्य चावृत्तित्वेनाकाशत्वस्यातथात्वात्। न च शब्दसाक्षात्कारं प्रत्यपि श्रोत्रस्यान्यथासिद्धिः स्यात् शब्दपूर्ववर्तिताग्रहोत्तरं तत्पूर्ववर्तिताग्रहादिति वाच्यम्। इन्द्रियत्वेन पूर्वमपि पूर्ववर्त्तिताग्रहात्। न च श्रोत्रत्वेन तथाप्यन्यथासिद्धिरिति वाच्यम्। अवध्यवधिमदभावावच्छेदकधर्म्मानाश्रयत्वे सतीति विशेषणात्। श्रोत्रस्य च सामान्यतः शब्दसाक्षात्कारं प्रति तथात्वात् ईश्वरज्ञानादीनां क्षितिपूर्ववर्त्तित्वग्रहानन्तरमेव घटपूर्ववर्तिताग्रहात् तत्र तदन्यथासिद्धिः स्यादिति दूषणं दूरपरास्तम्। नियतजातीयसिद्ध्यधीनसिद्धिकत्वात्

मकरन्दः।

अन्यं प्रतीति। न चैवं संयोगादिकमपि प्रत्याकाशस्यान्यथासिद्धत्वप्रसङ्गः। आकाशत्वेनेष्टत्वात्। द्रव्यत्वेन शब्दपूर्ववर्तिताग्रज्ञात्वाऽपि तत्पूर्ववर्तित्वग्रहात्। नन्वेवं यागादेरपूर्वेऽन्यथासिद्ध्यापत्तिः। स्वर्गं प्रति पूर्ववर्तित्वे ज्ञात एव तत्र तद्ग्रहादिति चेन्न। साक्षादिति पूर्ववर्त्तित्व-

टीप्पणी।

त्वस्य सिद्धान्तसिद्धेः श्रावणज्ञानस्य मननेनान्यथासिद्धत्ववारणाय तस्येत्यत्र अनियतपूर्ववर्तित्वभिन्नत्वं विशेषणं देयम् तथा च कुलालपितुरपि वारणम्। एवञ्च तत्तद्धर्म्मावच्छिन्ननिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यत्वे सति तादृशान्वयव्यतिरेकवद्धर्म्मावच्छिन्ना या स्वनियतपूर्ववर्तिभिन्ननिष्ठा तत्तद्धर्म्मावच्छिन्ननिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यता तदाश्रयत्वं प्रथमान्यथासिद्धेः पर्य्य-

यदि, तदा न विवदामहे । अस्मदभिप्रतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य

बोधनी ।

वृद्धावनारोहदोष इति । तर्हि सम्प्रतिपत्तौ न विवाद इत्येतत् तदवस्थमित्यत आह—**यदि-इति**। प्रतिबन्धकापाकरणीयः कश्चिदधिको मीमांसकस्यापि सम्प्रतिपन्न इति कृत्वा यदि वयं न विवदामहे ततः सोऽधिकः प्रमाणसिद्धः प्रतिबन्धकाभाव एव भविष्यतीति । अस्मदभिप्रेतस्यैवानुग्राहकत्वमङ्गीकृत्य ततोऽधिकभावे निःसाधनको मीमांसकोऽपि न विप्रतिपत्तुमर्हतीति । एके व्याचक्षते सम्प्रतिपन्नान्यायतिरिक्तसहकार्यपेक्षं कार्यमिति मीमांसको यदि ब्रूयात् नास्माकमत्र विवाद इत्याह—**तत्रापि-इति** । यदि च नैयायिकोक्तं प्रतिबन्धकाभावादेः सहकारित्वं मीमांसकोऽङ्गीकुर्यात् तदा प्रतिबन्धकाभावसहितायाः सामग्र्याः कार्यव्यभिचाराभावात् तदतिरिक्तकल्पनं निष्प्रमाणकमिति निःसाधनो मीमांसको न विप्रतिपत्तुमर्हतीत्याह-**अस्मदभिप्रेतस्य च**-इति ।

प्रकाशः ।

अन्यत्र क्लृप्तपूर्ववर्तिन एव कार्यसम्भवे तत्सहकृतत्वम् । यथा गन्धवति गन्धानुत्पादाद्

प्रकाशिका ।

सामान्यत उपादानगोचरज्ञानत्वेन पूर्ववर्तित्वग्रहाच्चेति दिक् । **अन्यत्रेति** । अवश्यपरिकल्पनीयनियतपूर्ववर्तिसमवधाननियतत्वमित्यर्थः । तेन महत्त्वानेकद्रव्यत्वयोर्बहिरिन्द्रियजन्यसाक्षात्कार-

मकरन्दः ।

विशेषणात् । तत्पूर्ववर्तित्वानुपपादकं यस्य पूर्ववर्तित्वं गृह्यते इत्यर्थ इत्यन्ये । न च परत्वादिपूर्ववर्तित्वग्रहानन्तरमन्यकार्ये दिक्कालयोस्तद्वदित्यन्यथा सिद्ध्यापत्तिः । अधिकरणत्वेन तद्ग्रहं विनाऽपि कार्यमात्रे तद्ग्रहात् । नन्वन्यं प्रति पूर्ववर्तित्वे गृहीत एवेत्यत्र किं येन केनचित् ? सर्वेण वा ? नाद्यः । दण्डादावतिप्रसङ्गात् । नान्त्यः । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यानाश्रितत्वे सति गुणत्वादित्यनेनाकाशसिद्धौ शब्दपूर्ववर्तित्वाग्रहेऽपि घटं प्रति तद्ग्रहसम्भवात् । न च तत्रापि शब्दं प्रति कारणतामुपजीव्यैवाकाशसिद्धिः । शब्दनित्यत्वानित्यत्वसन्देहेऽपि तदाश्रयत्वेन तत्सिद्ध्यविरोधात् । अनुकूलतर्कान्तरसम्भवाच्च । वस्तुतः, शब्दनित्यत्वनिर्णयवतो मीमांसकस्य तत्पूर्ववर्तित्वमज्ञात्वैव घटादिपूर्ववर्तित्वग्रह इति नियमासिद्धिः । किञ्च, द्रव्यत्वेनैवाकाशस्य संयोग इव ज्ञानादौ हेतुत्वमस्तु । न च तत्र ग्राहकाभावेन नियतपूर्ववर्तित्वाग्रह इति वाच्यम् । ग्राह्यसत्त्वे ग्राहकाभावासत्त्वात् । न च तेनैव रूपेणान्यत्रेत्यत्रान्तर्भवतीति वाच्यम् । तथा सत्याकाशत्वेनापि तथात्वापत्तेः । अपि चैवं शब्दसाक्षात्कारं प्रत्यपि तस्यान्यथासिद्धिः स्यात् । न च शब्दपूर्ववर्तितामज्ञात्वाऽपि इन्द्रियत्वेन तत्पूर्ववर्तित्वग्रह इति वाच्यम् । श्रोत्रत्वे न तथाप्यन्यथासिद्ध्यापत्तेः । तस्याकाशघटितत्वादाकाशस्य च शब्दपूर्ववर्तित्वग्रहं विनाभ्युपगमात् । अन्यथा घटेऽपि तस्यान्यथासिद्धत्वं न स्यात् । एवञ्च पाञ्चभौतिकं शरीरं प्रत्यपि तदन्यथासिद्धं स्यात् । किञ्चेश्वरज्ञानादेः क्षितिपूर्ववर्तित्वे ज्ञात एव घटपूर्ववर्तित्वग्रहात्तत्रान्यथासिद्ध्यापत्तिः । न च कार्यमात्रे कर्तृमात्रस्यैकदैव पौर्वापर्यग्रहान्नैवमिति वाच्यम् । प्रकृतेऽपि विभुमात्रस्यैकदैव पौर्वापर्यग्रहस्य शब्दादिना सम्भवादन्यथासिद्ध्यभावापत्तेः । विभुत्वेन पूर्ववर्तित्वमात्रं गृह्यते, न तु जनकत्वमिति चेत् । ततः किम् ? न हि जनकत्वगर्भा प्रकृतान्यथासिद्धिः, आत्माश्रयापत्तेः । यत्तु अन्यमित्यस्य यमित्यर्थः । तेन यं प्रति पूर्ववर्तित्वे गृहीत एवेत्यर्थः, न च क्षित्यादिस्तथा । अन्यतमपूर्ववर्तित्वग्रहेणापि सम्भवेन नियमाभावात् । तत्र शब्दत्ववदत्राप्यनुगतपक्षतावच्छेदकस्याऽन्यतमत्वादेर्वा सम्भवादिति चिन्त्यम् ॥

**अन्यत्रेति** प्रायिकम् । अवश्यकल्प्यं यल्लघु नियतपूर्ववर्ति, तत् समवधाननियतत्वं तत्त्वमित्यत्र तात्पर्यम् । तेन गुणेन दोषाभावस्य महत्त्वेनानेकद्रव्यत्वस्यान्येषां वा गुरूणां पदार्था-

प्रकाशः ।

गन्धं प्रति गन्धकादाचित्काभावस्य नियतपूर्ववर्तित्वकल्पनाद् गन्धं प्रति पाकजस्थले रूपप्रागभावादीनाम् । यत्र च जन्यपूर्वभावे ज्ञाते जनकस्य पूर्वभावो ज्ञायते, तत्र जन्येन जनकमन्य-

प्रकाशिका ।

समवधाननियतत्वेनान्यत्रैत्याद्यभावादनेकद्रव्यत्वेऽव्याप्तिः, पूर्ववर्तिन इति पञ्चम्यर्थहेतुताघटितत्वेनात्माश्रयः, रासभादेरप्येवमन्यथासिद्धतया नियतपदस्य कारणतालक्षणे व्यावर्त्याभावेन व्यर्थत्वमित्यादीनि दूषणान्यनवकाशानि । नियतयद्धर्मविशिष्टस्यावश्यकल्प्यत्वं तदवच्छिन्नसमवधाननियतत्वं यद्धर्मावच्छिन्नस्येति वार्थः । तेन रूपवत्त्वेन न दण्डस्य कारणत्वमित्यपि सिद्धं भवति । यथा च दण्डरूपाकाशयोरत्र न प्रवेशः, तथा पूर्वान्यथासिद्धिलक्षणद्वयनिरुक्तावेव व्याख्यातम् । न चाग्रिमान्यथासिद्धिसंग्राह्यस्य दण्डत्वस्यानयैव संग्रहात् तद्वैयर्थ्यमिति वाच्यम् । चक्षुःसंयोगकारणत्वेऽवच्छेदकीभूतस्य चक्षुषोऽन्यथासिद्धत्वं स्यादिति भयेनावच्छेदकभिन्नत्वस्य विशेषणतया दण्डत्वस्यैतद्बहिर्भावात् । नन्ववश्यकल्प्यत्वं नियतपूर्ववर्तित्वमात्रेण कारणतया वा, नाद्यः, गन्धं प्रति रूपप्रागभावस्य तथात्वेन तत्सहभूतस्य गन्धप्रागभावस्यान्यथासिद्ध्यापत्तेः । नान्त्यः, आत्माश्रयादिति चेत् । न । अवध्यवधिमद्भावलक्षणसम्बन्धवाच्छिन्नत्वेनावश्यकल्प्यत्वस्य विवक्षितत्वात् । न च तदेव कारणत्वमिति वाच्यम् । बीजादङ्कुरोत्पत्तिरिति प्रतीतिबलेनोत्पत्तेरपि सावधिकतया तस्याश्चाहेतुकतया तादृशसम्बन्धस्य कारणताभिन्नत्वात् । न च कार्यकारणयोस्तादृशसम्बन्धे मानाभावः प्रतीतेर्हेतुहेतुमद्भावेनैवोपपत्तेरिति वाच्यम् । उत्पत्तिनिरूपिततादृशसम्बन्धावच्छिन्नत्वस्यैव प्रकृतनिरुक्तिप्रवेशात् । न च सहकारिणो परस्परमन्यथासिद्धिरुभयोरवश्यकल्प्यसमवधाननियमादिति वाच्यम् । तादृशसम्बन्धावच्छिन्नत्वेनावश्यकल्प्यत्वस्य प्रकृते विशेषणत्वात् । **गन्धकादाचित्काभावस्येति** । गन्धप्रागभावस्येत्यर्थः । **यत्र चेति** । जन्यं नियतोत्तरवर्त्तिनं प्रति पूर्वभावे नियते ज्ञाते तत्पूर्ववर्त्तिनो यं प्रति पूर्वभावो ज्ञायते इत्यर्थस्तेन नात्माश्रयशङ्का, अन्यं प्रतीत्यत्र च यथा नैतत्प्रवेशस्तथा तत्रैव व्याख्यातम् । न चैवं मननव्यापारकश्रवणत्वेन कारणत्वं न स्यादन्यथासिद्धेरिति प्रकाशविरोध इति वाच्यम् । जन्यपूर्ववर्त्तित्वग्रहमन्तरेण

मकरन्दः ।

नामन्यथासिद्धिर्भवति । अत एव पञ्चम्या हेतुत्वाभिधानादात्माश्रय इत्यपास्तम् । पूर्ववर्त्तिन इत्यत्र पञ्चम्या अवधित्वेन तस्योक्तत्वादित्यन्ये । अत एव च रासभादेरपि यथाश्रुतान्यथासिद्धान्तर्भावेऽनन्यथासिद्धपदेनैव तद्वारणं नियतपदं व्यर्थमित्यपास्तम् । नन्वेवं दण्डरूपाकाशदण्डत्वानामप्यत्रैवान्तर्भावे तत्संग्राहकान्यथासिद्धीनामानर्थक्यम् । किञ्चावश्यकल्प्यत्वं नियतपूर्ववर्तित्वमात्रेण, कारणतया वा ? नाद्यः । गन्धं प्रति रूपविशेषप्रागभावस्यापि तथात्वेन तेनैव गन्धप्रागभावाऽन्यथासिद्ध्यापत्तेः । नान्त्यः । आत्माश्रयात् । अपि च सहकारिणां परस्परस्य परस्परेणान्यथासिद्ध्यापत्तिः, द्वयोरप्यवश्यकल्प्यलघुनियतपूर्ववर्तित्वेन तत्समवधाननियतत्वात् । न च पृथगन्वयाद्यननुविधायित्वे सतीत्यपि विशेषणम् । तद्धि पृथगन्वयादिग्रहाविषयत्वं वा समनियतत्वं वा ? नाद्यः । रूपप्रागभावस्यापि शब्दादिना तादृशग्रहविषयत्वेन तथात्वापत्तेः । नान्त्यः । आलोकतद्रूपादेरीश्वरज्ञानादेश्चैवमपि परस्परमन्यथासिद्ध्यापत्तेः । एतेनावश्यकल्प्यपूर्ववर्तिन एव कार्यसम्भवे तन्नियतसहभूतत्वमित्यर्थः । पञ्चमी चावधित्वे, न हेतुत्वे इत्यपास्तमिति चिन्त्यम्॥

**गन्धकादाचित्काभावस्येति** । गन्धप्रागभावस्येत्यर्थः । **यत्र च जन्येति** । जन्यजनकत्वं वास्तवं नियतपूर्ववर्तित्वमात्रं विवक्षितमिति नात्माश्रयः । इयञ्च तत्पितृत्वेनान्यथासिद्धिर्बोध्या । कुलालत्वेन तस्यापि हेतुत्वात् । अत्रापीदं चिन्त्यम् । पूर्वत्रैवास्यान्तर्भावे वैयर्थ्यमित्यु-

प्रकाशः।

थासिद्धम्, यथा कुम्भकारेण कुम्भं प्रति तत्पिता। यमादायैव यस्यान्वयव्यतिरेकौ तेन तदन्यथासिद्धम्, यथा दण्डेन दण्डत्वम्। एतावदन्यथासिद्ध्यभावे सति यस्य नियतपूर्ववर्तित्वं, तत् कारणम्। (पृ. १५०) **सहकारीति**। नन्वत्रात्माश्रयः सहकारित्वस्य कारणत्वात्,

प्रकाशिका।

तज्जन्यं यत्कार्यप्रयोजकत्वं, न यस्य गृह्यते तत्कार्यं प्रति तदन्यथासिद्धमित्यर्थात्। श्रवणस्य श्रोतव्य इत्यादिशब्देन मननपूर्ववर्तितामगृहीत्वापि मुक्तिप्रयोजकताग्रहात्, अत एव परामर्शजनकत्वेन व्याप्तिग्रहादीनां कारणत्वेऽपि नान्यथासिद्धिः। अनुमितेः करणजन्यत्वानुमानेनैव परामर्शपूर्ववर्तित्वमगृहीत्वाप्यनुमितिप्रयोजकत्वग्रहात्। कुम्भकारपितुः कुम्भकारपितृत्वमगृहीत्वा मानाभावेन घटप्रयोजकत्वाग्रहाद् घटं प्रति सोऽन्यथासिद्ध इति दिक्। **यमादायैवेति**। यं पृथगन्वयाद्यननुविधायिनमवच्छेदकीकृत्य यस्यान्वयव्यतिरेकौ तेनान्वयव्यतिरेकवतावच्छेदकमन्यथासिद्धमित्यर्थः। पृथगित्यादिविशेषणेन न दण्डरूपेण दण्डेऽन्यथासिद्धिः। प्रथमान्यथासिद्धिरवच्छेदकेनावच्छेद्यस्येयन्त्ववच्छेद्येनावच्छेदकस्येति ततो भेदः। **यमित्यत्र** कार्येण सहावच्छेद्यापेक्षयाऽव्यवहितसम्बन्धमिति वा विशेषणम्। तेन दण्डावच्छिन्नस्य दण्डत्वस्यान्वयव्यतिरेकग्रहेऽपि न दण्डत्वेन दण्डेऽन्यथासिद्धिः। अत एव नोद्भूतरूपतेजसोः परस्परमन्यथासिद्धिः। विषयतया साक्षात्कारेण तुल्यवदुभयोः सम्बन्धत्वात्। अत एव नेन्द्रियसंयोगेनेन्द्रियान्यथासिद्धिः। विषयद्वारा तुल्यवदुभयोः साक्षात्कारसम्बन्धात् यथा च न दण्डत्वस्य पूर्वत्रान्तर्भावः, तथा तत्रैव व्याख्यातमिति। **नियतेति**। यद्धर्मावच्छिन्नकार्याव्यवहितक्षणत्वव्यापकाधिकरणताप्रतियोगित्वं यद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं कारणमित्यर्थः। अधिकरणता च स्वस्वप्रागभावव्यापकप्रागभावप्रतियोग्यन्यतरस्य तेन यागादेः स्वर्गकारणत्वाविरोधः। अधिकरणता च कार्यदेशावच्छिन्ना बोद्धव्या, तेन रासभस्य नियतघटाव्यवहितपूर्वकालत्वेऽपि न तत्कारणत्वम्। ननु तद्देशाधिकरणता साक्षात्सम्बन्धेन वा साक्षात्परम्परासाधारणसम्बन्धेन वा, आद्ये अदृष्टस्य घटकारणत्वं न स्यात्, अन्त्ये रासभस्यापि घटकारणतापत्तिरितिचेन्न। एकजातीयतानियतेन सम्बन्धेन साक्षादेव वा पर

मकरन्दः।

कमेव। मननव्यापारकश्रवणत्वेन हेतुत्वमिति ग्रन्थप्रकाशविरोधश्च। यदि मननपूर्ववर्तित्वमज्ञात्वाऽपि, श्रोतव्य इत्यादिशब्दादिना श्रवणपूर्ववर्तित्वग्रहसम्भवो भिन्नग्रहसामग्रीकत्वादिति नैवं, तदा प्रकृतेऽपि तुल्यमिति। **यमादायेति**। न च येन सहेत्यनेनाभेद इति वाच्यम्। तत्र साहित्यप्रतियोगिना दण्डेनान्वयादिप्रतियोगि रूपमन्यथासिद्धमिति हि विवक्षितम्। अत्र च साहित्यप्रतियोगिदण्डत्वमेव दण्डेनान्यथासिद्धमिति भेदात्। अत्रापीदं चिन्त्यम्। पूर्वत्रैवास्यान्तर्भावे वैयर्थ्यम्। उद्भूतरूपतेजसोः परस्परमन्यथासिद्ध्यापत्तिः। इन्द्रियादेरिन्द्रियसंयोगादिनाऽन्यथासिद्ध्यापत्तिश्च। किञ्च दण्डत्वाद्यवच्छेदकसमनियतधर्मान्तरमादायापि शब्दादिनाऽन्वयादिग्रहसम्भवान्नियमासिद्धिः। प्रत्यक्षपरत्वेऽतीन्द्रियावच्छेदकाऽव्याप्तिः। अन्यथा दण्डमादाय दण्डत्वेन तस्यान्वयादिग्रहात्तेन दण्डान्यथासिद्ध्यापत्तेरिति।

**नियतेति**। ननु नियतत्वं देशमपेक्ष्य कालमपेक्ष्य वा ?। नाद्य;। रासभेऽपि गतत्वात्। घटपटादिपूर्वकाले रासभजातीयस्य नियमेन सत्वात्। नान्त्यः। साक्षात्सम्बन्धेनादृष्टादेर्घटादिदेशेऽनियतत्वात्। साक्षात्परम्परासाधारणसम्बन्धमात्रापेक्षया रासभे घटादिदेशनियतत्वेनातिप्रसङ्गादिति चेत्। मैवम्। साक्षात्परम्परासाधारणैकजातीयसम्बन्धेन देशनियतत्वस्य विवक्षितत्वात्। रासभादेरेकजातीयसम्बन्धेन घटादिदेशनियतत्वाभावाद् घटादेरेकजातीयसम्बन्धेना-

प्रकाशः ।

प्रयुक्तत्वं च न जन्यत्वं, प्रागभावस्याजन्यत्वात् । नापि जनकत्वम् , असम्भवात् । नापि व्यापकत्वम् । शिलाशकलेऽपि तादृशाभावस्य सत्त्वेन तत्रातिव्याप्तेः । नाऽपि व्याप्यत्वम् । कार्यसंसर्गाभावमात्रस्य सहकार्यभावाव्याप्यत्वात् । शिलाशकलादौ कार्याभावे सत्यपि सहकार्यभावस्यासत्त्वात् । न च कार्यप्रागभावस्तद्व्याप्यः । निमित्तासमवायिनोः कार्यप्रागभावाभावेन तदव्याप्तेः । उच्यते । यस्य कार्याभावव्याप्यत्वमितराभावावच्छिन्नं, तत् कारणम् । बीजेऽङ्कराभावव्याप्यता न बीजत्वेनावच्छिद्यते, इतरसमवधाने सति बीजादङ्कुरसत्त्वात् । किन्त्वितराभावे

प्रकाशिका ।

म्परया वा तद्देशाधिकरणत्वस्य विवक्षितत्वात् । न च कियत्सु घटेष्वपि रासभस्यापि नियतः सम्बन्धोऽस्त्येवेति कार्यतावच्छेदकावच्छिन्न एकजातीयः सम्बन्धो नादृष्टस्यापि द्रव्यगुणादौ तस्य नानाजातीयतद्देशसम्बन्धादिति वाच्यम् । कारणता हि प्रतिकार्यं प्रतिकारणं च भिन्नेति तत्र तत्र कार्येऽदृष्टस्य नियतजातीयदेशसम्बन्धात् । न च कार्यत्वावच्छिन्नेऽदृष्टत्वेन कारणतायां नैकजातीयसम्बन्ध इति वाच्यम् । तस्याः कारणतायाः साक्षात्परम्परासाधारणनानाजातीयसम्बन्धमात्रघटितत्वात् । न चसैव कारणता रासभेऽतिव्याप्तेति वाच्यम् । तस्यां कारणतायामुक्तरूपविशेषकारणताश्रयत्वस्य विशेषणत्वात् । ताश्च विशेषकारणताः कार्यत्वव्याप्यधर्म्मनिरूपितत्वे सत्यदृष्टत्वव्याप्यधर्म्मनिरूपितत्वेनानुगमनीया इति न तद्घटितसामान्यकारणताननुगम इति दिक् । **यस्य कार्याभावेति** । यस्यावध्यवधिमद्भावलक्षणसम्बन्धावच्छिन्नकार्याभावव्याप्यता इतरसहकार्यभावावच्छिन्ना तदवच्छिन्नं कारणमित्यर्थः । तेन शिलात्वेऽपि संयोगावच्छिन्नाङ्कुराभावव्याप्यता न शिलात्वत्वेनाच्छिद्यते शिलायां कदाचिदङ्कुरसत्त्वादिति तत्रातिव्याप्तिः, यत्र दण्डाभाववत्त्वं तत्र घटाभाव इति व्याप्तावधिकरणतया दण्डाभावस्यावच्छेदकतया तदवच्छिन्ने दण्डाभाववत्त्वेऽतिव्याप्तिः, कार्याभावव्याप्यता इतरासहकृतत्वावच्छिन्ना बीजत्वस्येति तत्रातिव्याप्तिरित्यादीनि दूषणानि न भवन्ति । न च चरमकारणे कार्याभावाभावादव्याप्तिः, चरमकारणेऽपि परामर्शादौ सति प्रतिबन्धके कार्याभावात् यत्रापि न विलम्बः परामर्शादनुमितौ, तत्रापि तज्जातीयत्वमस्त्येव, तदेव च लक्षणम् । न चैवमपि विभागकारणे कर्म्मणि प्रतिबन्धकस्याप्यभावादसङ्गतिरिति वाच्यम् । उत्पत्तिकालावच्छिन्नस्य कर्म्मणो विभागाभावाधिकरणत्वात् । एवं च स्वासाधारणेतरधर्म्मावच्छिन्नं यस्योक्तसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं तदवच्छिन्नं कारणमिति लक्षणवाक्यार्थः । अन्यथासिद्धानाञ्च स्वभावत एवोक्तसम्बन्धावच्छिन्नकार्याभाव इति न तत्रातिप्रसङ्गः । अत एव तदवच्छिन्नस्य धर्मिणः कारणत्वमित्येवार्थो न तु तदवच्छेदेन कारणत्वमिति तेन न रूपवद् दण्डत्वमादायातिप्रसङ्गः । अरण्यस्थदण्डत्वं यद्यपि स्वरूपेण घटाभावव्याप्यम् , तथापि दण्डत्वमादायैव तत्र कारणता । अग्रे च बीजबीजत्वपदे बीजत्वबीजत्वत्वपरे इति दिक् । ननु कार्यकारणयोरवध्यवधिमद्भावसम्बन्धे मानाभावः । प्रतीतेः कार्यकारणभावेनैवोपपत्तेरित्युत्पत्ति-

मकरन्दः ।

ऽदृष्टादेर्नियतत्वादिति वदन्ति । तत्रेदं चिन्त्यम् । कियत्सु घटेषु रासभस्याऽप्येकजातीयसम्बन्धेन कार्यतावच्छेदकावच्छेदेनादृष्टस्याप्यतथात्वम् । द्रव्यगुणाद्यनेककार्यदेशनियतत्वादतिप्रसङ्गः । एकजातीयसम्बन्धाभावादिति ॥

**यस्य कार्याभावव्याप्यत्वमिति** । इतराभावसहकारावच्छिन्नं तदवच्छिन्नं कारणमि-

टिप्पणी ।

वसितार्थः । **प्रागभावस्याजन्यत्वादिति** । ध्वंसस्योत्तरभावितयात्राप्रयोजकत्वात् कार्य्याभावस्य तस्य जन्यत्वमपि न किञ्चित्करमतः प्रागभावस्येति प्रागभावेत्युपलक्षणमत्यन्ताभावस्येत्यपि बोध्यम् । **यस्य कार्य्याभावव्याप्यत्वमिति** । अवध्यवधिमद्भावलक्षणसम्बन्धावच्छिन्न

प्रकाशः ।

नावच्छिद्यते । इतराभावे बीजेऽङ्कुराभावनियमाद् । शिलायां तु तत्, शिलात्वेनैवावच्छिद्यते ।

मकरन्दः ।

त्यर्थः । तेन बीजत्वस्य कार्याभावव्याप्यत्वस्य जनकत्वाभावान्नासम्भवः । न वा यत्र दण्डाभाववत्त्वं तत्र घटाभाव इति दण्डाभावनिष्ठव्याप्तौ दण्डाभावस्यैवावच्छेदकतयाऽजनके दण्डाभावादौ चातिव्याप्तिः । तत्र दण्डाभावसहकृतत्वस्यानवच्छेदकत्वात् । एवञ्चाग्रे बीजत्वादिपदं तद्धर्मपरमिति । ननु कार्याभावस्तज्जनकत्वाभावो वा, तदभावमात्रं वा ? । आद्ये आत्माश्रयः । अन्त्ये शिलायामप्यङ्कुरस्य संयोगवृत्त्या सत्त्वेन तत्रापीतराभावसहकृतशिलात्वस्य कार्याभावव्याप्यत्वात् । किञ्च घटकारणे ज्ञानादौ कार्याभावव्याप्यत्वं ज्ञानत्वादिनैवावच्छिद्यते । दण्डाद्यभावसाहित्यस्य तत्र नीलधूम इव व्यर्थत्वादिति चेत् । अत्र वदन्ति । उत्पत्तिकालीनसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं विवक्षितम् । संयोगसम्बन्धस्योत्पत्त्यनन्तरकालीनतया तदवच्छिन्नाभावमादाय न शिलादौ प्रसङ्गः । उत्पत्तिकालीनसम्बन्धो द्वयमेव, कारणता समवायश्च । तदवच्छिन्नाङ्कुराभावश्च समवायिनि बीजादौ च । द्वयञ्च कारणमेव । न चैवं कारणतागर्भत्वेनात्माश्रयः । सम्बन्धत्वेनैव तज्ज्ञानादिति । अत्र वदन्ति । विषयविषयिभावसम्बन्धस्याऽप्युत्पत्तिकालीनतया तदवच्छिन्नकार्याभावत्वस्येतराभावावच्छेद्यतया वह्न्यादेरनुमितिजनकत्वापत्तिः । चरमकारणे कार्याभावाभावादव्याप्तिश्चेति । बीजादङ्कुर इति प्रतीतिबलादवध्यवधिमद्भावलक्षणः स्वरूपसम्बन्धविशेष एव विलक्षणः । कार्यकारणयोस्तत्सम्बन्धावच्छिन्नकार्याभावश्च कारण इतराभावावच्छेदेन । स्वरूपायोग्ये च तादृशसम्बन्धाभावात् तदवच्छिन्नकार्याभावः स्वासाधारणशिलात्वादिधर्मावच्छेद्यः । एवञ्च तादृशसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं यत्र स्वासाधारणधर्मेतरावच्छिन्नं तदवच्छिन्नं कारणमित्यत्र तात्पर्यम् । चरमकारणे च यद्यपीतराभावो नावच्छेदकस्तथाप्युत्पादकाल एव तथा । उत्पादानन्तरमेव कार्योत्पादेन तदा कार्याभावात् । यद्वा, परामर्शादौ चरमकारणेऽपि प्रतिबन्धकाभावविलम्बेन कार्योत्पत्तिविलम्बादितराभावावच्छिन्नमेव ।

टीप्पणी ।

कार्य्याभावव्याप्यता यस्य स्वासाधारणधर्म्मातिरिक्तधर्म्मावच्छिन्ना तत्त्वमित्यर्थः । तेन यत्र दण्डाभाववत्त्वं तत्र कार्य्याभाव इति दण्डाभाववत्त्वनिष्ठव्याप्तेरधिकरणविधया दण्डाभावावच्छिन्नत्वेऽपि नातिव्याप्तिः । शिलाशकलेऽपि कदाचित् संयोगेन कार्य्यस्य सत्तया तत्स्वरूपस्यापि निःस्वरूपेण व्याप्यता रासभस्यापि सामग्रीकाले कार्यदेशे सत्तया दण्डाद्यभावावच्छिन्नैव कार्य्याभावव्याप्यतेति न तयोः कारणत्वप्रसङ्गः । स्वरूपायोग्येन सहकार्य्यस्यावध्यवधिमद्भावसम्बन्धानङ्गीकारात् शिलाशकलादङ्कुरं रासभाद् घट इत्यप्रतीतेः सर्वदैव स्वरूपत एव तयोः कार्य्याभाववत्त्वमितीतरस्य धूमे वह्निव्याप्यतायां नैल्यस्येव वैयर्थ्यान्नावच्छेदकत्वम् । स्वरूपयोग्येषु बीजदण्डकपालादिषु स्वरूपतो न सदा कार्य्याभावः, बीजादङ्कुरम् दण्डाद् घटः सति कारणान्तर इति प्रतीतेः, किन्तु सहकार्यन्तरविरहे बीजादपि नाङ्कुरमिति प्रतीतेरितरकारणाभावविशिष्ट एव बीजादौ निरुक्तसम्बन्धावच्छिन्नकार्य्याभावनियम इति तन्निष्ठव्याप्यतैवेतरावच्छिन्नेति तेषु समन्वयः । कर्म्मसद्भावे विभागनियमेऽप्युत्पत्तिकाले कार्य्याभावेन तन्निष्ठाया व्याप्यताया इतराभावानवच्छिन्नत्वेऽप्युत्पत्तिकालेनेतरेणावच्छेद्यत्वात् । परामर्षनिष्ठानुमित्यभावव्याप्यतायाश्च प्रतिबन्धकेनापीतरेणावच्छेद्यत्वसम्भवान्न तयोरव्याप्तिः । न च विनश्यदवस्थायतो जन्म कार्य्यस्य तस्य कार्य्यक्षणेऽविद्यमानत्वात् कदाचिदपि कार्य्यवत्त्वासम्भवात् तस्य स्वरूपेणैव कार्य्याभावनियतत्वम् । कार्य्योत्पत्तेः प्राक् सम्बन्धसत्त्वेऽपि कार्य्यस्यैवाभावात्कार्य्याभाववत्त्वम् । अन्यथा कर्म्मण उत्पत्तिकालावच्छिन्नं कार्य्याभा-

**निःसाधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति। ततोऽभावादिरनुग्राहक इत्येके, नेत्यपरे, इति विवादकाष्ठायां व्युत्पादितञ्चैतस्यानुग्राहकत्वम्। किमपरमव शिष्यते यत्र प्रमाणमभिधानीयमित्यलमतिविस्तरेण ॥**

बोधनी।

ततश्चायं विवादविषयोऽवशिष्यत इत्याह—ततः—इति। तस्याभावादेरनुग्राहकत्वमनन्यथासिद्धान्वयव्यतिरेकित्वे व्युत्पादितम्, अतः शक्तिनिषेधो नाम न कश्चिदन्योऽर्थः प्रमाणसाध्योऽस्तीति शक्तिविषयेयं कथोपरम्यत इति।

नन्वेवमपि भूतधर्मत्वमपूर्वस्य न सिध्यतु, चेतनधर्मत्वेऽपि विनिगमना कुतस्त्येत्याह—

प्रकाशः।

यद्वा, अन्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं कारणत्वम्। रासभादेश्च स्वत एव कार्याभावव्याप्यतयाऽन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वादिति। (पृ. १५१) **ततोऽधिकेति**। कारणत्वस्योभयसिद्धत्वात् तदन्यशक्तिनिषेधकमित्यर्थः। (पृ. १५१) **अनुग्राहकत्वेति**। कारणत्वस्य शक्तिपदवाच्यत्वेऽपि अनुग्राहकत्वस्य कारणसहकारिसाधारणत्वात् सहकारिष्वपि शक्तिपदप्रयोगः। यत्समवधाने नियतं कार्यं, तस्यैवानुग्राहकत्वादित्यर्थः। **तत इति**। मन्त्रादिप्रयोगे किं भावरूपोऽनुग्राहको नास्त्यभावरूपो वेति विप्रतिपत्त्या कथायामभावस्यानुग्राहकत्वे व्युत्पादिते कान्यत्र प्रमाणं वाच्यमित्यर्थः ;

प्रकाशिका।

गर्भलक्षणमाह। **अन्यासमवधानेति**। दण्डाद् घटोत्पत्तिरिति प्रतीतेरनन्यगतिकतया तयोः तादृशसम्बन्ध इति भावः। अत्रापि यस्य व्याप्यत्वं तदवच्छिन्नत्वं कारणत्वमिति पूर्ववदेव व्याख्यानं सर्वम्। **रासभादेः**=रासभत्वादेः। **अनुग्राहकत्वेति**। तथा च शक्तित्वेन रूपेण सहकारिविषयक एव विवाद इत्यर्थः। गुरुत्वादिवदित्यादिपदसंग्राह्यशक्तिरूपदृष्टान्तनिषेधेऽपि गुरुत्वद-

मकरन्दः।

यदि च कचिन्न तथात्वं, तदा तज्जातीयत्वं लक्षणं बोध्यम्। न चारण्यस्थदण्डे तद्दण्डत्वादिनैव तदवच्छेदादव्याप्तिरिति वाच्यम्। दण्डत्वमादाय लक्षणसत्त्वादिति।

**अन्यासमवधानावच्छिन्नेति**। अन्यासमवधानावच्छिन्नं कार्यानुत्पत्तिव्याप्यत्वं यस्य, तदवच्छिन्नं कारणत्वमित्यर्थः। उत्पत्तिगर्भतया पूर्वस्माद्भेदः। शेषं पूर्ववत्। कारणत्वसहकारीत्यत्र द्वन्द्वः।

टिप्पणी।

वत्त्वं न स्यादिति वाच्यम्। तज्जातीयवत्त्वस्य लक्षणात्। स्वरूपायोग्यस्य कार्य्यकालेऽपि सम्बन्धस्यैवाभावेन कार्य्याभाववत्त्वं बोध्यम्। व्याप्यता च तादात्म्येनेति। यद्वा यद्धर्म्मस्य स्वेतरावच्छिन्नं व्याप्यत्वं यद्धर्म्मवत्त्वं कारणत्वम्। न ह्येवंविधं किञ्चित् कारणमस्ति यज्जातीयं कार्य्योत्पत्तिक्षणेऽपि नास्ति। एतेनोत्पत्त्यवच्छिन्नकर्म्मणो विभागावच्छिन्नकर्म्मानतिरेकेऽपि न क्षतिः। उत्पत्त्यवच्छिन्नकर्मत्वाधिकरणताया विलक्षणत्वात्। न च प्रागभावस्य सामग्रीनाश्यत्वे स्वरूपत एव सदैव कार्य्याभाववत्त्वमिति तत्र का गतिरिति वाच्यम्। प्रतियोगिनाश्यत्वस्यैव तस्य स्वीकारात्। उत्पन्नपुनरुत्पत्तेः कार्य्यसहभावेन कारणत्वाभ्युपगमेन वारणीयत्वात्। प्रागभावानभ्युपगमाद् वा सर्वमवदातम्। कारणेन सह कार्य्यस्य नावध्यवधिमद्भावलक्षणसम्बन्धः, उक्तप्रतीतेः कार्य्यकारणभावेनैवोपपत्तेरित्यत आह यद्वा **अन्यासमवधानावच्छिन्नेति**। उत्पत्तेरहेतुकत्वाद् बीजादङ्कुरोत्पत्तिरिति प्रतीतेरतस्यावश्यकत्वादिति भावः।(१)

इति प्रथमस्तवकप्रकाशटिप्पणी।

(१) इतः परं प्रथमस्तवकप्रकाशटीप्पणी आदर्शपुस्तके नास्ति।

**तथापि चेतन एवायं संस्क्रियते, न भूतानीति कुतो निर्णय इति चेत् । उच्यते । भोक्तृणां नित्यविभूनां सर्वदेहप्राप्तावविशिष्टायां विशिष्टैरपि भूतैर्नियामकाभावात् प्रतिनियतभोगासिद्धेः । न हि तच्छरीरं तन्मनस्तानीन्द्रियाणि विशिष्टान्यपि तस्यैवेति नियमः । नियामकाभावात् । तथा च साधारणविग्रहवत्त्वप्रसङ्गः । न च भूतधर्म एव कश्चिच्चेतनं प्रत्यसाधारणः । विपर्ययदर्शनात् । द्वित्वादिवदिति चेन्न, तस्यापि शरीरादितुल्यतया पक्षत्वात् । नियतचेतनगुणोपग्रहेणैव तस्यापि नियमो, न तु तज्जन्यतामात्रेण, स्वयमविशेषात् ।**

---

बोधनी ।

**तथापि** इति । अत्र संभोगो निर्विशेषाणामित्येतदुत्तरयति—**उच्यत**-इति । अदृष्टविशेषविशिष्टेष्वपि शरीरादिभूतेषु सर्वात्मनां सर्वत्र सर्वदा सन्निधानाविशेषादिदमस्यैव शरीरं नान्यस्येति नियामकाभावेन प्रतिनियतभोगासिद्धेः चेतन एव संस्क्रियत इति निर्णेष्यत इति । तदेवोपपादयति—**न हि**-इति । तच्छरीरं यस्यैवेति दृश्यते तदपूर्वविशिष्टमपि तस्यैवेति नियमो न स्यादिति । तदनियमे दोषमाह—**तथा च**-इति । ननु भूतधर्मत्वेऽप्यपूर्वस्य कश्चिच्चेतनं प्रत्यसाधारण्यं भविष्यति । ततस्तद्विशिष्टं शरीरादि तस्यैवेति नियमः स्यादित्यत्राह **न-च**-इति । भूतधर्मा हि रूपादयः सर्वान् प्रति ज्ञानजनकत्वेन साधारणा दृश्यन्त इति । शङ्कते—**द्वित्वादिवत्**—इति । द्वित्वादयो हि भूतधर्माः केनचिदेव ज्ञायन्ते नान्येनेत्यसाधारण्येन दृष्टान्ता इति । **न-इति** । द्वित्वादेरपि शरीरादिना तुल्ययोगक्षेमत्वात् भूतधर्मत्वेनासाधारणत्वस्यासिद्धत्वादिति । तुल्यतामेवाह—**नियत-इति** । यस्यापेक्षाबुद्धिजन्या द्वित्वादयस्तस्यैव ते स्वविषयां बुद्धिं जनयन्ति नान्यस्येति नियतचेतनगुणोपगृहीतत्वेनैव तेषामसाधारण्यं, न तु भूतधर्मत्वमात्रेण, स्वयमविशेषादिति । रूपादिभ्यो द्वित्वादीनां स्वगतविशेषाभावादिति । यद्वा, स्वरूपेणासाधारण्यादित्यर्थः ।

यद्यपि द्वित्वादीनां स्वयमविशेषः, तथापि नियतचेतनगुणोपग्रहाभावे किं बाधकं येन नियम-

प्रकाशः ।

**भोक्तृणामिति** । भोक्तृप्रत्यासत्तेरविशेषात् किंचिच्छरीरं कस्यचिदेव भोगं जनयतीति प्रतिनियतभोगान्यथानुपपत्त्या प्रतिनियतभोक्तृकर्मोपार्जितत्वं शरीरादावभ्युपेयमित्यर्थः । विशिष्टैरित्यभ्युपगमवादः । **असाधारण इति** । प्रतिनियतभोगजनक इत्यर्थः । **विपर्ययेति** । भूतधर्मस्य नीलादेस्तथात्वादर्शनादित्यर्थः । **द्वित्वादीति** । यथा भूतधर्मोऽपि द्वित्वादि यस्यैवापेक्षाबुद्ध्या जनितं तस्यैव भोगजनकं, तथा अपूर्वमपि तद्धर्मः स्यादित्यर्थः । द्वित्वादेरप्यसाधारणत्वं नियतचेतनगुणोपग्रहेणैवेत्याह । **तस्यापीति** ।

---

**तस्यैवेति**=तदवच्छेदकस्यैवेत्यर्थः । **विपर्ययदर्शनात्**=भूतधर्मत्वेन स्थितस्य नीलादेस्तथात्वादर्शनादित्यर्थः । **पक्षत्वादिति** । चेतनगुणोपसंग्रहं विनैव तज्जन्यतामात्रेणासाधारणभोगजनकत्वं द्वित्वदृष्टान्तेनापूर्वादौ प्रसाध्यम् । दृष्टान्तो हि निश्चितसाध्यकः, तत्रास्मदादिभिः शरीरस्येव द्वित्वस्यापि चेतनगुणोपग्रहेणैवासाधारणभोगनियामकत्वं स्वीक्रियते तज्जन्यतयैव-चान्यं प्रत्यपि स्यात् मालाकारकृतिप्रसाधितमालावत् उपग्रहेण तथात्वे सहकारिणामपेक्षाबुद्धिद्वित्वनिर्विकल्पकादीकां तदात्मन्येव भाव इति तत्रैव द्वित्वं प्रत्यक्षजनकमिति न नियमभङ्गः । तथा च सन्दिग्धसाध्यकत्वान्न दृष्टान्तत्वमिति भावः । उपग्रहो नाम सहकारित्वं तथा च चेतनगुणोपसंग्रहेणेत्यस्य चेतनगुणसहकारेणेत्यर्थः ।

**तथापि तज्जन्यतयैव नियमोपपत्तौ विपक्षे बाधकं किमिति चेत्, कार्यकारणभावभङ्गप्रसङ्गः। शरीरादीनां चेतनधर्मोपग्रहेणैव तद्धर्मजननोपलब्धेः। तत् यथा, इच्छोपग्रहेण प्रयत्नो ज्ञानोपग्रहेणेच्छादयः, तदुपग्रहेण सुखादय इत्यादि। प्रकृतेऽपि चेतनगता एव बुद्ध्यादयो नियामकाः स्युरिति चेद्? न। शरीरादेः प्राक्**

बोधनी।

स्य नियतगुणोपगृहीतत्वेन व्याप्तिः सिध्येदित्याशयेन पृच्छति-**तथापि**-इति। यदि द्वित्वादयो नियतचेतनगुणानुगृहीता भवेयुस्तर्हि तेषां चेतनधर्मेण स्वविषयज्ञानेन सह यः कार्यकारणभावः स भज्येतेत्याह-**कार्यकारण**-इति। स्वविषयज्ञानजनकत्वानुपपत्तिर्बाधकमित्यर्थः। कुत इत्यत आह—**शरीरादीनाम्**-इति। चेतनधर्मजनकत्वस्य तद्धर्मोपगृहीतत्वेन व्याप्तिप्रदर्शनादित्यर्थः। व्याप्तिमेवोदाहरणे दर्शयति-**तद् यथा** इति। न ह्यनिष्टे प्रवृत्तिप्रयत्नः, न चाज्ञातविषयेच्छा, नापि तदविषयस्य सुखहेतुत्वमित्यादि। ततश्च द्वित्वशरीरादीनां नियतत्वं चेतनगुणोपग्रहणेन व्याप्यत इति ततस्तत्सिद्धिरिति। सन्तु तर्हि प्रकृते शरीरेन्द्रियाणां प्रतिनियतभोगसाधनत्वेऽपि नियतचेतनगताः सम्प्रतिपन्ना एव नियामका इत्याह—**प्रकृत**-इति। शरीरादेः पूर्वं

प्रकाशः।

ननु भूतधर्मान्तरस्य साधारण्येऽप्यपूर्वं तद्धर्मस्तत्कार्यत्वमात्रेणैवासाधारणं स्यादित्यत आह—**तथापीति**। कार्यकारणभावमेवाह। **शरीरादीनामिति**। **प्रकृतेऽपीति**। यथा शरीरादीनां चेतनगुणबुद्ध्यादिसहितानां नियतानां नियतभोगजनकत्वं, तथा प्रकृतेऽपि तेषां तत्सहितानामेव तज्जनकत्वमस्त्विति कृतमपूर्वेणेत्यर्थः। **शरीरादेरिति**। न शरीराद्युत्पत्तेः पूर्वं बुद्ध्यादिसम्भव इति तदन्यचेतनगुणापूर्वसिद्धिरित्यर्थः। देवदत्ताद्यशरीरं, स्वाव्यवहितप्राक्कालवर्त्तिदेवदत्तसमवेतविशेषगुणजन्यम् कार्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मितस्रग्वत्। घटादीनां पक्षसमत्वाद् न तैर्व्यभिचारः। न च संस्कारेणार्थान्तरं, तस्य भोगजनकत्वेनाकल्पनात्।

प्रकाशिका।

ष्टान्तेनैवातीन्द्रियो धर्म्मः सिद्धेदिति शङ्का तदवस्थ्यैवेत्यतस्तां स्मारयति। **तथापि चेतन एवेति** मूलम्। **देवदत्ताद्येति**। प्रथमशरीरोत्पन्नज्ञानादिनैव द्वितीयशरीरेऽर्थान्तरमित्याद्यपदम् यत्किंचिदपेक्षयाऽऽद्यत्वं द्वितीयशरीरस्यापि सर्वापेक्षया चाद्यत्वमप्रसिद्धमिति **देवदत्तेति**। देवदत्तत्वं तत्तच्छरीरपरम्परावृत्तिजातिरिति तदाश्रयेषु मध्ये सर्वाद्यत्वं पक्षतावच्छेदकमिति भावः। जन्मान्तरीयज्ञानादिभिरर्थान्तरवारणाय साध्येऽव्रृत्तीत्यन्तम्। अन्यविशेषगुणजन्यत्वमादायार्थान्तरादिवारणाय **देवदत्तेति**। संख्यादिभिस्तदीयैरर्थान्तरवारणाय **विशेषेति**। हेतौ मनसा व्यभिचारवारणाय सत्यन्तम्। अन्यशरीरादौ व्यभिचारवारणाय **तदिति**। **तन्निर्मितेति**। तद्भोगसाधनेत्यपि द्रष्टव्यम्। **तस्येति**। यद्यप्येवमपि शरीरजनकत्वे विरोधाभावः।

मकरन्दः।

**देवदत्ताद्येति**। द्वितीयशरीरादेराद्यशरीरजन्यबुद्ध्यादिजन्यत्वेनाऽर्थान्तरं स्यादित्याद्यपदम्। अन्यशरीरे बाधवारणाय पक्षे **देवदत्तपदम्**। जन्मान्तरबुद्धिजन्यत्वेनार्थान्तरवारणाय वर्त्यन्तम्। ईश्वरज्ञानादिजन्यत्वेन सिद्धसाधनवारणाय। **देवदत्तेति**। सङ्ख्यादिजन्यत्वेनार्थान्तरवारणाय, **विशेषेति**। मनसा व्यभिचारवारणाय सत्यन्तम्। अन्यशरीरादौ व्यभिचारवारणाय, **तदिति**। **तन्निर्मितेति**॥ तद्भोगसाधनेत्यपि द्रष्टव्यम्। **तस्येति**। यद्यप्येवमपि शरीरजनकत्वे विरोधाभावस्तथापि तद्द्वारा भोगजनकत्वमाश्रित्येदमुक्तम्। यद्यपि, धर्मिकल्प-

**प्रकृतेऽपि** = भूतसंस्कारपक्षेऽपि। तथाचापूर्वेणात्मनि भोगे जननीये आद्यशरीरस्य चेतनगुणोपग्रहेण भोगजनकत्वानुपपत्तिः, सहकारिणश्चेतनगुणस्य तदानीमभावादिति भावः।

तेषामसत्त्वात् । तथा च निरतिशयाश्चेतनाः साधारणानि भूतानीति न भुक्तिनियम उपपद्यते ॥ १३ ॥

एतेन साङ्ख्यमतमपास्तम् ।

एवं हि तत्, अकारणमकार्यः कूटस्थचैतन्यस्वरूपः पुरुषः ।

---

बोधनी ।

बुद्ध्याद्यभावेन बुद्ध्यादिभिः शरीरनियमः, तेन नियतेषु शरीरादिषु बुद्ध्यादयोऽस्य भवन्ति, तैश्च तन्नियम इति इतरेतराश्रयप्रसङ्गादात्मसमवेतमपूर्वमेव नियामकमङ्गीकर्त्तव्यं, तदनङ्गीकारे नियमानुपपत्तिमुपसंहरति–तथा च इति । चेतनानामतिशयो नाङ्गीकृतः सातिशयान्यपि भूतानि साधारणानि न शरीरादेः पूर्वं बुद्ध्यादयः सन्ति । तस्मान्न शक्तिनियम उपपद्यते । अत्र प्रयोगः– भोक्तुः स्वगुणोत्पादिताः शरीरादयः, कार्यत्वे सति तद्भोगसाधनत्वात्, स्रगादिवत् । न च बुद्ध्यादिभिः सिद्धसाध्यता शरीराद्युत्पत्तेः प्राक् तदभावादिति ॥ १३ ॥

एतेन–इति । भोक्तृसमवेतमेवापूर्वं भोगान्नियच्छति नान्यसमवेतमिति प्रतिपादनेनेत्यर्थः ।

कथं निरस्तमिति दर्शयितुं तन्मतमेव तावदुपन्यस्यति–एवं हि तत्–इति । तन्मते हि पुरुषो न किञ्चित् करोति न केन चित् क्रियते । यथाहुः—

'न प्रकृतिर्न विकृतिः पुरुषः' (सां० का० ३) इति । कूटस्थचैतन्यस्वरूप इति । कूटस्थम्= अपरिणामि चैतन्यमेव स्वरूपं यस्य स तथोक्तः तदप्याहुः 'तद्विपरीतस्तथा च पुमान्' (सां०का० ११) इति । अत्र चकारोऽप्यर्थः । व्यक्ताव्यक्ताभ्यामनेकत्वाकार्यत्वे साधर्म्येऽपि निर्गुणत्वचैतन्यादिभिस्ता·

प्रकाशः ।

संस्काराजन्यत्वेन पक्षविशेषणाद्वेति भावः ॥ १३ ॥

ननु चेतने न भोगो नाप्यदृष्टम् । तस्य कूटस्थत्वात्, किन्तु बुद्धाविति चेतनधर्मस्य नियामकत्वमयुक्तमिति सांख्यमतं दूषयति ।

एतेनेति । चेतनेऽपूर्वानाधाने साधारणविग्रहवत्त्वप्रसङ्गेनेत्यर्थः । शिष्यहितैषितया तन्मतं प्रपञ्चयति—

एवं हीति । अकारणमित्यनेन प्रकृतेर्भेदः । अकार्य इत्यनेन चरमपरिणतिघटादेर्भेदः । ननु बुद्ध्याद्यकारणत्वे तस्य तत्र मानाभाव इत्यत आह । कूटस्थेति । अकारणत्वादेव कूटस्थोऽनित्यधर्मानाश्रयः, कार्यत्वाभावान्न स्वरूपतो नाशः । अकारणत्वाच्च कार्यकारणयोस्तादात्म्यात् तदात्मतयापि न नाशः । अत एवापूर्वं न तस्य गुणः । चैतन्यस्वरूपत्वमपि धर्मधर्मिणोस्तादात्म्यात् कूटस्थत्वेन चैतन्येन निरूप्यत इति न तत्र मानाभाव इत्यर्थः । बुद्धिगतचैतन्याभिमानान्यथा-

प्रकाशिका ।

तथापि भोगजनकस्यैव शरीरजनकत्वमित्यभिप्रायेणेदम् । यद्यपि धर्म्मिकल्पनादिति न्यायेन भोगजनकत्वं तस्यैव कल्पयितुमर्हम् । तथापि संस्कारस्य स्मृतिमात्रजनकत्वमिति न भोगजनकत्वमित्याशयः ॥ १३ ॥

कूटस्थत्वादिति । जन्यधर्म्मानाश्रयत्वादित्यर्थः । साधारणेति । यद्यपि बुद्धिनिष्ठापूर्वाधाने भोगसमानाधिकरणमेवादृष्टं नियामकमिति न साधारणविग्रहवत्त्वम् । तथापि बुद्धेर्नित्यत्वेऽमोक्षः, अनित्यत्वे तदुत्पत्तेः प्राक् नियामकाभावात् साधारणविग्रहवत्त्वप्रसङ्ग इत्यर्थः । अकारणत्वाच्चेति । कार्यकारणयोस्तादात्म्यात्तदात्मतया नाश इत्यपि न, अकारणत्वादित्यन्वयः । अत एव = अकारणत्वादेव ।

मकरन्दः ।

नात इति न्यायेन भोगजनकत्वमपि तस्यैव कल्पनार्हं, तथापि मानान्तरादप्यदृष्टसिद्ध्यवष्टम्भेनेदमुक्तमित्येके । संस्कारान्यत्वं गुणविशेषणमित्यन्ये ॥ ११ ॥

---

साधारणानि भूतानि । कार्यकारणभावभङ्गरूपदोषेण जन्यतामात्रेणापि नियमाभावेन भूतसाधारण्यम् ॥ १३ ॥

आदिकारणं प्रकृतिरचेतना परिणामिनी, ततो महदादिसर्गः। न हि चितिरेव विषयबन्धनस्वभावा, अनिर्मोक्षप्रसङ्गात्। नापि प्रकृतिरेव तदीयस्वभावा, तस्या अपि

बोधनी।

भ्यां विधर्मेत्यर्थः। अपरिणामिन्यप्रतिसङ्क्रमा चितिशक्तिरिति कथं तस्याकारणत्वे सर्ग इत्यत्र कारणं तत्स्वरूपं चाह—**आदिकारणम्**—इति। सर्वमपि तया क्रियते, न तु सा केन चित्। तदाहुः—'मूलप्रकृतिरविकृतिः' (सां०का० ३) इति। अचैतन्यादेव परिणामित्वम्। तच्चाहुः—त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि। व्यक्तं तथा प्रधानम्' (सां० का० ११) इति।

केन रूपेण तस्याः परिणाम इत्याह—**ततः**—इति। ततः=प्रकृतेः। महदहङ्कारेन्द्रियतन्मात्रमहाभूतात्मना त्रयोविंशतेस्तत्त्वानां सर्गः। यद्यपि प्रकृतेर्महान् महतोऽहङ्कार इत्यादिक्रमात् परिणामः, तथापि प्रकृतेर्मूलकारणत्वात् तत इत्युक्तम्। ननु पुरुषार्थाय हि प्रवर्तते प्रकृतिः, पुरुषार्थश्च भोगोऽपवर्गश्च, भोगो विषयानुषङ्गस्तद्वियोगश्च यैः पुरुष उपयुज्यते विभज्यते च त एव शब्दादयः परिणामभेदाः सन्तु, कृतमितरेण महदादिपरिणामेन। न च विषयसम्बन्धार्थः तत्संसर्गः, नित्यचैतन्यरूपस्य पुरुषस्य स्वभावतः तत्सम्बन्धोपपत्तेरित्याशङ्क्याह—**न हि**—इति। चितिश्चैतन्यमात्ररूपः पुरुषः, यदि पुरुषस्वभावानुबन्धी विषयानुषङ्गो भवेत् ततः स्वभावस्यानुच्छेद्यत्वेनानिर्मोक्षः स्यादिति। तर्हि प्रकृतेरेवैष स्वभावोऽस्तु यद्विषयपाशैः पुरुषं बध्नाति तत्राह—**नापि**—इति। **तदीयत्वं** तादर्थ्यं, तदीयभोगोपकरणसम्पादकत्वमिति यावत्। तत्स्वभावत्वे प्रकृतेर्नित्यत्वेन कदाचिदपि निरुपाधित्वानुपपत्तेरनिर्मोक्ष एव पुंस इति। तर्ह्यनित्यस्य घटादेर्विषयस्यैव चैतन्यस-

प्रकाशः।

नुपपत्त्या तत्कल्पनादिति भावः। आत्मनोऽकारणत्वेऽपि सर्गमुपपादयति। **आदीति**। आदिपदाद् महदादिव्यवच्छेदः, तस्य प्रकृत्यनन्तरमुत्पादात्। **कारणमिति** पुरुषव्यवच्छेदः। पुरुषाद्भेदकमाह। **अचेतनेति**। तत्र हेतुमाह। **परिणामिनीति**। अनित्यधर्माश्रयस्ततः कार्यधर्मात्मतया नश्यति। ततो घटादिवदचेतनेत्यर्थः। **तत इति**। प्रकृतेर्महत्तत्त्वमन्तःकरणं बुद्ध्याख्यम्। "प्रकृतेर्महान् महतोऽहङ्कारस्तस्मात्पञ्चतन्मात्राणी"ति सांख्याः। ननु किमर्थं महदादिसर्गो मन्तव्यो नित्यचैतन्यमेव विषयप्रकाशस्वरूपमस्त्वित्यत आह। **न हीति**। चितिः=पुरुषचैतन्यम्। विषयबन्धनम्=विषयावच्छेदः। चैतन्यविषयावच्छेदस्येष्टानिष्टोपलब्धिरूपस्य हेतुसापेक्षत्वे हेतोरिन्द्रियादेरङ्गीकारापत्तिः। निरपेक्षतायां सर्वदा तस्य भावादनिर्मोक्षः पुंसः स्यादित्यर्थः। तर्हि प्रकृतिरेव साक्षाद्विषयबन्धनस्वभावाऽस्त्वित्यत आह। **नापीति**। प्रकृतेः साक्षाद्विषयप्रकाशकस्वभावत्वे तस्याः सदातनत्वे पुनरप्यनिर्मोक्षः पुंसः स्यादित्यर्थः। ननु वि-

प्रकाशिका।

**पुरुषाद्भेदकमिति**। भेदकान्तरमित्यर्थः। **अनित्यधर्मेति**। तिरोभाव एव तन्मतेऽनित्यत्वम्। **कार्यधर्मेति**। कार्यकारणयोस्तादात्म्यादिति भावः। कार्यत्वं चाविर्भावमात्रं तन्मत इति। **सांख्या इति**। चतुर्विधं जगत् केवलप्रकृत्यात्मकं, केवलविकृत्यात्मकं, प्रकृतिविकृत्युभयात्मकम्, अनुभयात्मकं चेति। तत्राद्यं मूलप्रकृतिरित्युच्यते, सा च सत्त्वरजस्तमसां साम्यावस्था, सत्त्वं सुखं, रजो दुःखं, तमो मोहः, सर्वं कार्यं सुखदुःखमोहात्मकं तज्जनकत्वात् भोक्तृभेदेन कालभेदेन च तथात्वात्, एवं तत्कारणं प्रकृतिरपि तथा,

मकरन्दः।

**भेदकमिति**। भेदकान्तरमित्यर्थः। **अनित्येति**। यद्यपि सर्वनित्यतावादिनस्तस्य नानित्यं, न वा कार्यम्। तथाप्याविर्भावतिरोभावौ उत्पादविनाशाविति भावः। **कार्यधर्मेति**। कार्य-

विषयबन्धनेति। इष्टानिष्टोपलब्धिरित्यर्थः।

नित्यत्वेनानिर्मोक्षप्रसङ्गात् । नापि घटादिरेवाहत्य तदीयः, दृष्टादृष्टत्वानुपपत्तेः । नापीन्द्रियमात्रप्रणाडिकया, व्यासङ्गायोगात् । नापीन्द्रियमनोद्वारा, स्वप्नदशायां वराहव्याघ्राद्यभिमानिनो नरस्यापि नरत्वेनात्मोपधानायोगात् । नाप्यहङ्कारपर्यन्तव्या-

बोधनी ।

म्बन्धित्वस्वभावोऽस्त्वित्यत्राह-नापि-इति । विषयस्यैवाव्यवधानेन तदीयत्वं चेतनीयत्वं चैतन्यसम्बन्धित्वं स्वभाव इत्यभ्युपगमे यावत्सत्वं सर्वस्याप्यवभासप्रसङ्गात्, कस्यचिद् दृष्टत्वं कस्यचिददृष्टत्वं कस्यचिन्नोपपद्येतेति । अस्तु तर्हि वाह्येन्द्रियपरिणामः, ततो दृष्टादृष्टत्वव्यवस्थासिद्धेः कृतमन्तःकरणैरित्यत्राह-नापीन्द्रिय-इति । वाह्येन्द्रियमात्रद्वारा घटादेश्चैतन्यसम्बन्धाभ्युपगमे त्विन्द्रियसम्बद्धेऽपि क्वचिद् विषये कदाचिज् ज्ञानोत्पत्तेर्व्यासङ्गो विलम्बो दृश्यते, स न घटत इति । तर्हि तदर्थं मनोऽप्यङ्गीक्रियतां किमहङ्कारकल्पनयेत्यत्राह-नापीन्द्रियमनोद्वारा-इति । पूर्ववदत्रापि घटादिस्तदीय इत्यनुषञ्जनीयम् । कश्चिद्धि नरः स्वप्ने वराहोऽहं व्याघ्रोऽहमिति चात्मानं मनुते । तस्य नरस्यापि-सतः, नरत्वे विद्यमानेऽपीति यावत् । नरत्वेनात्मोपधानं=नरोऽहमित्यभिमानो न दृश्यते । न तावदत्र वाह्येन्द्रियवृत्त्यभावान्नरत्वाभिमानानुदयः, जाग्रदवस्थायामपि तस्य

प्रकाशः ।

षयस्यैव चैतन्यसम्बन्धित्वं स्वभावः, तथा च विषयनाशे पुंसो मोक्षः स्यादित्यत आह । नापीति । विषयस्य परम्परया चैतन्यसम्बन्धित्वे द्वारीभूतस्येन्द्रियादेरङ्गीकारापत्तिरिति साक्षात् तद्वाच्यम्, तथाचेदं दृष्टमिदमदृष्टमिति न स्यात्, व्यवहितस्यापि विषयस्य यावत्सत्त्वमवभासप्रसङ्गादित्यर्थः । नन्विन्द्रियमात्रद्वारा विषयस्तदीयः स्यात्, किं मनःकल्पनयेत्यत आह । नापीति । व्यासङ्गेति । इन्द्रियसम्बन्धेऽपि व्यासङ्गेन दर्शनाभावादित्यर्थः । ननु व्यासङ्गानुरोधान्मनःसंयुक्तेन्द्रियसम्बद्धविषयस्य चैतन्यावच्छेदकत्वमस्तु, किमहङ्कारेणेत्यत आह । नापीति । यदीन्द्रियमनोभ्यामेव विषयाः सम्बद्ध्यन्ते, तदा शयानो नरो यथा वराहोऽहमिदं प्रत्येमीति अभिमन्यते, तथा नरोऽहमिदं प्रत्येमीति नरत्वेनाप्यात्मोपधानं स्यात् । अस्ति हि तत्र नरत्वं सन्निहितम्, अस्ति चेन्द्रियमनसोरपि व्यापारः, अन्यथाऽऽलोचनविकल्पयोरनुत्पादप्रसङ्ग इति तद्भिन्नोऽहङ्कारोऽनियतविषयाभिमानव्यापारो मन्तव्य इत्यर्थः । बुद्धित्वं साधयति । नाऽपीति । पूर्वेषां

प्रकाशिका ।

कार्यकारणयोस्तादात्म्यात् । द्वितीयन्त्वेकादश इन्द्रियाणि पञ्च महाभूतानि, तृतीयन्तु महदादयः सप्त, चतुर्थं तु पुरुषः । महत्तत्त्वमेव चान्तःकरणं बुद्ध्याख्यं तस्य च सत्त्वप्रधानस्य धर्म्माः धर्म्मज्ञानवैराग्यैश्वर्य्यरूपाः तमःप्रधानस्य तद्विपरीताश्चत्वार इत्यष्टौ धर्म्माः । रजसस्तु सत्त्वतमःप्रेरकत्वमात्रेणोपयोगः । तत्र धर्म्मो यागादिसाध्यः, ज्ञानं सत्त्वपुरुषान्यताज्ञानम्, ऐहिकामुष्मिकसुखविरक्तस्य परमो वशीकारो वैराग्यम्, ऐश्वर्यमणिमादिसम्पत्तिः, एवमहङ्कारादपि त्रिगुणात्मकादन्तःकरणात् सत्त्वप्राधान्येनेन्द्रियाणि, तमःप्राधान्येन पञ्चतन्मात्रा रजसस्तु पूर्ववदेवोपयोगः । इन्द्रियाणि तु षड् बुद्धीन्द्रियाणि प्रसिद्धान्येव तत्रापि मनो द्विरूपमन्तःकरणमिन्द्रियं च, अन्तःकरणस्य मनोबुद्ध्यहङ्कारभेदेन त्रैविध्यात्, कर्मेन्द्रियाण्यपि वाक्पाणिपादपायूपस्थरूपाणि पञ्च इत्यादि

मकरन्दः ।

कारणयोस्तादात्म्यादिति भावः । अन्यथेति । आलोचनं व्यापार इन्द्रियाणाम् । विकल्पस्तु मनस इत्युपगमादिति भावः ।

---

आहत्य=साक्षात् । तदीयः=चैतन्यसम्बन्धी । दृष्टादृष्टत्वानुपपत्तेः=इदं दृष्टमिदमदृष्टमित्यस्यानुपपत्तेः । प्रणाडिकया घटादिस्तदीय इति योजना ।

पारेण, सुषुप्त्यवस्थायां तद्व्यापारविरमेऽपि श्वासप्रयत्नसन्तानावस्थानात्। तद्‌ यदेतास्ववस्थासु संव्यापारमेकमनुवर्त्तते, यदाश्रया चानुभववासना, तदन्तः- करणमुपारूढोऽर्थः पुरुषस्योपधानीभवति। भेदाग्रहाच्च निष्क्रियेऽपि तस्मिन्

बोधनी।

तन्निरपेक्षत्वदर्शनात्। न च स्वप्नदशायां मनो न व्याप्रियते, तस्माद् विद्यमानेऽपि नरत्वे तदभिमाने च बाह्येन्द्रियनिरपेक्षे मनसि व्याप्रियमाणे च तस्मिन् यद्व्यापारविरही नरत्वाभि- मानानुदयो भवति सोऽपीन्द्रियमनोऽतिरिक्तो नरत्वाभिमानहेतुरङ्गीकार्यः, स एवास्माकमहङ्कार- पदाभिधेय इति। यद्वा, स्वप्नदशायां वराहाद्यभिमानविषयः कश्चिदभ्युपगन्तव्य इत्यर्थः। अन्येषां व्याख्या-यदीन्द्रियं मनश्चोभयं द्वारं तर्हि यदा स्वप्ने मनोद्वारा विषयसम्बन्धः तदैवे- न्द्रियद्वारेणापि स्यात्, ततश्च यथा तत्र वराहोऽहमिति मनसाभिमानः तथेन्द्रियेण नरोऽहमित्य- मानोऽपि भवेत्। न चासावस्ति, तस्मान्नोभयं द्वारमिति। सेयमसङ्गतत्वादनादर्त्तव्येति। नरत्वे- नार्थोपधानाभावादिति केचित् पठन्ति। तत्र यथा वराहोऽहमिममर्थं जानामीत्यभिमन्यते तथा नरोऽहमिममर्थं जानामीत्यर्थोपधानं नास्ति। तस्मान्नियतविषयाभिमानव्यापारवानन्यः स्वीकर्त्तव्य इत्यर्थः। तर्ह्यहङ्कारोऽप्यस्तु कृतं महतेत्यत्राह—नापि-इति। पूर्ववदनुषङ्गः सुषुप्त्यवस्थाया- महङ्कारपर्यन्तेन्द्रियव्यापारविरामेऽपि शरीरधारणनिमित्तश्वासप्रश्वासहेतोः प्रयत्नसन्तानस्यानुवृत्ते- स्तदतिरिक्तं किञ्चिदस्ति यत् प्रयतमानं शरीरं बिभर्ति, स महानिति। तस्य महतः स्वरूपमुप- संहारव्याजेन दर्शयति-तद्‌ देतासु-इति। तत्=तस्मान्न केवलं सुषुप्तौ किन्तु जाग्रत्स्वप्नसुषु- प्त्यवस्थासु सप्रयत्नं यदनुवर्त्तते यदाश्रयश्च स्मृतिहेतुः संस्कारस्तदन्तःकरणमुपारूढ इन्द्रियमनो- ऽहङ्कारव्यापारपरम्परया तत्र प्रतिफलित इति यावत्। तदाहुः—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति॥ (सां० का० ३६) इति।

गुणविशेषा=इन्द्रियाणि। गुणविकारत्वात् पुरुषस्य कृते विषयं परम्परया बुद्धौ प्रयच्छन्ती त्यर्थः। सोऽर्थः स्वच्छस्येव स्फटिकस्य लाक्षादिश्चैतन्यमात्रस्यात्मन उपरञ्जको भवति। अन्तःक- रणसन्निधानात् तदारूढैः स भिन्न इव भातीति यावदिति यदि बुद्धेरेव व्यापारो न चात्मनश्चेत् तस्य कथं तर्हि चेतने कर्तृत्वाभिमानः योऽहं जानामि स एव करोमीति, कथं वा कर्तरि चैतन्याभिमानः योऽहं करोमि स एव जानामीति, तत्राह-भेदाग्रहात्-इति। कर्तृचेतनयोर्भेदाग्रहादन्यतरस्मि- न्नन्याभिमानः। यथा नैयायिकानां शरीरात्मनोरिति। तच्चोक्तम्—

प्रकाशः।

व्यापाराभावेऽपि यद्व्यापारादुच्छ्वासादि तद्बुद्धितत्त्वं कल्प्यमित्यर्थः। उपसंहरति। तद्यदिति। अवस्थासु=जाग्रत्स्वप्नसुषुप्तिषु। अनुभवरूपा वासना संस्कारोऽनुभववासना सांख्यैस्तथाऽङ्गीकारात्। तदन्तःकरणमिति। तस्मिन्नन्तःकरणे बुद्धिरूपे। अर्थो=घटादिः, उपारूढो=ज्ञानरूपतत्परिणामविष- यतया सम्बद्धः पुरुषस्यात्मन उपधानीभवति। उपधायको व्यवधायकः स्वरूपतिरोधायक इति यावत्। यत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ व्यवह्रियेते इत्यर्थः। तर्हि कर्ता चेतन इति कृतिचैतन्ययोः कथं सामानाधिकरण्यानुभव इत्यत आह। भेदाग्रहाच्चेति। निष्क्रिये=अकर्त्तरि॥ तस्मिन्=बुद्धित-

प्रकाशिका।

तन्मतसंक्षेपः। जाग्रदिति। भावप्रधाननिर्देशः, अन्यथा शत्रन्तस्य धर्म्मिवाचकत्वेनावस्था-

मनुवर्त्तते। बुद्धितत्त्वाख्यं तदिति शेषः।

पुरुषे कर्तृत्वाभिमानस्तस्मिन्नचेतनेऽपि चेतनाभिमानः । तत्रैव कर्मवासना । पुरुषस्तु सर्वथा पुष्करपलाशवन्निर्लेपः । आलोचनं व्यापार इन्द्रियाणां, विकल्पस्तु मनसः, अभिमानोऽहङ्कारस्य, कृत्यध्यवसायो बुद्धेः । सा हि बुद्धिरंशत्रयवती । पुरुषोपरागो, विषयोपरागो, व्यापारावेशश्चेत्यंशाः । भवति हि मयेदं कर्त्तव्यमिति । तत्र मयेति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपराग

बोधनी ।

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ( सां० का० २० ) इति ।

लिङ्गं=बुद्धिः । प्रकृत्यनुमापकत्वात् , धर्माधर्मयोरप्यन्तःकरणमेवाश्रय इत्याह–तत्रैव–इति । यदि धर्मादयो बुद्धेर्गुणाः कीदृशस्तर्ह्यात्मेत्याह–पुरुषस्तु–इति । सर्वथा–इति । अनुभवतद्वासनातत्फलैः कर्मतद्वासनातत्फलैश्चेत्यर्थः । बुद्धितत्त्वस्यासाधारणं व्यापारं दर्शयिष्यन् सर्वेषां तावत् कारणानां यथास्वमसाधारणान् व्यापारानाह–आलोचनम्–इति । संमुग्धवस्तुमात्रदर्शनमालोचनं, तच्च चक्षुरादीनामिदमिति बाह्यप्रावण्यात्मकः परिणतिभेदः यत् नैयायिकैर्निर्विकल्पकमित्युच्यते । विकल्पस्तु संमुग्धदृष्टस्य विशेषणविशेष्यभावेन विवेचनं तन्मनसो व्यापारः । अभिमानः अहं जानाम्यहं करोमीत्यादिरूपः, सोऽहङ्कारस्य । कृत्यध्यवसायः स बुद्धेरिति । नन्वीदृशः कृत्यध्यवसायः कृतिसमवायं विषयसम्बन्धं चैतन्यं वापेक्षते, स कथमनेवंविधाया बुद्धेर्धर्मो भवेदित्यत आह—सा हि–इति । तानेवांशान् विभजते—पुरुषोपरागः–इति । कथमेतत्त्रयं बुद्धेर्धर्म इत्याशङ्क्य संमुग्धमुदाहरणं दर्शयति–भवति हि–इति । भवतु, कथं तावता अंशत्रयसिद्धिरित्यत्र निष्कृष्यांशान् दर्शयति–तत्र–इति । दर्पणमुखयोरिव बुद्धिचेतनयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इति । इदमा प्रतिनिर्दिष्टस्य विषयस्य यद्ग्राहिकेव बुद्धिराभाति स चेतनोपराग इत्यर्थः । तेन मयेत्यभिमानः कथं बुद्धेर्धर्मः स्यादिति शङ्का निरस्ता भवति । चेतनोपरागश्चेतनसम्बन्धः, स च परिणामविशेषः, तत् कथं चेतनोऽपरिणामी बुद्ध्या सम्भन्त्स्यत इत्यत्रोक्तं–दर्पणस्य–इति । कथं दूरस्थेन विषयेण बुद्धिरुपरज्यत इत्यत्रोक्तम्—

प्रकाशः ।

एवे बुद्धिपुरुषयोर्भेदाग्रहाच्चैतन्यकृत्यभिमानो । यथा भवतां गौरोऽहं सुखीत्यर्थः । कर्मवासना=कर्मजनितमपूर्वम् । ननु पुरुषधर्म एव किन्नापूर्वमित्यत आह । पुरुषस्त्विति ।सर्वथेति । नापूर्वतत्फलाभ्यां लिप्यते कौटस्थ्यादिश्रुतेरित्यर्थः। इन्द्रियादीनां मिथो भेदकमसाधारणं व्यापारमाह। आलोचनमिति । निर्विकल्पकमित्यर्थः । ननु बुद्धेः कृत्यध्यवसायो न व्यापारः, कृतिविषयस्य घटादेर्जडायां बुद्धौ प्रतिभासासम्भवात् । न च कर्त्तव्येन घटादिना सम्बन्धान्तरमस्ति । न चासम्बन्धे, करोमीत्यादिव्यवसायोऽतिप्रसङ्गादित्यत आह । सा हीति । चेतनोपरागवशेन जडाया अपि बुद्धेरिन्द्रियप्रणालिकया परिणतिभेद एव ज्ञानरूपः कर्त्तव्येन घटादिना सम्बन्ध इत्यर्थः । पुरुषेति । बुद्धिचेतनयार्भेदाग्रहादेकत्वाभिमानः पुरुषोपरागः । नीलेन्द्रियसन्निकर्षान्नीलाकारज्ञानरूपपरिणतिभेदोत्पादः पारमार्थिको विषयो रागस्ताभ्यां कर्तव्यविषयस्य प्रतिभासात्तज्जन्यः करामीत्यध्यवसायो व्यापारावेश इत्यर्थः । दर्पणस्येवेति । दर्पणप्राया बुद्धिः ।

तस्मिन्नचेतने=बुद्धितत्त्वे ।

इन्द्रियप्रणाडिकया परिणतिभेदो दर्पणस्येव निःश्वासाभिहतस्य मलिनिमा पारमार्थिकः। एतदुभयायत्तो व्यापारावेशोऽपि। तत्रैवंरूपव्यापारलक्षणाया बुद्धेर्विषयोपरागलक्षणं ज्ञानम्। तेन सह यः पुरुषोपरागस्यातात्त्विकस्य सम्बन्धो दर्पणप्रतिबिम्बितस्य मुखस्येव मलिनिमा, सोपलब्धिरिति। तदेवमष्टावपि धर्मादयो भावा बुद्धेरेव, तत्सामानाधिकरण्येनाध्यवसीयमानत्वात्। न च बुद्धिरेव स्वभावतश्चेतनेति युक्तं, परिणामित्वात्। पुरुषस्य तु कूटस्थनित्यत्वादिति। तदेतदपि प्रागेव निरस्तम्।

तथाहि—

**कर्त्तृधर्मा नियन्तारश्चेतिता च स एव नः॥**
**अन्यथाऽनपवर्गः स्यादसंसारोऽथवा ध्रुवः॥ १४॥**

---

बोधनी।

**इन्द्रियप्रणालिकया**-इति। सोऽपि किं स्वभावतश्चेतन इत्यत्राह-**पुरुषस्य**-इति। यद्वा, चेतनसामानाधिकरण्येनाध्यवसीयमानत्वादिच्छादयः पुरुषधर्माः सन्तु, कृतं बुद्ध्येत्याह—**पुरुषस्य**-इति। इच्छादिरूपेणात्मनः परिणामे कौटस्थ्यं हीयेत, ततश्च परिणामिनो घटादिवदचैतन्यप्रसक्तिरिति भावः। तदेवं साङ्ख्यमतमुपन्यस्यैतेनैतन्निरस्तमिति पूर्वोक्तं स्मारयति-**तदेतत्**-इति। भोक्तृधर्म एव भोगनियामको नान्यधर्म इति प्रागुक्तवान्निरस्तमिति। यथा निरस्तं तथाह—

**तथा हि**-इति। कर्त्तुर्धर्माधर्मादयो भोगस्य नियामका इति तावदविवादं, चेतनश्च कर्त्तैव नः प्रामाणिकानां कृतिचैतन्ययोः सामानाधिकरण्यात्। अन्यथाऽकर्त्तैव चेतनोऽचेतनैव बुद्धिः कर्त्री, तद्धर्मा एव भोगन्नियच्छन्तीति मते बुद्धिर्नित्याऽनित्या वा स्यात् पूर्वत्र पुंसो नाप-

प्रकाशः।

बुद्धितो ज्ञानोपलब्ध्योर्भेदमाह। **तत्रैवमिति**। विषयोपरागो=विषयेन्द्रियसम्बन्धो बुद्धेर्विषयाकारः परिणतिभेदोऽयं घट इत्यादिः। **तेनेति**। तेन ज्ञानेन चेतनोऽहमिदं जानामीत्येवमाकारो बुद्ध्यारोपितस्य चैतन्यस्य यः सम्बन्धोऽतात्त्विकः सोऽयमुपलब्धिरित्यर्थः। एवं व्यवस्थिते सिद्धमर्थमाह। **तदेवमिति**। ज्ञानवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेवेत्यर्थः। संस्कारस्य साङ्ख्यैरनभ्युपगमाज्ज्ञानस्यैव स्मृतिहेतोरनभिव्यक्ततयाऽनुवृत्तेरिति स नोक्तः। **तत्सामानाधिकरण्येनेति**। कृतिसामानाधिकरण्येनेत्यर्थः। यद्यप्यदृष्टस्यायोग्यतया तत्सामानाधिकरण्यं न प्रत्यक्षं, तथापि धार्मिकोऽहमित्यनुव्यवसायादुपनीतस्य प्रत्यक्षत्वमिति भावः। **परिणामित्वादिति**। अनित्यधर्माश्रयत्वादित्यर्थः।

**कर्तृधर्मा इति**। यत्र कृतिस्तददृष्टस्य तत्रैव भोगजनकत्वमित्यत्राविवादे कृत्याश्रय एव चेतनः, तद्भिन्ने तत्र मानाभावादित्यर्थः। **अन्यथेति**। बुद्धेर्नित्यत्वे मोक्षाभावः। आत्मनो

प्रकाशिका।

वाचकत्वानुपपत्तेः। ननु पुरुषस्य कूटस्थत्वे सुखादयः कुत्रेत्यादिशङ्कानिरासाय मूलं **तदेवमिति**। अतस्तदनुरूपमेव व्याचष्टे। **ज्ञानवत् सुखेति**। **अनभिव्यक्तयेति**। सूक्ष्मरूपतयेत्यर्थः। **अनित्यधर्माश्रयत्वादिति**। बुद्धेश्चैतन्ये परम्परया तत्परिणामस्य घटादेरपि चैतन्यप्रसक्ते

---

**तत्रैवंरूपव्यापारेति**। करोमीत्यध्यवसायः कृत्यध्यवसायः व्यापारावेशः स एव लक्षणं भेदको यस्याः, इदं तस्याः परिचयमात्रम्। **तदेवम्**। एवम् ज्ञानवत् अष्टावपि ज्ञानेन साधर्म्यमित्यर्थः।

**नः**=अस्माकम्मतम्। **अन्यथा** कर्तुरचेतनत्वे।

कृतिसामानाधिकरण्यव्यवस्थितास्तावद्धर्मादयो नियामका इति व्यवस्थितम्। चेतनोऽपि कर्त्तैव कृतिचैतन्ययोः सामानाधिकरण्येनानुभवात्। न चायं भ्रमो, बाधकाभावात्। परिणामित्वाद् घटादिवदिति बाधकमिति चेत्। न। कर्त्तृत्वेऽपि समानत्वात्। तथा च कृतिरपि भाविकी महतो न स्यात्। दृष्टत्वादयमदोष इति चेत्, तुल्यम्। अचेतनाकार्यत्वं बाधकं, कार्यकारणयोस्तादात्म्यादिति चेत्, न। असिद्धेः। न हि कर्तुः कार्यत्वे प्रमाणमस्ति। प्रत्युत "वीतरागजन्मादर्शनात्"

बोधनी।

वर्गः स्याद् बुद्धिलक्षणोपाधेरुच्छेदात्, उत्तरत्र तु नानुत्पन्नस्यानित्यत्वमित्यनुत्पत्तिदशायां बुद्धितद्धर्माभावात्संसारप्रागभाव एव पुंसः। ततश्च कदाचिद्भोगः कदाचिन्मुक्तिरिति भोगनियमो नोपपद्येत। पूर्वं पुरुषान्तरापेक्षया भोगनियमानुपपत्तिरुक्ता, इदानीं त्वेकस्यैव कालापेक्षया, तत्रोभयोरपि भोगनियमानुपपत्तित्वाविशेषान्निरस्तमित्युक्तम्। अत्रापि नित्यविभूनामात्मनां सर्वबुद्धिप्राप्त्यविशेषेण बुद्धिनियमाभावात् तदायत्तभोगनियमानुपपत्तिरनुकूलमेति भावः। कृतिसामानाधिकरण्यव्यवस्थिता इति। कर्तृधर्मा इत्यर्थः। इदं त्वस्माभिरुच्यत इत्याह–चेतनोऽपि–इति। चैतन्यमपि कर्त्तुरेवेत्यर्थः। नन्वयमनुभवो भेदाग्रहनिमित्तो भ्रम इत्युक्तं, तत्राह–न चायम्–इति। नन्वस्ति बाधकं परिणामित्वं कर्त्तुः परिणामित्वादित्याह–न–इति। ततः किमित्यत्त आह–तथा च–इति। प्रयत्नोऽपि बुद्धेः स्वाभाविको न स्यादित्यर्थः। शङ्कते–दृष्टत्वात्–इति। बुद्धेः कृतिसमवायस्य मानसप्रत्यक्षसिद्धत्वात् न परिणामित्वानुमानं कर्तृत्वं बाधत इति। तर्हि कृतिचैतन्ययोः सामानाधिकरण्यस्यापि दृष्टत्वात्कर्त्तुरचैतन्यानुमानमपि बाधितविषयमित्याह—तुल्यम्–इति। बाधकान्तरमाशङ्कते—अचेतना–इति। अचेतनाया हि प्रकृतेः कार्या बुद्धिः, साऽचेतना स्यात्, चेतनभावे वा प्रकृतेरपि चैतन्यप्रसङ्ग इति भावः। न–इति। कर्त्तुः कार्यत्वमेवास्माकमसिद्धं, दूरत एवाचेतनकार्यत्वमिति। न परं कार्यत्वे प्रमाणाभावः किं च कार्यत्व एव प्रमाणमस्तीत्याह–प्रत्युत–इति। जायमानाः प्राणिनः तावत्स्तन्यादिषु रागवन्तो दृश्यन्ते, रागश्च सुखसाधनानुमानात्, तदनुमानं च तज्जातीयलिङ्गपरामर्शात्, स

प्रकाशः।

बुद्ध्युपधानस्यैव संसारत्वात्। अनित्यत्वे च तदुत्पत्तेः पूर्वं प्रकृतेः साधारण्यान्नियामकाभावेन संसाराभाव इत्यर्थः। ननु कर्त्तृबुद्धितत्त्वस्य धर्मा नियन्तार इति सांख्याभिमतमेव इत्यत आह। चेतनोऽपीति। चेतनोऽहं करोमीत्यनुभवादित्यर्थः। कर्तृत्वेऽपीति। बुद्धिर्न कृत्याश्रयः परिणामित्वाद् घटादिवदित्यपि स्यादित्यर्थः। भाविकी=स्वाभाविकी। यदि ज्ञानाश्रयस्य कृत्याश्रयत्वेनानुभवात् तद्बाधान्नानुमानं, तदा चेतनोऽहङ्करोमीत्यनुभवाद् बाधस्तुल्य इति शङ्कोत्तराभ्यामाह। दृष्टत्वादिति। अचेतनायाः प्रकृतेः कार्यं बुद्धितत्त्वं, कार्यकारणयोश्च तादात्म्यमिति चैतन्ये तस्य बाधकमित्याह। अचेतनेति। प्रत्युतेति। जातमात्रस्य स्तन्यपाने प्रवृ-

प्रकाशिका।

इति चात्र विपक्षबाधकमिति भावः। तदुत्पत्तेः पूर्वमिति। नियामकधर्मादेस्तदभावेऽभावादित्यर्थः।

समानत्वात्=परिणामित्वाद् घटादिवत् इत्यस्य समानत्वात्। तव चैतन्याभावः, मम कृत्यभावः, साधनीयः, ताभ्यां हेतुदृष्टान्तोभयाभ्यामिति भावः।

भाविकी=स्वाभाविकी। महतः=बुद्धेः। न स्यादिति। ज्ञानिनः कृत्याश्रयत्वस्येति शेषः। अनुमानस्य बाधितत्वादिति भावः।

तुल्यम्=ज्ञानिनः कृत्याश्रयत्वस्येव कृत्याश्रयस्य चैतन्याश्रयत्वस्यापि दर्शनं तुल्यमित्यर्थः।

(न्या० ३अ० १आ० २५सू०) इति न्यायादनादित्वैव सिद्ध्यति । यद् यत्र कार्ये रूपं दृश्यते तस्य तस्य कारणात्मकत्वे रागादयोऽपि प्रकृतौ स्वीकर्त्तव्याः स्युः, तथा च सैव बुद्धिर्न प्रकृतिः, भावाष्टकसम्पन्नत्वात् । स्थूलतामपहाय सूक्ष्मतया ते तत्र सन्तीति चेत् , चैतन्यमपि तथा भविष्यति । तथाप्यसिद्धो हेतुः, तथा सति घटादीनामपि चैतन्यप्रसङ्गस्तादात्म्यादिति चेद् ? रागादिमत्त्वप्रसङ्गोऽपि दुर्वारः । सौक्ष्म्यं च समानमिति । तस्माद्, यज्जातीयात् कारणाद् यज्जातीयं कार्यं दृश्यते, तथाभूतात् तथाभूतमात्रमनुमातव्यं, न तु यावद्धर्मकं कारणं तावद्धर्मकं कार्यं व्य-

बोधनी ।

त्वं जायमानस्यास्मिन् जन्मनि न सम्भवतीति तदर्थं भावान्तरमास्थेयम् । एवं पूर्वेष्वपि भावेष्वित्यनादित्वमेव कर्त्तुः सिध्यति । तदाह सूत्रकारो **'वीतरागजन्मादर्शनात्'** (न्या० सू० ३.१.२५) इति । अस्त्वचेतनकार्यत्वं बुद्धेः, तथापि तस्याश्चैतन्यं, तच्चैतन्ये कारणचैतन्यं च न प्रसज्यत इत्यनिष्टप्रसङ्गमुखेन दर्शयति-**यद्यत्**-इति । यदि यावद्धर्मकं कारणं तावद्धर्मकं कार्यमिति स्यात्तर्हि बुद्धेश्चैतन्यवद्रागादयोऽपि न स्युः, भावे वा प्रकृतावपि स्युः ; तत्र कारणात्मकत्वमिति कारणधर्मत्वं विवक्षितमिति सन्तु रागादयः प्रकृतावित्यत आह—**तथा च**-इति । एवकारो भिन्नक्रमः । सा प्रकृतिर्बुद्धिरेव स्यात् , न तु प्रकृतिः । भावाष्टकसम्पन्नत्वं हि बुद्धिलक्षणमिति । **स्थूलरूपताम्**-इति । प्रतीयमानभावाष्टकसंपत्तिर्बुद्धेर्लक्षणम् । प्रकृतौ तु रागादयः सूक्ष्मरूपाः, ततो नोक्तदोष इति । तर्हि रागादिवच्चैतन्यमपि प्रकृतौ सूक्ष्मरूपमभ्युपगम्यतामित्याह-**चैतन्यमपि**-इति । ततः किमित्यत आह-**तथापि**-इति । एवमप्यचेतनकार्यत्वादिति हेतुर्विशेषणासिद्धः, सूक्ष्मचैतन्ययोगिप्रकृतिकार्यत्वादिति । ननु प्रकृतेश्चैतन्याभ्युपगमे तत्कार्याणां घटादीनामपि तथात्वप्रसङ्गः कार्यकारणयोस्तादात्म्यात् तथा चाचेतनकार्यत्वं सिद्धमित्याह—**तथा सति**-इति । तर्हि प्रकृतौ रागाद्यङ्गीकारे घटादीनामपि तथात्वप्रसङ्ग इत्याह-**रागादिमत्त्व**-इति । घटादिष्वपि रागादयः सन्त्येव, सूक्ष्मत्वान्नोपलभ्यन्त इत्यत्राह-**सौक्ष्म्यं च**-इति । तर्हि चैतन्यमपि घटादिषु सदेव सूक्ष्मत्वान्नोपलभ्यत इति वक्तुं शक्यत इति । यद्वा, प्रकृतौ रागादेः सूक्ष्मत्वान्न घटादौ तत्प्रसङ्ग इत्याशङ्क्य तत्र सूक्ष्मचैतन्याभ्युपगमेऽपि न घटादौ चैतन्यप्रसङ्ग इत्याह—**सौक्ष्म्यम्**-इति । यत एवं प्रसङ्गः तस्मात् कार्यकारणयोरेवं व्यवस्था न त्वनेवमित्याह-**तस्मात्**-इति । व्यभिचारात् कारणेष्वसतामेव धर्माणां कार्येषु दर्शनात् सतामेव चादर्शनादिति । प्रकृतमनुसरामः, किमनेन कार्यकारणयोः

प्रकाशः ।

त्तौ रागजनकेष्टसाधनताज्ञानाधीनेति तदनुमानार्थं जन्मान्तरानुभूतव्याप्तिस्मरणमावश्यकमेवं तत्पूर्वजन्मनीत्यनादितेत्यर्थः । **यद्यदिति** । यथा प्रकृतौ रागाद्यभावेऽपि तत्कार्यबुद्धौ रागादिस्तथा प्रकृतेरचैतन्येऽपि सा चेतना स्यादित्यर्थः । **तथा चेति** । प्रकृतौ रागादिस्वीकारे तद्भिन्नबुद्धितत्त्व एव मानाभावाद् इत्यर्थः । **तथेति** । प्रकृतावपि सूक्ष्मं चैतन्यमित्यर्थः । **असिद्ध** इति । अचेतनकार्यत्वादित्यत्र विशेषणासिद्धेरित्यर्थः ।

**तथा सतीति** । बुद्धेश्चैतन्ये तज्जन्यघटादेरपि तत् स्यादित्यर्थः । **रागादीति** । घटादे रागादिमद्बुद्धिजन्यत्वादित्यर्थः । **सौक्ष्म्यं चेति** । घटादौ रागादेरिव चैतन्यस्यापि सूक्ष्मत्वादित्यर्थः ।

**कारणात्मकत्वम्** । धर्मधर्मिणोस्तादात्म्यात् ।

भिचारादिति किमनेनाप्रस्तुतेन ? । यदि च बुद्धिर्नित्या, अनिर्मोक्षप्रसङ्गः, पुंसः सर्वदा सोपाधित्वे स्वरूपेणानवस्थानात् । अथ विलीयते, ततो नानादेर्विलय इत्यादिमत्त्वे तदनुत्पत्तिदशायां को नियन्ता ? प्रकृतेः साधारण्यात् तथा चासंसारः । पूर्वपूर्वबुद्धिवासनानुवृत्तेः साधारण्येऽप्यसाधारणीति चेत् । बुद्धिनिवृत्तावपि तद्धर्मवासनाऽनुवृत्तिरित्यपदर्शनम् । सौक्ष्म्यान्न दोष इति चेत् । मुक्तावपि पुनः प्रवृत्तिप्रसङ्गः । निरधिकारित्वान्नैवमिति चेत् । तर्हि साधिकारा प्रसुप्तस्वभावा बुद्धिरेव प्रकृतिरस्तु, कृतमन्तरा प्रकृत्यहङ्कारमनःशब्दानामर्था-

---

बोधनी ।

साधर्म्यवैधर्म्यनिरूपणेनेत्याह—**किमनेन**–इति । तदेवं कृतिचैतन्ययोः सामानाधिकरण्यस्याबाधितत्वाच्चेतिता च स एव न इति सुस्थम् । तृतीयपादं सोपस्कारं व्याचष्टे—**यदि च**–इति । तुरीयं व्याचष्टे—**अथ** इति । को नियन्ता ? नियतशरीरादिपरिग्रहे बुद्धेर्विलीनत्वाद्विद्यमानस्य चात्मनो निरतिशयत्वादिति । तर्हि नित्या प्रकृतिरेव नियन्त्री भविष्यतीत्यत्राह–**प्रकृतेः**–इति । निरतिशयत्वेन तस्याः सर्वपुरुषसाधारणत्वादिति । नियन्तुरभावे किं स्यादत आह–**तथा च**–इति । ननु विलीयमाना बुद्धिः स्वगतां धर्माधर्मरूपवासनां प्रकृतावाधाय विलीयते, अतो बुद्ध्याहितवासनानुवृत्तेः प्रकृतिरसाधारणी स्यादित्याह—**पूर्वबुद्धि**–इति । नायं धर्मधर्मिणोस्तादात्म्यवादिनः सांख्यस्य सिद्धान्त इत्याह—**बुद्धि**–इति । ननु स्थूलरूपनिवृत्तावपि सूक्ष्मरूपा बुद्धिरवतिष्ठते, ततः सर्वथा विनाशाभावादतः तदाश्रयवासनानुवृत्तेर्नापसिद्धान्तदोष इत्याह–**सौक्ष्म्यात्**–इति । यदि सूक्ष्मरूपावस्थितयैव बुद्ध्या भोगनियमो भवेत् तर्हि मुक्तावपि तथावस्थितयैव तया भोगप्रसङ्ग इत्याह—**मुक्तावपि**–इति । नन्वनुवर्त्तमानापि बुद्धिर्मुक्तौ कर्मवासनारहितत्वान्न पुनः संसारहेतुरित्याह—**निरधिकारित्वात्**–इति । यदि सत्यामपि बुद्धावधिकारायत्तः संसारः, अत एवाप्रसुप्तस्वभावात् तत्तत्कार्यपरिणामोन्मुखी बुद्धिरेव प्रकृतिरस्तु, तथाधिकारवत्त्या बुद्धेरेव तत्तदभिमानादिव्यापारमाश्रित्याहङ्कारादिव्यपदेशोऽस्तु, किं व्यापारवद्धर्मिभेदकल्पनाप्रयासेनेत्याह–**तर्हि**–इति । प्रकृत्यादिशब्दानामेकार्थत्वे तद्भेदप्रतिपादक आगमो विरुध्येत "अजामेकाम्" इत्यादिः । तथा—

> "दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
> भौतिकास्तु शतं पूर्णं सहस्रं चाभिमानिकाः ।
> बौद्धा दशसहस्रं हि तिष्ठन्ति विगतज्वराः" इति ।

प्रकाशः ।

**पुंसः सर्वदेति** । पुरुषस्य निरुपाध्यवस्थानात्मको मोक्षो न स्यात् । बुद्धेर्नित्यत्वेन सदा तदुपधानादित्यर्थः । **अथेति** । बुद्धेरनुत्पत्तावास न ध्वंस इति तदुत्पत्तिकाले नियमकाभावान्नियतबुद्ध्युत्पाद एव न स्यादिति न संसार इत्यर्थः । ननु प्रकृतेः साधारण्येऽपि पूर्वप्रध्वस्तबुद्धिवासनायोगादसाधारणी नियामिका स्यादित्याह । **पूर्वेति** । सांख्यमते धर्मधर्मिणोरभेदादस्माकं चाऽऽश्रयनाशस्य कार्यनाशकत्वाद्धर्मिनाशेऽपि न धर्मावस्थानमित्याह । **बुद्धीति** । **सौक्ष्म्यादिति** । सूक्ष्मबुद्धिरनुवर्तत एवेति न तन्नाश इत्यर्थः । **मुक्तावपीति** बुद्धेः सूक्ष्माया अनुवृत्तेः संसारापत्तिरित्यर्थः । यावत्संसारं विलीनाया अपि बुद्धेर्वासनानुवृत्तिलक्षणोऽधिकारोऽस्ति, मुक्तौ तु सोऽपि नास्तीति न पुनः संसार इत्याह । **निरधिकारत्वादिति** । यद्येवं, तदा संसारदशायां साधिकारा, मुक्तौ तु प्रसुप्तस्वभावा प्रत्ययजनिका बुद्धिरेव ज्ञानाद्याश्रयभूता प्रकृतिपदवाच्याऽस्तु, कृतं प्रकृत्याद्यर्थान्तरकल्पनयेत्याह । **तर्हीति** । एवं सति प्रकृत्यादिप्रतिपादकानां प्रमा-

न्तरकल्पनया ? । सैव हि तत्तद्व्यवहारगोचरा तेन तेन शब्देन व्यपदिश्यते शारीरवायुवदित्यागमोऽपि सङ्गच्छते इत्यतोऽपि हेतुरसिद्धः । अधिकारनिवृत्त्या बुद्धेरप्रवृत्तिरपवर्गः, वासनायोगश्चाधिकारः, ततः संसारः । धर्मधर्मिणोरत्यन्तभेदे च कौटस्थ्याविरोधः । भेदश्च विरुद्धधर्माध्यासलक्षणो घटपटादिवत् प्रत्यक्ष-

बोधनी ।

तत्राह—सैव हि—इति । यथैकस्यैव शरीरान्तर्वर्तिनो वायोरूर्ध्वाधोगमनादिविशेषणात् प्राणापानादिव्यपदेशः, तथैकस्या एव बुद्धेस्तत्तद्व्यापारभेदात् प्रकृत्यादिव्यपदेश इत्यागमोऽपि संगंस्यत इति । अस्तु तर्हि बुद्धेरेव प्रकृत्यादिभावस्ततः किमित्यत आह—अतोऽपि—इति । बुद्धेरेव प्रकृतित्वोपपादनादप्यचेतनकार्यत्वादिति हेतुरसिद्धस्तस्याः कार्यत्वाभावादिति । बुद्धेरेव संसारापवर्गावेवमेव चेत्याह—अधिकार—इति । कोऽयमधिकार इत्यत्रोक्तं वासनायोगः-इति । सा वासना च कर्मजन्यौ धर्माधर्माविति । यदि बुद्धेरेव संसारापवर्गौ सैव पुरुषः स्यात्, तस्य च कूटस्थनित्यस्य कथं ज्ञानादिविकारः, विकारे वा कथं कूटस्थत्वमित्याशङ्क्याह-धर्मधर्मिणोरिति। यद्वा, कर्त्तैव चेतन इत्युक्तं, तत्र चेतनस्य विकारत्वेन कूटस्थनित्यताविरोध इत्याशङ्क्याह—धर्मधर्मिणोः-इति । न हि भिन्नस्य धर्मस्योत्पादविनाशाभ्यां धर्मिणः कूटस्थत्वं विरुध्यत इति । भेद एव कुत इत्यत आह-भेदश्च-इति । अहं जानामि ज्ञास्याम्यज्ञासिषमित्यतीतानागतवर्त्तमानज्ञानानुगतः पुरुषोऽहमास्पदमनुभूयत इति प्रत्यक्षमेव भेदे प्रमाणमिति । तथापि धर्मधर्मिणोर्गौरोऽयं शुक्लोऽयमिति सामानाधिकरण्यप्रतीतिदर्शनात्तयोश्चात्यन्तभिन्नयोर्घटपटयोरदर्शनादभेदोऽप्यस्त्वित्याशङ्क्य सामानाधिकरण्यं यथासंभवं विकल्प्य सर्वथैतद् भेदस्यैव सा-

प्रकाशः ।

मयति । सैव हीति । तत्तद्व्यापारयोगादादिकारणत्वाभिमानकारणत्वादियोगात्तेन तेन प्रकृत्यादिशब्देन बुद्धिरेकैवोच्यत इत्यर्थः । शारीरेति । यथैक एव शारीरो वायुरूर्ध्वाऽधोगत्यादियोगात् प्राणापानसमानादिशब्दवाच्य इत्यर्थः । अतोऽपीति । पूर्वं नित्यत्वेनाचेतनकार्यत्वमसिद्धमुक्तम् । अधुना तु बुद्धिरेव प्रकृतिपदवाच्येति प्रकृतिकार्यत्वं बुद्धेरसिद्धमित्यभिप्रायेणोच्यत इत्यर्थः ।

एवं सत्येकस्य क्रमेण संसारापवर्गौ सांख्यमतेन समञ्जसयति । अधिकारेति । वासना=धर्माधर्मौ । ननु बुद्धेश्चैतन्ये चेतनकौटस्थ्यश्रुतिविरोध इत्यत आह । धर्मेति । कौटस्थ्यं हि नित्यत्वम् , । तच्च धर्मस्योत्पादविनाशेऽपि न धर्मिणस्तावित्यविरुद्धम् । अभेदे हि धर्मधर्मिणोस्तद्विरोधः स च नास्त्येवेत्यर्थः । कथं नास्तीत्यत आह । भेदश्चेति । अहं जानाम्यहमज्ञासिषमहं ज्ञास्यामीत्यनुभवाज्ज्ञानातीतत्वादिग्रहेऽपि अहमास्पदस्याबाधितप्रत्यक्षेण स्थैर्यानुभवा

प्रकाशिका ।

कृतं प्रकृत्येति । प्रकृत्यादिशब्दानामर्थान्तरकल्पनयेत्यर्थः । पूर्वं नित्यत्वेनेति । यद्यप्यव्यवहितपूर्वं विशेषणासिद्धिरुक्ता तथापि 'न हि कर्त्तुः कार्यत्व" इत्यादिना प्रथमतः एव मूलेऽसिद्धिरुक्तेति । अभिप्रायेणेति । यद्यपि नीलः पट इतिवत् ज्ञानमहमिति सामानाधिकरण्यधीरसिद्धैवेति कथं ज्ञानतद्धर्म्मिणोरभेदसिद्धिः । तथापि सामानाधिकरण्यप्रतीत्या नीलप-

मकरन्दः ।

पूर्वं नित्यत्वेनेति । यद्यप्यचेतनकार्यत्वादित्यत्र विशेषणासिद्धिरिति व्याख्यानात् कार्यत्वासिद्धिर्नोक्ता, तथाप्यसिद्धिरित्यादिमूलेन कार्यत्वासिद्धेरप्युक्तत्वात्तदभिप्रायेणेदं मन्तव्यम् ।

---

आगमोऽपीति । प्रकृत्यहङ्कारमनःप्रभृतिप्रतिपादकागमोऽपीत्यर्थः ।

सिद्धः । न च सामानाधिकरण्यादभेदोऽपि, तद्धि समानशब्दवाच्यत्वम्, एकज्ञानगोचरत्वम्, एकाधिकरणत्वम्, आधाराधेयभावः, विशेष्यत्वं, सम्बन्धमात्रं वा, भेद एव भेदेऽपि चोपपद्यमानं नाभेदं स्पृशतीति । तस्मात् सर्वमवदातम् ॥१४॥

बोधनी ।

धकमित्याह–न च–इति । अनेकापेक्षया हि किञ्चिदेकं साधारणं भवति, न त्वेकस्यैवैकम् । सुगममन्यत् । न चातिप्रसङ्गः, कार्यकारणाभिधेयाभिधायकविषयविषयिभाववत् स्वभावत एव सामानाधिकरण्यनियमोपपत्तेरिति भावः । तस्मादात्मनो ज्ञानाद्यनित्यधर्मकत्वे दोषकणोऽपि नास्तीत्युपसंहरति—तस्मात्सर्वमवदातम्—इति ॥ १४ ॥

प्रकाशः ।

दित्यर्थः । ननु धर्मधर्मिणोरत्यन्तभेदोऽसिद्धः । नीलः पट इति सामानाधिकरण्यबुद्धिरतिभिन्नाभिन्नाभ्यां व्यावर्तमाना धर्मधर्मिणोर्भेदाभेदौ साधयति । अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति सदातनाभावमात्रवृत्तिधर्मत्वात् अत्यन्ताभावत्ववदित्यनुमानमप्यत्रेत्यत आह—न चेति । आद्यं द्वयं सामानाधिकरण्यं भेदेऽपि, अन्त्यत्रयं भेद एव, सम्बन्धमात्रमपि यद्येककारणकत्वादि तदा भेदेऽपि, नोचेद्भेद एव उपपद्यत इति नाभेदस्ततः सिद्ध्यतीत्यर्थः । अथ नीलपटयोरभेदबुद्धिरेव सामानाधिकरण्यधीस्तदाऽसिद्धिः । नीलः पट इति प्रतीत्या तयोः सम्बन्धस्यैव विषयीकरणात् । अन्यथा नीलिमा पट इत्यपि बुद्ध्यापत्तिः । शब्दप्रयोगस्यापि मतुब्लोपादभेदोपचाराद्वोपपत्तेः । वस्तुतो विरुद्धयोरेकत्र भावाभावाववच्छेदभेदेनैव प्रतीयेते । न चात्र सोऽस्ति । अनुमानमप्यनुकूलतर्काभावेन व्याघातरूपप्रतिकूलतर्केण च प्रतिहतमिति संक्षेपः ॥ १४ ॥

प्रकाशिका ।

टयोरभेदसिद्धौ तद्दृष्टान्तेन धर्मधर्मिभावादेव प्रकृतेऽभेदः साध्य इत्याशयवानाशङ्कते । ननु धर्मधर्मिणोरिति । अन्योन्याभावत्वमिति । यद्यपि संयोगवदन्योन्याभावाव्याप्यवृत्तितामादायार्थान्तरत्वम् । तथापि व्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्वसमानाधिकरणात्यन्ताभावप्रतियोगिवृत्तित्वमव्याप्यवृत्तित्वं प्रकृते विवक्षितमिति नोक्तदोषः । संयोगात्यन्ताभावे च व्याप्यवृत्त्यैव संयोगत्वं प्रतियोगितावच्छेदकमिति न दृष्टान्तासिद्धिः । सदातनेति । सदातनाभाववृत्त्यभावविभाजकधर्मत्वादित्यर्थः । तेन यथाश्रुते घटात्यन्ताभावत्वे व्यभिचारः, मात्रपदं च व्यर्थं प्रमेयत्वादावपि साध्यसत्वात् मात्रपदस्य कार्त्स्न्यार्थकत्वे स्वरूपासिद्धिदृष्टान्तसिद्धी इति दूषणस्यानवकाशः । सदातनेत्यादिविशेषणं च संयोगप्रागभावध्वंसयोर्व्याप्यवृत्तित्वपक्षे, अन्यथात्वदेयमेव । अभावपदं चाकाशत्वादौ व्यभिचारवारणाय मुख्याभावपरं स पुनश्चतुर्द्धेति शास्त्रेणाभावविभागात् स्वरूपासिद्धिरिति स्मर्त्तव्यम् । आद्यं त्रयमिति । अधिकरणैक्यस्यापि भेदाभेदसाधारणत्वादिति भावः । अन्त्यं त्रयमिति । सम्बन्धत्वमात्रपक्षेऽपि कार्यकारणभावादिकमर्थमादाय भेदत्रयस्यैव प्राप्तेरिति भावः । क्वचित् पाठः आद्यं द्वयमिति । तत्रैकाधिकरणत्वं समानाधिकरणत्वं साम्यं च तदधिकरणत्वासाधारणधर्माघटितमिति भेदनियतमिति भावः । एवं च अन्त्यत्वेन तृतीयचतुर्थपञ्चमरूपं विवक्षितम् । षष्ठं तु स्वयमेव विकल्प्य दूषयिष्यतीति ध्येयम् । मतुब्लोपादिति । लुप्तस्मृतो मतुबेवार्थप्रत्यायको नीलपदे वा नीलसम्बन्धिनि लक्षणेत्यर्थः ॥ १४ ॥

मकरन्दः ।

सदातनाभावमात्रवृत्तिधर्मत्वादिति । ननु घटात्यन्ताभावत्वादौ व्यभिचारः, मात्रपदञ्च व्यर्थम् प्रमेयत्वादावपि साध्यसत्वात् । न च मात्रपदं न व्यवच्छेदार्थकं, किन्तु यावदर्थकम् ।

स्यादेतत् । नित्यविभुभोक्तृसद्भावे सर्वमेतदेवं स्यात्, स एव कुतः, भूतानामेव चेतनत्वात् । कायाकारपरिणतानि भूतानि तथा, अन्वयव्यतिरेकाभ्यां तथोपलब्धेः, कर्मज्ञानवासने तु सर्वत्र प्रतिभूतनियते अनुवर्त्तिष्येते, यतो भोगप्रतिसन्धाननियम इति चेत् । उच्यते—

**नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।**

---

बोधनी ।

एवं सांख्यं निरस्यापूर्वस्यात्मधर्मत्वे साधिते पुनरपि चार्वाकः प्रत्यवतिष्ठते—**स्यादेतत्**—इति । यदि भोक्ता नित्यो विभुश्च स्यात् ततस्तस्य सर्वदेहप्राप्त्यविशेषाद् भूतगतैरतिशयैर्न भोगनियमः स्यादित्यात्मसमवायोऽपूर्वस्य स्यात्, तादृशस्तु भोक्ता कुतः प्रमाणात् सिध्येत् । न कुतश्चिदित्यर्थः । ननु ज्ञानसमवायिकारणत्वेनानुमास्यत इत्यत्राह—**भूतानामि**ति । भूतानामेव चेतनत्वे घटादेरपि तत्त्वप्रसङ्गमाशङ्क्य विशिनष्टि—**कायाकार**—इति । तानि भूतानि तथा चेतनानीत्यर्थः । भूतत्वाविशेषे कुतोऽयं विवेक इत्यत्राह—**अन्वय**—इति । यथा सुराकारपरिणतानामेव भूतानां मदशक्तिर्नान्येषां तथैतदपि । तदुक्तं सूत्रकारेण "मदशक्तिवद् विज्ञानम्" इति । यदि शरीरादिव्यतिरिक्तः चेतनो न स्यात् तर्हि किमाश्रयावदृष्टसंस्कारौ भोगं प्रतिसंधानं च नियच्छतस्तत्राह—**कर्म**—इति । स्मृतिहेतुः संस्कारो ज्ञानवासना, सा तावदनुभवसामानाधिकरण्यात् तदाधारेषु वर्त्स्यत इति । कर्मजनितौ धर्माधर्मौ कर्मवासना, सा तावन्नास्त्येव । यद्यपि स्यात् तथापि भूतानामेव कर्तृत्वात्तेष्वेव नियता वर्त्स्यत—इत्युच्यत इति ।

अन्यैरनुभूतं नान्यः स्मरतीति तावदविवादम् । अनेनात्मनः शरीरादिव्यतिरेके प्रमाणमभिसंधत्ते, स्मृतिः पूर्वापरप्रत्ययाभ्यां सहैककर्तृका, ताभ्यां सहैककर्तृत्वेन प्रतिसंधीयमानत्वात्, न यदेवं, न तदेवं यथा देवदत्तस्य स्मृतिर्यज्ञदत्तस्य पूर्वापरप्रत्ययाभ्यां न प्रतिसंधीयते न तथा चेयं तस्मान्न तथेति । ततः किमित्यत आह—**नैकम्**—इति । न तावच्छरीरावयविसमवेतं चैतन्यं, तस्यावस्थाभेदेष्वन्यत्वात् तत्र पूर्वानुभूतस्योत्तरावस्थायामस्मरणप्रसङ्गः । तर्हि करचरणाद्यन्यतमावयवसमवेतं भविष्यतीति । अत्राप्येतदेवावतिष्ठते नैकमवयवभूतं चैतन्यं तस्यावयवस्य कदाचिद्विच्छेदात् । तत्र च तदनुभूतस्यावयवान्तरेणास्मरणप्रसङ्गः । यद्वा, आद्यपादेनावयविचैतन्यस्य निरासः, द्वितीयेनावयवचैतन्यस्येति । ननु पूर्वावयविगता वासनोत्तरस्मिन्नवय-

प्रकाशः ।

**स्यादेतदि**ति । भूतचैतन्येऽपि प्रकृतसिद्धौ नित्यविभुभोक्तृनिरासपरेयं शङ्केति । अथैवं घटादिरपि चेतनः स्यादित्यत आह । **काये**ति । **अन्वये**ति । अन्वयव्यतिरेकाभ्यां शरीरस्य ज्ञानहेतुत्वे सिद्धे समवायिकारणमपि तदेव कल्प्यते । तदन्यस्मिन् मानाभावाद्, गौरोऽहं जानामीत्यनुभवाच्चेति भावः । ननु शरीरस्याऽनुभवितृत्वे कर्तृत्वे च तन्नाशादन्यस्य भोक्तृत्वे प्रतिसंधातृत्वे चातिप्रसङ्ग इत्यत आह । **कर्मज्ञाने**ति । कर्मज्ञानाभ्यां जनिते वासने अदृष्टसंस्कारौ । **यत** इति । यत्कायसन्ताने कर्म, तत्कायसन्ताने भोगो, यत्कायसन्तानेऽनुभवस्तत्कायसन्ताने स्मृतिरित्यर्थः ।

**नान्यदृष्टमि**ति । एवं बालशरीरेणाऽनुभूतस्य युवशरीरेण स्मरणं न स्यात्, तयोर्भेदात् । अन्यानुभूतस्यान्येन स्मरणेऽतिप्रसङ्गात् । न च बाल्ययौवनयोरेकं भूतं शरीरम् । अपक्रमाद्=विनश्वरस्वभावत्वात् । न चान्यवासनाऽन्यत्र संक्रामति, अतिप्रसङ्गादित्यर्थः ।

प्रकाशिका ।

**प्रकृतसिद्धावि**ति । कालान्तरफलानुकूलादृष्टस्यैव प्रकृतत्वादिति भावः ।

**वासनासङ्क्रमो नास्ति न च गत्यन्तरं स्थिरे ॥१५॥**

न हि भूतानां समुदायपर्यवसितं चैतन्यम् । प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रङ्गात् । नापि प्रत्येकपर्यवसितं, करचरणाद्यवयवापाये तदनुभूतस्य स्मरणायोगात् । नापि मृगमदवासनेव वस्त्रादिषु संसर्गादन्यवासनाऽन्यत्र संक्रामति । मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात् । न चोपादानोपादेयभावनियमो गतिः । स्थिरपक्षे परमाणूनां तदभावात् । खण्डावयविनं

बोधनी ।

विनि संक्रामति विच्छिन्नावयवगता च तिष्ठत्स्ववयवेष्विति । अत्राह—**वासनासंक्रमः**—इति । 'सर्गादेव वासनायाः संक्रमणे संक्रान्तमातृवासनेन गर्भस्थेन मात्रानुभूतस्य स्मरणप्रसङ्गः । ननूपादानोपादेयभावस्तु नियामिका गतिर्भविष्यति । न ह्यवयवि नाम किञ्चिदस्ति, किन्तु प्रतिक्षणभङ्गुराः परमाणव एव तत्त्वम् । तेन पूर्वैः परमाणुभिरुत्तरेषामुपादीयमानत्वमस्ति । मातृभ्रूणयोस्तु तदभावान्नातिप्रसङ्ग इत्याह—**न च**—इति । न च स्थिरपक्षे परमाणूनां नित्यत्वेनोपादेयभावोऽस्तीत्याद्यपादस्य निगदव्याख्यातत्वाद् द्वितीयं व्याचष्टे—**न हि**—इति । द्वितीयव्याख्याने स्वाद्यस्यैव विवरणं द्वितीयमेवार्थान्तरेण व्याचष्टे—**नापि** इति । द्वितीयव्याख्याने तु द्वितीयमिदानीं व्याचष्टे—**नापि**—इति । तृतीयं व्याचष्टे—**नापि मृगमद**—इति । तुरीयं व्याचष्टे—**न च**—इति । मा भूत्परमाणूनामुपादानोपादेयभावः, अवयवावयविनोस्तु भविष्यतीत्याशङ्क्याह—**खण्डावयविनम्**—इति । न ह्यनुभवितारो विच्छिन्ना अवयवाः खण्डावयविनमार-

प्रकाशः ।

ननूपादानवासनाया उपादेये संक्रमः स्यादित्यत आह । **न चेति** । स्थिरे=स्थिरपक्षे, परमाणूनामनुपादेयत्वाद् विच्छिन्नकरादीनां खण्डावयविनं प्रत्यनुपादानत्वादित्यर्थः ।

**प्रतिदिनमिति** । आहारपरिणतिविशेषस्य तद्धेतोरन्यान्यत्वादित्यर्थः । ननु करे मे सुखं, पादे मे दुःखमित्यनुभवादनुभवव्यवकिरणस्य सुखादेरनभ्युपगमात् कराद्येवानुभवितृ स्यादित्यत आह । **नापीति** । कराद्यपाये तदनुभूतास्मरणापातादित्यर्थः । **मात्रेति** । मातृगर्भस्थयोर्मिथः संसर्गादित्यर्थः । ननु उपादानं यदनुभवितृ तद्वासना तदुपादेये संक्रामतीति करादिवासना तदपगमे तदुपादेये संक्रामति, न च मातृभ्रूणयोस्तथात्वमित्यत आह—

**न चेति** । **खण्डेति** । अवस्थितावयवसंयोगेभ्य एव खण्डावयव्युत्पादादित्यर्थः । न च परमाणूनामेव चैतन्यं, तद्गुणानामतीन्द्रियत्वेन ज्ञानादेरप्यतीन्द्रियत्वापत्तेः । शरीरान्वयादेश्च

प्रकाशिका ।

**स्थिरपक्ष इति** । क्षणिकतापक्षे पूर्वपरमाणुपुञ्जात्तदुत्तरपरमाणुपुञ्जोत्पत्तिरिति भवतूपादेये उपादानवासनासंक्रमः, स्थिरपक्षे तदभावान्न स्यादित्यर्थः । **विच्छिन्नेति** । तथा च तत्करावच्छेदेनानुभूतं तदपगमे नानुभूयेतेति भावः । **तद्गुणानामिति** । इदमापाततः, वस्तुतः

मकरन्दः ।

अत एव नोक्तव्यभिचारोऽपीति वाच्यम् । स्वरूपदृष्टान्तासिद्ध्योरापत्तेः । अन्योन्याभावस्यात्यन्ताभावेऽत्यन्तताभावस्यान्योन्याभावेऽवृत्तेः । सदातनेत्यपि व्यर्थम् । स्वरूपयोरप्यप्रागभावध्वंसयोरप्यव्याप्यवृत्तित्वेन प्रागभावप्रध्वंसत्वयोरपि साध्यसत्त्वादिति चेन्मैवम् । सदातनाभाववृत्त्यभावविभाजकोपाधित्वादिति विवक्षितत्वात् । न चैवमपि दृष्टान्तासिद्धिः, चतुर्द्धा अभावविभागस्य, स पुनश्चतुर्द्धेत्यनेन करणात् । संयोगप्रागभावादेर्व्याप्यवृत्तित्वाभ्युपगमेन सदातनपदं, तदनभ्युपगमे त्वनादेयमेवेति तत्त्वम् ॥ १४ ॥

**स्थिरपक्ष इति** । क्षणिकतापक्षे बाल्ययुवशरीरयोः परमाणुपुञ्जात्मकतयोपादानोपादेयभावे तद्वासनासंक्रमः स्यात् । स्थिरपक्षे तदभावान्न स्यादित्यर्थः । **विच्छिन्नेति** । तथा च तद्वास

प्रति च विच्छिन्नानामनुपादानत्वात्। पूर्वसिद्धस्य चावयविनो विनाशात् ॥१५॥
अस्तु तर्हि क्षणभङ्गः । न चातिशयोऽव्यतिरिच्यते

बोधनी।

भन्ते तस्य तिष्ठद्भिरेवारम्भादिति। अखण्डं तु पूर्वावयविनं प्रति विच्छिन्ना एवोपादानभूता इत्यत्राह—**पूर्वसिद्धस्य**-इति। किमनेन, स हि तदारब्धः पूर्वावयवीति। तद्विच्छेदे विनष्ट एव क इदानीं प्रतिसन्दध्यात्। अत्र पूर्वशरीरस्याप्युत्तरं प्रत्यनुपादानत्वादित्याद्यपि द्रष्टव्यम्॥१५॥

अत्र चार्वाक एव बौद्धमतावलम्बनेन प्रत्यवतिष्ठते-**अस्तु तर्हि**-इति। यदि स्थिरपक्षे गतिर्नास्ति तर्हि क्षणभङ्गमङ्गीकुर्म इति। ननु क्षणभङ्गवादे बीजादीनामङ्कुरादिकार्यानुगुणः कश्चिदतिशयः क्षितिसलिलादिभिराधीयत इति वक्तव्यम्, अन्यथा कुसूलस्थैरपि बीजैरङ्कुरारम्भप्रसङ्गात्। स चातिशयो बीजव्यतिरिक्तश्चेत् तस्यैवान्वयव्यतिरेकाभ्यां कारणत्वप्रसङ्गः, अव्यतिरेके तु बीजमात्रमेवेति कुसूलस्थानामप्यङ्कुरारम्भप्रसङ्ग इत्यत आह-**न च**-इति। सत्यमस्त्यतिशयः, स च भावान्न व्यतिरिच्यते, समर्थस्वभावं भावान्तरमेव क्षित्यादिर्जायत इत्यर्थः। अथवा प्रतिक्षणभङ्गे भेद उपलभ्येत, तदनुपलम्भान्नास्ति सङ्ग इत्यत्राह—**न च**-इति। अतिशयो वैलक्षण्यं भेद इति यावत्, व्यतिरेको नास्तित्वं, न च भेदो नास्तीत्यर्थः। यद्वा, करणाकरणविरुद्धधर्मसंसर्गाद्धि पूर्वोत्तरयोः क्षणयोर्भेदाङ्गीकारः, तस्य सहकारिलाभालाभाभ्यामेकैकस्यैवोपपत्तेर्न भेदः सिध्यतीत्यत्राह—**न च**-इति। सहकारिजन्यातिशयस्य भावाद्व्यतिरेके तस्यैव कारण-

प्रकाशः।

कारणत्वमात्रं सिद्धयति, न समवायिकारणत्वम्। तदेवं विपक्षबाधकाच्छरीरं न चेतनम् भूतत्वाद्। घटवदित्यर्थः॥ १५॥

**अस्त्विति**। तत्र पूर्वोत्तरशरीरयोरुपादानोपादेयभावाद् वासनासंक्रमात् प्रतिसन्धाननियम उपपद्यत इति भावः। क्षणिकत्वे विप्रतिपत्तिः। सत् स्वोपरत्यव्यवहितोत्तरकालवृत्ति॰ 'सप्रतियोगि न वा ?। तत्र स्थैर्ये प्रसङ्गविपर्ययाभ्यामर्थक्रियाव्यापकक्रमयौगपद्याभावात्तदभावेऽर्थक्रियाकारित्वरूपसत्त्वानुपपत्तौ, यत् सत् तत् क्षणिकं यथा घटः संश्च विवादास्पदीभूतः शब्दादिरिति पराभिप्रेतं मानम्। ननु क्षणभङ्गे पूर्वक्षणिकभावादमिमो भावः सातिशयो जायते, यतः कार्योत्पादः, सहकारिसहितस्यैव तद्धेतुत्वे क्षणभङ्गानुपपत्तेः। तथा च सातिशयव्यक्त्युत्पादो गृह्येत, न चैवमिति न तत्सिद्धिरित्यत आह। **न चेति**। अतिरिच्यते=विविच्य न गृह्यते। असमर्थ-

प्रकाशिका।

परमाणूनां चैतन्य एकत्र शरीरे चैतन्यबहुत्व एकाभिप्रायानियमेन प्रवृत्तिनिवृत्ती न स्यातामिति दूषणं द्रष्टव्यम्॥ १५॥

**सदिति**। न चान्त्यशब्दस्य क्षणिकत्वे तत्रैवांशतः सिद्धसाधनम्, अक्षणिकत्वे च विधिकोटेरप्रसिद्धिरिति वाच्यम्। पक्षतावच्छेदकैक्ये अंशतः सिद्धसाधनस्यादोषत्वात्, तद्भिन्नस्यैव वा पक्षत्वात्। यदि चान्त्यशब्दोऽपि द्विक्षणावस्थायी पक्षस्तदायं घट एतदुत्पत्त्यव्यहितोत्तरवर्तिध्वंसप्रतियोगी न वेति विशिष्यैव विप्रतिपत्तिः, अतस्तत्कालध्वस्तपदार्थ एव विधिकोटिप्रसिद्धिरिति ध्येयम्। निषेधकोटिप्रसिद्धिस्तु मन्मते नित्ये तन्मते अलीके यदि सामान्यविप्रतिपत्तिः विशेषविप्रतिपत्तौ तु सुलभैवोभयमते। **प्रसङ्गविपर्ययाभ्यामिति**। सामर्थ्यस्य क्षेत्रपतिते नैयायिकाङ्गीकृतत्वादसामर्थ्यसाधकाभ्यां ताभ्यामित्यर्थः, अत एव प्रसङ्गाभ्यां विपर्ययाभ्यामित्यपव्याख्यानम्। **अर्थक्रियेति**। व्यापकत्वं च क्रमयौगपद्ययोरन्यतरत्वावच्छिन्न-

मकरन्दः।

नासंक्रमाभावात्तदनुभूतं खण्डशरीरेण न स्मर्येतेत्यर्थः॥१५॥**सदिति**। न चान्त्यशब्दांशे सिद्धसाधनमन्यथा साध्याप्रसिद्धेरिति वाच्यम्। सत्त्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्। **अर्थक्रियाव्याप-**

१. अतिरिच्यते=विविच्य निश्चीयते।

किन्तु सादृश्यतिरस्कृतत्वाद् प्रागेव न विकल्प्यते, कार्यदर्शनादध्यवसीयते अन्त्यातिशयवत् । तथा च भूतान्येव तथा तथोत्पद्यन्ते, यथा यथा प्रतिसन्धाननियमादयोऽप्युपपद्यन्ते । क्षणिकत्वसिद्धावेवमेतत्, तदेव त्वन्यत्र विस्तरेण प्रतिषिद्धम् । अपि च—

**न वैजात्यं विना तत् स्यान्न तस्मिन्ननुमा भवेत् ।**

बोधनी ।

त्वप्रसङ्गात् न व्यतिरिच्यत इति वक्तव्यम्, तदा च सहकारिसमवधानाद्भावान्तरमेव जायत इति स्यादित्यत्र क्षणभङ्गसिद्धिरिति । एवं तर्हि पूर्वबीजवैलक्षण्येनोत्तरं बीजमनुभूयेतेत्यत आह—**किन्तु** इति । भिन्नो भावः सादृश्यतिरस्कृतभेदत्वादापाततः तथा न विकल्प्यते न निर्धार्यते वर्तमानक्षणावगाहिना तु निर्विकल्पकेनानुभूयत एवेत्यर्थः । पश्चाद्वा निश्चयः कुतस्त्य इत्यत्राह—**कार्यदर्शनात्**–इति । कुसूलस्थाद्विलक्षणभावानुत्पादे तद्वदेवानारम्भप्रसङ्गात् क्षित्यादिभिरङ्कुरसमर्थं भावान्तरं जायत इति निश्चिनुमः । **अन्त्यातिशयवत्**–इति । यथा स्थिरवादिनोऽपि जनकावस्थायामजनकावस्थातोऽतिशय कार्यदर्शनादवसीयते । यद्वा अन्त्योऽतिशयः सामग्री, सा यथा कार्यैकसमधिगम्या तथातिशयोऽपीति । यद्वा, अन्त्यातिशयो घटादेरन्त्यो विजातीयः कपालादिसंतानः, स यथा प्रत्यक्षेणावसीयते तथा प्रतिक्षणभङ्गोऽपि विलक्षणकार्यदर्शनान्निश्चीयत इति । अस्तु क्षणभङ्गः, प्रकृते किमायातमित्यत्राह—**तथा च**–इति । भूतानामुपादानोपादेयभावनियमेन प्रतिसंधानभोगनियमोपपत्तिरिति । सिद्धान्त्याह **क्षणिकत्व** इति । **अन्यत्र**–इति । अन्यत्र=आत्मतत्त्वविवेके । न तावता श्रोतॄणां सन्तोष इत्यत्रापि किञ्चिदाह–**अपि**–इति।

यद्यङ्कुरानारम्भकाद् बीजात्तदारम्भकस्य वैजात्यं कुर्वद्रूपं नाङ्गीक्रियेत तर्हि क्षणिकत्वं न सिध्येत् । एकजातीयत्वे हि तयोः सहकारिलाभालाभाभ्यामेवारम्भानारम्भनियमो वक्तव्यः, तस्य चैकस्यामेव व्यक्तौ सुवचत्वान्न क्षणिकत्वसिद्धिरिति भावः । अस्तु तर्हि वैजात्यमित्यत्राह—**न तस्मिन्**–इति । तस्मिन्नप्रामाणिक एव वैजात्येऽङ्गीक्रियमाणे कारणवत् कार्येऽपि वैजात्यसंभाव-

प्रकाशः ।

स्वभावादित्यर्थः । **किं** त्विति । सादृश्यवशात् तथाभूतोऽपि न तथात्वेनापाततो निश्चीयत इत्यर्थः । तत् किमनिश्चय एव, नेत्याह । **कार्येति** । स्थैर्ये सहकार्यपेक्षानुपपत्तेः पूर्वापरकालयोः कार्यदर्शनादर्शनाभ्यामतिशयोऽवसीयत इत्यर्थः । **अन्त्यातिशयः**=सामग्री । सामग्रीवत् कार्यैकसमधिगम्यत्वान्नानुपलम्भमात्रेण निराक्रियत इति भावः । प्रकृतेन सङ्गमयति । **तथा चेति** ।

**न वैजात्यमिति** । असमर्थव्यावृत्तकुर्वद्रूपत्वं विना, न **तत्**=क्षणिकत्वम् । अन्यथा सम-

प्रकाशिका ।

स्येति ध्येयम् । **व्यतिरिच्यत** इति मूलस्य विविच्य न गृह्यत इति व्याख्या विवेकावधिमाह । **असमर्थेति** । एवं च विविच्य न गृह्यत इत्यत्र न चेत्यस्य सम्बन्धे विविच्य गृह्यते एवेत्यर्थपर्यवसाने पूर्वोक्तापादने इष्टापत्तिरिति भावः । **आपातत** इति । निश्चायकाभावादिति भावः । सादृश्यस्यानिश्चयहेतोरग्रेऽपि सत्त्वात् कथं निश्चय इत्याशयेनाह । **तत्किमिति** ।

मकरन्दः ।

केति । यद्यपि क्रमयौगपद्ययोः प्रत्येकं मिलिततया वा नार्थक्रियाव्यापकत्वं, तथापि तदन्यतरत्वेन व्यापकत्वम् । अर्थक्रियाकारिणि क्रमकारित्वयुगपत्कारित्वान्यतरनियमादिति बोध्यम् । अतिरिच्यत इत्यस्यैव विविच्य न गृह्यत इत्यर्थः । तत्र, न चेति सम्बन्धे विविच्य गृह्यत एवातिशय इत्यर्थपर्यवसाने सातिशयव्यक्त्युत्पादो गृह्येतेत्यत्रेष्टापत्तिरिति भावः । **आपातत** इति । निश्चायकाभावादिति भावः । सादृश्यस्याग्रेऽपि सत्त्वान्निश्चायकाभावस्तुल्य इत्याशयेनाह । **तत्किमिति** ।

**विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥१६॥**

न हि करणाकरणयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्रमित्यभ्युपगमे क्षणिकत्वसिद्धिः। तथैकव्यक्तावप्यविरोधात्, तद्वा तादृग्वेति न कश्चिद्विशेष इति न्यायात्। ततस्तावनादृत्य वैजात्यमप्रामाणिकमेवाभ्युपेयम्। एवञ्च कारणवत् कार्य्येऽपि किञ्चिद् वैजात्यं स्याद् यस्य कारणापेक्षा, न तु

---

बोधनी।

नया कार्यादिलिङ्गकमनुमानमेवोच्छिद्येत। नन्वनुमानोच्छेदोऽस्माकं चार्वाकाणामिष्ट एवेत्यत आह—**विना तेन**—इति। न ह्यनुमानेन विना क्षणिकत्वसिद्धिः प्रमाणान्तराभावात्। नन्वस्ति प्रत्यक्षमित्यत्राह—**नाध्यक्षम्**—इति। कुत इत्यत्राह—**निश्चयं विना**—इति। निश्चयो विकल्पस्तेन विना न निर्विकल्पमात्रं क्वचिदपि प्रमाणं, निश्चयश्चात्र नास्तीति।

व्याचष्टे—**न हि**—इति। **तन्त्रं**=प्रधानम् प्रयोजकमिति यावत्। कथं न सिद्धिर्यावता साजात्येऽपि करणाकरणलक्षणविरुद्धधर्मसंसर्गाद् व्यक्तिभेदः सिध्यतीत्यत्राह—**तथा**—इति। एकजातीयवदेकस्यामपि व्यक्तौ सहकारिवशेन करणाकरणयोरविरोधादिति। **तद्वा** इति। तत्=पूर्वकालवर्तिबीजं, **तादृक्**=तज्जातीयव्यक्त्यन्तरम्, यथा तज्जातीयस्यैव सतः करणाकरणे तथैकस्या एव व्यक्तेर्भविष्यत इत्यर्थः। उपसंहरति—**ततः** इति। **तौ**=प्रामाणिकौ सहकारिलाभालाभौ, **अप्रामाणिकमिति** वक्ष्यमाणोपयोगितयोक्तम्, अनभ्युपगन्तव्यं क्षणिकत्वसिद्धय इति शेषः। अस्तु वैजात्यमिष्टमेव हि नस्तदित्यत्र **न तस्मिन्ननुमा** भवेदित्येतदुपपादयितुमुपक्रमते—**एवम्**—इति। यदि कारणेऽनुपलभ्यमानस्यैव वैजात्यस्य

प्रकाशः।

र्थस्यैव सतः कार्यजननाजननयोः सहकारिसाहित्यतदभावाभ्यामेवोपपत्तेः। तस्मिन्=वैजात्ये च सति क्वाप्यनुमितिर्न स्यात्, उपस्थितं कारणगतरूपं परिहृत्यानुपलभ्यमानरूपान्तरेण कारणत्वे कार्येऽप्युपस्थितरूपमपहायानुपलभ्यमानरूपान्तरेण कार्यत्वशङ्कया कार्यकारणभावाग्रहात्। तेन चानुमानेन विना न तत्सिद्धिः, क्षणिकत्वसिद्धिरित्यर्थः। न च प्रत्यक्षादेव क्षणिकत्वसिद्धिरित्याह। **नाध्यक्षमिति**। **अध्यक्षं**=निर्विकल्पकम्। **निश्चयः**=सविकल्पकम्। क्षणिकत्वनिश्चयाभावान्न तदुन्नेयं क्षणिकत्वनिर्विकल्पकमित्यर्थः। **तज्जातीयस्येति**। पूर्वोविशिष्टतज्जातीयस्यैवेत्यर्थः। **तथैकेति**। यैव पूर्वव्यक्तिः सहकारिवैधुर्यात् कार्यं मा कार्षीत् सैव तत्प्राप्तौ करोतीत्यत्र विरोधाभावादित्यर्थः। ननु दृष्टतज्जातीयाऽपि व्यक्तिस्तदन्यैवेत्यत आह। **तद्वेति**। तत्=यदेव पूर्वकालवृत्ति तदेवोत्तरकालवृत्ति। तादृग्वैजात्यशून्यमन्यदित्यर्थः। ननु दृष्टजातीयस्य कारणं विना

---

**करणाकरणयोः**=कार्यजनकत्वाजनकत्वप्रयुक्ततयाऽभ्युपगतयोः कार्योत्पादनानुत्पादनयोः। **तज्जातीयस्य**=बीजत्वेन जनककुर्वद्रूपजातीयस्य, अनेन स्वरूपजनकत्वं प्रदर्शितम्। अर्थक्रियाकारिणः अर्थक्रियाकारितास्वरूपयोग्यतात्मिका कुसूलस्थस्य कुर्वद्रूपस्य चाविशिष्टैव तथापि न काचित् क्षतिः, स्वरूपयोग्यत्वेऽपि कार्यप्रसङ्गस्य सहकारिविरहादुपपत्तेरित्याशयः। **क्षणिकत्वसिद्धिरिति**। कुसूलावस्थितिमारभ्याङ्कुराव्यवहितपूर्वपर्यन्तमेकबीजव्यक्त्यभ्युपगमे कार्यप्रसङ्गविपर्ययौ स्यातामिति क्षणिकत्वं सिध्यति तौ चेत् सहकारिलाभालाभाभ्यामुपपन्नौ कुतः क्षणिकत्वमित्याशयः। **तथेति**। यथैकजातीयस्य स्वरूपयोग्यत्वेऽपि कार्यजननाजननयोरविरोधः सहकारिलाभालाभाभ्याम् तथेत्यर्थः। **एकव्यक्तौ**=कुसूलस्थाभिन्नायामपि कुर्वद्रूपव्यक्तौ। **अविरोधात्**=कार्योत्पादकत्वानुत्पादकत्वयोरविरोधात्। **कश्चिद्विशेष इति**। भेदेऽप्येकजातीयत्वोपगमे

दृष्टजातीयस्येतिशङ्कया न तदुत्पत्तिसिद्धिः। दृष्टजातीयमाकस्मिकं स्यादिति चेन्न। तत्राऽपि किञ्चिदन्यदेव प्रयोजकं भविष्यतीत्यविरोधात्। न कार्य्यस्य विशेषस्तत्प्रयुक्ततयोपलभ्यते, नापि कार्य्यसामान्यस्यान्यत् प्रयोजकं दृश्यत इति चेत्। तत् किं कारणस्य विशेषः स्वगतस्तत्प्रयोजकतयोपलब्धः? कारणसा-

बोधनी।

कार्यप्रयोजकत्वेनाभ्युपगमः, तर्हि तद्वदेव कार्येऽप्यनुपलभ्यमान एव कश्चिज्जातिभेदः स्यात् यस्य वह्न्यादिकारणापेक्षा, न तु दृष्टधूमादिजातीयस्य वह्न्याद्यपेक्षेति शङ्कावकाशात् न प्रतिबन्धनिबन्धनं तदुत्पत्तिः सिध्यति, तत्=कार्यलिङ्गकानुमानेनेति भावः। दृष्ट-इति। यदि धूमाद्यवान्तरजातिभेदे वह्न्यादेरुपयोगः, तर्हि दृश्यमानं धूमादिजातीयमहेतुकं स्यात्, ततः कार्येऽवान्तरजातिशङ्कानवकाशेति। न इति। वह्न्यादेर्धूमावान्तरजातिभेदोपयोगेऽपि न धूमादिजातीयस्याकस्मिकत्वविरोधः, तत्रापि वह्न्यादेरन्यदेव किञ्चिदनुपलभ्यमानं प्रयोजकं भविष्यतीत्यप्रामाणिकमेवाभ्युपगच्छतः किं नाम दुर्लभमिति भावः। न कार्यस्य विशेषः-इति। धूमादिगतविशेषो न वह्न्यादिप्रयुक्ततयोपलभ्यते, नापि कार्यमात्रस्य धूमादिजातीयस्यान्यत् प्रयोजकं दृश्यते, तेनानुपलभ्यमानयोः प्रयोज्यप्रयोजकत्वकल्पनमेव विरोध इति। तत्किम्-इति। वह्न्यादिकारणगतो विशेषो धूमादिसामान्यप्रयोजको नोपलभ्यते। वह्न्यादिविशेषस्य धूमादिप्रयोजकत्वे वह्न्यादिसामान्यस्यान्यत्प्रयोजनं वक्तव्यमर्थक्रियाविरहिणः सत्त्वानुपपत्तेः। तच्च नोपलभ्यते, तेन समानस्तादृशो विरोध इत्यनुपलभ्यमानोऽपि कारणगतो विशेषः शङ्क्ष्यते

प्रकाशः।

भवत आकस्मिकत्वं स्यात्। तथा च कादाचित्कत्वव्याघात इत्यत आह। दृष्टेति। कारणं विना कार्यस्योक्तदोषो, न तु दृष्टजातीयं विनेति तत्र कारणान्तरं स्यादित्याह। तत्रापीति। न कार्यस्येति। कारणविशेषप्रयोज्यं कार्यस्य वैजात्यं, दृष्टजातीयस्य च प्रयोजकान्तरं योग्यानुपलब्धिबाधितमित्यर्थः। तत्किमिति। कुर्वद्रूपत्वमपि न कार्यं प्रति कारणतावच्छेदकं दृष्टम्, न चोपस्थितकारणतावच्छेदकरूपस्य प्रयोज्यान्तरमिति तदपि तथेत्यर्थः। न चेष्टापत्तिः। तेन रूपेणार्थक्रियारहितत्वात् त्वन्मते प्रामाणिकत्वं न स्यादित्यर्थः। अथ निश्चयेन

प्रकाशिका।

तदपि तथेति। कुर्वद्रूपत्वमपि योग्यानुपलब्धिबाधितमित्यर्थः। ननु यदि बीजत्वावच्छिन्नस्य न प्रयोज्यान्तरं दृश्यते तदा मास्तु, अस्माकमिष्टमेव तदित्याशङ्कयाह। न चेष्टापत्तिरिति। कश्चित्तु अस्तु बीजत्वमेवाङ्कुरप्रयोजकमित्याशङ्कायां न चेष्टापत्तिरिति फक्किका तथा सति तेन रूपेण कुर्वत्त्वेन प्रामाणिकत्वं न स्यादित्युत्तरप्रतीकार्थ इत्याह। विरोधोऽसामानाधिकरण्यम्। न च जातिसङ्कर-

मकरन्दः।

तदपि तथेति। कुर्वद्रूपत्वमपि योग्यानुपलब्धिबाधितमित्यर्थः। न चेष्टापत्तिरिति। उपस्थितबीजत्वादेवाङ्कुरादिप्रयोजकमस्त्वित्यर्थः। तेनेति। बीजत्वादिनेत्यर्थः। तथा च तादृ-

प्रवृत्त्यौपयिकस्वरूपयोग्यतात्मककारणतायां कार्यप्रसङ्गवारणे यथा न विशेषस्तथाऽभेदेऽपि न विशेष इत्यर्थः। न तदुत्पत्तिसिद्धिरिति। कारणत्वेन निर्णीतदृष्टजातीयकार्योत्पत्तिनिर्णय इत्यर्थः। तथा च धूमसामान्यलिङ्गेन वह्न्यनुमितेरपलापः। विशेषस्त्वनिर्णीत एवेति न लिङ्गतावच्छेदकत्वयोग्य इति भावः। तत्प्रयुक्ततयेति। दृष्टजातीयकार्यप्रयोजकतया गृहीतस्य कल्पितवैजात्यवतः सकारणस्य प्रयुक्ततयेत्यर्थः। अन्यदिति। कल्पितविशेषवतः कारणादन्यदित्यर्थः।

मान्यस्य वान्यत् प्रयोज्यान्तरं दृश्यते ? यतो विवक्षितसिद्धिः स्यात् । शङ्का तूभयत्रापि सुलभेति । कार्यजन्माजन्मभ्यामुन्नीयत इति चेत् । न । सहकारिलाभालाभाभ्यामेवोपपत्तेः । उन्नीयतां वा, कार्य्येषु शङ्किष्यते, निषेधकाभावात् । न हि धूमस्य विशेषं दहनप्रयोज्यं प्रतिषेद्धुं स्वभावानुपलब्धिः प्रभवति, कार्यैकनिश्चेयस्य तदनुपलब्धेरेवानिश्चयोपपत्तेः । कार्य्यस्य चातीन्द्रियस्यापि सम्भवात् । अत एवानुपलब्ध्यन्तरमपि निरवकाशमिति ।

---

बोधनी ।

निषेधकाभावादित्याशङ्क्य सा तर्हि कार्यगतविशेषे सुलभेत्याह—**शङ्का तु**–इति । यद्वा, कार्यगतविशेषे शङ्कामात्रमेव न तु निश्चयोऽनुपलम्भादित्याशङ्क्य कारणगतेऽपि शङ्कामात्रमेवेत्याह–**शङ्का तु**–इति । **कार्य**—इति । ननु मा भूत्कारणगतो विशेषः प्रत्यक्षः, तथापि न तत्र शङ्कामात्रं, किं तर्हि कुसूलस्थालवालस्थयोः कार्यारम्भानारम्भाभ्यामनुमीयतेऽस्ति वैजात्यमिति । **न**–इति । कार्यजन्माजन्मनोरन्यथासिद्धत्वान्न ताभ्यां वैजात्यं सिद्ध्यतीत्यभ्युपेत्याह–**उन्नीयताम्**–इति । निश्चीयतां कारणगतो विशेषः, कार्यगतविशेषस्त्व निश्चयाभावेऽपि शङ्क्योत्पद्यते, साधकवत् बाधकस्याप्यभावाद् । अनुपलब्धस्यैव कारणगतस्य कल्पनादर्शनाच्च शङ्कोपपत्तेः शङ्कामात्रेणापि प्रतिबन्धमूलं तदुत्पत्तिर्न सिध्यतीति भावः । कार्यगतविशेषं स्वरूपानुपलब्धिरेव निषेत्स्यतीत्यत आह–**न हि** इति । किमिति न प्रभवति तत्राह—**कार्य**–इति । शङ्क्यमानस्य कार्यगतविशेषस्यातीन्द्रियत्वेन कार्यलिङ्गेन निश्चेतव्यत्वात् कार्यानुपलब्ध्यैवानिश्चयोपपत्तेरिति । अस्तु तर्हि कार्यानुपलब्ध्या तत्प्रतिषेधोऽत आह—**कार्यस्य** इति । कार्यगतविशेषवत्तत्कार्यमपि किञ्चिदतीन्द्रियमस्तीति संभावनायां कार्यानुपलब्धिः, तं प्रतिषेधति–**अत** इति । **अत एव**, यत एव स्वभावानुपलब्धिर्न प्रभवति अत एवेत्यर्थः । सन्ति हि षोडशानुपलब्धयः—स्वभावानुपलब्धिः स्वभावविरुद्धकार्यानुपलब्धिः स्वभावविरुद्धव्याप्तोपलब्धिरिति चतस्रः, कार्यानुपलब्धितद्विरुद्धकार्यविरुद्धव्याप्तोपलब्धयश्चेति चतस्रः, तथा व्यापकानुपलब्धिस्तद्विरुद्धविरुद्ध-

प्रकाशः ।

नोच्यते, अपि तु शङ्क्यते तत्राह । **शङ्का त्विति** । ननु न कारणवैजात्यं शङ्क्यते, येन तत्कार्येऽपि वैजात्यशङ्का स्यात् । किं त्वनुमानसिद्धम् । तथा हि यदि यः प्रागजनकः स एवोत्तरकालमनुवर्तते तदा कथं ततः कार्यजन्म । जनकस्य वा तत्पूर्वं सत्त्वे कथं पूर्वमजननमिति कार्यजननाजननाभ्यां पूर्वोत्तरयोर्वैजात्यमनुमीयत इति शङ्कते । **कार्येति** । जननाजननयोरन्यथाऽप्युपपत्तेर्नानुपलभ्यमानवैजात्यानुमानमिति परिहरति । **सहकारीति** । **निषेधकेति** । साधकस्येव बाधकस्याप्यभावादित्यर्थः । नन्वनुपलब्धिरेव बाधिकेत्याह । **न हीति** । **स्वभावानुपलब्धिः**=योग्यानुपलब्धिः । वैजात्यस्याऽयोग्यत्वादित्यर्थः । **कार्यैकेति** । सतोऽपि वैजात्यस्य व्यञ्जकतत्कार्यानुपलम्भो वाऽनुपलब्ध्युपपत्तेः । कार्यानुपलब्ध्या हि कारणं न निश्चीयते, न तु तदभावो निश्चीयते व्यभिचारादिति भावः । ननु धूमकार्यदर्शनेऽपि न धूमवैजात्यं दृश्यत इत्यत आह । **कार्यस्य चेति** । धूमकार्यमैन्द्रियकमेवेत्यत्र नियामकाभावादतीन्द्रियमपि तदस्तीति तत्प्रयोजकधर्मवैजात्यशङ्का स्यादित्यर्थः । **अत एवेति** । व्यापकानुपलब्धिरपि न तन्निषेधिकेत्यर्थः । उक्ताशङ्कया तदुत्पत्त्याद्यनिश्चयेन व्यापकत्वानिश्चयादिति भावः ।

मकरन्दः

दोषापत्तौ तवापसिद्धान्त इति भावः । यद्वा कुर्वद्रूपत्वेनेत्यर्थः । तथा चानेन रूपेणार्थक्रियारहितत्वाभ्युपगमात् तव कुर्वद्रूपत्वं प्रामाणिकं न स्यादिति भावः । ननु शालित्वकुर्वद्रूपत्वयो-

**एवं, विधिरूपयोर्व्यावृत्तिरूपयोर्वा जात्योर्विरोधे सति न समावेशः, समाविष्टयोश्च परापरभावनियमः, अन्यूनानतिरिक्तवृत्तिजातिद्वयकल्पनायां प्रमाणा-**

---

बोधनी ।

कार्यविरुद्धव्याप्तोपलब्धयश्चेति चतस्रः । तत्र चानुपलब्धिकार्यप्रतिषेधसामर्थ्यादुपलब्धीनामप्यनुपलब्धिव्यवहारः । सर्वासामासां न कार्यगतातीन्द्रियविशेषनिषेधे सामर्थ्यम् । अतीन्द्रियेण सह विरोधित्वकार्यकारणत्वव्याप्यव्यापकत्वानामशक्यनिश्चयत्वादित्यर्थः । एवं वैजात्याङ्गीकारे कार्यलिङ्गकमनुमानं न सिध्यतीत्युक्तम् ।

इदानीमनुपलब्धिलिङ्गकं स्वभावहेतुकं च यथा न सिध्यति तथा दर्शयितुं भूमिकामारचयन् वैजात्याभ्युपगमे बाधकान्तरमाह—**एवम्**-इति । यथातथा वा भवतु जातिस्वरूपं, सर्वथा तु तस्य कुर्वत्त्वजातिभेदस्य बीजत्वेन सहैकस्यां व्यक्तौ न समावेशः संभवति । कुर्वत्त्वाकुर्वत्त्वयोर्विरोधाद् यदि समावेशः स्यात्ततस्तस्य शालित्वं प्रति परत्वं वा स्याद् वृक्षत्ववत् , अपरत्वं वा स्याच्छिंशपात्ववदिति । न चोभयमपि संभवति, परत्वे शालिजातीयं सर्वमपि कार्यं कुर्यात् , अपरत्वे त्वशालिजातीयमङ्कुरं न कुर्यादिति भावः । अत्र परापरभूतयोर्जात्योरसमावेश एव साध्यः, समाविष्टयोस्तु परापरभावः प्रसङ्गादुक्त इति । उत्तरस्मिन्साध्ये हेतुमाह-**अन्यून**-इति । अनुवृत्ताकारावभासिनी हि प्रतीतिर्जातिसद्भावे प्रमाणम् । तस्याश्चैकयैव जात्योपपत्तौ न तावत्स्वेव पिण्डेषु जात्यन्तरे प्रमाणमस्तीति । व्यावृत्तिरूपयोरपि जात्योः समावेशे परापरभाव

प्रकाशः ।

वैजात्ये जातिसङ्करं बाधकान्तरमाह—

**एवमिति** । विधिरूपयोरिति स्वमते, व्यावृत्तिरूपयोरिति परमते । **विरोधः**=परस्पराभावसहवृत्तित्वम् । कुर्वद्रूपत्वस्य शालित्वव्याप्यत्वे यवबीजे तदभावः । व्यापकत्वे कुशूलस्थशालौ तदभावः स्यादिति परस्परव्यभिचारे तयोरेकत्र समावेशो न स्यादित्यर्थः । **अन्यूनेति** । पर्याय-

प्रकाशिका ।

स्थले तच्छङ्कितमत आह । **विरोधः परस्परेति** । **कुर्वद्रूपत्वस्येति** । अङ्कुरकुर्वद्रूपत्वस्येत्यर्थः । **एकत्र समावेश इति** । क्षेत्रपतितशालिबीज इत्यर्थः । ननु समाविष्टयोः परापरभावनियम इति मूलमयुक्तं घटत्वकलशत्वयोर्व्यभिचारात् परापरभावस्य न्यूनाधिकवृत्तित्वरूपत्वादित्याशङ्कायां मानाभावेन तादृशजात्यभावप्रतिपादकं मूलमन्यूनेत्यादि तत्र बाधकमपि हेतुत्वेन समुच्चि

मकरन्दः ।

विरोध एव नास्ति, सामानाधिकरण्यादित्यत आह । **विरोध इति** । **पर्यायेति** । सर्वत्र प्रवृत्तिनिमित्तभेदसम्भवेनैकप्रवृत्तिनिमित्तकत्वाभावादिति भावः । अनुगतबुद्धिबलात्तेषु नियामकं सिद्धघलाघवादेकमेव सिद्ध्यतीति नान्यूनानतिरिक्तव्यक्तिकजातिद्वयस्वीकार इत्यपि द्रष्टव्यम् । **विरोध** इति । यद्यप्यत्र विरोधो न सामानाधिकरण्याभावो, नापि परस्परात्यन्ताभाववद्वृत्तित्वं, तयोर्व्याप्यव्यापकभावाभ्युपगमात् । तथाप्यन्यूनानतिरिक्तव्यक्तिव्यतिरिक्तत्वाभाव एव स

---

**जात्योरिति** । अनुगतप्रत्ययानुरोधेनाखण्डतया कल्पितयोरित्यर्थः । तेन तेषां जातिपरिभाषाऽभावेऽपि न क्षतिः । उपाधिश्च नाखण्डोऽनुगतः सप्तपदार्थवादिनामपि इष्ट ,इत्याशयः । **विरोधे**=परस्परपरिहारेण वृत्तौ सत्याम् ।

भावात् । व्यावर्त्यभेदाभावेन विरोधानवकाशे भेदानुपपत्तेः ।

बोधनी ।

एवेत्याह—व्यावर्त्य–इति । अपोह्यभेदेनापोहानां विरोधस्ततश्च तेषां भेद इत्यपोहवादः । तत्र

प्रकाशः ।

शब्दोच्छेदप्रसङ्गाद् बाधकाच्चेति भावः । प्रमाणाभावमेवाह । **व्यावर्त्येति** । यथा वृक्षत्वशिंशपात्वयोर्व्यावर्त्यभेदाद्विरोधः, एकस्य ह्यवृक्षमात्रं व्यावर्त्यम्, अन्यस्य वृक्षविशेषोऽपि पनसादिः । न तथा बुद्धित्वज्ञानत्वयोर्व्यावर्त्यभेद इत्यर्थः ।

ननु समाविष्टयोर्जात्योर्न परापरभावनियमः । घटत्वसुवर्णत्वयोर्व्यभिचारात् । न चोपष्टम्भकपार्थिवभागवृत्त्यैव घटत्वं, न सुवर्णवृत्तीति वाच्यम् । एवमपि काष्ठपाषाणघटादावप्रतीकारात् । नाऽपि मार्दे एव घटे घटत्वम्, अन्यत्र तु तथाविधसंस्थानवत्त्वगुणयोगाद् गौणो घटव्यवहारः । मुख्यत्वस्य विनियन्तुमशक्यत्वात् । अथ संस्थानवृत्त्यैव घटत्वं, न द्रव्यवृत्तीति न तयोः समावेशः, संस्थानं हि अवयववृत्तिः संयोग एव । युक्तं चैतत् । कथमन्यथा तस्मिन्नेव सुवर्णे तत्संस्थानसत्त्वासत्त्वाभ्यां घटतदभावव्यवहार इति । तन्न । तत्राप्यन्यतरकर्मजत्वादिना सङ्करप्रसङ्गात् । गुणगतजातौ न साङ्कर्यदोष इति मतन्निर्बीजमेव ।

अत्राहुः । सुवर्णत्वादिव्याप्यं नानैव घटत्वम् । न चैवं सुवर्णादिघटेष्वनुगतव्यवहारो न स्याद्, घटत्वस्य प्रत्येकविश्रान्तत्वेन व्यक्तिस्थानीयत्वादिति वाच्यम् । भिन्नजातीयघटेषु तादृशसंस्थानवत्त्वेनोपाधिना तथा व्यवहारात् । तर्हि संस्थानवृत्त्यैवान्यतरकर्मजत्वादिव्याप्यं नानैव

प्रकाशिका ।

नोति । **पर्यायेति । व्यावर्त्यभेदाद् विरोध इति** । व्यापकजातिसंगृहीतस्य कस्यचित् प्रतिक्षेप एव व्याप्यजात्या तयोर्विरोध इति ध्येयम् । **मुख्यत्वस्येति** । मार्दघटमध्यस्थिते सौवर्णघटमानयेति व्यवहारवत् सौवर्णघटमध्यस्थिते मार्दं घटमानयेति विशेषादिति भावः । **तत्राप्यन्यतरेति** । संयोगकर्म्मजन्यतावच्छेदकजात्या सङ्कर इति भावः । गवाश्वाकारकरम्बितवस्तूपलम्भापत्तिर्जातिसङ्करे बाधिका न च रूपरसयोः साकारत्वं अवयवसंस्थानस्याकारत्वादित्याशयेन गुणगतजातौ न साङ्कर्यदोष इति प्रवादस्तं निषेधति । **इति मतं निर्बीजमेवेति** । रूपरसात्मकवस्तूपलम्भापत्तेर्गुणगतजातावपि बाधकत्वादिति भावः । **तादृशसंस्थानवत्त्वेनेति** । संस्थानञ्च घटसमानाधिकरणमेकजातीयमेव, अन्यतरकर्म्मजत्वादिकन्तु तद्व्याप्यं नाना । तत्रानुगतव्यवहारस्यान्यतरकर्म्मजत्वादिना संभवात् । न च संस्थानवृत्त्येकजातौ मानाभावः घटोऽयं घटोऽयमिति नानाजातीयघटीयपरम्परासम्बन्धेनानुगतव्यवहारोपपादकत्वात् । न च तथा सति द्रव्यवृत्तिनानाजातेः सुवर्णत्वादिव्याप्यायाः स्वीकारे किं प्रमाणमिति वाच्यम् । महान्नीलो घट इति प्रयोगस्य साक्षात्सम्बन्धधर्म्मेणोपपत्तौ परम्परासम्बन्धनिमित्तकत्वाकल्पनात् । अत एव च घटपदस्य नानार्थत्वमप्यनन्यगतिकत्वात् । अन्यथाक्षादिपदेऽप्यन्यान्यत्वं निमित्तमादायैकार्थत्वं किं न कल्प्यते तादृशी न प्रतीतिरिति तु प्रकृतेऽपि तुल्यम् । **तर्हीति** । यद्यपि संस्थानवृत्त्यैकैव जातिरित्युक्तम् । तथापि जातित्रयस्वीकारेऽपि सुवर्णत्वादि-

मकरन्दः ।

इह विवक्षित इति बोध्यम् । **न चोपष्टम्भकेति** । समाविष्टत्वमेव नानयोरिति भावः । ननु संस्थानवृत्तित्वेऽपि कथं न द्रव्यवृत्तित्वमत आह । **संस्थानं हीति** । संस्थानवृत्तित्वे युक्तिमाह । **युक्तञ्चैतदिति । गुणगतजाताविति** । तद्दोषताप्रयोजकस्य बीजस्य तुल्यत्वादिति भावः । **तादृशेति** । यद्यप्यवयवसंयोगात्मकसंस्थानं नावयविनि, तथापि परम्परासम्बन्धेन तद्वत्त्वं बोध्यम् । अत एव तदेकार्थसमवायिद्रव्यत्वं तत्त्वमिति वक्ष्यतीति भावः । एवञ्च घटपदप्र-

**परस्परपरिहारवत्योश्च समावेशे गोत्वाश्वत्वयोरपि तथाभावप्रसङ्गात् ।**

बोधनी ।

तावत्स्वेव पिण्डेषु अपोह्यद्वयानाधारेषु सत्सु कुतोऽपोह्यभेदः कुतस्तरां तन्निबन्धनो विरोधः कुतस्तमां वापोह्यभेद इति । पूर्वसाध्यसिद्ध्यर्थमनिष्टप्रसङ्गमाह—**परस्पर**-इति । **तथा भावः**=समावेशस्तस्माद्भिन्नयोरपरापरभूतयोः परस्पराभावाविनाभाविनोरेकत्र न समावेशः,

प्रकाशः ।

घटत्वमस्तु, तन्नानात्वस्यावश्यकल्प्यत्वात्, एतावता संस्थानविशेषान्वयव्यतिरेकानुविधानमपि घटव्यवहारस्य सङ्गच्छत इति चेत् । न । महान् नीलो घटश्चलतीति परिमाणरूपविशेषकर्मसामानाधिकरण्यप्रतीतेः । न च संस्थाने गुणे तत्संभवः । यद्वा, संस्थानविशेषैकार्थसमवायिद्रव्यत्वमुपाधिर्घटत्वम् ।

ननु क्वचिदसमावेशदर्शनादस्त्वनयोर्विरोध इत्याह । **परस्परेति** । विरोधे क्वचित्समावेशो

प्रकाशिका ।

व्याप्यनानाजातिस्वीकारापेक्षया लाघवमेवेति तथैवाशङ्कितम् । **घटत्वमस्त्विति** । साक्षात्सम्बन्धेनैव घट इति प्रतीतौ प्रकारोऽस्त्वित्यर्थः । **महान्नील इति** । तथा च महत्त्वादिसामानाधिकरण्यप्रतीत्यनुरोधेन द्रव्यवृत्त्येव घटत्वं नाना च, यदि च मार्द्सौवर्णघटसाधारणी प्रतीतिः, तदा संस्थानवृत्त्येकजात्येति प्रथमपक्षाशयः, लाघवादुपाधेरेकस्यैव प्रवृत्तिनिमित्तत्वं प्रतीतिप्रकारत्वञ्चेत्याशयेन द्वितीयकल्पमाह । **यद्वेति** । अत्रापि दण्डादिजन्यतावच्छेदकत्वेन सिद्धानां जातीनां नापलापः, विजातीयसंस्थानस्यानुगमकत्वं प्रतीतौ प्रयोगे चेति परं भेदः । तत्रापि कपालरूपादावतिप्रसक्तिरिति द्रव्यपदं तत्संस्थानोपरमानन्तरमुत्पन्ने तत्रैव द्रव्यान्तरेऽतिव्याप्तिवारणाय स्वसमानकालीनत्वं संस्थाने विशेषणं प्रवेशनीयमिति दिक् । नवीनास्तु मार्दे एव घटे घटत्वमन्यत्र तादृक्संस्थानवत्त्वेन गौणः प्रयोग इति न जातिसङ्करनानार्थतादिः । न च विनिगमकाभावः । घटमानयेति निरुपपदघटपदप्रयोगान्मार्दस्यैव प्रतीतेः । अत एव पिष्टकमय्यो गाव इत्यत्र लक्षणेति चिन्तामणिकृतः । न च प्रतीतिः सौवर्णादिसाधारणी कथमनुगतेति वाच्यम् । पिष्टकगवादावपि तुल्यत्वात् । यदि च साधारणी प्रतीतिरसिद्धैव सिद्धौ वा तत्तुल्यसंस्थानवत्त्वेनोपाधिनेति तदा प्रकृतेऽपि तुल्यं सौवर्णघटतान्वयसत्त्वे मार्दे घटमानयेति विशेषणोपादानं लाक्षणिकबोधशङ्कानिराशाय । पिष्टकादिगवादिसत्त्वे तद्व्यावर्तकविशेषणोपादानवत् । विनिगमकं च भूयः प्रयोगः पूर्वनिरुक्तं चेति वदन्ति । **अस्त्वनयोर्विरोध इति** ।

मकरन्दः ।

त्तिनिमित्तमपि स एवोपाधिरन्यथा नानाऽर्थतापत्तेरिति ध्येयम् । नन्वेवं घटत्वस्य जातित्व एव मानाभावः, कुतो नानात्वम् । अनुगतमत्यादिना हि तत् सिद्ध्यति, तद्विषयश्चोपाधिरेवेति कथं तत्सिद्धिः । न चैवं तारत्वादिकमपि नानाजातिर्न स्यादिति वाच्यम् । उत्कर्षादेर्जातित्वनियमे जातिसङ्करादनन्यगत्या नानात्वाभ्युपगमात् । तत्रानुगतोपाधेरपि तज्जातिघटितत्वाच्चेत्यनुशयात्तथैव सिद्धान्तमाह । **यद्वेति** । संस्थानविशेषवत्त्वं नावयविनीति तदेकार्थसमवायित्व-

**समावेशे** इति । नन्वस्तु पृथिवीत्वघटत्वादिकमिव शालित्वयवत्वादिव्याप्यं नानैव विजातीयाङ्कुरकुर्वद्रूपत्वं तत्र नोक्तदोषः परस्परपरिहारवत्त्वाभावात् । न चाङ्कुरकुर्वद्रूपत्वमेकं प्रामाणिकमङ्कुरसामान्यार्थं बीजसामान्ये प्रवृत्त्यदर्शनेन तत्र सामान्याभावादिति चेन्न । शालीनां वैजात्यस्य प्रत्यक्षसिद्धतया शाल्यङ्कुरार्थं शालिषु प्रवृत्तिदर्शनात् शाल्यङ्कुरकुर्वद्रूपत्वस्य शालिवैजात्येन साङ्कर्यदोषात् । न च शालिवैजात्यव्याप्यं नानैव विजातीयशाल्यङ्कुरकुर्वद्रूपत्वमङ्कुरवै-

**सामग्रीविरोधान्नैवमिति चेत् , कुत एतत् ? परस्परपरिहारेण**

बोधनी ।

समावेशे वा जगति विरोधोच्छेद एव स्यादिति भावः । शङ्कते—**सामग्री** इति । न हि गोत्वा-श्वत्वयोरसमावेशे परस्परपरिहारवत्त्वं प्रयोजकं किन्तु तदभिव्यञ्जकव्यक्त्युत्पादकसामग्रीविरोधः, तस्माद्विरुद्धयोः समावेशे नातिप्रसङ्ग इति भावः । गूढाभिसन्धिः सिद्धान्ती पृच्छति-**कुत एतत्** इति । गवाश्वयोर्विरुद्धसामग्रीकत्वं कुतः प्रमाणादवगम्यत इति । इतर आह—**परस्पर**-इति ।

प्रकाशः ।

न स्यादन्यथाऽतिप्रसङ्ग इत्यर्थः । **सामग्रीति** । गोत्वाश्वत्वव्यञ्जकव्यक्तिसामग्र्योर्विरोधात्त-योरसमावेश इत्यर्थः । **कुत इति** । **एतद्**=विरोधस्वरूपम् । सामग्र्योरेव विरोधः कुतो मानात् सिद्ध इत्यर्थः । परस्तत्र मानमाह । **परस्परेति** । अतीन्द्रियसामग्र्योरन्योन्यं सहानवस्थान-

प्रकाशिका ।

शालित्वकुर्वद्रूपत्वयोरित्यर्थः । लिङ्गासङ्गतिमपाकरोति । **विरोधस्वरूपमिति** ।

मकरन्दः ।

मुक्तम् । कपालरूपादावतिप्रसङ्गवारणाय द्रव्यत्वम् । ननु संस्थानविशेषस्याननुगतत्वात् कथं तद्घटितोपाध्यनुगमः ? । तद्विशेषत्वं हि घटावयवसंयोगत्वं वा, कपालद्वयसंयोगत्वं वा अन्यद्वा ? नाद्यः । घटत्वस्याननुगमात् । उक्तोपाधिनैव तदनुगमेऽन्योन्याश्रयात् । नापि द्वितीयः । घट-त्ववत् कपालत्वस्याप्यभावात् । तत्र तत्राप्येवमनुगमकोपाधिगवेषणे घटत्वधीस्तावद्विषयशत-भारमन्थरा स्यात् । नान्त्यः । तदनिरुक्तेः । न च जातिविशेष एव तथेति वाच्यम् । अन्य-तरकर्मजत्वादिना सङ्करप्रसङ्गात् । एवमाद्यकल्पेऽपि तादृक्संस्थानवत्त्वेन कथमनुगम इति । न चैकव्यक्तिसंस्थानसदृशसंस्थानवत्त्वेनानुगम इति वाच्यम् । कस्य चित् का चिद्व्यक्तिर्बुद्धिवि-षयः, कस्य चित् का चिदिति सकलानुगतबुद्धिविषयानुगतोपाध्यभावात् । अत एवाद्यकल्पे एक-जातीयघटसंस्थानसदृशसंस्थानवत्त्वेनानुगम इत्यपास्तम् । अत्राहुः । आद्यकल्प एव साधुः । अनन्यगत्या घटपदस्य नानार्थत्वम् , अक्षादिपदवत् । उक्तोपाधेरनुगतत्वेऽपि तत्प्रकारकप्रतीतेः शाब्द्याः सन्दिग्धत्वेन नानार्थत्वस्यैवोचितत्वात् । अन्यथा तावदन्यतमत्वाद्यनुगतोपाधिसत्त्वेऽ-क्षादिपदेऽपि तथात्वं न स्यात् । मार्द्दसौवर्णादिसाधारणी यद्यनुगतधीरस्ति, तदा तद्वदेव तत्पदवा-च्यतयाऽस्तु । तद्घटजातीयसदृशसंस्थानवत्त्वेनैव वा तस्यानेकस्याप्यनुगतत्वसम्भवात् , विनि-गमकाभावात् , तत्प्रकारकप्रतीत्यभावाच्च तन्न तत्प्रवृत्तिनिमित्तमिति नानार्थत्वमिति । केचित्तु मार्द्द एव घटे घटत्वमन्यत्र तथाविधसंस्थानगुणयोगाद् गौणस्तद्व्यवहारः । मुख्यत्वे विनिगमक-स्तु निरुपाधिप्रयोग एव, घटमानयेत्युक्ते मार्द्दव्यवहारात् , सुवर्णादिपदसमभिव्याहारात् सौव-र्णादिव्यवहारः । अन्यथा प्रयोगस्य शक्याशक्यसाधारणत्वेन मुख्यत्वनिर्णयः क्वापि न स्यात् । अत एव सौवर्णादिगवादौ गोपदममुख्यम् । तदिदमुक्तं, पिष्टकमय्यो गाव इत्यत्र गवाकृतिसदृ-शाकृतौ लक्षणेति । ननु शाब्दो व्यवहारो यथातथाऽस्तु । सौवर्णादिसाधारणी प्रत्यक्षानुगतधीः कथमिति चेन्न । सौवर्णादिगवादावपि तुल्यत्वात् । यदि च तत्र तत्साधारणी गवाकारानुगत-मतिरसिद्धा, सिद्धौ वा तत्तुल्यसंस्थानवत्त्वोपाधिविषया, तदा प्रकृतेऽपि तुल्यम् । अन्यथा घटं दद्यादित्यत्र वेदे सौवर्णमार्द्दादिविषयतयाऽनध्यवसायः स्यात् । सौवर्णादिसत्त्वे मार्द्दं घटमानयेति तद्व्यावर्त्तकविशेषणोपादानं लाक्षणिकान्वयबोधशङ्कानिरासाय । सौवर्णादिगवादिसत्त्वे गवि तद्व्या-वर्त्तकविशेषणोपादानवदिति वदन्ति । लिङ्गासङ्गतिमपाकरोति, **विरोधस्वरूपमिति** ।

---

जात्यं फलवैजात्यानुमेयं प्रत्यक्षञ्चेति वाच्यम् । शालिलाजादिकार्यवैजात्यस्य प्रामाणिकतया तत्कु-

सर्वदा व्यवस्थितेरिति चेद् , नेदमप्यध्यक्षम् । एकदेशसमावेशेन तु सामग्रीसमावेशोऽप्युन्नीयते ।

यावत्तत्कार्ययोः परस्परपरिहृतिस्वभावत्वादिति चेत् । तर्हि कम्पशिंशपयोः

बोधनी ।

सामग्र्योः परस्परपरिहारस्थितेर्विरोधोऽवगम्यत इति । नेदम्–इति । सामग्र्योः परस्परपरिहारेणावस्थानम् । इदं न प्रत्यक्षं सामग्र्योर्नित्यं कार्यकल्पत्वादिति, प्रत्युत सामग्रीसमावेश एवानुमातुं शक्यत इत्याह । एकदेश–इति । त्वन्मते गोत्वाश्वत्वयोरेकस्यां व्यक्तौ समावेशात् सामग्र्योरपि समावेशसंभवोऽनुमीयेत यावद् बाधकदर्शनं तावदिति । यद्वा, विरुद्धयोरसमावेशः सामग्रीविरोधादिति वदता विरुद्धयोरप्येकदेशसमावेशाङ्गीकाराद् विरुद्धयोरपि सामग्र्योः समावेशसम्भवोऽनुमीयत इत्यर्थः । शङ्कते–तत्कार्ययोः—इति । न वयं कार्ययोः परस्परपरिहारेण स्थितेः सामग्र्योः परस्परपरिहारस्थितिं कल्पयामः, येन कार्ययोः समावेशसंभवात् सामग्रीसमागमोऽपि कल्प्येत, किन्तु सामग्रीद्वयकार्ययोर्गवाश्वयोः परस्परपरिहृतस्वभावत्वादितरेतराभावत्वादिति यावत्, अस्ति ह्येकदेशसमाविष्टयोरपि परस्परपरिहृतस्वभावत्वमिति भावः । गूढाभिसन्धिमुद्घाटयन्नाह–तर्हि–इति । यदीतरेतराभाववत्त्वेन गवाश्वयोः सामग्रीविरोधादसमावेश इति कल्प्यते तर्हि कम्पशिंशपयोरप्यसमावेशः स्यात् । कम्पशब्दश्चात्र कम्परूपार्थक्रियाकारिणं शिंशपावान्तरजातिविशेषमाह, तेनायमर्थः कारणवैजात्यमभ्युपगच्छता ह्यक-

प्रकाशः ।

नियमो नासर्वज्ञाध्यक्षगम्य इत्याह । नेदमिति । प्रत्युत सामग्र्येकदेशकालदिगादिरूपसमावेशेन यदेव गोरश्वस्य च कारणं दृष्टं, तस्यैव पशुजनकत्वमिति स्वरूपेण गवाश्वसामग्र्योरप्येककार्यजनकत्वरूपः समावेश एव कल्प्यत इत्याह । एकदेशेति । कार्ययोरिति । कार्ययोर्विरोधात्तत्सामग्र्योर्विरोधः कल्प्यत इत्यर्थः । कम्पेति । सौगतैः कर्म्मण आश्रयभिन्नस्यास्वीकारात् कम्पत्वशिंशपात्वजात्योर्न समावेशः स्यात् । चलपिप्पले निश्चलशिंशपायाञ्च परस्परपरिहारेण

प्रकाशिका ।

गरश्वस्यो च कारणमिति । एवञ्च कालादिदृष्टान्तेन गोकारणत्वेन हेतुना गवासाधारणकारणस्याश्वजनकत्वमनुमेयमिति भावः । पशुजनकत्वम्=गोरूपपशुजनकत्वमित्यर्थः । यद्वा पशुजनकत्वम्=पशुजातीयजनकत्वम् । तथा चैकजातीयकार्यजनकत्वेनैककार्यजनकत्वमपि कल्प्यमिति भावः ।

मकरन्दः ।

प्रत्युतेति । उभयसामग्र्येकदेशसाधारणकारणकालदिगादेः समावेशेन परस्परसाहित्येनैककार्यजनकत्वेन दृष्टान्तेन तदुभयासाधारणकारणयोरप्येकपशुजनकत्वं स्यात् । तथा च तदुभयसामग्र्या अप्युक्तः समावेशः स्यात् । सामग्र्याः साधारणासाधारणकारणात्मकत्वादित्यर्थः । यद्वा, पशुजनकत्वं पशुजातीयजनकत्वम् । तथा च यथा एकजातीयजनकत्वं तथैककार्यजनकत्वमपि स्यादित्यर्थः । गोत्वाश्वत्वयोरिति । एवमुपाधिसाङ्कर्यमपि न दोषः स्यात् । परस्परात्यन्ताभावसमानाधिकरणोपाध्योः समावेशे विरुद्धोपाध्योरपि सङ्करशङ्कयाऽन्यतरेणान्यतराभावानुमानं न स्यादिति तुल्यत्वादिति प्रत्यक्षप्रकाशे विपञ्चितमनुसन्धेयम् ॥ १६ ॥

वेद्रूपत्वस्य शालिवैजात्येन साङ्कर्यस्य दुर्वारत्वादिति भावः । सर्वदेति । सामग्रीति शेषः । नेदमप्यध्यक्षमिति । व्यवहितदेशकालादेरग्राह्यत्वेनोक्तनियमस्याग्राह्यत्वादित्यर्थः । एकदेशसमावेशेनेति । सामग्र्येकदेशकालादृष्टेश्वरादिसमावेशेनेत्यर्थः । तथा चाश्वजनिका सामग्री गोजनिका अश्वकारणत्वात् कालादृष्टादिवदित्यनुमानात् समावेशसिद्धिः स्यादिति भावः । कार्ययोः=गवाश्वयोः । परस्परेति । गोः स्वभाव एवायं यदश्वत्वपरित्यागेनैव

परस्परपरिहारवत्योर्न समावेशः स्यात्। दृश्यते तावदिदमिति चेत्। गोत्वाश्वत्व योरपि न दृश्यते इति का प्रत्याशा ? तथा च गतमनुपलब्धिलिङ्गेनाऽपि। क्वचिदपि

बोधनी।

म्पकारिणः शिंशपात्वात् कम्पकारिणो वैजात्यमभ्युपगन्तव्यम्, ततश्च कम्पजनकाजनकयोः शिंशपातदवान्तरविशेषयोरसमावेशप्रसङ्गः। तयोरपि परस्पराभाववत्वादिति। यद्वा, कार्ययोः परस्परपरिहारेण स्थितेः सामग्रीविरोध इति तत्कार्ययोरित्यनेनाशङ्क्य यदि क्वचित्परस्परपरिहार-दर्शनेन सामग्रीविरोधमुन्नीय कार्ययोः सर्वदा सर्वत्रासमावेशः कल्प्येत तर्हि कम्पशिंशपयोः कदा-चिदसमावेशदर्शनात् सर्वदा सर्वत्रासमावेशप्रसङ्ग इति परिहारमाह–तर्हि–इति। दृश्यत इति। परस्परपरिहारेऽपि कम्पशिंशपयोः समावेशो दृश्यते न तु गोत्वाश्वत्वयोरिति नाप्रसङ्गाति-प्रसङ्गाविति। गोत्वाश्वत्वयोरिति। परस्परपरिहारवतोरपि क्वचित्समावेशदर्शनादत्रापि तत्सं-भावना दुष्परिहरेति। एवं तावज्जनकाजनकयोः समावेशाङ्गीकारे सर्वत्र गवाश्वादिविरुद्धसमा-वेशसंभावना निष्प्रत्यूहं प्रवर्तत इति स्थितम्। एवं भूमिकामारचय्य तत्र विवक्षितमनुमाना-भावं निवेशयति–तथा च–इति। कार्यलिङ्गवदनुपलब्धिलिङ्गकेनापि गतमिति। तथा चेति परामृष्टं हेतुं स्पष्टयति–क्वचिदपि–इति। एषा हि बौद्धपरिभाषा अनुपलब्धिरसद्व्यवहारयो-ग्यत्वं प्रतिबन्धबलेनानुमापयति। प्रतिबन्धश्चानुपलब्धेः सद्व्यवहारविरोधात्सिद्ध्यति यथाह न गोत्वमस्ति अश्वत्वादिति गोत्वविरुद्धाश्वत्वोपलब्धिरूपा गोत्वानुपलब्धिर्गोत्वाभावं गमयतीति। तत्र यदि विरुद्धयोरपि समावेशः स्यात् तदानुपलब्धेरपि सद्व्यवहारयोग्यत्वसमावेशसंभवेना-सद्व्यवहारयोग्यतया प्रतिबन्धासिद्धेर्गतमनुपलब्धिलिङ्गकमिति। अत एव स्वभावहेतुरपि निरस्त

प्रकाशः।

स्थितेरित्यर्थः। दर्शनादर्शनकृत एव समावेशासमावेश इत्याह। दृश्यत इति। यथा तयोर-न्योन्यपरीहारस्थितयोरपि क्वचित्समावेशस्तथा तादृशयोर्गोत्वाश्वत्वयोरपि समावेशः स्यादित्या-शङ्क्येतेत्याह। गोत्वेति। गोत्वाश्वत्वयोः समावेशे दूषणमाह। तथा चेति। गोत्वाश्व-त्वयोः समावेशेन विरोधासिद्धौ गोत्वस्याश्वत्वविरुद्धस्योपलब्ध्याऽश्वत्वाभावानुमानं न स्यात्। तथा च कार्यलिङ्गकमनुमानं गतमिति प्रागुक्तं, सम्प्रत्यनेनापि गतमित्यर्थः। क्वचिदपीति। अन्यत्र समावेशसंशयादिति भावः। एवं च वृक्षं विना शिंशपाऽनुपलब्धिरूपविपक्षबाधकनिश्चयें शिंशपाया वृक्षस्वभावत्वमपि न निश्चीयेत। शिंशपात्वमपि वृक्षत्वं व्यभिचरेदिति शङ्कायाः स-

---

जायते। अश्वस्याप्ययं स्वभावो यद्गोत्वपरिहारेणैव जायत इति स्वभावादेव यावत्कार्ययोर्धर्मपरि-हारनियम इति कुतो धर्मयोः समावेशसम्भव इति भावः। परिहारवत्योरिति। परिहारः परस्परधर्मयोः कम्पत्वशिंशपात्वयोर्बोध्यः। समावेशः स्यादिति। न च तयोरसमावेशः कम्प त्वस्य क्रियाधर्मत्वादिष्ट इति वाच्यम्। गुणक्रियाद्रव्याणां भेदस्य तैरनभ्युपगमेन कम्पात्मकशिं-शपालक्षणक्षणिकव्यक्तौ समावेशस्य सम्भवादिष्टापत्तेरयोगात्।

कम्पत्वशिंशपात्वयोः समावेशदर्शनात् परस्परपरिहारो न स्वभावः कम्पशिंशपयोः किं तु सामग्रीसमावेशासमावेशनिबन्धनः। गवाश्वयोस्तु स्वभाव एव समावेशदर्शनात् स्वभावत्यागो न कस्यापीष्ट इति शङ्कते। दृश्यत इति।

अनुपलब्धिलिङ्गेनापीति। अनुपलब्धिर्लिङ्गं ज्ञापकं यत्र तथा चानुपलब्धिमूलकेनेत्यर्थः। गोत्वेनाश्वत्वाभावानुमाने विरोधग्रहो मूलम् तत्रापि गोत्ववत्यश्वत्वानुपलब्धिर्मूलमिति भावः।

विरोधासिद्धेः । ततो विपक्षे बाधकाभावात् स्वभावहेतुरप्यपास्तः ।

नन्वस्ति तत् । तथा हि । वृक्षजनकपत्रकाण्डाद्यन्तर्भूता शिंशपासामग्री, सा, वृक्षमतिपत्य भवन्ती स्वकारणमेवातिपतेत् । एवं, शाखादिमन्मात्रानुबन्धी वृक्षव्यवहारः तद्विशेषानुबन्धी च शिंशपाव्यवहारः, स कथं तमतिपत्याऽऽत्मानमासादयेदिति चेत् । एवं तर्हि शिंशपासामग्र्यन्तर्भूता चलनसामग्री, ततस्तामतिपत्य चलनादिरूपता भवन्ती स्वकारणमेवातिपतेत् । तथा, शाखादिमद्विशेषानुबन्धी शिंशपाव्यवहारस्तद्विशेषानुबन्धी च चलनव्यवहारः । स कथं तमतिपत्यात्मानमासादयेदिति तुल्यम् ।

---

बोधनी ।

इत्याह—ततः-इति ।

तादात्म्येन प्रतिबद्धो हेतुः स्वभावः, यथा शिंशपात्वं वृक्षत्वस्य । क्वचिदपि विरोधासिद्धाववृक्षेऽपि शिंशपात्वसमावेशसम्भवात्तस्य प्रतिबन्धो नास्तीति । स्वभावहेतोर्विपक्षे बाधकमाशङ्कते—ननु-इति । वृक्षसामग्र्यन्तर्भूता शिंशपासामग्री तदविनाभूता तत्कारणिकेति यावत् । ततश्चावृक्षे वृक्षसामग्र्यभावेन स्वभावसामग्र्यभावाच्छिंशपा न भवति । तेनावृक्षलक्षणे विपक्षेऽपि शिंशपात्वस्य सामग्र्यभावो बाधकमित्यर्थः । शिंशपाव्यवहारेण वृक्षव्यवहारे साध्येऽप्येतदेव विपक्षे बाधकमित्याह—एवम्—इति । यदि च शिंशपाव्यवहारो वृक्षव्यवहारमतिपतेत् ततस्तयोः सामान्यविशेषभावो न स्यादिति भावः । यद्यप्यत्र क्वचिदपि विरोधासिद्धौ शिंशपातद्व्यवहारयोर्वृक्षतद्व्यवहारातिपातेऽपि न विरोध इत्यपि परिहारः संभवी तथापि परिहारवैभवादन्यथा परिहरति—एवं तर्हि-इति । एवंविधस्य विपक्षे बाधकस्य तुल्यत्वाच्छिंशपात्वादान्तरजातिविशेषेण कम्पकारित्वेन शिंशपात्वानुमानं तद्व्यवहारेण शिंशपाव्यवहारानुमानं प्रसज्येत । न च तच्छक्यं शिंशपात्वानन्तर्भूतस्य पलाशादेरपि कम्पजनकत्वादिति ।

प्रकाशः ।

स्वादित्याह । तत इति ।

विपक्षे बाधकान्तरमाह ।

नन्वस्तीति । तद्=विपक्षे बाधकम् । शिंशपात्वेन वृक्षत्वं साध्यं, वृक्षव्यवहारो वा ? उभयत्र कार्यकारणभावो विपक्षे बाधक इत्यर्थः । तथा च चलपत्रता शिंशपात्वं, तद्व्यवहारश्च शिंशपाव्यवहारं न व्यभिचरेदित्याह । एवं तर्हीति । न च शिंशपासामग्र्यन्तर्वर्त्तिन्येव चलपत्रतासामग्री, किन्तु तद्भिन्नैवेत्याह ।

---

ततो विपक्षे बाधकादिति । यथान्वयव्यतिरेकेण कार्यकारणभावः शिंशपावृक्षसामग्र्यो र्गृहीतः, स च सहकारिनियमानादरेण त्वया तिरस्कृतः कुर्वद्रूपत्वेनातीन्द्रियेण कार्यदर्शनैकसमधिगम्येन कारणता चावृक्षसामग्र्याः कदाचित् क्वचिच्छिंशपोत्पत्तिदर्शनसम्भावनयाऽवृक्षसामग्री साधारणतया सम्भाविता सत्यवृक्षमूलभूतामपि शिंशपां सम्भावयतीत्यत इति ततः शब्दार्थः । उक्तयुक्त्या विरुद्धजातीनां समावेशशङ्कायां कार्यकारणभावमात्रोच्छेदसम्भावनात इति चार्थः । स्वभावहेतुरिति । वृक्षत्वानुमापकत्वेन सम्प्रतिपन्नस्य वृक्षस्वभावशिंशपात्वस्य व्यभिचारशङ्कयाऽनुमापकत्वासम्भवात् ।

शिंशपेति । शिंशपादीत्यर्थः । चलनादिसामग्रीति । त्वन्मतप्रसिद्धेति शेषः । अतिपत्येति । शिंशपात्मकचलनस्थले प्लक्षसामग्र्या प्लक्षात्मकचलनस्थले शिंशपासामग्र्या अतिपतनेऽपि यथा चलनरूपताया आत्मलाभः, तथा वृक्षसामाग्र्यतिपातेऽपि शिंशपाया आत्मलाभः

नोदनाद्यागन्तुकनिबन्धनं चलनत्वं, न तु तद्विशेषमात्राधीनमिति चेत् । यदि नोदनादयः स्वभावभूतास्ततस्तद्विशेषा एव, अथास्वभावभूतास्ततः सहकारिण एव, ततस्तानासाद्य निर्विशेषैव शिंशपा चलनस्वभावानारभते इति, तथा च कुतः क्षणिकत्वसिद्धिः ? । स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाद्भवन्तीति चेत् । एवन्तर्हि वृक्षसामग्र्यामागन्तुकसहकार्यनुप्रवेशादेव शिंशपाऽपि जायते इति न कश्चिद्विशेषः । एवमेतत्, किन्तु शिंशपाजनकास्तरुसामग्रीमुपादायैव, चलनजनकास्तु न तामेव किन्तु मूर्त्तमात्रम्, तथा दर्शनादिति चेत् ।

---

बोधनी ।

**नोदनादि**-इति । यथा वृक्षसामग्रीविशेषः शिंशपासामग्री, नैवं शिंशपासामग्र्यन्तर्भूता कम्पसामग्री, किन्तु नोदनाभिघाताद्यागन्तुकहेतुकत्वाच्चलत्वस्य शिंशपात्वातिपातेऽपि न कश्चिद्विरोध इति । एतद्विकल्प्य निराचष्टे-**यदि**-इति । किं नोदनादयो भवन्मतानुरोधेन शिंशपास्वभावभूता भवेयुः, अस्मन्मतानुरोधेनास्वभावभूता वा ? पूर्वत्र शिंशपाविशेषा एव नोदनादयः, अशिंशपायाः शिंशपास्वभावत्वायोगात्; तत्र च पूर्वोक्तं शिंशपातुल्यत्वं तदवस्थमेव । उत्तरत्र कम्पजनने शिंशपायाः सहकारिणो नोदनादयः स्युरिति । सन्तु सहकारिणः का नो हानिरित्यत्राह-**ततः**-इति । **निर्विशेषैव** जातिभेदं व्यक्तिभेदं विनेति यावत् । **चलस्वभावान्**=चलनात्मकान् स्वभावान् धर्मान्, चलनात्मिकाः क्रिया इत्यर्थः । पुनः शङ्कते-**स्वभावभूताः**-इति । स्वभावभूताः= शिंशपायाः स्वभावभूता एव नोदनादयः ते चागन्तुकनोदकादिसहकारिसंनिधानाधीनजन्मानः, ततश्चागन्तुकसहकार्यनुप्रवेशाच्चलनजननस्वभावं शिंशपान्तरं जायत इति क्षणिकत्वं सिद्ध्यति, सिद्ध्यति चाशिंशपाया अपि चलद्रूपत्वं नोदनाद्यागन्तुकसहकारिणां पलाशादावपि संभवादिति । तर्हि शिंशपाया अपि वृक्षातिपातः स्यादित्याह-**एवं तर्हि**-इति । शङ्कते-**एवम्**-इति । एवमविशेषे सत्येतत्त्वदुक्तं स्यात्, किंतु विशेषोऽस्तीत्यर्थः । यथा वृक्षसामग्र्यामागन्तुकशिंशपाबीजत्वादिसहकार्यनुप्रवेशात् शिंशपोत्पत्तिरित्येतत्सत्यं, तथाप्ययं विशेषोऽस्तीति तमेव विशेषमाह—**शिंशपा**-इति । उपादायैव शिंशपा जनयन्तीति शेषः । न तामेव शिंशपासामग्रीमुपादायैव चलत्वं जनयन्ति किन्तु मूर्त्तमात्रमुपादाय, पलाशादीनामपि कम्पदर्शनात् । शिंशपासामग्री तरुसामग्रीं न व्यभिचरति, चलसामग्री तु शिंशपासामग्रीं व्यभिचरतीति विशेष

प्रकाशः ।

**नोदनेति** । नोदनादयः किं शिंशपाविशेषा एव, तद्विशेषजनका वा ? द्वयमपि नास्तीत्याह । **यदीति** । तथा च तेषां तथाभूतानामेव शिंशपाव्यभिचारे शिंशपा वृक्षं व्यभिचरेदिति भावः । ननु सदृशरूपेषु उपादानकारणेषु सत्सु सम्भूयमात्रकारिणो नोदनादय इत्यत आह । **अथेति** । भावस्य समर्थैकस्वभावत्वेऽपि कार्यकरणाकरणयोः सहकारिलाभालाभप्रयुक्तत्वात् प्रसङ्गतद्विपर्यययोरभावे प्रतिबन्धासिद्धेरनुमानात् कुतः क्षणिकत्वमित्याह । **तथा चेति** । शिंशपायाः स्वभावभूता अपि नोदनादय आगन्तुकसहकार्यनुप्रवेशाज्जायमानाः शिंशपां विना भविष्यन्तीत्याह । **स्वभावेति** । एवं वृक्षस्वभावभूता शिंशपाऽऽगन्तुकसहकारिवशेन जायमाना वृक्षं विनाऽपि स्यादिति गूढाशय आह । **एवं तर्हीति** । आशयमविद्वान् शङ्कते । **एवमिति** । **किन्त्विति** । आगन्तुका अपि तद्व्याप्या एवेत्यर्थः ।

प्रकाशिका ।

**नोदनादय इति** । संयोगस्यानङ्गीकारात् सकम्पशिंशपापूर्ववर्त्तिशिंशपा नोदनपदेनोच्यते ।

नैवम् । कम्पजनकाः शिंशपाजनकविशेषा अपि सन्तस्ताननतिपतन्ति, न तु वृक्षजनकविशेषाः शिंशपाजकास्तानिति नियामकाभावात् । शिंशपाजनकास्तद्विशेषा एव कम्पकारिणस्तु न तथा, किन्त्वागन्तवः सहकारिण इति चेत् । एवं तर्हि तानासाद्य सदृशरूपा अपि केचित् कम्पकारिणोऽनासादितसहकारिणस्तु न तथा, तथा च तद्वा तादृग्वेति न कश्चिद्विशेषः स्यात् । तस्माद्विरुद्धयो-

---

बोधनी ।

इत्यर्थः । निराकरोति—**नैवम्**-इति । विशेषा एव केचित्स्वपरसामान्यं व्यभिचरन्ति केचिन्नेति न नियमहेतुरस्तीति । दर्शनं त्वन्यत्र नोदनादीनामस्वभावभूतानामेव सहकारित्वादुपपन्नमिति भावः । एवं नोदनादीनां स्वभावत्वे दूषिते प्रामाणिकं सहकारिवादमगत्यावलम्बते—**शिंशपा**-इति । तद्विशेषा एव=वृक्षजनकविशेषा एव, तथा=शिंशपाया एव जनकविशेषाः, ततश्च सिद्धः कम्पशिंशपयोर्विशेष इति पूर्वोक्तमेव निराकरणं स्मारयति—**एवं तर्हि**-इति । सदृशरूपा=जातिभेदसामर्थ्यविरहिण इत्यर्थः । **न तथा**-न कम्पकारिण इत्यर्थः । जात्यभेदेऽपि व्यक्तिभेदादेव सिध्यति क्षणिकत्वमित्यत्राह—**तथा च**-इति । एकजातीयस्यैव सहकारिलाभात् कार्यजनकत्वाङ्गीकारे सति पूर्वैव शिंशपाव्यक्तिः सहकारिसंनिधानात् कम्पहेतुर्वा भवेत्, स्वोत्पत्त्यनन्तरमेव न दृष्टा पूर्वव्यक्तिः, तज्जातीया तत्संतानान्तःपातिनी त्वन्या सहकारिसमवधानात् कार्यजननीह भवेदित्यत्र न कश्चिद्विशेषः उभयत्रापि सहकार्यायत्तत्वात्कार्यकारणस्य; तथा च न क्षणिकत्वसिद्धिरिति । तदेवं विरुद्धयोरेव क्वचित्समावेशे क्वचिदपि विरोधासिद्धेर्विपक्षे बाधकाभावात् स्वभावहेतुर्न सिध्यतीत्युक्ते तस्य विपक्षे बाधकमाशङ्क्य यथा तन्न सिध्यति तथोक्तम् । इदानीं प्रकृतमुपसंहरति-**तस्मात्**-इति । ननु नीलमुत्पलं चलतीत्यादौ विरुद्धानामपरापरभूतानामेव नीलत्वादिसामान्यादीनां समावेशो दृश्यते । न च तत्र परापरभावः, नीलस्य परत्वे रक्तमुत्पलं न स्यात्, उत्पलस्य परत्वे नीलं नीलीपुष्पं न स्यात्, न च नास्ति विरोधः ? कुर्वत्स्व-

प्रकाशः ।

**तामेव**=शिंशपासामग्रीमेवेत्यर्थः । आशयमुद्घाटयति । **कम्पजनका इति** । शिंशपाजनकानां कारणानां विशेषाः । तान्=शिंशपाजनकान्, वृक्षजनकानां कारणानां विशेषाः । तान्=वृक्षजनकानित्यर्थः । **तद्विशेषाः**=वृक्षजनकविशेषा इत्यर्थः । **एवं तर्हीति** । तज्जातीय एव सहकारिलाभालाभाभ्यां कार्यजननाजनने इति कुतः क्षणिकत्वमित्यर्थः । वैजात्यनिराकरणमुपसंहरति ।

---

स्यादिति भावः । **कम्पजनका** इति । अस्मन्मते चलनं नोदनं मूर्तद्रव्यं च परस्परं भिन्नं सहकारिवादश्चास्तीति शिंशपासामग्र्यनन्तर्भूता चलनसामग्री सम्भवति । तव तु मते शिंशपैव चलनात्मिका उत्तरव्यक्तिः, शिंशपैव नोदनात्मिका पूर्वव्यक्तिरिति चलनकार्यं प्रति कुर्वद्रूपत्वविशेषापन्ना नोदनात्मिका शिंशपैव कारणमिति चलनसामग्री शिंशपासामग्र्यन्तर्भूतैव भवतीति कम्पजनकाः शिंशपाजनकविशेषतया केनचित् प्लक्षादिजनकविशेषतया शिंशपादिकम्पमात्रदर्शिना गृहीता अपि कार्ये शिंशपात्मककम्पे वैजात्यस्य त्वयानङ्गीकारात् । कम्पसामान्यजनकाः प्लक्षात्मककम्पकार्यजननस्थले पश्चाद् दृष्टे शिंशपाजनकविशेषाननतिपतन्तीत्यभ्युपेयम् । तथा वृक्षशिंशपास्थले कुतो न स्यात् दर्शनं नियामकमिति चेत्, तत्र न द्रक्ष्यते इत्यत्र का प्रत्याशेत्यस्योक्तप्रायत्वादिति भावः । अथ न्यायमते कथमेवं न शङ्केति चेन्न । व्यभिचारादर्शनसहकृतेनान्वयव्यतिरेकेण दृष्टजात्यवच्छेदेन कार्यकारणभावे परिच्छिन्ने तज्जातिविरहनिबन्धनत्वाद-

रसमावेश एव, समाविष्टयोश्च परापरभाव एव। अनेवम्भूतानां द्रव्यगुणकर्मादिभावेन उपाधित्वमात्रम्। तेषान्तु विरुद्धानां न समावेशो व्यक्तिभेदात्। जाती-

बोधनी।

बीजत्वयोरविरोधप्रसङ्गात्, तत्कथमयं नियम इत्याह—अनेवम्-इति। अनेवंभूतानां विरोधे सति समाविष्टानां समावेशे सत्यपरापरभूतानां च द्रव्यगुणकर्मस्वरूपेणोपाधित्वमात्रं, न सामान्यरूपेण समाविष्टत्वम्। तथा हि नीलगुणयोगात् नीलमुत्पलं न तु नीलत्वयोगात्, तथा द्रव्यसंबन्धाद् द्रव्यं नीलं न तु द्रव्यत्वयोगादिति। एवं चलनयोगात् चलं न तु चलत्वयोगादिति। जात्यात्मकानां तु सामान्यानां विरोधे सति न समावेश इतीमं तात्पर्यगोचरमर्थं पृथक्कृत्याह—तेषां तु-इति। कुत इत्यत आह-व्यक्तिभेदात्—इति। सामान्यव्यञ्जकानामाश्रयाणां भेदादिति। भिद्यन्तां व्यञ्जकानि किमायातमसमावेशस्य तत्राह—जातीनाम्-इति। व्यक्त्याश्रयत्वाज्जातीनां तद्भेदेन तदाश्रयाणां जातीनां च न समावेशः। तस्माद्विरुद्धानां नीलत्वोत्पलत्वचलत्वादीनां गुणद्रव्यकर्मव्यक्तिसमवेतत्वेन नैकव्यक्तिसमावेशः, समाविष्टानां गुणादिव्यक्तीनां न विरोध इत्यर्थः। मा भूत्तर्हि कुर्वत्त्वबीजत्वयोः समावेश इत्यत्र न वैजात्यं विनेत्येतदेव समा-

प्रकाशः

तस्मादिति। अनेवमिति। येषां न विरोधो न वा परापरभावः, तेषां सहभावमात्राद् व्यवस्थितानां भूतत्वकार्यत्वमूर्तत्वानां द्रव्यादिभावेन द्रव्यादिरूपतया उपाधिमात्रत्वं, न तु जातिरूपत्वमित्यर्थः।

ननु द्रव्यत्वगुणत्वादीनां कथमित्यत आह। तेषामिति। तेषां द्रव्यत्वादीनां कुतो न समावेश इत्यत आह। व्यक्तिभेदात्=व्यञ्जकाश्रयभेदादित्यर्थ। एतदेव स्पष्टयति। जातीनां

प्रकाशिका।

कम्पभिन्नशिंशपाजनककारणं वेत्यर्थः। न जातिरूपत्वमिति। ननु परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशे तदतज्जातीयताविरोधभङ्ग एव विपक्षबाधकः। साध्योपाध्योरपि तादृशयोः समावेशे समान एवेति कथं नोपाधिसाङ्कर्यं दोषाय। अत्राहुः। उपाधिः परम्परासम्बन्धेन जातिरेवेत्युपाधिविरोधः परम्परासम्बन्धेन जातिविरोध एव पर्यवसितः स चासंभवी परम्परासम्बन्धेन सर्वजातीनां सर्वत्र वृत्त्या विरोधोदाहरणाभावात्। एवञ्च साक्षात्सम्बन्धेनैव तदतज्जातीयत्वं विरुद्धत्वं न तु परम्परासम्बन्धेनापीति जात्योरेव तादृशयोर्न सहभावो न तूपाध्योरपीति। न चैवं घटाभाववत्त्वपटाभाववत्त्वयोरपि समावेशः स्यादिति वाच्यम्। केनचित् सम्बन्धेन विरोधसिद्धावपि सामान्यतः परम्परासम्बन्धेन विरोधासिद्धेः। स च विरोधप्रयोजकीभूतः सम्बन्धः प्रतीतिबलकल्पनीय इति। जात्योस्तु तादृशयोः समवायेन सामान्यत एव विरोध

कारणत्वस्यान्यत्र परिच्छेदसम्भवात्। अधिकाशङ्कायां व्याघातेन प्रागेव निरस्तत्वात्। तव तु मते सहकारिवादानभ्युपगमात्, जातेः कारणतायामिव तद्विरहस्याकारणतायामप्यप्रयोजकत्वप्रसङ्गात्। प्रयोजकतया कल्पितस्य कुर्वद्रूपत्वस्याभावोऽन्यजातीये प्रत्यक्षेण न हि निश्चेयः कार्याभावेनैव तन्निर्णये परस्पराश्रयप्रसङ्गात्। अन्यजातीयात् कार्योत्पत्तिसम्भावनाया दुर्वारत्वादिति।

अनेवम्भूतानाम्=भूतत्वमूर्तत्वकार्यत्वादीनामित्यर्थः। विरुद्धानाम्=परस्परपरिहारवताम्। व्यक्तिभेदात=व्यञ्जकाश्रयभेदात्।

नाश्च भिन्नाश्रयत्वात् । तथा च कुतः क्षणिकत्वम् ? । वैजात्याभ्युपगमे च कुतोऽनुमानवार्त्ता ? । मा भूदनुमानमिति चेन्न । तेन हि विना न तत् सिद्ध्येत् । न हि क्षणिकत्वे प्रत्यक्षमस्ति । तथा निश्चयाभावात्, गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्, अन्यथाऽतिप्रसङ्गात् ।

ननु वर्त्तमानः क्षणोऽध्यक्षगोचरः । न चाऽसौ पूर्वापरवर्त्तमानक्षणात्मा । ततो वर्तमानत्वनिश्चय एव भेदनिश्चय इति चेत् । किमत्र तदभिमतमायुष्मतः ? यदि धर्म्यैव नीलादिर्न किञ्चिदनुपपन्नम् । तस्य स्थैर्याऽस्थैर्यसाधारण्यात् । अथ धर्म्मः । तद्भेदनिश्चयेऽपि धर्म्मिणः किमायातम् ? तस्य ततोऽन्यत्वात् । वर्त्तमाना-

बोधनी ।

रयति—तथा च-इति । अस्तु तर्हि समावेश इत्याशङ्क्य महता प्रबन्धेनोपपादितमनुमानभङ्गमुपसंहरति—वैजात्य-इति । विना तेन न तत्सिद्धिरित्येतच्छङ्कापूर्वकं व्याचष्टे—मा भूत्-इति । कुतः प्रमाणान्तरात् तस्य क्षणिकत्वसिद्धिरिति । ननु प्रत्यक्षमेव तत्र प्रमाणमित्यत्र नाध्यक्षं निश्चयं विनेत्येतदुत्तरयति—न हि-इति । क्षणिकमेतदिति निश्चयस्य विकल्पस्याभावादिति । मा भूद्विकल्पः, निर्विकल्पकमध्यक्षं तत्र प्रमाणमित्यत्राह-गृहीत-इति । निर्विकल्पकेन गृहीते विकल्पिते चार्थे तस्य प्रत्यक्षस्य प्रामाण्यादिति विपर्यये बाधकमाह—अन्यथा-इति ।

यद्यनिश्चित एवार्थे प्रत्यक्षं प्रमाणं स्यात् किमिति वर्ह्यक्षणिकत्व एव तत्प्रमाणं न स्यात् इति चोदयति—ननु-इति । द्वितीयप्रत्यक्षं तावद्धर्मिणं घटोऽयमिति वर्त्तमानत्वविशिष्टमेवावगाहते, वर्त्तमानस्य चातीतानागतात्मकत्वविरोधात् । तेन वर्त्तमानत्वं निश्चाययदेव प्रत्यक्षं धर्मिणः पूर्वापराभ्यां भेदं निश्चाययतीति क्षणिकत्वे प्रमाणमिति विकल्पं दूषयितुं पृच्छति—तत्-इति । तद् वर्त्तमानत्वं किमित्यभिमतं, किं नीलादिधर्मिस्वरूपमेव, अथवा तद्धर्म कालविशेषसंबन्ध इति भावः । द्वितीये दूषणमाह—अथ-इति । तस्य वर्त्तमानत्वधर्मस्यातीतानागतत्वाभ्यां भेदनिश्चयेऽपि धर्मिणो नीलादेर्न भेदः सिध्यति । तस्य धर्मिणस्ततो धर्मादन्यत्वादिति । बौद्धः स्वाभिसन्धिमुद्घाटयति । वर्त्तमान-इति । न वयं धर्मिमात्रनिश्चयाद्धर्मभेदनिश्चयाद्वा धर्मिणो

प्रकाशः ।

चेति । द्रव्यादिव्यक्तिगतत्वेनैकाश्रयत्वाभावादित्यर्थः । तथा चेति । परापरभावाभावेन वैजात्याभावादित्यर्थः । तथापि तत्स्वीकारे दण्डमाह । वैजात्येति । तथेति । नीलमिदमितिवत् क्षणिकमिति निश्चयाभावादित्यर्थः । तथाप्यध्यक्षं निर्विकल्पकं तथा स्यात् तत एव प्रकृतसिद्धेरित्यत आह । गृहीतेति । निर्विकल्पकस्य सविकल्पकोन्नेयत्वात् तदसिद्धौ निर्विकल्पकसत्तायां मानाभावादित्यर्थः ।

नन्वयं घट इत्यनुभवोऽस्ति । स च घट इति धर्मिणम्, अयमिति वर्तमानत्वं विषयीकरोतीति वर्तमानत्वनिश्चय एव क्षणिकत्वनिश्चय इति तदुन्नीतमध्यक्षमस्त्येवेत्यत आह ।

नन्विति । वर्तमानत्वं किं घट एव, तद्धर्मो वा ? आद्ये तदवच्छिन्न एव कालस्तस्य वर्तमानः कालः स च तस्य स्थैर्येऽपि सम्भवति, एकक्षणात्मकत्वं तस्य घटस्यासिद्धमेव । अन्त्ये,

प्रकाशिका ।

इति । वर्त्तमानत्वनिश्चय एवेति । अतीतानागतक्षणागोचरं क्षणगोचरं प्रत्यक्षमेव क्षणिकत्वे मानमिति भावः । एकक्षणात्मकत्वमिति । परमसूक्ष्माणां क्षणानामप्रत्यक्षत्वात् स्थूल एव कालोपाधिर्वर्त्तमानतया प्रत्यक्षे भासत इत्युपेयम् । तादृशी च सा स्थैर्यसाधारणीति भावः । ननु

गृहीतेति । निर्विकल्पकविषयेत्यर्थः । निश्चितेति=सविकल्पकविषयेत्यर्थः ।

वर्त्तमानत्वमेकस्य विरुद्धमिति चेत्। यदि सदसत्त्वं तत्, तन्न। अनभ्युपगमात्। ताद्रूप्येणैव प्रत्यभिज्ञानात्। सदसत्संबन्धश्चेत, किमसङ्गतं? ज्ञानवत्तदुपपत्तेः। क्रमेणानेकसंबन्ध एकस्यानुपपन्न इति चेत्। न। उपसर्पणप्रत्ययक्रमेणैव तस्याऽप्युपपत्तेः। प्रत्यभिज्ञानमप्रमाणमिति चेत्। अस्ति तावदतो निरूपणीयं, क्षणप्रत्ययस्तु भ्रान्तोऽपि नास्तीति विशेषः ॥ १६ ॥

स्यादेतत्। मा भूदध्यक्षमनुमानं वा क्षणिकत्वे, तथापि सन्देहोऽस्तु। एता-

---

बोधनी।

भेदं ब्रूमः, किन्तु वर्त्तमानत्वावर्त्तमानत्वलक्षणविरुद्धधर्मसंसर्गादिति दूषयति-यदि-इति। सदसत्त्वरूपं तावद्वर्त्तमानत्वावर्त्तमानत्वमेकस्य धर्मिणो नाभ्युपगच्छाम इति। कुत इत्याह—ताद्रूप्येण-इति। शङ्कते-सदसत्—इति। सता वर्त्तमानेन कालेन संबन्धो वर्त्तमानत्वम्, असताऽतीतेनानागतेन वाऽवर्त्तमानत्वमिति किमसंगतमिति। यथा प्रत्यभिज्ञानमेकमेव वर्त्तमानत्वं सच्च विषयीकरोति असच्चातीतत्वम्, यथा वा अघटं भूतलमिति ज्ञानं भावाभावौ, तथैक एव धर्मी सदसद्भ्यां संभन्त्स्यते, को विरोध इति। नन्वस्तु युगपदेकस्यानेकसंबन्धो न तु क्रमेण, तथा हि यद्येकसम्बन्धक्षणे भावः संबन्ध्यन्तरेणापि संबद्धुं समर्थः, तर्हि तदानीमेव तेनापि संबध्येत, समर्थस्य क्षेपायोगात्। असमर्थश्चेन्न पश्चादपि। तदन्यदेव पश्चात्संबध्यत इति सिद्धः क्षणभङ्ग इत्याशयेन शङ्कते क्रमेण-इति। प्रत्यभिज्ञया तावदेकत्वं प्रतीयत इत्युक्तं, न चैकस्यानेकसंबन्धोऽनुपपन्न इति केवलमत्र सम्बन्धक्रमे कारणं वक्तव्यं, तच्च संबन्धिसन्निधापकानां क्रम एवेत्याह—उपसर्पण-इति। ननु प्रत्यभिज्ञायाः प्रामाण्ये सति सर्वमेतदेवं स्यात्, तदेवासिद्धमित्याह—प्रत्यभिज्ञानम्-इति। मा भूत् प्रामाण्यसिद्धिस्तथापि भवन्तं विजयामह इत्याह-अस्ति तावत्-इति। स्थैर्यसाधकं प्रत्यभिज्ञानं तावदस्ति, अन्यथा धर्मिण एवासिद्धौ तत्राप्रामाण्यविधानायोगात्। तेन धर्ममात्रप्रामाण्यमेव तस्य निरूपणीयम्। क्षणिकत्वे तु प्रमाणाभासोऽपि नास्तीति ॥ १६ ॥

एवं सौगतसमयसिद्धक्षणिकत्वालम्बिनि चार्वाकस्य प्रत्यवस्थाने दूषिते स एवान्यथा प्रत्यवतिष्ठते-स्यादेतत्-इति। न खलु क्षणिकत्वे प्रमाणाभावमात्रेण स्थिरत्वं सिद्ध्यति किन्तु संदेह एव, तत्रापि भूतचैतन्यसंभावनया न तद्व्यतिरिक्तश्चेतनः सिद्ध्यतीत्युच्यत इति। किमयं सन्देहः

प्रकाशः।

धर्मभेदेऽपि न तद्धर्मिभेद इत्याह। किमत्रेति। ताद्रूप्येणैवेति। द्वितीयादिक्षणेऽपि प्रत्यभिज्ञानाद् वर्तमानत्वमेवेत्यर्थः। ननु पूर्वापराभ्यां सदसत्क्षणाभ्यां सम्बन्ध एकस्य विरुद्ध इत्याह। सदसदिति। सदसद्विषयैकज्ञाने तदुभयसम्बन्धो यथा न विरुद्ध्यते तथा वाह्येऽपीत्याह। ज्ञानवदिति। ज्ञाने तदुभयसम्बन्ध एकदैवेति न विरुद्धः। क्रमिकस्तु विरुद्ध इत्याह। क्रमेणेति। तत्सम्बन्धकारणक्रमादेव सोऽप्यविरुद्ध इत्याह। उपसर्पणेति। प्रत्ययः=कारणम्। ताद्रूप्येणैव प्रत्यभिज्ञानादित्याक्षिपति। प्रत्यभिज्ञानमिति। विरुद्धधर्मवद्विषयत्वादिति भावः। परिहरति। अस्तीति। प्रमाणत्वाप्रमाणत्वाभ्यामिति शेषः। वस्तुतो विरुद्धधर्माध्यासाभावात् प्रमाणत्वमपि निरूपितमेवेति भावः। तदनेन स्थैर्ये प्रमाणमुक्तम् ॥ १६ ॥

प्रकाशिका।

सम्बन्धकारणेति व्याख्यानं प्रत्ययेति मूलविरुद्धमत आह। प्रत्ययः कारणमिति। प्रत्यभिज्ञानमप्रमाणमित्यत्र हेतुं पूरयति। विरुद्धेति। सन्देहेऽपि स्थैर्यासिद्धिरेवेत्यत आह वस्तुत इति। विरुद्धयोरसंसर्गात् संसृष्टयोश्चाविरोधादिति भावः ॥१६॥

वताऽपि सिद्धं समीहितं चार्वाकस्येति चेत् । उच्यते—

**स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ॥**
**एकतानिश्चयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥**

न हि स्थिरे तद्दर्शने वा स्वरसवाही सन्देहः । प्रत्यभिज्ञानस्य दुरपह्नवत्वात् । नापि तत्प्रामाण्ये, स हि न तावत् सार्वत्रिको, व्याघातात् । तथा हि । प्रामाण्यासिद्धौ सन्देहोऽपि न सिद्ध्येम्, तत्सिद्धौ वा तदपि सिद्ध्येत् । निश्चय-

---

बोधनी ।

स्थैर्ये ? तद्दर्शने वा दर्शनप्रामाण्ये वा ? तत्रापि प्रामाण्यमात्रे किं वा प्रत्यभिज्ञानप्रामाण्ये ? तत्रापि सर्वत्र प्रकृते वेति ? तत्र न प्रथमद्वितीयावित्याह—**स्थैर्यदृष्ट्योः**—इति । प्रत्यभिज्ञानस्य दुरपह्नवत्वादिति भावः । न तृतीय इत्याह—**न प्रामाण्ये**-इति । अनेकप्रमाणाधीनत्वात् सन्देहस्य प्रामाण्यमात्रासिद्धौ संदेहो न सिध्येत् । तत्सिद्धौ न प्रामाण्यमात्रासिद्धिरिति संदेहसिद्धिप्रामाण्यमात्रासिद्ध्योः परस्परव्याघातात् । नापि चतुर्थपञ्चमावित्याह—**एकता**-इति । येन विरुद्धधर्मसंसर्गविरहेण क्षणैकत्वग्राहिणः प्रत्ययस्य प्रामाण्यं निश्चित्य क्षणिकस्य भावस्यैकत्वं निश्चिनोषि तेनैव स्थिरमपि भावं निश्चिनुया इति व्याचष्टे—**न हि**-इति । यद्यपि वादिविप्रतिपत्तेराहार्यः संदेहः, तथापि न स्वरूपतः स्थैर्ये तद्दर्शनसद्भावे वा सन्देहोऽस्ति । प्रत्यभिज्ञानस्य विषयतः स्वरूपतश्च दुरपह्नवत्वादिति । सामान्यतो विशेषतश्च ज्ञानात् प्रामाण्यसंदेह इत्यपि नास्तीत्याह—**नापि**-इति । तत्र सामान्यसंदेहनिराकरणहेतुतया विरोध इत्येतद्व्याचष्टे—**स हि**-इति । सर्वज्ञानप्रामाण्यविषयस्तावन्न संदेहः संभवतीति व्याघातमेवाह-**तथाहि**—इति । संदेहग्राहकज्ञानस्य प्रामाण्यसिद्धेः सन्देहोऽपि सिध्येत् तस्य सन्देहस्य सिद्धौ तदपि प्रामाण्यमपि सिध्येदिति कुत इत्यत आह—**निश्चयस्य**-इति । सन्देहस्वरूपनिश्चयस्य सन्देहग्राहिज्ञानप्रामाण्याधीनत्वादिति निश्चयवत्तस्य तदधीनत्वादिति केचित्पठन्ति । तत्रायमर्थः—

प्रकाशः ।

**सिद्धमिति** । क्षणिकत्वसन्देहेऽपि चार्वाकमतसिद्धेरित्यर्थः । अत्र सन्देहः स्थैर्ये, तद्दर्शने वा, प्रामाण्ये वा ? तृतीयेऽपि प्रामाण्यमात्रे, प्रत्यभिज्ञानप्रामाण्ये वा ? । नाद्यावित्याह । **स्थैर्येति** । प्रत्यभिज्ञानानुव्यवसायाभ्यां स्थैर्यतज्ज्ञाननिश्चयादित्यर्थः । वादिविप्रतिपत्त्या सन्देहो न स्वारसिक इति भावः । न तृतीयः । क्वचिदपि प्रामाण्याप्रसिद्ध्या तत्कोटिकसंशयस्याप्यभावादित्याह । **न प्रामाण्य इति** । न चतुर्थः । एकत्र क्षणे येन विरुद्धधर्मसंसर्गाभावेनैकत्वनिश्चयस्तेनैव स्थिरेऽपि तन्निश्चयादित्याह । **एकतेति** । **तथा हीति** । सन्देहमीत्यनुव्यवसायमानकत्वात् तस्येत्यर्थः । **तत्सिद्धौ**=सन्देहसिद्धौ । **तदपि**=प्रामाण्यम् । **निश्चयस्येति** । निश्चयस्य सन्देहाधीनत्वात् सन्देहव्या

प्रकाशिका ।

यथाश्रुतमूलावष्टम्भेनाह । **क्षणिकत्वसन्देह इति** । ननु यदि स्थैर्ये न सन्देहः तदा विचारप्रवृत्तिरेव कथमित्यत आह । **वादीति** । तथा च विप्रतिपत्तिजन्मा आहार्य एव संशयो विचाराङ्गम् । अत एव मूले न स्वरसवाही सन्देह इत्युक्तमिति भावः । **संशयस्यापीति** । अनुव्यवसायप्रामाण्ये च न प्रामाण्यमात्रे सन्देह इति भावः । निश्चयस्य निश्चायकप्रामाण्यनिश्च-

मकरन्दः ।

**क्षणिकत्वसन्देहेऽपीति** । स्थैर्यासिद्ध्या चार्वाकाऽऽकाङ्क्षितसिद्धेरित्यर्थः । **वादीति** । स्वारसिकस्यैवात्र निषेध्यत्वात् । अत एवोक्तं मूले, "न स्वरसवाही सन्देह" इति ॥१७-१८॥

---

न सिद्ध्येत् । सिद्धिमात्रस्य प्रमाणाधीनत्वात् ।

स्य तदधीनत्वात् । कोटिद्वयस्य चादृष्टस्यानुपस्थाने कः सन्देहार्थः ? तद्दर्शने च कथं सर्वथा तदसिद्धिः ? ।

एतेनाप्रामाणिकस्तद्व्यवहार इति निरस्तम् । सर्वथा प्रामाण्यासिद्धौ तस्याप्यसिद्धेः । प्रकृते प्रामाण्यसन्देहो लूनपुनर्जातकेशादौ व्यभिचारदर्शनादिति चेत् । न एकत्वनिश्चयस्य त्वयाऽपीष्टत्वात् । अनिष्टौ वा न किञ्चित सिद्धयेत् । सिद्धयतु यत्र विरुद्धधर्मविरह इति चेत्, तेनैव स्थिरत्वमपि निश्चीयते । स इह संन्दिह्यत इति चेत्, तुल्यमेतत् क्वचिन्निश्चयोऽपि कथञ्चिदिति चेत्, समः समाधिः॥१७॥

बोधनी ।

यथा निश्चयः प्रामाण्याधीनस्तथा संदेहोऽपीति । इतश्च सर्वथा प्रामाण्यासिद्धौ सन्देहो न सिध्येदित्याह—**कोटिद्वयस्य**–इति । निदर्शनं निश्चयः भवतु दर्शनं, तेन चोपस्थाप्यतां कोटिद्वयं, को विरोध इत्यत्राह– **तद्दर्शने च** इति । कोटिद्वयनिश्चयार्थमपि संदेहः प्रामाण्यमपेक्षत इत्यर्थः । यद्वा, कासांचिज् ज्ञानव्यक्तीनां प्रामाण्यं कासांचिच्चाप्राण्यं दृष्टवतः कस्योचित्प्रमाणमप्रमाणं वेति संदेहः स्यात् । सर्वथा प्रामाण्यासिद्धौ कोटिद्वयानुपस्थानात्संदेहो न सिध्यतीति कथं प्रामाण्यमात्रस्य सन्देहग्रस्तत्वे प्रमाणव्यवहारो लौकिकानामित्यत्र यत्प्रतिविधानं चार्वाकस्य, अप्रामाणिकः प्रमाणव्यवहार इति । तदपि पूर्वोक्तव्याघातेन निरस्तमित्याह-**एतेन**–इति । व्याघातमेव स्फुटयति—**सर्वथा**–इति । अप्रामाणिकोऽयं व्यवहार इत्यस्यापि प्रमाणसिद्धत्वादिति । एवम्—

'सन्देहगोचरः सर्वं कस्य चिन्न कथंचन ।
प्रतिष्ठामिति वादोऽयं चार्वाकस्य निराकृतः' ॥ इति ।

अथोत्तरमर्थं व्याख्यास्यंस्तं निराकरणीयं विशेषतः प्रामाण्यसन्देहं सहेतुकमाशङ्कते—**प्रकृते**–इति । व्याचष्टे—**न**–इति । तथाप्येकस्मिन्क्षणे भावस्यैकत्वनिश्चयोऽस्ति । तत्रैकोऽयमित्यबाधिताकारं ज्ञानमेव शरणं, तच्च कालभेदेऽपि समानमिति भावः । विपक्षे दण्डमाह—**अनिष्टौ**–इति । एकस्तावन्न सिध्यति, तदसिद्धौ नानेकोऽपीति शङ्कते—**सिद्धयतु**—इति । यत्रैकस्मिन् क्षणिके भावे विरुद्धधर्मसंसर्गो नास्ति स एकः सिद्धयतु विरुद्धधर्मसंसृष्टविषयं प्रत्यभिज्ञानं प्रमाणं, न प्रत्यभिज्ञानमात्रम् । स्थिरे तु विरुद्धधर्मसंसर्गोऽस्तीति भावः । **तेनैव**–इति । तेन विरुद्धधर्मसंसर्गविरहेण पूर्वमुपपादितेनेति शङ्कते—**सः**–इति । विरुद्धधर्मविरहः स्थिरेऽपि संदिग्ध इति त्वयोपपादितेऽपि मया संसर्गस्यापाद्यमानत्वाद्विप्रतिपत्तेः संशयगोचरः स्यादिति भावः । यदि निश्चितेऽपि संदेहस्तर्हि क्षणेऽपि विरुद्धधर्मासंसर्गः संदिग्धः स्यादित्याह—**तुल्यम्**–इति । यदि क्षणिकस्यैक्यानिश्चये न किंचित्सिध्येदिति तर्केण तत्र निश्चयः, तर्हि स्थिरस्याप्यभावे सर्वस्यादृष्टगोचरत्वात् क्वचित्प्रवृत्तिः कुतश्चिन्निवृत्तिश्च न स्यादिति सर्वलोकयात्रोच्छेदप्रसङ्गोऽत्रापि सम इत्याह—**क्वचित्**–इति ॥ १७ ॥

प्रकाशः ।

पकत्वात् तेन विना सन्देहानुपपत्तेरित्यर्थः । यद्वा, सन्देहनिश्चयस्यापि तदनुव्यवसायप्रामाण्यनिश्चयाधीनत्वादित्यर्थः । **तद्दर्शने चेति** । प्रामाण्यदर्शने चेत्यर्थः ।

प्रकृते स्थैर्यसाधकप्रत्यभिज्ञाने । **न किञ्चिदिति** । क्षणिकोऽप्येको न स्यादित्यर्थः । **तुल्यमिति** । क्षणिकस्याप्येकत्वे सन्देह इत्यर्थः । **क्वचिदिति** । यत्र न विरुद्धधर्मसंसर्ग इत्यर्थः । **सम इति** । स्थिरेऽपि तदभाव एवेत्यर्थः ॥ १७ ॥

प्रकाशिका ।

याधीनत्वादिद् । इति सन्मुखव्याख्याने सुगमे वक्रव्याख्यानं निर्बीजमित्यरुचेराह । **यद्वेति** ॥१७॥

---

तदधीनत्वात्–सन्देहव्यापकत्वात् । व्यापकाभावे व्याप्य स्यासंदेहस्याप्यभावात् । यद्वा संदेहनिश्चयस्यापि तदनुव्यवसायप्रामाण्यनिश्चयाधीनत्वादित्यर्थः । तस्याप्यसिद्धेरिति । उक्तव्यवहारे प्रामाणिकत्वस्यापीत्यर्थः ।

नन्वेतत् कारणत्वं यदि स्वभावो भावस्य नीलादिवत् तदा सर्वसाधारणं स्यात् । न हि नीलं किञ्चित् प्रत्यनीलम् । अथौपाधिकं, तदा उपाधेरपि स्वाभाविकत्वे तथात्वप्रसङ्गः । औपाधिकत्वे त्वनवस्था । अथाऽसाधारणत्वमप्यस्य स्वभाव एव, तत उत्पत्तेरारभ्य कुर्यात्, स्थिरस्यैकस्वभावत्वादिति चेत् । उच्यते-

**हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ॥**
**तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥१८॥**

---

बोधनी ।

संप्रति चार्वाकः स्थिरपक्षे कारणत्वानुपपत्त्या प्रत्यवतिष्ठते—**ननु**—इति । स्थिरस्य भावस्य कारणत्वं यदि स्वभावतः स्वतःसिद्धं यथा नीलस्य नीलत्वं तर्हि तद्वत्साधारणं स्यात्, तत्र चैकस्मात्कारणात्सर्वकार्योत्पत्तिः प्रसज्यत इति नीलादीनां साधारण्यं दर्शयति—**न हि**—इति । शङ्कते—**अथ**—इति । औपाधिकत्वे ह्यसाधारण्यमुपपद्यते यथा तस्यैव नीलस्य प्रत्यक्षत्वादेरिति । विकल्प्य निराचष्टे—**तदा उपाधेः**—इति । येनोपाधिना भावः कारणं भवति स चोपाधिर्भावस्य स्वभावो वा स्यादौपाधिको वा ? पूर्वत्र पूर्ववत्तस्यापि तथात्वं साधारण्यं प्रसज्येत, उत्तरत्र तस्यापि तथात्वप्रसङ्गादनवस्था, तस्मात्पारमार्थिकनीलादिवैधर्म्यात्काल्पनिकोऽयं कार्यकारणभाव इति । **अथेति** । यथा कारणत्वमस्य स्वभावः तथा किंचिदेव कार्यं प्रति न सर्वमिति कारणत्ववदसाधारण्यमप्यस्य स्वभावः, ततश्च नोक्तप्रसङ्ग इति । तर्हि यं यं कार्यविशेषं प्रति कारणत्वमस्य स्वतः सिद्धं तं तं सर्वदा कुर्यात्स्थिरस्यैकस्वभावत्वात्कालभेदेन स्वभावभेदानुपपत्तेरित्याशयेनाह—**उत्पत्तेः**—इति । **उच्यत**—इति । हेतुशक्तिं कारणत्वमनादृत्य पारमार्थिकत्वेनाभ्युपगम्यमानं नीलाद्यपि वस्तु न पारमार्थिकं सद्भवति कुतश्चित्कारणाल्लब्धस्वरूपं पारमार्थिकं स्यात् । इतरथा नित्यत्वेनासत्त्वप्रसङ्गात् । तेन नीलादेः पारमार्थिकत्वं वदता कारणस्यापि पारमार्थिकत्वं वक्तव्यम्, अन्यथा नीलादेरप्यपारमार्थिकत्वापत्तेः, तथा च कथं तद्वैधर्म्येण कारणत्वस्यापारमार्थिकत्वं सिध्येदिति । प्रतिनियतमेव कारणत्वं भावानां स्वभावः । न च तत्र कार्यविशेषाणां सततोत्पादकत्वप्रसङ्ग इत्याह—**तद्युक्तम्**—इति । तैस्तैः सहकारिभिर्युक्तं तत्तत्कारणं तत्र तत्रान्वयव्यतिरेकवत्सु कार्यविशेषेषु शक्तं, तस्मात्कार्यविशेषाणामेव सहकारिक्रमवशात् क्रमेणैवोत्पत्तिरुपपन्नेति । कथं तर्हि पारमार्थिकत्वे कारणत्वस्य नीलादिवैधर्म्यं तत्राह—**इति**—इति । कार्यविशेषनियतं सहकार्यधीनं च कारणत्वं किं न साधारणं, साधारणमेव सर्वैस्तथोपलम्भनियमात् । न हि नीलादेरन्यत्साधारण्यम् । अतो न नीलादिवैधर्म्यं कारणत्वस्येति ।

प्रकाशः ।

तदेवमलौकिकं परलोकसाधनं सिद्धम् । तत्र शङ्कते—

**नन्विति** । यथा नीलं सर्वेण निरूप्यमाणं नीलं, तथा सर्वेण निरूप्यमाणं कारणं स्यादित्यर्थः । **तथात्वे**=सर्वसाधारण्यम् । औपाधिकत्व इत्यत्रोपाधेरित्यनुषञ्जनीयम् । **अथेति** । नियतकार्यप्रतियोगिककारणत्वमेव स्वभाव इत्यर्थः । **तत इति** । यस्य स्वाभाविकं तत्तदुत्पत्तित एवारभ्येति बीजस्य बीजत्वमिवाङ्कुरकारित्वमप्युत्पत्तित एव स्यादित्यर्थः । ततः कारणत्वमस्य न साधारणमसारणं वेति भावः ॥

परस्य कार्यकारणभावस्य साधारणत्वापादनेन हेतुशक्तिरेव निरस्यत्वेन मता । तथा च नीलाद्यपि परमार्थसन्न स्यात् । नित्यत्वप्रसङ्गात् । ततो वैधर्म्यदृष्टान्ताभावात्स्वपक्षो न सिद्ध्यतीत्याह—**हेतुशक्तिमिति** । **तद्युक्तमिति** । सहकारियुक्तम् । **तत्र**=कार्ये **तत्**=कारणं **शक्तं**=निर्वर्तकमिति सर्वैरेव प्रतीयत इति सर्वसाधारण्यमस्त्येव । नीलादेरपि तदेव सर्वसाधारण्यमित्यर्थः ।

प्रकाशिका ।

**कारणं स्यादिति** । तथा च सर्वं सर्वत्र कारणं स्यादित्यर्थः । ततः **कारणत्वमिति** ।

सर्वसाधारणनीलादिवैधर्म्येण काल्पनिकत्वं कार्यकारणभावस्य व्युत्पाद्यता नीलादि पारमार्थिकमेवाभ्युपगन्तव्यम् । अन्यथा, तद्वैधर्म्येण हेतुफलभावस्यापारमार्थिकत्वानुपपत्तेः । न च कार्यकारणभावस्यापारमार्थिकत्वे नीलादि पारमार्थिकं भवितुमर्हति, नित्यत्वप्रसङ्गात् । तस्मादस्य पारमार्थिकत्वेऽपरमपि तथा, न वोभयमपीति । कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात्, तत्स्वभावत्वादिति यदि, तदोत्पत्तेरारभ्य कुर्यादविशेषादित्यपि न युक्तम् । तत्तत्सहकारिसाचिव्ये तत्तत्कार्यं करोतीति स्वभावव्यवस्थापनात् । इदञ्च साधारणमेव, सर्वैरेव तथोपलम्भात् । न हि नीलादेरप्यन्यत् साधारण्यमिति ॥१८॥

स्यादेतत् । अस्तु स्थिरं, तथापि नित्यविभोर्न कारणत्वमुपपद्यते । तथा ह्यन्वयव्यतिरेकाभ्यां कारणत्वमवधार्य्यते, नान्वयमात्रेण । अतिप्रसङ्गात् । न च नित्यविभूनां व्यतिरेकसम्भवः । न च सोपाधेरसावस्त्येवेति साम्प्रतम्, तथाभू-

बोधनी ।

तत्र पूर्वार्द्धं व्याख्यातुं तावद्वस्तुसत्त्वं नीलादेरवश्याङ्गीकार्यं यथा तथाह—सर्व-इति । अनुपन्यस्तस्यापि कार्यभावस्य कारणत्वमतुल्ययोगक्षेमत्वाद्वा कारणत्वस्य संबन्धिरूपत्वेन तत्स्वरूपान्तर्गतत्वाद्वोपादानमित्यस्तु पारमार्थिको नीलादिस्ततः किमित्यत आह—न च—इति । किमित्येवमित्यत्राह—नित्यत्व-इति । नित्यस्यार्थक्रियाविरहादसत्त्वमेव स्यात्, न च नित्यत्वं कादाचित्कत्वादिति भावः । अत्रार्थतः सिद्धमुपसंहरति—तस्मात्-इति । अस्य=नीलादेः अपरमपि=कारणत्वमपि । तथा=पारमार्थिकम् । न चोभयमपि पारमार्थिकं स्यादिति तृतीयपादं व्याचिख्यासुस्तन्निराकरणीयां शङ्कामुत्थाप्य निराकरणं प्रतिजानीते कथमित्यादिना न युक्तमित्यन्तेन । अन्तरा पूर्वपक्ष्येव सिद्धान्तिनो मतमाशङ्क्य निराकरोति—तत्स्वभावत्वादित्यादिना । अविशेषात्कार्यकारणस्वभावस्योत्पत्तिप्रभृत्यविशेषात्तथैव व्याचष्टे-तत्तत्-इति । तुरीयपादं व्याचष्टे—इदं च-इति । इतिशब्दव्याख्यानम् । नन्वस्तु सर्वैरुपलम्भः, न तन्नीलादीनां साधारण्यं किन्तु सर्वान् प्रति तत्त्वं, कारणत्वस्य तु नैवंविधं साधारण्यमस्ति नियमस्योक्तत्वादित्यत्राह—न हि-इति । न तावन्नीलादेः सर्वदेशकालव्यापित्वं साधारण्यमस्त्यव्यापकत्वादनित्यत्वाच्च । न च सर्वान्प्रत्यपि नीलत्वमित्यपि संभवति । नीलत्वस्य कारणत्ववत्प्रतियोग्यपेक्षनिरूपणीयत्वाभावात् । ततः सर्वैः सर्वदा तथोपलम्भादेव साधारण्यम्, इदं च कारणत्वेऽप्यविशिष्टमिति ॥ १८ ॥

एवं तावत् क्षणिकत्वप्रतिक्षेपेण स्थिरत्वसमर्थनम् । न च गत्यन्तरं स्थिर इत्येतस्मिन्व्यवस्थिते भूतचैतन्यासम्भवात्तद्व्यतिरिक्तश्चेतन इति सिद्धम् । तत्राह—स्यादेतत्-इति । भवतु भूतं स्थिरं मा भूच्चैतन्यं तथापि भवदभिमतस्य नित्यविभोरात्मनः कारणत्वं नोपपद्यते, येनास्य ज्ञातृत्वं भोक्तृत्वमित्यादिकं सर्वमुपपद्येतेति भावः । किमिति नोपपद्य इत्यत्राह—तथा हि-इति । अतिप्रसङ्गात्कार्यमात्रं प्रत्येव नित्यविभूनां कारणत्वप्रसङ्गादिति भावः । ततः किमित्यत्राह—न च-इति । व्यतिरेको हि देशतः कालतो वा स्यादिति केवलस्यासम्भवेऽपि शरीराद्युपाधिविशि-

प्रकाशः ।

अस्य=नीलादेः । अपरमपि-कार्यकारणस्वरूपमपि । इदञ्चेति । तथा चेष्टापादनमिति भावः॥१८॥

नन्वेवमदृष्टस्यात्मवृत्तित्वेऽपि नात्मा समवायिकारणं, नाप्यन्यदिति तदभावादसमवाय्यपि न कारणमिति तन्नित्यत्वेन न यागादिजन्यत्वं, नाऽपि भोगनियामकत्वमित्यभिप्रेत्याह—स्यादेतदिति । न चेति । नित्यत्वेन न कालतो व्यतिरेको, विभुत्वेन न देशत इत्यर्थः ।

प्रकाशिका ।

तथा च कारणत्वमसदेवेति भावः ॥ १८ ॥

तस्योपाधिसम्बन्धेऽप्यनधिकारात् । जनितो हि तेन स तस्य स्यात्, नित्यो वा ? न प्रथमः, पूर्ववत् । नापि द्वितीयः, पूर्ववदेव । तथापि चोपाधेरेव व्यतिरेको न तस्य, अविशेषात् । तद्वत इति चेत् । न । स चोपाधिश्चेत्यतोऽन्यस्य तद्वत्पदार्थस्याभावात्, भावे वा, स एव कारणं स्यात् ।

अत्रोच्यते—

पूर्वभावो हि हेतुत्वं मीयते येन केन चित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥

भवेदेवं यद्यन्वयव्यतिरेकावेव कारणत्वम् । किन्तु कार्यान्नियतः पूर्वभावः ।

---

बोधनी ।

ष्टस्य व्यतिरेकः सम्भवतीत्याशङ्क्याह—सोपाधेः-इति । कुत इत्यत्राह—तथाभूतस्य-इति । नित्यविभोः कारणत्व इवोपाधित्वसम्बन्धेऽप्ययोग्यत्वादिति । तदेवोपपादयति—जनित इति । तेन नित्यविभुना जनित उपाधिस्तस्य सम्बन्धी स्यात् नित्यो वेति । पूर्ववत्-इति । नित्यविभोर्व्यतिरेकासम्भवः कार्यजनन इवोपाधिजननेऽपि तुल्य इति । पूर्ववदेवेति । तज्जनितत्वमिवोपाधेस्तत्सम्बन्धित्वमपि तदन्वयव्यतिरेकाभ्यामवसेयमन्वयमात्रस्य सर्वात्मसाधारण्यात् । तेनास्यैवायमात्मन इत्यासाधारणसम्बन्धित्वमपि व्यतिरेकाभावे दुरवधारणमिति । यद्वा, नित्यत्वेऽप्युपाधेस्तत्सम्बन्धस्यानित्यत्वादात्मनैव जनयितव्यत्वाच्चोपाधिस्वरूपजननवत्सम्बन्धजननमपि न सम्भवतीत्युक्तं पूर्ववदेवेति । अस्तूपाधिस्तत्सम्बन्धश्च तथाप्युपाधेरेव व्यतिरेकः स्यात् न त्वात्मन इत्याह—तथापि-इति । उपाधिव्यतिरेकाव्यतिरेकयोस्तद्वत आत्मनः सर्वत्र सर्वदान्वयाविशेषादिति । अथवा नित्योऽप्युपाधिर्व्यापको वा स्यादव्यापको वेति विकल्पं हृदि निधाय व्यापकत्वे दोष उक्तः पूर्ववदेव-इति । निरुपाधिकसमयवदेवेत्यर्थः । अव्यापकत्वे दोषमाह—तथापि च-इति । शङ्कते—तद्वतः-इति । विशेषणस्योपाधेर्व्यतिरेके विशिष्टः तद्वानेव व्यतिरिच्यत इति । दूषयति—न-इति । उपाधिमानुपाधिश्चेत्यतो द्वयान्यस्य तद्वतो विशिष्टस्य पदार्थान्तरस्य नैयायिकैरनभ्युपगमादिति । तद्वतः पदार्थान्तरस्य भावेऽपि व्यतिरेकवतः तस्यैव कारणत्वं स्यान्नात्मनो व्यतिरेकाभावादित्याह—भावे वा-इति ॥

अत्रोच्यत-इति । न तावदन्वयव्यतिरेकावेव कारणं, नापि तावेव तन्निश्चयोपायः । किं तर्हि ? कार्यान्नियतः पूर्वभावः कारणत्वं, निश्चीयते च धर्मिग्राहकप्रमाणादिनापि । तस्मान्नित्यविभोरपि कारणत्वसोपाधित्वनिश्चयौ सम्भवतः । एवमनभ्युपगमे ज्ञानादिकार्यलिङ्गेनात्मादेः समवायिकारणस्य प्रतीतिर्न स्यात्, इति व्याचष्टे—भवेदेवम्-इति । व्यतिरेकहीनस्यात्मनो न कारणत्वं भवेद्यदि तावेव कारणत्वं स्यादिति । किं तर्हि कारणत्वमित्यत्राह—किन्तु-इति । येन केनचि-

प्रकाशः ।

ननु केवलस्य व्यतिरेकाभावेऽपि शरीराद्युपहितस्य तस्य स्यादित्याह—न च सोपाधेरिति । नित्यविभोस्तदयोग्यत्वादित्यर्थः । तत्र विकल्प्य हेतुमाह । जनितो हीति । अन्त्येऽपि व्यापकोऽव्यापको वेति द्रष्टव्यम् । पूर्ववदिति । उपाधिजनकत्वग्राहकव्यतिरेकाभावस्तुल्य एवेत्यर्थः । द्वितीयस्याद्ये दोषमाह—पूर्ववदिति । नित्यविभोरुपाधेरपि व्यतिरेकाभाव इत्यर्थः । नित्याव्यापकोपाधिपक्षे दोषमाह—तथापि चेति । विशेष्यवति विशिष्टाभावस्य विशेषणाभावे पर्यवसानादित्यर्थः । तद्वतः=उपाधिमतः । स एव विशिष्ट एव, न तु विशेष्यात्मेत्यर्थः ।

येन केन चिदिति । नान्वयव्यतिरेकाभ्यामेवेत्यर्थः । व्यापकस्यापीत्यत्र हेतुत्वमित्यनुष-

प्रकाशिका ।

नान्वयव्यतिरेकाभ्यामेवेति । न हि व्यतिरेकगर्भकारणता न वा व्यतिरेकगर्भग्राहकनियतेति भावः । धर्मिधीरन्यथा न हीत्यत्र हिशब्दं हेत्वर्थकं दृष्ट्वा साध्यं पूरयति । हेतुत्वमित्यनुपञ्जनीयमिति । अन्वयव्यतिरेकवज्जातीयत्वं यथा व्याख्यातमतिप्रसक्तमत

स च क्वचिदन्वयव्यतिरेकाभ्यामवसीयते, क्वचिद्धर्मिग्राहकात् प्रमाणात्। अन्यथा कार्यात् कारणानुमानं क्वापि न स्यात्। तेन तस्यानुविधानानुपलम्भात्। उपलम्भे वा कार्यलिङ्गानवकाशात्, प्रत्यक्षत एव तत्सिद्धेः। तज्जातीयानुविधानदर्शनात् सिद्धिरन्यत्रापि न वार्यते। तथापि वस्तुगत्यानुविहितान्वयव्यतिरेकमेव कार्यात् कारणं सिद्ध्येत्, अन्यत्र तथा दर्शनादिति चेन्न। बाधेन सङ्कोचात्। विपक्षे बाधकाभावेन चाव्याप्तेः। दर्शनमात्रेण चोत्कर्षसमत्वात्। अस्य चेश्वरे विस्तरो वक्ष्यते। सर्वव्यापकानां सर्वान् प्रत्यन्वयमात्राविशेषे कारणत्वप्रसङ्गो

बोधनी।

दित्यादिकं व्याचष्टे—स च–इति। तुरीयपादं व्याचष्टे-अन्यथा–इति। कुत इत्यत आह—न–इति। येन कार्येण लिङ्गेन कारणमनुमीयते तेन तत्सिद्धेः, तस्य कारणस्य सिद्धेरिति। यद्यप्यनुमित्सिते विशेषे अन्वयव्यतिरेकयोरनुपलम्भस्तथापि तज्जातीयेषु विशेषान्तरेषु तदुपलम्भादन्यत्रापि तज्जातीयदर्शनेन तज्जातीयकारणविशेषानुमानं सिध्यतीत्याशङ्क्याह—तज्जातीय–इति। अन्यत्रापि व्यतिरेकविरहिण्यपि आत्मादावपि समवायिकारणवद् रूपादिषु गृहीतान्वयव्यतिरेकस्य तज्जातीयज्ञानादिकार्यदर्शनात्समवायिकारणत्वेनात्मनोऽनुमानं सुकरमिति भावः। यद्यप्यनुपलब्धान्वयव्यतिरेकस्यापि कारणस्यानुमानं स्यात्। तथापि वस्तुगत्यानुविहितान्वयव्यतिरेकमेव कारणं कार्यात् अनुमीयते रूपज्ञानादिना चक्षुराद्यनुमाने तथादर्शनादित्याह–तथापि–इति। न–इति। अन्वयव्यतिरेकवतः कारणत्वमिति व्याप्तेरदृष्टचरस्य धर्मिणः सिद्धिर्न स्यादिति बाधकतर्केण नित्यविभुकारणव्यतिरिक्तविषयत्वेन संकोचादिति। न परं संकोचः व्याप्तिरेव नास्ति, व्यतिरेकविरहिणः कारणत्वे बाधकाभावादित्याह—विपक्ष–इति। अन्यत्र तथा दर्शनादिति यदुक्तं तत्राह—अन्यत्र–इति। विपक्षे बाधकमन्तरेण साहचर्यदर्शनमात्रेण साध्यधर्मिणि धर्मान्तरापादनं उत्कर्षसमा नाम जातिरिति। एतदेव कथमित्यत आह–अस्य च–इति। क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदितीश्वरानुमाने तत एव शरीरिकर्तृकं स्यादिति प्रसङ्ग उत्कर्षसमा जातिरिति प्रतिपादयद्भिर्व्याप्तिमन्तरेण साहचर्यमात्रदर्शनेन धर्मान्तरोत्कर्षस्य जातित्वं तत्र विस्तरेण वक्ष्यत इति नेदानीं प्रपञ्च्यत इति। यद्वा, किमिदानीमयं न प्रपञ्च इत्यत्राह–अस्य–इति। नन्वस्ति बाधकं नित्यविभूनां सर्वकार्यं प्रति कारणत्वप्रसङ्गः, अन्वयमात्रस्याविशेषात्, तेन

प्रकाशः।

ज्ञनीयम्। तन्निश्चये हेतुमाह—धर्मिधीरिति। बुद्ध्यादिभिः कार्यैः समवायिकारणतयाऽऽत्मादयोऽवगम्यन्त इति धर्मिग्राहकमानादेव तेषां कारणत्वग्रह इत्यर्थः। तेनेति। कार्यव्यक्त्याऽनुमेयकारणव्यक्त्योरन्वयाद्यनुविधानादर्शनादित्यर्थः। अथ कार्यकारणव्यक्त्योरन्वयव्यतिरेकाभ्यां तयोः कारणत्वं गृह्यते। तत्तज्जातीयस्यान्वयव्यतिरेकाभ्यामिति स्वगुणान् प्रति घटादेरन्वयव्यतिरेकज्ञाने घटत्वादिकं न प्रयोजकम्, किन्तु द्रव्यत्वमेव। तच्चान्वयव्यतिरेकवज्जातीयत्वं गुणान् प्रति नित्यविभोरप्यस्तीत्याह—तज्जातीयेति। बाधेनेति। धर्मिग्राहकमानेनात्मादीनां स्वनिष्ठकार्यगुणेषु कारणत्वग्रहाद् बाधोन्नीतपक्षेतरत्वोपाधेर्व्याप्त्यभावादिति भावः। विपक्षेति। दृष्टान्ते तथात्वदर्शनेऽपि तद्रूपं न प्रयोजकं गौरवादित्यर्थः। अन्यत्र तथा दर्शनादित्यत्राह—दर्शनमात्रेणेति। नन्वबाधकाद् गुरोरपि प्रयोजकत्वमित्याशयेन बाधकमाह—सर्वेति। व्यतिरेकासम्भवेऽन्वयमात्रस्यैव कारणताग्राहकत्वे तदविशेषात् सर्वत्र कार्ये नित्य-

---

उत्कर्षसमत्वात्। उत्कर्षसमजात्युत्तरत्वात् दृष्टान्तधर्मस्य व्याप्तिं विना पक्षे प्रसञ्जनमुत्कर्षसमा जातिः, शब्दो यदि कृतकत्वेनानित्यः स्यात् कृतकघटादिवदेव रूपवान् स्यादित्यत्र सा अस्याश्च व्याप्तिं विना प्रसञ्जनीयत्वेनादोषत्वम्।

इति धर्मदत्तोपाध्याय (प्रसिद्धबच्चाझा) कृतकुसुमाञ्जलिप्रथमस्तबकटिप्पणी समाप्ता॥

बाधकमिति चेत् । न । अन्वयव्यतिरेकवज्जातीयतया विपक्षे बाधकेन च विशेषेऽनतिप्रसङ्गात् । तथा हि, कार्यं समवायिकारणवद् दृष्टमित्यदृष्टाश्रयमपि तज्जातीयकारणकम्, आश्रयाभावे किं प्रत्यासन्नमसमवायिकारणं स्यात्, तदभावे निमित्तमपि किमुपकुर्यात्? तथा चानुत्पत्तिः सततोत्पत्तिर्वा सर्वत्रोत्पत्तिर्वा स्यात् । एवमपि निमित्तस्य सामर्थ्यादेव नियतदेशोत्पादे स एव देशोऽवश्या-

बोधनी ।

व्यतिरेकवत एव कारणत्वमिति व्याप्तिः सिद्ध्यतीत्याह—सर्वव्यापकानाम्—इति । न—इति । रूपादिकार्यं प्रति यज्जातीयं कारणं घटाद्यन्वयव्यतिरेकवद् दृष्टं, ज्ञानादिकार्यस्यापि तज्जातीयमेव कारणमनुमीयते । तज्जातीयत्वं नाम समवायिकारणजातीयत्वं सहकारिसमवधाननिबन्धनकारणयोगित्वं च । तत्र समवायिकारणत्वं द्रव्यस्यैव न गुणादेरिति ज्ञानादीनां द्रव्याश्रयत्वं तावत्सिध्यति । न चातिप्रसक्तिः, द्रव्यान्तरस्याकाशादेः सहकारिसन्निधिकृततत्कारणाभावात्, अतस्तद्व्यतिरिक्तद्रव्यभेदस्यैव ज्ञानकारणत्वेन सिद्धिरिति तदेवोपपादयति—तथा हि—इति । तज्जातीयकारणकमिति=दृष्टसमवायिकारणजातीयकारणकमित्यर्थः । अनुमातव्यमिति शेषः । असमवायिनिमित्ताभ्यामेव कार्योत्पत्तौ किं समवायिनेत्यत्राह—आश्रय—इति । समवायिप्रत्यासन्नं ह्यसमवायिकारणं, कथं तत्तदभावे भविष्यतीति मा भूत्समवायिवदसमवाय्यपीत्यत्राह—तदभावे—इति । असमवायिकारणोत्पादकस्य हि निमित्तत्वम्, अतस्तदभावे तदपि न स्यादिति । तथापि किमायातमित्यत्राह—तथा च—इति । कारणमात्रस्याभावे कार्यस्योत्पत्तिरेव न स्यात्, निरपेक्षस्यैवोत्पत्तौ तस्य कादाचित्कत्वकाचित्कत्वे अपि न स्यातामिति । तर्हि निमित्तकारणमेवास्तु मा भूतां समवाय्यसमवायिनी तत्सामर्थ्यादेव देशकालनियतोत्पत्तिर्भविष्यतीत्यत्राह—एवम्—इति । समवाय्यसमवायिनोरभावे निमित्तमपि न स्यादित्युक्तम् । एवमपि यदि निमित्तसामर्थ्यादेव नियतदेशोत्पत्तिः कार्यस्याभ्युपगम्येत भवत्वेवं, तथापि यस्मिन्देशे कार्यमुत्पद्यते स देशोऽपेक्षणीयः

प्रकाशः ।

विभोः कारणत्वप्रसङ्ग इति व्यतिरेकोऽपि तत्प्रयोजक इत्यर्थः । अन्वयेति । रूपादिकार्यं प्रति घटाद्यन्वयव्यतिरेकवद् दृष्टं, तज्जातीयश्चात्मा ज्ञानादिकं प्रति, समवायिकारणजातीय इति यावत् । यद्वा अन्वयव्यतिरेकवति कारणे सहकारिसाकल्यासाकल्याभ्यां कार्यकरणाकरणे दृष्टे । तद्वदत्राप्यन्वयव्यतिरेकवज्जातीयत्वम् । न चैवमतिप्रसङ्गः । व्योमादेर्ज्ञानासमवायित्वात् । तथात्वे चाकाशविशेषगुणतया ज्ञानस्य श्रौतत्वप्रसङ्गात् । दिक्कालविशेषगुणत्वे चाप्रत्यक्षत्वप्रसङ्गः । अत एव तत्र कार्याजनने सहकारिवैकल्यमतन्त्रम् । न चैवमपि व्योमादेः कार्यमात्रे निमित्तत्वापत्तिः । अन्यथासिद्धत्वात् । शब्दं प्रति पूर्ववर्त्तित्वग्रह एवान्यकार्यं प्रति तद्ग्रहात् । अन्यं प्रति पूर्ववर्त्तित्वग्रह एव यस्य यं प्रति तद्ग्रहः, तदन्यथासिद्धमिति प्रागुक्तमित्यर्थः । विपक्षेति । यदीदं कार्यमेतदाश्रयोत्पत्तिप्रयोजकजन्यं न स्यादन्यदेशं स्यात् । एवं कालेऽपीति सर्वत्रोत्पत्तिसततोत्पत्तिशब्दवाच्येन तर्केणेत्यर्थः । उभयं क्रमेण विवृणोति—तथा हीति । आश्रयाभाव इति । समवायिकारणवृत्तेरेवासमवायिकारणत्वादित्यर्थः । ननु निमित्तवति नियतदेश एव कार्योत्पत्तिरिति किं समवायिनेत्यत आह—एवमपीति । आश्रयदेशस्यैव समवा·

प्रकाशिका ।

आह । यद्वेति । तथा च व्योमादेर्ज्ञानं प्रति निरुक्तमन्वयव्यतिरेकवज्जातीयत्वमिति भावः । अन्यं

मकरन्दः ।

अन्वयव्यतिरेकवज्जातीयत्वमतिप्रसक्तमित्यनुशयादाह—यद्वा, अन्वयव्यतिरेकवतीति । अत एवेति । तथा च ज्ञानं प्रति व्योमादेर्न निरुक्तमन्वयव्यतिरेकवज्जातीयत्वमिति भावः । समवायिकारणवृत्तेरेवेति । स्वस्वाश्रयान्यतरसमवायिकारणवृत्तेरेवेत्यर्थः । तथा चोभया·

पेक्षणीयः स्यात् । तथा च सामान्यतो देशसिद्धावितरपृथिव्यादिबाधे तदतिरिक्तसिद्धिं को वारयेत् । एवमसमवायिनिमित्ते चोहनीये ॥ १९ ॥

बोधनी ।

कार्येण, स एव नः समवायिकारणमिति । नन्वस्तु तावता समवायिनः सिद्धिः किमायातमात्मसिद्धेरित्याह–तथा च–इति । सामान्यतस्तावत्कश्चिद्देशो भवतैवाभ्युपगतः, तत्र ज्ञानादयः पृथिव्याद्यष्टद्रव्याश्रया न भवन्ति मानसप्रत्यक्षत्वात्, य उक्तसाध्या न भवन्ति न त उक्तसाधना यथा रूपादयः पृथिव्या इत्यनेन पृथिव्याद्याश्रयत्वस्य बाधे सति सामान्यतो दृष्टानुमानपूर्वकात् परिशेषानुमानादष्टद्रव्यातिरिक्तद्रव्यसिद्धेः को वारयिता, न कश्चित् । तथा हि ज्ञानादयः क्वचिदाश्रिताः कार्यत्वाद्रूपादिवदिति सामान्यत आश्रयसिद्धौ ज्ञानादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रयास्तदाश्रयत्वबाधे सति कार्यत्वात्, न यदेवं न तदेवं यथा रूपमिति । समवायिवदसमवायिनिमित्ते च कारणे बाधकबलादेवोहनीये इत्याह—एवम्–इति । समवायिमात्रकारणत्वेऽपि तन्नित्यत्वात् कार्यस्य सततोत्पत्त्यादिप्रसङ्गः, असमवायिमात्रकारणत्वे इन्द्रियार्थसन्निकर्षं विनापि आत्ममनःसंनिकर्षादेव बाह्यार्थविषयज्ञानोत्पादप्रसङ्गः, निमित्तमात्रादुत्पत्तावपि आत्ममनःसंनिकर्षाभावेऽपि तदुत्पादप्रसङ्ग इत्यादि बाधकमूहनीयम् ॥ १९ ॥

प्रकाशः

यित्वादित्यर्थः । तथापि समवायिविशेषसिद्धिः कुत इत्यत आह । तथा चेति । प्रसिद्धसमवायिवृत्तित्वबाधकसहकृतं समवायिवृत्तित्वसाधकमेवाप्रसिद्धसमवायि विषयीकरोति । सामान्यग्राहकस्यापि मानस्य सहकारिविशेषाद् विशेषे पर्यवसानदर्शनादित्यर्थः । यदा तु समवायिवृत्तित्वानुमानानन्तरं बाधकावतारः, तदा केवलव्यतिरेकिणस्तत्सिद्धिरिति भावः । एवमिति । तदन्यतराभावेऽपि कार्योत्पत्तिप्रसङ्गेनेत्यर्थः । वस्तुतः समवायिकारणत्वग्रहे

प्रकाशिका ।

प्रतीति । स्वरूपसम्बन्धात्मककारणतायां मानाभावे सत्येवं कल्पनादिति भावः । प्रसिद्धसमवायीति । सामान्यतो दृष्टानुमानमेव बाधकोपनीतं पृथिव्याद्यन्यत्वं समवायिनि विषयीकरोति सामान्यत एवोपनयस्य प्रमाणमात्रे सहकारित्वादिति भावः । यद्वा सामान्येनैव रूपेण तन्मात्रं विषयीकरोति सामान्यतो दृष्टं बाधकावतारे, तदनवतारे तु तमन्यत्र विशेषं विषयीकरोतीति भावः । केवलेति । केवलव्यतिरेकिण एवाष्टद्रव्यातिरिक्तद्रव्यप्रकारसिद्धिरिति भावः । वस्तुत इति । अत्र केचित्, इदञ्चापाततो भरस्तु प्रथमकल्प एव, तथा हि समवायिकारणत्वं विशिष्टं तत्र च समवायित्वं मानान्तरेण गृहीत्वोक्तग्राहकेन कारणताग्रहे सत्यर्थसमाजमहिम्नैव विशिष्टग्रहः, अन्यथा समवायिकारणत्वस्यापि विशिष्टस्य ग्राह्यत्वे ग्राहकान्तरमाश्रियेत । न हि तत्र संसर्गाभावः प्रयोजको निमित्तसाधारण्यात्, नाप्यन्योन्याभावः, तदधिकरणे कार्यानुत्पादेन तस्य तत्राभावात् । किञ्चान्योन्याभावात्मकव्यतिरेको न समवायिकारणताग्राहको निमित्तीभूतकालादिसाधारण्यात् । न च यत् कपालं तत्र समवायेन घट इत्येवमात्मकस्यान्वयस्य यन्न कपालं न तत्र समवायेन घट इत्येवं रूपस्य च व्यतिरेकस्य सम-

मकरन्दः ।

श्रयान्तर्भाव इति भावः । तथापीति । असमवायिनोऽप्यधारत्वसम्भवादिति भावः ।

वस्तुत इति । यद्यपि समवायित्वसमानाधिकरणं कारणत्वमेव समवायिकारणत्वम् । तच्च विशिष्टं न ग्राह्यं, किन्तु गोत्वादिसमवायित्वसाधारणसमवायित्वग्राहकसमाजात् कारणत्वग्राहकादेवार्थसमाजमहिम्ना विशिष्टसिद्धिः । अन्यथा समवायिकारणत्वस्यापि विशिष्टस्य ग्राह्यत्वे ग्राहकान्तरसम्बन्धमनुसियेत । न हि तत्र संसर्गाभावग्रहः प्रयोजकः । निमित्तसाधारणत्वात् । नाप्यन्योन्याभावग्रहः । तदधिकरणककार्यानुत्पादेन तस्य तत्राभावात् । यदि च कारणत्वमात्रमेव ततो ग्राह्यं तस्य निमित्तसाधारणतया ग्राहकस्य निमित्तसाधारण्यं न दोषस्तदा प्रकृतेऽपि तुल्यम् । किञ्च संसर्गाभावग्रहस्य निमित्तसाधारणतया यदि न तद्ग्राहकत्वं, तदा निरुक्तस्यापि

बोधनी ।

एवं भगवतः परमेश्वरस्य विचित्रविश्वप्रसङ्गेन प्रपञ्चरचनायां सहकारिकारणं तदुपज्ञसंप्रदायकं च धर्माधर्माख्यमलौकिकं हेतुं प्रसाध्य परिच्छेदार्थमुपसंहरन्नयमेव, भगवतः सहकारिशक्तिनियमेऽपि,च तत्तद्वादिभिः तत्तत्प्रवृत्तिनिमित्तयोगेन मायादिशब्दैर्जगत्कारणत्वेनाभिलप्यत इति प्रतिपा-

प्रकाशः ।

अन्योन्याभावरूपव्यतिरेक एव प्रयोजको, न तु संसर्गाभावग्रहः । निमित्तसाधारणत्वात् । यत् कपालं तत्र घटो, यन्न कपालं तत्र नेतिवद् य आत्मा तत्र ज्ञानादि, यन्नात्मा तत्र तद् नेति तद्ग्रहस्य सत्त्वात् । तथापि घटादिकं प्रति आत्मनो निमित्तकारणत्वग्रहः कुतः । तत्रोक्तगत्यभावात् । इत्थं, प्रयत्नवदात्मसंयोगश्चेष्टाद्वारा घटहेतुरिति प्रयत्नवदात्माऽपि तद्धेतुः । न चैवमपि संयोगो हेतुर्नात्मेति वाच्यम् । संयोगमात्रस्याहेतुत्वेन संयोगिविशेषितस्यैव हेतुत्वात् । अन्यथा दण्डसंयोगस्यैव घटहेतुत्वेन दण्डस्यातत्त्वप्रसङ्गात् । अथात्मसंयोगोऽपि हेतुरसिद्धः । तदभावेन कार्याभावादर्शनादिति चेन्न । व्यधिकरणगुणजन्यकार्यत्वेन तत्समानाधिकरणगुणजन्यत्वानुमानात् । स्पर्शवद्वेगवद्द्रव्याभिघातजक्रियायां तथादर्शनात् । न च मूर्तमात्रसमवेतासमवायिकारणकत्वमुपाधिः । कार्यकारणभावेन हेतोः साध्यव्याप्यतया तद्व्यापकत-

प्रकाशिका ।

वायिकारणताग्राहकत्वमिति वाच्यम् । तथा सति समवायित्वस्य प्रथमत एव ग्रहे कारणतामात्रमेव सिद्धमिति सिद्धं नः समीहितमिति वदन्ति । तत्तुच्छम् । एवमपि अधिकरणस्य समवायिनः तद्भिन्नस्य वा कारणतान्योन्याभावात्मकव्यतिरेकग्राह्यत्वेत्यत्र बाधकानुपन्यासात् । एवञ्च समवायिकारणताग्रह इत्युपलक्षणमधिकरणनिष्ठकारणताग्रह इति द्रष्टव्यम् । अत एव कालादेरप्येवमेव कारणताग्रहो न तु संसर्गाभावग्रह इत्यात्मादावसम्भवादिति शेषः । नन्वेवं संसर्गाभावः क्वापि न कारणताग्राहको नेत्याह । **निमित्तसाधारणत्वादिति** । निमित्तासमवायिसाधारणत्वात् । संसर्गाभावस्येति शेषः । **तथापीति** । यद्यप्यदृष्टाधारत्वमात्मनः प्रकृतं तच्च समवायिकारणत्वसिद्ध्यैव बोधितम् तथापि शिष्यहितैषितया विचारोऽयम् । नन्वेवं संयोगिनोऽवच्छेदकत्वमस्त्वित्यत आह । **अन्यथेति** । यद्यपि संयोग्यवच्छेदकत्ववादिनोऽत्रेष्टापत्तिः । तथापि कारणसंयोगाश्रयस्यावश्यं कार्य्यजनकत्वमिति नियमाभिप्रायेणेदम् । **व्यधिकरणगुणेति** । प्रयत्नस्यान्वयव्यतिरेकाभ्यां चेष्टाकारणत्वे सिद्धे यः स्पन्दो यदीयव्यधिकरणगुणजन्यः स तत्संयोगजन्य इति व्याप्त्याऽऽत्मसंयोगस्य स्पन्दजनकत्वमित्यर्थः । फलगुरुत्वजन्योत्पतने व्यभिचार इति स्वव्यधिकरणेति । घटजन्यतरस्पन्दे व्यभिचार इति गुणेति । कपालरूपजन्ये घटरूपे व्यभिचार इति कार्यपदस्य स्पन्दपरत्वम् । ईश्वरसंयोगस्यापि घटादिकर्मजनकत्वमिति नेश्वरज्ञानादिजन्यघटादिकर्मणि व्यभिचारः । न च फलकान्तरवृत्तिद्रव्यगुरुत्वजन्यायां फलकान्तरवर्तिद्रव्योर्द्ध्वक्रियायां व्यभिचार इति वाच्यम् । गुरुत्वाधारद्रव्यफलकसंयोगस्यापि तुलादण्डघटितसम्बन्धेन तत्क्रियाजनकत्वात् विपक्षबाधकञ्चात्र कारणप्रत्यासत्तेः कारणत्वावश्यकत्वमेवाप्रत्यासन्नजनकत्वेऽतिप्रसङ्ग एवेति । **न चेति** । साधन-

मकरन्दः ।

तथात्वं न स्यात् । तस्यापि देशकालरूपाधिकरणात्मकनिमित्तसाधारण्यत्वात् । न च यत् कपाले तत्र समवायसम्बन्धेन घटः, यन्न कपालं न तत्र समवायेन घट इति विवक्षितमिति वाच्यम् । तर्हि समवायित्वं प्रथमत एव ग्राह्यमिति कारणत्वमात्रमेव तद्ग्राह्यमिति सिद्धं नः समीहितम् । सम्बन्धान्तरगर्भस्य च तस्य देशादिकारणत्वग्राहकत्वं कल्प्येत । तथापि विशिष्टं न ग्राह्यं, किन्तु समवायिनः, कारणत्वम् । एवमपि ग्राह्यमित्यत्र पूर्वकल्प एव वा तात्पर्यम् ।

नन्वेवं संयोगिनोऽवच्छेदकत्वमेवास्त्वित्यत आह—**अन्यथेति** । यद्यपि संयोगावच्छेदकत्ववादिनस्तुल्यमिदं, तथापि कारणसंयोगाश्रयस्यावश्यं कारणत्वमिति नियमाभ्युपगमावष्टम्भेनेदम् । **व्यधिकरणगुणेति** । एतच्च प्रागेव व्याख्यातप्रायम् । **न चेति** । साधनव्याप्तिवार-

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ॥
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

इति श्रीन्यायकुसुमाञ्जलौ प्रथमः स्तवकः ॥ १ ॥

---

बोधनी ।

दयन्नुत्तरोत्तरं समीचीनतरन्यायपरिस्फूर्त्तये स्वचेतसि भगवतः सान्निध्यं प्रार्थयते-इत्येषा-इति। इति=एवमुपपादितैषा असमा प्रत्यात्मसमवेतत्वेनासाधारणी विचित्रा धर्माधर्माख्या शक्तिर्नैयायिकैर्देवस्य सहकारिशक्तिरिति व्युत्पादिता । जीवादृष्टसापेक्षो भगवान् जगन्ति निर्मिमीत इति तेषां च स्थितिः । माध्यमिकैस्तु दुरुन्नीतितः स्वरूपसामर्थ्यादेवमियमित्युन्नेतुमशक्यत्वाद् इन्द्रजालादिमायासादृश्यान्मायेति । सांख्यैस्तु मूलकारणत्वात्प्रकृतिरिति, ते हि प्रकरोति प्रपञ्चमिति प्रकृतिशब्दं निराहुः। वेदान्तवादिनस्तु प्रबोधात्तत्त्वसाक्षात्काराद्बिभेति तिरोधत्ते इत्यविद्येति। यथा हि मिथ्याज्ञानं तत्त्वज्ञानेन विनश्यति तथा धर्माधर्मावप्युत्पन्नतत्त्वज्ञानस्य भोगद्वारेण विलीयते, ततस्तयोरेवाविद्यात्वादविद्यामात्रविलसितः प्रपञ्च इति तेषामाघोषः । एवं तत्तत्प्रवृत्तिनिमित्तवशेन मायादिशब्दैरुदिता यस्य सहकारिशक्तिरसौ देवो गुणतयाधिष्ठानमतीत्यावस्थित एवोपरतजगन्निर्माणादिव्यापारः सोऽस्मदीयं समस्तव्यापारं साक्षात् कुर्वन्मम चेतसि संनिधत्तामिति ॥२०॥

उदयनगम्भीरभावप्रकटननिपुणेन वरदराजेन । व्याख्यात एव गहनः कुसुमाञ्जलेः प्रथमखण्डः ॥

इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ न्यायकुसुमाञ्जलिटीकायां प्रथमः परिच्छेदः ॥

प्रकाशः

योपाधेः साध्याव्यापकत्वात् ॥ १९ ॥

साधनमात्रसमर्थनेऽपि प्राधान्याददृष्टं स्तबकार्थमुपसंहरन् मायिकाद्यागमाविरोधमाह—इत्येषेति । प्रथम इतिशब्द उपसंहारे । यस्य देवस्य एषा अदृष्टरूपा सहकारिशक्तिः सहकारिकारणम् असमा मायेत्युदिता । "यन्मायाप्रभवं विश्व"मित्यत्र मायाशब्देनादृष्टस्याभिधानात् । असमत्वे हेतुः–दुरुन्नीतितः । अदृष्टमाययोर्महाविचारोन्नेयत्वात् । "प्रकृतिप्रभवं विश्व"मित्यत्राप्यागमेऽदृष्टरूपा शक्तिरेव प्रकृतिरुदिता । कुतः ? । मूलत्वात् । मूलकारणमेव प्रकृतिशब्दार्थः । अदृष्टञ्च तथा । अविद्याप्रभवत्वागमे सैवाविद्येत्युदिता । यतः प्रबोधात्=तत्त्वज्ञानादुभयोरपि भीतिः । अविद्यावत्तज्जनकादृष्टस्यापि ततो भयात् । तत्त्वज्ञाने तदनुत्पत्तेः ॥ प्रपञ्चः=प्रतारणा, तद्रचनायाः कल्लोलः=परम्परा, तस्य कोलाहलः=किंवदन्ती स विरतो यस्य, स शान्तो=द्वेषादिहीनो मम मनसि । अभिरतिं=विजातीयज्ञानानन्तरितचिन्तां स्वविषयाम् । साक्षात् साक्षितया=तत्र प्रत्यक्षेण साक्षीभवन् । बध्नातु=दृढीकरोत्वित्यर्थः ॥ २० ॥

इति श्रीमन्महामहोपाध्यायश्रीवर्द्धमानविरचिते न्यायकुसुमाञ्जलिप्रकाशे प्रथमः स्तबकः ॥ १ ॥

प्रकाशिका ।

व्याप्तिपरिहाराय मात्रेति । तथा च चेष्टादावेव साधनाव्यापकत्वमिति भावः ॥ १९–२० ॥

इति श्रीभगीरथविरचितायां कुसुमाञ्जलिप्रकाशिकायां प्रथमः स्तबकः ॥ १ ॥

मकरन्दः ।

णाय—मात्रेति । तथा च चेष्टादावेव साधनाव्यापकत्वमिति भावः । न च मात्रपदं विनापीश्वरज्ञानादिरूपव्यधिकरणगुणजन्यशब्दजशब्दे साधनाव्याप्तिरिति वाच्यम् । मूर्तवृत्तित्वस्य कार्यविशेषणस्य प्रागेवोक्तत्वात् । अन्यथा तत्रैव व्यभिचारापत्तेरिति ॥ २० ॥

इति श्रीमहामहोपाध्यायदेवदत्तात्मजमहामहोपाध्यायश्रीरुचिदत्तकृतौ
कुसुमाञ्जलिमकरन्दे प्रथमः स्तबकः ॥ १ ॥

श्रीगणेशाय नमः ॥

# न्यायकुसुमाञ्जलौ

## द्वितीयस्तवकः ।

**तदेवं सामान्यतः सिद्धेऽलौकिके हेतौ तत्साधनेनावश्यं भवितव्यम् । न च तच्छक्यमस्मदादिभिर्द्रष्टुम् । न चादृष्टेन व्यवहारः । ततो लोकोत्तरः सर्वानुभावी सम्भाव्यते ।**

---

बोधनी ।

अथ द्वितीयं परिच्छेदमारभमाणस्तन्निराकरणीयामाशङ्कामुत्थापयितुं यथा साधितपूर्वेणापूर्वेणेश्वरसिद्धिस्तद्दर्शयति —**तदेवम्**— इति । तदिति वाक्योपक्रमे, एवमित्युक्तप्रकारपरामर्शः, सामान्यतः=सामान्यतो दृष्टेन पूर्वोक्तानुमानेन । **अलौकिके हेतौ** अदृष्टे सिद्धे कार्यत्वात्तस्य साधनेन ज्योतिष्टोमादिनाऽवश्यं भवितव्यम् । न च तत्साधनमस्मदादिभिः पिहितलोचनैः शक्यदर्शनम् । न च तथाऽदृष्टेन तेनानुष्ठानरूपो व्यवहारः सम्भवति । तस्मादतीन्द्रियार्थसाक्षात्कारैकक्षमः सर्वातिशायी कश्चिदस्ति यदुपज्ञोऽयमर्वाचीनानां तद्विषयो व्यवहार इति ।

प्रकाशः ।

द्वितीयां विप्रतिपत्तिमुत्थापयितुं भूमिकामारचयति । **तदेवमिति** । तस्य च जन्यतया तत्कारणयागादिदर्शी कश्चित् स्वीकर्तव्य इत्यर्थः । **न चेति** । यागादिस्वर्गसाधनत्वस्यातीन्द्रियत्वादित्यर्थः । तद्दर्शनाभावे दोषमाह । **न चेति** । व्यवहारश्च यागादिस्वर्गसाधनताबोधकशब्दरूपः, अदृष्टाधिष्ठानरूपश्च । तदुभयमदृष्टसाक्षात्कारं विना न सम्भवतीत्यस्मदादिविलक्षणः सर्वज्ञः कल्प्यत इत्यर्थः । वेदवाक्यजज्ञानस्य हि प्रामाण्यमनिश्चित्य बहुधनव्ययाऽऽयाससाध्ये यागादौ प्रवृत्तिर्न स्यात् । प्रामाण्यं च गुणजन्यं, गुणश्च शाब्दे ज्ञाने प्रयोगहेतुवाक्यार्थयथार्थज्ञानवत्त्वमिति भावः ।

प्रकाशिका ।

**तस्य चेति** । यागादिजन्यतया तस्य तत्कारणत्वे यागादिदर्शी कश्चित् स्वीकरणीय इत्यर्थः । **शब्दरूप इति** । शब्दप्रयोगस्यापि व्यवहारविशेषत्वादिति भावः । **अदृष्टाधिष्ठानेति** । कारणस्याचेतनस्य चेतनाधिष्ठानं विना कार्याजनकत्वादिति भावः । **तदुभयमपीति** । यद्यपि स्वर्गकामो यजेतेत्यादिशब्दप्रयोगे नादृष्टज्ञानापेक्षा, एतद्वाक्यार्थस्यादृष्टाघटितत्वात् । तथापि स्वर्गसाधनतां प्रतीत्य तादृशवाक्यप्रयोगः, स्वर्गसाधनताप्रतीतिश्चादृष्टद्वारैवाऽऽशुविनाशियागादेरिति भगवतोऽदृष्टसाक्षात्कार आवश्यकः, ज्ञानान्तरस्य तत्रासंभवादिति भावः । ननु यागादेः स्वर्गसाधनताबोधकोऽनादिरेव वेद इति कथमुपदेष्टुरपेक्षेत्याशङ्क्याह । **वेदवाक्यजज्ञानेति** । तथा चानादित्वे

मकरन्दः ।

**तस्य चेति** । तस्य जन्यतया तत्कारणं यागादिः स्वीकर्तव्यः, ततः स्वर्गसाधनत्वेन तदुपदेशकतया तथात्वेन तद्दर्शी कश्चित् स्वीकर्तव्य इत्यर्थः । **तदुभयमिति** । यद्यपि तद्विनाऽपि तादृशरूपो व्यवहारः सम्भवत्येव, तथाऽप्यतीन्द्रियसाक्षात्कारं विनेत्यर्थ इत्येके । तदीयस्वर्गसाधनतासाक्षात्कारोऽदृष्टविषयतानियत इत्याशयेन तथोक्तमित्यन्ये । ज्ञानान्तरस्यासम्भवात् साक्षात्कारं विनेत्युक्तम् । उत्तरमन्यमवतारयितुमाह । **वेदवाक्यजेति** ।

ननु नित्यनिर्दोषवेदद्वारको योगकर्मसिद्धसर्वज्ञद्वारको वा धर्मसम्प्रदायः स्यात्, किं परमेश्वरकल्पनयेति चेत्। अत्रोच्यते-

**प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्॥**
**तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः ॥१॥**

---

बोधनी।

अत्रान्यथासिद्धिं मीमांसकः शङ्कते। **नन्विति**। नित्यत्वेन पुरुषानुप्रवेशाभावात् निर्दोषं स्वतः सिद्धप्रामाण्यं च वेदमेव मूलमवलम्ब्यायं धर्मसंप्रदायोऽस्तु, तन्नित्यत्वासिद्धावपि साङ्ख्यादिमतावलम्बनेन कर्मयोगसिद्धसाक्षात्कारविषयीकृतधर्माधर्माः कपिलादय एव सन्तु मूलमस्य, किमनेन परमेश्वरेणानपेक्षितसमुद्रवालुकाकीटसंख्यादिसर्वविषयज्ञानेनेति तदुत्तरत्वेन परिच्छेदप्रतिपाद्यमर्थं संकलय्याह-उच्यते—

**प्रमायाः**-इति। न तावत् स्वतः प्रामाण्यं, प्रमायाः कारणगुणतन्त्रत्वात्। न च वेदस्य नित्यत्वं शब्दस्यैवानित्यत्वात्। परतन्त्रपुरुषपरतन्त्रतया प्रवाहाविच्छेदलक्षणं नित्यत्वमस्तीति चेत्तदपि नास्ति सर्गप्रलययोः सम्भवेन प्रवाहस्यैव परिच्छेदात्। न च कपिलादिद्वारा सम्प्रदायसिद्धिः, ततः परमेश्वरादन्यस्मिन् कपिलादौ प्रमाणत्वेन विश्रम्भाभावात्। न हि योगबलप्रभाविता भावना प्रमात्मकमेव साक्षात्कारं करोतीति नियमः, ततो नित्यसर्वज्ञसिद्धिरिति ॥ १ ॥

प्रकाशः।

अन्यथासिद्धिमाह। **नन्विति**। वक्तृदोषेणाप्रामाण्यशङ्कया निष्कम्पप्रवृत्तिर्न स्यात्। सा च नित्यत्वादवक्तृके वेदे नास्तीति तत एव प्रामाण्यं किं वक्तृगुणेनेत्यर्थः। वक्तृगुणजन्यत्वेऽप्यन्यथासिद्धिमाह। **योगेति**। योगकर्मभ्यां ये सिद्धाः सर्वज्ञास्त एव वेदकारा अदृष्टाधिष्ठातारश्चेति न नित्यसर्वज्ञसिद्धिरित्यर्थः। यद्यप्यन्यथासिद्धिरपि प्रमाणाभाव एव पर्यवस्यति, तथापि साक्षात् प्रमाणाभावोऽग्रे दूष्यः, अन्यथासिद्धिद्वारा त्वत्रेत्यर्थभेदः।

प्रमामात्रे गुणजन्यत्वसिद्धौ शाब्दप्रमायामपि तज्जन्यत्वसिद्धिर्भविष्यतीत्याशयेनाह। **प्रमायाः इति**। अनित्यप्रमाया इत्यर्थः। ननु नित्यत्वाद् वेदानां, कर्तृजन्यत्वेऽपि महाजनपरिग्रहात् प्रामाण्यं निश्चित्य यागादौ प्रवृत्तिर्भविष्यतीत्यत आह। **सर्गेति**। तथा च वेदमहाजनयोरभावात् केन कस्य परिग्रह इति भावः। द्वितीयामन्यथासिद्धिं निरस्यति। **तदन्यस्मिन्निति**। अनित्यज्ञानवत्त्वेन भ्रमादिशङ्काकलङ्कितत्वेन नित्यसर्वज्ञपूर्वकत्वाद् न प्रकारान्तरसम्भव इत्यर्थः।

प्रकाशिका।

प्रामाण्यमेव तस्य न स्यादित्यवश्यमुपदेष्टुरपेक्षेति भावः। **अत्रेति**। प्रमायां गुणजन्यत्वमेव न, दोषाभावेनैवान्यथासिद्धेरित्यर्थः। **वक्तृगुणजन्यत्वेऽपीत्यु**पलक्षणमदृष्टाधिष्ठानेऽपीति द्रष्टव्यम्। **पर्यवस्यतीति**। तथा च द्वितीयपञ्चमयोरर्थभेद इति भावः। **अग्रे**=पञ्चमस्तबके। अन्यथासिद्धिद्वारा यः प्रामाण्याभावः सोऽत्र दूष्योऽन्यथासिद्धिनिराकरणेनेत्यर्थः। **ननु नित्यत्वादिति**। नित्यत्वे प्रमाणसिद्धे दोषाभावादेव प्रामाण्यं महाजनपरिग्रहेण निश्चेयमिति भावः। **तथा चेति**। नित्यत्वञ्च न प्रामाणिकमिति भावः। साध्यस्यार्थानुवादपुरःसरं विरोधमपि हेत्वाभासमाह।

मकरन्दः।

**अग्रे**=पञ्चमस्तबके। **अन्यथासिद्धिद्वारा**=तन्निराकरणद्वारेत्यर्थः।

तथा हि । प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति तद्विशेषत्वात् अप्र-

बोधनी ।

प्रमापारतन्त्र्यं तावदनुमानेनोपपादयति—तथा हि इति । प्रमात्वं नामौपाधिकसामान्यविशेषः । तस्य नित्यत्वेनानुत्पाद्यत्वात् , तदाश्रयो यथार्थानुभवलक्षणो ज्ञानविशेषः प्रमाशब्देन पक्षीक्रियते । ज्ञप्तिपक्षे च विरोधात् प्रामाण्यशब्देन प्रमात्वमेव पक्षीकरिष्यते, सेयं प्रमाऽप्रमासाधारणज्ञानसामान्यहेत्वधीना भवति, कार्यत्वे सति ज्ञानविशेषत्वादप्रमावदिति । व्याप्तिद्वयमत्राभिसंहितं—यो यत्कार्यविशेषः स तत्सामान्यहेत्वतिरिक्तहेत्वधीनः, यथा कलमाङ्कुरः, न ह्यङ्कुरविशेषः कलमाङ्कुरोऽङ्कुरसामान्यहेतोर्बीजादेव भवति किन्तु तद्विशेषात् कलमबीजात् , कार्यविशेषश्चेयं प्रमा तस्मात् तथेत्येका सामान्यव्याप्तिः । अपरा च—यो ज्ञानविशेषः स ज्ञानसामान्यातिरिक्तहेतुको यथाऽप्रमेति विशेषव्याप्तिरिति । ज्ञानं नाम ज्ञानत्वाभिव्यञ्जिका विषयप्रवणा व्यक्तिः, तद्विशेषत्वमनुभवादीनामिति । अत्र द्रव्यविशेषस्याकाशादेः, ज्ञानविशेषस्य चेश्वरप्रमाया नित्यत्वाद्धेत्वपेक्षैव नास्ति, दूरेत त्सामन्यातिरिक्तहेत्वधीनत्वम् । ततश्च तद्विशेषत्वमनैकान्तिकं मा भूदित्युक्तं—कार्यत्वे सति—इति । पक्षीकृतस्यापि कार्यत्वेन विशेषणान्नेश्वरप्रमांशे बाधादयः प्रादुष्यन्ति । अनुमानस्य विपक्षे

प्रकाशः ।

प्रामाण्यस्य गुणजन्यत्वं साधयति । प्रमेति । हेत्वधीनत्वे ज्ञानहेत्वधीनत्वे च साध्ये सिद्धसाधनं स्यात् , अतो ज्ञानहेत्वतिरिक्तहेत्वधीनेति साध्यम् । ननु प्रमाया ज्ञानत्वेन तद्धेतुजन्यत्वेन बाधः, ज्ञानाजनकजन्यत्वे विरोधः । अप्रमायां तदसिद्धेर्दृष्टान्तासिद्धिः, व्यर्थविशेष्यत्वं च, घटादावपि साध्यसत्त्वेन कार्य्यत्वस्यैव व्याप्तिमत्त्वात् । व्यर्थविशेषणत्वं च, व्यावर्त्येश्वरज्ञानस्य परं प्रत्यसिद्धेः । नापि ज्ञानसामान्यहेत्वन्यहेतुजन्येति साध्यम् , उक्तदोषात् । ज्ञानसामान्यं च ज्ञानत्वं वा सर्वज्ञानव्यक्तयो वा ? आद्ये हेत्वसिद्धिः । अन्त्य इन्द्रियादिभिः सिद्धसाधनम् । नापि ज्ञानत्वावच्छिन्नकार्यत्वान्यकार्यत्वप्रतियोगिककारणजन्येति साध्यम् । ज्ञानत्वस्य नित्यानित्यवृत्तितया कार्यत्वानवच्छेदकत्वात् । जन्यत्वेन ज्ञानविशेषणे प्रत्यक्षाद्यात्मकज्ञानविशेषजनकैरिन्द्रियादिभिः सिद्धसाधनम् । अत एव, प्रमात्वं ज्ञानत्वावच्छिन्नकार्यत्वनिरूपितकारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकं, ज्ञानत्वसाक्षाद्व्याप्यधर्मत्वात् , अप्रमात्ववदिति निरस्तम् ।

प्रकाशिका ।

ज्ञानाजनकेति । ज्ञानाजनकत्वं च पारिमाण्डल्यादौ प्रसिद्धम् । मिश्रास्तु विरोधः = प्रतिज्ञाविरोधः, तथा च ज्ञानहेतुजन्यत्वे बाधः प्रागुक्तः, इदानीन्तु साध्याप्रसिद्ध्या प्रतिज्ञाया विरोधे वाक्यार्थबोधाजनकत्वं, पारिमाण्डल्यादेरप्यभावसाक्षात्कारं प्रति प्रत्यासत्तिघटकतया जनकत्वेन ज्ञानाजनकत्वाप्रसिद्धेरिति विकल्प्य योजयन्ति । हेत्वसिद्धेरिति । ज्ञानत्वकारणाप्रसिद्धेरित्यर्थः । तथा च साध्याप्रसिद्धिरिति भावः । नित्यानित्येति । अनित्यपदमत्र सम्पातायातम् । एवमन्यत्रापीदृशस्थले । ज्ञानत्वसाक्षादिति । ज्ञानत्वसाक्षाद्विभाजकधर्म्मत्वादित्यर्थः । विद्या चाविद्या चेति प्रथमं विभागादेतस्योपपत्तिः, यदि च प्रमात्वं चाप्रमात्वञ्चानुभवत्वव्याप्यमेव

मकरन्दः ।

साध्यार्थविवरणपूर्वकं विरोधमपि हेत्वाभासमाह । ज्ञानाजनकेति । एतेन बाधविरोधयोरुभयत्रापि सत्त्वाद्विकल्प्य विरोधाभिधानमसङ्गतमित्यपास्तम् , एकत्रैव साध्ये दोषद्वयस्योक्तत्वात् । हेत्वसिद्धिरिति । ज्ञानत्वहेत्वप्रसिद्धिरित्यर्थः । तथा च तद्घटितसाध्यस्याप्रसिद्धिरिति भावः । ज्ञानत्वसाक्षादिति । ज्ञानसाक्षाद्विभाजकोपाधित्वादित्यर्थः । एतेन, ज्ञानत्वव्याप्यज्ञानान्यान्यत्वव्याप्यत्वेन प्रमात्वस्यासिद्धिः । तद्व्याप्यजात्यव्याप्यत्वगर्भत्वे प्रमाऽप्रमाऽन्यतरत्वादौ व्यभिचार

प्रकाशः।

प्रमात्वस्य नित्यानित्यवृत्तित्वात्। अनित्यप्रमात्वं कार्यतावच्छेदकं कार्यमात्रवृत्तिधर्मत्वात्, अप्रमात्ववदित्यपि नीलघटत्वादिनाऽनैकान्तिकम्। तत्र विशेषद्वयकारणेनान्यथासिद्धत्वात्। प्रमाऽप्रमाकार्यवैचित्र्यं च, यथैकजातीयसामग्रीव्यक्तिभेदाद् घटद्वयं जायते तद्वदेव ज्ञानसामग्रीव्यक्तिभेदादुपपन्नम्। वैजात्यमपि तुल्यजातीयसामग्रीजन्यत्वेऽपि यमजवैधर्म्यवत् स्यात्। न च प्रमात्वावच्छिन्नकार्यत्वं कथमननुगतहेतुकमिति वाच्यम्। उक्तयुक्त्या तस्य कार्यतानवच्छेदकत्वात्। अनित्यप्रमा प्रमाऽप्रमोभयहेतुभिन्नहेतुजन्या जन्यत्वादप्रमावदिति चेन्न। कारणव्यक्तिभेदजन्यत्वेन सिद्धसाधनाद्, अप्रमायां तदसिद्धेश्च। न चाप्रमायां दोषजन्यत्वात्तथा। दोषस्य पित्तादेः स्वविषयप्रमायामपि हेतुत्वात्। अनित्यप्रमा स्वविरोध्यनुभवप्रतिबन्धकजन्या अनित्यानुभवत्वात्, अप्रमावत्। यद्वा, अनित्यप्रमा प्रमाऽप्रमान्यतरप्रतिबन्धकजन्या प्रमाऽप्रमान्यतरत्वादप्रमावदिति चेद्, न। प्रमाजनकासाधारणव्यक्तिविशेषस्याऽप्रमाप्रतिबन्धकत्वं प्रमाजनकत्वं चेति सिद्धसाधनात्।

अत्रास्मत्पितृचरणाः। एवमप्रमाऽपि स्वत एव स्याद्, न परतः, प्रमावदसाधारणकारणादेव तदुत्पत्तौ दोषस्य तत्राहेतुत्वापत्तेः। यदि च ज्ञानसामग्र्यां सत्यां विशेषादर्शनादेर्दोषस्यान्वयाद्यनुविधानाद्दोषो हेतुः, तर्हि विशेषदर्शनादेर्गुणस्यान्वयाद्यनुविधानात् प्रमायामपि गुणो हेतुरिति तुल्यम्। अपि च, यत्कार्यं यत्कार्यविजातीयं तत् तत्कारणविजातीयकारणजन्यं, यथा घटविजातीयः पटः, अन्यथा कार्यवैजात्यस्याकस्मिकत्वापत्तेः। घटज्ञानमपि कार्यं तद्विजातीयकार्यकारणविजातीयकारणजन्यमिति न व्यभिचारः। एवं प्रागुक्तानुमानेष्वपि न सिद्धसाधनम्। अनुगतस्य प्रमाहेतुत्वेनासाधारणव्यक्तिभेदस्याहेतुत्वात्। एवमनित्यप्रमात्वमनित्यज्ञानत्वावच्छिन्नकार्यत्वप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वाद्, अप्रमात्ववदित्यनित्यप्रमायामप्रमासाधारणहेतुव्यावृत्तानुगतहेतुसिद्धिः।

प्रकाशिका।

तथाभिमतं तदा ज्ञानपदमनुभवपरमिति स्मर्तव्यम्। **प्रमात्वस्येति**। त्वन्मत इति शेषः तथा च बाध इति भावः। इदं च दूषणं ज्ञानपदस्यानित्यज्ञानपरत्वे, यथाश्रुते ज्ञानत्वस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वेन साध्याप्रसिद्धिरेव दूषणम् पूर्वहेतोरत्र पक्षेऽसम्भवादत्र हेत्वन्तरमाह। **कार्यमात्रेति**। **वैजात्यं**=वैचित्र्यम्। **दोषस्य**=पित्तादेरिति। वस्तुतोऽप्रमाया उभयरूपतया न तादृशहेतुजन्यत्वमिति भावः। **अप्रमाप्रतिबन्धकत्वमिति**। अनेनानुमानेन सिद्धस्यैव प्रतिबन्धकत्वं विषयीक्रियतामित्यर्थान्तरमिति भावः। **घटज्ञानमिति**। घटविषयकानित्यज्ञानमित्यर्थः। न च तत्रानुगतकारणासम्भवः। अनुगतभोगजनकादृष्टसत्त्वात् न प्रकृतेऽपि तेनैवार्थान्तरं दृष्टस्यैवासम्भवात् उक्तव्याप्तिबलेन प्रमात्वस्य कार्यतावच्छेदकत्वे सिद्धे विशेषप्रकारकप्रतीत्यर्थमाह। **एवमनित्यप्रमात्वमिति**। अनित्यज्ञानत्वे व्यभिचार इत्यनित्यज्ञानत्वव्याप्येति। व्याप्यत्वञ्च भेदमात्रम्। अन्यवैधर्म्यादिति ध्येयम्। **अनुगतहेतुसिद्धिरिति**। यद्यपि प्रमामात्रेऽननुगतगुणोऽसम्भवी, एवमप्रमायामनुगतो दोषोऽसम्भवीति बाधदृष्टान्तासिद्ध्यादिः, न चानित्यसाक्षात्कारिप्रमात्वमेव पक्षः, तत्तदप्रमात्वमेव दृष्टान्त इति वाच्यम्। तत्राप्यनुगतस्य हेतोरभावाद् बाधतादवस्थ्यात्। न च भूयोऽवयवेन्द्रियसन्निकर्षादिरेवानुगतो गुण

मकरन्दः।

इत्यपास्तम्। **प्रमात्वस्येति**। त्वन्मते इति शेषः।

**घटज्ञानमिति**। घटविषयकानित्यज्ञानमित्यर्थः। न च तदवच्छिन्नकार्यनिरूपितकारणासम्भवः। अनुगतभोजकादृष्टस्य सत्त्वात्। न चैवं प्रकृतानुमाने तेनैवार्थान्तरं, दृष्टस्यैव सम्भवादित्याहुः। **अनुगतहेतुसिद्धिरिति**। ननु गुणत्वस्याननुगतस्य निर्वक्तुमशक्यत्वादनित्य-

भावत् । यदि च तावन्मात्राधीना भवेदप्रमापि प्रमैव भवेत् । अस्ति हि तत्र ज्ञानहेतुः । अन्यथा ज्ञानमपि सा न स्यात् । ज्ञानत्वेऽप्यतिरिक्तदोषानुप्रवेशाद्-प्रमेति चेत् । एवं तर्हि दोषाभावमधिकमासाद्य प्रमापि जायेत नियमेन तदपेक्ष-णात् । अस्तु दोषाभावोऽधिको, भावस्तु नेष्यते इति चेत् । भवेदप्येवं, यदि

बोधनी ।

बाधकं तर्कमाह—यदि—इति । तावन्मात्राधीना=ज्ञानसामान्यहेतुमात्राधीनेति । कुत इत्यत आह—अस्ति हीति । यदि तत्र ज्ञानहेतुर्न स्यात् तदा कारणाभावेन कार्यं ज्ञानमपि न स्यादि-त्याह—अन्यथा-इति । ज्ञानत्वेऽपि-इति । ज्ञानत्वाभ्युपगमेन तद्धेत्वभ्युपगमं सूचयति—एवं तर्हि-इति । यदि दोषान्वयादप्रमा स्यात् तर्हि तद्विरोधिनी प्रमा दोषाभावादेव भवेदित्यधिक-हेतुरङ्गीकृतः स्यादिति । अस्तु-इति । एवमनित्यस्यापि वेदस्य प्रामाण्यं सिद्ध्यतीति भावः । भवे-

प्रकाशः ।

यदीति । यद्यप्यप्रमायां प्रमात्वापादने प्रमावृत्ति ज्ञानमात्रहेत्वधीनत्वं व्यधिकरणम् , तथापि प्रमात्वं यदि ज्ञानसामग्रीमात्रप्रयोज्यवृत्ति स्याद् अप्रमावृत्ति स्याद् अप्रमात्ववदित्यापादनीयम् । अप्रमायाः प्रमित्यजनकदोषजन्यत्वादापादकमसिद्धमित्याह । ज्ञानत्वेऽपीति । तर्हि प्रमात्व-मपि न ज्ञानमात्रसामग्रीप्रयोज्यम् , अतिरिक्तदोषाभावापेक्षणादित्याह । एवन्तर्हीति । युक्तञ्चै-तत् । अन्यथा प्रमासामग्र्यामधिकदोषानुप्रवेशादप्रमाऽपि प्रमाविशेषः स्यात् , वृक्षसामग्र्या-मधिककारणानुप्रवेशाच्छिंशपा वृक्षविशेष इवेति भावः । अस्त्विति । न चैवमप्रमित्यजनकज-न्यत्वे परतस्त्वमिति वाच्यम् । आगन्तुकभावानपेक्षज्ञानसामग्रीजन्यत्वमेव स्वतस्त्वमिति विव-क्षितत्वात् । तथा च गुणाजन्यत्वेन प्रमाया नेश्वरसिद्धिः । भवेदप्येवमिति । ननु पीतः शङ्ख इत्यत्र विशेषदर्शनेऽपि भ्रमाव्यभिचारेण न विशेषादर्शनं भ्रमहेतुः, यत्र वा विशेषदर्शनमपि भ्रमस्तत्र तज्जन्यज्ञानस्यापि भ्रमत्वान्न विशेषदर्शनं प्रमात्वप्रयोजकम् । मैवम् । यद्विशेषदर्शनं

प्रकाशिका ।

इति वाच्यम् । तत्तत्साक्षात्कारे तत्तदवयवानामननुगतत्वाभावाद् यथार्थपरामर्षादेरपि तत्तद्विष-याननुगमेनाननुगतत्वात् । एतेन विशेष्यवृत्तिविशेषणज्ञानमेव प्रमामात्रेऽनुगतो गुणो ग्राह्यः, यथार्थज्ञानं वेत्यनित्यप्रमात्वमेव पक्ष इत्यपास्तम् । विषयाननुगमेनाननुगतत्वात् । तथापि घटप्रमायां घटवृत्तिविशेषणज्ञानं घटाप्रमायां घटावृत्तिविशेषणज्ञानं जनकमिति तत्तत्प्रमात्वत-त्तदप्रमात्वयोरेव पक्षदृष्टान्तत्वे । एवं विशेषयोः कार्यकारणभावग्रहे शाब्दप्रमायामपि विशेषत एव कार्यकारणभावग्रहे तदनुरोधादेवेश्वरसिद्धिरित्यत्र तात्पर्य्यम् । यद्यपि घटविशेष्यकत्वे सति घटत्व प्रकारकत्वमित्येव घटप्रमात्वमित्यर्थवशसम्पन्नमेतदुभयमिति न विशिष्टनियामकगुणसिद्धिः, न वा घटप्रमात्वं जन्यतावच्छेदकं नीलघटत्ववदिति । तथापि समूहालम्बनव्यावृत्तय एकावच्छिन्नापरस्यैव

मकरन्दः ।

प्रमात्वावच्छिन्ने कथमनुगतहेतुसिद्धिरिति चेन्न । अनित्यप्रमात्वपदेनानित्यसाक्षात्कारिप्रमात्वादे-रेव विवक्षितत्वात् । तत्र च भूयोऽवयवेन्द्रियसन्निकर्षाद्यनुगतहेतुसत्त्वादित्येके । शाब्दप्रमायां ग्राह्यविशेषस्य वाक्यार्थस्य प्रमा हेतुरिति प्रमासामान्ये ग्राह्यप्रमासामान्यमीश्वरस्यैव गुणः । यद्वि-शेषयोरिति न्यायात् । न च ग्राह्यमात्रस्यातिप्रसक्ततया यत्र यद् ग्राह्यं तत्र तत्प्रमा हेतुर्वाच्यः । तथा च तद्ग्राह्यप्रमायां 'तद्ग्राह्यप्रमा हेतुरित्यननुगम एवेति वाच्यम् । एवं तत्साक्षात्कारे तदि-न्द्रियसन्निकर्षो हेतुरिति विशेषेऽप्यननुगमापत्तेः । यदि च विशेषे विशेषस्य प्रयोजकत्वेऽपि सा-मान्ययोरपि तथात्वं, तदा प्रकृतेऽपि तुल्यमित्यन्ये । स्वाविषयकप्रमाजनकत्वम् गुणत्वम् । स्वा-

नियमेन दोषैर्भावरूपैरेव भवितव्यम्, न त्वेवम् । विशेषादर्शनादेरभावस्यापि दोषत्वात् । कथमन्यथा ततः संशयविपर्ययौ । ततस्तदभावो भाव एवेति कथं स नेष्यते ।

---

बोधनी ।

दपि-इति । भावात्मनोऽधिकस्यानङ्गीकारो भवेदपीति । कथमन्यथा-इति । विशेषादर्शनस्यादोषत्वे कथं ततो विशेषादर्शनादप्रमात्मकौ संशयविपर्ययौ स्यातामिति वक्रकोटरादेः शुक्तिकात्वस्य विशेषस्यादर्शने हि तयोरुत्पत्तिरिति । सन्तु तर्ह्यभावा अपि दोषाः ततः किमित्यत्राह-ततः-इति । अभावात्मनो दोषस्याभावो भाव एवेति । कथं स भावः प्रमाहेतुर्नेष्यत इति ।

प्रकाशः ।

हि भ्रमविरोधि तदभावोऽप्रमाहेतुः । प्रत्यक्षभ्रमे च प्रत्यक्षविशेषदर्शनं विरोधि दिङ्मोहादौ गौरोऽहमिति भ्रमे च तथा दर्शनात् । तच्च दोषात् तत्र नास्ति, प्रमारूपमेव च विशेषदर्शनं गुण इति तदभाव एव दोषः ।

ननु विशेषादर्शनं न दोषः, किन्तु विशेषदर्शनप्रतिबन्धकाः पित्तादयो दोषाः, आवश्यकत्वात् । न च तेषां नानात्वेन विशेषदर्शनप्रतिबन्धकतयाऽनुगमे लाघवाद्विशेषादर्शनमेव हेतुरिति वाच्यम् । क्वचित् कश्चिद्दोष इत्यनुगमात् । अन्यथा पित्तादितोऽप्यप्रमा न स्यात्, अननुगमात् । पित्ताद्युत्कर्षेण भ्रमोत्कर्षाच्च । पित्तादेरदोषत्वे च विशेषप्रमैव कुतो न भवति । यदि च विशेषस्य विशेषान्तरादर्शनात्, तदाऽनवस्था । किञ्च, विशेषदर्शनं न प्रमामात्रे, न वा प्रत्यक्षप्रमायां हेतुः, व्यभिचारात् । तत्रैव तद्धेतुत्वेनानवस्थानाच्च ।

प्रकाशिका ।

प्रमात्वशरीरत्वेन तस्य नार्थवत्तसम्पन्नतेतिबोध्यम् । प्रत्यक्षविशेषदर्शनमिति । प्रत्यक्षविपरीतदर्शनमित्यर्थः । केचित्तु विशेषपदेनात्र व्याप्यविशेषोऽप्युक्तः स च प्रतिबन्धरूपफलोन्नेयः, प्रतिबन्धकाननुगमस्तु न दोषाय । अत एव शङ्खे प्रत्यक्षे सति श्वैत्ये न पीतत्वारोपः, कालपृष्ठत्वप्रत्यक्षे सति शुक्तौ न रजतत्वारोप इत्याहुः । क्वचित् कश्चिदिति । विशेषस्याप्यननुगतत्वेन त्वयाप्युक्तगतेरेवानुसरणीयत्वादिति भावः । अन्यथेति । यद्यपि विशेषादर्शनमेव दोष इति वादिनोऽत्रेष्टापत्तिः, तथापि विशेषाप्रमापि पित्तादित एवेत्यभिप्रायेणेदम् । अत एवाग्रे भावाविष्करणं पित्तादेरदोषत्वे चेति । भ्रमोत्कर्ष इति । उत्कर्षश्चात्र बहुकालावच्छिन्नसजातीयधारानुवृत्तिलक्षणः ।

मकरन्दः ।

विषयकभ्रमजनकत्वञ्च दोषत्वमिति तदुभयं निर्वाच्यम् । एवञ्च तत्तत्प्रमादौ यथार्थपरामर्शत्वादिना हेतुत्वग्रहानन्तरं प्रमासामान्यं प्रत्युक्तगुणत्वेन कारणत्वग्रहः । एवं दोषत्वेनापीत्याहुः । विस्तरस्तु प्रत्यक्षप्रकाशे । प्रत्यक्षविशेषदर्शनमिति । प्रत्यक्षविपरीतदर्शनमित्यर्थः ।

टिप्पणी ।

क्वचित् कश्चिद् दोष इति । क्वचिद् भ्रमविशेषजातीये कश्चिद् दोषजातीयः कारणमेतावदेवानुगमस्येष्टत्वात् । तथापि विशेषदर्शनस्य व्याप्यव्यापकभेदेनैकरूपतायाः सर्वत्रासम्भवादित्यर्थः । अप्रमा न स्यादिति । विशेषप्रमा न स्यात्, तत्र विशेषादर्शनस्यानवस्थाभयेनाहेतुत्वस्यानुपदं वक्ष्यमाणत्वात् । एतेन विशेषादर्शनहेतुतामते पित्तादेरहेतुत्वादिष्टापत्तिरिति शङ्का निरस्ता । उक्तपित्तादेर्हेतुत्वं व्यवस्थापयति । पित्ताद्युत्कर्षेणेति । यस्योत्कर्षेण यस्योत्कर्षः, तत् तत्कारणम्, अकारणोत्कर्षस्य प्रयोजकत्वेऽतिप्रसङ्गादिति भावः । पित्तादेर्भ्रमकारणत्वबाधकमनिष्टप्रसङ्गमाह । पित्तादेरदोषत्वे चेत्यादि । दोषो हि प्रमाप्रतिबन्धको भ्रमजनकश्च, स चेद् विशेषदर्शनाभावस्तदानवस्थेत्याह । यदीत्यादि ।

स्यादेतत् । शब्दे तावद्विप्रलिप्सादयो भावा एव दोषाः, ततस्तदभावे स्वत

पोधनी ।

अस्त्वेव प्रत्यक्षे विशेषादर्शनादेरभावस्य दोषत्वं, न तु प्रमाणान्तर इत्याह–स्यादेतत् इति । शब्दे तावद्भावात्मकदोषाभावे सति स्वत एवातिरिक्तभावानपेक्षाज् ज्ञानकारणादेव शब्दात्प्रमोत्पद्यत इति दृष्टम् । शब्दे तावदेवम्, अनुमानादावपि तथा द्रष्टव्यमिति तावच्छब्दस्यार्थः ।

प्रकाशः ।

मैवम् । प्रमामात्राहेतुत्वेऽपि संशयविपर्ययोत्तरप्रमायां तस्य हेतुत्वात् । तत्र विशेषादर्शनस्य दोषत्वेनान्यत्रापि तथात्वात् । पित्ताद्युत्कर्षस्यापि भूयोविशेषदर्शनप्रतिबन्धकत्वेनान्यथासिद्धत्वात् ।

ननु प्रत्यक्षप्रमादौ गुणजन्यत्वेऽपि वेदे भ्रमाद्यभावचतुष्टयं प्रमाहेतुः । लोके भ्रमाद्यभाव एव प्रमोत्पत्तेः । न तु वक्तृवाक्यार्थयथार्थज्ञानवत्त्वादिर्गुण इत्याह—

स्यादेतदिति । लिङ्गसादृश्यादिभ्रमरूपदोषाभावमात्रान्नानुमित्यादिः प्रमेति लिङ्गसादृश्यादियथार्थज्ञानमपि गुणस्तद्धेतुरिति शाब्दप्रमायामपि दोषाभावे सति यथार्थवाक्यार्थज्ञानं

प्रकाशिका ।

**संशयविपर्य्ययोत्तरप्रमायामिति** । विशेषादर्शनप्रयोज्यसंशयविपर्य्ययोत्तरप्रमायामित्यर्थः । तेन नान्धकारकालीनघटसंशयोत्तरप्रत्यक्षे आलोकसमाधानमात्रजन्ये व्यभिचारः । ननु संशयोत्तरं यत्र न प्रत्यक्षं तत्र संशयाद्यनुत्तरप्रत्यक्षसामग्रीसत्त्वे तत्प्रत्यक्षमेव कुतो न जायते तदसत्त्व तत एव न प्रत्यक्षमिति न विशेषदर्शनं कारणम् कार्य्यव्यतिरेकप्रयोजकव्यतिरेकाप्रतियोगित्वादिति चेत् । न । तदनुत्तरकालीनप्रत्यक्षं प्रति तदनुत्तरकालीनस्य कारणतया तदभावादेव तादृशप्रत्यक्षसामग्रीविरहात् । न च विशिष्टाभाव एव विशेषादर्शनविशिष्टग्राह्यसंशयाभावरूपः कारणमस्तु न तु विशेषदर्शनं कारणम् । अत एव न सिद्ध्युत्तरानुमितौ सिषाधयिषाविशेषसामग्रीति वाच्यम् । विशेषदर्शनोत्तरजायमानप्रत्यक्षस्य विशेषविषयत्वनियमेन तत्र विशेषणज्ञानतया विशेषदर्शनस्य जनकत्वे विशेषरूपेणापि तस्यैव कारणता कल्प्यते तद्धर्मिणः कारणत्वकल्पनात् । अत एव निश्चयोत्तरसंशयं प्रति प्रामाण्यसंशयः कारणं कोटिज्ञानत्वेन तत्र तस्य कारणतावश्यकत्वात्, सिषाधयिषा तु न केनापि रूपेणानुमितिं प्रति कारणत्वेन क्लृप्तेति न तत् प्रतिबन्दिरिति दिक् । ननु निर्हेतुकं मूलेऽभिधानं स्वत इति न युक्तमात्माश्रयादतो व्याचष्टे । **ननु प्रत्यक्षप्रमादाविति** । शाब्दप्रमायां गुणकारणत्वापेक्षायामनुमितिप्रमादौ तदुपपादनमर्थान्तरमत आह । **लिङ्गेति** ।

मकरन्दः ।

संशयविपर्ययोत्तरेति । यद्यपि संशयोत्तरप्रत्यक्षमात्रे विशेषदर्शनं न हेतुः, अन्धकारे घटसंशयोत्तरप्रत्यक्षस्य तद्विनाऽप्यालोकसमवधानमात्रेणैवोपपत्तेः । तथापि यत्र विशेषादर्शनादिदोषाधीनः संशयस्तदुत्तरप्रत्यक्षे तस्य हेतुत्वम् । उक्तस्थले च व्यञ्जकाभावाधीनः स इति भावः । ननु तत्रापि विशेषदर्शनं न हेतुः, संशयानुत्तरप्रत्यक्षसामग्रीसत्त्वे तदुत्पत्त्यापत्तेः । तदसत्त्वे तद्व्यतिरेकादेव तद्व्यतिरेक इति किं विशेषसामग्र्यन्तरकल्पनया ? । अत एव सिद्ध्युत्तरानुमितित्वावच्छिन्ने सिषाधयिषा न विशेषसामग्री, किन्तु तद्विरहविशिष्टसिद्ध्यभावः सामान्यसामग्री । तदभावादेव तदा नानुमितिरिति चेत् । तर्हि तद्वदेव विशेषदर्शनविरहविशिष्टसंशयाभावः सामान्यसामग्रीत्यत्रैव तात्पर्यमित्याहुः । विस्तरस्त्वनुमानप्रत्यक्षप्रकाशयोरनुसन्धेयः ।

लिङ्गसादृश्येति । यद्यपि परामर्शादिरूपसामान्यसामग्रीविरहादेव तत्र नानुमित्यादिः,

एव शाब्दी प्रमेति चेन्न। अनुमानादौ लिङ्गविपर्यासादीनां भावानामपि दोषत्वे तदभावमात्रेण प्रमाऽनुत्पत्तेः। अन्यत्र यथा तथाऽस्तु, शब्दे तु विप्रलिप्साद्यभावे वक्तृगुणापेक्षा नास्तीति चेन्न। गुणाभावे तदप्रामाण्यस्य वक्तृदोषापेक्षा नास्तीति विपर्ययस्यापि सुवचत्वात्। अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ

बोधनी।

न-इति। अनुमाने लिङ्गविषयविपर्यासविरुद्धत्वादीनां भावानां दोषत्वे सत्वेऽपीत्यपिशब्दो भिन्नक्रमः, अवधारणे वा। भावरूपदोषाभावमात्रेण लैङ्गिकज्ञानहेतोर्दृष्टसहचाराद् दृष्टव्यभिचाराल्लिङ्गाद्व्याप्तिलक्षणगुणाभावे प्रमानुत्पत्तेस्तवापीष्टत्वात्। न च व्याप्तिरप्यनुमितिज्ञानमात्रे हेतुर्न प्रमाया इति युक्तम्। व्याप्त्यभावेऽपि मैत्रीतनयत्वादेवानुमितिज्ञानोत्पत्तेः। अत्रादिशब्दाभ्यामर्थापत्तिमनुपपद्यमानविपर्यासं च संगृह्णाति। अन्यत्र-इति। अनुमानादावतिरिक्तभावापेक्षोऽस्तु मा वा, न हि नस्तत्र निर्भरः, शब्दे तु दोषाभावे सत्यपि न स्वतः प्रमोत्पत्तौ गुणापेक्षाऽस्तीति नः समीहित वेदप्रामाण्योपयोगादिति। तदेतदनिष्टप्रसङ्गमुद्भाव्य शङ्कितं, तत्समाधिमत्रापि समीकुर्वन् परिहरति—गुणाभाव इति तुल्यत्वादित्यन्तेन। तर्हि पौरुषेयवाक्ये गुणान्वयव्यतिरेकदर्शनात् तदधीनमस्तु प्रामाण्यम्, अपौरुषेये तु वेदे तदसंभवाद्दोषाभावमात्राधीनं प्रामाण्यमङ्गीकर्त्तव्यमि-

प्रकाशः।

गुणो हेतुरित्याह। अनुमानादाविति। ननु यथार्थवाक्यार्थज्ञानादौ गुणे सत्यपि करणापाटवाद् यत्रान्याभिधित्सिते ऽन्यद् ब्रूते तत्र वाक्यं न प्रमाणम्, दोषाभावस्य तु प्रमाहेतुत्वे करणापाटवाख्य सोऽस्तीति तत्र न प्रामाण्यमुपपद्यते इति शङ्कते। अन्यत्रेति। वक्तृदोषे सत्यपि भ्रान्तविप्रलम्भकवाक्ये संवादात् प्रामाण्यदर्शनाद्दोषोऽपि नाऽप्रामाण्यप्रयोजकः। तात्पर्यविषये त्वप्रामाण्यमेवेति प्रामाण्येऽपि तुल्यमिति परिहरति। गुणाभाव इति।

प्रकाशिका।

तथा च दृष्टान्तार्थं तदुपपादनमिति भावः। न च लिङ्गादिज्ञानाभावदशायां सामान्यसामग्रीविरहादेव न प्रमेति वाच्यम्। एवं सति यत्र सामान्यमित्यादिन्यायेन यथार्थपरामर्शादेरेव प्रमाहेतुत्वे सिद्धेऽनुमित्यादिदृष्टान्तेन शाब्देऽपि गुणजन्यत्वमुपपादितमेवेति शङ्कैवेयं तुच्छेत्यतस्तां दीपयति। ननु यथार्थेति। तात्पर्य्यविषये त्विति। यद्यपि न भ्रान्तप्रतारकस्थले तात्पर्यविषयघटसत्तांशे प्रामाण्यं तथाप्यन्यथावुद्धमन्यथा बोधयामीति यत्तत्र तात्पर्य्यं तद्विषयीभूतवुद्ध्यंशेऽप्रामाण्यमस्त्येवेति भावः। प्रामाण्येऽपि तुल्यमिति। यद्यपि करणापाटवस्थले तात्पर्य्यविषये न प्रामाण्यं तात्पर्यस्यैवाभावादिति न तौल्यार्थः। तथापि भ्रान्तप्रतारकस्थलेऽपि नाप्रमाजनकत्वं वस्तुत इति। यद्युपनीतभानस्थलेनैव पूर्वग्रन्थे मयाप्येवमुपगन्तव्यमिति तुल्यार्थः, वस्तुतः करणापाटवस्थले प्रकृतवाक्यार्थयथार्थज्ञानाभावादेवाप्रामाण्यं भ्रान्तप्रतारकवाक्यस्थले चाहार्यसंसर्गज्ञानस्यैव यथार्थस्य सत्वात् प्रामाण्यमित्यभिसन्धिः। ननु युज्यतां तथैव विभाग इत्युपेक्षाज्ञानादपि प्रवृत्ति-

मकरन्दः।

तथापि यत्सामान्ये यत्सामान्यमिति न्यायात् प्रमारूपानुमित्यादिविशेषे सत्यपरामर्शादिविशेषस्य हेतुत्वमिति भावः। तात्पर्यविषये त्विति। अघटे घटत्वं तत्तात्पर्यविषयस्तत्र च प्रमा नोत्पन्नैवेत्यर्थः। प्रामाण्येऽपीति। यद्यपि तात्पर्यविषयीभूतेऽर्थे करणापाटवस्थलेऽपि प्रामाण्यमेवेति न तौल्यार्थस्तत्र प्रामाण्याभावात्, तथापि प्रकृतवाक्यार्थगोचरयथार्थज्ञानलक्षणो गुण एव तत्र नास्तीति भावः।

स्त इति चेन्न । प्रामाण्यं प्रत्यपि गुणानां तयोः सत्त्वात् । पौरुषेयविषये इयमस्तु व्यवस्था, अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेन्न । गुणनिवृत्त्याऽप्रामाण्यस्यापि सम्भवात् । तस्या अप्रामाण्यं प्रति सामर्थ्यं नोपलब्धमिति चेत् । दोषनिवृत्तेः प्रामाण्यं प्रति क्व सामर्थ्यमुपलब्धम् ? । लोकवचसीति चेत् । तुल्यम् । तदप्रामाण्ये दोषा एव कारणं, गुणनिवृत्तिस्त्ववर्जनीयसन्निधिरिति चेत् । प्रामाण्यं प्रति गुणेष्वपि तुल्यमेतत् । गुणानां दोषोत्सारणप्रयुक्तः सन्निधिरिति चेद्, दोषाणामपि गुणोत्सारणप्रयुक्त इत्यस्तु । निःस्वभावत्वमेवमपौरुषेयस्य वेदस्य स्यादिति चेत्, आत्मानमुपालभस्व । तस्माद्यथा द्वेषरागाभावाविनाभावेऽपि रागद्वेषयोरनुविधाननियमात् प्रवृत्तिनिवृत्तिप्रयत्नयो रागद्वेषकारणकत्वं, न तु निवृत्तिप्रयत्नो द्वेषहेतुकः, प्रवृत्तिप्रयत्नस्तु सत्यपि रागानुवि-

बोधनी ।

रहा–पौरुषेय–इति । तदेतत्परिहरन् प्रसङ्गं तावदाह–गुणनिवृत्ति–इति । तत्समाधिमाशङ्कय साम्यापादनेन परिहरति–तस्याः—इति । यदि लोकवचसि दोषनिवृत्तेः प्रामाण्ये हेतुत्वमुपलब्धं तर्हि गुणनिवृत्तेरप्रामाण्यहेतुत्वमपि तत्रैवोपलब्धमिति शङ्कोत्तराभ्यामाह–लोक–इति । ननु तस्य लोकवचसोऽप्रामाण्ये दोषा एव कारणमनन्यथासिद्धान्वयव्यतिरेकत्वात्, गुणनिवृत्तिस्तु विरोधिदोषसंनिधाननान्तरीयकेत्याह –तदप्रामाण्य–इति । तर्हि प्रामाण्यकारणेषु गुणेषु सत्सु तद्विरोधिनां दोषाणां निवृत्तिरप्यवर्ज्जनीयसंनिधिरिति स्यादित्याह–प्रामाण्यं प्रति–इति । यदि गुणानामन्यत्रोपक्षयेण प्रमायामहेतुत्वं तर्हि दोषाणामपि तथात्वे नाप्रमायामहेतुत्वं भवेदिति शङ्कोत्तराभ्यामाह –गुणानाम्–इति । ननु प्रामाण्याप्रामाण्ययोरेवं वक्तृगुणदोषाधीनत्वे सति वक्तृविधुरस्य वेदस्योभयोरप्यभावेन प्रामाण्याप्रामाण्ययोरन्यतरस्वभावत्वमपि न स्यादित्याह—निःस्वभावत्वम् इति । आत्मानम् इति । अपौरुषेयं वेदमातिष्ठमानमिति शेषः, न तु गुणवद्वक्तृत्वेन वेदस्य प्रामाण्यमङ्गीकुर्वतोऽस्मानिति भावः । उक्तमर्थं दृष्टान्तमुखेन विशदयन्नुपसंहरति—तस्मात्–इति । द्वेषरागाभावाविनाभावेऽपीत्यस्य

प्रकाशः ।

निःस्वभावत्वमिति । वेदे प्रमाणत्वाप्रमात्वप्रयोजकगुणदोषयोरभावादित्यर्थः । तस्मादिति । यथा प्रवृत्तौ द्वेषाभावहेतुकत्वे निवृत्तौ रागाभावहेतुकत्वे सत्यपि उपेक्षाज्ञानादपि प्रवृत्तिनिवृत्ती स्यातामिति रागद्वेषयोः प्रवृत्तिनिवृत्तिहेतुत्वमितरेकैकाभावोऽन्यथासिद्धः, तथा प्रमाऽप्रमयोरपि गुणदोषौ, न तु दोषाभावगुणाभावावित्यर्थः ।

प्रकाशिका ।

प्रसङ्गेन पूरयित्वा व्याचष्टे । यथा प्रवृत्ताविति । न च तत्रोक्तातिप्रसङ्गात्तथास्तु प्रकृते तु न किञ्चिदनिष्टमिति वाच्यम् । प्रकृतेऽपि सुषुप्तिदशायामेव प्रमायुत्पत्तिप्रसङ्गस्यानिष्टत्वात परामर्शोदेश्च सामान्यसामग्रीत्वे तद्विशेषस्यैव प्रमाहेतुत्वादित्युक्तत्वात । रागद्वेषयोरिति । न च प्रवृत्त्यभाव एव निवृत्तिरिति नात्कविभागसङ्गतिरिति वाच्यम् । वैपरीत्यापत्तेः । न च सुषुप्तिदशायामप्येवं प्रवृत्तिसत्त्वे तत्कार्यचेष्टापत्तिरिति वाच्यम् । शरीरमनःसंयोगाभावेनैव तद्विरहोपपत्तेः । न चैवं सुषुप्तिदशायां प्रवृत्तोऽयमिति व्यवहारप्रसङ्ग इति वाच्यम् । निवृत्तव्यवहारस्यापि तदाभावेन

मकरन्दः ।

रागद्वेषयोरिति । अत्रेदं चिन्त्यम् । प्रवृत्तिविरह एव निवृत्तिरिति न प्रयत्नद्वैविध्यं, मानाभावात् । न च वैपरीत्यापत्तिः । सुषुप्तिदशायामपि निवृत्तिविरहस्य सत्त्वेन प्रवृत्तिप्राप्य-

धाने द्वेषाभावहेतुक इति विभागो युज्यते, विशेषाभावात्, तथा प्रकृतेऽपि।

तथापि वेदानामपौरुषेयत्वे सिद्धे, अपेतवक्तृदोषत्वादेव प्रामाण्यं सेत्स्यति, ततः सिद्धे प्रामाण्ये गुणाभावेऽपि तदिति दोषाभाव एव हेतुरकारणं गुणा इति चेन्न। अपेतवक्तृगुणत्वेन सत्प्रतिपक्षत्वप्रसङ्गात्। स्वत एव प्रामाण्यनिश्चयः, किन्तु शङ्कामात्रमनेनापनीयते दोषनिबन्धनत्वात्तस्य तदभावेऽभावात्, अतो नेदमनु-

---

बोधनी।

प्रवृत्तिनिवृत्तप्रयत्नयोरित्यनेन संबन्धः, न त्वित्यस्य युज्यते इत्यनेन। विशेषाभावादिति। द्वेषानुविधायिनो निवृत्तिप्रयत्नाद्रागानुविधायिनः प्रवृत्तिप्रयत्नस्यैतदनुविधायित्वे विशेषाभावादिति। न चात्र द्वेषाभाव एव प्रवृत्तेः कारणमिति युक्तम्, उपेक्षाज्ञानादपि प्रवृत्तिप्रसङ्गात्। तथा प्रकृते प्रामाण्यविषयेऽपि दोषगुणाभावाविनाभावेऽपि प्रामाण्याप्रामाण्ययोरन्यथासिद्धगुणदोषानुविधाननियमात्तद्धेतुकत्वम्। न त्वप्रमा दोषहेतुका, प्रमा तु सत्यपि गुणानुविधाने दोषाभावहेतुकेतिविभागो युक्त इति।

नन्वस्तु गुणानुविधानं प्रामाण्यस्य तथापि न तद्धेतुकत्वमित्याह—तथापि-इति। वेदानां प्रामाण्यमपौरुषेयत्वं च तावत्सिद्धं तेन दोषाभावमात्रेण प्रामाण्यं सेत्स्यतीति सिध्यत्येव ततो गुणाभावेऽपि दोषाभावादेव वेदे तत्प्रामाण्यं दृष्टमिति व्यभिचारादकारणं गुणाः सर्वत्र दोषाभावस्तु कारणमव्यभिचारादिति। न-इति। न तावदद्यापि वेदानामपौरुषेयत्वेन प्रामाण्यमिति सिद्धं, येन तत्र गुणव्यभिचारो निर्दिश्येत। लोकाधीननिर्णयो हि वेदो लोके चाव्यभिचाराद् गुणः प्रामाण्यहेतुरिति स्थितम्, तत्र यदि वेदस्यापौरुषेयत्वमाश्रित्य दोषाभावात् प्रामाण्यमुच्येत तदा गुणाभावादप्रामाण्यमपि वक्तुं शक्यत इति। स्वतः-इति। न तावद्वेदानां प्रामाण्यमपेतदोषवक्तृत्वेनानुमीयते, स्वतो बोधजनकत्वेन निश्चिते प्रामाण्ये हेत्वन्तरादप्रामाण्यशङ्कायां तन्निराकरणमात्रमप्रामाण्यकारणदोषाभावावधारणेन क्रियते। तदाहुः—

तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धौ प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते। ( श्लो॰ वा, ) इति।

प्रकाशः।

नन्वन्यत्र गुणस्य प्रमाहेतुत्वेऽपि वेदस्यापौरुषेयतया वक्तृगुणाभावाद्दोषाभावमात्रप्रयुक्तमेव प्रामाण्यमिति प्रामाण्ये गुणस्य व्यभिचाराद् न हेतुत्वं, किन्तु दोषाभावस्यैवेत्याह। तथापीति। सिद्धिर्ज्ञप्तिः। सिद्धेः=निश्चिते। वेदाः प्रमाणम्, अपेतवक्तृदोषत्वादित्यनुमानादित्यर्थः। अत्र वेदा न प्रमाणम्, अपेतवक्तृगुणत्वादिति सत्प्रतिपक्षमाह। अपेतेति। ज्ञानग्राहकादेव प्रमात्वं स्वीक्रियते, दोषाधीना तु शङ्का अपेतवक्तृदोषत्वादेव निरस्येत्याह। स्वत एवेति। तथापि गुणाभावहेतुकोऽप्रामाण्यसंशयस्तदवस्थ एवेत्याह। गुणनिवृत्तीति। तस्या इति। दोषसहितगुणनिवृत्तेरेवाऽप्रमात्वहेतुत्वादित्यर्थः। दोषेति। गुणसहितदोषनिवृत्तेरेव प्रमात्वप्रयोजकत्वादित्यर्थः।

ननु तथापि शुकादिवाक्यं भ्रान्तप्रतारकवाक्यं च संवादि कथं प्रमाणं, गुणाजन्यत्वात्।

मकरन्दः।

चेष्टादिकार्योत्पत्त्यापत्तेः। न च तदा निवृत्तिरेवेति वाच्यम्, तदा तत्कारणद्वेषाभावेन तदभावात् द्वेषाभावश्च तत्कारणदुःखसाधनत्वज्ञानाभावादिति॥

मानवत् सत्प्रतिसाधनीकर्तुमुचितमिति चेत् । न । गुणनिवृत्तिनिबन्धनायाः शङ्कायाः सुलभत्वात् । तस्याः केवलाया अप्रामाण्यं प्रत्यनङ्गत्वान्न शङ्केति चेद्,

बोधनी ।

ततो नेदमपेतवक्तृदोषत्वं सप्रतिसाधनीकर्तुं युक्तमिति । न–इति । दोषाभावे तद्दोषनिबन्धनाप्रामाण्यशङ्कानिवृत्तावपि प्रामाण्यहेतुगुणनिवृत्तिनिबन्धनायास्तस्याः स्वस्थत्वात् । न हि स्वतः प्रामाण्यनिश्चय इत्यग्रे निवेदयिष्याम इति भावः । तस्या–इति । न तावद्दोषसंसर्गमन्तरेण

प्रकाशः ।

धूमभ्रमाद्वह्निमत्यैव वह्न्यनुमितिर्वा कथं प्रमा, यथार्थलिङ्गज्ञानाजन्यत्वात् । न च वह्न्यन्तरमेव तद्विषयः । प्रत्यभिज्ञानात् । गोत्वाद्येकव्यक्तिके तदभावाच्च । उच्यते । शुकादिवाक्ये भ्रान्तप्रतारकवाक्ये च प्रमाणशब्दत्वेनाप्तोक्तत्वाद्वेदवदीश्वरस्यैव यथार्थवाक्यार्थज्ञानं गुणो हेतुः, तस्य कार्यमात्रकर्तृत्वात् । शुकादिवाक्ये वेदतुल्यतया दोषाभावादिनाऽपि मन्तव्यत्वात् । न चैवं शब्दाप्तासोच्छेदः, तस्यापीश्वरकर्तृकत्वादिति वाच्यम् । तद्वाक्यार्थस्यासत्त्वेनेश्वरज्ञानाविषयत्वात् । एवं लिङ्गाभासजन्यप्रमायामपीश्वरस्यैव यथार्थलिङ्गज्ञानं गुणः ।

एवं प्रमाया गुणजन्यतया शाब्दप्रमाया अपि गुणजन्यतया वेदे वक्त्रन्तरस्याभावात् तदा-

प्रकाशिका ।

तुल्यत्वात् । ईश्वरस्यैवेति । भ्रान्तप्रतारकवाक्य आहार्यसंसर्गज्ञानमेव यथार्थं गुणः सम्भवति तथापि शुकादिवाक्यसाधारण्यार्थमिदमेवोक्तम् । केचित्तु भ्रान्तप्रतारकस्येव वाक्यं भ्रान्तप्रतारकवाक्यं तथा च भ्रान्त एवान्यस्मिन् वक्तव्ये यत्रान्यद् वदति तत्संवादिवाक्यमत्र तत्पदेनोक्तमित्याहुः। न च भ्रान्तप्रतारकवाक्ये गुणसत्त्वेऽपि दोषसत्त्वात् कथं प्रमेति वाच्यम् । भ्रमस्य भिन्नविषयत्वात् । प्रतारणायाश्चो सदवस्तुप्रतिपादनेच्छायास्तत्राभावात् । एवं लिङ्गाभासेति । अत्रापि शुकादिवाक्यसाधारण्यार्थमीश्वरज्ञानानुसरणम् । वस्तुतः पक्षतावच्छेदकविरोधिसाध्यनिष्ठप्रकृतहेतुप्रतियोगिकव्यापकताविषयत्वमेव परामर्शप्रयोजकमिति कूटलिङ्गपरामर्श एव तत्र गुणः । अत एवायथार्थोक्तपरामर्शरूपदोषसत्त्वात कथं प्रमेति निरस्तम् । निरुक्तयथा विरोधिन एवायाथार्थ्याप्रमाप्रयोजकत्वात । प्रकृते च तदभावादितिदिक् । शाब्दप्रमाया अपीति । यद्यपि शाब्दप्र-

मकरन्दः ।

भ्रान्तप्रतारकवाक्य इति । अत्राहार्यारोपं विना प्रतारणाया अभावात् स एव विषयाबाधात् प्रमारूप इति तमादाय यद्यपि गुणजन्यत्वमप्रत्यूहं तथापि समाधिसौकर्यादेतदुक्तम् । यद्वा, भ्रान्तप्रतारकस्येव वाक्यं भ्रान्तप्रकारकवाक्यं, तथा च बाधितमन्यदवगत्यान्यदबाधितं यत्र दैववशाद् ब्रूते, तत्र भगवद्बुद्धेर्गुणत्वमिति वयं पश्यामः । अत एवोक्तगुणजन्यत्वेऽपि भ्रमादिदोषजन्यत्वादप्रामाण्यमपि स्यादित्यपास्तम् । भ्रमस्य भिन्नविषयत्वेन तद्वाक्याजनकत्वात् , प्रतारणायाश्चाभावात् । केचित्तु विप्रलिप्सा विसंवादिप्रवृत्तिजनकेच्छा,

टिप्पणी ।

वह्न्यन्तरमेव तद्विषय इति । धूमसंसर्गेव वह्निर्धूमलिङ्गकानुमितौ विषयः स च वह्निस्तत्र नास्त्येव यश्चास्ति स धूमसंसर्गिवह्नेर्विभिन्न एवेत्यर्थः । यद्यपि वह्नित्वेन गृहीतवह्निव्याप्तिकस्य लिङ्गस्य वह्निसामान्यानुमितौ सामर्थ्यम् तथा च तत्रत्यवह्निभाने न क्षतिः । तथाप्येतदुरे सत्येव, यः पूर्वं धूमसम्बन्धित्वेन गृहीतः, तस्यैव धूलिपटलेन धूमत्वेन गृहीतेनानुमितौ भाने तद्वह्नेर्धूमसंम्बन्धिभिन्नत्वस्य प्रत्यभिज्ञानबाधितत्वादित्युत्तरं सौकर्यार्थमाह । प्रत्यभिज्ञानेति । विशिष्टबुद्धौ विशेषणज्ञानस्य हि हेतुत्वमनभ्युपगम्येदम् ।

दोषनिवृत्तेरपि केवलायाः प्रामाण्यं प्रत्यनङ्गत्वान्न तया शङ्कानिवृत्तिरिति तुल्यमिति ।

एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्य

बोधनी ।

केवलाया गुणनिवृत्तेप्रामाण्यहेतुत्वं लोके दृष्टं, न चापौरुषेये दोषः सम्भवति । तेन गुणनिवृत्ति-मात्रेण नाप्रामाण्यशङ्केति । **दोषनिवृत्तेरपि इति** । गुणसहिताया एव दोषव्यावृत्तेः प्रामाण्यहेतुत्वं लोके दृष्टमिति न दोषनिवृत्तिमात्रेणाप्रामाण्यशङ्का निवर्त्तत इति ।

यच्च ज्ञानानां स्वरूपात्स्वग्राहकाद्वा प्रामाण्यं ज्ञायते नान्यस्माद् गुणसंवादादिज्ञानादिति स्वतः प्रामाण्यमुक्तं परैस्तदपि निराकुर्वन्नुत्पत्तिवज् ज्ञप्तिरपि परत इत्याह । **एवम् इति** । स्वविष-

प्रकाशः ।

अथेश्वरसिद्धिरित्युक्तम् । सम्प्रति प्रमात्वग्रहोऽपि न स्वतः, अपि तु परत इति वैदिकप्रमाया अपि तत्त्वमाप्तोक्तवाक्यजन्यत्वेन ग्राह्यमिति ततोऽपीश्वरः सिद्ध्य ीत्याह—

**एवमिति** । अत्र यद्यपि ज्ञानप्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यं न वेति न संशयः, परतः पक्षेऽपि ज्ञानस्यापि पक्षतया प्रमात्वानुमितेर्ज्ञानग्राहकत्वात् , अप्रामाण्यस्यापि स्वतो ग्राह्यत्वापत्तेश्च । तथापि तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्य न वेति संशयः । स्वतः पक्षे प्रामाण्यवत एव ज्ञानस्य ग्रहात् । परतः पक्षे ज्ञात एव ज्ञानेऽनुमित्या प्रामाण्यग्रहात् । तत्र तेनैव प्रामाण्यग्रह इति प्राभाकराः । ज्ञानस्यातीन्द्रियतया तदनुमित्या तद्ग्रह इति भाट्टाः । मनसैव ज्ञानस्वरूपवत् तत्प्रामाण्यग्रह इति मुरारिमिश्राः । त्रितयसाधारणं च स्वतस्त्वं निरुक्तमेव ।

पूर्वपक्षस्तु, यद्यपि विशेष्यावृत्त्यप्रकारकत्वम , अगृहीतग्राह्यत्वं वा, प्रभाकरपक्षे स्मृत्यन्यज्ञानत्वं विशिष्टज्ञानत्वं वा प्रामाण्यं नानुव्यवसायग्राह्यम् , विशेषणज्ञानं विना विशिष्टज्ञानाभावात् । तथापि तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं ग्राह्यम् , निष्कम्प-वृत्त्यन्तत्वाल्लाघवाच्च । तच्च ज्ञानग्राहकसामग्रीग्राह्यमेव । तथा हि । विशेष्ये तद्धर्मवत्त्वं तत्प्रकारकत्वं च व्यवसायस्यानु-

प्रकाशिका ।

मायां यथार्थयोग्यताज्ञानमेव गुणः सम्भवतीति न तदर्थं वक्तुरपेक्षा वेदे, तथापि विशेष्यवृत्तिविशेषणज्ञानं गुणः प्रमासामान्यप्रयोजक इत्यभावत्वप्रकारकप्रथमाभावप्रमायामीश्वरीयमभावत्वज्ञानं तदंशप्रमात्वनिष्पत्तये गुण इत्याशयेनेदमुक्तम् । **सम्प्रतीति** । तथा च **प्रमायाः परतन्त्रत्वा**दिति कारिकायां परतन्त्रत्वमुत्पत्तिज्ञप्त्यं विवक्षितमिति ध्येयम् । **तज्ज्ञानविषयकेति** । पक्षश्च ज्ञानप्रामाण्यमित्यनुषज्यते । **अनुव्यवसायेन गृह्यत इति** । तज्ज्ञानविषयकसमानाधिकरणसमानका-

मकरन्दः ।

सापि यथार्थैव दोषः, तादृशी च तत्र नास्त्येवेत्याहुः । वस्तुतो गुणविरह एव दोषः, स च तत्र नास्तीति । अत एव लिङ्गाभासजन्यप्रमायामीश्वरयथार्थलिङ्गज्ञानजन्यत्वेऽप्ययथार्थलिङ्गज्ञानरूप-दोषजन्यतया व्यापकांश एव भ्रमत्वमपि स्यादित्यपास्तम् । एतदपि सम्प्रदायानुरोधादुक्तम् । वस्तुतोऽसङ्कीर्णबाधस्थले बाधानवतारकाले यथार्थपरामर्शादप्ययथार्थानुमित्युत्पत्तेरबाधितत्वप्रमा गुणः, तद्भ्रमो दोषः । शब्दे च वाक्यार्थभ्रमो दोषस्तत्प्रमा गुणः, योग्यताभ्रमो दोषस्तत्प्रमा-गुण इति वा विवक्षितमिति सर्वमवदातम् ।

**तज्ज्ञानवि यकेति** । पक्षश्च ज्ञानप्रामाण्यमित्यनुषज्यते प्रत्यक्ष काशे चैतदनुसन्धेयम् ।

टिप्पणी ।

तत्र तेनैवेति । **ज्ञानस्यातीन्द्रियेति** । ज्ञानत्वेन ज्ञाततात्वे सामान्यतो व्याप्तिज्ञानादेव तज्ज्ञानानुमितिरिति कारणीभूतज्ञाने तज्ज्ञानस्य विषयत्वान्न निरुक्तस्वतस्त्वानुपपत्तिरिति भावः । **व्यवसायस्यानुव्यवसायेनेति** । ज्ञानविषयकज्ञानेनेत्यर्थः । तेन गुरुमतस्यापि

बाधनी ।

यनान्तरीयस्यार्थक्रियादेः कारणगुणस्य वा विज्ञानानिश्चितप्रामाण्यैः प्रवर्तकज्ञानैः सह सजातीयत्वानुसंधानमभ्यासदशापत्तिः, तद्दशापन्नानां ज्ञानानामन्तरेणाप्य क्रियादिविज्ञानं तज्जातीयतानुसन्धानादेव प्रामाण्यं निश्चीयते, तेन तत्र सांशयिकत्वमसिद्धं भवेदित्यत उक्तम्—अनभ्यासदशायाम्—इति। न च व्यभिचारव्यावर्तनायैव हेतोर्विशेषणम्। रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वादित्युक्तावसिद्धिपरिहारार्थमपि दृष्टत्वादिति । तज्जातीयत्वाननुसंधानदशायां हि जाते ज्ञानेऽपि निश्चितेऽपि तत्स्वरूपे प्रामाण्यं प्रति संशेरते ज्ञातारः किमिदं प्रमाणमप्रमाणं वेति। तस्माज् ज्ञानस्वरूपाद् स्वग्राहकाद्वा न प्रामाण्यनिश्चयः, किन्तु परतोऽर्थक्रियादिविज्ञानाद्, यथैवाप्रामाण्यनिश्चयः परतो

प्रकाशः ।

व्यवसायेन गृह्यते । ज्ञानस्य विषयनिरूप्यतया ज्ञानवित्तिवेद्यो विषय इति व्यवसाये भासमाने धर्मधर्मिवत्तद्वैशिष्ट्यमपि विषयः, व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात् । अत एव रजतत्वेन पुरोवर्तिनं जानामीति तदाकारः । अन्यथा, पुरोवर्तिनं रजतञ्च जानामीति तदाकारापत्तिः । अप्रामाण्यं तु परतो ज्ञायते, तदभाववत्त्वस्य भ्रमानुल्लिखितत्वेनानुव्यवसायाविषयत्वात् । न चैवमनुव्यवसायस्य यावद्व्यवसायविषयविषयकत्वे भ्रान्तभ्रान्तिज्ञसङ्करः, बाधानवतारदशायामिष्टत्वात्, तदवतारे तस्यैव प्रतिबन्धकत्वादिति ।

तत्र सिद्धान्त्याह । एवमिति । अनभ्यासदशायामिति भागासिद्धिवारणार्थम्, न तु व्यभिचारनिरासार्थम् । परतो ज्ञेयत्वस्य केवलान्वयित्वात् । ननु स्वस्याप्यन्यापेक्षया परत्वाद् भट्टमते ज्ञ नाऽनुमितिग्राह्यत्वाच्च सिद्धसाधनम् । परतो ग्राह्यत्वेऽपि कदाचित् स्वतो ग्राह्यत्वाविरोधाद्, अर्थेन व्यभिचारश्च । तस्य तज्ज्ञानग्राह्यस्य ज्ञानप्रामाण्यसन्देहेन सन्दिह्यमानत्वात् । न च ज्ञानत्वेन हेतुर्विशेषणीयः । ज्ञानविषयकज्ञानप्रामाण्यसन्देहाद्धि ज्ञानरूपार्थसन्देहेऽपि

प्रकाशिका ।

लीनज्ञानेनेत्यर्थः। तेन सार्वसाधारण्यम्। व्यवसायरूपेति। व्यवसायविषयं प्रत्येव प्रत्यासत्तिकथनमिदम्, एतदभावेऽपि ज्ञानत्वादिभानादिति स्मर्त्तव्यम्। भागासिद्धिवारणार्थं पक्षविशेषणं बोद्धयमिति शेषः। नन्विति। हेतुविशेषणमिति शेषः। न च ज्ञानत्वेनेति। न चैवं स्वरूपासिद्धिदृष्टान्तासिद्धी इति वाच्यम् । ज्ञानधर्मत्वेनेत्यर्थात्। न चैवं ज्ञानरूपार्थे व्यभिचारप्रदर्शनमग्रेतनं विरुद्धमिति वाच्यम् । तत्रापि ज्ञानपदेन ज्ञानत्वाभिधानात् । केचित्तु ज्ञानत्वेनेत्यस्य ज्ञानाविषयप्रतीत्यविषय-

मकरन्दः ।

भागासिद्धिरिति । पक्षविशेषणं बोध्यमिति शेषः । नन्विति । हेतुविशेषणमिति शेषः । न च ज्ञानत्वेनेति । ज्ञानाविषयप्रतीत्यविषयत्वेनेत्यर्थः । यथाश्रुते स्वरूपासिद्धिप्रसङ्ग इति बोध्यम् । यत्तु ज्ञानधर्मत्वेनेत्यर्थ इति तन्न । ज्ञानरूपार्थेऽनुपदं व्यभिचारोपदर्शनविरोधात् ।

टिप्पणी ।

संग्रहः । अत एवेति । वैशिष्ट्यस्यापि विषयत्वादेव । ननु स्वतो ग्राह्यत्वं परतोग्राह्यत्वञ्च परस्परविरुद्धमिति स्वतो ग्राह्यत्वमङ्गीकर्त्तॄणामसिद्धमेव परतो ग्राह्यत्वमत आह । परत इति । तथा च न तयोर्विरोध इति । स्वाश्रयातिरिक्तज्ञानग्राह्यत्वस्य परतस्त्वस्वरूपत्वाद् भट्टेति। अविरोधा ति । परतो ग्राह्यत्वस्य स्वतो ग्राह्यत्वासिद्धत्वं कल्पयितुञ्च शक्यत इति भावः । तज्ज्ञानप्रामाण्यं तज्ज्ञानेन गृह्यत इत्येवं साधने त्वाह—अर्थेन व्यभिचारश्चेति । तज्ज्ञानग्राह्यस्येति । अनेन साध्यव्यतिरेको दर्शितः । न च ज्ञानत्वेनेति। ज्ञानाविषयकप्रतीत्यविषयोऽत्र ज्ञानपदार्थः। तेन प्रामाण्यस्य ज्ञानत्वाभावेन स्वरूपासिद्धिरिति शङ्काया

प्रकाशः।

तस्य निश्चितत्वेन तथापि व्यभिचारात्। उच्यते। अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यं तदन्यग्राह्यं वा, स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवृत्तिसंशयविषयत्वात्,

प्रकाशिका।

त्वेनेत्यर्थः। अतो न पक्षदृष्टान्तासिद्धी। न वाग्रे दर्शितव्यभिचारविरोध इत्याहुः। **अनभ्यासदशोत्पन्नेति**। इदं च भागासिद्धिवारणाय पक्षविशेषणम् हेत्वोरन्यतरोपलक्षणम्। **न स्वाश्रयेति**। न यावत्स्वाश्रयग्राह्यमित्यर्थः, तेन योगिज्ञानादिग्राह्यत्वमादाय न बाधः, सर्वविशेष्यकत्वे सति सर्वप्रकारकत्वन्तु प्रामाण्यमपक्ष एवेति न निरुक्तसाध्येऽप्यंशतो बाधः। **तदन्येति**। यावत्स्वाश्रयग्राह्यत्वे सति स्वाश्रयातिरिक्तग्राह्यत्वं साध्यम्। तेन यथाश्रुतेऽनुमितिमादाय-सिद्धसाधनं मात्रपदप्रवेशे योगिज्ञानमादाय बाध इति दूषणं निरस्तम्। स्वाश्रयीभूतास्मदादिज्ञानव्यक्त्यतिरिक्तमात्रग्राह्यत्वं साध्यम्। तेन नोक्तदोषावकाश इति कश्चित्। **स्वाश्रये सत्यपीति**। अपिशब्दो विपक्षबाधकसूचनाय सतिसप्तमीमहिम्ना सामानाधिकरण्यं लभ्यते तेन स्वाश्रयसमानाधिकरणस्वाश्र-

मकरन्दः।

ज्ञानत्वे व्यभिचारोपदर्शनपरं तदिति ज्ञानधर्मपरत्वेऽप्यदोष इत्यन्ये। **अनभ्यासदशापन्नेति**। कर्त्तव्यहेतुर्यावति तावत एव पक्षत्वमभिमतम्। अनभ्यासदशापन्नेऽपि सर्वत्र न संशय इति यथाश्रुते भागासिद्धितादवस्थ्यापत्तेरिति।

**न स्वाश्रयेति**। न यावत्स्वाश्रयग्राह्यमित्यर्थः। तेन योगीश्वरज्ञानस्य सर्वप्रामाण्याश्रयतया तद्ग्राह्यत्वेन न बाधः। यद्यपि सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्यांशे बाधः। तथापि तस्य पक्षबहिर्भाव एवेति बोध्यम्। **तदन्येति**। स्वाश्रयान्येत्यर्थः। ननु परेषामपि प्रामाण्यस्यानुमितिग्राह्यत्वाभ्युपगमेन सिद्धसाधनम्। न च स्वाश्रयातिरिक्तमात्रग्राह्यत्वमित्यर्थः, उक्तन्यायेन प्रामाण्यमात्रस्यैव स्वाश्रयीभूतयोगीश्वरज्ञानादिग्राह्यतया बाधापत्तेरिति चेन्न। स्वाश्रयपदेन स्वाश्रयत्वावच्छिन्नं न विवक्षितं, येनोक्तदोषः स्यात्, किन्तु स्वाश्रयीभूतास्मदादिज्ञानव्यक्तिः, तदतिरिक्तमात्रग्राह्यमित्यर्थः।

**स्वाश्रये सत्यपीति**। विपक्षबाधकतर्कसूचनायापिशब्दः, सतिसप्तमीमहिम्ना च स्वाश्रयसामानाधिकरण्यं पक्षविशेषणं लभ्यते। तथा च स्वाश्रयसमानाधिकरणस्वाश्रयाधिकरणक्षणावधिकतृ-

टिप्पणी।

निराशः प्रामाण्यस्याप्युक्तज्ञानत्वात्। **तस्य निश्चितत्वेनेति**। ज्ञानरूपार्थस्य प्रामाण्याश्रयत्वेनाभिमतज्ञानज्ञानग्राह्यत्वेन निश्चितत्वेनेत्यर्थः। **न स्वाश्रयग्राह्यमिति**। भट्टम्प्रति साधने च स्वाश्रयविषयकयावद्ग्राह्यत्वाभावः साध्यः। तेन नेश्वरज्ञानमादाय स्वमते बाधः, मीमांसकमात्रं प्रत्येव साधनीयत्वेन गुरुमते स्वाश्रययावद्ग्राह्यत्वस्यैव सत्त्वेन न सिद्धसाधनम् विशिष्य स्वाश्रयविषयकज्ञानाजन्यज्ञानविषयत्वस्य विषयेऽपि सत्त्वादविरोधादित्यर्थः। **तदन्यग्राह्यं वेति**। मीमांसकसामान्यं प्रत्येव साधनस्य प्रस्तुतत्वेन प्राभाकरमते स्वाश्रयेणापि ग्रहणाद् भट्टादिकम्प्रत्येव तथात्वे जन्यस्वाश्रयातिरिक्तमात्रग्राह्यत्वमित्यर्थः। नातो भट्टादिमते स्वाश्रयातिरिक्तानुमित्यनुव्यवसायग्राह्यत्वेऽपि सिद्धसाधनम्। यद्वा भट्टादिमतेऽनुमित्यनुव्यवसाययोः स्वातन्त्र्येणापि व्यवसायविषययावद्ग्राहकत्वेन तयोस्तदंशे व्यवसायसमानाकारकतया स्वाश्रयत्वेनैव सिद्धसाधनाभावान्मात्रपदन्न देयम्, स्वमते च प्रामाण्यानुमितिर्न व्यवसायसमानाकारिका व्यवसायविषयवह्निमत्पर्वतादेराधेयतया विशेष्यत्वे प्रकारत्वात् पर्वतादौ वह्न्यधिकरणत्वादेरेव वा प्रमाण्यघटकत्वादिति। **संशयविषयत्वादिति**। स्वाश्रय-

प्रकाशः ।

प्रामाण्यसंशयाजन्यसंशयविषयत्वाद्वा, अप्रामाण्यवत् । अर्थे निश्चितेऽपि न निश्चयानन्तरतृतीयक्षणेऽर्थसंशयो न वा प्रामाण्यसंशयं विनेति नार्थेन व्यभिचारः । स्वशब्दस्य सम्बन्धिशब्दत्वेन समभिव्याहृतपरत्वान्न स्वस्य परत्वम् । यथोक्तं, "यावद्व्यवसायोल्लिखितप्रकारविशिष्ट एव धर्म्यनुव्यवसाये भासते" तन्न । तथा हीदं रजतञ्च जानामीति नानुव्यवसायः, बहिर्विशेष्यके मनसोऽस्वातन्त्र्यात्, किं त्विदमिदन्त्वेन रजतत्वेन जानामीति । तत्रेदन्त्वरजतत्वे प्रकारत्वेन, तत्प्रकारकज्ञानवत्त्वञ्चात्मनि भासते, अन्यथा प्रकारवाचितृतीयाऽर्थासम्भवः । न च रजतत्ववैशिष्ट्यमेव तृतीयार्थः, व्यवसायेऽपि तदुल्लेखापत्तेः । अतः, इदन्त्वरजतत्ववैशिष्ट्यं पुरोवर्त्तिनो नानुव्यवसायविषय इति कुतः स्वतः प्रामाण्यग्रहः ।

ननु परतः प्रामाण्यपक्षेऽपि परस्य शब्दादेरभावेऽनुमानं वाच्यम् , तच्च लिङ्गाभावादसम्भवि । समर्थप्रवृत्तिजनकत्वं लिङ्गमिति चेन्न । कारणतावच्छेदकरूपग्रहं विना तदग्रहात् । तद्

प्रकाशिका ।

यावधिकतृतीयक्षणवृत्तिसंशयविषयत्वादिति हेतुः पर्यवस्यति, यत्र विशेष्ये तादृशसंशयकोटित्वं तत्र विशेष्ये न स्वाश्रयग्राह्यमिति सामान्यव्याप्त्येदमनुमानमभिप्रेतमतो न रूपं गुण इति ज्ञानानन्तरं ज्ञानं गुणो न वेति यथोक्तसंशयकोटौ गुणत्वे व्यभिचारः । वस्तुतो यज्ज्ञानव्यक्त्यनन्तरं तृतीयक्षणे नैतादृशसंशयः, तद्भिन्नकयुत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वादित्येव हेतुरतो नोक्तक्रमेण गुणत्वे व्यभिचाराशङ्का । एतेन यत्र धर्मोत्पत्तिपूर्वमेव धर्मिज्ञानकोटिस्मरणे दैवात् तत्र ज्ञानोत्पत्तेरनन्तरं प्रामाण्यसंशयः, तदनन्तरमर्थसंशय इत्यर्थे हेतोर्व्यभिचार इत्यपास्तम् । अतादृशव्यक्तिविशेषोत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वस्यैव हेतुत्वात् । **प्रामाण्येति** । स्वाश्रयविशेष्यकप्रामाण्यसंशयजन्यसंशयविषयत्वादित्यर्थः । **समर्थप्रवृत्तिजनकत्वमिति** । न च जनकतावच्छेदकप्रामाण्याग्रहे कथं जनकताग्रह इति वाच्यम् । उक्तग्राहकसत्त्वे तृणारणिमणिन्यायेन व्यक्तावपि तद्ग्रहसम्भवात् । ज्ञाने प्रवृत्तिजनकत्वं प्रवृत्तौ समर्थत्वं गृह्यत इति विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन विशि-

मकरन्दः ।

तीयक्षणवर्त्तिद्विमात्रकोटिकसंशयकोटित्वादित्यर्थः । तेन यत्र रूपं गुण इति ज्ञाने गुणत्वतदभाव–प्रामाण्यतदभावकोटिकः समूहालम्बनः संशयः, तत्र गुणत्वे हेत्वभावादेव न व्यभिचारः । यत्र च गुणत्वतदभावमात्रकोटिकः संशयः, तत्र तादृशसंशयविषयप्रामाण्याश्रयज्ञानग्राह्यत्वाभावरूपसाध्यसत्त्वादेव न व्यभिचार इति । यद्वा, तादृशतदधिकरणकसंशयकोटित्वादिति हेतुः । तथा च यत्र तादृशतदधिकरणकसंशयकोटित्वं तत्र तन्निष्ठतया न स्वाश्रयग्राह्यत्वमिति सामान्यतो व्याप्तिरभिमता । एवञ्च गुणत्वस्य रूपनिष्ठतया स्वाश्रयेण ग्रहेऽपि स्वाश्रयनिष्ठतयाऽग्रहेण विशिष्टाभावसत्त्वात् तत्र न व्यभिचार इति । केचित्तु यद्व्यवसायविषयकोटिको यद्व्यवसायधर्मिकश्च सन्देहस्तृतीयक्षणे जायते तत्प्रामाण्यस्यैव पक्षत्वात् तत्प्रामाण्याश्रयग्राह्यत्वाभावो गुणत्वेऽस्त्येवेति न व्यभिचार इत्याहुः ।

**प्रामाण्यसंशयेति** । स्वाश्रयविशेष्यकप्रामाण्यसंशयायोग्यत्वादित्यर्थः । विस्तरस्तु प्रत्यक्षप्रकाशेऽनुसन्धेयः । **समर्थेति** । न च जनकतावच्छेदकस्य प्रामाण्यस्याग्रहे कथं तद्ग्रह इति वाच्यम् । उक्तग्राहकसत्त्वे तृणारणिमणिन्यायेन व्यक्तावपि तद्ग्रहसम्भवात् । यद्वा, ज्ञानवृत्तिप्रवृ-

टिप्पणी ।

समानाधिकरणस्वाश्रयावधिकतृतीयक्षणवर्त्तिसंशयविषयत्वादिति पर्यवसितं हेत्वर्थः । **न स्वस्य परत्वमिति** । न प्रामाण्यमात्रपरत्वमित्यर्थः । तेन दृष्टान्तेऽप्रामाण्ये न साध्यवैकल्यम् । **व्यवसायेऽपीति** । रजतत्वेनेदमिति व्यवसायस्याप्यभिलापापत्तेः । **कारणतावच्छेदकरूपं-**

प्रकाशः ।

यदि प्रमात्वमेव, तदाऽऽत्माश्रयः । अन्यच्चेत् , तदेव प्रामाण्ये लिङ्गमस्तु, उपजीव्यत्वात् । न च तृणारणिमणिन्यायेन व्यक्तावेव कारणत्वं गृहीत्वा समर्थप्रवृत्तिजनकत्वग्रहः, ग्राहकाभावात् । न च प्रत्यक्षमेव तद्ग्राहकम् । तद्धि न बहिरिन्द्रियजन्यम् । आन्तरत्वात् । नापि मानसम् । तद्धि समर्थप्रवृत्तेः प्रागुत्तरकालं वा ? नाद्यः । समर्थप्रवृत्तेरभावात्तद्वैशिष्ट्याग्रहात् । नान्त्यः । ज्ञानस्य नष्टत्वेन मनसा प्रत्यासत्त्यभावात् । नाऽपि तज्जातीयत्वं लिङ्गम् । तद्धि करचरणवति शरीरज्ञानत्वादि । तत्र करचरणाद्यन्तरवति करचरणाद्यन्तरवत्त्वज्ञाने व्यभिचारः । तत्रापि शरीरांशे प्रमात्वमेवेति चेत् , तर्हि; करचरणादीति व्यर्थम् । शरीरभ्रमेऽपि कस्याश्चिच्छरीरव्यक्तेर्भानात् , तत्र तस्य प्रामाण्यात् । अन्यथा शरीरत्वस्यैव भानायोगात् । करचरणादिशून्ये यच्छरीरत्वेन ज्ञानं तद्व्यावृत्त्यै तदिति चेत् । करचरणादिमत्त्वमुपलक्षणं विशेषणं वा ? नाद्यः । व्यावृत्त्योपलक्ष्याभावात् । नान्त्यः । विषयतया हि न ज्ञानविशेषणत्वं करचरणवत्त्वप्रकारकज्ञानविषयत्वस्य व्यभिचारात् , अशरीरेऽपि तादृशभ्रमसम्भवात् , शरीरज्ञाने तदसिद्धेश्च । विषयविशेषणत्वे च करचरणवद्विषयकशरीरज्ञानत्वस्य व्यभिचारात् । शरीरभ्रमस्यापि।

टिप्पणी ।

**विनेति ।** अवच्छेदकरूपग्रहं विनेत्यर्थः । **तदाऽऽत्माश्रय इति ।** जनकताया जनकतावच्छेदकरूपत्वाभिमानेनात्माश्रय इत्यन्यथान्योन्याश्रयो बोध्यः । **आन्तरत्वादिति ।** कार्य्यकारणयोः प्रवृत्तिप्रमयोर्बहिरिन्द्रियाग्राह्यत्वेन तत्कार्य्यकारणभावस्यापि तत्त्वादित्यर्थः । **वैशिष्ट्याग्रहादिति ।** सम्बन्धग्रहस्य सम्बन्धिग्रहसापेक्षत्वेन प्रवृत्तेरग्रहे तत्सम्बन्धस्य कारणत्वघटकस्य कार्य्यकारणभावस्य वा ग्रहीतुमशक्यत्वादित्यर्थः । **ज्ञानस्य नष्टत्वेन इति ।** प्रवृत्त्युत्तरक्षणस्य प्रमातृतीयक्षणत्वेन तदानीं तत्र विशेष्यसन्निकर्षाभावादित्यर्थः । **करचरणवतीति ।** अत्र सप्तम्या विषयत्वमात्रपरत्वाभिप्रायोऽवसेयः । इदं ज्ञानं शरीरप्रमात्ववत् करचरणादिमद्विषयकशरीरज्ञानत्वादित्यनुमाने तच्छरीरे तच्छरीरवृत्तिकरचरणज्ञानस्य भ्रमत्वेन साध्याभाववत्त्वमभिमत्य दोषमाह । **तत्रेति** उक्तज्ञानस्य भ्रमत्वेऽपि करचरणादिमत्त्वांश एव न तु शरीरांशे, विशेष्यांशे सर्वज्ञानस्य प्रमात्वाभ्युपगमात् , साध्यञ्च शरीरप्रमात्वमेवेति कुतो व्यभिचार इत्याशङ्कते । **तत्रापि शरीरांश इति । शरीरभ्रमेऽपीति ।** शरीरत्वविशिष्टशरीरविषयकभ्रमेऽपीत्यर्थः, न तु शरीरत्वेन भ्रमेऽपीत्यर्थः, तस्य शरीरविषयकस्यापि सम्भवात् । **करचरणादीति ।** शरीरप्रमात्वञ्च शरीरत्ववति शरीरत्वप्रकारकज्ञानत्वं तदेव साध्यं, हेतुघटकं शरीरज्ञानञ्च न शरीरत्वविशिष्टविषयकज्ञानत्वं किन्तु शरीरत्वप्रकारकज्ञानत्वमेव तस्य च स्थाण्वादौ शरीरभ्रमे सत्त्वेन व्यभिचारः स्यादिति करचरणादिमद्विशेष्यकत्वमुपादेयमित्याह । **करेत्यादि । व्यावृत्त्योपलक्ष्याभावादिति ।** अविद्यमानेन येन यदितरतो व्यावर्त्यते तदुपलक्ष्यमुपरञ्जकमाच्यते दशाविशेषे करचरणादिशून्यस्या शरीरव्यावृत्तस्याभावात् कथमुपलक्षणं स्यादिति भावः । **विषयतया हीति** करचरणवतीत्यत्र सप्तम्या आधेयत्वमर्थः, प्रकारतया करचरणवद्वृत्तिशरीरत्वप्रकारकज्ञानत्वं हेतुः पर्य्यवसितः । **करचरणवत्त्वप्रकारकेति ।** "करचरणवत्त्वप्रकारकशरीरत्वज्ञानस्य व्यभिचारादिति" क्वचित् पाठः । **विषयत्वस्य व्यभिचारादिति ।** विषयतया शरीरत्वप्रकारकप्रमाव्यभिचारादित्यर्थः । तथा च स्थाणुविषयके करचरणादिमदिदं शरीरमिति भ्रमेऽपि हेतोः सत्त्वेन साध्यस्य तत्राभावात् व्यभिचार इति भावः । **शरीरज्ञानेऽपीति ।** इदं शरीरमिति प्रमायाः करादप्रकारकत्वेन तत्र भागासिद्धेरिति भावः । **शरीरज्ञानत्वस्येति ।** करचरणवद्विषयकत्वे सति शरीरत्वप्रकारकज्ञानत्वस्येत्यर्थः । **शरीरभ्रमस्यापीति ।** स्थाणुशरीरयोः शरीरत्वस्थाणुत्व

प्रकाशः ।

वस्तुतः करादिमद्विषयकत्वात् । न च करचरणशून्ये यच्छरीरत्वेन ज्ञानं न भवतीति विवक्षितम् । तृतीयार्थस्य विषयत्वे स्वरूपासिद्धेः । शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयकत्वनियमात् ।

अत्राहुः । समर्थप्रवृत्तिजनकत्वं प्रवृत्त्युत्तरकालं संस्कारोपनीतज्ञाने प्रमेयत्वाभिधेयत्वव्याप्तिवद् गृह्यते । यद्वा पूर्वं पृथिवीज्ञाने पृथिवीत्वप्रकारकनिश्चयत्वानुव्यवसितौ कदाचित् तत्रैव गन्धस्य तद्विरोधिविरहस्य साक्षात्कारे पुनः स्मृतिरूपे पृथिवीज्ञाने सति तत्सन्निकृष्टेन प्रत्यभिज्ञान इव विशेषणज्ञानजनितसंस्कारापेक्षेण मनसा गन्धवत्त्येवाऽयं निश्चय इत्याकारेण सुरभि चन्दनमिति चाक्षुषवज्ज्ञानजननान्न ग्राहकाभावाद्धेत्वसिद्धिः । तज्जातीयत्वमपि करचरणवद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वादि । शरीरभ्रमे करचरणवतो विशेषणत्वात् । प्रथमं च प्रामाण्यानुमितिः केवलव्यतिरेकिणा ।

प्रकाशिका ।

द्विशेषणकहेतुग्रहसम्भवाच्च ।

पुनः स्मृतिरूप इति । अत्र केचित् । पृथिवीज्ञाने=पृथिवीज्ञानज्ञाने । अन्यथा पृथिवीस्मरण एव गन्धवद्विशेष्यकत्वनिश्चयलाभे पृथिवीत्वप्रकारकनिश्चयानुव्यवसितावित्यस्य वैयर्थ्यापत्तेः। एवं च ततः सन्निकृष्टेनेत्यस्य तत्स्मृतिरूपसन्निकर्षवतेत्यर्थ इति व्याचक्षते । वस्तुतो गन्धवद्विशेष्यकत्वोपनयार्थमेव. पृथिवीत्वप्रकारकनिश्चयत्वानुव्यवसायोपयोगः । एवं च पृथिवीत्वपदं गन्धवत्त्वपरम् , एवं च पृथिवीज्ञाने जाते तद्विषये गन्धवत्त्वपरिच्छेदे गन्धवत्त्वप्रकारकनिश्चयत्वानुव्यवसितौ स्मृतिरूपे पृथिवीज्ञाने तत्सन्निकृष्टेन मनसा स्मृत्युपनीतगन्धवत्-

मकरन्दः ।

त्तिसामान्यजनकत्वमेव हेतुप्रविष्टम् , तथा चोपनीते ज्ञाने प्रवृत्तिजनकत्वे प्रवृत्तौ च समर्थत्वमुपनीतं गृह्यत इत्यर्थाद्विशिष्टवैशिष्ट्यरूपहेतुग्रह उपपद्यत इति ।

स्मृतिरूपे पृथिवीज्ञाने इति । पृथिवीज्ञानज्ञाने इत्यर्थः । अन्यथा पृथिवीस्मरण एव गन्धवद्विशेष्यकत्वनिश्चयलाभे पृथिवीत्वप्रकारकनिश्चयत्वानुव्यवसितावित्यनर्थकमापद्येत । एवञ्च तत्सन्निकृष्टेनेत्यस्य स्मृतिरूपसविषयकसहकारिणेत्यर्थः । तथा च स्मृत्युपनीते पूर्वानुभव एव गन्धवद्विशेष्यकत्वनिश्चय इति तद्विशेष्यकपृथिवीत्वप्रकारकज्ञानत्वादिहेतुग्रह इति भावः ।

टिप्पणी ।

प्रकारकभ्रमस्यापीत्यर्थः । तृतीयार्थस्य विषयत्व इति । विषयत्वरूपत्वे, सप्तम्या अपि तत्त्व इत्यपि वाच्यम् । अभिधेयत्वव्याप्तिवद् गृह्यते इति । प्रमादिघटिते तत्र नियमेनोपनयापेक्षासम्भवात् । तद्विरोधिविरहस्येति । गन्धविरोधिशीतोष्णस्पर्शादिग्रहे गन्धसाक्षात्कारे शङ्खपीतत्वसाक्षात्कार इव दोषजत्वशङ्कया प्रामाण्यसंशये गन्धवद्विशेष्यकत्वांशपरिच्छेदो न स्यात्तस्य तत्र विरोधित्वात् अतः सर्वथैव तदभावदार्ढ्याय गन्धविरुद्धत्वेन ये ये गृहीतास्तत्कालमुपस्थिताश्च तेषाममावसाक्षात्कारपर्यन्तानुसरणमिति भावः । पृथिवीज्ञाने सतीति । पृथिवीज्ञानज्ञाने सतीत्यर्थः । गन्धवत्त्वे वायन्निश्चय इति । गन्धवद्विशेष्यकपृथिवीत्वप्रकारकोऽयं निश्चय इत्यर्थः । इत्याकारेण सुरभिचन्दनमितीति । अभेदे तृतीया ततश्च तज्ज्ञानेत्यत्रान्वेति । करचरणवद्विशेष्यकेति । करचरणवन्निष्ठविशेष्यतानिरूपितशरीरत्वप्रकारतानिरूपकज्ञानत्वादिरूपं निर्वक्तुं शक्यत इत्यर्थः । शरीरभ्रमे चेति । स्थाणुत्वादिना शरीरभ्रमे न तु शरीरत्वेन शरीरप्रकारकभ्रम इत्यर्थः । तत्र व्यभिचारस्याप्रसक्तत्वाद्धेतोः सत्वाच्च करचरणवतोऽविशेषणत्वादिति न विद्यते ज्ञाने विवक्षितशरीरत्वरूपविशेषणं यत्र तत्त्वादित्यर्थः। अन्यथा विशेषणत्वोक्त्या विशेष्यत्वमेव व्यावर्त्यं स्यात्तस्य शरीरादेः सखण्डत्वे-

प्रकाशः ।

ननुम् प्रामाण्यप्रसिद्धिं ना व्याप्तिग्रहात् कथमनुमानं ? अथ, व्याघातात् प्रमातद्विषयसिद्धौ सामान्यतः साध्यप्रसिद्ध्या न तदप्रसिद्धिः, विशिष्यानिर्णयाच्च नान्वयित्वासाधारणत्वे इति चेत् तर्हि, कस्यापि प्रथमं स्वार्थे प्रामाण्यानुमितिर्न स्यात् । प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्य तदाऽनुपस्थितेः । स्वयं प्रामाण्यनिषेधस्य च तद्धीपूर्वकत्वात् । मैवम् । प्राग्भवीयसंस्काराद्विशेष्यावृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकज्ञानत्वं वा प्रामाण्यमात्रं स्मृतं, पृथिवीज्ञानादौ साध्यभानं सर्वनाममहिम्ना पक्षधर्मताबलात् पृथिवीज्ञानस्य विशेष्यावृत्त्यकारकत्वादौ पर्यवस्यति स्वतः प्रामाण्यनिषेधे प्राथमिकप्रामाण्यज्ञानस्यान्यथोपपादयितुमशक्यत्वादिति साम्प्रदायिकाः ।

अस्मत्पितृचरणास्तु—प्रथमं प्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणा साध्यम् । तत एव निष्कम्पप्रवृत्तेरुपपत्तेः । तदेव वा सिद्ध्यत् पक्षधर्मताबलेन तद्वति तत्प्रकारकनिश्चयत्वादिक-

प्रकाशिका ।

द्विशेष्यकत्वग्रह इति न हेत्वसिद्धिरिति समुदायार्थः । सर्वनाममहिम्नेति । इदं च दृष्टान्ततयोक्तम् । तेन यथा शाब्दबोधे सर्वनाममहिम्ना विशेषविषयता तथानुमानिके पक्षधर्म्मताबलात्तथेत्यर्थः । ननु देवदत्तत्वादिप्रकारं ज्ञानं जन्मान्तरे नानुभूतं तद्वति तत्प्रकारकत्वञ्चैकं नास्त्येवेति न तत्रोक्तगतिः, किंच प्रकारान्तरसत्त्वेऽनुपपत्तिरपि प्राग्भवीयसंस्कारोद्बोधिका नास्तीत्यनुशयेनाह । अस्मत्पितृचरणास्त्विति । तदेवेति । यद्यपि पक्षधर्म्मताबलेन व्यापकत्वेन गृहीतस्य धर्म्मस्य पक्षसम्बन्धमात्रं सिद्ध्यति न तु तत्समनियतधर्म्मान्तरमपि तथाप्यग्रिमव्यतिरेकिणा तत्सिद्धिरित्यत्र(१) तात्पर्यम् । अयं च प्रकारः क्वचित् सम्भवतीत्युपन्यस्तो न तु सार्वत्रिकः । एतेन प्रमेयत्वप्रकारकज्ञाने नायं कल्पः, तत्राप्रामाण्याप्रसिद्धेः । किञ्चायमपि कल्पोऽप्रामाण्यप्रसिद्धौ, तत्प्रसिद्धिश्च जन्मान्तरीयसंस्कारादुपनयाद्वा तथा च प्रामाण्यप्रसिद्धिरपि तथैवास्तु किमनेन कल्पेनेत्यादि दूषणं निरवका-

मकरन्दः ।

सर्वनाममहिम्नेत्यनेनानुपपत्तिविशेषः पक्षधर्मतासहकारी विवक्षित इति नानुमाने तदुपयोग इति दूषणमनवकाशमित्येके । दृष्टान्तपरतया तदित्यन्ये । ननु तद्वत्त्वस्यैकस्याभावाद् देवदत्तादिज्ञानप्रामाण्यं जन्मान्तरे नानुभूतमिति तत्र नोक्तगतिसम्भवः । गत्यन्तरसत्त्वे प्राग्भवीयसंस्कारोद्बोधे मानाभावश्चेत्यनुशयादाह । प्रथममिति । तत एवेति । अप्रामाण्यशङ्काविधूननस्य ततोऽपि भावादिति भावः । तदेवेति । यद्यपि पक्षधर्मताबलादप्यखण्डाभावस्य पक्षीयत्वं व्यापकतानवच्छेदप्रकारेण सिद्ध्यति, न तु तद्वतीत्यादिकं, तथापि तदनन्तरमर्थात्तत्सिद्धिरित्यत्र तात्पर्यम् । अत्र चाप्रसिद्धाभावोऽपि प्रतियोगिप्रसिद्ध्या व्यतिरेकव्याप्तिग्रहे सति सिद्ध्येत् । न चाप्रामाण्यं प्रसिद्धं, प्रामाण्यवत्तस्याप्यतीन्द्रियत्वात् । तदर्थं प्राग्भवीयसंस्काराद्यनुसरणं च प्रामाण्यानुमानार्थमेव तदनुसरणमर्हं, लाघवादावश्यकत्वाच्च । प्रमेयमित्यादिज्ञाने चाप्रामाण्या-

टिप्पणी ।

नासम्भवादिति । अथ व्याघातादिति । परेण प्रमातद्विषयनिषेधोद्भावनात्, तद्वति तत्प्रकारकत्वमादाय पक्षधर्म्मताबलेनेति व्यापकस्य तत्तद्रूपेणागृहीतस्य भानेऽनुभवानुरोधाद्यथा-चाक्षुषज्ञानादेः सामर्थ्यं कल्प्यते तथा निरुक्तव्याप्तिग्रहकालीनपक्षधर्म्मताग्रहस्याप्यनुभवानुरोधाद् विशेष्ये विशेषणमिति रीत्या निरुक्तप्रामाण्यभाने सामर्थ्यकल्पनादिति भावः । निर्द्धर्म्मितावच्छे-

(१) अप्रामाण्याभावविशेष्यकप्रथमानुमितेरितरबाधविधया द्वितीये तत्प्रकारकानुमितौ प्रामाण्यभाने पक्षधर्मतासहकारित्वमिति भावः ।

प्रकाशः ।

मादाय सिद्ध्यति । तथा हि । अयं पृथिवीत्वेनानुभवो न पृथिवीत्वाभाववति पृथिवीत्वप्रकारकः; गन्धवद्विषयकप्रयत्नजनकपृथिवीत्वप्रकारकज्ञानत्वात् यन्नैवं तन्नैवम् । यथा पृथिवीभ्रमः । एवञ्च पृथिवीभ्रमे पृथिवीत्वाभाववति पृथिवीत्वप्रकारकत्वसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रहाद्प्रामाण्यव्यापकहेत्वभावाभावरूपाद्धेतोरप्रामाण्याभावरूपं साध्यं सिद्ध्यति । यद्व्यापकतया हेत्वभावो गृहीतस्तदभाव एव हि हेतुना साध्यते । यत्र त्वभावव्यापकता हेत्वभावस्य ज्ञायते, तत्र साध्यप्रसिद्धिरनुमानाङ्गम्, तां विना तदभावात् यत्र च भावव्यापकता हेत्वभावस्य, तत्र न साऽङ्गम्, तां विनाऽपि व्यतिरेकव्याप्तिग्रहात् । विशेषणज्ञानं विना कथं प्रामाण्यविशिष्टाऽनुमितिरिति चेत् । प्रथमं न कथञ्चित् । ज्ञाने प्रामाण्यमित्यनुमित्यनन्तरं तेनैव हेतुना तत्र प्रामाण्यविशिष्टानुमितिः, अभावविशेष्यकज्ञानानन्तरम्, अभाववद् भूतलमिति ज्ञानवत् । एवं तदभाववति तत्प्रकारकत्वव्यतिरेकः सिद्धस्तद्वति तत्प्रकारकत्वमादाय पक्षधर्मताबलेन सिद्ध्यतीति तत्त्वचिन्ता-

प्रकाशिका ।

शम् । अप्रामाण्यशङ्काविरहस्य कचिदेव संभव इत्याशयेनैतत्कल्पावतारात् । **अयमिति** । अनुभवपदं निश्चयपरम् तल्लाभार्यैव च हेतुनिष्ठनिश्चपपदं न तु हेतुप्रविष्टं वैयर्थ्यात् । निष्प्रकारकत्वेनान्यप्रकारकत्वेन वार्थान्तरवारणाय तृतीयान्तम् । पृथिवीभ्रमपक्षत्वेंऽशतो बाधः स्यादिति तद्वारणाय **अयमिति** । पृथिवीविशेष्यक इत्यर्थः । **पृथिवीत्वाभाववतीति** । अत्र पृथिवीत्वाभाववद्विशेष्यकत्वाभावमात्रं साध्यमन्यथा वैयर्थ्यात् । अप्रामाण्यस्याभावत्वेन व्याप्यत्वेन च व्यर्थविशेषणतायाः दुष्परिहरत्वात् पृथिवीत्वप्रकारजलज्ञाने व्यभिचार इति **गन्धवद्विषयकेति** । अत्र पृथिवीत्वमिति ज्ञानस्यापि प्रवर्तकतया तत्र व्यभिचार इति पृथिवीत्वप्रकारकेति । पृथिवीत्वप्रकारत्वावच्छेदेन तादृशप्रयत्नजनकत्वं हेतुरतो न जलपृथिव्याविति समूहालम्बने व्यभिचारः । निश्चयपदन्तु निरुक्तमेवेति । **कदाचिद्दोषादिति** । न च कदाचित् दोषात् प्रामाण्यसंशयेऽपि तद्विरहदशायां स्वतः प्रामाण्यग्रहे बाधकाभावः, दोषात् कदाचिद्रजतत्वसंशयेऽपि कदाचिद्रजतत्वग्रहवदिति वाच्यम् । स्वप्रकाशपक्षस्य सामग्रीविरहादनुपपत्तेः । ज्ञाततायाश्चाप्रामाणिकतया तल्लिङ्गकानुमितेरप्रसिद्धेः । मनसश्चोपनयसहकृतस्य बहिरर्थग्राहकत्वेऽपि उपनायकज्ञानगोचरस्य ज्ञानस्य स्वातन्त्र्येण बहिरर्थाविषयकत्वात् । अनुव्यवसायस्य व्यवसायप्रामाण्यग्रहोत्तरकालीनस्याप्रवर्त्तकत्वेन तथा कल्पनात् । उपनायकज्ञानविषयत्वन्तु कचिदेवेत्यत्रादृष्टमेव नियामकम् । एवं च ज्ञानोपनीतप्रामाण्यग्रहेऽपि न

मकरन्दः ।

भावानुमानासम्भवे तत्र प्रकारान्तरानुसरणे स एव प्रकारः सर्वत्रानुस्रियतामित्यादि दूषणं प्रत्यक्षप्रकाशे द्रष्टव्यम् ।

**अयमिति** । अनुभवपदं निश्चयपरम् । तेन संशयव्यावृत्तसाध्यसिद्धिः, स्मृतेरपि प्रवृत्तेस्तत्साधारण्यञ्चेत्याहुः । निष्प्रकारकत्वेनार्थान्तरवारणाय तृतीयान्तम् । पृथिवीत्वाभाववति नेत्येव साध्यम् । व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यत्वेन तत्र नीलधूमवदधिकस्य व्यर्थत्वात् । अप्रामाण्यस्य भावरूपतया साध्याभावस्याखण्डत्वेन न वैयर्थ्यमित्यस्याप्यसम्भवादिति ध्येयम् । पृथिवीत्वभ्रमे व्यभिचारवारणाय जनकान्तम् । अत्र पृथिवीत्वमिति निश्चयस्य पृथिवीत्वाभाववत्पृथिवीत्वविशेष्यकस्य पृथिवीप्रवर्त्तकत्वाभ्युपगमपक्षे तत्र व्यभिचार इत्यत उक्तं, **पृथिवीत्वप्रकारकेति** । निश्चयपदं च निश्चयपक्षतासूचनार्थमविवक्षितार्थकम् । विस्तरः प्रत्यक्षप्रकाशे ।

टिप्पणी ।

दकसंशयस्याभावाद् धर्मितावच्छेदकः कश्चिद् वाच्यस्तस्य च विशेषणत्वात्तज्ज्ञानमपेक्षितं स्यात्त-

वत्। यदि तु स्वतो ज्ञायेत, कदाचिदपि प्रामाण्यसंशयो न स्यात्, ज्ञानत्वसंशयवत्। निश्चिते तदनवकाशात्। न हि साधकबाधकप्रमाणाभावमवधूय समानधर्मादिदर्शनादेवासौ, तथा सति तदनुच्छेदप्रसङ्गात्। अथ प्रमाणवदप्रमाणेऽपि तत्प्रत्ययदर्शनाद्विशेषादर्शनाद्भवति शङ्केत्यभिप्रायः, तत् किं प्रमाणज्ञानोपलम्भेऽपि न तत्प्रामाण्यमुपलब्धं, प्रमाणज्ञानमेव वा नोपलब्धम्? आद्ये, कथं स्वतः प्रामाण्यग्रहः, प्रत्ययप्रतीतावपि तदप्रतीतेः, द्वितीये, कथं तत्र शङ्का, धर्मिण एवा-

बोधनी।

विसंवादादेरिति। सांशयिकत्वात्संशयत्वादित्यर्थः। साध्यविपर्ययाङ्गीकारेऽनिष्टप्रसङ्गमाह—यदि इति। यथा हि निश्चिते ज्ञानस्वरूपे संशयो नास्ति ज्ञानमिदं न वेति, तद्वत्प्रामाण्येऽपि संशयः कदाचिन्न स्यात् तस्यापि निश्चयात्, निश्चितेऽपि विषये संशयस्यानुत्थानादिति। ननु निश्चितेऽपि प्रामाण्ये ज्ञानत्वादेः प्रमाणाप्रमाणसाधारणधर्मस्य दर्शनात् संशयः स्यादित्यत्राह—न हि—इति। असत्येव च साधकबाधकप्रमाणाभावे समानधर्मदर्शनादेः संशयहेतुत्वे को दोषस्तत्राह- तथा सति—इति। विशेषदर्शनोत्तरकालेऽपि समानधर्मादिदर्शनस्य संशयहेतोः सत्त्वादिति। अथ—इति। ज्ञानेन सह गृह्यमाणेऽपि प्रामाण्ये प्रमाणज्ञानेष्विवाप्रमाणज्ञानेष्वपि प्रामाण्यदर्शनादिदं प्रमाणज्ञानमिदं त्वप्रमाणमिति नियामकविशेषादर्शनाच्च संशयोपपत्तिरिति भेदतद्विशेषोपलम्भे संशयस्यानुपपत्तेः, प्रामाण्यसंशयवादिनापि तदनुपलब्धिरवश्यं वक्तव्येति मन्वानो विकल्प्य दूषयति—तत्किम्—इति। धर्मिण एव—इति। उपलब्धे हि धर्मिणि धर्मविषयकः संशयो न त्वनुपलब्ध इति। अत्रायं संक्षेपः-गृह्यमाणं ज्ञानं यद्यप्रमाणविलक्षणं न गृह्येत ततः प्रामाण्यमेव न गृहीतं स्यात्, अथ तथा गृह्येत ततो न कदाचिदपि प्रामाण्यसंशयः स्यादिति। एवं स्वपक्षसाधनमभिधायेदानीं

प्रकाशः।

मणावाहुः। कदाचिदपीति। प्रामाण्यग्रहोत्तरकालमिव तत्पूर्वमपीत्यर्थः। न च ज्ञानत्वस्य साधारणधर्मस्य ज्ञानमात्राद् इत्याह। न हीति। प्रामाण्यज्ञानमात्रं न विरोधि, अपि तु प्रमाणमेवेत्यवधारणाऽऽत्मकमित्याशयेन शङ्कते। अथेति। निश्चयमात्रमेव संशयविरोधि, न तु तद्विशेषोऽवधारणमित्याशयेन परिहरति। तत्किमिति। प्रमाणेति। प्रमाणरूपं ज्ञानमित्यर्थः। तदप्रतीतेः = प्रामाण्याप्रतीतेः॥

धर्मिण एवेति। ननु धर्मिज्ञानं न संशयहेतुः। कोटिस्मरणविशेषादर्शनधर्मीन्द्रियसन्निकर्षात् प्रामाण्यसंशयरूप एव ज्ञानग्रह उत्पद्यते। अन्यत्र विशिष्टज्ञाने विशेष्यज्ञानस्याहेतुत्वात्। अत्राहुः। तुरगादौ वेगेन गच्छतस्तद्विषयेन्द्रियसन्निकर्षेऽपि यावद्विषमात्रज्ञाने यदेव धर्मि ज्ञायते तत्रैव विशेषादर्शनादितः संशयो जायते, न त्वज्ञाते धर्मिणीति धर्मिज्ञानं तद्धेतुः। किञ्च, यद्ध-

मकरन्दः।

कदाचिदपीतीति। तत्र दोषात् कदाचित् प्रामाण्यसंशयेऽपि क्वचिन्मनसा तद्ग्रहे बाधकाभावान्मनोयोग्यत्वलक्षणं स्वतस्त्वं न खण्डितं भवति, अन्यथा रजतत्वादेश्चक्षुरादियोग्यत्वं न स्यात्। दोषतदभावाभ्यामुभयोपपत्तिरिति तु तुल्यम्। न च तत्र सामग्रीबलात् तथा, प्रकृते मनसो बहिरस्वातन्त्र्यात् स्वातन्त्र्येण तद्व्यवसायग्राहकस्यैव तत्सत्तानिश्चयरूपतया प्रामाण्यग्राहकत्वान्न तथेति वाच्यम्। तर्हि सामग्रीविरहान्न स्वतस्त्वमित्यायातं, संशयानुपपत्तेः क्वोपयोगः?। न च सोऽपि उपनीते मनसः स्वातन्त्र्याभ्युपगमात्। अन्यथा तवाप्युपनयसहकारेण ततस्तद्ग्रहणं सर्वसिद्धं विरुद्ध्येतेति चिन्त्यम्।

टिप्पणी।

चक्षुरिन्द्रियादिना धर्मिणमगृहीत्वा सम्भवतीत्युक्तदोषो न स्यादत आह। किञ्चेति। यद्धर्मि-

नुपलब्धेरिति । यदपि झटिति प्रचुरतरसमर्थप्रवृत्त्यन्यथानुपपत्त्या स्वतः प्रामाण्यमुच्यते, तदपि नास्ति । अन्यथैवोपपत्तेः । झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातमन्तरेणानुपपद्यमाना तमाक्षिपेत्, प्रचुरप्रवृत्तिरपि स्वकारण-प्राचुर्यम्, इच्छा च प्रवृत्तेः कारणम्, तत्कारणमपीष्टाभ्युपायताज्ञानम्, तदपि तज्जातीयत्वलिङ्गानुभवप्रभवम्, सोऽपीन्द्रियसन्निकर्षादिजन्मा, न तु प्रामाण्य-ग्रहस्य क्वचिदप्युपयोगः । उपयोगे वा स्वत एवेति कुत एतत् ? । ततः समर्थ-प्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्, तद्ग्रहणप्राचुर्याद्वा । स्वतस्त्वं तु तस्य कोप-युज्यते । न हि पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपश-

---

बोधनी ।

स्वतः प्रामाण्यं ज्ञायत इत्यत्र परोक्तं प्रमाणं दूषयितुमनुभाषते-यदपि-इति । समर्था=संगतार्था प्रयोजनाविसंवादिनीति यावत् । यदाह भाष्यकारः-"सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः" इति । तदेतत्प्रवृत्तिसामर्थ्यं प्रवर्तकविज्ञानस्य प्रामाण्यमन्तरेणानुपपद्यमानं तदाक्षिपति । तस्यापि प्रवृत्तेः प्रामाण्यसंशयादप्युपपत्तिमाशङ्कयोक्तं—प्रचुर इति । संशयेन हि कदाचित् क्वचित् प्रवृ-त्तिः स्यात्, न तु प्रचुरेति । ननु ततः प्रामाण्यनिश्चयोऽस्तु स्वत एवेति कुत इत्यत्रोक्तं-झटि-ति-इति । प्रमाणान्तरानपेक्षमेव ज्ञानोत्पत्त्यनन्तरं भवन्ती तादृशी प्रवृत्तिः स्वतः प्रामाण्यनिश्चयं गमयति । ततश्च परतस्त्वानुमानं बाधप्रतिरोधयोरन्यतरदोषकलुषितमिति भावः । दूषयति-तदपि-इति । तामेवान्यथैवोपपत्तिमाह—झटिति-इति । न तु तत्रैवोपयोगः प्रामाण्यग्रहस्येति दर्शयंस्तत्कारणपरम्परां दर्शयति-इच्छा च इति । दृष्टार्थेषूपयोगाभावेऽप्यदृष्टार्थेषु ज्योतिष्टोमा-दिषु प्रागेव प्रवृत्तेः प्रामाण्यनिश्चयोपयोगमाशङ्कयाह । ततः समर्थ इति । यतः प्रामाण्यग्रहस्य न प्रवृत्तिं प्रत्युपयोग इति कथं प्रामाणादप्यगृहीतप्रामाण्यात् समर्था प्रवृत्तिरित्यत्राह—तद्ग्रहण इति । प्रवर्तकविज्ञानप्रामाण्यग्रहणावश्यंभावेऽपि विशिष्टप्रवृत्तेर्न तद्ग्राहकादेव तद्धर्मप्रामाण्यग्रह इत्येतद् दृष्टान्तेनोपपादयति-न हि इति । न हि पिपासाशमनशक्तमिति विशिष्टा प्रवृत्तिः पाथः-

प्रकाशः ।

र्मिगतसाधारणधर्मस्य येन सह भूयःसहचारावसायस्तत्रोत्कटकोटिकता संशयस्य धर्मिज्ञानस्या-हेतुत्वे न स्यात् ।

यदपीति । प्रामाण्यस्यानुमेयत्वे लिङ्गपरामर्शापेक्षया विलम्बः स्यादित्यर्थः । तथा चार्था-पत्त्या परतस्त्वसाधनं प्रतिबद्धमिति भावः । अन्यथैवेति । प्रवृत्तिमात्रे प्रामाण्यग्रहो न हेतुः, अर्थसन्देहादपि प्रवृत्तेरित्यन्यथोपपत्तेरित्यर्थः । उपयोगे वेति । झटित्यभ्यासाप-न्नलिङ्गानुसन्धानादप्युपपत्तेरित्यर्थः । परमतेऽपि व्यभिचारमाह । न हीति । न ह्यविलम्ब

टिप्पणी ।

णीति वक्तुमुचितम् । धर्मिज्ञानस्याहेतुत्वे न स्यादिति । धर्मस्योभयकोटिसह-चरितत्वविशेषाभावात् क्वचिद्धर्मिणि भावेन क्वचिच्चाभावेन भूयस्तदग्रहात् सहचारग्रहांशस्य विशेष्यकत्वस्य वक्तुमशक्यत्वात् धर्मितावच्छेदकग्रहस्यापि विशेषकत्वासम्भवाद् विशेषो न स्याद्, धर्मिग्रहस्य हेतुत्वे च यद्धर्मिणि येन भूयस्सहचारग्रहस्तद्धर्मिगोचरसहचारज्ञानजन्य-त्वस्य संशये तत्कोट्यौत्कट्यनियामकत्वस्य वक्तुं शक्यत्वादिति भावः । न च संशयस्यैव तद्धर्मिविषयकत्वं तत्कोट्यौत्कट्यप्रयोजकमस्त्विति वाच्यम्, तद्धर्मिविषयकपरोक्षसाधारण-धर्मधर्मिज्ञानजनितसंशये तद्धर्मिमात्रविषयकत्वस्य नियामकाभावेनोपपादयितुमशक्यत्वात्तत्को-ट्यौत्कट्यव्यवस्थायास्तत्रोपपादयितुमशक्यत्वात् । धर्मिज्ञानस्य हेतुत्वे च संशयस्य तत्र धर्मि-मात्रविषयकत्वं सूपपादम् कारणगतविशेषाप्रयोज्यत्वे कार्य्यगतविशेषस्याकस्मिकत्वमपि दोषो

सनशक्तिस्तस्य प्रत्यक्षा स्यात् ।

स्यादेतत् । प्रामाण्यग्रहे सति सर्वमेतदुपपद्यते । स च स्वतो यदि न स्याद्, न स्यादेव; परतः पक्षस्याऽनवस्थादुःस्थत्वादिति चेन्न । तदग्रहेऽप्यर्थसन्देहादपि सर्वस्योपपत्तेः । न चानवस्थाऽपि, प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमात् । अन्यथा

---

बोधनी ।

स्वरूपग्राहकात्प्रत्यक्षादेव तच्छक्तिग्रहमपेक्षते, सौहित्यलिङ्गेनापि तद्ग्रहोपपत्तेः । तथा प्रवर्तकविज्ञानस्वरूपग्राहिणः प्रमाणादन्येनापि तज्जातीयत्वादिना लिङ्गेन तत्प्रामाण्यानुमानमविरुद्धमिति ।

स्यादेतत्-इति । सर्वमिदं-प्रवृत्त्यादिकमिति । न इति । मा भूदनवस्थादुःस्थत्वात् परतः प्रामाण्यग्रहः । तथापि न स्वतस्त्वसिद्धिः, प्रामाण्याग्रहेऽप्यर्थग्रहोपपत्तेरर्थसंदेहेऽपि च प्रवृत्त्युपपत्तेरिति । ननु प्रामाण्ये कदाचिज् ज्ञातव्ये भवत्येवानवस्थेत्याशङ्क्य न तावत्फलज्ञानमाश्रित्येयं प्रसज्यत इत्याह—न च इति । यथा ह्यर्थे गृह्यमाणे न तद्विषयकज्ञानप्रामाण्यग्रहापेक्षा, तथा प्रवर्तकविज्ञानप्रामाण्ये गृह्यमाणेऽपि न तद्ग्राहिणो गुणसंवादिविज्ञानस्य प्रामाण्यग्रहापेक्षा । तेन यदा कदाचित् केनचित् प्रामाण्यं जिज्ञास्येत तदा तदन्येनागृहीतप्रामाण्येनैव गृह्यत इति नानवस्थेति । अवश्यं ज्ञेयत्वाभ्युपगमे दोषमाह- अन्यथा इति । न तावन्मीमांसकस्यापि ज्ञानं स्वयमेव प्रामाण्यं गृह्णाति स्वस्यैवाग्रहणात् । अतः स्वग्राहिणो ज्ञाततालक्षणफलाद्यनुपपत्तिरूपात्प्रामाणाद् गृह्यत इति वक्तव्यं, तत्र चार्थापत्तिप्रामाण्यविषयविज्ञानस्याप्यर्थान्तरेण प्रामाण्यं ग्रहीतव्यम् , एवं तस्य तस्यापीत्यनवस्था प्रसज्यत इति । ननु मा भूत्फलज्ञानप्रामाण्यस्यावश्यं ज्ञेयत्वं, मा च भूत् तत्रानवस्था, तथापि प्रमासाधनमाश्रित्यानवस्था प्रसज्यत, इत्याह—

प्रकाशः ।

इत्येव लिङ्गानपेक्षता । तथा सति पिपासोपशमनशक्त्यनुभवस्याप्यलैङ्गिकत्वप्रसङ्ग इत्यर्थः ।

सर्वमेतदिति । घटति प्रवृत्त्यादिकमित्यर्थः । स चेति । यद्यगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चायकमास्थेयं, तदा व्यवसायोऽप्यगृहीतप्रामाण्य एव विषयं निश्चाययतु, किं तत्प्रामाण्यग्रहेण । यदि च तस्याप्रामाण्यसंशयान्न तन्मात्रादर्थनिश्चयस्तर्हि प्रामाण्यानुमितेरप्रामाण्यसंशयान्न ततोऽपि प्रामाण्यनिश्चयः । ततस्तस्या अपि प्रामाण्यनिश्चयावश्यकत्वेनानवस्था । एवं लिङ्गव्याप्त्यादिज्ञानानामपि प्रामाण्यानिश्चये हेत्वाद्यसिद्धिः, तन्निश्चये चानवस्था । न हि, न लिङ्गादिज्ञाने प्रामाण्यसंशयोऽनुभवविरोधात् , तथा च, परिशेषात् स्वतः प्रामाण्यग्रह इत्यर्थः ।

तद्ग्रहेऽपीति । न तज्ज्ञानप्रामाण्यनिश्चयादेवार्थनिश्चयः, किन्तु न यत्राप्रामाण्यशङ्का करतलादिज्ञाने, तत्र व्यवसाय एवार्थनिश्चय इति तत एव निष्कम्पप्रवृत्त्युपपत्तिरिति न प्रामाण्यानुमितिलिङ्गादिज्ञानानामपि प्रामाण्यानुसरणमिति नानवस्थेत्यर्थः । तथाप्यनभ्यासदशापन्नज्ञानप्रामाण्यसंशयेनार्थनिश्चयस्य परिभवात् तत्प्रामाण्यानुसरणेऽनवस्थेत्यत आह । न चेति । अगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति, अप्रामाण्यशङ्काकलङ्काभावात् । यत्र प्रामाण्यज्ञानेऽप्यप्रामाण्यशङ्कया प्रामाण्यसंशयस्तत्र प्रामाण्यज्ञानप्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः । एवं, यावदप्रामाण्यशङ्कं तज्ज्ञानप्रामाण्यनिश्चयादेव तन्निश्चयः । न चैवमनवस्था, चरमप्रामाण्यज्ञानस्य ज्ञानाभावाद्धर्मज्ञानाभावेन कोटिस्मरणाभावात् विषयान्तरसञ्चाराद्वा प्रामाण्यसंशयानवश्यम्भावादित्यर्थः । अन्यथेति । भाट्टानां प्रामाण्यस्य ज्ञानानुमितिप्राप्त्यत्वे

प्रकाशिका ।

स्वातन्त्र्येण प्रामाण्यग्रह इति प्रवर्तकं प्रामाण्यज्ञानं परत एवेति भावः । भट्टानामिति । इदमुप-

मकरन्दः ।

अन्यथेतीति । प्रवृत्त्यनुपयोगिन्यप्यरतीत्येव यदि प्रामाण्यमवश्यं ज्ञेयं, तदाऽस्य प्राप्त्यत्वेऽ

स्वतः पक्षेऽपि सा स्यात्। लिङ्गं निश्चितमेव निश्चायकम्, ततस्तन्निश्चयार्थमवश्यं लिङ्गान्तरापेक्षायामनवस्थेति चेत्। तत् किमनुपपद्यमानोऽर्थोऽनिश्चित एव स्वोपपादकमाक्षिपति, येनानवस्था न स्यात्। प्रत्यक्षेण तस्य निश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति चेत्। ममापि प्रत्यक्षेण लिङ्गनिश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति तुल्यम्। लिङ्गज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चयः स्यादिति चेत्। अनुपपद्यमानार्थज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चय इति तुल्यम्। न हि निश्चयेन स्वप्रामाण्यनिश्चयेन वा विषयं निश्चाययति प्रत्यक्षम्, अपि तु स्वसत्तयेत्युक्तमिति चेत्। तुल्यम्। तथापि यदि तल्लिङ्गाभासः स्यात्तदा का वार्त्तेति चेत्। अनुपपद्यमानोऽप्यर्थो यद्याभासः स्यात् तदा का वार्त्तेति

---

बोधनी।

लिङ्गम् इति। प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा प्रामाण्यलिङ्गं निश्चितमेव सत्प्रवर्तकज्ञानस्य प्रामाण्यं निश्चाययति, लिङ्गनिश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयादेवेति अवश्यं तदपि लिङ्गान्तरेण निश्चितेन निश्चेयं, तन्निश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयादिति। लिङ्गज्ञानप्रामाण्यं निश्चेतुमेव परम्परा व्यवतिष्ठते इत्यत्रापि प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमेन सुगमः परिहार इति मन्वानः परस्यापि समानमेतदित्याह—तत्किम्—इति। निश्चित एवानुपपद्यमानोऽपि स्वोपपादकमाक्षिपति। तन्निश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयात् सोऽप्यनुपपद्यमानार्थान्तरनिश्चयादिति दुस्तराऽनवस्थेति। प्रत्यक्षेणेत्यादिशङ्का, तदुत्तरं च सुगमम्। लिङ्गज्ञानस्य इति। सत्तामात्रावस्थितेन चक्षुरादिना जातेऽपि लिङ्गज्ञाने तत्प्रामाण्यानिश्चये कथं लिङ्गनिश्चयः, प्रामाण्यनिश्चयश्च लैङ्गिक एवेत्यनवस्था सुस्थेति। तदन्यत्रापि तुल्यमित्याह—अनुपपद्यमान-इति। न हि—इति। अनुपपद्यमानग्राहकं च प्रत्यक्षमिति शेषः। तदन्यत्रापि तुल्यं लिङ्गग्राहकस्यापि तुल्यं प्रत्यक्षत्वादित्याह—तुल्यम्-इति। तथापि-इति। सत्तामात्रेण प्रत्यक्षस्य निश्चायकत्वेऽपि तस्य तदाभासादविवेचितत्वात्तदवगतं प्रामाण्यलिङ्गं कदाचिदाभासः स्यात्। अतस्तत्प्रामाण्यं ज्ञेयमिति। तदप्यनुपपद्यमानग्राहिणोऽपि प्रत्यक्षस्य तुल्यमित्याह—अनुपपद्यमान इति।

प्रकाशः।

तस्या अपि प्रामाण्यानुस्मरणेऽनवस्था। प्राभाकराणामपि प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यं, स्वग्राह्यत्वस्य स्वरूपप्रामाण्यान्यत्वादिति परग्राह्यत्वेऽप्यनवस्थानात् परिशेषानुमानेन मानान्तरेण वा ग्राह्यम्, तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनेत्यनवस्थया विषयान्तरसञ्चारो न स्यादित्यर्थः। कारणमुखीमनवस्थामाह। लिङ्गमिति। प्रामाण्यसंशयेन लिङ्गस्य सन्दिग्धत्वाच्च

प्रकाशिका।

लक्षणम्। मिश्राणामप्यनुव्यवसायप्रामाण्यग्रहद्वारिका अनवस्था द्रष्टव्या। प्राभाकराणामिति। प्रामाण्यग्रहेऽनावश्यकेऽप्यावश्यकत्वमारोप्य मन्मतेऽनवस्थाप्रसञ्जने स्वग्राह्यत्वानुमितिद्वारिका गुरूणामपि सा स्यादित्यर्थः। कारणमुखीमिति। यद्यपि पूर्वमियमाशङ्का परिहृतैव, तथापि तत्र

टिप्पणी।

बोध्यः। प्राभाकराणामपि प्रामाण्यस्येति। प्रामाण्यस्य यदर्थतथात्वं प्रामाण्यं तस्य तत्स्वतो ग्राह्यत्वं तदग्रहे प्रामाण्यज्ञानप्रामाण्याग्रहादर्थज्ञानप्रामाण्यमप्यप्रतिष्ठितम्भवेदित्यनवस्थेति भावः। यद्वा यत्रैव प्रामाण्यस्य स्वतोग्राह्यत्वमगृहीतं भवेत् तत्रैव तस्य स्वतोग्राह्यमप्रामाणिकं भवेत्तद्ग्रहणानुसरणेऽनवस्था इति। इदमत्र चिन्त्यम्, कालान्तरे पुरुषान्तरेण वा ग्रहे क्षत्यभावाद् भवत्यनवस्थापरिहार इति। स्वरूपप्रामाण्यत्वात्। स्वस्य रूपं स्वरूपमिति

तुल्यम् । सोऽपि प्रामाण्यमाक्षिपतीत्युत्सर्गः । स च क्वचिद्बाधकेनापोद्यत इति चेत् । लिङ्गेऽप्येवमिति तुल्यम् । तर्हि प्रामाण्यानुमानेऽपि शङ्का तदवस्थैवेति निष्फलः प्रयास इति चेत् । एतदपि तादृगेव । अनुपपद्यमानोऽर्थ एवासौ तथाविधः कश्चिद्, यः स्वप्नेऽपि नाभासः स्यात्ततो नाशङ्कति चेत् । लिङ्गेऽप्येवमिति समः समाधिः । कः पुनरसावर्थो यः स्वप्नेऽपि नाभासः स्यात्, यदनुपलम्भे विभ्रमावकाशो यादृगुपलम्भे च तद्बाधव्यवस्था । अन्यथा हि, तथाभूतस्यापि व्यभिचारे साऽ-

---

बोधनी ।

सोऽपि इति । अनुपपद्यमानाभासोऽपि इति । लिङ्गाभासोऽप्येवमित्याह-लिङ्गेऽपि इति । यदि लिङ्गाभासेनापि प्रामाण्यानुमानं तर्हि तदनुमितप्रामाण्यज्ञानस्याप्यप्रामाण्यशङ्का निवृत्तेति व्यर्थः प्रामाण्यानुमानप्रयास इत्याह-तर्हि इति । अर्थापत्तिवादिनोऽपि तुल्यमेतदित्याह-एतदपि इति । ननु यदन्तरेण हि यन्नोपपद्यते न तत् तदन्तरेण च भवतीति संभवति, तस्मादनुपपद्यमानस्याभासत्वं न संभवतीत्याह अनुपपद्यमान इति । तर्हि तदविनाभूतस्य तेन विनापि भानासंभवात् लिङ्गाभासोऽपि न संभवतीत्याह लिङ्गेऽपि इति । अत्रान्तरे पार्श्वस्थः पृच्छति-कः पुनः इति । योऽसौ युवाभ्यामुच्यते नाभासः स्यादिति कोऽसावर्थ इति । उत्तरं यदनुपलम्भे इति । यस्य तदितरव्यावर्तकधर्मविशिष्टस्य वस्तुनोऽनुपलम्भे भ्रान्तिर्भवति यादृशस्योपलम्भे चासौ न भवति सोऽर्थः स्वप्नेऽपि नाभासः स्यादिति । अनाभासस्योपलक्षणान्तरमाह—बाध इति ।

तदितरव्यावर्तकधर्मानुपलम्भोपलम्भाभ्यां हि ज्ञानयोर्बाध्यबाधकव्यवस्थेति । यद्वा, यादृशस्योपलम्भे बाधकं व्यवतिष्ठते नातः परं भवति सोऽप्यर्थः । अन्यथेत्यस्य विवरणं तथाभूतस्यापि व्यभिचार इति । सापि=बाधकव्यवस्थापि न स्यात् । न ह्युभयोरविशिष्टायां व्यभिचारशङ्कायामेकं बाधकमितरद् बाध्यमिति व्यवस्था सिध्येदिति । सापि मा भूत् का नो हानिरि-

प्रकाशः ।

निश्चय इत्यर्थः । भट्टमते ज्ञाततारूपलिङ्गज्ञानस्य प्रामाण्यसंशयान्न तन्निश्चय इति तद्ग्राहकपरम्पराप्रामाण्यानुस्मरणेऽप्यनवस्थेत्याह । तत्किमिति । सोऽपीति । मायालिङ्गिनि झटिति परिव्राजकत्वबुद्धिवदप्रमाऽपि प्रमेत्येव गृह्यत इत्यर्थः । फलमुखीमनवस्थामाह । तर्हीति । यदनुपलम्भ इति । यस्य विशेषस्य शुक्तित्वादेरनुपलम्भे शुक्तौ रजतभ्रमो यस्य तु शुक्तित्वादेरुपलम्भे भ्रमबाधो व्यवतिष्ठते, स लोकसिद्ध इत्यर्थः । यद्यपि यदुपलम्भ इति वक्तुमुचितं, तथापि वस्तुगत्या विशेषस्य ज्ञानं न भ्रमविरोधि, अपि तु विशेषत्वेनेति दर्शयितुं यादृगित्युक्तम् । एवमनभ्युपगमे लोकव्यवहारविरोध इत्याह । अन्यथेति । सा=भ्रमबाधव्यवस्था । बाधकस्य व्यभि-

प्रकाशिका ।

सामान्यत आशङ्का, इदानीन्तु विशेषतः प्रश्नान्तरेण दोषान्तरदानाय चेति न पौनरुक्त्यम् ।

मकरन्दः ।

प्यनवस्थेति भावः । मिश्रमतेऽप्यनवस्था द्रष्टव्या । फलमुखीमिति । यद्यपि पूर्वमेवमाशङ्का परिहृतैव, तथापि सामान्यतः सा, विशिष्येदानीमाशङ्केति न दोष इत्येके । प्रश्नान्तरेण दोषान्तरदानाय पुनराशङ्केत्यन्ये ।

टिप्पणी ।

व्युत्पत्तेः प्रामाण्यधर्म्मत्वादित्यर्थः, तथा च ज्ञानेन विषयप्रामाण्यमेव ग्राह्यम् न तु प्रामाण्यधर्म्मभूतं प्रामाण्यमिति भावः । अत्र स्वरूपप्रामाण्यान्यत्वादिति पाठः ।

पि न स्यात् । मा भूदिति चेन्न, भवितव्यं हि तत्त्वातत्त्वविभागेन । अन्यथा व्याघातात् । कथं हि नियामकनिःशेषविशेषोपलम्भेऽपि विपरीतारोपः? तथाभावे वा तदतिरिक्तविशेषानुपलम्भे कथं बाधकम् । तदभावे त्वबाधस्य कथं भ्रान्तत्वमिति ।

स्यादेतत् । परतः प्रामाण्येऽपि नित्यत्वाद्वेदानामनपेक्षत्वं, महाजनपरिग्रहाच्च

बोधनी ।

स्यादिह—मा भूत इति । भवितव्यम् इति । बाधकज्ञानविषयस्तत्त्वं, बाध्यज्ञानविषयश्चातत्त्वमिति हि तत्त्वातत्त्वव्यवस्था, । ततो बाध्यबाधकव्यवस्थाभावेन तत्त्वातत्त्वविभागोऽपि न स्यादिति । मा भूद्विभागोऽपीत्यत्राह—अन्यथा इति । मा भूदित्वस्यापि निर्णयस्य तत्त्वाभावेन व्याघातादिति । यादृशोपलम्भ इत्यादिनोक्तमेवार्थमुपपादयन्नाह—कथं हि—इति । तथाभावे वा इति । नियामकनिःशेषविशेषोपलम्भे वेति ।

अथ पूर्वपक्षैकदेश्याह—स्यादेतत् इति । अस्तु परतः प्रामाण्यं प्रमाणानां, तथापि वेदानां

प्रकाशः ।

चारिजातीयत्वे बाध्यबाधकयोरविशेषाद् बाधकत्वमेव न स्यादित्यर्थः । अन्यथेति । लोकमर्यादातिक्रमे किमपि न तत्त्वमित्यस्याप्यतत्त्वे कान्यस्यातत्त्वमिति, बाधकस्य तत्त्वं बाध्यस्यातत्त्वमभ्युपेयमित्यर्थः । तथाभावे वेति । यदि नियामकनिःशेषविशेषोपलम्भेऽपि विपरीतारोपः स्यात् तदा तस्यारोपत्वं न तावद् बाधकं विना निश्चेयम् । सर्वस्यारोपत्वप्रसङ्गात् । बाधकात् तन्निश्चये बाधकाभिमतस्यापि बाध्यतायामबाधकत्वप्रसङ्गात् । अबाध्यत्वे तु कथमशेषविशेषोपलम्भे समारोपसम्भव इति भावः । एवञ्च प्रामाण्यस्यानुमेयत्वे बहुवित्तव्ययायाससाध्येऽपि गृहीतप्रामाण्यं न ज्ञानं प्रवर्तकम् । तस्य प्रामाण्यानुमितेः प्रागेव नाशात् । किन्तु तज्ज्ञानसमानविषयमप्रामाण्यशङ्काशून्यं ज्ञानान्तरमेव । न चैवं प्रामाण्यानुमितिरफला, तां विना तत्समानविषयज्ञानेऽप्रामाण्यसंशयादिति सारम् ।

अस्तु सवक्तृकशब्दे प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च परतस्त्वम् । वेदे तु नित्यतया वक्तुरभावान्न तत्र गुणाधीनं प्रामाण्यम् । ज्ञप्तिरपि तस्याप्तोक्तत्वं विनाऽपि महाजनपरिग्रहादेव स्यादित्याह स्यादेतदिति । सर्गप्रलयसम्भवेन वेदस्य नित्यत्वं महाजनपरिगृहीतत्वञ्चासिद्धमित्याह ।

प्रकाशिका ।

बाधकाभिमतस्यापीति । अशेषविशेषोपलम्भेऽपि विपरीतारोपाभ्युपगमपक्ष इति शेषः । ज्ञानान्तरमेवेति । न च प्रामाण्यानुमितिरेव प्रवर्त्तिकास्तु स्वातन्त्र्येण इदन्तावच्छेदकवैशिष्ट्यावगाहित्वादिति वाच्यम् । इदन्तावच्छेदेन तद्वैशिष्ट्यावगाहिनो ज्ञानस्य प्रवर्त्तकत्वात् प्रामाण्यानुमितेश्चातथात्वात् । तां विनेति । न चान्यत्र प्रामाण्यनिश्चयेऽन्यत्र कथं तत्संशयप्रतिबन्ध इति वाच्यम् । यद्धर्मावच्छेदेन यद्धर्मग्रहस्तद्धर्मग्रहस्य तत्कोटिकसंशयविरोधित्वात् । वस्तुतः प्रामाण्यानुमित्युपनीतं प्रामाण्यमेवोत्तरत्रानुव्यवसाये भासत इति दिक् । कोलाहलस्यावर्णात्मकत्वे

मकरन्दः ।

बाधकाभिमतस्यापीति । अशेषविशेषोपलम्भेऽपि विपरीतारोपाभ्युपगमपक्षे इति शेषः तां विनेति । न चान्यत्र विशेषदर्शनस्य धर्म्यन्तरे शङ्काप्रतिबन्धकत्वेऽतिप्रसङ्ग इति वाच्यम् । अन्वयव्यतिरेकाभ्यामनन्यगत्याऽनैव तथा कल्पनादित्येके । तद्विषयकत्वावच्छेदेन पूर्वज्ञाने प्रामाण्यग्रहात् तज्ज्ञानत्वमेव विशेषदर्शनमित्यन्ये । वस्तुतस्तु तस्योपनीतभानसामग्रीत्वेन तद्ग्रहानन्तरमुपनीतं प्रामाण्यं तत्र भासत इति न तत्र शङ्केति प्रत्यक्षप्रकाशे विपञ्चितम् । अन्यथा तस्य व्याप्यत्वेनाग्रहे शङ्काविरोधित्वानुपपत्तेरिति ध्येयम् । धूमत्वदर्शनस्य व्याप्तिसंशयविरोधित्ववत् पृथगेव तस्य तद्विरोधित्वमित्यप्याहुः ।

प्रामाण्यमिति को विरोधः? । न । उभयस्याप्यसिद्धेः । न हि वर्णा एव तावन्नित्याः । तथा हि । इदानीं श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते । न हि शब्द एवान्यत्र गतः । अमूर्त्तत्वात् । नाप्यावृतः । तत एव संबन्धविच्छेदानुपपत्तेः । नाप्यनवहितः श्रोता । अवधानेऽप्यनुपलब्धेः । नाऽपीन्द्रियं दुष्टं, शब्दान्तरोपलब्धेः । नाऽपि सहकार्यन्तराभावः । अन्वयव्यतिरेकवतस्तस्यासिद्धेः । नाप्यतीन्द्रियम् । तत्कल्पनायां प्रमाणाभावात् ।

---

बोधनी ।

वक्तृगुणज्ञानादिनिरपेक्षमेव प्रामाण्यं सिद्ध्यति, नित्यत्वेन तदनपेक्षत्वात् महाजनपरिग्रहाच्च प्रामाण्यसिद्धेः, ततः प्रमायाः पारतन्त्र्येऽपि नेश्वरसिद्धिरिति भावः । न-इति । नित्यत्वस्य तदधीनानपेक्षत्वस्य चासिद्धिः । यद्वा, नित्यत्वस्य परिग्रहस्य च, यद्यपि सिद्धः परिग्रहस्तथापि नित्यत्वे वेदस्य निर्मूलतया असत्कल्प एवेति भावः । नित्यत्वासिद्धिमाह-न हि-इति । वर्णानामेवानित्यत्वे कुतस्तत्समूहात्मकस्य पदस्य नित्यत्वं, कुतस्तरां तत्समूहात्मनो वाक्यस्य, कुतस्तमां तत्समूहात्मनां वेदानामिति तावच्छब्दस्यार्थः । कथं वर्णानामनित्यत्वमित्यत आह-तथा हि इति । विशेषतः सामान्यतश्च शब्दानां ध्वंसरूपमनित्यत्वं श्रोत्रप्रत्यक्षेणानुभूयत इति । नन्वयं शब्दानुपलम्भ एव, स च ध्वंसं विनाप्युपपत्स्यत इत्यत्राह-न हि इति । अमूर्तत्वस्य निष्क्रियत्वव्याप्तेरिति । अमूर्तत्वादेव शब्दस्येन्द्रियसंबन्धविच्छेदलक्षणमावरणमपि घटादेरिव न घटत इत्याह-नापि इति । नापि सत्येवेन्द्रियसंबन्धे श्रोतुरनवधानादनुपलब्धिरिन्द्रियदोषाद्वा संभवतीत्याह-नाप्यनवहितः-इति । नन्वदुष्टेऽपि श्रोत्रेन्द्रिये प्रतिशब्दं तत्सहकारिणो भेदाच्छब्दान्तरोपलम्भेऽप्यनुपलम्भः शब्दान्तरस्योपपद्यते, तेन न तदनुपलम्भः सहकार्यन्तराभावादित्यत आह-नापि सहकारि-इति । शब्दोपलम्भं प्रत्यन्वयव्यतिरेकवतः सहकारिणः प्रत्यक्षेणासिद्धिरिति । तस्यातीन्द्रियत्वादनुपलब्धिरित्यत्राह-नापि-इति । श्रुतस्य शब्दस्याभावेनैवोत्तरकालमनुपलम्भोपपत्त्यर्थं सहकारिकल्पनायां प्रमाणाभावादिति । तथापि तावत्कल्पने स्व-

प्रकाशः ।

उभयस्येति । यद्यपि वर्णानां नित्यत्वेऽप्यर्थप्रत्ययानुकूलानित्यानुपूर्वीविशेषघटितत्वेन वेदोऽनित्य एवेति तत्र वक्तृगुणापेक्षाऽस्त्येव, तथापि वर्णस्यानित्यत्वव्युत्पादने तत्समूहविशेषवाक्यविशेषरूपस्य तस्य सुतरामनित्यत्वं सिद्ध्यतीत्याशयेन वर्णमात्रस्यानित्यत्वं साधयति । तथा हीति । अनभिव्यक्तवर्णत्वव्याप्यजातिविशेषो वर्णसमूह एव कोलाहलः । प्रत्यक्षमेव वर्णस्यानित्यत्वम् । योग्यानुपलब्धेः प्रत्यक्षप्रतियोगिकाभावत्वेनैव घटाभावस्येव तदभावस्य प्रत्यक्षत्वादित्यर्थः । प्रत्यक्षस्यान्यथासिद्धिं निराकरोति । न हीति । येन सन्नपि नोपलभ्यत इत्यर्थः । तत एव = अमूर्तत्वादेव । इन्द्रियसम्बन्धविच्छेदो ह्यावरणम् । स च शब्दस्य विभुत्वादाकाशविशेषगुणत्वे च श्रोत्रसमवायस्य नित्यत्वादयुक्त इत्यर्थः । तत्कल्पनेति । अतीन्द्रियशब्दोपलम्भककल्पनेत्यर्थः ।

नन प्रतियोगियोग्यता मात्रं नाभावप्रत्यक्षत्वे तन्त्रं, किन्त्वधिकरणयोग्यताऽपि । सा च शब्द-

प्रकाशिका ।

तद्भिन्नष्टत्वप्रतीतिर्न वर्णनित्यत्वे प्रमाणमत आह । शब्दस्य विभुत्वादिति भट्टमते । श्रोत्रसमवायस्येति । नित्यप्रतियोगिकसमवायस्य गुरुणापि नित्यत्वाभ्युपगमादिति भावः । विवादविषयत्वं

मकरन्दः ।

ननु कोलाहलस्य ध्वन्यात्मकत्वात् तदनित्यत्वेऽपि वर्णानित्यत्वं न सेत्स्यतीत्यत आह । अनभिव्यक्तेति । शब्दस्य विभुत्वादिति भट्टमते । अन्यथा शब्दध्वंसेऽपि कदाचिद्विवादप्रस-

अन्यथा, घटादावपि तत्कल्पनाप्रसङ्गात् । न च शब्दस्य नित्यत्वसिद्धौ तत्कल्पनेति युक्तम् । निराकरिष्यमाणत्वात् ॥

ये त्वेकदेशिनो नैवमिच्छन्ति, तान् प्रत्युच्यते । विवादाध्यासितः शब्दप्रध्वंसः, इन्द्रियग्राह्यः, ऐन्द्रियकाभाववत्वात्, घटाभाववत् । नैतदेवम्,

बोधनी ।

स्तेऽपि घटेऽनुपलम्भः सहकारिविरहादिति स्यादित्याह—अन्यथा इति । ननु घटादौ न तत्कल्पनमनित्यत्वात्, तस्मान्नित्यस्य शब्दस्यानुपलम्भः सहकारिविरहनिबन्धन एवेति तत्कल्पना युक्तेत्यत्राह-न च शब्दस्य—इति ।

ये तु नैयायिकैकदेशिनः शब्दध्वंसस्य प्रत्यक्षत्वं नेच्छन्ति तान्प्रति तत्रानुमानमभिदधमह इत्याह-ये तु इति । आद्यादिशब्दप्रध्वंसव्यावर्त्तनायोक्तं—विवादाध्यासितः-इति । ऐन्द्रियकाभाववत्वात्-इति । ऐन्द्रियकस्य प्रतियोगिनः प्रध्वंसाभाववत्वादित्यर्थः । तथा च न साध्याविशिष्टत्वं, नापि परमाणुवर्तिना घटरूपाभावेन व्यभिचार इति । एकदेशी शङ्कते-नैतदेवम्-इति । अभावस्य तावदिन्द्रियेण संयुक्तादिविशेषणविशेष्यभावसन्निकर्षः, न चायं श्रोत्रेण तदाश्रयस्य शब्दप्रध्वंसस्यास्ति, न चासंयुक्तमिन्द्रियेण गृह्यते, अतीन्द्रियाकाशाश्रयश्च शब्दप्रध्वंसस्तं-

प्रकाशः ।

ध्वंसे नास्तीति कथं प्रत्यक्षः सः । न चेन्द्रियविशेषणतया कस्य चिद् ग्रहो दृष्टः, अपि त्विन्द्रियसम्बद्धविशेषणतया, इत्यत आह —

ये त्विति । विवादेति । श्रूयमाणशब्दध्वंस इत्यर्थः, अतो नान्त्यशब्दध्वंसे भागासिद्धिः । तस्य साक्षात्कारकाले नाशादिति भावः । ऐन्द्रियकेति । ऐन्द्रियकप्रतियोगिकाभाववत्वादित्यर्थः । नन्विदं मूर्त्तवत्त्वाभावेऽनैकान्तिकं, भूतलस्य हि मूर्त्तवत्त्वं प्रत्यक्षम् । यत्किञ्चिन्मूर्त्तग्रहेऽपि तद्ग्रहात्, तदभावस्तु न प्रत्यक्षः । अयोग्यस्यापि मूर्त्तस्य सम्भवेन यावद्विशेषाभावाप्रत्यक्षतया मूर्त्तसामान्याभावस्याऽप्रत्यक्षत्वात् । न च प्रत्यक्षाशेषमूर्त्ताभावग्राहिणा प्रत्यक्षेण प्रत्यक्षेतरमूर्त्ताभावनिश्चयसहकारिणा सोऽपि गृह्यत एवेति वाच्यम् । लिङ्गवत्त्वावगमसहकारिणा पक्षग्राहकप्रत्यक्षेणैव लैङ्गिकावगमेऽनुमानमात्रविलयापत्तेः । मूर्त्तवत्त्वसामान्यस्य योग्यायोग्यघटितत्वेनाऽ-

प्रकाशिका ।

कदाचिदन्त्यशब्दध्वंसेऽपीति भागासिद्धिरंशतो बाधश्चेत्यत आह । अन्त्येत्युपलक्षणम्, इन्द्रियासन्निकृष्टशब्देत्यपि द्रष्टव्यम् । तस्येति । अन्त्यशब्दस्येत्यर्थः, इदं च प्रत्यक्षं प्रति समसमयतया विषयस्य हेतुत्वपक्षे द्रष्टव्यम् । कर्म्मधारयपक्षे साध्याविशेषात् प्रतियोगित्वलक्षणसम्बन्धवाचकषष्ठीसमासाभिप्रायेणाह । ऐन्द्रियकप्रतियोगिकेति । लिङ्गवत्त्वेति । वस्तुतः स्वरूपायोग्यस्य सहकारियोग्यताप्यकिञ्चित्करी स्वरूपायोग्यता चोपलम्भापादकसत्त्वप्रतियोग्यप्रतियोगिकत्वादिति भावः । ननु मूर्त्तवत्त्वस्य योग्यायोग्यघटितत्वेऽपि योग्यत्वमेव, यत्किञ्चिद्विशेषयोग्यतयैव सामा-

मकरन्दः ।

वादाह । श्रूयमाणेति । अन्त्येत्युपलक्षणम् । इन्द्रियासन्निकृष्टशब्दान्तरध्वंसेऽपि द्रष्टव्यम् । न च तस्यापि स्वरूपयोग्यत्वादैन्द्रियकत्वमेवेति वाच्यम् । अन्त्यशब्दस्यापि सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वेन तथात्वसम्भवात् । तस्येति । अन्त्यशब्दस्येत्यर्थः । एतदपि प्रत्यक्षे स्वसमसमयवर्त्तित्वेन विशिष्य हेतुत्वपक्षे द्रष्टव्यम् । कर्मधारयपक्षे साध्यावैशिष्ट्यमाशङ्क्याह । ऐन्द्रियकेति । लिङ्गवत्त्वेति । तथा च यावद्विशेषाभावात् सामान्याभावोऽनुमीयत एव, न प्रत्यक्ष इति भावः ।

इन्द्रियाऽसन्निकृष्टत्वादतीन्द्रियाधारत्वाच्चेति चेन्न । इदं ह्युपाध्युद्भावनं वा स्यात्,

बोधनी ।

-तोऽपि नेन्द्रियेण गृह्यत इति । तदेतद्विकल्प्य दूषयति-न इति । इदं द्वयमप्युपाध्युद्भावनं स्यात् ऐन्द्रियकत्वाभावत्वस्यैन्द्रियकत्वेन न स्वाभाविकः संबन्धः, घटाद्यभावे त्वैन्द्रियकत्वस्येन्द्रियसंनिकर्षैन्द्रियकाधारत्वयोरन्यतरप्रयुक्तत्वादिति । यद्वा, इन्द्रियग्राह्यत्वस्येन्द्रियसन्निकर्षः, ऐन्द्रियकाधारत्वं वा व्यापकं घटाभावादिषु दृष्टं, तच्च शब्दप्रध्वंसान्निवर्तत इति न तस्यैन्द्रियकत्वम्-इति ।

प्रकाशः ।

योग्यतया तदभावे हेतोरग्रहात् । येन रूपेण प्रतियोगियोग्यता, तेनैव तदभावस्य योग्यतावगमात् । अत्राभावपदेन ध्वंस उक्त इति न व्यभिचार इत्येके । द्रव्यनिष्ठमूर्तवत्त्वाभावस्याप्रत्यक्षत्वेऽपि गुणादौ स प्रत्यक्ष एवेत्यन्ये । उपाध्युद्भावनमिति । स्वव्यतिरेकेणेति शेषः । तेनेन्द्रियसन्निकृष्टत्वमैन्द्रिकाधारत्वमुपाधिरित्यर्थः । न चैन्द्रियकाऽऽधारत्वं नोपाधिः, धर्माभावस्यापि

प्रकाशिका ।

न्यस्य योग्यत्वात मूर्तवद्भूतलमिति घटसत्त्वकाले प्रत्यक्षादित्यरुचेराह । अत्राभावेति । एके= मुख्याः । "एके मुख्यान्यकेवला" इति कोषात, ननु मूर्तवत्त्वघटवत्त्वयोर्योग्यायोग्यघटितत्वाविशेषात् कथं मूर्तवत्त्वाभावोऽप्रत्यक्षः प्रत्यक्षस्तु घटवत्त्वाभाव इति चेत् ? घटस्य ह्ययोग्यत्वमिन्द्रियासन्निकर्षादिति सन्निकृष्टदेशे घटसत्त्वेनोपलब्धिरापादयितुं शक्यते नत्वेवं मूर्तवत्त्व परमाणोरतीन्द्रियत्वादिति । द्रव्यनिष्ठेति । द्रव्यविशेषणतयाऽप्रत्यक्षत्वेऽपि गुणविशेषणतया तस्यैवाभावस्य प्रत्यक्षत्वात साध्यमेव तत्रेति न व्यभिचार इत्यर्थः । न त्वधिकरणभेदेनाभावभेदाभिप्रायकोऽयं ग्रन्थः, तथा सति द्रव्यनिष्ठतदभावे व्यभिचारतादवस्थ्यात । अन्य इत्यरुचौ ।

मकरन्दः ।

ननु मूर्तवत्त्वस्य योग्यायोग्यघटितत्वेऽपि नायोग्यत्वं, किञ्चिद्विशेषयोग्यतयैव सामान्यस्य योग्यत्वात् । घटवति भूतले मूर्तवदिदं भूतलमिति चाक्षुषप्रत्यक्षदर्शनाच्च । अन्यथा घटवत्त्वसामान्यस्यापि सन्निकृष्टासन्निकृष्टघटघटितत्वेनैन्द्रियकत्वानुपपत्तेः, स्वरूपायोग्यतया सहकारिविरहेण वा फलाभावस्याविशेषादित्यनुशयान आह अत्राभावपदेनेति । न चैन्द्रियकाभावत्वाविशेषेऽपि घटत्वसामान्याभावस्य प्रत्यक्षत्वे किं विनिगमकमिति वाच्यम् । सन्निकृष्टघटस्यापि तत्र तर्कितं सत्त्वमनुपलब्धिविरोधीति यावद्विशेषाभावप्रत्यक्षासम्भवादयोग्यमूर्ताभावस्यातथात्वादिति विशेषात् । द्रव्यनिष्ठेति । द्रव्यविशेषणतयाऽप्रत्यक्षत्वेऽपीत्यर्थः । एतेनाधिकरणभेदेनाभावभेदानभ्युपगमाद्, अभ्युपगमे वा द्रव्यनिष्ठतदभावे व्यभिचारतादवस्थ्यादित्यपास्तम् । एकस्यैवाधिकरणभेदेन प्रत्यक्षत्वाप्रत्यक्षत्वोपगमात् , योग्यायोग्यजले पृथिवीत्वात्यन्ताभाववत् । अत्र यावद्विशेषाभावाप्रत्यक्षतयाऽप्रत्यक्षत्वं गुणेऽपि समानम् । अनुमानादिना तन्निश्चये तत्प्रत्यक्षत्वं द्रव्येऽपि तुल्यम् । यावद्विशेषाभावनिश्चये तन्निश्चयोऽनुमित्यात्मक इत्यपि समानमित्यनभिमतिबीजं द्रष्टव्यम् ।

ऐन्द्रियकाधारत्वञ्चेति । तथा चातीन्द्रियाधारत्वादित्यस्य ऐन्द्रियकानाधारत्वादित्यर्थो बोध्यः । तेन तद्व्यतिरेकत्वमस्योपपद्यते । अत एवानुपदं तथैव विभावयिष्यतीति । न च शब्दादौ साध्याव्यापकत्वम् । साधनावच्छिन्नसाध्यव्यापकत्वादिति भावः । भवेदेवं यदि सम-

टिप्पणी ।

सतिरपि तस्याप्तोक्तत्वं विनापीति । वक्तृगुणाधीनत्वं विनापीत्यर्थः । अत्राभावपदेन ध्वंस उक्त इति । सामान्यस्य हि योग्यत्वं यत्किञ्चिद्विशेषयोग्यत्वनिबन्धनम् घटसत्त्वकाले सामान्यरूपेण मूर्तवद् भूतलमिति प्रत्यक्षादित्यरुचेराह । अत्रेति । ऐन्द्रियकाधारत्वञ्चेति । न चैन्द्रियका-

**व्यापकानुपलब्ध्या सत्प्रतिपक्षत्वं वा? न प्रथमः, स्वरूपयोग्यतां प्रति सहकारियोग्यताया**

बोधनी

**सत्प्रतिपक्षत्वम्**-इति । तत्र न तावदुपाध्युद्भावनपक्षः संभवतीत्याह-**प्रथमः** इति । इन्द्रियसंनिकर्षस्य तावदनुपाधित्वमाह-**स्वरूप** इति । शब्दप्रध्वंसस्येन्द्रियग्रहणं प्रति स्वरूपयोग्यता तत्र

प्रकाशः ।

प्रत्यक्षतापत्तेरिति वाच्यम् । उपाधेरधिकदेशत्वेऽपि दूषकताबीजसाध्यव्यापकत्वानपायात् ।

अथ नायमुपाधिः, व्यतिरेकोपसंहारसामर्थ्याभावात् । तथा हि । अभावत्वे सत्यतीन्द्रियाधारत्वादिति यद्यपि नैन्द्रियकाधारत्वस्य व्यतिरेकः, उभयाधारत्वेऽप्यविरोधात् । तथाप्यभावत्वे सत्यैन्द्रियकाऽनाधारत्वादिति सम्भवति, किन्तु योग्यताविरहस्तत्रोपाधिः । न च साधनव्यापकत्वं; न ह्यतीन्द्रियाधारत्वमेव योग्यताविरहः, पृथिवीत्वाभावादेरयोग्यतापत्तेः । नाप्यैन्द्रियकाधारत्वाभावः सः । तदर्थासहिततदभावस्य योग्यतात्मकत्वे धर्माभावस्य योग्यतापत्तेः । मैवम् । ऐन्द्रियकाभावमन्तर्भाव्याभावस्य योग्यतेत्युक्तेऽपि साधनव्यापकताया अपरिहारादिति भावः ।

**व्यापकेति** । प्रत्यक्षव्यापकैन्द्रियकाधारत्वेन्द्रियसन्निकर्षानुपलब्धेरित्यर्थः । यद्यपि शब्दध्वंसो न प्रत्यक्षोऽतीन्द्रियाधारत्वादिति पृथिवीत्वादौ व्यभिचारि, तथाप्यैन्द्रियकानाधारत्वादिति हेतूकर्त्तव्यम् । तत्र प्रथममुपाधिं निरस्यति । **स्वरूपेति** । स्वरूपयोग्यतां प्रत्यक्षोपहितस्वरूपसम्पत्ति

प्रकाशिका ।

तद्बीजन्तु गुणादावौपपत्तिकाभावज्ञानेऽपि न सामान्याभावः प्रत्यक्षः प्रतियोगिसत्त्वविरोध्यनुपलम्भाविषयत्वाद् द्रव्ये न तादृशानुपलम्भो गुणादौ तु स इत्यस्य राजनिदेशत्वादिति । **ऐन्द्रियकाधारत्वं चेति** । अभावत्वावच्छिन्नसाध्यव्यापकोऽयमुपाधिः, अतो न शब्दादौ साध्याव्यापकत्वमिति ध्येयम् । **एवमतीन्द्रियाधारत्वादिति** मूलस्यैन्द्रियकानाधारत्वादित्यर्थः । तेन तद्व्यतिरेकत्वमुक्तोपाधेरुपपद्यत इति न "स्वव्यतिरेकेणेति शेष" इति प्रकाशविरोधः । अत एवाग्रे तथैव विभावयिष्यतीति । **उभयाधारत्वेऽपीति** । तथा च विरोधाभावे न परस्परविरहरूपताशङ्कापीति भावः । पृथिवीत्वात्यन्ताभावादौ व्यभिचाराच्चेत्यपि द्रष्टव्यम् । **योग्यताविरह इति** । यद्यपि योग्यताविरहमुपाधिं मूलकृदेवाग्रे वदयति । तथापि सत्प्रतिपक्षनिराकरणावसरे तथामूलम्, अत्र तूपाधिप्रस्तावे तदेवाशङ्क्य दूषणं समाहितमिति द्रष्टव्यम् । **तथापीति** । वायुस्पर्शे व्यभिचार इति सत्यन्तम् । **ऐन्द्रियकाभावत्वमिति** ऐन्द्रियकप्रतियोगिकत्वे सत्यैन्द्रियकाधारत्वं योग्यता तथा च न धर्मध्वंसस्य योग्यता न वोपाधिः साधनाव्यापक इत्यर्थः । अपदार्थव्या-

मकरन्दः ।

व्याप्त एवोपाधिः स्यात् न चैवम् विषमव्याप्तस्यापि तथात्वादित्याह **उपाधेरिति** । **तथाऽपीति** । आत्मादौ व्यभिचारवारणाय सत्यन्तम् । ऐन्द्रियकप्रतियोगिकाभावत्वे सत्यैन्द्रियकाधारत्वं योग्यत्वम् । तथा च न धर्माभावस्य योग्यता, तद्विरहश्च साधनव्यापक एवेत्याह **ऐन्द्रियकाभावमिति** ।

टिप्पणी ।

धारत्वं शब्दे साध्याव्यापकत्वान्नोपाधिः, तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वस्यैवोपाधिस्वरूपत्वेनाभावत्वावच्छिन्नसाध्यव्यापकत्वात् । **व्यतिरेकोपसंहारसामर्थ्याभावादिति** । स्वाभावेन साध्यव्यतिरेकानुमापकत्वादित्यर्थः । **उभयाधारत्वेऽप्यविरोधादिति** । ऐन्द्रियके पृथिवीत्वाद्यभावे वृत्तित्वेन व्यभिचार इति भावः । **तथाप्यभावत्वे सतीति** । वायुस्पर्शे व्यभिचारवारणाय सत्यन्तम् । **अपरिहारादिति** । ऐन्द्रियकप्रतियोगिकत्वे

अनुपाधित्वात्, तस्यास्तामपेक्ष्यैव सर्वदा व्यवस्थितेः, नाप्यैन्द्रियकाधारत्वप्रयुक्त-

बोधनी ।

साध्यते, सा च यावत्स्वरूपभाविनीति न-तां प्रत्यागन्तुकस्य सहकारियोग्यतारूपस्येन्द्रियसन्नि-कर्षस्योपाधित्वं साध्यव्यापकत्वाभावादिति । ऐन्द्रियकाधारत्वस्याप्यनुपाधित्वमाह—नापि इति । तत्र मानसप्रत्यक्षात्माऽऽधाराणां धर्माधर्मसंस्काराणां प्रध्वंसस्य मानसत्वप्रसङ्गः । इन्द्रियसन्निकर्ष-स्योपाधित्वेऽपि मनःसंयुक्तात्मविशेषणत्वेन धर्माद्यभावस्य प्रत्यक्षत्वप्रसङ्गो द्रष्टव्य इति भावः ।

प्रकाशः ।

प्रति, सहकारियोग्यतायास्तत्सम्पत्तेरिन्द्रियसन्निकर्षस्यानुपाधित्वात् । कुतः ? तस्या इति । तस्याः = प्रत्यक्षतायाः, ताम् = इन्द्रियसन्निकर्षरूपसहकारियोग्यतामित्यर्थः । तथा च पक्षवृत्तित्वेन साधनव्यापकत्वान्नोपाधिरिति भावः । यद्वा, स्वरूपयोग्यतारूपं साध्यं प्रति, सहकारियोग्यता नोपाधिः, साध्याव्यापकत्वादित्यर्थः । द्वितीयमुपाधिं निरस्यति नापीति । यद्यप्युपाधौ सति साध्याभावो न दोषाय, तथापि समव्याप्तोपाधिमभिप्रेत्योक्तम् । विषमव्याप्तोपाधिपक्षे तु व्यणुके साध्याव्यापकत्वम् । अभावत्वपक्षधर्मावच्छिन्नसाध्यव्यापकत्वे तु नष्टाश्रयद्रव्यधर्माद्यभावे साध्या-व्यापकत्वम् । किञ्च प्रत्यक्षयोग्यताऽत्र साध्या, सा चाभावस्य नैन्द्रियकाधारत्वमात्रं, धर्माभावस्य

प्रकाशिका ।

ख्यानमरोचमानाह । यद्वेति । अत्र च व्याख्याने "तस्या इत्यादिमूल" फक्किकाव्याख्या नमेवम् तस्याः स्वरूपयोग्यतायाः । तां=सहकारियोग्यताम् । अपेक्ष्य सर्वदाऽव्यवस्थितेरिति नञोऽन्तर्भावात तथा च सहकारियोग्यतानैरपेक्ष्येणापि स्वरूपयोग्यतासत्त्वादित्यर्थः पर्यवस्यति, तेन साध्याव्यापकत्वं निर्वहतीति ध्येयम् । अभावत्वेति । अत एव साधनावच्छिन्नसाध्यव्या-पकत्वमप्यपास्तमिति न तदाशङ्कितम् । द्रव्यधर्मेति । द्रव्यस्य धर्मो रूपादिः आश्रयनाशज-न्यस्य रूपादिनाशस्य प्रत्यक्षस्यातीन्द्रियकालादिमात्रवृत्तितयोपाधेः साध्याव्यापकत्वमिति भावः । किञ्च प्रत्यक्षयोग्यतारूपे साध्ये योग्याधिकरणत्वस्य व्यापकताग्राहकमपि नेत्याह । किञ्चेति । अधिकरणस्यैन्द्रियग्राह्यत्वमात्रं वाऽभावप्रत्यक्षे प्रयोजकमभावग्राहकेन्द्रियग्राह्यत्वं वा, आद्ये गौरव-

मकरन्दः ।

स्वरूपयोग्यतापदस्य फलोपधानपरत्वेऽपदार्थव्याख्यानमित्यनुशयान आह यद्वेति । एव-ञ्चात्र कल्पे तस्याः=स्वरूपयोग्यतायाः । तां = सहकारियोग्यतामपेक्ष्य सर्वदा अव्यवस्थितेरित्य-कारप्रश्लेषेण मूलफक्किका योज्या, तेन साध्याव्यापकत्वं निर्वहतीति ध्येयम् । अभावत्वेति । अत एव साधनावच्छिन्नसाध्यव्यापकत्वमपि निरस्तम् । वस्तुत आधारपदं प्रतियोगिसमवायिपर-मिति भूतलादिवृत्तित्वेऽपि साध्याव्यापकत्वम् । अन्यथा शब्दध्वंसस्यापि वीणादिवृत्तित्वेन साधन-व्यापकत्वापत्तेरिति । द्रव्यधर्मादीति । तदभावस्य कालाद्यतीन्द्रियाधारनिरूप्यत्वात् साध्याव्याप-

टिप्पणी ।

सत्यैन्द्रियकत्वाधारत्वमेव योग्यता तदभावश्च साधनव्यापक एवेत्युपाध्यभावादभावत्वे सत्यैन्द्रियका-धारत्वेन स्वव्यतिरेकेण व्यतिरेकोन्नायकत्वसम्भवादुपाधित्वसम्भव इति भावः । साध्याव्यापकत्वा-दित्यर्थ इति । स्वरूपयोग्यताया इन्द्रियसन्निकर्षरूपसहकारियोग्यताविगमकालेऽपि सत्त्वादिति-भावः । साध्याव्यापकत्वमिति । तदाधारस्य व्यणुकस्यातीन्द्रियत्वात् । कालमात्रस्यैव तदाधार-त्वेन तस्यातीन्द्रियत्वात् । नष्टाश्रयद्रव्यस्येति । नष्टमाश्रयद्रव्यं यस्येति विग्रहेणाऽऽश्रयनाशजन्य घटरूपादिनाश इत्यर्थः । योग्यतात्र साध्या सा चेति । हेतुतावच्छेदकं प्रत्यक्षजनकतावच्छेद-

मभावस्य प्रत्यक्षत्वम्, घर्माद्यभावस्यापि तथात्वप्रसङ्गात् । अत एव, नोभयप्रयुक्तम् । नापि द्वितीयः, प्रथमस्यासिद्धेः । अस्ति हि श्रोत्रशब्दाभावयोः स्वाभा-

बोधनी ।

अत एव-इति । यत इन्द्रियसन्निकृष्टत्वैन्द्रियकाधारत्वयोर्द्वयोरपि घर्माद्यभावे व्यभिचार इति । नापि सत्प्रतिपक्षत्वमित्याह—नापि द्वितीयः— इति । द्वयोरुपाधित्वस्य व्यभिचारदूषितत्वात् सत्प्रतिपक्षत्वमपि निरस्तमेवेति भावः । तत्र प्रथमस्येन्द्रियासन्निकृष्टत्वस्य स्वरूपासिद्धेरपि न सत्प्रतिपक्षत्वमित्याह—प्रथमस्य-इति । असिद्धिमेवाह—अस्ति हि-इति । स्वाभाविकः = संयोगसमवायादिसंबन्धान्तरनिरपेक्ष इति । ननु यदि श्रोत्रविशेषणतया शब्दाभावोऽपि गृह्येत

प्रकाशः ।

प्रत्यक्षतापत्तेः । नाप्यैन्द्रियकाधारत्वे सत्यैन्द्रियकप्रतियोगिकाभावत्वम् । गौरवात् । तदिन्द्रियाग्राह्येऽप्यधिकरणे गन्धरसाभावयोर्घ्राणादिना ग्रहाच्च । न चैन्द्रियकप्रतियोगिकाभावत्वस्य योग्यतात्वे वायुस्पर्शध्वंसोऽपि प्रत्यक्षः स्यादिति वाच्यम् । तस्याश्रयनाशजन्यस्य ग्राहकेन्द्रियसन्निकर्षाभावादिति भावः । अत एवेति । इन्द्रियसन्निकृष्टत्वमैन्द्रियकाधारत्वं चेत्युभयम् । तत्प्रयुक्तमपि नाभावस्य प्रत्यक्षत्वम्, घर्माभावस्य प्रत्यक्षतापत्तेरित्यर्थः । सत्प्रतिपक्षद्वये प्रथमस्यासिद्धिमाह नापीति । अत्र(१) स्थापनानुमाने योग्यत्वे साध्ये प्रत्यनुमाने तदभावः साध्यः । तत्र चेन्द्रियासन्निकृष्टत्वं व्यभिचारि, इन्द्रियासन्निकृष्टेऽपि योग्यताया अनपायात् । तस्माद्यदा साक्षात्कारविषयत्वं साध्यं, तदा फलाभावे योग्यता व्यर्थेति तत्राऽसिद्धिरुक्तेत्याहुः । ननु विशेषणत्व

प्रकाशिका ।

मेव बाधकम्, अन्त्ये त्वन्यदप्याह । तदिन्द्रियेति । तस्येति । कालादौ स गृह्यत एवेतीष्टापत्तिरपि द्रष्टव्या । नन्विति । उभयसिद्धव्यभिचारे दोषे सति किमन्यतरासिद्धस्वरूपासिद्धेरभिधानेनेति भावः । तस्माद्यदेति । तथा च प्रतिस्थापनानुमाने फलोपधानविरह एव साध्य इति न व्यभिचार इति भावः । योग्यता व्यर्थेति । शब्दाभावत्वावच्छिन्ने फलाभावे सति योग्यतासाधनमपि प्रतिरुद्धं परस्परविरोधादिति भावः । एवं च योग्यता=तत्साधनम् । व्यर्थम्=अनुमित्यजनकमिति शब्दार्थः । केचित्तु फलाभावरूपसाध्यसत्त्वे योग्यता सत्यपि व्यर्था

मकरन्दः ।

कत्वमिति भावः । ऐन्द्रियकत्वमिन्द्रियग्राह्यत्वमात्रं, तदिन्द्रियग्राह्यत्वं वा ? आद्ये, गौरवादिति । अन्त्ये, तदिन्द्रियेति । तस्येति । कालादावाश्रयान्तरे प्रत्यक्ष एवेतीष्टापत्तिरपि बोध्या ।

फलोपधानाभिप्रायेण समाधत्ते तस्मादिति । फलोपधानाभावरूपे साध्ये सति योग्यता

टिप्पणी ।

कधर्मत्वम्, तेन हेतुसाध्ययोरैक्यम् । ग्राहकेन्द्रियसन्निकर्षाभावादिति । कालादौ तत्प्रत्यक्षस्येष्टत्वाच्चेत्यपि बोध्यम् । तथा चैन्द्रियकाधारत्वस्य साध्यव्यापकत्वग्रहो न सम्भवतीति भावः । ननु स्थापनानुमाने योग्यत्व इति । उभयसिद्धव्यभिचारे सम्भवति किमन्यतरासिद्धासिद्धिदानेनेति शङ्कार्थः । प्रतिस्थापनानुमाने न योग्यताविरहः साध्यः किन्तु फलोपहितत्वाभाव एव, तत्र न व्यभिचारः सम्भवतीत्यसिद्धिरुक्तेति समाधत्ते । तस्मादित्यादिना । ननु योग्यत्वरूपसाध्यं प्रति फलानुपधानस्याविरोधित्वात् कथं सत्प्रतिपक्षतेत्यत आह । तदेत्यादिना । अत्र सर्वथैव फलाभावस्य साध्यता तथात्वे सति योग्यताकल्पनाया अपि व्यर्थत्वेनास्त्येव तस्य विरोधित्वमिति भावः । केचित्तु फलाभावे साध्ये योग्यता व्यर्था विद्यमानापि व्यभिचाराप्रयोजिका तदभावस्यासाध्यत्वादित्याहुः । साक्षात्कारविषयत्व-

(१) नन्विति जलदसंमतः पाठः ।

विको विशेषणविशेष्यभावः। विशेष्यस्यातीन्द्रियत्वात् कथमैन्द्रियकविशिष्टज्ञानविषयत्वम, तथा विशेष्यमव्यवस्थापयतश्च कथं विशेषणत्वमिति चेन्न। तथा विशेष्यव्यवस्थापनायाः फलत्वात्। न तु तदेव विशेषणत्वम्, आत्माश्रयप्रसङ्गात्। विशेषणभावेन समवायाभावयोर्ग्रहणं, तथाग्रहणमेव च विशेषणत्वमिति।

---

**बोधनी**

ततः शब्दाभावविशिष्टत्वेन श्रोत्रं ग्रहीतव्यं, न चैतत्संभवति श्रोत्रस्यातीन्द्रियत्वादित्याह—**विशेष्यस्य-इति**। विशिष्टज्ञानविषयत्वाभावे को दोषस्तत्राह—**तथा-इति**। न हि स्वजन्यविशिष्टज्ञानविषयत्वेन विशेष्यमनवच्छिन्दतो विशेषणत्वं नाम। विशेष्यव्यवस्थापकस्यैव विशेषणत्वादिति भावः। **न इति**। तथा विशेष्यव्यवच्छेदो विशेषणस्य फलं न तु विशेषणत्वमिति। कुत इत्यत आह। **आत्माश्रय**। इति। कथमित्यत्राह। **विशेषणभावेन इति**। विशेषणभावो हि सन्निकर्षः समवायाभावयोर्ग्रहणहेतुः।

तत्र यदि विशेष्यस्थापनमेव विशेषणत्वं तदा विशेषणभावेन तयोर्ग्रहणं, विशेषणभावश्च तथाग्रहणमेवेत्यात्माश्रयत्वं दृष्टान्तार्थं समवायोपसंग्रहणमिति। ततश्चैवमङ्गीकार्यमित्याह—

**प्रकाशः।**

अभावस्य तदा स्याद्यदा श्रोत्रं शब्दध्वंसज्ञाने भासेत, न चैवम्, श्रोत्रस्यापीन्द्रियत्वात्। ततो न शब्दध्वंसस्य तद्विशेषणत्वम्। स्वसम्बन्धेन विशेष्ये व्यावृत्तिबुद्ध्यजनकत्वात्। नाऽपि श्रोत्रं विशेष्यं, व्यावृत्तबुद्ध्यविषयत्वादित्याह **विशेष्यस्येति**। श्रोत्रस्यातीन्द्रियत्वेऽपि शब्दलिङ्गजश्रोत्रज्ञानसहकारि-मनः-प्रसूतानुमितिविषयत्वं स्यादित्यभिप्रेत्याह **तथेति**। विशेषणतासम्बन्धस्य हि विशिष्टज्ञानं फलं, न तु तदन्तर्भावेणैव स इत्यर्थः। आत्माश्रयमेवाह **विशेषणभावेनेति**।

**प्रकाशिका।**

व्यभिचाराप्रयोजिका। तद्विरहस्यासाध्यत्वादित्यर्थः। स्थापनानुमानेऽपि फलोपधानमेव साध्यमिति सत्प्रतिपक्षसत्त्वासङ्गतिरिति भाव इत्याहुः। आहुरित्यस्वरसे, तद्बीजन्तु अनन्तस्य सर्वदासन्निकृष्टस्य तदिन्द्रियासन्निकृष्टस्य तदिन्द्रियायोग्यत्वं यथात्मनः श्रोत्रायोग्यत्वमिति तथैव हेतुकरणीयो योग्यतातद्विरहावेव च स्थापनाप्रतिस्थापनयोः साध्यत्वेनाभिमताविति यथाश्रुतमेव सम्यगिति। **शब्दध्वंसज्ञान** इति। विशेष्यतयेति शेषः। **शब्दलिङ्गजेति**। विशेषणतयेति शेषः। शब्दरूपलिङ्गजेत्यर्थः। अनुमितीत्युपलक्षणम्। उपनीतभानेत्यपि द्रष्टव्यम्। इदं च शब्दध्वंसविशेषणकश्रोत्रविशेष्यकप्रत्ययमभिप्रेत्योक्तम्। शब्दध्वंसविशेष्यकस्तु प्रत्ययः श्रोत्रेणापि सम्भवत्येवेत्यवधेयम्। **अविषयीकृत्यापीति** निरधिकरणैवाभावप्रतीतिः, कालाद्यधिकरणा वेत्यभिप्रायेणेदम्। वस्तुतोऽविषयीकृत्य = अविशेष्यीकृत्येत्यर्थः। एवं च श्रोत्रे शब्दध्वंस इत्याकारकमेव प्रत्यक्षमित्यर्थः।

**मकरन्दः।**

सत्यपि व्यर्थी व्यभिचाराप्रयोजिकेति स्वरूपासिद्धिरेवोक्तेत्यर्थः। वस्तुतः, स्थापनायां योग्यत्वमेव साध्यम्, अन्यथा व्यभिचारप्रसङ्गादिति तदभाव एवात्र साध्यः। तत्र चाप्रसिद्धिरुपलक्षणात. योक्तेति व्यभिचारसत्त्वेऽप्यदोष इति तत्त्वम्। अत एवास्वरसादुक्तमित्याहुरिति। **शब्दलिङ्गजेति**। शब्दरूपलिङ्गजेत्यर्थः। अनुमितिविषयत्वमित्युपलक्षणम्। मानसप्रत्यक्षविषयत्वमित्यपि द्रष्टव्यम्। यद्यपि श्रोत्रप्रत्यक्षविषयत्वमपि सम्भवति, तथापि तत्र श्रोत्रस्य विशेष्यत्वमिति तन्नोक्तम्।

**टिप्पणी।**

**मिति**। साक्षात्कारविषयत्वमिति क्वचित् पाठः, तत्र साध्यं स्थापनानुमाने साध्यमित्यर्थः। **असम्बन्धेन विशेष्ये इति**। स्वसम्बन्धेनेत्यपि पाठः। स्वं विशेषणता तदात्मकेन सम्बन्धेनेत्यर्थः। तस्य विशेष्येऽसत्त्वात्तत्र व्यावृत्तिबुद्धिजनकत्वासम्भवादित्यर्थः। असम्बन्धेनेति पाठे तु

तस्मात्, संबन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वमेव हि तयोः। सैव च विशिष्टप्रत्ययजननयोग्यता, विशेषणतेत्युच्यते। सा चात्र दुर्निवारा, प्रतियोग्यधिकरणेन स्वभावत एवाभावस्य मिलितत्वात्। तथापि तया तथैव प्रतीतिः कर्त्तव्येति चेन्न। गृह्यमाणविशेष्यत्वाऽवच्छिन्नत्वाद् व्याप्तेः। अन्यथा, संयुक्तसमवायेन रूपादौ विशिष्टविकल्पधीजननदर्शनाद् गन्धादावपि तथात्वप्रसङ्गात्। तथापि नेन्द्रियविशेषणतया कस्यचिद् ग्रहणं दृष्टम्, अपि त्विन्द्रियसंबद्धविशेषणतया, सा चातो निवर्त्तत इति चेन्न। अस्य प्रतिबन्धस्य इन्द्रियसन्निकृष्टार्थप्रतिसंबन्धिविषयत्वात्।

बोधनी।

**तस्मात् इति**। अस्त्वेवं सम्बन्धः, विशेषणता तु कथं तयोः सिध्येत्, सम्बन्धान्तरपूर्वकत्वात् तस्या इत्यत्राह। **सैव इति**। तदुपश्लिष्टस्वभावतैव नीलोत्पलादिष्वपि विशेषणता, तस्या एव विशिष्टप्रत्ययजननयोग्यतारूपत्वाद् योग्यतैव विशेषणमिति भावः। सा च योग्यताऽत्र शब्दप्रध्वंसे दुर्वारा प्रतियोगिनः शब्दस्याधिकरणेनाकाशेन सम्बन्धान्तरमन्तरेणैव शब्दाभावस्योपश्लिष्टत्वादित्याह। **सा चात्र इति**। नन्वस्तु योग्यतैव विशेषणत्वं, विशेष्यव्यवस्थापनं च तत्फलम्, तथापि यद्यस्ति शब्दाभावस्य स्वभावत उपश्लेषादाकाशं प्रति विशेषणता, तर्हि तथा विशेष्यव्यवस्थापनेन प्रतीतिरुत्पादयितव्या, भूतलादिविशेषणे घटाभावादौ तथा दर्शनात्। न च तत्सम्भवति विशेष्यस्याकाशस्यातीन्द्रियत्वादित्याशयेनाह। **तथापि इति। न इति**। विशेष्यग्रहणयोग्यताप्रयुक्तं तन्न तु विशेषणत्वमात्रप्रयुक्तम्, तन्मात्रप्रयुक्तायां व्याप्तौ बाधकमाह—**अन्यथा इति**। यथा रूपादौ विशेषणे गृह्यमाणे द्रव्यमपि तद्विशिष्टं गृह्यते, तथा गन्धादावपि स्यात्, तत्रापि सन्निकर्षस्य विशेषणत्वस्य चाविशेषात्। न हि तदस्ति विशेष्यस्यायोग्यत्वात् तत्र इति। नन्वस्तु विशेषणतया ग्रहणं, तथापि अघटं भूतलमित्यादाविन्द्रियसम्बद्धविशेषणतयैवाभावस्य ग्रहणं दृष्टं, न तु क्वचिदिन्द्रियविशेषणतया, सा चेन्द्रियसम्बद्धविशेषणता ततः शब्दाभावान्निवर्तमाना स्वव्याप्यमिन्द्रियग्राह्यत्वमप्युपादायैव निवर्तेत इति व्यापकानुपलब्धिरेव तस्यानैन्द्रियकत्वे प्रमाणमित्याह। **तथापि इति। न इति**। यो

प्रकाशः।

तथापि सम्बन्धं विना कथं विशेषणत्वमित्युपसंहरन्नेव निराकरोति—

**तस्मादिति**। सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वमेव स्वरूपसम्बन्धोऽस्तीत्यर्थः। तथापि कथं विशेषणतेत्यत आह। **सैव चेति। प्रतियोगीति**। प्रतियोगिनः शब्दस्याधिकरणेन श्रोत्रेण शब्दाभावस्य स्वभावसन्निकृष्टत्वादित्यर्थः। **तथापीति**। तया=विशेषणतया। तथैव=सन्निकर्षेण विशिष्टविशेष्यविषयैव बुद्धिः कर्तव्या। विशेष्यस्य श्रोत्रायोग्यतया च साऽत्र न सम्भवतीत्यर्थः। **गृह्यमाणेति**। तद्विशेष्यकप्रत्यये तद्योग्यता प्रयोजिका, अत्र तु विशेष्यं श्रोत्रमयोग्यम्, अतो विशेष्यमविषयीकृत्य विशेषणतया प्रत्यासत्त्या शब्दध्वंसप्रत्यक्षं जन्यत इत्यर्थः। **अन्यथेति**। यदि नैवं, तदा स्वाश्रये गृह्यमाणे रूपादिप्रत्यक्षदर्शनादगृह्यमाणे वाय्वावाश्रये तत्स्पर्शप्रत्यक्षं न स्यादित्यर्थः। **तथाऽपीति**। सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यतयेन्द्रियप्रत्यासत्त्या सम्बद्धविशेषणस्यैव प्रत्यक्षजननदर्शनान्नेन्द्रियविशेषणता प्रत्यासत्तिरित्यर्थः। **अस्येति**। इन्द्रियसन्निकृष्टोऽर्थो घटादिस्तस्य प्रतिसम्बन्धी द्वितीयः स तथेति, न विशेषणतामात्रमेवम्, अपि तु

मकरन्दः।

**तथापीति**। उपसंहरन्नेव इति निराकरोतीत्यन्वयः। **विशेष्यमिति**। विशेष्यत्वेनेति शेषः। यद्वा, एतन्मते निरधिकरणाऽप्यभावप्रतीतिः, कालाद्यधिकरणा वेति तथोक्तम्।

टिप्पणी।

विशेषणताभिन्नेनासम्बद्धत्वाद् विशेषणस्य तत्त्वेनान्योन्याश्रयादित्यर्थः। **न विशेषणतामात्र-**

**अन्यथा संयुक्तसमवायेन गन्धादावुपलब्धिदर्शनात् समवायेनादर्शनात् शब्दस्याग्रहणप्रसङ्गात्। नाप्यभावत्वे सत्यतोन्द्रियाधारत्वात् सत्प्रतिपक्षत्वं, योग्यताविरहप्रयुक्तत्वाद् व्याप्तेः। न चाऽतोन्द्रियाधारत्वमेव तस्य योग्यताविरहः। तद्विपर्ययस्यैव**

बोधनी।

हीन्द्रियेण साक्षात्सम्बद्धमयोग्यस्तत्सम्बन्धिनार्थान्तरेण सम्बध्यते तद्विषय एवायं प्रतिबन्धः, न त्विन्द्रियग्राह्याभावमात्रविषय इति। क्वचिद् व्यवधानदर्शनादन्यत्रापि तथाभ्युपगमेऽनिष्टमाह। **अन्यथा इति**। तदेवमिन्द्रियसन्निकृष्टत्वस्यासिद्धयुद्भावनेन प्रतिपक्षत्वं निराकृतम्, इदानीमतीन्द्रियाधारत्वस्य निराचष्टे। **नापि इति**। शब्दादिभिर्व्यभिचारनिवृत्त्यर्थमुक्तमभावत्वे **सति इति**। कुत इत्यत आह। **योग्यता इति**। परमाणुगतद्व्यणुकप्रध्वंसादेः सपक्षत्वाभिमतस्य नातीन्द्रियाधारत्वादतीन्द्रियत्वं, किन्तु स्वरूपयोग्यताविरहात् ततो व्याप्यत्वासिद्धो हेतुरिति। नन्वस्तु योग्यताविरह एव प्रयोजकः, स त्वतीन्द्रियाधारतैवाभावस्येत्यत्राह। **न च**

प्रकाशः।

गृह्यमाणविशेष्यम्। साक्षात्सम्बन्धाभावे सत्येव हि परम्परासम्बन्ध आश्रीयते, अत्र तु साक्षादेवसम्बन्धोऽस्तीति न तदाश्रयणमित्यर्थः। द्वितीयं सत्प्रतिपक्षं निरस्यति। **नाऽपीति**। शब्देन व्यभिचारवारणार्थमभावत्वे सतीति। **योग्यतेति**। तथा चोपाधिमत्त्वेनातुल्यबलत्वादित्यर्थः।

ननु स्थापनानुमाने योग्यतायाः साध्यत्वात् प्रत्यनुमाने तदभावः साध्य इति स एव नोपाधिः। साधनव्यापकत्वात्, व्यभिचारानुमाने साध्याविशेषप्रसङ्गाच्च। न च योग्यतावच्छेदकरूपाभाव उपाधिः, योग्यतासाधके स्थापनानुमाने नैन्द्रियकाभावत्वमेव योग्यत्वं हेतुः, साध्याविशेषप्रसङ्गात्, अपि तु योग्यतावच्छेदकरूपवत्त्वमिति तदभावो नोपाधिः, पूर्वसाधनव्यतिरेकत्वात्। मैवम्। साध्यप्रयोजकत्वेन तादृशस्याप्युपाधित्वात्। न चैवं सत्प्रतिपक्षोच्छेदः। स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात्। यथा शब्दोऽनित्यो गुणत्वाद् इत्यत्र व्योमैकगुणत्वेन सत्प्रतिपक्षे अगुणत्वमुपाधिः। जलपरमाणुरूपादौ साध्याव्यापकत्वात्। पूर्वं योग्यताविशेषो हेतुरत्र योग्यतामात्रव्यतिरेक उपाधिरित्यन्ये।

प्रयोजकत्वमेवाह। **न चेति**। न दृश्याधारत्वमात्रं योग्यता, किन्तु दृश्यप्रतियोगिकत्वसहि-

प्रकाशिका।

**उपसंहरन्नेवेति** निराकरोतीति योजना। एवं = सम्बद्धविशेषणग्राहकम्। **गृह्यमाणविशेष्यमिति**। गृह्यमाणं विशेष्यमाश्रयो यस्य तादृशं विशेषणतास्वरूपमित्यर्थः। एतेनान्यत्र सम्बद्धाभावग्रहे सम्बद्धविशेषणताप्रत्यासत्तिर्न तु सर्वत्रेति पर्यवसितार्थः। ननु भवेदेवं यदि साध्यं साधनव्यापकं स्यात् तदेव तु नास्तीत्यरुचेराह। **व्यभिचारानुमान इति**। **न चैवमिति**। यद्यपि साध्यप्रयोजकत्वेनेत्यभिधानाद् यत्रैव साध्यं प्रत्यप्रयोजकः पूर्वसाधनव्यतिरेकस्तत्रैव नोपाधिरिति शङ्कैवेयमनुपपन्ना, तथापि तत्र तस्याप्रयोजकत्वमित्यत्रैव किं बीजमित्यभिप्रायेणेदमुक्तम्। **पूर्वमिति** ऐन्द्रियकप्रतियोगिकत्वरूपयोग्यताविशेषो हेतुः, योग्यतासामान्याभावश्चोपाधिरतो न पूर्वसाधनव्यतिरेकित्वमित्यर्थः। अन्य इत्यरुचौ, तद्बीजन्तु स्थापनानुमाने योग्यतासामान्यस्य साध्यत्वेऽपि योग्यताविशेषो हेतावंशतः साध्याविशेषे यथोक्तप्रक्रियाया एवानुसरणीयत्वे किम-

मकरन्दः।

ननु भवेदेवं यदि साधनं साध्यव्याप्यं स्यात्, तदेव चोपाधिवादिमतेऽसिद्धमित्य नुशयादाह। **व्यभिचारानुमान इति**।

टिप्पणी।

**मिति**। इन्द्रियसम्बद्धविशेषणताग्राह्य इत्यर्थः। **गृह्यमाणेति**। इन्द्रियसम्बद्धविशेषणता-

योग्यतात्वापत्तेः । न चैवमेव, धर्मादिप्रध्वंसग्रहणप्रसङ्गात् । दृश्याधारत्वं दृश्यप्रतियोगिता चेति द्वयमप्यस्य योग्यतेति चेन्न । उभयनिरूपणीयत्वनियमानभ्युपगमात् । प्रतियोगिमात्रनिरूपणीयो ह्यभावः । अन्यथेह भूतले घटो नास्तीत्येषाऽपि प्रतीतिः प्रत्यक्षा न स्यात् । संयोगो ह्यत्र निषिद्ध्यते, तदभावश्च भूतलवद् घटेऽपि वर्त्तते, तत्र यदि प्रत्यक्षतया भूतलस्योपयोगो, घटस्यापि तथैव स्याद्विशेषात् । अथ घट-

---

बोधनी

इति । नन्वापद्यतामैन्द्रियकाधारत्वं योग्यतेत्यत्राह । न चैवम् इति । ऐन्द्रियकाऽऽत्माधारो हि धर्मादिप्रध्वंस इति । दृश्याधारत्वम् इति । ततश्च न धर्माद्यभावस्य प्रत्यक्षत्वापत्तिरदृश्यप्रतियोगिकत्वात्, नापि शब्दाभावस्यातीन्द्रियाधारत्वात् तस्येति । न इति । न ह्याधारेणापि निरूपणीय इति । कथं तर्ह्यभ्युपगम इत्यत्राह । प्रतियोगि इति । आधारनिरूप्यत्वेऽनिष्टमाह । अन्यथा इति । किमिति न स्यादत आह । तत्र इति । तयोर्यदि भूतलमाधारोऽभावनिरूपणे प्रत्यक्षतयोपयुज्यते घटोऽपि तथा स्यात् आधारत्वाविशेषात्, तथा च परोक्षे घटे इह घटो नास्तीति प्रतीतिर्न स्यादिति भावः । अथ इति । प्रकारभेदं सूचयन्नार्थस्तुशब्दः प्रतियोगिनः संसर्गस्य निरूपणाय

प्रकाशः ।

तम्, न चैतद् धर्मादिध्वंसस्यास्तीत्याह । दृश्येति । तद्विरहश्च नोपाधिः, साधनव्यापकत्वात् । नाऽप्युभयस्य साध्यप्रयोजकत्वेनाप्रयोजकत्वम् । ऐन्द्रियकत्वरूपसाध्यसामान्याव्यापकत्वेनानुपाधित्वादिति भावः । विपक्षे बाधकमाह । अन्यथेति । यद्धुभाभ्यां प्रत्यक्षाभ्यामेवाभावः प्रत्यक्ष इत्यर्थः । ननु भूतलमात्रमत्राऽऽधारः, तच्च दृश्यमेवेत्यत आह । संयोगो हीति । न चात्र माना-

प्रकाशिका ।

नेनेति । प्रयोजकत्वस्यैवेति । साधनाव्यापकत्वरूपमुपाधिरिति शेषः । नापीति । दृश्याधारत्वस्य दृश्यप्रतियोगिकत्वस्य च मिलितस्य प्रत्यक्षप्रयोजकत्वेनाप्रयोजकत्वं केवलस्य दृश्यप्रतियोगित्वस्य स्यात् तत्र च लाघवादावश्यकत्वाच्च केवलमेव प्रयोजकमिति भवति तदभाव उपाधिः साधनाव्यापक इत्यर्थः । ऐन्द्रियकत्वेति । एवं च नैन्द्रियकत्वसामान्यप्रयोजकं दृश्यप्रतियोगिकत्वं

मकरन्दः ।

नाप्युभयस्येति । दृश्याधारत्वसमानाधिकरणदृश्यप्रतियोगित्वसाध्यप्रयोजकतया उपाधित्वेन स्थापनाहेतोरप्रयोजकत्वं नेत्यर्थः । ऐन्द्रियकत्वरूपेति । न चाभावत्वपक्षधर्मावच्छिन्नसा-

टिप्पणी ।

ग्राहकमित्यर्थः । ननूभयनिरूप्यत्वं मास्तु योग्यत्वं किन्तूभयदृश्यत्वमेव तथा च स्थापनानुमान इन्द्रियाधारत्वमुपाधिरित्याशयवानाह । उभयस्येति । ऐन्द्रियकाधारत्वैन्द्रियकप्रतियोगित्वयोरित्यर्थः । साध्यस्य = इन्द्रियग्राह्यत्वस्य । प्रयोजकत्वेनेत्यर्थः । अप्रयोजकत्वं स्थापनानुमानस्येति शेषः । इन्द्रियाधारत्वरूपोपाधिसद्भावादिति भावः । ऐन्द्रियकत्वेति । तस्य शब्दे सत्त्वेन तत्रोपाध्यभावादव्यापकत्वम् । अभावत्वावच्छिन्नसाध्यव्यापकत्वमपि नष्टाश्रयद्रव्यगुणादिनाशे व्यभिचारेणासम्भवीति न स्थापनानुमानस्याप्रयोजकत्वमिति भावः । एवञ्च नोभयं प्रयोजकमुक्तनाशस्याप्रत्यक्षापत्तेरित्यवधेयम् । केचित्तु तदेतन्निराकरोतीति पूर्वमेव नापीति पठन्ति । तेषामयमाशयः, उभयस्येत्यनन्तरं प्रत्येकस्येति शेषः । तथा च लाघवादावश्यकत्वाच्च प्रत्येकस्यैन्द्रियकप्रतियोगिकत्वस्य प्रयोजकत्वेनोभयस्याप्रयोजकत्वात् योग्यत्वाभावः साधनाव्यापकत्वाद् भवत्येवोपाधिरिति भावः । ऐन्द्रियकत्वेति । ऐन्द्रियकत्वं प्रति तस्याव्यापकत्वे तदभावं प्रति तदभावस्याप्रयोजकत्वेन साध्यप्रयोजकस्यैव पूर्वं साधनव्यतिरेकस्योपाधित्वेनात्वानुपाधित्वमिति भावः । भूतलमात्रमत्राधार इति । अत्र भूतले घटो नास्ती-

प्रकाशः।

भावः। घटनिषेधे हि भूतले घटाभावो न प्रागभावध्वंसाऽऽत्मकः प्रतियोगिसमानकालत्वात्। नाप्यत्यन्ताभावः, कदाचित् तस्य तत्र भावात्. तस्माद् घटसंयोगो निषिध्यते, स च संयोगो य एतद्धटस्य तत्र भावी तस्य प्रागभावः, अतीतस्य ध्वंसः, सर्वदैवाऽभवतश्चात्यन्ताभावः। ननु भूतले घटो नास्तीति घटप्रतियोगिकाभावोऽनुभूयते, संयोगस्य तु प्रतियोगित्वे संयोगो नास्तीत्यनुभवापत्तिः। मैवम्। घटो नास्तीति बुद्धेरेव संयोगाभावविषयत्वात्। यथा हि भूतले घटास्तित्वबुद्धिस्तत्संयोगेन, तथा तदभावेन घटाभावबुद्धिः। यत्सम्बन्धपुरस्कारेण यत्र यद्भावबुद्धिस्तदभावपुरस्कारेण तत्र तन्नास्तिताप्रतीतिः।

केचित्तु, घटात्यन्ताभाव एव तद्विषयः। उत्पादविनाशधीस्तु तत्सम्बन्धतथात्वप्रयुक्ता, स च तत्संयोगध्वंसरूपः। न चैवं घटात्यन्ताभावसम्बन्धस्य संयोगध्वंसरूपतया नित्यत्वाद् घटधीस्तत्र कदापि न स्यादिति वाच्यम्। न हि यत्र यत्संयोगोऽस्ति तत्र तत्संयोगध्वंसः, सामान्यध्वंसस्य

प्रकाशिका।

घटादावभावादिति तदभावस्तदभावाप्रयोजकत्वान्नोपाधिरिति भावः। अभावत्वावच्छिन्नप्रत्यक्षत्व प्रयोजकं दृश्यप्रतियोगिकत्वमित्यभिप्रायेणाग्रे उभयेत्यादिसिद्धान्तः। केचित्तु तदेतन्निराकरोति उभयेतीत्यनन्तरं नापीत्यादिफक्किका। तदर्थश्च, उभयानिरूपणीयत्वेऽपि उभयदृश्यतैवाभावयोग्यता, तथाचाप्रयोजकत्वं स्थापनाहेतोरित्यर्थः। अभावत्वावच्छिन्नसाध्यव्यापकत्वेऽपि नष्टाश्रयद्रव्यगुणाद्यभावे साध्याव्यापकतया मिलितस्याप्रयोजकत्वे दृश्यप्रतियोगित्वमात्रस्यैव प्रयोजकत्वमिति भावः। नन्वेवं घटे भूतलं नास्ति रूपे घटो नास्तीति प्रतीत्योर्भ्रमत्वापत्तिः, भूतलसंयोगस्य घटे, घटसमवायस्य रूपे सत्त्वात्। न च भूतलविशिष्टसंयोगाभावस्तत्रास्त्येव भूतलाभावादेवमितरत्रापीति वाच्यम्। एवं सति विशेषणभूतलघटाद्यभावविषयत्वमेव प्रतीत्योस्तस्यावश्याभ्युपेयत्वादित्यनुशयादाह। **केचिदिति।** **तत्सम्बन्धेति।** सम्बन्धसत्त्वासत्त्वप्रयुक्तेत्यर्थः। न चैवं प्रतीतेः संयोगाभावाविषयत्वे "**संयोगो हीं**"त्यादि मूलविरोध इति वाच्यम्। एवमप्युत्पादादिप्रतीत्यर्थं संयोगाभावप्रतीतेरुपेयत्वात्। **सामान्यध्वंसस्येति।** इतराभावध्वं-

मकरन्दः।

ध्यव्यापकत्वं, नष्टाश्रयकरूपाद्यभावे साध्याव्यापकत्वादिति भावः। एतेन पूर्वपक्षिवचनत्वेनास्य ग्रन्थस्यासङ्गतिरित्यपास्तम्। सिद्धान्तिनैव स्वातन्त्र्येण स्वहेतोरप्रयोजकत्वमाशङ्क्य परीहारकरणात्। केचित्तु नापीत्यस्य पूर्वं तदेतन्निराकरोति नोभयस्येति प्रक्षिप्य सिद्धान्तिवचनं कृत्वा योजयन्ति। नन्वेवं घटे भूतलं नास्तीति बुद्धेरपि तत्संयोगाभावविषयत्वे भ्रमत्वापत्तिः। न चेष्टापत्तिः, तस्याः प्रमात्वेन सर्व्वसिद्धत्वात्। एवं रूपे घटो नास्तीति बुद्धेरपि तत्संबन्धाभावविषयकत्वे भ्रमत्वापत्तिः। न च तत्संबन्धाभावविषयकत्वं तद्विशिष्टसंबन्धाभावविषयकत्वं, विशिष्टाभावश्च विशेषणाभावाधीनस्तत्रास्त्येवेति न भ्रमत्वमिति वाच्यम्। हन्तैवमावश्यकविशेषणाभावविषयत्वेनैवोपपत्तौ विशिष्टाभावविषयत्वकल्पने गौरवान्मानाभावाच्चेत्यनुशयादाह। **केचित्त्विति।** **तत्सम्बन्धतथात्वेति।** तत्सम्बन्धसत्त्वासत्त्वप्रयुक्तेत्यर्थः। **सामान्यध्वंसस्येति।** प्रतियोगितावच्छेदकभेदेनाभावभेदाद-

टिप्पणी।

त्यत्र निषेधे आधारो निषेधाधिकरणत्वेन विवक्षितः, तथा च यदा हि यो यत्र निषिध्यते, तदानीं तादृशाधारनिषेधदृश्यत्वं प्रयोजकमन्यथा दृश्यमात्राधारस्य अत्यन्ताभावमात्र एवाभावाद् दृश्यानामपि बहूनामेकदा ज्ञानासम्भवादभावमात्रस्याप्रत्यक्षत्वापत्तेः। एवं च निषेधो हि प्रसक्तस्यैवेति घटे घटस्य प्रसक्त्यभावेन तत्र निषेधाभावात् तस्याप्रत्यक्षत्वं न क्षतिकरमिति भावः। संयोगाभावनिषेधे हि संयोगस्य भूतल इव घटेऽपि प्रसक्तेस्तदानीं निषेधाधारत्वस्योभयत्र तुल्यत्वादुभयदृश्यत्वं विनिगमकाभावादपेक्षणीयमिति बोध्यम्। **उत्पादविनाशधीरिति।** उत्पादविनाशौ सत्त्वासत्त्वे, तथात्वंतयस्य

प्रकाशः ।

यावद्विशेषध्वंसव्याप्यत्वादेकविशेषवति सामान्यध्वंसस्याभावेन तदुपपत्तेरित्याहुः ।

यथा प्रतियोगिभेदेनाभावभेदः, तथा तदवच्छेदकभेदेनाऽपीति संयुक्तघटस्याभावस्तत्र, स चान्यविशिष्टाभाववदुत्पादविनाशशीलोऽन्य एवेत्यन्ये ।

यथाऽनादिसंसर्गाभाववैधर्म्येऽप्यभावबुद्धेरनन्यथासिद्धत्वादुत्पादशीलो ध्वंसः स्वीकृतः, तथा तत एवोत्पादविनाशशीलस्तुरीयः संसर्गाभावो घटस्येत्यपरे ।

ननु घटसंयोगाभावो योग्यानुपलब्ध्या ग्राह्यः, सा च प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसत्त्वेऽनुपलब्धिः, अत्र च संयोगस्योपलम्भको घट एव नास्तीति न संयोगाभावः प्रत्यक्षः । मैवम् ।

प्रकाशिका ।

सस्यापि प्रतियोगितावच्छेदकभेदेन बाधकाभावे सति भेदादित्याशयः । प्रतियोगितावच्छेदकाश्रयचरमप्रतियोगिजन्यश्चायमभाव इत्यवधेयम् । सामान्यध्वंसानङ्गीकारे च संयोगासमानकालीनसंयोगध्वंसस्य सम्बन्धत्वमिति मन्तव्यम् । ननु संयोगध्वंसस्य सम्बन्धत्वे गुणादौ घटाभावप्रतीत्यनुदयापत्तिरिति तत्र स्वरूपस्यैव सम्बन्धत्वेऽत्रापि तथैवास्तु कालविशेषावच्छिन्नस्वरूपञ्च संबन्ध इति तत्कादाचित्कत्वेनैव कादाचित्कत्वप्रतीतिरित्यरुचेराह । **यथेति** । यद्यप्यत्र कल्पे "संयोगो ही"त्यादिमूलासङ्गतिरेव, तथापि घटो नास्तीति प्रतीतिमुपेक्ष्य संयोगो नास्तीत्येव प्रतीतिरुदाहरणं चेति मूलतात्पर्यमिति भावः । एवमुत्तरत्रापि । नन्वेवं घटत्वावच्छिन्नघटज्ञानाद् घटो नास्तीति प्रतीतिः कदापि न स्यात्, संयुक्तत्वस्य प्रतियोगितावच्छेदकस्याज्ञानादित्यनुभवविरोध इत्यरुचेराह । **यथेति** । अत्रापि कालविशेषावच्छिन्नस्वरूपसम्बन्धेनैव कादाचित्कत्वप्रतीत्युपपत्तौ

मकरन्दः ।

भावान्तरवद् ध्वंसस्यापि सामान्याभावत्वमिति मतेनेदम् । न च ध्वंसस्य प्रतियोगिजन्यत्वनियमात् कथं तथेति वाच्यम्, चरमप्रतियोगिजन्यतया तथात्वात्, यावत्प्रतियोगिजन्यत्वे गौरवात् । ननु संयोगध्वंसस्य घटात्यन्ताभावसम्बन्धरूपत्वे गुणादौ तदत्यन्ताभावसम्बन्धो न स्यात्, यदि च तत्र स्वरूपमेव सम्बन्धः, तदा प्रकृतेऽपि तथाऽस्तु. तत्कादाचित्कत्वाभ्युपगमाच्च प्रतीतेरपि तथात्वोपपत्तेः । किञ्च. सामान्यध्वंसस्य तद्घटसंयोगसामान्यं वा, तद्भूतलघटसंयोगसामान्यं वा प्रतियोगि ? नाद्यः, व्यधिकरणस्यानागतस्य च संयोगस्य तदा तत्र भूतले ध्वंसासम्भवेनात्यन्ताभावसम्भवानुपपत्तेः । नान्त्यः, यत्र भूतले कदापि न तद्घटसंयोगस्तत्र प्रतियोग्यप्रसिद्ध्या तादृशध्वंसाभावेनात्यन्ताभावसम्बन्धानुपपत्तेः, अनागतसंयोगमादाय पूर्वदोषापत्तेश्चेति पूर्वास्वरसादाह । **यथेति** । यथा दण्डोपनयापनयाभ्यां दण्डावच्छिन्नपुरुषविरहः कादाचित्कः, संयोगावच्छिन्नघटविरहोऽपि तथेत्यर्थः । नन्वेवं संयुक्तत्वेनैव घटोपस्थितिरभावप्रतीत्यङ्गं स्यात्, न तु घटत्वमात्रेण, तस्य प्रतियोगितावच्छेदकत्वात्, न चेष्टापत्तिः, तत्प्रकारकतदुपस्थित्यनन्तरमपि भूतले तद्घटाभावप्रतीतेरनुभवसिद्धत्वादित्यनुशयादाह । **यथाऽनादीति** । समयविशेषसंसर्गिणा नित्याभावेनैवोपपत्तौ न तुरीयकल्पनमित्यनभिमतिबीजमत्रापि द्रष्टव्यम् ।

**तदुपलम्भकं** = प्रतियोग्युपलम्भकं, तस्य सत्त्वे समवधाने मेलने इति यावत् । उपलम्भो = लौकिकप्रत्यक्षम् । तथा च प्रतियोगितद्व्याप्याभ्यामितरद् यावत् तदुपलम्भकं, तत् सत्त्वे अनुपल-

टिप्पणी ।

सत्त्वात्तत्र इति व्याख्यानदर्शनात् नाशस्य ध्वंसेऽसम्भवाच्च, तथा च भाविघटसंयोगे भूतलेऽत्र घटो नास्तीति प्रतीतेर्घटाभावविषयकत्वस्य सम्बन्धविरहेण वक्तुमशक्यत्वेन घटसंयोगध्वंसविषयत्वमेव, घटाभावविषयकत्वं तु यत्र संयोगासमानकालीनः संयोगध्वंसस्तत्रैव जायमानायाः प्रतीतेः, एवञ्च "संयोगो ह्यत्रे"त्यादिमूलस्यापि नासङ्गतिरिति बोध्यम् । **अन्य इति** । अत्रा-

स्याऽन्यथोपयोगः, भूतलस्याप्यन्यथैव स्यादविशेषात् । कथमन्यथेति चेत् । प्रतियोगिनिरूपणार्थमभावसन्निकर्षार्थञ्च । तत्र प्रतियोगिनिरूपणं स्मरणलक्षणमनुपलभ्यमानेनापीति, न तदर्थमध्यक्षगोचरत्वमपेक्षणीयमन्यतरस्यापि; कुत उभयस्य । सन्निकर्षस्तु, भूतलघटसंयोगाभावस्येन्द्रियेण साक्षान्नास्ति, येनास्ति तेनापि

बोधनी ।

घटस्योपयोगः । तत्र स्मर्यमाणेनापि तेन सिध्यतीति भावः । तदेतद् भूतलस्यापि तुल्यमित्याह । **भूतलस्य इति** । विवक्षितमन्यथोपयोगं प्रश्नपूर्वकमाविष्करोति । **कथम् इति** । न तावत्प्रतियोगिनिरूपणे तयोः प्रत्यक्षत्वोपयोग इत्याह—**तत्र इति** । प्रतियोगिनः संसर्गस्य तावन्निरूपणं स्मरणलक्षणं तदानीमनुभवस्यासंभवात्, स्मरणं चाप्रत्यक्षेणापि तन्निरूपकेण संसर्गिणा भवतीति न भूतलघटयोरन्यतरस्यापि प्रत्यक्षत्वेन प्रतियोगिनिरूपणोपयोगः किमुतोभयोरिति । अभावसन्निकर्षार्थत्वेऽपि भूतलस्य न प्रत्यक्षत्वेनोपयोग इति दर्शयिष्यन् सन्निकर्षं तावदाह—**सन्निकर्षस्तु**

प्रकाशः ।

यो ह्यनुपलम्भः प्रतियोगिसत्त्वविरोधी, स एवाभावग्राहकः । अत एव पृथिवीत्वाभावो जलपरमाणुषु न प्रत्यक्षः । प्रत्यक्षश्च वायौ रूपाभावः । रूपस्य महति वायौ सत्त्वेऽनुपलब्धिविरोधात् । स च शब्दाधाराप्रत्यक्षत्वेऽपि प्रकृतेऽस्तीति शब्दाभावः प्रत्यक्ष इति भावः । **कथमिति** । अन्यथेत्यत्र कोऽन्यः प्रकार इत्यर्थः । ननु संयोगाभावप्रतीतौ सन्निकर्षमात्रार्थं भूतलस्योपयोगे गन्धतदभावबुद्धौ द्रव्यग्रह इव नियमेन भूतलोपलम्भो न स्यात् । अतः सन्निकर्षवदस्योपलब्धिरभावप्रत्यक्षाऽङ्गमित्यु-

प्रकाशिका ।

किं विलक्षणाभावकल्पनयेत्यरुचिबीजम् । **यो हीति** । तथानयैव योग्यानुपलब्ध्या संयोगाभावोऽपि गृह्यत इति भावः । **स च शब्देति** । यद्यपीदमप्रकृतं शब्दाभावस्य पूर्वपक्षविषयत्वात् ।

मकरन्दः ।

ब्धिरित्यर्थः । चक्षुरादिकरणसमवधानमात्रे तु न योग्यानुपब्धिः, अन्धकारे घटाभावप्रत्यक्षापत्तेः । किन्तु यावत्प्रतियोग्युपलम्भकसामग्रीसमवधाने सत्यनुपलब्धिः । तथा सति नान्धकारे घटाभावग्रहापत्तिः, घटोपलम्भकसामग्रीमध्यपातिनो यावदन्तर्गतस्यालोकसम्बन्धस्य तदानीमभावात् । प्रतियोग्युपलम्भे प्रतियोगिनोऽपि विषयविधया हेतुतया तस्यापि यावदन्तर्गतत्वात् **प्रतियोगीतरेति** । प्रतियोगिसत्त्वेऽपि तेन सममिन्द्रियसन्निकर्षश्च प्रतियोगिव्याप्यः, व्याप्तिश्च भेदगर्भा विवक्षिता अतः प्रतियोगिनः प्रतियोगिव्याप्यत्वेऽपि न क्षतिः । यत्किञ्चिदुपलम्भकसत्त्वेऽप्यन्धकारादौ तदभावग्रहाभावाद् **यावदिति** । तथा च प्रतियोगितद्व्याप्यभिन्नं प्रतियोग्युपलब्धिव्यापकं यद् यत्, समुदिततत्सत्त्व इत्यर्थः । विभिन्नदेशावच्छेदेन यावत्तदुपलम्भकसत्त्वेऽप्यभावाग्रहात् समवधान इति व्याख्यातम् । तत्र तद्धर्मावच्छिन्नतद्धर्मावच्छिन्नव्याप्येतरतद्धर्मावच्छिन्नलौकिकप्रत्यक्षयावत्कारणसमवधाने सति तद्धर्मावच्छिन्नानुपलब्धिः कारणमिति तु निष्कर्षः ।

**यो हीति** । तथा चेयमेव योग्यानुपलब्धिरभावग्राहिकेति संयोगाभावोऽपि प्रत्यक्ष एवेति भावः । एवं सति प्रकृतः शब्दाभाव एव प्रत्यक्षो न स्यादिति नाशङ्कनीयं, तत्राप्युक्तानुपलब्धिसत्त्वादित्याह । **स चेति** । एतेन शब्दाभावमधिकृत्य पूर्वपक्षाभावादिदमसङ्गतमित्यपास्तम् ।

टिप्पणी ।

रुचिबीजन्तु कालविशेषावच्छिन्नस्वरूपेणैव घटाभावादिकादाचित्कत्वप्रतीत्युपपत्तेरतिरिक्ताभावकल्पने मानाभाव इति । **अनुपलब्धिविरोधादिति** । एवं सति घटस्यानुपलम्भेऽपि संयोगाभावप्रत्यक्षसम्भवः, भूतले संयोगानुपलम्भस्य संयोगसत्त्वविरोधित्वेन तावन्मात्रस्यैवापेक्षणीयत्वादिति भावः । यद्यपीदमप्रकृतं शब्दाभावस्य पूर्वपक्षविषयत्वात् । तथापि प्रतियोग्ययोग्यत्वे शब्दाभावोऽपि प्रत्यक्षो न स्यादिति शङ्कामात्रनिरासार्थम्—**स चेत्यादि** ।

यदीन्द्रियं न सन्निकृष्येत, कथमिव तं गमयेत्। न चोपलब्धोपलभ्यमानाभ्यामेवेन्द्रियं सन्निकृष्यते। इतरेतराश्रयप्रसङ्गात्।

तस्मात् सन्निकर्षे सति योग्यत्वाद् भूतलमप्युपलभ्यते, न तु तस्योपलभ्यमानत्वमभावोपलब्धेरङ्गमिति युक्तमुत्पश्यामः। प्रकृते तु न प्रतियोगिनिरूपणार्थं तदुपयोगः। तस्य संयोगवदाधारानिरूप्यत्वात्। नाऽपि सन्निकर्षार्थं, तदभावस्य साक्षादिन्द्रियसन्निकर्षादिति। न चेदेवं, कुत एषा प्रतीतिरिदानीं श्रुतपूर्वः शब्दो नास्तीति। अनुमानादिति चेन्न। शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वात्। अनित्यत्वमात्र-

---

बोधनी।

इति। न तावदिन्द्रियेण साक्षात्सन्निकर्षः संयोगः समवायो वाऽभावस्यास्ति। येन भूतलेन विशेषणविशेष्यभावेन सन्निकर्षोऽस्ति तेनापि यदीन्द्रियं न सन्निकृष्येत तदाऽव्यवहितस्यापि सम्बन्धाभावात्कथमिव तमभावं गमयेदिति। ननु सन्निकर्षार्थत्वेऽपि भूतलस्य प्रत्यक्षत्वेनोपयोगः अनुपलब्धस्यानुपलभ्यमानस्य चेन्द्रियसन्निकर्षाभावादित्यत आह। न च इति। इन्द्रियसन्निकर्षादुपलम्भ उपलम्भादिन्द्रियसन्निकर्ष इतीतरेतराश्रयप्रसङ्गादिति।

यदि भूतलसन्निकर्ष एवोपयुज्यते न तु तदुपलम्भः, कथं तर्हीह भूतले घटो नास्तीति भूतलोपलम्भेनैवाभावोपलम्भ इतीमामाशङ्कां निराकुर्वन्नुपसंहरति—तस्मात् इति। तर्हि शब्दाभावेऽप्युभयार्थमेवाधिकरणमपेक्षणीयम्, न च तत्सम्भवतीत्यप्रत्यक्षत्वमेव तस्येत्यत्राह—प्रकृते तु-इति। तस्य = प्रतियोगिनः शब्दस्येति। अथेदानीमैन्द्रियकानुमानस्यानुग्राहकं तर्कमाह। न चेदेवम् इति। न चेच्छब्दाभावः श्रोत्रेण गृह्यते ततः कारणाभावादेषा प्रतीतिर्न स्यादिति। नन्वस्त्वनुमानादियं प्रतीतिरित्याह। अनुमानात् इति। नास्तीदानीं शब्दः अनुपलभ्यमानत्वा-

प्रकाशः।

पलब्धौ सत्यामेव सन्निकर्ष इत्यत्राह। न चेति। अत्रोपलब्धेनेत्यत्रेन्द्रियसन्निकर्षे भूतलोपलम्भस्तस्मिन् सतीन्द्रियसन्निकर्ष इति इतरेतराश्रयत्वम्। उपलभ्यमानेनेत्यत्र यद्युपलब्धिसम्बन्धिनेत्यर्थः, तदा पूर्ववदितरेतराश्रयत्वम्।

यदि तु सन्निहितोपलम्भकारणेनेत्यभिमतं, तदैकसामग्रीप्रसूतत्वेनाव्यभिचारेऽपि भावप्रतीत्यङ्गत्वमवर्जनीयसन्निधेरप्यन्यथासिद्धत्वादित्याह—

तस्मादिति। न च शब्दध्वंसग्रहेऽपि शब्दनिरूपणार्थमाधारग्रहस्योपयोग इत्याह। प्रकृते त्विति। तस्य = शब्दस्य। संयोगवदिति व्यतिरेकदृष्टान्तः। तदभावस्येति। शब्दध्वंसस्य प्रतियोगिदेशाकारो विशेषणत्वादित्यर्थः। न चेदेवमिति। यदि योग्यप्रतियोगिकत्वमात्रं नाभावयोग्यतावच्छेदकमित्यर्थः। शब्दस्यैवेति। शब्दं पक्षीकृत्य यदि ध्वंसवत्त्वं साध्यं, तदा शब्द-

प्रकाशिका।

तथापि निरुक्तानुपलब्धौ शब्दाभाव एव प्रत्यक्षोऽपि न स्यादित्याशङ्कामात्रनिराकारणयेदम्। तदैकेति। यद्यप्येवं समसमयत्वेन पूर्ववर्त्तित्वाभावादनङ्गत्वमित्यन्यथासिद्ध्युपवर्णनं व्यर्थम्। तथापि दैवाद् पूर्ववर्त्तित्वेऽप्यनङ्गत्वमिति विभावयितुं तत्कृतम्। तदपि संयोगरूपप्रतियोगिसमवायिनिरू-

मकरन्दः।

तदैकेति। यद्यप्येवं समसमयत्वात् पूर्ववर्त्तित्वाभावेनानङ्गत्वमित्यन्यथासिद्ध्युपदर्शनमयुक्तं, तथापि यत्रापि पूर्ववर्त्तित्वं तत्रापि तदनङ्गत्वमिति दर्शयितुमन्यथासिद्धत्वादित्युक्तम्। एतदपि संयोगरूपप्रतियोगिसमवायितया भूतलस्य न निरूपकत्वमित्येवं परं, अधिकरणनिरूपकत्वस्याग्रेऽभ्युपगमादिति

टिप्पणी

अन्यथासिद्धत्वादिति। यद्यप्युपलब्धेः समानकालत्वेन पूर्वत्वाभावादेवानङ्गत्वम्, तथापि

साधने अभावस्य नियतकालत्वासिद्धेः । आकाशस्य पक्षत्वे तद्वत्तयाऽनुपलभ्यमानत्वस्य हेतोरनैकान्तिकत्वात् । शब्दसद्भावकालेऽपि तस्य सत्त्वात् । एवं कालपक्षेऽपि दोषात् । अहमिदानीं निःशब्दश्रोत्रवान्, शब्दोपलब्धिरहितत्वात्, बधिरवदिति चेन्न । दृष्टान्तस्य साध्यविकलत्वाद्, व्याहतत्वाच्च । बधिरश्च श्रोत्रवांश्चेति व्याहतम् । तस्यापि च श्रवसो निःशब्दत्वे प्रमाणं नास्ति ।

---

बोधनी ।

दित्यनुमाने तावदाश्रयासिद्धो हेतुः, शब्दस्याश्रयत्वानुपपत्तेरिति । तर्हि सन्तमेव शब्दं पक्षयित्वा तस्य कृतकत्वेनानित्यत्वं साधयाम इत्यत्राह—**अनित्यत्व इति** । तत्र हि शब्दः कदाचित् प्रध्वंसिष्यत इत्येतावदेव सिध्येत् न त्विदानीं नास्तीति । तर्हीदानीं निःशब्दमाकाशं तद्वत्तयाऽनुपलभ्यमानत्वाद्यथा घटवत्तयाऽनुपलभ्यमानं भूतलं विघटमित्यनुमानं भविष्यतीत्यत्राह—**आकाशस्य इति** । शब्दसम्भवकालेऽप्याकाशस्यातीन्द्रियत्वेन तद्वत्तयाऽनुपलम्भात् । यद्वा, आद्यादिशब्दानां सतामेवानुपलम्भादिति भावः । कालेऽपि पक्षे पूर्वस्य हेतोरनैकान्तिकत्वमित्याह । **एवम् इति** । अनुमानान्तरमाशङ्क्य निराकरोति । **अहमिदानीम् इति** । व्याहतिं तावद्विभजते—**बधिरः इति** । साध्यवैकल्यं विभजते—**तस्यापि इति** ।

ननु यदि बधिरेणानुपलभ्यमानः शब्दस्तच्छ्रोत्रप्रदेशे भवेत् ततोऽयं व्यर्थः स्यात् । न च व्यर्थस्योत्पत्तिः संभवति, भोक्तॄणामुपभोगायैव तत्तददृष्टवशात्सर्वस्योत्पत्तेः । तस्मान्नास्ति तत्र शब्द

प्रकाशः ।

सत्त्वकाले उपलभ्यमानत्वं हेतुः स्वरूपासिद्धः, तदसत्त्वकाले तु हेतोः पक्षे वृत्तावपि साध्यस्य ध्वंसवत्त्वस्य तत्रावृत्तेर्बाधितविषयत्वेनापक्षधर्मत्वादित्यर्थः ।

ननु ध्वंसप्रतियोगित्वे साध्ये न बाध इत्यत आह । **अनित्यत्वेति** । यदा कदाचिद् ध्वंससिद्ध्याऽर्थान्तरत्वादित्यर्थः । **कालपक्षेऽपीति** । तद्देशेऽन्यत्र वा शब्दसत्त्वकालेऽपि तद्वत्तया कालस्यानुपलभ्यमानत्वादित्यर्थः । **शब्दोपलब्धीति** । पूर्वोपलब्धत्वेन शब्दो विशेषणीयः, तेन ध्वंसः सिद्ध्यति । पश्चादुक्तमपि सन्निधानात् पूर्वं स्फुटयति । **बधिरश्चेति** । शब्दोपलम्भकादृष्टविशिष्टकर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं बधिरस्य नास्तीत्यर्थः । ननु चादृष्टविशेषः शब्दोपलब्धौ सहकारी, न तद्घटितं श्रोत्रमित्यतो दृष्टान्तस्य साध्यवैकल्यं विवृणोति । **तस्यापीति** । श्रोत्रस्यादृष्टघटितत्वसंशयेऽपि न साध्यसिद्धिरिति भावः ।

ननु बधिरश्रोत्रे शब्दोत्पत्तौ स उपभुज्येत, उपभोगाभावाच्छब्दो नास्तीत्याह—

प्रकाशिका ।

पकतया भूतलस्य न निरूपकत्वमित्येवं परमधिकरणनिरूप्यत्वस्याप्रेऽभ्युपगमादित्यवधेयम् । **अपक्षधर्मत्वादिति** । व्यतिरेकनिश्चयेन संशयघटितपक्षताविरहादिति भावः । **सन्निधानादिति** । यद्यप्येतादृशसन्निधानं प्रथमाभिधानप्रयोजकं न क्वापि दृष्टं तथापि मूलकृतो दूषणानुपक्रमो हृदिस्थः । अत एव ननु चादृष्टविशेषः शब्दोपलब्धावित्यादिना द्वितीयपक्षारुच्या प्रथमकल्प इत्युक्ताम् । प्रथमकल्पारुचिर्हि द्वितीयकल्पोत्थानबीजम् तत्र तत्र दृष्टमित्यभिप्रायेणेदम् । ननु मानाभावेऽपि सन्देहोऽस्त्वित्यत आह । **संशयेऽपीति** । उपनीतभानमादाय सत्यन्तं वीणादौ वर्तत एवेति कथ-

टिप्पणी ।

कुत्रचित्पूर्वत्वसम्भवेऽपि नाङ्गत्वमन्यथासिद्धेरिति विभावयितुमन्यथासिद्धोपन्यासः । **अपक्षधर्मत्वादित्यर्थ इति** । साध्यव्यतिरेकनिश्चयसत्त्वेन संशयरूपपक्षताविरहेणेति शेषः । कालस्येन्द्रियवेद्यत्वे त्वाह । **अन्यत्रेति** । **पश्चादुक्तमपि सन्निधानादिति** । साध्यविक-

अनुपभोग्यस्य उत्पादवैयर्थ्यं प्रमाणमितिचेन्न । आद्यादिशब्दवदुपपत्तेः । तेषां शब्दान्तरारम्भं प्रत्युपयोगोऽन्त्यस्य न तथेति चेन्न । अन्त्यत्वासिद्धेः । सर्वेषां चोत्पादवतां प्रयोजनतदभावयोरस्मादृशैरनाकलनात् । सुषुप्त्यवस्थायां श्वासप्रश्वासप्रयोजनवच्च तदुपपत्तेः । आरम्भे हि सति प्रयोजनमवश्यमिति व्याप्तेः । नत्वापाततः प्रयोजनानुपलम्भमात्रेणारम्भनिवृत्तिः । तथा सति कर्णशष्कुल्यवच्छेदोत्पाद एव नभसस्तं प्रति निवर्त्तेत । वधिरस्य तेनानुपयोगात् । विवादकाले वधिरकर्णः शब्दवान्, योग्यदेशस्थानावृतकर्णशष्कुलीसुषिरत्वात् तदितरकर्णशष्कुलीसुषिरवदिति ।

निःशब्दाः पणवर्वीणावेणवः तदेकज्ञानसंसर्गयोग्यत्वे सति तदनुपलम्भेऽप्युपल-

बोधनी ।

इत्याह-अनुपभोग्यस्य इति । न इति । अनुपभोग्यानामेवाद्यादिशब्दानामुत्पाददर्शनान्नानुपभोग्यत्वस्यानुत्पादेन व्याप्तिरिति । नन्वाद्यादिशब्दानामनुपभोग्यानामपि न वैयर्थ्यं शब्दान्तरारम्भोपयोगात्, अन्त्यस्य तूपयोगान्तराभावादानर्थक्यमेव स्यादित्याह तेषाम्-इति । न इति । वधिरश्रवणसमवेतस्यापि शब्दस्यान्त्यत्वासिद्धेः शब्दान्तरारम्भेणैवोपयोगः सिद्ध्यतीति । किं चास्मदादिभिरनुपलम्भात् प्रयोजनस्याभावो न निश्चेतुं शक्योऽयोग्यत्वेनाप्युपपत्तेरित्याह—सर्वेषाम् इति । यथा हि सुषुप्तावस्थायामस्मदादिभिरनाकलितप्रयोजनयोरेव श्वासप्रश्वासयोरुत्पादस्तथा वधिरकर्णगतस्यापि शब्दस्य भविष्यतीति । उक्तमेवोपपादयति-आरम्भे हि इति । यदि तु प्रयोजनानुपलम्भमात्रेणाऽऽरम्भो निवर्तेत तदा वधिरस्य कर्णशष्कुल्या नभसोऽवच्छेदोत्पाद एव न स्यात् वधिरस्य तेनावच्छेदेनानुपयोगात् इत्याह-तथा सति इति । तदेवं वधिरकर्णस्य निःशब्दत्वे प्रमाणं नास्तीत्युक्तं, सशब्दत्व एव प्रमाणमस्तीत्याह-विवाद इति । यदा शब्दसंतानः प्रतीयते योग्ये च देशेऽनावृतकर्णविवरो वधिरस्तिष्ठति, तदा तत्कर्णो न शब्दवानिति परेणोच्यते तस्मिन् विवादकाल इति । तदेवम् 'अहमिदानीं निःशब्दश्रोत्रवान्' इति प्रयोगो दूषितः ।

अथैकदेशी प्रयोगान्तरमाह-निःशब्दाः इति । सशब्दानामपि वीणादीनामुपलभ्यमानत्वाद् व्यभिचारनिवृत्त्यर्थमुक्तं-तदनुपलम्भेऽपि इति । शब्दानुपलम्भेऽपीत्यर्थः । तथापि धर्माद्यनुप-

प्रकाशः ।

अनुपभोग्यस्येति । आद्यादिशब्दानामनुपभोग्यानामनुपभोग्यत्वमनैकान्तिकमित्याह आद्यादीति । उपभोग्यशब्दान्तरारम्भकत्वेन परम्परयोपभोग्यत्वं तेषाम् । प्रकृतस्य तु शब्दान्तराजनकतया न तथात्वमित्याह तेषामिति । प्रकृतस्याप्युत्पादकत्वेनान्त्यत्वासिद्ध्याऽनुपभोग्यत्वासिद्धिरित्याह अन्त्यत्वेति । प्रत्युत वधिरश्रोत्रस्य शब्दसद्भाव एव मानमस्तीत्याह विवादेति । यद्वा तद्देशवासिभिः श्रोत्रवद्भिरुपलभ्यते शब्दस्तत्रैवेत्यर्थः । धर्म्यन्तरं पक्षीकृत्य शब्दध्वंसानुमानमाह निःशब्दा इति । एकज्ञानसंसर्गयोग्यत्वमात्रं घटादौ व्यभिचारीति नियमेन

मकाशिका ।

प्रसिद्धिरित्यत आह एकज्ञानेति । घटादाविति । तादृशगन्धानुपलम्भेऽप्युपलभ्यमानस्य घटस्य

मकरन्दः ।

ध्येयम् । बाधितेति । प्राचीनमतेनेदम् । घटादाविति । तादृशगन्धाद्यनुपलम्भेऽप्युपलभ्यमानस्य

टिप्पणी ।

लत्वव्याहतत्वयोरित्यादिः । अनुपभोग्यत्वमनैकान्तिकमिति । अनुत्पत्तेरिति शेषः । एकज्ञानसंसर्गयोग्यत्वेति । एकज्ञानसंसर्गयोग्यत्वस्योपनीतभानमादाय वीणायामपि सत्त्वान्नासिद्धिरित्यत आह-एकेति । घटादौ व्यभिचारीति । गन्धं विनाप्युपलभ्यमान उपनीतभानात्मकगन्धज्ञानविषयत्वयोग्ये गन्धाभावाभाववति घटादावित्यर्थः । नियमेन,तथात्वं वाच्यमिति । निय-

भ्यमानत्वात् । यद् यदेकज्ञानसंसर्गयोग्यस्य अनुपलम्भेऽप्युपलभ्यते तत् तदभाववत् यथा अघटं भूतलमितिचेन्न । एकज्ञानसंसर्गयोग्यत्वाभावात्, शब्दस्य श्रोत्रत्वाद्वीणादीनां चाक्षुषत्वात् । अभिमानमात्रादितिचेन्न, तथापि शब्दप्रध्वंसस्यातद्देशत्वाद्, अत्यन्ताभावस्य च कालाऽनियमात् ।

स्यादेतत् । शब्दवदाकाशोपाधयो हि भेर्यादयः । तेन तेषु विधीयमानः शब्द

बोधनी ।

लम्भेऽप्युपलभ्यमानेनात्मना व्यभिचारो मा भूदित्युक्तं-**तदेकज्ञानसंसर्गयोग्यत्वे सति** इति । तेन तद्विशेषणेन सह यदेकं ज्ञानं विशिष्टज्ञानमिति यावत्, संसर्गस्तद्विषयत्वं तद्योग्यत्वे सतीति विशेषणासिद्धो हेतुरित्याह-**न** इति । अयोग्यत्वमेवाह-**शब्दस्य** इति । ननु सुरभि चन्दनमित्यादिषु भिन्नेन्द्रियग्राह्ययोरपि विशिष्टज्ञानविषयत्वं वक्ष्यति । सत्यं, तत्र गुणगुणिभावं वदन्नदो वक्ष्यतीति । ननु परमार्थतस्तदभावेऽपि मधुरस्वरा वीणेति लौकिकानामभिमानस्तावद् दृश्यते, तन्मात्रादेव सिद्धं तदेकज्ञानयोग्यत्वं हेतोर्विशेषणं भविष्यतीत्याह-**अभिमान** इति । अस्तु तथा नाम विशेषणं, तथापि शब्दस्य वीणाद्याश्रयत्वेन तत्प्रध्वंसस्याप्येतद्देशत्वान्निःशब्दा वीणादय इति प्रतिज्ञा बाधितविषया स्यादित्याशयेनाह-**तथापि** इति । ननु वीणादिषु शब्दस्यात्यन्ताभावः साध्यते, न तस्य प्रध्वंसवत् प्रतियोगिदेशत्वम् । यदि तु स देशः प्रतियोगिनोऽपि कदाचित् स्यात् ततस्तत्रात्यन्ताभाव इति व्याहन्येतेत्यत्राह—**अत्यन्ताभावस्य** इति । तदेदानीं शब्दो नास्तीति नियतकालतया शब्दाभावप्रतीतिर्न स्यात्, अत्यन्ताभावस्य सर्वदा सत्त्वात्सिद्धसाधनत्वं च तदा स्यादिति भावः ।

**स्यादेतत्** इति । भेर्याद्यवच्छिन्ने ह्याकाशे शब्दः समवैति विभुकार्याणामसमवायिकारण-

प्रकाशः ।

तथात्वं वाच्यं, तथा चासिद्धिरित्याह **एकज्ञानेति** । शब्दे भासमाने उपनीतो वीणादिरपि भासते इति तत्सिद्धिरित्याह-**अभिमानेति** । निःशब्दा इति, शब्दध्वंसवन्त इति साध्यं शब्दसमवायित्वरहिता इति वा ? नाद्यो, बाधादित्याह **तथापीति** । अतद्देशत्वाद्वीणाद्यदेशत्वादित्यर्थः । ध्वंसस्य प्रतियोगिसमानदेशत्वनियमादत्रापि नियमेनैकज्ञानसंसर्गयोग्यत्वमसिद्धमिति भावः । अन्त्ये नियतकालप्रतीत्यनुपपत्तिरित्याह **अत्यन्तेति** । सिद्धसाधनञ्च द्रष्टव्यम् । एवमन्योन्याभावेऽपि साध्ये इति भावः ।

उपाधौ विधिनिषेधावुपाधिमति भवत इति वीणादिदेशत्वमेव शब्दध्वंसस्येति शङ्कते-

**स्यादेतदिति** । उपाधिः = अवच्छेदकः । यद्यपि शरीरे गन्धविधौ, विभुत्वनिषेधे चात्मनि

प्रकाशिका ।

तदा गन्धसत्त्वेन व्यभिचार इत्यर्थः । **शब्दे भासमान इति** । या वीणा व्यक्तिरुपनीता तत्प्रभवशब्दे भासमाने भासत एव, सैव पक्षयितव्येति नासिद्धिरिति मूलतात्पर्यमिति भावः । **अत्रापीति** । व्यक्तिविशेषाभिप्रायेण नियमे घटादावेव व्यभिचार इति कारणतावच्छेदकावच्छिन्ने नियमो वाच्यः तथा चासिद्धिरितिभावः । **एवमन्योन्याभावेऽपीति** । शब्दसमवायिभिन्ना इत्यत्र साध्य इत्यर्थः । **उपाधाविति** । उपाधौ विधिनिषेधसत्त्वे एव परमुपाधिमति विधिनिषेधावित्युपाधिविशिष्टे साध्या-

मकरन्दः ।

घटस्य गन्धादिमत्त्वाद्व्यभिचार इत्यर्थः । **एवमिति** । शब्दसमवायिभिन्ना, इत्यत्र साध्ये इत्यर्थः । **उपाधिमतीति** । तथा च विशिष्टस्य तदाश्रयतदा विशेषणस्यापि तथात्वमिति भावः । तदेवाह **वीणादीति** । वीणादिदेशत्वं भवत्येवेत्यर्थः, तथा च न बाध इति भावः । यद्यप्येवमुपाधिमात्र-

टिप्पणी ।

मेनैकज्ञानसंसर्गयोग्यत्वम्, तज्ज्ञानत्वव्यापकविषयतावच्छेदकधर्मवत्त्वम्, तत्सत्त्वे तदुपलम्भसामग्री-

आकाश एव विहितो भवति । प्रतिषिध्यमानश्च तत्रैव प्रतिषिद्धो भवति । शरीरे सुखादिवदिति चेन्न । तत्र सोपाधावात्मनि प्रत्यक्षसिद्धे सुखादिनिषेधस्यापि प्रत्यक्षसिद्धत्वात् । न चैवमिहापि, तदुपहितस्य नभसोऽप्रत्यक्षत्वात् । उपाधयस्तावत् प्रत्यक्षा इति चेन्न । तैरभावानिरूपणात् । निरूपणे वा प्रत्यक्षेणापि ग्रहणप्रसङ्गात् ।

बोधनी ।

देशानुरोधित्वात्, तेन शब्दवत् आकाशदेशस्योपाधिषु विधीयमानो निषिध्यमानोऽपि शब्दस्तदुपहित आकाश एव विहितो निषिद्धोऽपि भवति । यथा शरीरावयवे विधीयमाना निषिध्यमाना वा सुखादयस्तदुपहित आत्मनि तथात्वं लभन्ते, तस्माद् भेर्यादिषु निरूप्यमाणः शब्दध्वंस आकाश एव निरूपितो भवतीति । न इति । न हि तत्र शरीरे निषिध्यमानानां सुखादीनामर्थादात्मनि निषेधः सिध्यति उपहितस्याऽऽत्मनः प्रत्यक्षसिद्धत्वेन तदाश्रयस्य सुखाद्यभावस्य प्रत्यक्षत्वोपपत्तेः, न चेयं विधा शब्दप्रध्वंसे संभवतीति । उपहितस्य नभसोऽप्रत्यक्षत्वेन तदाश्रयस्य शब्दप्रध्वंसस्याप्यप्रत्यक्षत्वादिति । ननूपहितस्याप्रत्यक्षत्वेऽप्युपाधयस्तावद् भेर्यादयः प्रत्यक्षाः ततस्तैरेव शब्दप्रध्वंसो निरूप्यत इत्याशयेनाह—उपाधयः इति । न इति । आश्रयनिरूप्यत्वादभावस्य तेषां चानाश्रयत्वादिति भावः । अनाश्रयैरपि तैर्निरूपणे वा को दोषस्तत्राह—निरूपणे वा इति ।

प्रकाशः ।

तौ न भवत इति नायं नियमः, तथापि यदवच्छेदेन यद् वर्त्तते तत्रावच्छेदके विधिनिषेधधीरवच्छिन्नविधिनिषेधविषयेति नियम इति भावः । उपनीतशरीरावच्छेदेनाऽऽत्मनि योग्ये सुखाद्यभावग्रहेऽपि नाकाशे शब्दाभावग्रहः, उपाधिमतोऽपि तस्यायोग्यत्वादिति परिहरति तत्रेति । तैरिति । वीणादयः प्रत्यक्षा अपि न शब्दसमवायिन इति न तैः शब्दध्वंसो निरूप्यते इत्यर्थः । निरूपणे वेति । तथा च विवादाभावो द्वयाधारत्वद्वयप्रतियोगित्वयोः सम्भवादिति भावः ।

प्रकाशिका ।

धिकरणत्वप्रतीत्या उपाधेर्वीणादेरपि तदधिकरणत्वमिति न ध्वंसवत्त्वे साध्ये बाध इति भावः । नचैवं प्रत्यक्षमुपेत्य किमित्यनुमानधारणम् ? अधिकरणयोग्यतया च शब्दध्वंसस्याप्रत्यक्षत्वं पूर्वं स्वयमेवोक्तं तद्विरोधश्चेति वाच्यम् । वीणादौ शब्दध्वंसो वर्त्तत एव, गृह्यते चेति ध्वंसः प्रतियोगिसमवायिप्रत्यक्षेणैवेति तदाशयात् । एवञ्च मूले आकाश एवेत्येवकारो भिन्नक्रमः, तेष्वेवेत्येवं योजनीयः, मूले च 'विधीयमान' इति दृष्टान्तार्थम् । उक्तक्रमेण मूलव्याख्याने तत्रावच्छेदक इत्यादिमूलासङ्गतिं परिहरति । तत्रावच्छेदके इति । अवच्छेदके विधिनिषेधसत्त्व एव विशिष्टे विधिनिषेधधीरित्यर्थः । उपाधिमतोऽपीति । उपाधौ विधिनिषेधप्रत्यक्षे सत्येवोपहित उपाधिमति विधिनिषेधप्रत्यक्षमित्येतावन्मात्रं स्वीक्रियते, प्रतीत्यनुरोधात्, न चैतावता विशिष्टे प्रत्यक्षानुरोधेन विशेषणादौ शब्दध्वंससत्त्वं विशेष्यायोग्यतया विशिष्टप्रत्यक्षाभावाद् दृष्टान्तस्थले तत्तथास्तीति भावः । वीणादय इति । उक्तक्रमेण तेषां शब्दध्वंसाधिकरणत्वे मानाभावात्

मकरन्दः ।

देशत्वमेव साधयितुमर्हमित्याकाश एव विहितो भवतीति मूलमसङ्गतं, तथाप्यवच्छेदकतया तस्या तदधिकरणत्वं तच्चावच्छेद्यसापेक्षमिति विशिष्टदेशत्वसाधनमिति भावः । उपाधिमतोऽपीति ।

टिप्पणी ।

नियतोपलम्भविषयतायाः प्रतियोगिव्यधिकरणाभावाभाववत्त्वं वा । अस्ति चेदं जातिव्यक्त्योः, व्यक्तिं विना जातिभानानुपपत्तेरिति । नियमो हि व्यक्त्यपेक्षया जात्यपेक्षया वा,आद्ये यद्घटव्यक्तेर्नियमेन गन्ध उपलभ्यमाने उपलब्धिस्तत्र गन्धं विनापि चक्षुषोपलभ्यमाने व्यभिचारः । अन्त्येऽसिद्धिस्तदवस्थैवेत्याह अत्रापीति । शङ्कते इति । उपाधौ विधिनिषेधसत्त्व एवोपाधिमति तानित्युपहिते शब्दध्वंससत्त्वे उपाधावपि तत्सत्त्वमिति न वीणादौ शब्दध्वंससत्त्वरूपं साध्यं बाधितमिति भावः । विधिनिषेधधीरिति । तथा च वीणायां शब्दनिषेधानुमितेर्वीणावच्छिन्नविषय इति न बाध इति भावः ।

न चैवं सति पारमार्थिकाधिकरणनिरूपणीयत्वमभावस्य । न च तेऽपि प्रत्यक्षसिद्धाः । सर्वत्र शब्दकारणव्यवधानेऽप्युपलब्धस्य शब्दस्य नास्तितात्प्रतीतेः । आनुमानिकैस्तैस्तथाव्यवहार इति चेन्न । हेतोस्तद्वत्तयाऽनुपलभ्यमानत्वस्यानैकान्तिकत्वात् । अभावप्रतीतिकाले सन्दिग्धाश्रयत्वाच्च । उपलभ्यमानविशेष्यत्वपक्षे चाऽसिद्धेः । इन्द्रियव्यवधानाच्छब्दलिङ्गस्य चानुपलम्भात् ।

बोधनी ।

निरूपकाणां प्रत्यक्षत्वात्तन्निरूप्यस्याभावस्यापि प्रत्यक्षत्वप्रसङ्ग इति । किं च तैरेव निरूपणेऽभ्युपगतहानिरपि स्यादित्याह—**न चैवम्** इति । तेषामभावानधिकरणत्वादिति । किं चाप्रत्यक्षेष्वप्युपाधिषु शब्दाभावस्योपलम्भात्तन्निरूप्यत्वमित्याह—**न च तेऽपि** इति । शब्दस्य हि निमित्तकारणानां मेर्याद्युपाधीनां कुड्यादिव्यवधानेऽपि पूर्वोपलब्धस्य तस्याभावः प्रतीयत इति । ननु शब्दलिङ्गानुमितैर्वीणादिभिः पक्षीकृतैः शब्दाभावमनुमाय निःशब्दास्त इति व्यवहारः स्यात् इत्याह—**आनुमानिकैः** इति । **न** इति । सशब्दा अपि हि ते तद्वत्तया नोपलभ्यन्ते तेषामश्रौत्रत्वादिति । **संदिग्धाश्रयत्वात्** इति । तदानीं शब्दलिङ्गाभावात् नाशसंभवाच्चेति । तदुपलभ्यमाना मेर्यादय इति पक्षं विशेषयिष्याम इत्यत्राह—**उपलभ्यमान** इति । तदा हि विशेषणासिद्धः पक्षः स्यादिति । कुत इत्यत आह—**इन्द्रिय** इति ।

प्रकाशः ।

दूषणान्तरमाह **न चैवमिति** । मुख्यप्रतियोग्याधारविषय एवाभावनिरूपकत्वादित्यर्थः । यदि च मुख्यामुख्यसाधारणमाधारमात्रं तन्निरूपकं तत्राह । **न चेति** । अप्रत्यक्षे वीणादौ शब्दाभावप्रतीत्यनुदयापत्तेरित्यर्थः । व्यवहिते वीणादौ शब्दविशेषानुमिते शब्दध्वंसव्यवहार आनुमानिकः स्यादित्याह **आनुमानिकैरिति** । वीणाया अश्रौत्रत्वेन सशब्दवीणा न श्रोत्रेणोपलभ्यते इति व्यभिचार इत्याह **हेतोरिति** । **सन्दिग्धेति** । यत्र शब्दविशेषेणानुमिता वीणा न प्रत्यक्षा, तत्र वीणायाः सत्त्वासत्त्वसन्देहादित्यर्थः । यद्यपि पक्षस्य लिङ्गविशिष्टज्ञानादेवानुमितिसम्भवे सन्देहो नानुमितिविरोधी, तथापि प्रथमं वीणाध्वंससन्देहाच्छब्दध्वंसस्तत्र वर्तते इति धीर्न स्यात् । यद्वा, वीणायनन्नुमानेऽपि पक्षनिश्चयादनुमानाभावेऽपि शब्दस्यानुपलम्भादभावनिश्चयादित्येवम्परोऽयं ग्रन्थः । शब्दवत्तयाऽनुपलभ्यमानत्वे सत्युपलभ्यमानत्वादिति हेतुकरणाग्नोक्तदोष इत्याह **उपलभ्यमानेति** । **असिद्धेः** । उपलभ्यमानत्वस्येति शेषः । तत्र हेतुमाह **इन्द्रियेति** । शब्दरूपस्य लिङ्गस्येत्यर्थः; आप्तोपदेशस्य चाभावादिति भावः । ननु,शब्द एतत्कालप्रध्वंसप्रतियोगी, एतत्पूर्वकालत्वे सति शब्देतरयावत्तदुपलम्भकसत्त्वेऽप्यनुपलभ्यमानत्वादित्यस्तु । मैवम् । एवं

प्रकाशिका ।

प्रतियोगिसमवायिकारणत्वरूपस्य च मानस्य तत्राभावादिति भावः । **अभावनिरूपकत्वादिति** । तत्त्वेन त्वयाभ्युपगमादित्यर्थः । **आप्तोपदेशस्य चेति** । यद्यपि शब्दो लिङ्गश्चेत्येवं पूर्वग्रन्थव्याख्याने सति नैतदाशयपूरणापेक्षा । तथापि लिङ्गं शब्द एव तत्र तत्र वाच्य इति तथैव विग्रहप्रदर्शनं कृतं तदनुसारेण च पूरणमिदम् । **एतत्काल** इति । एतच्चैतत्कालीनध्वंसे विशेषणीयम् । प्रागभावकालमादाय व्यभिचार इति हेतौ सत्यन्तम् । अप्रसिद्धिवारणाय **शब्देतरेति** । स्वस्वव्याप्येतरेत्यर्थः, तेन दृष्टान्तसङ्गतिः । किञ्चिदुपलम्भकासत्त्वकालमादाय व्यभिचार इति **यावदिति** ।

मकरन्दः ।

तथा च त्वन्मते नोपाधिमति विधिनिषेधौ सम्भवत इति भावः । **शब्दरूपस्येति** । यद्यपि शब्दश्च लिङ्गश्च शब्दलिङ्गं, तस्येत्यर्थे उभयोरपि लाभे आप्तोपदेशस्येत्यग्रिमफक्किका विफला, तथापि लिङ्गं शब्द एव वाच्यमिति तथैव व्याख्यात इत्याहुः । **एतत्काल इति** । एतत्कालीनध्वंसप्रतियोगीत्यर्थः । प्रागभावदशायां व्यभिचारवारणाय **सत्यन्तम्** । अप्रसिद्धिवारणाय **शब्देतरेति, स्व**-

अपि च नष्टाश्रयाणां द्रव्यगुणकर्मणां नाशोपलम्भः कथम् ? न कथञ्चिदिति चेदाश्रयनाशात् कार्यनाश इति कुत एतत् ? अनुमानतस्तथोपलम्भादिति चेन्न। तुल्यन्यायेनोक्तोत्तरत्वात्। तन्तुषु नष्टेष्वपि यदि पटो न नश्येत्तद्वदेवोपलभ्येतेति चेत्। एतस्य तर्कस्यानुग्राह्यमभिधीयताम्। यदेवोपलभ्यते न तत् कार्यपरम्परावत्, योग्यस्य तथानुपलभ्यमानत्वे सति उपलभ्यमानत्वादिति चेन्न। तन्त्ववयवानां पटानाधारत्वे साध्ये सिद्धसाधनात्। पटप्रध्वंसवत्त्वे साध्ये बाधितत्वात्। तस्य स्वप्रतियोगिकारणमात्रदेशत्वात्। ये पटध्वंसवन्तस्तन्तवस्तदभाववन्त एते अंशव इति साध्यमिति चेन्न। तन्तुनाशोत्तरकालं पटनाशात् तद्वत्तानुपपत्तेः। योग्यतामा-

बोधनी।

अधिकरणनिरूप्यत्वं प्रध्वंसस्य वदतां दूषणान्तरमाह—**अपि च** इति। प्रतियोग्याश्रया एव हि नाशस्याधिकरणं, ते च पूर्वमेव नष्टत्वात्तदानीं नोपलभ्यन्त इति। ननु मा भूत्तन्नाशोपलम्भ इत्याह—**न कथं चित्** इति। तर्हि किंनिबन्धनोऽयं व्यवहारः स्यादित्याह—**आश्रय** इति। नन्वनुमानतः सिद्धैराश्रयैरानुमानिको नाशोपलम्भो भविष्यतीत्याह—**अनुमानतः** इति। **न** इति। व्यवहितवीणाद्यनुमानेनानुमानिकस्तत्र शब्दाभावव्यवहार इत्यनेन तुल्यन्यायतयाश्रयासिद्धत्वाद्युपलभ्यमानत्वेन विशेषणे विशेषणासिद्धेश्चेति। यद्वा नष्टाश्रयाणां नाशस्य प्रत्यक्षेणानुपलम्भेऽप्याश्रयनाशादनुमानेनोपलम्भो भविष्यतीति शङ्कार्थः। उत्तरार्थस्त्वाश्रितविनाशवदाश्रयनाशोऽपि न स्वाश्रयानाशे निरूपयितुं शक्यत इति। आश्रयविनाशात्कार्यविनाश इति व्यवहारस्य निबन्धनमाशङ्कते—**तन्तुषु** इति। **तद्वदेव** = विनाशात् पूर्वकालवदिति। **एतस्य** इति। प्रमाणानुग्राहकत्वेन तर्कस्य न केवलस्यास्य व्यवहारमूलत्वमिति प्रमाणमाशङ्कते—**यदेव इति**। नष्टाश्रये पटादौ यदं श्वादिकमुपलभ्यते तत्स्वकार्यं तन्तवस्तत्कार्यं पटस्तत्कार्यं गुणकर्माणीत्येवं या कार्यपरम्परा तया तद्वन्न भवति तद्वत्तयोपलब्धुं योग्यस्य तथानुपलभ्यमानत्वे सति स्वयमुपलभ्यमानत्वादित्यनुमानमनुग्राह्यमत्रेति। **न** इति। किमत्रांशवः पटानाधारा इति साध्यं, किं वा पटप्रध्वंसाधारा इति। पूर्वत्र सिद्धसाधनं तन्त्वाधारत्वात्पटस्य, उत्तरत्र बाधितविषयत्वं पटप्रध्वंसस्य स्वप्रतियोगिसमानदेशत्वेन तन्त्वाश्रयत्वादिति। दूषणद्वयपरिहारमाशङ्कते-**ये इति**। पटप्रध्वंसवत्तन्त्वभाववन्तोंऽशव इति साध्यमिति। **न इति**। नष्टेषु तन्तुषु पटविनाशादसतां च तन्तूनां पटप्रध्वंसवत्त्वानुपपत्तेस्तदभावाश्रयत्वमंशूनां बाधितमिति। तर्हि पटप्रध्वंसाश्रययोग्यानां तन्तूनामभाववन्तोंऽशव इति साध्यमित्यत्राह—**योग्यता** इति। तस्य योग्यतामात्रस्य पटसद्भावकालेऽप्यविशेषात् न ततः प्रध्वंस एकान्ततः सिध्यतीति। ननु गुणक्रियाविशिष्टस्य पटस्याधारास्तन्तवोंऽशुषु न सन्तीति

प्रकाशः।

सति घटाभावस्याप्यनुमेयतायामभावमात्रस्याप्रत्यक्षतापत्तेः। यदि च योग्यानुपलब्धेस्तत्र सत्तयैव हेतुत्वान्नानुमानं, तर्हि प्रकृतेऽपि तुल्यमिति भावः।

**अपि चेति**। यदि प्रतियोग्याश्रयेणैवाभावो निरूप्यते इति शेषः। **तुल्यन्यायेनेति**। स्वरूपकालाकाशपक्षे आश्रयासिद्ध्यनैकान्तिकत्वात्, पटतदवयवादिपक्षत्वे बाधादित्यादिनेत्यर्थः। **तन्तुष्विति**। पटारम्भकतन्तुष्वित्यर्थः। प्रागुक्तदोषभिया पटध्वंसविशिष्टतन्तुध्वंसवत्त्वमंशुषु साध्यमाशङ्क्य प्रकारान्तरेण बाधसिद्धसाधने आह **य इति**। **तद्वत्ता**=तन्तूनां पटध्वंसवत्ता। नन्वे-

प्रकाशिका।

उपलम्भपदमुभयं प्रत्यक्षपरम्। **नन्वेत इति**। न च स्वजन्यपदं व्यर्थमिति वाच्यम्। यत्किञ्चि-

मकरन्दः।

द्व्याप्येतरेत्यर्थः। तथा च दृष्टान्तसौलभ्यम्। उपलम्भपदं प्रत्यक्षपरम्। **नन्वेत इति**।

त्साधने च पटप्रध्वंसासिद्धेः । तस्य नाशानाशयोः समानत्वात् । अनन्यगतिकतया विशिष्टनिषेधे कृते विशेषणानामप्यभावः प्रतीतो भवति । गुणक्रियावत्पटाधारास्तन्तवो न सन्ति स्वावयवेष्विति हि प्रत्यय इति चेत् तथापि गुणकर्मणां पटस्य च प्रध्वंसः किमधिकरणः प्रतीयते इति वक्तव्यम् । अंश्वधिकरण एवेति चेद्, भ्रान्तिस्त-

बोधनी ।

साधिते तन्तुपटविशेषणानां पटगुणादीनां अवस्थानासंभवादभावः सिध्यतीत्याह–**अनन्य** इति । निषेधप्रतीतिरपि हि लौकिकानां विशिष्टविषयेत्याह–**गुणक्रियावत्** इति । एवमपि गुणकर्मणोरभावाधिकरणस्य पटस्य तदभावाधिकरणस्य च तन्तूनां तदानीमभावादधिकरणनिरूप्याभाववादिनो नायं प्रत्यय उपपद्यत इत्याह—**तथापि** इति । अधिकरणमाशङ्कते—**अंशु इति** । तर्हि तस्य पटादिप्रध्वंसस्यांशवधिकरणत्वाभावात्तदधिकरणत्वेन प्रतीतिर्भ्रान्तिरेव स्यादित्याह–**भ्रान्तिस्तर्हि**

प्रकाशः ।

तेंऽशवः पटध्वंससमानकालस्वजन्यतन्तुध्वंसवन्तस्तद्वत्तयाऽनुपलभ्यमानत्वादित्यनुमानं स्यात् । अत्र, यदा कदा चित् समानकालत्वविवक्षायामिदानीं नष्टः पट इति प्रतीत्यनुपपत्तिः । अथेदानीं तथात्वं विवक्षितं, तदा हेतोरसिद्धिरित्येके । यत्र परस्परादिनोपलभ्यते तत्र कथमनुमानमित्यन्ये । ननु यत्र विशिष्टनिषेधे विशेष्यासिद्धौ मानं, तत्रैव तस्य विशेषणमात्रनिषेधपर्यवसायित्वम्, प्रकृते चातथात्वाद् गुणक्रियावत्पटाधारतन्तुनिषेधे गुणकर्मपटानामपि निषेधः स्यादिति

प्रकाशिका ।

त्पटध्वंसेनार्थान्तरवारणाय स्वजन्यपदस्य पटविशेषणत्वात् स्वपदञ्च तन्तुपरम्, अंशुपरमेव वा, जन्यपदस्य प्रयोज्यपरत्वात् । **असिद्धिरित्येक इति** । यद्यपि स्वरूपासिद्धिरसम्भाविनी, तथापि व्याप्यत्वासिद्धिरिह विवक्षिता सा च पटध्वंससमानकालीनत्वस्य गौरवेण व्यापकतानवच्छेदकत्वाद्वा आकाशादौ व्यभिचाराद् वा । न चांशुत्वमपि विशेषणं हेतौ प्रवेश्यमितिनोक्तव्यभिचार इति वाच्यम् । तथाप्यनारब्धपटांशुषु व्यभिचारात । केचित्तु एतत्कालीनप्रकृतपटध्वंसस्य साध्यविशेषणस्याप्रसिद्धेः साध्याप्रसिद्धिरित्यज्ञानरूपव्याप्यत्वासिद्धौ तात्पर्यमित्याहुः। वस्तुतो यथा कथञ्चिज्ज्ञानं कल्पयित्वा यद्युक्ताभावप्रतीतेरानुमानिकत्वं तदा सर्वाभावप्रतीतीनामानुमानिकत्वं स्यादिति दूषणं द्रष्टव्यम् । तच्चाव्यवधानेनैव पूर्वं प्रकाशकृतोक्तम्, 'एवं सतीत्यादिना । **ननु यत्र विशिष्टेति** । नन्विदं प्रकृतानुपयुक्तं पटरूपविशेषणनिषेधसिद्धेरिहोद्देश्यत्वात्, मूलविरुद्धञ्च विशेषणानामप्यभावः प्रतीयत इति मूलदर्शनादिति चेत् । न । गुणक्रिययोः पट एव अत्र विशेष्य इति गुणक्रियाविरहमात्रपर्यवसायितैव निरुक्तप्रतीतेः स्यादित्याशङ्कानिराकरणपरतया प्रकाशोपपत्तेः 'विशेषणाना'मिति मूलस्य तन्तु-

मकरन्दः ।

यद्यपि स्वजन्यत्वपदं व्यर्थं यत्किञ्चित्पटसमानकालतन्तुध्वंसवत्तयाऽर्थान्तरञ्च, तथापि स्वजन्यत्वपदं स्वप्रयोज्यत्वपरं पटविशेषणमेव बोध्यमिति नोक्तदोषः । **हेतोरसिद्धिरिति** । व्यापकेऽपि व्यर्थविशेषणत्वमिति मते व्याप्यत्वासिद्धिरित्येके । आकाशादौ व्यभिचारेण सेत्यन्ये । साध्याप्रसिद्ध्या अज्ञानरूपाऽसिद्धिरित्यपरे । **विशेष्यासिद्धाविति** । विशेषणसिद्धाविति युक्तः पाठः । एवं विशेषणमात्रनिषेधेत्यत्र विशेष्यमात्रनिषेधेति । **गुणक्रियावदिति** । यद्यपि गुणक्रिया पटा-

टिप्पणी ।

**पटध्वंससमानकालीनस्वजन्येति** । स्वजन्यपटध्वंससमानकालीनतन्तुध्वंसवन्त इति साध्यम् । लेखकपरम्पराप्रमादादेवं पाठः । यथाश्रुते स्वजन्येत्यस्य वैयर्थ्यात् विवक्षितं साधनीयाऽऽश्रयनाशजन्यपटध्वंसकालीनतन्तुध्वंसातिरिक्तस्य तन्त्वन्तरजन्यपटध्वंसकालीनतन्तुध्वंसेनार्थान्तरवारणाय सार्थकम् । **असिद्धिरित्येक इति** । व्याप्यत्वासिद्धिः, गौरवेण पटध्वंसकालीनत्वघटितस्य व्यापकतानवच्छेदकत्वादित्यर्थः । आकाशादौ व्यभिचारेण हेतोरसिद्धिरसम्भव इत्ये-

र्हीयम् । तस्यातद्देशत्वात् । आश्रयावच्छेदकतया तेषामपि अदूरविप्रकर्षेण तद्देशत्वम्, एवम्भूतेनापि देशेन तन्निरूपणं, योग्यतायां अव्यभिचारादिति चेत् । न तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणमिति नियमः, प्रकारान्तरेणापि निरूपणात् । तस्माद् यस्य यावती ग्रहणसामग्री तं विहाय तस्यां सत्यां तदभावो यत्र क्वचिन्निरूप्यो देशे काले वा ।

इयांस्तु विशेषः । सा सती चेत्, प्रत्यक्षेण, असत्येव ज्ञाता चेत्, अनुमानादिनेति स्थितिः ।

---

बोधनी ।

इति । शङ्कते- **आश्रय** इति । अयमर्थः । गुणकर्मणोः पटस्य चाश्रयं पटं तन्तूंश्च प्रति परम्परया साक्षाच्चांशवः कारणं, तैरेवारब्धैस्तन्तुभिरारब्धः पट इति । एवं पटाद्यवच्छेदका अंशव इति तेषामप्यदूरविप्रकर्षेण गुणानामप्यभावदेशत्वमस्ति, तस्मादेवंभूतेन व्यवहितेनापि देशेनाभावो निरूपणीयः व्यवहितस्यापीदृशस्याभावनिरूपणे योग्यताव्याप्तेः । न हि संभवति तन्तुप्रध्वंसवन्तोंऽशव इव पटाभावस्तदाश्रयगुणाद्यभावो वा नास्तीति । **न तर्हि** इति । तेन शब्ददेशस्याप्रत्यक्षत्वेऽपि शब्दप्रध्वंसप्रत्यक्षोपपत्तिरिति । किंनिरूप्यस्तर्हीत्याशङ्कामपनुदन्नुपसंहरति—**तस्मात्** इति । यस्य भावस्य या ग्रहणसामग्री तं भावं तदविनाभूतमपि संनिकर्षं विहाय तस्यां सत्यां तस्य भावस्याभावो यत्क्वचिन्निरूप्यः न त्वधिकरण एवेति नियमः भावस्यात्मापि प्रत्यक्षसामग्र्येकदेश इति तं विहाय-इत्युक्तम्-इति ।

यद्यतीन्द्रियाधारेऽप्यभावः प्रत्यक्षः, कस्तर्हि प्रत्यक्षाप्रत्यक्षव्यवस्थाहेतुरित्यत्राह—**इयांस्तु** इति । येयमभावग्रहणसामग्री सा विद्यमाना चेत् प्रत्यक्षेण निरूप्यः इह घटो नास्तीति । अत्र हि प्रतियोगिस्मरणं तदनुपलब्धिरालोकादिसहकृतेन्द्रियव्यापारादयो विद्यन्ते सा तु सामग्र्यसती ज्ञायमाना चेदनुमानेन । प्राक्तनाभावप्रतीतौ नेदानीमिन्द्रियव्यापारादयो विद्यन्ते किं तु प्राक्तना एवानुसंधीयन्त इति । यदि ह्याधारनिरूप्यो न स्यात् तर्ह्याधारप्रतियोगिभ्यां निरूप्योऽभाव इति प्रति-

प्रकाशः ।

शङ्कते **अनन्येति** । अत्रापि बाध इत्यभिप्रेत्य परिहरति **तथापीति** । **तस्येति** । पटध्वंसस्यांशवनाधारत्वादित्यर्थः । **आश्रयेति** । गुणक्रियावत्पटाश्रयतन्त्ववच्छेदकानामंशूनामपि गुणादिदेशत्वमित्यर्थः । **तं विहायेति** । **तं** = प्रतियोगिनम्, तद्व्याप्यञ्चेति द्रष्टव्यम् । शब्दस्य तु नाश्रयग्रहान्तर्भावेण ग्रहणसामग्री, येन तदग्रहे न गृह्येतेति भावः । **यत्रेति** । एतेन निरधिकरणाऽभावधीरिति सत्यं, किन्तु प्रतियोगिसमवायिदेशनिरूप्यतानियमो नास्तीत्युक्तम् ।

नन्वेवं प्राङ्नास्तितायामप्यनुपलम्भानुमानं न स्यादित्यत आह—

**इयांस्त्विति** । प्रत्यक्षसामग्र्याः सतीत्वं = योग्यानुपलम्भसहकृतत्वम् । यत्र तु प्राङ्नास्तितादावाधारेन्द्रियसन्निकर्षाभावात् तदभावस्तत्रासती,ज्ञाता चेदनुमानेन, स्मरणार्हस्याऽस्मरणादिना । आदिग्रहणादाप्तोपदेशेनापीत्यर्थः । **स्थितिः** = व्यवस्थितिः ।

प्रकाशिका ।

विशेषणानां पटादीनामित्यर्थकत्वेन प्रकृते तदविरोधात् । प्रकाशे तु विशेष्यविशेषणपदयोर्व्यत्यासेनान्वय इति साम्प्रदायिकाः । मूलेऽनन्यगतिकत्वकीर्तनं तन्त्वाधारांशुपक्षीकरणाभिप्रायेण द्रष्टव्यम् । पटध्वंसस्येत्युपलक्षणम् । गुणादिध्वंसस्येत्यपि द्रष्टव्यम् । **तन्त्ववच्छेदकानामिति** । तन्त्वाश्रयाणा-

मकरन्दः ।

धारेति वक्तुमर्हति, तथापि पटनिष्ठयोरपि गुणक्रिययोः परम्परया तन्तुविशेषणत्वमित्यभिप्रायेण तथोक्तम् । **पटध्वंसस्येत्युपलक्षणं**, गुणादिध्वंसस्येत्यपि द्रष्टव्यम् । **तन्त्ववच्छेदकानामिति** । तन्त्वाश्रयाणामित्यर्थः । तथा च परम्परासम्बन्धेन तेषां गुणादिदेशत्वात्तद्ध्वंसदेशत्वमपीति

एतेन "सद्भ्यामभावो निरूप्यते"—इत्यादिशास्त्रविरोधः परिहृतो वेदितव्यः। उभयनिरूपणीयप्रतियोगिविषयत्वादनुमानविषयत्वाच्च। अन्यथा, आश्रयासिद्धिप्रसङ्गात्। तत्रापि न ग्रहणे नियमो, ज्ञानमात्रन्तु विवक्षितम्, तावन्मात्रस्यैव तदुपयोगात्, क्वचिद् ग्रहणस्य सामग्रीसम्पातायातत्वाद्। यदि चाधिकरणग्रहे शास्त्रस्य निर्भरः स्याद्, "वह्नेर्दाह्यं विनाश्यानुविनाशवत्तद्विनाश" ( न्या० ४ अ० १ आ० २७ सू० ) इति नोदाहरेत्, असिद्धत्वात्। न हि वह्निविनाशस्तदवयवपरम्परास्वेव निरूप्यः।

बोधनी।

पादयता शास्त्रेण विरोधः स्यादित्यत्राह-**एतेन** इति। प्रतियोगिनिरूप्यत्वाभ्युपगमेन इति। कथमेतेनास्य परिहार इत्यत्राह-**उभय** इति। यस्याभावस्य प्रतियोगी भावद्वयनिरूप्यः यथा संयोगः, तदभावः सद्भ्यां संयोगिभ्यां निरूप्यते तद्विषयं शास्त्रमिति अनुमेयाभावविषयं वा शास्त्रमित्याह—**अनुमाने** इति। किं तत्राधारोऽपि निरूपणीय एवेत्याह-**अन्यथा** इति। यत्राप्यधिकरणनिरूप्यत्वं तत्रापि न तस्य प्रत्यक्षत्वेनोपयोग इत्याह-**तत्रापि** इति। नन्विह भूतले घटो नास्तीत्यत्राश्रयः प्रत्यक्षेणैव गृह्यत इत्यत्राह-**क्वचित्** इति। तत्राश्रयप्रत्यक्षग्रहणसामग्र्या अभावग्रहणसामग्र्या सह संनिधानात् तत्प्रत्यक्षत्वं, न त्वभावज्ञानाङ्गतयेति। कथमविशेषप्रवृत्तस्य शास्त्रस्यैतद्विषयत्वमवगम्यत इत्यत्राह-**यदि च** इति। सूत्रकारो हि सर्वमनित्यमित्युक्ते तदनित्यत्वं नित्यमनित्यं वा नित्यं चेत्सर्वानित्यता न स्यात् अनित्यत्वस्यैव नित्यत्वात्। अथानित्यं तथापि सर्वानित्यता न स्यात्। अनित्यस्यैव विनाशे सर्वनित्यताप्रसङ्गादिति चोद्यं परिहरन्नाह 'तदनित्यत्वं वह्नेर्दाह्यं विनाश्यानुविनाशवत् तद्विनाशः' ( न्या. सू. ४.१.२७ ) इति। अत्र हि यथाऽग्निर्दाह्यं काष्ठादि नाशयित्वा पश्चात्स्वयमपि विनश्यति, न च तदा काष्ठादिकमुपजीवति, एवं सर्वानित्यत्वमपि सर्वं विनाश्य स्वयमपि विनश्यति न च सर्वनित्यता स्यादिति। वह्निविनाश उदाह्रियते तन्नोपपद्यते यद्यभावस्याश्रयनिरूप्यत्वं भवेदिति। कुत इत्यत आह—**असिद्धत्यादि** इति। वह्निविनाशस्याश्रयानिरूपणेनासिद्धत्वादिति। तदेवाह-**न हि** इति। नन्वसंभवद्देशान्तरगमनति-

प्रकाशः।

प्रामाणिकत्वाच्छास्त्रस्य विशेषविषयत्वात् तद्विरोधोऽपि नास्तीत्याह **एतेनेति**। **सद्भ्यां** = प्रतियोग्यधिकरणाभ्याम्। विशेषविषयत्वमाह **उभयेति**। उभाभ्यां संयोगिभ्यां संयोगो निरूप्यते इति तदभावोऽपि तथेत्यर्थः। **अनुमानेति**। यत्र व्यापकाभावेन व्याप्याभावोऽनुमीयते, तत्राश्रयग्रह उपयुज्यते इत्यर्थः। **अन्यथेति**। तत्राश्रयाग्रहादित्यर्थः। **तत्रापीति**। उभयनिरूप्यप्रतियोगिविषयेऽपि नानुभवनियमः। स्मरणेनाप्याश्रयनिरूपणाल्लाघवाच्चेत्यर्थः। यत्तु क्वचिदघटं भूतलमित्यत्र ग्रहणनियमः, सोऽन्यथासिद्ध इत्याह **क्वचिदिति**। आश्रयग्रहणनियमश्च न सूत्रकारस्यापि सम्मत इत्याह **यदि चेति**। दृष्टान्तस्य वह्निनाशस्याज्ञानादित्यर्थः। असिद्धत्वमेव

प्रकाशिका।

मित्यर्थः। तथा चांशूनामपि परम्परासम्बन्धेन गुणाद्याश्रयतया तद्ध्वंसदेशत्वमपीति भावः। **शास्त्रस्येति**। यद्यपि निरधिकरणा नाऽभावप्रतीतिरित्यनुपदमेवोक्तमिति न शास्त्रविरोधशङ्का, तथापि अधिकरणपदस्य प्रतियोगिसमवायिपरत्वेऽपि न विरोधः, विशेषविषयत्वाच्छास्त्रस्येत्यर्थः। **स्मरणेनापीति**।

मकरन्दः।

भावः। **शास्त्रस्येति**। यद्यपि निरधिकरणाऽभावप्रतीत्यनभ्युपगमे विरोधशङ्कैव नास्ति, तथाप्यधिकरणपदस्य प्रतियोगिसमवायिपरत्वेऽपि न विरोधो विशेषविषयत्वादित्याशयः। **स्मरणेना-**

टिप्पणी।

के। स्वजन्यपटध्वंसासिद्ध्या साध्यप्रसिद्ध्यभावाद् व्याप्त्यग्रहाद्धेतोरसिद्धिरित्यन्ये।

तासामनिरूपणात् । नाऽप्यन्यत्र गमनाभावादिना पारिशेष्यादनुमेयः। हेतोरेव निरूपयितुमशक्यत्वात् । आश्रयानुपलब्धेः । नापि निमित्तविनाशात् सर्वमिदमेकवारेण सेत्स्यतीति युक्तम् । तस्यानैकान्तिकत्वात् । तेजसा विशेषितत्वादयमदोष इति चेन्न । व्याप्त्यसिद्धेः । न हीन्धनविनाशात्तेजोद्रव्यमवश्यं विनश्यतीति क्वचित् सिद्धं, प्रत्यक्षवृत्तेरनभ्युपगमात् । तस्माद् यत्त्यागेनाऽन्यत्र गमनं न सम्भाव्यते, तेन निमित्तादिनाऽपि देशेन प्रध्वंसो निरूप्यत इत्यकामेनापि स्वीकरणीयम् । गत्यन्तराभावात् । अत एव तमसः प्रत्यक्षत्वेऽप्यभावत्वमामनन्त्याचार्याः ।

एतेन शब्दप्रागभावो व्याख्यातः ।

---

बोधनी ।

रोधानस्यानुपलभ्यमानस्य वह्नेर्विनाशपरिशेषादनुमानतो विनाशः सिध्येदित्याशङ्क्याह–नापि इति । गमनाद्यभावस्य हेतोरप्यभावात्मकत्वादिति । निमित्तकारणस्य काष्ठादेर्विनाशे न तत्कार्यस्य वह्नेस्तदवयवानां च विनाशोऽनुमीयत इत्यत्राह–नापि इति । न हि निमित्तस्य दण्डचक्रादेर्विनाशे घटादिकार्यविनाशो दृश्यत इति । ननु मा भूदन्यत्र, अस्ति तेजोनिमित्ताभावस्य कार्याभावव्याप्तिरित्याह–तेजसा इति । अथापि व्याप्तिग्राहकप्रमाणाभावादसिद्धिरित्याह–न इति । तामेव दर्शयति–न हि इति । अतीन्द्रियाधारे तेजोविनाशे प्रत्यक्षप्रवृत्त्यनभ्युपगमात् तेन सह दुर्ग्रहा व्याप्तिरित्युपसंहरति–तस्मात् इति । गत्यन्तरस्य=आश्रयनिरूप्यत्वलक्षणस्याभावादिति । अत्राचार्यसम्मतिं दर्शयति–अत एव इति । यत एवाभावप्रत्यक्षस्याधिकरणप्रत्यक्षतायां निर्बन्धो नास्ति अत एव । यदि हि तस्य निर्बन्धः स्यात्तदा भाऽभावस्य तमसस्तेजोऽवयवाश्रयत्वात् तेषां चाप्रत्यक्षत्वादप्रत्यक्षता स्यादिति । एतेन प्रध्वंसप्रत्यक्षताप्रतिपादनेन शब्दप्रागभावोऽपि प्रत्यक्ष इति सिद्धमेवेत्याह–एतेन इति ।

प्रकाशः ।

व्युत्पादयति न हीति । हेतोरेवेति । अनुपलभ्यमानत्वादित्यस्य हेतोरभावाश्रयाप्रसिद्धेरपक्षधर्मतया येन रूपेण हेतुत्वं तेनानिरूपणादित्यर्थः । नाऽपीति । वह्निनिमित्तेन्धननाशस्यप्रत्यक्षत्वात् ततोऽन्यत्र प्रतियोगिगमनाभावस्तत्प्रध्वंसश्चेति सर्वमित्यर्थः । तस्येति । निमित्तनाशेऽपि नैमित्तिकानामनाशादित्यर्थः । तेजसेति । निमित्तनाशे अग्निर्नश्यतीति व्याप्तेरित्यर्थः । गमनं, प्रतियोगिनः । निमित्तादिनेति । अत एव यत्र कपालादिपरम्परानाशाद् घटनाशस्तत्रापीह भूतले घटो नास्तीति धीः समर्थिता । अत एवेति । यत एव निमित्तादिनाऽपि देशे ध्वंसनिरूपणमित्यर्थः । अन्यथाऽऽलोकावयवानामनिरूपणात्तदवयवविनाशात्मकं तमो न प्रत्यक्षं स्यादिति भावः ।

प्रकाशिका ।

स्मरणरूपाश्रयनिरूपणेनाप्यभावनिरूपणादित्यर्थः । अनुपलभ्यमानत्वादित्यस्येति । अन्यत्र गमनाभावे सत्यनुपलभ्यमानत्वेन हेतुना ध्वंसोऽनुमेयः, तत्र च विशेष्यमाश्रयवृत्तित्वेन च निरूपयितुमशक्यमित्यर्थः । इदमुपलक्षणम् । गमनाभावरूपं विशेषणमपि तथेत्यपि द्रष्टव्यम् । सुवर्णादितेजसि

मकरन्दः ।

पीति । स्मरणरूपाश्रयनिरूपणेनाप्यभावप्रतीतेरित्यर्थः । अन्यत्र गमनाभावे सत्यनुपलभ्यमानत्वादनुमेयस्तत्राह—अनुपलभ्यमानत्वादित्यस्येति । गमनाभावस्येत्यपि द्रष्टव्यम् ।

टिप्पणी ।

आश्रयासिद्धेरिति । अनुमेयाभावपक्षीभूतवन्हेर्नाशेनाविद्यमानत्वान् ज्ञानासम्भवादित्यर्थः । येन रूपेण हेतुत्वमिति । हेतोः पक्षधर्म्मतयैव हेतुत्वम् । तेन पक्षधर्म्मत्वेनेत्यर्थः । पक्षस्यैवाग्रहात् ।

प्रकाशः।

**एतेनेति**। प्रतियोगियोग्यतामात्रनिरूप्यत्वेन। **व्याख्यातः**, प्रत्यक्षतया। एतच्च संसर्गाभावविषयम्। अन्योन्याभावस्यायोग्यप्रतियोगिकस्य प्रत्यक्षत्वात्। कथमन्यथा स्तम्भः पिशाचो नेति धीः प्रत्यक्षा। प्रतियोगिसत्त्वविरोधिन एवानुपलम्भस्याभावप्रत्यक्षतायां तन्त्रत्वात्। यदि हि स्तम्भः पिशाचः स्यात् स्तम्भात्मकतयोपलभ्येतेति न पिशाचानुपलम्भः स्यात्। ननु शब्दाभावो न योग्यानुपलम्भग्राह्यः। तत्तद्ग्राह्येतरतदुपलम्भकस्य वायोस्तत्राभावात्। तथा च सत एव शब्दस्य व्यञ्जकवायुविरहादनुपलब्धिमात्रं, न तु ध्वंसग्रहः। विनष्टधीरपि व्यञ्जकवायुध्वंसोपाधिकैव। अत एव यत्र यस्य सत्त्वमनुपलब्धिविरोधि,तस्याभावस्तत्र गृह्यत इति योग्यानुपलब्ध्यर्थ इति पक्षेऽपि न शब्दाभावोऽध्यक्षः। व्यञ्जकाभावेन सतोऽपि शब्दस्योपलब्धेरभावात्। नैवम्। वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्याः, एकावच्छेदेन समानदेशत्वे सति समानेन्द्रिय-

प्रकाशिका।

व्यभिचारात्तेजःपदमग्निपरमित्याह—**अग्निरिति**। **एतच्चेति**। निरुक्तानुपलब्धेः सहकारिण्या अविशेषेऽपि संसर्गाभावग्रहे प्रतियोगियोग्यत्वं स्वरूपयोग्यता, अन्योन्याभावग्रहे त्वधिकरणयोग्यता तथेति मनसिकृत्वेदमुक्तम्। वस्तुतो निरुक्तानुपलब्धिः सहकारिणी उपलम्भापादकसत्त्वप्रतियोगिप्रतियोगिकत्वमेव स्वरूपयोग्यतेति पिशाचान्योन्याभाववत् पिशाचत्वात्यन्ताभावो रूपात्यन्ताभाववद्रूपान्योन्याभावः प्रत्यक्ष इति रहस्यम्। ननूक्तधीः प्रत्यक्षेत्यत्रैव किं मानमत आह—**प्रतियोगिसत्त्वेति**। स्तम्भात्मकतयेति हेतौ तृतीया न तु प्रकारे, इष्टापत्तेः प्रकृतानुपयोगाच्च, तथा च स्तम्भो यदि पिशाचत्वजातिमान् स्यात् तद्वत्तयोपलभ्येत अत्र हेतुः **स्तम्भात्मकतयेति**। पिशाचस्येति शेषः। तेन योग्यव्यक्तिवृत्तित्वं तथा सति पिशाचस्य स्यादिति मूलसूचितं सूचितम्। न च पिशाचत्वप्रकारकप्रत्यक्षविषयत्वमापाद्यम् तच्चाप्रसिद्धमिति वाच्यम्। पिशाचत्वं यदि स्तम्भवृत्तिजातिः स्यात् स्तम्भविशेष्यकप्रत्यक्षप्रकारः स्यादित्यस्य प्रकृते आपादनशरीरत्वात् व्यञ्जकत्वं वायोः सामान्यत एव वर्णान् प्रति तत्तद्वायोस्तत्तद्वर्णं प्रति वा, आद्ये ककाराभिव्यक्तिकाले गकाराभिव्यक्तिप्रसक्तिः, अन्त्ये त्वाह **वर्णा इति**। परस्परप्रमाप्रतिबन्धकासहकृतपरस्परव्य-

मकरन्दः।

तेजोऽन्तरे व्यभिचारात्तेजःपदमग्निपरमित्याह **अग्निरिति**। **यदि हीति**। यद्यपि यथाश्रुते इष्टापत्तिः, न च पिशाचो यदि स्तम्भात्मा स्यादिति विवक्षितमिति वाच्यम्, अधिकरणे प्रतियोगिसत्त्वस्य तर्कविषयत्वाभ्युपगमात्, तथाऽपि स्तम्भो यदि पिशाचात्मा स्यात् पिशाचात्मतया प्रमाविषयः स्यादित्यत्र तात्पर्य्यम्। ननु वायोर्व्यञ्जकत्वे सर्वशब्दोपलब्धिः स्यात्, यदि च कार्य्ये प्रतिनियतजनकजन्यत्ववत् शब्देऽपि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमिति ब्रूयात्, तत्राह-**वर्णा नेति**। अत्र प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दोषाभावे सति परस्परविलक्षणपरस्परसाक्षात्कारहेतुकज्ञानविषयत्वं तदभावः साध्यः। तेनैकत्वद्वित्वभ्रमजनकेन परिमाणग्राहिणा, परिमाणभ्रमजनकेनैकत्वग्राहिणा च न व्यभिचारः। न चैवमप्येकाधिकरणकक्रमिकगन्धादिभिर्व्यभिचारः, एककालावस्थायित्वे सतीत्यपि साध्ये प्रतियोगिविशेषणत्वात्। केचित्तु अवच्छेदकं देशकालसाधारणं, तथा चान्यूनानतिरिक्तदेशकालत्वे सतीति सत्यन्ततात्पर्य्यम्, अतो हेतोरेव तत्रागमनान्न व्यभिचारः। न चैवं स्वमतेऽसिद्धिः, वर्णानां क्रमिकोत्पादत्वेनाव्याप्यवृत्तितया च तुल्यदेशकालत्वाभावादिति वाच्यम्। परमतेन कृतत्वादित्येके। कर्णावच्छेदेनैकदाऽपि नानावर्णोत्पादसम्भवेन तत्तद्वर्णविशेषाणामेव पक्षत्वमित्यपरे। ननु तत्तद्वर्णप्रागभावत्वादिकञ्च प्रतिनियतव्यञ्जकमादाय बाध इति चेत्, न, तदन्यत्वेनापि साक्षात्कारहेतुविशेषणात्। इतरनिरूपणानधीननिरूपणत्वे सतीत्यपि हेतुविशेषणं, तेन घटान्योन्याभावपटत्वात्यन्ताभावयोः पृथक्रूपदधर्मत्वयोर्वा न

एवं स्थिते अनुमानमप्युच्यते । शब्दोऽनित्यः उत्पत्तिधर्मकत्वाद् घटवत् । न चेदं, प्रत्यभिज्ञानबाधितम् । तस्य ज्वालादिप्रत्यभिज्ञानेनाऽविशेषात् । नैवमबाधितस्य तस्य स्वतः प्रमाणत्वादिति चेत्तुल्यम् । ज्वालायां तन्नास्ति, विरुद्धधर्माध्यासेन बाधितत्वात् , अन्यथा वेदव्यवहारविलोपप्रसङ्गो निमित्ताभावात् , आकस्मिकत्वे वा अतिप्रसङ्ग इति चेत् तुल्यम् ?। शब्देऽपि तीव्रतीव्रतरत्वमन्दमन्दतरत्वादेर्भावात् तदिह न स्वाभाविकमिति चेन्न । स्वाभाविकत्वावधारणन्यायस्य तत्र तत्र सिद्धस्यात्रापि तुल्यत्वात् । न ह्यपां शैत्यद्रवत्वे स्वाभाविके तेजसो वा औष्ण्यभा-

बोधनी ।

एवं प्रध्वंसस्य प्रत्यक्षत्वात्प्रध्वंसाभावोपलक्षितवस्तुलक्षणमनित्यत्वं प्रत्यक्षसिद्धमेवेति व्यवस्थिते तत्रानुमानमस्तीत्याह-एवम् इति । ननु स एवायं गकार इति प्रत्यभिज्ञानेन पूर्वापरकालयोः स्थिरत्वं "तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यती"ति न्यायान्नित्यत्वमपि सेत्स्यति । तेनानित्यत्वानुमानं बाधितविषयं स्यादित्याह—न चेदम् इति । ननु शब्दप्रत्यभिज्ञानस्याबाधितत्वात्स्वतः प्रामाण्याच्च न भ्रान्तत्वमित्याह—नैवम् इति । तदेतदुभयं ज्वालाप्रत्यभिज्ञानेऽपि तुल्यमित्याह-तुल्यम् इति । ननु ज्वालाप्रत्यभिज्ञानेऽपि तदबाधितत्वं नास्ति, अपचयोपचयलक्षणविरुद्धधर्माध्यस्तविषयत्वादित्याह-ज्वालायाम् इति । अन्यथा इति । यदि विरुद्धधर्माध्यस्तं स्यादिति । ततश्च भेदग्राहिविरुद्धधर्मसंसर्गग्राहिणा प्रत्यक्षेणानन्यथासिद्धेन प्रत्यभिज्ञानमन्यथासिद्धं बाध्यत इति चोद्याभिप्रायः । तदेतद्विरुद्धधर्माध्यस्तविषयत्वं शब्दप्रत्यभिज्ञानेऽपि तुल्यमित्याह-तुल्यम् इति । कुत इत्याह-शब्देऽपि इति । ननु तीव्रादिकमिह शब्दे न स्वाभाविकं व्यञ्जकध्वनिधर्मस्यैव तस्य शब्द आरोप्यमाणत्वादित्याह-तदिह इति । न इति । यदि हि यतः कुतश्चिन्न्यायाद्यस्य कस्य चिद्धर्मस्य यं कंचिद्धर्मिणं प्रति स्वाभाविकत्वमवधार्येत तर्हि तेनैव न्यायेन तीव्रत्वादीनामपि शब्दं प्रति स्वाभाविकत्वमवधार्यतामिति तमेव न्यायमाह-न हि इति । तद्धर्मसामानाधिकरण्येन प्रत्यक्षमेव

प्रकाशः ।

ग्राह्यत्वात् पटैकत्वपरिमाणवदिति प्रतिनियतव्यञ्जकव्यङ्ग्यत्वानुपपत्त्या वायोर्व्यञ्जकत्वनिरासात् ।

एवमिति । प्रत्यक्षेणानित्यत्वे साधित इत्यर्थः । उत्पत्तिमत्वात् , स्वसमानकालीनप्रतियोगिध्वंसानाधारक्षणाधारत्वादित्यर्थः । भावत्वेन विशेषणान्न ध्वंसेन व्यभिचारः । न चेदमिति । यद्यपि स एवायं गकार इति प्रत्यभिज्ञानं नित्यत्वं न गोचरयति किन्त्वभेदमात्रं, तथापि नाशकत्वाभिमतशब्दानन्तरमपि शब्दं गोचरयद् नित्यतायामेव पर्यवस्यति, आश्रयनाशस्याभावादिति भावः । स्वत इति । स्वयमप्रामाण्यशङ्काविरहादित्यर्थः । विरुद्धेति । परिमाणभेदाध्यासेने-

प्रकाशिका ।

भिचारिप्रमापकप्रामाण्येनेति साध्यार्थः । तेन एकत्वद्वित्वभ्रमजनकेन परिमाणग्राहिणा परिमाणभ्रमजनकेनैकत्वग्राहिणा च न व्यभिचारः, न च क्रमोत्पन्नगन्धाभ्यां व्यभिचारः, एककालीनत्वस्य साध्ये प्रतियोगिविशेषणत्वात् , हेतावेव एकावच्छेदस्य देशकालोभयपरत्वाद्वा । न च प्रागभावमादाय बाधः तदन्यत्वेन व्यञ्जकविशेषणात् । समानदेशत्वञ्च समवायिनमादाय, तेन पटैकत्वपरिमाणाभावयोर्न व्यभिचारः । तेन पटान्योन्याभावपटत्वात्यन्ताभावयोर्न व्यभिचार इति केचित् । वस्तुतः पटत्वात्यन्ताभावग्रहकाले पटान्योन्याभावोऽपि गृह्यत एवेति साध्यमेव तत्रेति पूर्वमेवोक्तं पृथक्त्वग्रहकाले च दीर्घत्वं गृह्यत एवावधेस्तद्वृत्तिजातिग्रहे प्रयोजकत्वादिति न तत्र व्यभिचारः। न च स्वमते सर्वशब्दानां समानदेशत्वेन सिद्धमेवेति वाच्यम् । वर्णा यदि प्रतिनियतव्यञ्जकव्यङ्ग्याः स्युरेकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्या न स्युरिति परं प्रत्यनिष्टापादने तात्पर्यादित्यन्यत्र विस्तरः । उत्पत्तिपदेनात्र विशिष्टक्षण एवोक्त इति न मतुबर्थसम्बन्धरूपविशेष्यवैयर्थ्यमित्याशयेन व्याचष्टे । स्वसमानेति । हेतुप्रविष्टोत्पत्तेश्च निर्वचनमिदमिति न चरम

स्वरत्वे इत्यत्रान्यत् प्रमाणमस्ति प्रत्यक्षाद्विना ! तत्तथैव युज्यते, अन्यस्योपाधेरनुपलम्भान्नियमेन तद्गतत्वेन चोपलम्भादिति चेत्तुल्यमेतत् । तथाप्यतीन्द्रियान्यधर्मत्वशङ्का स्यादिति चेदेतदपि तादृगेव । तत् किं यद्गतत्वेन यदुपलभ्यते, तस्यैव स धर्मः । नन्वेवं पीतः शङ्खो, रक्तः स्फटिको, नीलः पट इत्यपि तथा स्यादविशेषात् । न । पीतत्वादीनामन्यधर्मत्वस्थितौ शङ्खादीनां च तद्विरुद्धधर्मत्वे स्थिते जवाकुसुमाद्यन्वयव्यतिरेकानुविधानाच्च बाधेन भ्रान्तत्वावधारणात्, न चेह तारतारतरत्वादेरन्यधर्मत्वस्थितिः । नाऽपि शुकसारिकादिगकाराणां तद्विरुद्धधर्मत्वं, नाप्यन्यस्य तद्धर्मिणोऽन्वयव्यतिरेकावनुविधत्ते । तथापि शङ्का स्यादिति चेत् ? एवमियं सर्वत्र ? तथा च न क्वचित् किञ्चित् कुतश्चित् सिद्ध्येत् । न चैतच्छङ्कितुमपि शक्यते । अप्रतीते संस्काराभावात् । संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात् । न च ध्वनिधर्मा एव गृह्यन्ते । स्पर्शाद्यनन्तर्भावेण भावेषु त्वगादीनामव्या-

---

बोधनी ।

द्रवादिषु शैत्यादीनां स्वाभाविकत्वे प्रमाणं नान्यत्, तदिहापि समानं तीव्रोऽयं गकार इति प्रत्यक्षेण प्रतीतेरिति भावः । शङ्कते–**तत्तथा** इति । तद् द्रवत्वादि तथैवावादीनां स्वाभाविकमिति युक्तं, तद्धर्मकस्यान्यस्योपाधेरनुपलम्भादवादिगतत्वेन च शैत्यादीनामुपलम्भादिति । अन्यस्येति शङ्कोपक्रमः प्रत्यक्षेण प्रतीतेरिति केचित् । तदपि तुल्यं तीव्रत्वादीनामित्याह–**तुल्यम्** इति । ननु मा भूदन्यधर्मत्वेनोपलम्भः तीव्रत्वादीनां, तथाऽप्यतीन्द्रियाणां व्यञ्जकध्वनीनां धर्माः स्युरिति शङ्कावकाशः स्यादित्याह–**तथापि** इति । तर्हि शैत्यादीनामप्यतीन्द्रियधर्मत्वशङ्का स्यादित्याह–**एतदपि** इति । गूढाभिसंधिः पृच्छति—**तत्किम्** इति । स एवाभिसंधिमुद्घाटयति–**ननु** इति । तर्हि पीतत्वादीनां शङ्खादिगतत्वेनोपलम्भात्तेऽपि तेषां स्वाभाविकाः स्युरिति । **न** इति । पीतत्वादीनां शङ्खादिधर्मत्वे बाधकमस्ति, न तीव्रत्वादीनां शब्दधर्मत्व इति । यथाहुराचार्याः—

'यो ह्यन्यरूपसंवेद्यः संवेद्येतान्यथा पुनः ।
स मिथ्या न तु तेनैव यो नित्यमवगम्यते' इति ॥ ( श्लो० वा० )

ननु बाधकादर्शनेन ते स्वाभाविकाः स्युरिति पीतः शङ्ख इत्यादिषु तद्गतत्वेनोपलम्भस्य भ्रान्तत्वोपलम्भादत्रापि शङ्का स्यादित्यत्राह—**तथापि** इति । **एवम्** इति । साधर्म्यमात्रेण शङ्कायामुष्णोऽग्निरित्यादावपि सा स्यादिति । ततः किमित्यत्राह-**तथा च** इति । क्वचिदपि विशेषाय कुतश्चित्प्रमाणात्कस्य चिद्धर्मिणः कश्चिद्धर्म इति न स्यात् । यद्वा, कस्यचित्प्रमातुः किञ्चित्प्रवृत्तिनिवृत्त्यादिकं न सिध्येदिति । तारत्वतारतरत्वादेरन्यत्राननुभूतत्वान्न तद्विषयः संस्कारः, तदभावे च न तेनोपस्थापनं, न च तदनुपनीतस्यास्मृतस्येति यावदन्यत्रारोपः संभवति, तेन भ्रान्तिज्ञानकारणाभावात् तीव्रत्वादिप्रत्ययानां भ्रान्तत्वशङ्काऽपि न युक्तेत्याह—**न च** इति । न च ध्वनिधर्मत्वेन तेषामस्त्यनुभव इति युक्तं वक्तुम्, तद्धर्मत्वे तेषामग्रहणस्यैव प्रसङ्गादित्याह–**न च ध्वनिधर्माः** इति । स्पर्शादिनियतविषयाणि त्वगादीन्द्रियाणि, न च तीव्रत्वादेः स्पर्शादिष्वन्तर्भा

प्रकाशः ।

स्यर्थः । अन्यधर्मत्वस्थितिः, शब्दं विहायेति शेषः । **तद्विरुद्धधर्मत्वं**=तीव्रत्वादिविरुद्धधर्मत्वम् । **तद्धर्मिणः**=तीव्रत्वादिधर्मिणः । चार्वाकमतमालम्ब्याह—**तथापीति** । मीमांसकस्य तन्मतावलम्बनेऽनुमानप्रामाण्यस्वीकारे व्याघात इत्याह **एवमिति** । न च शङ्काऽपि तत्र सम्भवतीत्याह **न चैतदिति** । ननु ध्वनिधर्मास्तारत्वादयो गृह्यमाणा एव शब्द आरोप्यन्ते, न स्मर्यमाणा इत्यत आह **न चेति** । ध्वनयो वायवीया एवेति तेषान्त्वगादिभिर्ग्रहे तद्धर्मास्तारत्वादयो न

पारात् । न च श्रवणेनैव तद्ग्रहणम् । अवायवीयत्वेन तस्य वायुधर्माग्राहकत्वात् चक्षुर्वत् तारतारतरत्वादयो वा न वायुधर्माः श्रावणत्वात् कादिवत् । वायुर्वा न श्रवणग्राह्यधर्मा मूर्त्तत्वात् पृथिवीवत् ।

यदि च नैवं, कादीनामपि वायवीयत्वप्रसङ्गः । ततः किम् ? अवयविगुणत्वेऽनित्यत्वम्, परमाणुगुणत्वेऽग्रहणम्, द्वयमप्येतदनिष्टं भवतः । अवश्यञ्च श्रवसा

---

बोधनी ।

व इति । तर्हि श्रोत्रेण गृह्यतामित्यत्राह-**न च** इति । न ह्यवायवीयस्य श्रोत्रस्य वायुधर्मतारत्वादिग्राहकत्वं संभवति चक्षुर्वदिति । दृश्यत एव श्रोत्रेण ग्रहणमिति चेत्, तत एव तर्हि न वायुधर्मा इत्याह—**तारतारतरत्वादयः** इति । तेषामवायवीयत्व एवानुमानान्तरमाह-**वायुर्वा** इति ।

तेषां वायुधर्माङ्गीकारेऽनिष्टप्रसङ्गमाह-**यदि च नैवम्** इति । श्रोत्रग्राह्याणामेव वायवीयत्वदर्शनादिति भावः । सन्तु कादयो वायवीयाः । उक्तं च-'वायुः शब्दतामापद्यत' इत्याशयेन पृच्छति-**ततः किम्** इति । उत्तरम्-**अवयविगुणत्वे** इति । वायुधर्मा भवन्तः कादयः किमव यविनस्तस्य भवेयुः वायुपरमाणोर्वा; पूर्वत्र कादीनामनित्यत्वप्रसङ्गः, उत्तरत्रेन्द्रियग्राह्यता न स्यात् तद्गतस्पर्शवदिति । न चैवमस्त्विति वाच्यमित्याह-**द्वयम्** इति । न परं वायुधर्मत्वे बाधकमा-

प्रकाशः ।

गृह्यन्ते इति न गृह्यमाणारोप इत्यर्थः । अग्रहे हेतुमाह **स्पर्शादीति** । **अवायवीयत्वेनेति** । श्रोत्रं न वायुमात्रधर्ममात्रग्राहकम्, अवायवीयवहिरिन्द्रियत्वात् चक्षुर्वदित्यर्थः । अतो न सत्ताद्रव्यत्वग्राहकेण चक्षुषा मनसा वा व्यभिचारः ।

ननु चाप्रयोजकमिदम् । न हि यदिन्द्रियं यद्द्रव्यजातीयं तत् तज्जातीयस्यैव धर्मं गृह्णाति । तैजसेन चक्षुषा नीलाद्यग्रहप्रसङ्गात् । न, यद्बहिरिन्द्रियं यद्विशेषगुणग्राहकं तत्तज्जातीयगुणवदेवेति नियमेन श्रोत्रस्य वायुगुणतारत्वादिग्राहकत्वे तद्गुणवत्त्वप्रसङ्गे वायवीयत्वप्रसङ्गात् । **श्रावणत्वात्**= श्रवणमात्रवहिरिन्द्रियग्राह्यत्वादित्यर्थः । तेन न सत्तायां व्यभिचारः । **श्रवणग्राह्येति** । श्रवणमात्रग्राह्यधर्मेत्यर्थः ।

अत्र विपक्षे बाधकमाह--

प्रकाशिका ।

ध्वंसोत्पत्तावव्याप्तिर्दोषः । स्वतः प्रामाण्यग्रहस्य पूर्वं निरस्तत्वादन्यथा व्याचष्टे । **स्वत** इतीति । **ननु चेति** । यद्यपि विशेषव्याप्त्यैवात्रानुमितिरिति सामान्यव्याप्तिदूषणमकिंचित्करम् । तथापि विशेषव्याप्तावपि विपक्षबाधकत्वेन सामान्यव्याप्तिरेव वक्तव्येति सैवाशङ्क्य निरस्तेति भावः । **यद्बहिरिन्द्रियमिति** । स्नेहग्राहकचक्षुषि व्यभिचार इति विशेषपदं तद्बहिरिन्द्रियव्यावस्थापकपरं तज्जातीयत्वञ्च गुणत्वव्याप्यजात्येति न संख्यादीनां गुणत्वमादायार्थान्तरत्वम् । **श्रवणमात्रेति** । सत्तायां व्यभिचार इति मात्रेति । मनसस्सर्वत्र ग्राहकतयाऽप्रसिद्धिरिति वहिरिति । सत्तामादाय बाध इति व्याचष्टे ।

मकरन्दः ।

व्यभिचारः । अधिकं शब्दप्रकाशे विपञ्चितम् । उत्पत्तेस्तादृशसम्बन्धरूपतया तद्वत्त्वस्य हेतुत्वे व्यर्थविशेष्यत्वमित्यत आह **स्वसमानेति** । **ननु चेति** । यद्यपि सामान्यव्याप्तौ दुष्टायामपि विशेषव्याप्तेरवैकल्यमेव, तथा च किं तन्निरासेन, तथापि विशेषव्याप्तेरेवाप्रयोजकत्वशङ्कायां सामान्यव्याप्तिस्तत्प्रयोजकत्वमाशङ्क्य निरस्तेति नोक्तदोषः । **यद्बहिरिन्द्रियमिति** । ननु स्नेहग्राहकचक्षुरादौ व्यभिचारो विशेषपदवैयर्थ्यञ्चेति चेत्, न, विशेषपदस्यैव वहिरिन्द्रियव्यवस्थापकपरतयोभयदोषनिरासात् । तज्जातीयत्वञ्च गुणत्वव्याप्यजात्या, अतो न सङ्ख्यादिमत्तयाऽर्थान्तरम् । **श्रवणमात्रेति** । सत्तायां व्यभिचारवारकं मात्रपदं, वहिःपदञ्चाप्रसिद्धिवारकम् । सत्तावत्त्वाद्बाध

ग्राह्यजातीयगुणवता भवितव्यम्, बहिरिन्द्रियत्वाद् घ्राणादिवत्। सन्तु ध्वनयोऽपि नाभसाः, तथा च तद्धर्मग्रहणं श्रवणेनोपपत्स्यत इति चेन्न। तारस्तारतरो वाऽयङ्ककार इत्यत्र ध्वनीनामस्फुरणात्। न च व्यक्त्या विना सामान्यस्फुरणम्। कारणाभावात्। व्यक्तिस्फुरणसामग्रीनिविष्टा हि जातिस्फुरणसामग्री। कुत एतत्? अन्वयव्यतिरेकाभ्यां तथाऽवगमात्। ऐन्द्रियकेष्वेव घटादिषु सामान्यग्रहणात्, अतीन्द्रियेषु च मनःप्रभृतिष्वग्रहणात्। स्वरूपयोग्यतैव तत्र निमित्तम्, अकारणं व्यक्तियोग्यतेति चेत्। एवं तर्हि सत्ताद्रव्यत्वपार्थिवत्वादीनां स्वरूपयोग्यत्वे परमाण्वादि-

बोधनी।

काशधर्मत्वे साधकमप्यस्ति वर्णानामित्याह-**अवश्यम्** इति। **सन्तु** इति। ततश्च श्रोत्रग्राह्यत्वेन तारत्वादीनां शब्दधर्मत्वसिद्धिरिति। **न** इति। तारोऽयं ककार इति प्रतीतिस्तत्र, न च तारत्वादिमत्तया ध्वनयः परिस्फुरन्तीति न ते ध्वनिधर्माः किन्तु वर्णधर्मा एवेति भावः। मा भूद् ध्वनीनां स्फुरणं, तथापि तद्धर्माणामेव तीव्रत्वादीनां स्फुरणं भविष्यतीत्यत्राह-**न च** इति। व्यक्त्या विना गृह्यमाणतयेति शेषः। विशेषरूपाणां ध्वनीनां सामान्यात्मानस्तीव्रत्वादयः कथमिव तेष्वगृह्यमाणेषु स्फुरेयुरिति।

यद्वा, विशेषरूपेण ध्वनीनामस्फुरणेऽपि सामान्यात्मना स्फुरणात्तद्धर्मस्य तीव्रत्वादेर्ग्रहणोपपत्तिरित्याशङ्क्याह-**न च** इति। कारणाभावमेवाह-**व्यक्ति** इति।

व्यक्तिस्फुरणसामग्र्येकत्वं जातिस्फुरणस्य कुतोऽवधृतमित्याह-**कुत एतत्** इति। उत्तरम्-**अन्वय** इति। अन्वयव्यतिरेकावेव दर्शयति-**ऐन्द्रियकेषु** इति। सतीन्द्रिये व्यक्तिग्राहिणि सामान्यग्रहादसति चाग्रहादिति। ननु तत्र सामान्यस्य स्वरूपयोग्यता सदसत्त्वनिमित्तत्वाद् ग्रहणाग्रहणयोरन्यथासिद्धावन्वयव्यतिरेकावित्याह-**स्वरूपयोग्यता** इति। तद्विकल्प्य दूषयति-**एवं तर्हि** इति।

प्रकाशः।

**यदि चेति**। श्रोत्रस्य नभस्त्वे मानमाह--**ग्राह्येति**। ग्राह्यजातीयविशेषगुणवतेत्यर्थः। **ध्वनीनामिति**। ध्वनयो नाभसा विभुसमवायिकारणत्वाद् गुणा एव, तद्धर्माश्च तारत्वादयः सामान्यरूपाः स्युः। तथा च ध्वनीनां तारत्वादिसमवायिव्यक्तीनामज्ञाने गकारादिगतत्वेन न भासेरन्नित्यर्थः। **न चेति**। जातिज्ञाने व्यक्तिविषयकत्वनियमादित्यर्थः। प्रत्यक्षेऽयं नियमोऽतो न जातिपदजन्यज्ञाने व्यभिचारः। जातिपदेनापि वा जातित्वज्ञानं व्यक्तिविषयकमेव जन्यते। नित्यानेकवृत्तित्वस्य जातित्वात्। **एवं तर्हीति**। ननु परमाणुवृत्तिसत्तादिकं गृह्यत एवेतीष्टापत्तिः। न च परमाणुगतत्वेन तद्बुद्धिरापाद्या। विशेषणज्ञानं विना विशिष्टज्ञानाभावात् परमाणोश्चायोग्य-

प्रकाशिका।

**श्रवणमात्रेति**। अत्रापि पूर्ववद् बहिः पदं पूरणीयम्। **श्रोत्रस्य नभस्त्व इति**। श्रोत्रमपि वायवीयमेव तथा च तद्धर्मतारत्वादिपरिग्रहः सम्भवत्येव। **श्रवणेति**। एवमेवेति शङ्का निराकरणायेति शेषः। **ग्राह्यजातीयेति**। तथा च श्रोत्रस्य कादिमत्त्वेन यद्यपि विशेषणपदमत्र व्यर्थं सामान्यगुणस्य श्रोत्राग्राह्यतया तमादाय सिद्धसाधनाभावात्। तथापि संख्यादिनार्थान्तरं स्यादेव उक्तप्रमाणस्य संख्यादिश्रोत्रग्राह्यत्वविषयत्वेनाप्युपपत्तिरिति विशेषपदम्। ननु धर्म्यग्रहेऽपि धर्म्मग्रहः शब्दग्रहवत्, स्यादत आह। **ध्वनय इत्यादि**। **सामान्यरूपा** इति। गुणे जातिं विहाय धर्मान्त-

मकरन्दः।

इत्यत आह **श्रवणमात्रेति**। श्रवणमात्रबहिरिन्द्रियग्राह्येत्यर्थः। **श्रोत्रस्य नभस्त्व इति**, कादीनां नभसत्वेऽपि श्रोत्रं वायवीयमिति तद्धर्मतारत्वादिग्रहस्तेन स्यादिति शङ्कानिरासाय इति शेषः। **ग्राह्येति**। तथा च श्रोत्रस्यापि कादिमत्त्वे नभस्त्वमिति भावः। यद्यपि श्रोत्रस्य सामान्य-

ष्वपि ग्रहणप्रसङ्गः । अयोग्यत्वे घटादिष्वपि तदनुपलम्भापत्तिरिति दुस्तरं व्यसनम् । तस्माद् व्यक्तिग्रहणयोग्यताऽन्तर्गतैव जातिग्रहणयोग्यतेति तदनुपलम्भे जातेरनुपलम्भ एव । तथा च न तारत्वादीनामारोपसम्भव इति स्वाभाविकत्वस्थितौ विरुद्धध-

बोधनी ।

उपसंहरति-**तस्मात्** इति । यस्माद्व्यक्तिग्रहे सत्येव जातिग्रहणमिति । ततः किमित्यत्राह-**तथा च** इति । ध्वनिधर्मत्वे तीव्रत्वादीनामग्रहणप्रसङ्गात् न तद्धर्माणामेव तेषां शब्द आरोप इति संभवतीति । किं ततोऽपीत्यत्राह-**इति** इति । ततश्च तीव्रत्वादेः स्वाभाविकत्वसिद्धौ

प्रकाशः ।

त्वेनाज्ञानात् । न । परमाणुघटितेनेन्द्रियसन्निकर्षेण पार्थिवान्तरे चागृह्यमाणे सत्तादिग्रहेऽतिव्याप्तेः । न च योग्यव्यक्तिवृत्तिसन्निकर्षेण तद्ग्रहः, जातेर्योग्यव्यक्तिघटितसन्निकर्षेण ग्रहे योग्यव्यक्तिभानस्यावश्यकत्वात् । **तथा चेति** । न च स्मर्यमाणतारत्वाद्यारोपः । प्रथमतस्तारत्वाद्यग्रहापाताद् बाधकाभावाच्च । अत एव यथा लोहितः स्फटिक इत्यत्र जपात्वेनाप्रतीतस्यापि लौहित्येनैव प्रतीयमानस्य जपापुष्पस्य लौहित्यमारोप्यते, तथा ध्वनित्वेनाप्रतीतावपि तारत्वेनैव ध्वनीनां स्फुरणं स्यादिति निरस्तम् । गकारगतत्वे बाधकाभावात् ।

ननु तारत्वादयो न गकारादिजातयः । गत्वादिना सङ्करप्रसङ्गात् । न च नानैव तारत्वम् । ताराकारानुगतप्रतीत्यभावापत्तेः । न च गतारत्वाद्येव जातिः । तारत्वस्य निश्चयेऽपि गत्वे संशयात् । तारत्वमन्दत्वे च न जाती । सप्रतियोगित्वात् । नाऽपि तयोर्विरोधः, य एव गकारस्तार आसीत् स एवेदानीं मन्द इति कालभेदेन वक्तृभेदेन च तयोरेकत्र प्रतीतेः । तारान्मन्दोऽन्य इत्यपि धीरस्तीति चेन्न । अभेदेन धर्मिणि भासमाने विशिष्टभेदबुद्धेर्धर्मभेदविषयत्वात् । पाकरक्ते घटे, रक्तोऽयं न श्याम इति धीवत् । न च तारमन्दककारयोरभिभाव्याभिभावकभावात् तयोर्भेदः । तद्व्यञ्जकवाय्वोरेव तथात्वेन मन्दस्याग्रहणादिति बाधकादेव स्मर्यमाणारोपः स्यात् । अस्तु वा गृह्यमाणारोपः । श्रोत्रेणैव तद्ग्रहात् । चक्षुरादिना यत्र न वायुधर्मग्रहस्तत्रायोग्यत्वमुपाधिः । अन्यथा श्रोत्रेण स्वगुणो न गृह्येत, इन्द्रियस्य स्वगुणाग्राहकत्वात् । सन्तु वा तारमन्दरूपा भिन्ना एव गकाराः । तत्प्रत्यभिज्ञाने बाधकाभावात् ।

प्रकाशिका ।

राभावादिति भावः । पार्थिवान्तरसन्निकर्षकाले इष्टापत्तिमपि कुर्यादिति शङ्कानिराकरणार्थमाह । **पार्थिवान्तरे चागृह्यमाण इति** । **प्रथमत** इति । धर्मिधीजन्यस्मृतेरेव स्मर्यमाणाऽऽरोपहेतुत्वमित्यभिप्रायेणेदम् । एतन्नियमानभ्युपगमे त्वाह । **बाधकेति** । केचित्तु इह जन्मनि प्रथमं तारशब्दश्रवणे आरोपासम्भव इत्याद्यफक्किकार्थः, जन्मान्तरसंस्कारोद्बोधमाशङ्क्य बाधकाभावादिति फक्किकेति व्याचक्षते । ध्वनिगततारत्वादिवैजात्याभ्युपगमपक्षे बाधवारणायाह-**गकारादीति** । ताराकारानुगतप्रतीत्यभावमभ्युपेत्याह **न च गतारत्वादीति** । **तारत्वस्येति** । तारत्वस्य गत्वव्याप्यत्वाद् व्याप्यनिश्चये च व्यापकसंशयाभावादित्यर्थः । व्याप्यत्वानिश्चयात्, संशय इत्यरुचेराह-**तारत्वमन्दत्वे चेति** । चकारोऽत्र भिन्नक्रमः, तेन सप्रतियोगिकत्वाद्वेत्यर्थः । न च जातित्वाभावेऽपि विरोधः तयोः स्यादित्यत आह-**नापीति** ।

मकरन्दः ।

गुणाग्राहकत्वादर्थान्तरानवकाशे विशेषपदान्तर्भावो व्यर्थः, तथापि ताद्रूप्यसिद्ध्यर्थं चक्षुरादिसाधारण्यार्थं वा तदित्याहुः । **प्रथमत इति** । यथा प्रथमं चाकचिक्यविशिष्टव्यक्तिधीमात्रं न तु विशिष्टधीः धर्मिज्ञानस्यारोपहेतुत्वात्, तथाऽत्रापि स्यादिति भावः । वायुगतजातित्वाभ्युपगमपक्षे बाधवारणायाह **गकारादीति** । **तारत्वमन्दत्वे चेति** । चकारो भिन्नक्रमः, तथा च सप्रतियो-

र्मीध्यासेन भेदस्य पारमार्थिकत्वात् प्रत्यभिज्ञानमप्रमाणमिति न तेन बाधः ॥

बोधनी ।

तीव्रमन्दयोर्गकारयोर्भेदस्य वास्तवत्वेन शब्दप्रत्यभिज्ञानस्याप्रमाणत्वान्न तेनानित्यत्वानुमानबाध इति ।

प्रकाशः ।

उच्यते । शुकशारिकामनुष्यप्रभवेषु स्त्रीपुंसतद्विशेषप्रभवेषु चेक्षुक्षीरादिमाधुर्यवत् स्फुटतरं वैजात्यमनुभूयते । न चेदमौपाधिकम् । तत्त्वं हि आनुभविकम्, औपपत्तिकं वा ? । नाद्यः । इन्द्रियासन्निकर्षेण स्त्रीपुंसतद्विशेषाननुभवेऽपि शब्दभेदप्रत्ययात् । यतः स्त्रीपुंसप्रभवत्वमनुमीयते । अन्यथाऽन्योन्याश्रयात् । स्त्रीप्रभवत्वे ज्ञाते भेदधीस्ततश्च तदनुमानात् । नान्त्यः । उपाधेरन्वयव्यतिरेकानुविधानाभावात् । न च व्यञ्जकवायुवैजात्यं गकारगतत्वेन भासते, वायोश्च ज्ञानं तेनैव रूपेणेति वाच्यम् । गकारगतत्वे बाधकाभावात् । न चाभेदप्रत्यभिज्ञानं बाधकम् । य एव शुकशब्दः स एव स्त्रीशब्द इत्यननुभवात् ? तथात्वे वा भेदज्ञानाभावेन वक्तृविशेषाननुमानापत्तेः । अस्ति च कोऽपि गकारस्य विशेषो यतो दिग्विशेषप्रभवत्वमनुमीयते । अव्यपदेश्यत्वेऽप्यानुभविकत्वात् । तस्माद् गकारादौ भेदे भासमानेऽनुगतबुद्धेर्गत्वादिकजातिः । तारत्वमपि गत्वादिव्याप्यं भिन्नम् । अनुगतव्यवहारश्च सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकरूपादनुगतादुपाधेः । तदज्ञाने च तद्व्यवहारासिद्धेः । परैरपि शुकादिगकाराभिव्यञ्जकवायूनां वैजात्यं वाच्यम् । तत्र यदि शुकवर्णाभिव्यञ्जकवायुत्वं गकारव्यञ्जकवायुत्वव्याप्यं, तदा शुकककारव्यञ्जकवायौ न स्यात् । अथ व्यापकं, तदा सर्व एव गकारव्यञ्जकवायवः शुकवर्णाभिव्यञ्जकवायवः स्युरिति वायुवृत्तित्वेऽपि वैजात्यन्नानैव ।

तथापि यावद्वक्तृभेदं नित्या एव वर्णाः सन्तु, तत्प्रत्यभिज्ञाने बाधकाभावाद् । मैवम् । अस्ति हि स एवायं गकार इति प्रत्यभिज्ञानम्, अस्ति च तत्रोत्पादविनाशधीः । न चानयोरन्योन्यं विहायाऽन्यद् बाधकमस्ति । न चानयोरेकं भ्रमः । एकानन्तरं विशेषदर्शनेन अपरोत्पत्त्यभावापत्तेः । अतस्तयोरवश्यं विषयभेदो वाच्यः । एकविषयत्वे विरोधेनैकोत्तरमपरानुत्पादापत्तेः । एवञ्च भेदे भासमाने प्रत्यभिज्ञानस्य तज्जातीयत्वं विषयः । न चैवं तज्जातीयोऽयमिति तदाकारापत्तिः । तज्जातीयत्वविषयाया अपि बुद्धेः सोऽयमित्याकारदर्शनात् । यथा तानेव शालीनुपभुञ्जते, तानेव तित्तिरीनिति । यत्र च प्रथमं न भेदधीस्तत्र प्रत्यभिज्ञानं व्यक्त्यभेदविषयम् । तस्माद् यत्र भेदधीस्तदितरबाधकाबाध्या तत्र प्रत्यभिज्ञानमेव न भवति, भवद्वा तज्जातीयत्वमालम्बते इत्यस्मत्पितृचरणाः ।

प्रकाशिका ।

**आनुभविकमिति** । क्वचिदुपाधित्वमनुभवसाक्षिकं यथा कुङ्कुमारुणा तरुणीत्यत्र कुङ्कुमशब्दस्य क्वचिदौपपत्तिकं तदन्वयव्यतिरेकानुविधानकल्पनीयम् यथा रक्तः स्फटिक इत्यत्रेत्यर्थः । **स्त्रीपुंसेति** । स्त्रीपुंसप्रभवेषु हि तावेवोपाधी वाच्यौ तौ च तदा नानुभूयेते इति दूरे तयोरुपाधित्वानुभव इत्यर्थः । **अस्ति चेति** । न च देशविशेषवक्तृविशेषप्रयोज्यजात्योरेकत्वं नानात्वे विगमकाभावः,

मकरन्दः ।

गिकत्वाचेत्यर्थः । **आनुभविकमिति** । यत्रोपाध्याश्रयसम्बन्धात्तथाधीस्तत्रोपाधेरानुभविकत्वं, यत्र

टिप्पणी ।

**तारत्वमपि गत्वादिव्याप्यं भिन्नमिति** । परमतारेषु गकारेषु एकं तारत्वम् परममन्दे चैकं मन्दत्वम् परे च तारत्वमन्दत्वे समानाधिकरणे एवेति न साङ्कर्यम् । समानाधिकरणे एव च तारत्वमन्दत्वे उत्कर्षरूपत्वात्तदवधिनिरूपिते तत्तदवधिनिरूपितत्वविशिष्टत्वेन प्रतिनियताधिकरणवृत्तिताऽभ्युपेयते तथा चायमस्मात्तारो गकारोऽयञ्चास्मान्मन्दो गकार इति प्रतीतिर्गकारभेदं

नापि सत्प्रतिपक्षत्वम् । मिथो विरुद्धयोर्वास्तवतुल्यबलत्वाभावात् । एकस्यान्यतमाङ्गवैकल्यचिन्तायामस्य वैकल्ये तस्यैवोद्भाव्यत्वात्, अवैकल्ये त्वदीयेनैव विकलेन भवितव्यमिति हीनस्य न सत्प्रतिपक्षत्वम् ।

तथापि नित्यः शब्दोऽद्रव्यद्रव्यत्वादित्यत्रापि साधनदशायां किञ्चिद्वाच्यमिति चेदसिद्धिः । द्रव्यं शब्दः साक्षात्सम्बन्धेन गृह्यमाणत्वाद् घटवदिति सिद्ध्यतीति चेन्न । एतस्याप्यसिद्धेः । न हि श्रोत्रगुणत्वे, द्रव्यत्वे वाऽसिद्धे साक्षात्संबन्धे

बोधनी ।

न च केनापि प्रमाणेन सत्प्रतिपक्षत्वं संभवतीत्याह—नापि इति । न तावत्तुल्यबलेन, परस्परविरुद्धयोः सिद्धवस्तुविषययोः प्रमाणयोर्वास्तवतुल्यबलत्वाभावाद् वस्तुनो द्वैरूप्यप्रसङ्गात्, अतोऽन्यतरस्य वैकल्ये तदेव दूषणं वाच्यम् उपजीव्यत्वादस्य वैकल्ये तदा त्वदीयनित्यत्वानुमानं विकलं स्यादिति न तस्य प्रतिपक्षत्वमिति । मा भूद्वस्तुतः समाधिकहीनबलवतः सत्प्रतिपक्षत्वं, तथाप्याभिमानिकतुल्यबलत्वेनानेन सत्प्रतिपक्षत्वोद्भावने सति किञ्चिद् दूषणं तर्कस्य वक्तव्यमित्याह—तथापि इति । यद्वा, प्रतिपक्षत्वासम्भवेऽपि स्वपक्षसाधनाय प्रयुक्तेऽस्मिन्नित्यत्वानुमाने किमपि दूषणं वक्तव्यमित्याह—तथापि इति । उत्तरमाह—असिद्धिरिति । शब्दस्य द्रव्यत्वमसिद्धमिति । द्रव्यत्वसिद्धावनुमानमाह—द्रव्यम् इति । गुणादिभिरनैकान्तिकता मा भूदित्युक्तं—साक्षात् इति । परिहरति—न इति ।

प्रकाशः ।

सत्प्रतिपक्षत्वञ्च वस्तुतस्तुल्यबलेन, तत्तया प्रतिसंहितेन वा ? । नाद्य इत्याह । मिथ इति । तथात्वे वा वस्तुनो विरुद्धद्वैरूप्यापत्तेरिति भावः । अङ्गं=पक्षसत्त्वादि । अस्य=शब्दानित्यत्वसाधनस्य । द्वितीयं शङ्कते । तथापीति । न केवलं प्रतिपक्षतादशायां, साधनदशायामपीत्यपेरर्थः । न द्रव्यं समवायिकारणं यस्य तदद्रव्यम्, अद्रव्यत्वादित्युच्यमाने प्रागभावेन व्यभिचारः स्यादिति द्रव्यं विशेषणम् । असिद्धिरिति । विशेषणविशेष्ययोरित्यर्थः । असिद्धस्य न सत्प्रतिपक्षत्वसाधनत्व इति भावः । विशेष्यसिद्धौ मानमाह—द्रव्यमिति । संयोगसमवायान्यतरत्वं सम्बन्धे साक्षात्त्वम् । यद्यपि भट्टानां श्रोत्रेण शब्दस्याजः संयोगोऽन्येषां समवाय इति साक्षात् सम्बन्धेन गृह्यमाणत्वं न कस्याप्यसिद्धं, तथापि शब्दस्य गुणत्वाऽनभ्युपगमे तत् प्रत्येतुमशक्यमि-

प्रकाशिका ।

एकस्या एव जातेरुभयप्रयोज्यत्वाङ्गीकारात, तद्देशीयतत्पुरुषीयशब्दस्यैतद्देशीयैतत्पुरुषीयाच्च वैजात्यात् । अनुगतमतिश्च देशभेदपुरुषभेदरूपोपाधिभेदाद् विरोधमाशङ्क्य व्याचष्टे । न द्रव्यमिति । यद्यपि समवायिकारणशून्यद्रव्यत्वादिति हेतुरेवं पर्यवसितः, तत्र च समवायिपदव्यर्थता, तथाप्यखण्डाभावे न वैयर्थ्यमित्यभिप्रायेणाव्यर्थता । विशेषणविशेष्ययोरिति । न चैवमग्रे द्रव्यत्वमात्रसाधनादुद्धारे न्यूनता, द्रव्यत्वे सिद्धे अकारणत्वस्याप्याक्षेपादित्याशयात् । तथापीति । यद्यपि द्रव्यश्रोत्रगुणान्यतरत्वनिश्चयेऽपि साक्षादित्यादिहेतुनिश्चयः, तथापि बाधकादेव द्रव्यत्वानिश्चय इत्यत्र

मकरन्दः ।

न तदाश्रयानुविधानमात्रं न सम्बन्धस्तत्रौपपत्तिकत्वमिति भेदः । यद्वा, कुङ्कुमेनारुणा न तु स्वभावत इति कुङ्कुमस्योपाधित्वमनुभूयमानं, कृपाणे तु तथात्वमन्वयव्यतिरेकगम्यं; न तु तद्वत् कृपाणदीर्घं मुखमिति प्रत्ययभेदः । अपरं शब्दप्रकाशे द्रष्टव्यम् । विरोधमाशङ्क्य व्याचष्टे—न द्रव्यमिति । यद्यप्येवं समवायिकारणशून्यद्रव्यत्वादिति फलिते हेतौ समवायिपदमधिकं, तथाप्यखण्डाभावे वैयर्थ्यं नेति ध्येयम् । तथापीति । यद्यपि गुणत्वानभ्युपगमेऽपि द्रव्यगुणान्यतरत्वनिश्चयदशायां

टिप्पणी ।

विना नोपपद्यते एकावधिनिरूपितत्वविशिष्टतारत्वमन्दत्वयोरेकत्रासत्त्वादिति भावः ।

शब्दस्य प्रमाणमस्ति । परिशेषोऽस्ति । तथा हि । सदाद्यभेदेन सामान्यादित्रय-व्यावृत्तौ, मूर्त्तद्रव्यसमवायनिषेधेन कर्मत्वनिषेधाद् द्रव्यगुणत्वपरिशेषे संयोगस-मवाययोरन्यतरः संवन्ध इति चेन्न । वाधकवलेन परिशेषे द्रव्यत्वस्यापि निषेधा-ल्लिङ्गग्राहकप्रमाणवाधापत्तेः । वाधके सत्यपि वा द्रव्यत्वाप्रतिषेधे, कर्मत्वादीनाम-प्यप्रतिषेधप्रसक्तौ परिशेषासिद्धेः, तस्मादेकदेशपरिशेषो न प्रमाणं, सन्देहसङ्कोच-मात्रहेतुत्वात् । अथ द्रव्यत्वे किं वाधकम् ? उच्यते, शब्दो न द्रव्यं, वहिरिन्द्रिय-

---

बोधनी ।

साक्षात्संवन्धो नाम संयोगः समवायो वा तदन्यतरसिद्धेर्द्रव्यत्वगुणत्वयोरन्यतरसिद्ध्यधीनत्वान्न ततः प्राक् साक्षात्सम्बन्धः सिध्यतीति परिशेषानुमानेन तत्सिद्धिमाह—**परिशेषः** इति । 'सद-नित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' इति ( वै० सू० १. १. ८. ) । सत्तादिमत्त्वेन सामान्यविशेषसमवायेभ्यो व्यावृत्तस्य मूर्त्तद्रव्यासमवायेन कर्मणोऽपि व्यावृत्तौ द्रव्यत्वगुणत्वयोरन्यतरपरिशेषे साक्षात्संवन्धसिद्धिरिति । तर्हि कर्मत्वादिवद् द्रव्यत्वेऽपि वाधकसद्भावेन गुणत्वस्यैव परिशेषात् साक्षात्संवन्धग्राहिणा परिशेषानुमानेनैव द्रव्यत्वानुमानस्य वाधप्रसङ्ग इत्याह—**न** इति । अन्यथा द्रव्यत्वगुणत्वयोरपि परिशेषो न स्यादित्याह—**वाधकः** इति । न चायं परिशेषः प्रमाणं पदार्थषट्कविषयस्य संदेहस्य द्रव्यगुणविषयत्वे संकोचमात्रहेतुत्वे न संशयादनिस्तारादित्युपसंहरन्नाह—**तस्मात्** इति । **अथेति** । येन ततोऽपि परिशेषाल्लिङ्गग्राहकप्र-माणवाधः स्यादिति । तदाह—**उच्यते** इति । द्रव्यत्वासिद्धौ न चासिद्धविशेषेणाद्रव्यद्रव्यत्वादित्यनेन

प्रकाशः ।

त्युपजीव्यविरोध इत्याशयवानाह—**न हीति** । **सदादीति** । सत्तावत्त्वजातिमत्त्वादिनेत्यर्थः । इतरनिषेधकवद् द्रव्यत्वेऽपि निषेधकसत्त्वात्तन्निषेधे गुणत्वसिद्धौ द्रव्यत्वसाधकं वाधितमि-त्याह—**वाधकेति** । परिशेषसिद्धिमभ्युपेत्याह—**तस्मादिति** । द्रव्यादिकोटिसंशयप्रवृत्तेरेक-देशे कर्मादिकोटौ संशयोच्छेदेऽपि द्रव्यगुणकोटिमादाय संशयस्य तादवस्थ्याद् द्रव्यत्वे वाधिते क्व तत्साधनत्वमित्यर्थः । **वहिरिन्द्रियेति** । चक्षुरग्राह्यवहिरिन्द्रियग्राह्यजातिमत्त्वा-

प्रकाशिका ।

तात्पर्य्यम् । वाधकञ्च मूल एवोक्तमिति । न चानेनैव तस्यापि सत्प्रतिपक्षितत्वात् कथं तेनास्य वाध इति वाच्यम् । एवमपि द्रव्यत्वासिद्धौ समीहितसिद्धेः, वस्तुतः संयोगसमवायान्यतरगर्भहेतौ व्यर्थवि-शेषणता प्रत्येकगर्भहेतौ च स्वरूपासिद्धिदृष्टान्तासिद्धी इति हीनस्य तस्याद्रव्यत्वसाध्यकेन वाध एवेति । **उपजीव्येति** । हेतुसिद्ध्यर्थं गुणत्वसिद्धेरुपजीव्यत्वादिति भावः । ननु वहिरिन्द्रियव्यवस्था-हेतुत्वं यद्येकमात्रवहिरिन्द्रियग्राह्यत्वं तदा प्रभादौ व्यभिचारि, अन्त्ये शब्दे भागासिद्धञ्चेत्यतो व्याचष्टे **चक्षुरग्राह्येति** । इदञ्च जातिविशेषणं प्रभादौ व्यभिचारवारणाय, आत्मनि व्यभिचार इति

मकरन्दः ।

तत् प्रत्येतुं शक्यमेव, तथापीयं शङ्का मूल एवानुपदं निरस्येति भावः । वस्तुतो वाधादेव न द्रव्यत्व सिद्धिः; वाधकञ्च मूल एवोक्तमिति प्रबन्धकतात्पर्य्यम् । न चानेनैव तस्यापि सत्प्रतिपक्षितत्वात् कथं तेनास्य वाध इति इति वाच्यम् , संयोगसमवायान्यतरसम्बन्धेन गृह्यमाणत्वादित्यत्र, समवाय-गर्भत्वेन व्यर्थविशेषणतया व्याप्यत्वासिद्धत्वेन, अन्यथा स्वरूपासिद्धत्वेन, वक्ष्यमाणेन चोपाधि-नाऽस्य हीनवलत्वात् । **उपजीव्येति** । हेतुसिद्ध्यर्थं गुणत्वसिद्धेरुपजीव्यत्वात्तद्विरोध इत्यर्थः । ननु वहिरिन्द्रियव्यवस्थापकत्वं, तत्तद्वहिरिन्द्रियमात्रग्राह्यत्वं, तथा च प्रभादौ व्यभिचारः, अतो-न्द्रियशब्दांशे चाश्रयासिद्धिरित्यत आह **चक्षुरग्राह्येति** । एतच्च प्रभादावेव व्यभिचारवारणाय जातिविशेषणम् । आत्मनि तद्वारणाय **वहिरिन्द्रियेति** । उक्तभागासिद्धिनिरासाय जातिगर्भत्वम्

टिप्पणी ।

**चक्षुरग्राह्यवहिरिन्द्रियग्राह्येति** । तत्तद्वहिरिन्द्रियमात्रग्राह्यत्वस्य वहिरिन्द्रियव्यवस्थाहेतुत्व-

व्यवस्थाहेतुत्वात्, रूपादिवदिति परिशेषाद् गुणत्वेन समवायिसिद्धौ, लिङ्गग्राहकप्रमाणबाधितत्वाद् नाव्यवहितसंबन्धग्राह्यत्वेन द्रव्यत्वसिद्धिः । न चासिद्धेन सत्प्रतिपक्षत्वम् । असिद्धस्य हीनबलत्वात् ।

ननु शब्दस्तावदश्रोत्रगुणो नैवेति त्वयैव साधितं प्रबन्धेन । न च श्रोत्रगुणः, तेन गृह्यमाणत्वात्, यद् येनेन्द्रियेण गृह्यते नासौ तस्य गुणः, यथा गृह्यमाणो गन्धादिः । श्रोत्रं वा न स्वगुणग्राहकम्, इन्द्रियत्वाद् घ्राणवदिति न गुणत्वसिद्धिरिति चेत् । ततः किम् ? । न चैतदपि । घ्राणादिसमवेतगन्धाद्यग्रहे स्वगुणत्वस्या-

बोधनी ।

सत्प्रतिपक्षमनित्यत्वानुमानस्येत्याह—न चासिद्धेन इति । यद्वा, नास्मत्प्रतिपक्षस्य स्वरूपसिद्धिरिति ।

ननु श्रोत्रव्यतिरिक्तानां पृथिव्यादीनां गुणः शब्दो नेति भवद्भिरेव परिशेषानुमानेन साधितम् । वयं तु श्रोत्रगुणो नेति अनुमानद्वयेन साधयामः । ततश्च गुणत्वस्यैवासिद्धौ द्रव्यत्वमेव परिशिष्यत इति । केचित्तु शब्दः श्रोत्रगुणो नेति पठन्ति । तत्रायमर्थः । महता प्रबन्धेन शब्दस्य श्रोत्रग्राह्यत्वं प्रतिपादयता त्वयैव श्रोत्रगुणो नेति साधितं भवति कथमेतेनैतदप्रतिपादितं भवेदित्यत्रोक्तं—न श्रोत्रगुणः इति । न हि श्रोत्रग्राह्यः शब्दः तद्गुणो भवतीति । मा भूद् गुणत्वसिद्धिर्द्रव्यत्वं तु कुतस्त्यमित्याह—ततः किम् इति । यद्वा, अनुग्राहकतर्काभावेऽनुमानमात्रान्न किञ्चित्सिध्यतीति सोपाधित्वादप्रयोजकत्वं वानुमानद्वयमित्याह—न चैतदपि इति । स्वगुणत्वस्यैव ग्रहणप्रयोजकत्वेऽ-

प्रकाशः ।

द्रसादिवदित्यर्थः । अथ परिशेषो नोपजीव्यस्तत्राह—न चेति । अनेन द्रव्यत्वसाधनस्य प्रतिरुद्धत्वादद्रव्यद्रव्यत्वासिद्धौ न तेनाऽनित्यत्वसाधने सत्प्रतिपक्षत्वमित्यर्थः ।

ननु गुणत्वेऽपि बाधकाद् न तत्सिद्धिस्ततो न आदिलिङ्गग्राहकमानबाध इत्याह—

नन्विति । गुणत्वासिद्धावपि द्रव्यत्वासिद्धौ न साक्षात्सम्बन्धेन गृह्यमाणत्वे प्रमाणमुक्तं स्यादित्याह—तत इति । ननु गुणत्वे निषिद्धे परिशेषाद् द्रव्यत्वं सेत्स्यतीत्यत आह—न चेति । प्रथमानुमाने श्रोत्रयोग्यगुणत्वव्याप्यजातिशून्यत्वमुपाधिरन्त्यानुमाने त्वयोग्यगुणत्वमुपा-

प्रकाशिका ।

धिरिति । उक्तभागासिद्धिनिरासाय जातिगर्भता । धर्म्ममात्रगर्भतायां गन्धादिकमादाय द्रव्ये व्यभिचार इति जातित्वपर्यन्तानुधावनम् । एवं च सति यथाश्रुतमूलदृष्टान्तासङ्गतिरत आह—रसादिवदिति । मूलस्याप्यतद्गुणसंविज्ञानबहुव्रीहिणात्रैव तात्पर्य्यमिति भावः । प्रतिरुद्धत्वात् । बाधितत्वादित्यर्थः, । प्रथमानुमान इति । श्रोत्रगुणत्वाभावसाधक इत्यर्थः । रूपादौ साध्याव्यापकत्वनिरासाय श्रोत्रयोग्येति । सत्तामादाय स एव दोष इति गुणत्वव्याप्येति । ककारभिन्नगुणत्वमादाय स एव दोष इति जातीति । न च पक्षेतरत्वमुपाधिरिति वाच्यम् । ध्वनयो वायवीया एवेति मते ध्वनौ सिद्धसाधनभयेन वर्णमात्रस्यैव पक्षत्वमिति पक्षभिन्नध्वनिव्यावर्त्तकत्वाद् । केचित्तु बाधोन्नीततया न पक्षेतरत्वे दोषः, बाधकश्च परिशेष एवेत्याहुः । अयोग्यगुणवत्त्वमिति । योग्यगुणाभाववत्त्वमित्यर्थः । आत्मनि परमाणौ च यथाश्रुतसाध्याव्यापकत्वादाह

मकरन्दः ।

जातित्वपर्य्यन्तञ्च गन्धादिकमादाय द्रव्ये व्यभिचारवारणार्थम् । एवं सति मूलदृष्टान्तस्य साधनवैकल्यादाह रसादिवदिति । प्रतिरुद्धत्वादिति । बाधितत्वादित्यर्थः । श्रोत्रयोग्येति । एतच्च रूपादौ साध्याव्याप्तिवारणार्थम् । सत्तामादाय दोषतादवस्थ्यादाह गुणत्वव्याप्येति । गुणान्यान्यत्वमादाय दोषतादवस्थ्यादाह जातीति ।

टिप्पणी ।

रूपत्वे प्रभायां व्यभिचारोऽतीन्द्रियशब्दे भागासिद्धिश्च स्यादत आह—चक्षुरग्राह्येति ।

ऽप्रयोजकत्वात् । अयोग्यत्वं हि तत्रोपाधिः । अन्यथा, सुखादिरात्मगुणः, तेन गृह्यमाणत्वाद् रूपादिवत् । न वा तेन गृह्यते, तत्समवेतत्वाद्द्रष्टवत् । आत्मा वा न तद्ग्राहकः, तदाश्रयत्वाद् , गन्धाद्याश्रयघटादिवदित्याद्यपि शङ्केत । तस्मात् स्वगुणः परगुणो वाऽयोग्यो न गृह्यते, गृह्यते तु योग्यो योग्येन, तत् किमत्राऽनुपपन्नम् । अवश्यञ्च श्रोत्रेण विशेषगुणग्राहिणा भवितव्यम् । इन्द्रियत्वात् । अन्यथा तन्निर्माणवैयर्थ्यात् तदन्यस्येन्द्रियान्तरेणैव ग्रहणात् । न च द्रव्यविशेषग्रहणे तदुपयोगः । विशेषणयोग्यतामाश्रित्यैवेन्द्रियस्य द्रव्यग्राहकत्वात् , न द्रव्यस्वरूपयोग्यतामात्रेण । अन्यथा चान्द्रमसं तेजः स्वरूपेण योग्यमिति तदप्युपलभ्येत । आत्मा वा मनोग्राह्य इति सुषुप्त्यवस्थायामप्युपलभ्येत । अनुद्भूतरूपेऽपि वा चक्षुः प्रवर्त्तेत, तस्माद् गुणयोग्यतामेव पुरस्कृत्येन्द्रियाणि द्रव्यमुपाददते, नातोऽन्यथेति स्थितिः । अत एव नाकाशादयश्चाक्षुषाः ।

अस्तु तर्हि शब्दो नित्यः, नित्याकाशैकगुणत्वात् , तद्गतपरममहत्परिमाणव-

बोधनी ।

निष्टमाह—**अन्यथा** इति । उपसंहरति—**तस्मात्** इति । इन्द्रियत्वहेतोरप्रयोजकत्वायोक्तं—**योग्येन** इति । एवं शब्दस्य गुणत्वे बाधकमाशङ्क्य निरस्तम् । साधकमप्याह—**अवश्यं च** इति । तदर्थस्य श्रोत्रविषयस्य शब्दस्येति । ननु द्रव्यविशेषस्यैव सतः शब्दस्य ग्रहणार्थं श्रोत्रनिर्माणमस्तु इन्द्रियान्तराणां तत्रासामर्थ्यादित्यत्राह—**न च** इति । इन्द्रियं द्रव्यगतविशेषगुणग्रहणयोग्यतां सहकारित्वेनाश्रित्यैव द्रव्यं गृह्णाति नान्यथेति । द्रव्यस्य स्वरूपयोग्यतामात्रेणेन्द्रियग्राह्यत्वेऽनिष्टमाह—**अन्यथा** इति । उपसंहरति—**तस्मात्** इति । **अत एव** इति । यत एव विशेषगुणग्रहणपुरस्कारेणैवेन्द्रियग्राह्यत्वं द्रव्याणामिति शब्दस्य श्रोत्रगुणत्वेनाद्रव्यद्रव्यत्वमसिद्धं तर्हीदमेव प्रतिसाधनमस्त्विति

प्रकाशः ।

धिरित्यप्रयोजकत्वमुभयत्रेत्यर्थः । अत एवाप्रयोजकान्तरतुल्यत्वमाह—**अन्यथेति** । साक्षात्संबन्धेन गृह्यमाणत्वादित्यत्र बाह्येन्द्रियत्वावच्छिन्नसाध्यव्यापकं सावयवकत्वमुपाधिः । ननु बहिरिन्द्रियव्यवस्थापकत्वमप्यप्रयोजकमित्याशङ्क्य तत्र विपक्षबाधकमाह—**अवश्यञ्चेति** । अत्रापि विपक्षबाधकमाह **अन्यथेति** । ननु स्वरूपयोग्यतैव द्रव्यप्रत्यक्षत्वे तन्त्रम्, अत एव विशेषगुणशून्यानां कालादीनां न प्रत्यक्षत्वमित्यत आह **तस्मादिति** । न च नाद एव तस्य विशेषगुणः स्यात् । ध्वन्यात्मकस्य नादस्याग्रहेऽपि वर्णसाक्षात्कारात् । नाऽपि तारत्वादिकं तेषामुत्कर्षादिरूपतया जातित्वात् । अत एव तस्य जातिरूपत्वेऽप्यवधिनिरूप्यत्वमिति भावः । **अत एवेति** । तद्विशेषगुणस्य चक्षुरग्राह्यत्वादित्यर्थः ।

**आकाशैकेति** । अनेकगुणेन संयोगादिना व्यभिचारवारणार्थमेकग्रहणम् । अत्र यद्यपि आकाशैकगुणत्वमाकाशमात्रवृत्तिगुणत्वं, तत्र गुणत्वं व्यर्थम् । तथापि ध्वंसानवच्छिन्नसत्तायोगित्वं

प्रकाशिका ।

**बाह्येन्द्रियेति** । **कालादीनामिति** । कालः षडिन्द्रियवेद्य इति मतेनेदम्, तुल्यन्यायतया दिशोऽपि प्रत्यक्षत्वं शब्दस्य प्रत्यक्षत्वं तद्रूपेतमेवेति बहुवचनोपपत्तिः । **अत एवेति** । उत्कर्षत्वादेवेत्यर्थः ।

मकरन्दः ।

**अत एवेति** । उत्कर्षरूपत्वादेवेत्यर्थः । एतदपि मतान्तरेणेति ध्येयम् । तन्मते सत्ताजातेर्वि-

टिप्पणी ।

**तथापि ध्वंसानवच्छिन्नसत्तायोगित्वं साध्यमिति** । ध्वंसाप्रतियोगित्वे सति प्रागभावा-

दिति प्रत्यनुमानमिति चेन्न । अकार्यत्वस्योपाधेर्विद्यमानत्वात् । अन्यथा, आत्मविशेषगुणा नित्याः, तदेकगुणत्वात्, तद्गतपरममहत्त्ववदित्यपि स्यात् । अस्य प्रत्यक्षबाधितत्वादहेतुत्वमिति चेन्न । निरुपाधेर्बाधानवकाशात् । स्वभावप्रतिबद्धस्य च तत्परित्यागे स्वभावपरित्यागप्रसङ्गात् । तस्माद् बाधेन वोपाधिरुन्नीयते, अन्यथा वेति न कश्चिद्विशेषः ।

एतेन श्रावणत्वाच्छब्दत्ववदित्यपि परास्तम् । अत्रापि तस्यैवोपाधित्वात् । अन्यथा गन्धरूपरसस्पर्शा अपि नित्याः प्रसज्येरन् । घ्राणाद्येकैकेन्द्रियग्राह्यत्वाद् गन्धत्वादिवदित्यपि प्रयोगसौकर्यात् ।

---

बोधनी ।

प्राभाकराः प्रत्यवतिष्ठन्ते-तर्हि इति । न इति । अत्राकार्यत्वौपाधिकत्वात्तदेकगुणत्वमप्रयोजकमिति तस्यैव प्रयोजकत्वेऽनिष्टमाह-अन्यथा इति । अत्र ह्यकार्यत्वस्योपाधित्वं त्वयाप्यङ्गीकार्यमिति भावः । नन्वात्मगुणानां नित्यत्वानुमानस्य तदनित्यत्वग्राहिमानसप्रत्यक्षबाधादप्रामाण्यं, न त्वकार्यत्वोपाधिकत्वादित्याह-अस्य इति । न इति । यद्ययं निरुपाधिस्तदा बाध एव न स्यादिति । कुत इत्यत आह-स्वभाव इति । यदि हि केनचित्स्वभावस्तं प्रतिबद्धस्तस्यैव नित्यत्वप्रयोजकत्वेऽनिष्टमाह-अन्यथा इति । तदेवमनित्यत्वानुमानस्य बाधः सत्प्रतिपक्षत्वं च निराकृतं, विरो

प्रकाशः ।

साध्यम् । तत्र विशेषपदार्थेऽनैकान्तिकवारणार्थं गुणग्रहणमित्याहुः । अकार्यत्वस्येति । पूर्वसाधनव्यतिरेकोऽपि साध्यप्रयोजकतया यथोपाधिस्तथोक्तमधस्तात् । अपि चोपाधेर्नित्यदोषत्वात् साधनपौर्वापर्यस्य चानियतत्वाद्यदा तदेव साधनं स्थापनायां प्रयुज्यते तदा सोपाधिः, यदा तु दूषणतया तदेवोच्यते तदा पूर्वसाधनव्यतिरेकादकार्यत्वमनुपाधिरिति तदेव नित्यत्वेन व्याप्तमव्याप्तञ्चेति महद्वैशसमिति भावः । उपाधेः साध्यव्यापकताग्राहकं तर्कमाह अन्यथेति । निरुपाधेरिति । बाधे हि पक्षाभिमते व्यभिचारस्तत्र चावश्यमुपाधिरित्यर्थः । एतच्च जलह्रदो वह्निमान् धूमवत्वादित्यादावपक्षवृत्तिनि साधने नास्तीति पक्षधर्मे तत्र बोद्धव्यम् । अन्यथा वेति । बाधमनुपजीव्येत्यर्थः ।

श्रावणत्वादिति । गुणवृत्तिजात्यनभ्युपगन्तृमते शब्दत्वं श्रोत्रग्राह्यत्वम् । तत्र न श्रावणत्वमिति कालस्य षडिन्द्रियवेद्यत्वात् स एव दृष्टान्त इति भावः । तस्यैवेति । अकार्यत्वस्यैवेत्यर्थः । शब्दो नित्यः पृथिवीतरनित्यभूतविशेषगुणत्वाद्, अपाकजनित्यभूतैकसमवेतत्वात्, जल-

प्रकाशिका ।

इदमपि तारत्वस्य स्वरूपेण सावधित्वे सत्ताजातेर्विशेषपदार्थस्य च तैरनङ्गीकारादरुचिमाविष्करोति । आहुरिति । एवञ्चाकाशमात्रवृत्तित्वमाकाशेतरावृत्तित्वमेवाभिमतमित्यवृत्तौ समवायेऽनित्ये च तन्मते व्यभिचार इति गुणपदं मूले परिभावनीयम् । केचित्तु गुणपदमप्रधानार्थकमित्याकाशमात्रपरतन्त्रत्वादिति मूलार्थ इत्याहुः । अपाकजेति । न च परमाणुकर्मणि व्यभिचारः, अत्रापि विशेषगुणत्वादित्यस्यैकसमवेतत्वादिति प्रतीकार्थत्वात् विशेषपदं च

मकरन्दः ।

शेषपदार्थस्य चानभ्युपगमादस्वरसमाविष्करोति इत्याहुरिति । आकाशमात्रवृत्तित्वस्य तदितरावृत्तित्वे तात्पर्य्यम् । एवञ्च तन्मते समवाये व्यभिचारवारणाय गुणपदमित्यन्ये । गुणपदमप्रधानार्थकं, तथा चाकाशैकपरतन्त्रत्वादित्येव विवक्षितमित्यप्याहुः । हेत्वन्तरव्याख्यानं शब्दप्रकाशे

विरोधव्यभिचारावसम्भावितावेवाऽत्रेत्यसिद्धिरवशिष्यते। साऽपि नास्ति। तथा हि। शब्दस्तावत् पूर्वोक्तन्यायेन स्वाभाविकतीव्रमन्दतरतमादिभावेन प्रकर्षनिकर्षवानुपलभ्यते। इयञ्च प्रकर्षनिकर्षवत्ता कारणभेदानुविधायिनी सर्वत्रोपलब्धा। अकारणका हि नित्याः प्रकर्षवन्त एव भवन्ति, यथाऽऽकाशादयः। निकृष्टा एव वा, यथा परमाण्वादयः। न तु किञ्चिदतिशयानाः कुतश्चिदपकृष्यन्ते। तदियं नित्येभ्यो व्यावर्त्तमाना कारणवत्सु च भवन्ती जायमानतामादायैव विश्राम्यतीति प्रतिबन्धसिद्धौ प्रयुज्यते, शब्दो जायते, प्रकर्षनिकर्षाभ्यामुपेतत्वान्माधुर्यादिवत्। अन्यथा, नियामकमन्तरेण भवन्ती नित्येष्वपि सा स्यात्, नियमहेतोरभावात्। शब्दादन्यत्रेयं गतिरिति चेन्न। साध्यधर्मिणं विहायेति प्रत्यवस्थानस्य सर्वानुमानसुलभत्वात्। न चेद् व्यञ्जकतारतम्याद्व्यञ्जनीयतारतम्यम्, अस्वाभाविकत्वप्रसङ्गात्। व्यवस्थितत्वञ्च स्वाभाविकत्वम्। न च व्यञ्जकोत्पादकाभ्यामन्यस्यानुविधानमस्ति। न च स्वाभाविकत्वौपाधिकत्वाभ्यामन्यः प्रकारः सम्भवति।

---

बोधनी।

धव्यभिचारौ त्वसंभावितावेव सपक्षवृत्तिसद्भावाद्विपक्षे वृत्त्यभावाच्चेत्याह—**विरोध** इति। तस्मादन्यतरासिद्धिरेव संभाव्यतया विशिष्टा, सापि निराक्रियत इत्याह—**अत्रेति** इति। हेतुसिद्धावनुमानं विपक्षस्तस्य प्रतिबन्धसिद्धिं तावदाह—**शब्दस्तावत्** इति। **पूर्वोक्तन्यायेन** इति। तीव्रत्वादीनामन्यधर्मत्वेनानुपलम्भः शब्दगतत्वेनोपलम्भः शब्दधर्मत्वेनैवोपलम्भो बाधकाभाव इत्यादिर्यः पूर्वमुक्तस्तेनेति। ततः किमित्यत्राह—**इयं च** इति। सर्वत्र माधुर्यादौ कारणप्रकर्षनिकर्षानुविधायिनी दृष्टेत्यन्वयं दर्शयित्वा व्यतिरेकमपि दर्शयति—**अकारणका हि** इति। ततोऽपि किमित्यत्राह—**तदियम्** इति। तस्मादियं प्रकर्षनिकर्षवत्तेति। तत्रानुमानं तदनुग्राहकं च दर्शयति—**शब्दो जायते** इति। नियामकं कारणप्रकर्षनिकर्षरूपमन्तरेण शब्दे भवन्ती प्रकर्षनिकर्षवत्ता गगनादिष्वपि भवेत्, शब्द एव नाकाशादिष्वस्तीति नियमहेत्वभावादिति। ननु शब्दव्यतिरिक्तस्य प्रकर्षनिकर्षवत्त्वं जायमानतया व्याप्तं तद्दर्शनान्न तु प्रकर्षनिकर्षवत्तामात्रमित्याह—**शब्दात्** इति। **न** इति। बाधकाभावेऽपि व्याप्तिसङ्कोचे सर्वानुमानोच्छेदः स्यादिति। ननु व्यञ्जकानां ध्वनीनां प्रकर्षनिकर्षाभ्यां व्यञ्जनीयस्य शब्दस्य तद्वत्ताभिमानः, ततश्चासिद्धो हेतुरित्याशङ्क्याह—**न च** इति। प्रसज्यतां कामं, तदेव नः समीहितम्। अत्राह—**व्यवस्थितत्वञ्च** इति। ध्वनिधर्माणामारोपस्यासंभवादिति। ननु मा भूद् व्यञ्जकोपाधित्वं तारतारतरत्वादेस्तथापि कथं कारणप्रकर्षाद्यनुविधानं कथं वा स्वाभाविकत्वं सिध्यतीत्यत्राह—**न च** इति। औपाधिकत्वनिषेधेन परिशेषात् सिध्यति गत्यन्तराभावादिति।

प्रकाशः।

परमाणुरूपवत्। अव्यासज्यवृत्तित्वे सत्यनात्मविभुगुणत्वाद्, विशेषगुणान्तरासमानाधिकरणैकवृत्तिगुणत्वात्, कालपरिमाणवदित्यत्राप्यकार्यत्वमुपाधिरिति भावः। **पूर्वोक्तेति**। उपाधेरनुपलम्भेन तद्गततया चोपलम्भेन चेत्यर्थः। **प्रकर्षनिकर्षाभ्यामिति**। ननूत्कर्षापकर्षयोर्जात्योर्जा-

प्रकाशिका।

परमाणुनिष्ठदैशिकपरत्वादौ व्यभिचारवारणाय। **अव्यासज्येति**। न च गुणपदमधिकं समवाय कालादिवृत्तौ तन्मते व्यभिचारवारकत्वात् तस्यापि व्यासज्यसमवेतत्वाभावात्। **विशेषगुणेति**।

टिप्पणी।

प्रतियोगित्वापेक्षया लघुत्वादिदमेव साध्यमुचितं तत्र व्यभिचारवारणं सम्भवति प्रयोजनमित्याशयः। **विशेषगुणान्तरासमानाधिकरणेति**। शब्दान्यविशेषगुणासमानाधिकरणेत्यर्थः। तेन वायुस्पर्शे

स्यादेतत् । तथाप्युत्पत्तेर्नित्यत्वेन को विरोधो येन प्रतिबन्धसिद्धिः स्यात् ? । असिद्धे च तस्मिन्, भवतां व्यापकत्वासिद्धोऽस्माकमप्रयोजकः । सौगतानां सन्दिग्धविपक्षवृत्तिरयमुपक्रान्तो हेतुरिति चेन्न । इदं ह्युत्पत्तिमत्त्वं विनाशकारण-

बोधनी ।

तदेवमनित्यत्वानुमास्य स्वरूपासिद्धिर्निराकृता, संप्रति व्याप्यत्वासिद्धिं निराकर्तुमाशङ्कते– **तथापि** इति । भवतां नैयायिकानाम्, अस्माकं मीमांसकानामिति । न इति । उत्पत्तिमत्त्वं हि विनाशकारणसंनिधानेन व्याप्तं, तत इदं तत्सन्निधिविरुद्धेभ्यो नित्येभ्यः स्वव्यापकस्य विनाशकारणसन्निधानस्य निवृत्त्या निवर्त्तमानमनित्य एवावतिष्ठत इति व्यापकानुपलब्धिर्विपक्षे बाधकमिति । ननु स्यादेवं यद्युत्पत्तिमत्त्वस्य विनाशकारणसन्निधानेन व्याप्तिः स्यात्, सैव कुतो विपक्षे बाधका-

प्रकाशः ।

तिसङ्करापत्त्या रसत्वशब्दत्वव्याप्यजात्योर्भिन्नत्वेन रसशब्दसाधारण्यं साधनावच्छिन्नसाध्यव्यापकस्य मूर्त्तगुणत्वस्य स्पर्शवत्समवेतत्वस्य चोपाधित्वञ्च । मैवम् । उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तजातिमत्त्वादिति विवक्षितत्वात् । रसत्वादिव्याप्यजातिभेदेऽपि तादृशशब्दप्रवृत्तिनिमित्तत्वस्य साधारण्यात्, सर्वत्र वर्णात्मकशब्दपक्षीकरणे चानित्यध्वनिषु व्योमगुणेपूपाधीनां साध्याव्यापकत्वात्, पक्षमात्रव्यावर्त्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वाच्चेति भावः । विपक्षबाधकाभावेनोत्पत्तिमत्त्वमप्रयोजकमित्याह–**तथापीति** । उत्पत्तिमदपि किञ्चिन्नित्यं स्यादित्यर्थः ।

प्रकाशिका ।

शब्दभिन्नविशेषगुणासमानाधिकरणत्वादित्यर्थः, तेन न स्वरूपासिद्धिर्नवा पवनस्पर्शे व्यभिचारः । सुखादौ यथाश्रुतसाध्याव्यापकत्वादाह । **साधनेति** । यद्यपि सुखादावप्युत्कर्षापकर्षौ स्त इति विवक्षितोऽप्युपाधिः साध्याव्यापक एव । न च सजातीयसाक्षात्कारप्रतिबन्धकत्वादिना तन्निर्वचनासङ्गतिः, अज्ञातेषु सुखादिषु मानाभावेन तादृशोत्कर्षादेस्तेष्वभावादिति वाच्यम् । तथासति तस्य रसशब्दसाधारण्येन शब्दपर्यन्तानुधावनस्य हेतावसङ्गतेः । अन्यतरगर्भतयैव स्वस्थतायामुभयोपादानासङ्गतेश्च । तथापि साधनपदेनात्र पक्षधर्म्म एवोक्तः, स च सजातीयेत्याद्युक्तरूपो वहिरिन्द्रियव्यवस्थाहेतुस्वरूपो वा । **उत्कर्षापकर्षेति** । उत्कृष्टापकृष्टेत्यर्थः । पक्षे साध्याव्यापकत्वमनुद्भाव्यमेवेत्यत आह–**सर्वत्रेति । उपाधीनामिति** । यद्यपि पूर्वपक्षे द्वयोरेवाशङ्कितत्वाद् बहुवचनमयुक्तम् तथापि रूपवत्समवेतत्वादीनामपि तत्र तात्पर्य्यविषयत्वात्तदुपपत्तिः । **पक्षमात्रेति** । यद्यप्यात्मादेः सुखादेश्च व्यावर्त्तनान्न पक्षमात्रव्यावर्त्तकत्वमत एव च न पक्षेतरतुल्यत्वं तथापि साध्यव्यापकताग्राहकमानाभावेन पक्षेतरतुल्यत्वं वहिरिन्द्रियव्यवस्थाहेतुत्वरूपावच्छेदकाश्रयमध्ये च पक्ष-

मकरन्दः ।

द्रष्टव्यम् । सुखादौ साध्याव्याप्तेराह **साधनावच्छिन्नेति** । ननु सुखादावुत्कर्षापकर्षसम्भवात्तद्दोषतादवस्थ्यम् । न च सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वादिना तन्निर्वचनं, तादृशोत्कर्षादेः सुखादावसम्भवोऽविदिते तत्र मानाभावादिति वाच्यम् । तस्य रसचरमशब्दसाधारण्ये उत्कर्षापकर्षशब्देत्यादिविवक्षाविरोधात् । तथा सत्युत्कर्षापकर्षयोरन्यतरगर्भत्वेनैव सामञ्जस्ये व्यर्थविशेषणत्वापत्तेश्च । न च हेतुद्वये तात्पर्य्यम्, मूलविरोधादिति चेत्, न साधनपदेन पक्षधर्म्मस्य विवक्षितत्वात् । स च वहिरिन्द्रियव्यवस्थाहेतुत्वादिः । **उत्कर्षापकर्षेति** । उत्कृष्टापकृष्टेत्यर्थः । पक्षे साध्याव्यापकत्वमनुद्भाव्यमित्यत आह **सर्व्वत्रेति** । यद्यपि द्वयोरेवोक्तत्वादुपाधीनामित्ययुक्तं, तथाप्यन्यस्यापि तत्समनियतस्य तात्पर्य्यविषयत्वात्तदभिप्रायेण तथोक्तम् । **पक्षमात्रेति** । ननु सुखादेरपि व्यावर्त्तनान्न पक्षमात्रव्यावर्त्तकत्वम्, न च साधनवत्पक्ष

टिप्पणी ।

न व्यभिचारः । **उत्कर्षापकर्षशब्देति** । उत्कृष्टापकृष्टेति विवक्षितम् ।

सन्निधिविरुद्धेभ्यो नित्येभ्यः स्वव्यापकनिवृत्तौ निवर्त्तमानं, विनाशकसन्निधिमति विनाशिनि विश्राम्यतीति। विनाशकारणसन्निधानेनावश्यं जायमानस्य भवितव्यमिति कुतो निर्णीतमिति चेन्न। तदसन्निधानं हि न तावदाकाशादेरिव, स्वभावविरोधात्। उत्पत्तिविनाशयोः संसर्गदर्शनात्। अविरुद्धयोरसन्निधिस्तु देशविप्रकर्षाद् हिमवद्विन्ध्ययोरिव स्यात्। देशयोरपि विप्रकर्षो विरोधाद्वा हेत्वभावाद्वा? पूर्वोक्तादेव न प्रथमः। द्वितीयस्तु पटकुङ्कुमयोरिव स्यात्। यदि हि कुङ्कुमसमागमादर्वागिव प्रध्वंसकसंसर्गादर्वागेव पटो विनश्येत्। यथा हि विनाशकारणं विना न विनाशः, तथा यदि कुङ्कुमसमागमं विना न विनाशः पटस्येति स्यात् कस्तयोः संसर्गं वारयेत्। तस्मादविरुद्धयोरसंसर्गः कालविप्रकर्षनियमेन व्याप्तः, स चातो निवर्त्तमानः स्वव्याप्यमुपादाय निवर्त्तत इति प्रतिबन्धसिद्धिः।

बोधनी।

त्सिध्यतीत्याह-**विनाशकारणसंनिधानेन** इति। विनाशकारणासन्निधानं ह्युत्पत्तिमतो न तावद्भावाभावयोरिव स्वभावविरोधाद्भवति घटादिषु तयोः संसर्गदर्शनादित्याह- **तदसंनिधानम्** इति। तर्ह्यविरुद्धयोरेव हिमवद्विन्ध्ययोरिवासंसर्गोऽस्त्वित्यत्राह-**अविरुद्धयोः** इति। अस्तु तर्हि देशविप्रकर्षादेवेत्यत्राह-**देशयोरपि** इति। सोऽपि देशयोः स्वभावविरोधात् संसर्गहेत्वाभावाद्वा भवतीति ततः किमित्यत आह-**पूर्वोक्तात्** इति। यदि हि तद्देशयोः स्वभावविरोधः स्यात् ततस्तदाश्रययोरुत्पत्तिविनाशयोरपि संसर्गो न स्याद्, दृश्यते चासावित्युक्तमेवेति। **द्वितीयस्तु** इति। विनाशकारणजायमानत्वयोर्हेत्वभावादसंसर्गस्तु यथा पटकुङ्कुमयोरविरुद्धदेशस्वभावतया क्वचित्संसृष्टयोरपि संसर्गहेत्वभावात् क्वचिदसंसर्गः तथा कदाचित्स्यादिति। कथं च तथा स्यादित्याह-**यदि हि** इति। यथा हि कुङ्कुमसंसर्गात्प्रागेव क्वचित्पटविनाशाद्धेत्वभावेन तयोरसंसर्गः, तथा यदि विनाशकारणसमागमात् प्रागेव जायमानस्य विनाशः कदाचित्स्यात् तदा जायमानविनाशकारणयोरसंसर्गः स्यात्, न त्वेतत्संभवतीति। यदि वा यथा विनाशकारणसमागमे सत्येव विनाशः पटस्य नासतीति दृश्यते, तथा यदि कुङ्कुमसमागमे विनाशो नासतीति स्यात् तदा पटकुङ्कुमयोरपि संसर्गोऽवश्यंभावो भवेत्, न त्वेतदस्तीत्याशयवानाह-**यथा** इति। यत एवं देशविप्रकर्षो नास्ति तस्मादविरुद्धस्वभावयोरसंसर्गः कालविप्रकर्षेणेत्यवशिष्यते, स च कालविप्रकर्ष अत उत्पत्तिमद्विनाशकारणाभ्यां व्यावर्त्तमानः स्वव्याप्यं तयोरसंसर्गमप्युपादायैव निवर्त्तत इति उत्पत्तिमत्त्वस्य विनाशकारणसंसर्गेण सिद्धः प्रतिबन्धः इत्याह-**तस्मात्** इति।

प्रकाशः।

**स्वव्यापकेति**। उत्पत्तिमत्त्वव्यापकं विनाशकारणं, तस्य निवृत्तावित्यर्थः। **पूर्वोक्तादेवेति**। उत्पत्तिविनाशयोः संसर्गदर्शनादेवेत्यर्थः। **द्वितीयस्त्वति**। पटकुङ्कुमयोः संसर्गस्तावदविरुद्धोऽपि कस्यचित्पटस्यान्तरा ध्वंसान्न भवति। तद् यदि विनाशकसंसर्गं विनैव नाशः स्यात्तदा नाशकाऽसन्निधिः स्यात्, न त्वेवमित्यर्थः। **तस्मादिति**। यद्यपि अत्रापि व्याप्तावप्रयोजकत्वशङ्का तदवस्थैव, तथापि भावानां नाशं प्रति स्वरूपयोग्यत्वमुत्पत्तिमत्त्वेनैवावच्छिद्यत इति न शङ्केति भावः। **स चेति**। स कालविप्रकर्षस्तदा स्याद्यदि नाशकसम्बन्धमनपेक्ष्यैव कार्यस्य

प्रकाशिका।

मात्रव्यापकत्वमिति द्रष्टव्यम्। **उत्पत्तिमत्त्वेति**। भावत्वसमानाधिकरणोत्पत्तिमत्त्वव्यापकमित्यर्थः।

मकरन्दः।

मात्रमेव व्यावर्त्तयतीति तयोक्तमिति वाच्यम्। यथाश्रुतस्य तत्रापि सत्त्वादिति चिन्त्यम्। **उत्पत्तिमत्त्वेति**। भावत्वसमानाधिकरणोत्पत्तिमत्त्वव्यापकत्वमित्यर्थः। **अप्रयोजकत्वशङ्केत्युपलक्षणं**, ध्वंसे व्यभिचारश्चेत्यपि बोध्यम्। अत एवाह **भावानामिति**।

**स्यादेतत् । यद्येवमस्थिरः शब्दः कथमर्थेन सङ्गतिरस्योपलभ्यते इति चेत् । यथैवार्थस्यास्थिरस्य तेन ।**

बोधनी ।

शब्दनित्यत्ववादी प्रकारान्तरेण प्रत्यवतिष्ठते-**स्यादेतत्**-इति । प्रत्युच्चारणं भिन्नानां शब्दानामानन्त्यव्यभिचाराभ्यां दुर्ग्रहः संबन्ध इति । **यथा**-इति । यथा ह्यस्थिरस्यैवार्थस्य शब्देन संबन्धग्रहणं तथा शब्दस्याप्यस्थिरस्यार्थेनेति । येन हेतुनाऽस्थिरस्य व्यक्तिरूपस्यार्थस्य संगतिर्दुर्ग्रहेति तेनैवास्माकं जातिरेव पदार्थ इति सिद्धान्त इत्याह-**तेन**-इति । यदि जातिरेव पदार्थः

प्रकाशः ।

नाशः स्यात्, न चैवमित्यर्थः । एवं, शब्दोऽनित्यः, व्यापकप्रत्यक्षविशेषगुणत्वात्, सुखवत् । वहिरिन्द्रियव्यवस्थाहेतुगुणत्वाद्, भूतप्रत्यक्षविशेषगुणत्वाद्, इन्द्रियविशेषगुणत्वाद्, अस्मदादिप्रत्यक्षविशेषगुणत्वाद्, गन्धवदित्याद्यूहनीयम् । हेत्वाभासानां निरासादिति ।

ननु वर्णानित्यत्वे गृहीतसङ्गतिकपदनाशे कालान्तरे पदादगृहीतसङ्गतिकादर्थप्रतीतिर्न स्यादित्यर्थप्रतीत्यन्यथानुपपत्त्या शब्दनित्यत्वं स्यादित्याह--

**यद्येवमिति** । तथा सति गृहीतसङ्गतिघटनाशे तदन्यघटव्यक्तेः पदात् प्रतीतिर्न स्यात् । अथानित्येऽपि घटादावेकधर्मोपग्रहेण शक्तिग्रहस्तर्ह्यनित्ये पदेऽपि स तथैवास्त्वित्याह **यथैवेति** । **तेन** = शब्देनेत्यर्थः ।

ननु यद्यपि आनयादिव्यवहाराद्, व्यक्तावेव शक्तिरुचिता, तथाप्यानन्त्यव्यभिचाराभ्यां शक्तिग्रहस्तत्र न सम्भवति । सर्वव्यक्तेः शक्यत्वे, गां दद्यादित्यादौ सर्वोपादानासामर्थ्यादननुष्ठानापत्तिरेकशक्यत्वेऽनध्यवसायः । नापि गोत्वेनोपलक्षिता व्यक्तिः शक्येति न शक्यानन्त्यव्यभिचारौ । रूपान्तरेण ज्ञातस्यैवान्येन रूपेण लक्ष्यत्वात्, काकेन गृहविशेषस्येव । न च व्यक्तीनां

प्रकाशिका ।

**व्यापकेति** । आशुविनाशित्वमत्र साध्यमिति घटादिरूपे व्यभिचारवारणाय व्यापकेति विशेषणम् । ईश्वरज्ञानादौ व्यभिचार इति **प्रत्यक्षेति** । आत्मैकत्वे व्यभिचार इति **विशेषेति** । **वहिरिति** । वहिरिन्द्रियान्तराग्राह्यवहिरिन्द्रियग्राह्यगुणत्वादित्यर्थः । प्रथमवहिःपदमप्रसिद्धिवारणाय । द्वितीयवहिःपदमात्मैकत्वे व्यभिचारवारणाय । गुणपदं रूपत्वे व्यभिचारवारणाय जातिभिन्नार्थकं तेन समवाये व्यभिचारवारणाय ग्राह्यान्तम् । **भूतेति** । आत्मैकत्वे व्यभिचार इति **भूतेति** । जलपरमाणुरूपे व्यभिचार इति **प्रत्यक्षेति** । द्रव्यत्वे व्यभिचार इति **गुणेति** । ईश्वरज्ञाने व्यभिचार इतीन्द्रियेति । श्रोत्रैकत्वे व्यभिचार इति **विशेषेति** । **अस्मदादीति** । योगिप्रत्यक्षे परमाणुगुणे व्यभिचार इति प्रथमविपर्णं तस्य लौकिकेत्यर्थः । **गन्धवदिति** ।

मकरन्दः ।

**व्यापकेति** । आशुविनाशित्वं यदि साध्यं तदाऽयं हेतुर्बोध्यः । एवञ्च घटरूपादौ व्यभिचारवारणाय **व्यापकेति** । ईश्वरज्ञानादौ व्यभिचारादाह **प्रत्यक्षेति** । आत्मैकत्वस्य प्रत्यक्षत्वे तत्र व्यभिचारादाह **विशेषेति** । हेत्वन्तरं शब्दप्रकाशे व्याख्यातम् ।

टिप्पणी ।

**एवं शब्दोऽनित्यो व्यापकप्रत्यक्षविशेषगुणत्वादिति** आशुविनाशित्वं यदि साध्यं तदा घटरूपादौ व्यभिचारवारणाय व्यापकेति देयं नान्यथा, आत्मैकत्वस्य प्रत्यक्षत्वे प्रत्यक्षघटितहेतौ तत्र व्यभिचारवारणाय सर्वत्र विशेषपदसार्थक्यं द्रष्टव्यम् । **भूतप्रत्यक्षविशेषगुणत्वादिति** । आत्मैकत्वे व्यभिचारवारणाय भूतेति । **अस्मदादिप्रत्यक्षविशेषेति** । अत्र सामान्यतोऽनित्यत्वं साध्यमतो न घटरूपे व्यभिचारः ।

-जातिरेव पदार्थो, न व्यक्तिरिति चेन्न। शब्दात्तदलाभप्रसङ्गात्। आक्षेपत इति चेत्, कः खल्वयमाक्षेपो नाम? न तावदनुमानम्। अनन्ताभिः सह सङ्गतिवदविनाभावस्यापि ग्रहीतुमशक्यत्वात्। शक्यत्वे वा,

बोधनी।

तर्हि शब्दाद् व्यक्तिप्रतीतिर्न स्यादित्याह-न इति। ननु शब्दप्रतिपन्नाया जातेराक्षेपाद् व्यक्तिर्लप्स्यत इत्याह-आक्षेपतः इति। कः खलु-इति। न कश्चिदिति भावः। अत एवाह-न तावत्

प्रकाशः।

जातिं विना रूपान्तरमस्ति। गोत्वविशिष्टे कार्यान्वयेन गोत्वस्य विशेषणत्वाच्च। न च व्यक्तिः शक्या गोत्वमवच्छेदकं कारणत्वे दण्डत्ववत्। गोपदाद् गोत्वविशिष्टबुद्धेरनुत्पादापत्तेः। अत एव न जातिविशिष्टे शक्तिः। विशेष्यभेदाद्विशिष्टानन्त्यात्। तस्माज्जातिरेव पदानां शक्या, न व्यक्तिरिति नोक्तदोष इत्यभिप्रेत्याह। जातिरेवेति। तर्हि जातिशक्तात् पदाद् व्यक्त्युपस्थितिर्न स्यादित्याह। शब्दादिति। न पदात् तदुपस्थितिः, किन्त्वाक्षेपत इत्याह। आक्षेपत इति। ननु जातिव्यक्त्योरेकवित्तिवेद्यत्वान्नाक्षेपः। समानानां भावः सामान्यं, समानां व्यक्तिं विना न भासते इति चेन्न। स्वरूपेणैव जातेः शक्यत्वात्। सामान्यत्वन्तु तद्धर्मो, न तु तत्स्वरूपम्। प्रत्यक्षादौ न जातिज्ञानस्य व्यक्तिविषयतानियमो व्यक्तिज्ञानसामग्रीसमाजाधीनः। गोत्वं गवाविषयकज्ञानविषयो जातित्वाद् गोभिन्नभावत्वाद्वेति जातिमात्रधीसिद्धेश्च। अथ यद्यत्परतन्त्रं तत्तेनैकवित्तिवेद्यं, यथाऽर्थपरतन्त्रज्ञानमर्थेन, जातिश्च व्यक्तिपरतन्त्रेति व्यक्तौ भासमानायामेव भासते इति चेन्न। परतन्त्रत्वं हि न परसमवेतत्वं, शब्दादिना व्यभिचारात्। नापि तन्निरूपणाधीननिरूपणत्वम्। असिद्धेः। नापि परस्मिन् भासमान एव भासमानत्वम्। साध्याविशेषात्। तस्माद्गोत्वं व्यक्त्याश्रितं जातित्वादित्यनुमानाद् गोत्वाश्रयव्यक्तिज्ञानमिति भावः। व्याप्तिरपि शक्तिरिव व्यक्तीनामानन्त्यान्न ग्राह्या इत्याह अनन्ताभिरिति। अथैकरूपावच्छेदेन व्याप्तिग्रहस्तदा शक्तिग्रहोऽपि तथैवास्त्वित्याह। शक्यत्वे वेति। गोत्वस्य व्यक्त्याश्रितत्वव्याप्तेः पक्षधर्मताबलाद् गोव्य-

प्रकाशिका।

तत्तत्साधनाधिकरणे गन्धस्तत्तत्साधने दृष्टान्तः। गोत्वमिति। न च नित्यत्वसामान्यलक्षणाजन्यज्ञानमादायार्थान्तरमिति वाच्यम्। सामान्यप्रत्यासत्तौ बाधकावतारकाल एतदनुमानात्, तथा च बाधेनोक्तार्थान्तरानवकाशात्। केचित्तु केवलजातिज्ञानसिद्ध्यर्थमेवायं प्रयोग इत्युक्तक्रमेणापि तत्सिद्धौ समीहितसिद्धिरिति नार्थान्तरं दोष इत्याहुः। जातित्वादिति। धर्म्मत्वादित्युच्यमाने गवि व्यभिचार इति जातित्वादित्युक्तम्' तदर्थञ्च सामान्यलक्षणाभ्युपगमे नित्यत्वमात्रम् अन्यथा वैयर्थ्यात्। न च तथा सति गवान्योन्याभावे व्यभिचारः। उक्तक्रमेण तत्रापि साध्यसत्वात्। गोभिन्नेति। गवि व्यभिचार इति गोभिन्नेति। सामान्यलक्षणानभ्युपगमपक्षे गवान्योन्याभावे व्यभिचार इति भावपदम्। तस्मादिति। यद्यप्यत्र जातित्वं व्यक्तिसमवेतत्वघटितमिति साध्या-

मकरन्दः।

गोत्वमिति। न च नित्यत्वादिसामान्यप्रत्यासत्त्या तादृशप्रतीतिसम्भवात्तमादायार्थान्तरं एकवित्तिवेद्यत्वनियमनिषेधार्थं सामान्यत एव तादृशधीसिद्धेरुद्देश्यत्वात्। अत एव वक्ष्यति, जातिमात्रधीसिद्धेश्चेति। नन्वेवं जातिपदार्थविवेचने नित्यत्वादित्येव हेतुरस्तु, न चैवं गवान्योन्याभावादौ व्यभिचारः, नित्यत्वप्रकारकोक्तप्रतीतिमादाय तत्रापि साध्यसत्वात्, गोघटितोपाधेश्चानित्यगोघटितत्वेनानित्यत्वादित्यस्वरसादाह गोभिन्नेति। एतच्च गवि व्यभिचारवारणाय। गोघटितोपाधौ व्यभिचारवारणाय भावपदमखण्डपरम्। न त्वभावे व्यभिचारवारणाय तत्, उक्तरीत्या तत्र साध्यसत्वात्। अन्यथा गोसादृश्यादौ व्यभिचारतादवस्थ्यापत्तेरिति। अस्तु वा इतरनिरूपणानधीननिरूपणपरं भावपदम्। तस्मादिति। अत्र जातिपदार्थविवेचने व्यर्थविशेषणत्वं

सङ्केतेरपि तथैव सुग्रहत्वात् । व्यक्तिमात्ररूपेणाऽविनाभाव इति चेन्न । व्यक्तित्वस्य सामान्यस्याभावात् । भावे वा, तदाक्षेपेऽपि विशेषानाक्षेपात् । वाच्यत्वमपि वा तथैवास्तु, किमाक्षेपेण ? सङ्केतेरविरोधादिति । अर्थापत्तिराक्षेप इति चेन्न । व्यक्त्या विना किमनुपपन्नम् । जातिरिति चेन्न । तन्नाशानुत्पाददशायामपि सत्त्वात् । तथापि न व्यक्तिमात्रं विनेति चेन्न । मात्रार्थाभावात् । व्यक्तिज्ञानमन्तरेण जातिज्ञानमनुपपन्नमिति चेन्न । तदभावेऽप्युत्पादात् । व्यक्तिविषयत्वं विना जातिविषयता

बोधनी ।

इति । आनन्त्यदोषो हि संगतिग्रह इवाविनाभावग्रहेऽपि सुलभ इति । ननु सर्वव्यक्त्यनुगतेन व्यक्तिमात्ररूपेणाविनाभावः शक्यग्रह इत्याह—**व्यक्तिमात्ररूपेण**-इति । **न**-इति । न तावज्जातिं व्यक्तिं चान्तरा व्यक्तित्वं नाम सामान्यमस्ति, भावेऽपि तदेव जातेराक्षिप्येत न व्यक्त्य इति । यदि च व्यक्तित्वसामान्यमभ्युपगम्येत ततः शब्दवाच्यमेव तदस्तु, तस्यैकत्वेन संगतिग्रहस्य सुकरत्वात् । किमाक्षेपतः सिद्ध्येदित्याह-**वाच्यत्वमपि**-इति । अपिरवधारणार्थः । ननु मा भूदाक्षेपोऽनुमानम्, अर्थापत्तिर्भविष्यतीत्याह-**अर्थापत्तिः** इति । तस्या हि नाविनाभावग्रहापेक्षेति भावः । **व्यक्त्या विना** इति । **न किञ्चित्** इति शेषः । **जातिः**। तदाश्रया हि सेति । **न** इति । व्यक्तीनां विनाशदशायामपि जातेरवस्थानान्न व्यक्त्या विना जातिरनुपपन्नेति । **तथापि** इति । यद्यपि काश्चिद्व्यक्तीरन्तरेणाप्यवतिष्ठत इति । **न** इति । उक्तं हि न व्यक्तिजातिव्यतिरिक्तमन्यत्किञ्चिदस्तीति : **व्यक्तिज्ञानम्** इति । ततो जातिज्ञानाद् व्यक्तिज्ञानाक्षेप इति । **न इरि** । शब्दात्केवलजातिज्ञानस्य भवद्भिरभ्युपगमादिति । **व्यक्तिविषयताम्** इति । तेन जातिज्ञाना-

प्रकाशः ।

क्तिलाभः स्यादित्याह । **व्यक्तिमात्रेति** । व्यक्त्याश्रितत्वव्याप्तिरपि न व्यक्तित्वमनुगतं विना ग्राह्येति । न च तज्जातिः । जातेरपि व्यक्तित्वादित्याह । **व्यक्तित्वेति** । उपाधित्वे तस्य दोषमाह । **भावे चेति** । व्यक्तिमात्रलाभेऽपि व्यक्तिविशेषानाक्षेपात्तत्प्रतीत्यनुपपत्तिरित्यर्थः ।

ननु पक्षधर्मताबलाद् व्यक्तिविशेषः सिद्ध्येदित्यभिप्रेत्याह । **वाच्यत्वमपीति** । यदि व्यक्तित्वेनोपस्थिते व्याप्तिस्तदा गोत्वेनोपस्थिते शक्तिग्रहोऽपि स्यादित्यर्थः । वस्तुतः पक्षधर्मताबलाद्विशेषस्य भानेऽपि विशेषत्वेनोपस्थितिर्न स्यादनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति भावः । व्यक्तिं विना जातिरनुपपन्ना तामाक्षिपतीत्याह । **अर्थापत्तिरिति** । **तन्नाशेति** । व्यक्तिं विनाऽपि गोत्वस्योक्तरीत्या प्रतीतेर्नानुपपत्तिरित्यर्थः । यद्यप्येकव्यक्तिनाशानुत्पाददशायामपि जातिरस्ति, तथापि व्यक्त्यन्तरमस्त्येवेति न व्यक्तिमात्रं विना जातिरस्तीत्याह । **तथापीति** । मात्रार्थो हि नाऽशेषव्यक्तिः, एकव्यक्तिनाशेऽपि गोत्वादेर्ज्ञानात् । नापि व्यक्तित्वं, तद्धि न जातिरुक्तदोषात् । उपाधित्वे तु व्यक्तित्वेन उपस्थितसर्वव्यक्त्यन्यथानुपपत्तिग्रहवच्छक्तिग्रहोऽपि स्यादित्याह । **मात्रार्थेति** । **तदभावेऽपीति** ।

मकरन्दः ।

चिन्त्यम् । **जातेरपीति** । गोत्वत्वाद्युपाधिव्यक्तीभूतगोत्ववृत्तिव्यक्तित्वस्य जातित्वे जातावपि जातिवृत्तित्वाभ्युपगमेऽपसिद्धान्त इति भावः । **विशेषत्वेनेति** । गोत्वादिनेत्यर्थः । **उक्तरीत्येति** । गोत्वं गवाविषयज्ञानविषय इत्यादि त्वदुक्तरीत्येत्यर्थः । **इत्यर्थः**=इति तात्पर्यार्थः । अक्षरार्थानुसारेणाह **यद्यपीति** । **ज्ञानादिति** । सत्वाच्चेत्यपि बोध्यम् ।

टिप्पणी ।

**विशेषत्वेनेति** । गोत्वादिनेत्यर्थः । **गोत्वादेर्ज्ञानादिति** । सत्वाच्चेत्यपि बोध्यम् ।

तस्यानुपपन्नेति चेन्न । एवं तर्ह्येकज्ञानगोचरतायां किमनुपपन्नं किं प्रतिपादयेदिति । जातीनामन्वयानुपपत्त्या व्यक्तिरवसीयते इति चेन्न, परस्पराश्रयप्रसङ्गात् ।

बोधनी ।

दात्मनो व्यक्तिविषयतामाक्षिपतो व्यक्तिज्ञानसिद्धिरिति । न इति । एवं हि जातिव्यक्त्योरेकज्ञानविषयत्वमेवोक्तं स्यात्, तत्रोभयोरपि ज्ञातत्वाविशेषात् किमनुपपन्नं प्रतिपादकं भवेत् किं वा प्रतिपाद्यं भवेत् । अत्रानुपपन्नमात्रनिराकरणप्रकरणे किं प्रतिपादयेदिति प्रक्रियाया असंगतत्वात् प्रमादकृतः पाठ इति संप्रदाय इति । जातीनाम इति । गोत्वशुक्लत्वादीनां परस्परमन्वयानुपपत्त्या तदन्वयसिद्ध्यर्थं व्यक्तिः प्रतीयत इति । यद्वा, जातीनामनेकव्यक्त्यन्वयः प्रतीयमानो नान्तरेण व्यक्तिमुपपद्यत इति व्यक्तिरवसीयत इति । न इति । प्रतीते ह्यन्वये तदन्वयानुपपत्त्या व्यक्तिः प्रतीयते, प्रतीतायां च व्यक्तौ तदन्वयप्रतीतिरितीतरेतराश्रयत्वम् । किंच, जातिप्रतीतौ सत्यां तदन्वयानुपपत्त्या व्यक्तिप्रतीतिः, व्यक्तिप्रतीतौ च सत्यां जातिरित्यात्माश्रयत्वं, व्यक्तिप्रतीतिपुर-

प्रकाशः ।

गोभिन्नभावत्वेन गां विनाऽपि त्वया गोत्वज्ञानाभ्युपगमादित्यर्थः । एवं तर्हीति । व्यक्तिं विनापि जातेरज्ञानात् केवला जातिर्नोपस्थितेति जातित्वविशिष्ट एव पदानां शक्तिः । विशिष्टानामानन्त्येऽप्येकत्र विशिष्टे तत्त्वं विहाय गोत्वमादाय गोत्वविशिष्टं शक्यमिति शक्तिग्रहात् सर्वत्रोदासीनस्य गोः शक्यत्वाद्यत्किंचिदेकोपादानेऽपि गोरुपादानान्नोपादानाशक्यत्वमेकोपादानेऽनध्यवसायो वा, व्यक्तिवाचकपश्वादिपदवदुपपत्तेः। वस्तुतो नानुमानार्थापत्तिभ्यां व्यक्तिलाभः । न हि यत्र यदा वा गोत्वं तत्र तदा वा, यद् गोत्वं सा व्यक्तिरिति वा व्याप्तिर्व्यभिचारात् । नापि जातित्वं व्यक्त्याश्रितत्वे लिङ्गम् । जातित्वस्य पदादनुपस्थितेः । तथात्वे वा, जातिरिति वेथैव व्यक्तिः, नित्यानेकसमवेतत्वस्य जातित्वात् । व्यक्तेश्चापदार्थत्वे विभक्त्यर्थसंख्याकर्मत्वादेर्व्यक्तावनन्वयः स्यात् । सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् । न च प्रकृतितात्पर्यविषये तदन्वयव्युत्पत्तिः । लक्षणोच्छेदापत्तेः । एवं तर्हि गामानयेत्यादौ जातेरानयनाद्यन्वयानुपपत्त्या जातिशक्तपदेन व्यक्तिर्लक्ष्यते, अत एव व्यक्तेः प्रकृतिप्रतिपाद्यत्वे विभक्त्यर्थोऽन्वयस्तत्र सङ्गच्छत इत्याह । जातीनामिति । जातिज्ञाने सति लक्षणया व्यक्तिज्ञानं, व्यक्तिमादाय जातिज्ञानमित्यन्योन्याश्रय इत्याह । परस्परेति ।

प्रकाशिका ।

विशेषः, तथापि समवेतत्वमात्रमेव हेतुः कर्त्तव्यमिति भावः । गामिति । गोज्ञानं विनापीत्यर्थः । जातित्वस्येति । प्रकारान्तरेण च तदुपस्थितिः कादाचित्की व्यक्तिधीश्च सर्वदैव पदादिति तन्निर्वाहाय व्यक्तौ पदशक्तिस्वीकार इति भावः । व्युत्पत्तिसिद्धत्वादिति । पश्वादिपदे तथा कल्पनादिति भावः । लक्षणेति । वह्नितात्पर्यके धूमोऽस्तीति वाक्ये धूमपदोत्तरविभक्त्यर्थस्य वह्नाव-

मकरन्दः ।

गोभिन्नेति । यद्यपि तेनैकवित्तिवेद्यत्वमपाकृतं तच्चानुपदमेव शङ्कितं, तथापि व्यक्तेर्ज्ञानान्तरमपि तदा नास्तीत्यस्यापि तन्निरस्यत्वमुक्तम् । वस्तुतो व्यक्तिज्ञानकारणत्वशङ्केयं, तत्र च तुल्यग्रहसामग्रीकत्वात् तदभावेऽप्युत्पादादित्यर्थो युक्तः । गामिति । गोज्ञानं विनाऽपीत्यर्थः । जातित्वस्येति । न च प्रकारान्तरात्तदुपस्थितिः, तस्यासार्वत्रिकत्वात्, व्यक्तिबुद्धेश्च सार्वत्रिकतया शक्तिरेवेति भावः ।

टिप्पणी ।

गोत्वज्ञानाभ्युपगमादिति । गोभिन्नभावत्वेन लिङ्गेन गोत्वमात्रज्ञानस्य साधितत्वात् तथा च व्यक्तिज्ञानकारणत्वस्य समानकालत्वस्य च निरासः । व्यक्तिं विनापीति "एवं तर्हीत्यादे"रियं व्याख्या।नियमेन जातिव्यक्त्योरेकज्ञानविषयत्वे,सतीत्येवं ह्येकज्ञानगोचरतायामित्येतस्यार्थोऽत्रादिः । एवन्तर्हीति । सुब्विभक्तीनाम्प्रकृत्यर्थेत्यादिव्यवस्थितौ । जातिव्यक्त्योर्नियमेनैकज्ञाने आसमा-

**स्यादेतत् । प्रतिबन्धं विनाऽपि पक्षधर्मताबलाद् यथा लिङ्गं विशेषे पर्यवस्यति, तथा सङ्गतिं विनाऽपि शब्दः शक्तिविशेषाद्विशेषे पर्यवस्यति, स एवाऽऽक्षेप इत्युच्यते इति चेद्, न तावत् प्रतीतिः क्रमेण । अपेक्षणीयाभावेन विरम्य व्यापारायोगात् । जातिप्रत्यायनमपेक्षते इति चेत्, कृतं तर्हि शब्दशक्तिकल्पनया । तावतैव तत्सिद्धेः । ओमिति चेन्न । व्यक्त्यनालम्बनाया जातिप्रतीतेरसम्भवादित्युक्तत्वात् ।**

बोधनी ।

स्कारेण जातिप्रतीतेरुक्तत्वात् । पश्चिमे तु व्याख्याने शब्दात्प्रतीतासु व्यक्तिषु जातेस्तदन्वयप्रतीति स्तदन्वयप्रतीत्या च व्यक्तिप्रतीतिरितीतरेतराश्रयत्वं व्याख्येयमिति ।

तर्हि विशेषपर्यवसानमेवाक्षेप इत्याह—**स्यादेतत्** इति । यथा हि लिङ्गं साध्यसामान्येनैव गृहीतव्याप्तिकमपि पक्षधर्मतासहायं साध्यविशेषे पर्यवस्यति, तथा शब्दो जात्या गृहीतसंगतिरपि शक्तिविशेषाद्व्यक्तौ पर्यवसास्यतीति । **न तावत्** इति । किमयं शब्दो जातिव्यक्त्योः प्रतीतिं क्रमेण जनयेद्युगपद्वा ? न तावत् क्रमेण, शक्तिविशेषादेव प्रतीतिं जनयतः शब्दस्यापेक्षणीयान्तराभावेन विरम्य ज्ञानोत्पादनव्यापारायोगादिति । ननु जातौ गृहीतसंगतिः शब्दः तद्विषयं ज्ञानं जनयित्वा तदपेक्ष एव व्यक्तिं प्रत्याययतीत्याह—**जातिप्रत्यायनम्** इति । यदि व्यक्तिज्ञानोत्पादने जातिज्ञानापेक्षा तर्हि किं तत्रापि शब्दव्यक्तिकल्पनयेत्याह—**कृतं तर्हि** इति। कुत इत्यत आह—**तावतैव** इति । जातिज्ञानेन व्यक्तिज्ञानसिद्धेरिति । ननु जातिज्ञानेनैव तत्सिद्धिमनुजानीम एवेत्याह—**ओम्** इति। **न** इति। **उक्तत्वात्** । न च व्यक्त्या विना जातिस्फुरणमित्यत्र लिङ्गमपि पक्षधर्मतासहकृतमेक-

प्रकाशः ।

वस्तुतः स्वार्थादन्येन रूपेण ज्ञाते लक्षणा, तीरत्वेन ज्ञाते गङ्गापदस्येव । न च गोत्वादन्येन रूपेण व्यक्त्युपस्थितिः, किन्तु गोत्वेनैव । न च व्यक्तित्वेन तदुपस्थितिः । गोपदाद् व्यक्तित्वप्रकारकबुद्ध्यापत्तेः । गां पश्य, गौस्तिष्ठतीत्यादौ जातेरप्यन्वययोग्यत्वे व्यक्तेरलाभप्रसङ्गश्च । तस्मादेकवित्तिवेद्यत्वान्न व्यक्तेराक्षेपः किन्तु विशिष्टे शक्तिरेवेति भावः ।

ननु जातिशक्ततया ज्ञातं पदं प्रथमं जातिं बोधयति, अनन्तरं स्वरूपसद्व्यक्तिशक्त्या व्यक्तिम्, एवञ्च जातौ ज्ञाता शक्तिर्बोधिका, व्यक्तौ तु स्वरूपसती, यथा लिङ्गं वह्निसामान्यव्याप्ततया ज्ञातं तद्विशेषव्याप्ततयाऽनवगतमपि वस्तुगत्या व्यापकं गमयतीत्याशयवानाह—

**स्यादेतदिति** । प्रतिबन्धं विना = प्रतिबन्धग्रहं विना । शक्तिविशेषात् = स्वरूपसद्व्यक्तिशक्तेः । एवं पदाद् युगपदेव जातिव्यक्तिज्ञानं स्यादुभयज्ञानसामग्र्या वृत्तत्वादित्याह । **न तावदिति** । व्यक्तिज्ञाने कर्तव्ये जातिशक्ततया ज्ञातं पदं जातिज्ञानमपेक्षते इति क्रम इत्याह । **जातीति** । यदि जातिज्ञानं व्यक्तिज्ञानहेतुस्तदा किं व्यक्तिशक्त्या ? । जातिज्ञानादेव व्यक्तिशक्तिं विनाऽपि तज्ज्ञानोपपत्तेरित्याह । **कृतमिति** । नास्त्येव व्यक्तौ शक्तिः, जातिज्ञानमेव व्यक्तिज्ञानहेतुरस्त्वित्याह । **ओमिति** । स्यादेवं, यदि व्यक्त्यविषयं जातिज्ञानं स्यान्न त्वेवमित्याह । **व्यक्तीति** । किञ्चैवं व्यक्तिज्ञाने पदानामकरणत्वे जातिज्ञानं मानान्तरं स्यादित्याह ।

प्रकाशिका ।

न्यायापत्तेश्चेत्यपि द्रष्टव्यम् । मन्मते केवलजातेरपि प्रतीतिस्वीकारान्नान्योन्याश्रय इत्यरुचेराह । **वस्तुत** इति । ननु नीलोऽत्र घट इत्यत्र नीलरूपप्रकारकलक्षणावद् गोत्वप्रकारकलक्षणा प्रकृते स्यादित्यरुचेराह । **गां पश्येति** । यद्यपि तात्पर्यानुपपत्त्या यष्टीः प्रवेशयेतिवल्लक्षणायां बाधका-

मकरन्दः ।

ननु परेण व्यक्तिज्ञानं विनाऽपि जातिज्ञानाभ्युपगमान्नान्योन्याश्रय इत्यरुचेराह **वस्तुत इति** । नन्विदमप्रयोजकम्, अत एव नीलो घट इत्यादौ तथैव लक्षणेत्यस्वरसादाह **गां पश्येति** । यद्यपि

टिप्पणी ।

मत्वानभ्युपगमे नान्योन्याश्रय इत्यत आह—**वस्तुत इति** ।

प्रमाणान्तरापातप्रसङ्गाच्च। स्मरणं तदित्ययमदोष इति चेन्न। अननुभूतानन्वयप्रसङ्गात्। अस्त्वेकैव प्रतीतिरिति चेत्, कृतं तर्हि शक्तिभेदकल्पनया। एवञ्च यथा सामान्यविषया शक्तिरेकैव तद्वति पर्यवस्यति, तथा सामान्याश्रया सङ्गतिस्तद्वति पर्यवस्येदिति।

---

बोधनी।

मेव सामान्यविशेषविषयं ज्ञानं जनयतीति भावः। यदि च शब्दव्यापारो जातिज्ञान एव पर्यवस्यन् न व्यक्तिज्ञानं यावद् गच्छेत् तर्हि व्यक्तिज्ञानजनकं जातिज्ञानं सप्तमं प्रमाणमापद्येत, अनुमानार्थापत्त्योर्निरस्तत्वादसंभवाच्चान्येषामित्यभिप्रायवानाह–प्रमाणान्तर इति। ननु शब्दप्रतीता जातिः साहचर्याद्व्यक्तिं स्मारयति न तु प्रमापयति, ततो न प्रमाणान्तरापात इत्याह–स्मरणम् इति। न इति। तर्ह्यननुभूतानां गवादिव्यक्तीनां समभिव्याहृतपदार्थान्वयप्रतीतिर्न स्यादिति। तदेवं क्रमेण प्रतीतिर्निराकृता, संप्रति यौगपद्यं निराकर्तुं शङ्कते–अस्तु इति। शब्दादेव जातिव्यक्तिगोचरा प्रतीतिरेकैव जायते न च प्रमाणान्तरापत्तिर्दोष इति। कृतं तर्हि इति। न हि कार्याभेदे कारणभेदशक्तिकल्पनायां प्रमाणमस्तीति। एवमुपपादितं दृष्टान्तप्रकारं दार्ष्टान्तिके निगमयति–एवं च इति। शक्तिभेदाभावे सति यथा गोत्वादिसामान्यविषया शब्दशक्तिस्तद्वति विशेषे पर्यवस्यति तमपि विषयीकरोतीति यावत्, तथा गोशब्दत्वादिसामान्याश्रया या वाचकत्वशक्तिस्तद्वति गोशब्दे पर्यवस्यति, सैव तस्यापि शक्तिर्भवति, नान्या कल्प्यत इत्यर्थः।

प्रकाशः।

प्रमाणेति। जातिज्ञानकरणकमपि व्यक्तिज्ञानं स्मरणं नानुभव इति, न तन्मानान्तरमित्याह। स्मरणमिति। एवं गामानयेति वाक्यादननुभूतगोव्यक्त्यननुभवप्रसङ्ग इत्याह। अननुभूतेति। अस्तु तर्हि जातिव्यक्तिविषयैकैव धीरुभयशक्तिसाध्येत्याशङ्कते। अस्त्विति। उभयविषयैकशक्त्यैवैकज्ञानोपपत्तौ शक्तिद्वयकल्पनं व्यर्थमिति परिहरति। कृतमिति। ननु मा भूच्छक्तिभेदकल्पनं, भवतु सङ्गतिरप्येका, तथापि कथं प्रकृतसिद्धिरित्यत आह। एवञ्चेति। यथा पटशब्दत्वसामान्यविषया पटपदस्य शक्तिर्व्यक्तौ पर्यवस्यति, न तु तत्र पृथक्शक्तिस्तथा शब्दानित्यत्वेऽपि शब्दत्वसामान्यस्यैव शक्तिः पटशब्दे वाचकत्वव्यवहारं करोति, न तु पटशब्दस्य जातिवाचकत्वं पृथगित्यर्थः।

प्राभाकरास्तु–व्यक्तौ जातिरनुगमिका विशेषिकाऽवश्यवाच्या चेति नागृहीतविशेषणान्यायेन सैव वाच्या। न च जातावपि व्यक्तिरेव विशेष इति नागृहीतविशेषणान्यायो व्यक्तावपीति

प्रकाशिका।

भावः, तथापि जातिव्यक्त्योः पदादेकैकप्रतीतिरनुभूयते न तु क्रमेणेति जातिशक्तावेव व्यक्तेरवच्छेदकत्वमिति तात्पर्यात्। अननुभूतेति। तन्मते सामान्यलक्षणाया अस्वीकारादिति भावः॥१॥

मकरन्दः।

यष्टीः प्रवेशयेतिवल्लक्षणा सम्भवत्येव, तथापि गोपदाद्व्यक्तिमादायैव जातिस्मृतेरनुभूयमानत्वाद्विशिष्टे शक्तिरेव न लक्षणेति भावः। तदिदमाह तस्मादिति। अननुभूतेति। तन्मते इति शेषः। अपरं शब्दप्रकाशे व्याख्यातम्।

वैशेषिकमते व्यावृत्तिबुद्धिसिद्धो विशेषनामा कश्चन पदार्थोऽस्ति। स च द्विविधः सामान्यविशेषः, अन्त्यविशेषश्च। सामान्यविशेषो द्रव्यत्वादिः, स खल्वनुवृत्तिबुद्धिहेतुः सन्नेव व्यावृत्तिबुद्धेरपि हेतुर्भवति। अन्त्यविशेषस्तु नित्यद्रव्यमात्रवृत्तिरेकमात्रगतश्च, स तु स्वत एव व्यावृत्त इति सिद्धान्तः।

टिप्पणी।

व्यक्तौ पर्य्यवस्यति। व्यक्तिमपि बोधयतीत्यर्थः। तथा पटशब्दत्वसामान्याश्रयेति। शब्दा-

न च नित्या अपि वर्णाः स्वरानुपूर्व्यादिहीनाः पदार्थैः सङ्गम्यन्ते, न च तद्विशि-

बोधनी ।

सन्तु वर्णाः स्वरूपेण नित्यास्तथाप्यनित्यानामेव संगतिग्रहोऽभ्युपगन्तव्यः स्वरानुपूर्व्यादिविशिष्टानां तेषां वाचकत्वाद्व्यञ्जकध्वनिधर्मायत्तत्वाच्च स्वरादीनामित्याह-न च इति । कथं तर्ह्यनित्यानामेव पदार्थानां पदानां चानन्त्यव्यभिचारादिपरिहारेण संगतिग्रह इत्याशङ्क्य सुहृद्भावेन

प्रकाशः ।

वाच्यम् । जातेः स्वत एव व्यावृत्तत्वात् । अन्यथाऽन्योन्याश्रयात् । स्वतो व्यावृत्तत्वं च परेषामन्त्यविशेषस्येव स्वाश्रयवत् स्वस्मिन् व्यावृत्तधीजनकत्वम् । व्यक्तिधीस्तु जातिशक्तादेव पदात्, गोपदं हि नियमतो जातिव्यक्ती बोधयति, तत्रास्य जातिशक्तिज्ञानमेव सहकारि कल्प्यते, लाघवादावश्यकत्वाच्च, न तु व्यक्तिशक्तिज्ञानं, गौरवात्, जातिशक्तिज्ञाने सति तज्ज्ञानं विना व्यक्तिज्ञाने विलम्बाभावाच्च, यथा परेषां पदार्थशक्तादेव पदादन्वयधीः । यद्वा, जातिशक्तिज्ञानाज्जातिज्ञानं जायमानं व्यक्तिमपि विषयीकरोति । यद्येन विना न भासते, तज्ज्ञानहेतोस्तद्बोधकत्वनियमात् । अन्यथा, जातिमपि न बोधयेत् । तस्मादेकवित्तिवेद्यत्वनियमाज्जातिज्ञानार्थं क्लृप्ता शक्तिर्व्यक्तिमपि ज्ञापयति । न च जातिं विनाऽपि प्रत्यक्षादिना ऽपि व्यक्तिज्ञानादन्यैव व्यक्तिज्ञानसामग्री, जातिविशिष्टज्ञानं चोभयज्ञापकसामग्रीसमाजादिति वाच्यम् । जातिव्यक्त्योः प्रत्यक्षादिना बोधे सामग्रीभेदेऽपि शाब्दव्यक्तिबोधे जातिशक्तिज्ञानस्यैव हेतुत्वात् । लाघवात् । तत्सत्त्वे तत्र विलम्बाभावेन सामग्र्यन्तराकल्पनाच्च । न चैवं व्यक्तिज्ञानस्य शक्यत्वात्तद्विषयत्वाज्जातिवद् व्यक्तिरपि शक्या स्यात् । यद्विषयतया ज्ञाने ज्ञाता शक्तिरुपयोगिनी तस्यैव विषयतया शक्यतावच्छेदकस्य शक्यत्वात् । एवञ्च जातिव्यक्तिज्ञानजनकत्वादुभयत्रापि पदशक्तिः । जात्यंशे तु सा ज्ञाता हेतुः । परेणाऽप्यन्वये कुब्जशक्तिस्वीकारात् ।

उच्यते । शक्यज्ञाने विषयतया जातेरवच्छेदकत्वं व्यक्तिमादायैव ज्ञायते, न तु केवलायाः । व्यक्तिं विना जातेरज्ञानादिति जातेरवच्छेदकत्वे नागृहीतविशेषणान्यायाद्व्यक्तेरवच्छेदकत्वमावश्यकमिति शक्यज्ञाने विषयतयाऽवच्छेदकत्वाज्जातिवद्व्यक्तिरपि शक्या । यद्वा, प्रथमं व्यवहारानुमितव्यक्तिज्ञाने पदानुविधानात् पदं शक्तमित्यवधारयति न तु जातिज्ञाने, व्यवहाराहेतुत्वेन तदा तस्यानुपस्थितेः । पश्चाद्व्यक्तेर्व्यावृत्त्यर्थमनुगमार्थञ्च जातिरपि तद्विषय इति मानान्तरेण ज्ञात्वा जातिज्ञानेऽपि तत्पदस्य कारणतां प्रत्येति । तथा च व्यक्तिशक्तिज्ञानमपि कारणम् । न च जातिशक्तिज्ञानेनान्यथासिद्धिः । व्यक्तिज्ञानकारणतामुपजीव्य जातिज्ञानकारणताग्रह इति उपजीव्यविरोधात् । अपि च, पदस्य व्यक्तिज्ञानार्थं शक्यज्ञाने विषयतया व्यक्तेरवच्छेदकत्वमात्रं कल्पयति । लाघवात् । जातिविषयत्वाद्व्यक्तिविषयत्वस्य ज्ञानवित्तिवेद्यत्वेनावश्यं शीघ्रोपस्थितत्वात् । न तु जातौ शक्तिं तज्ज्ञानं कारणान्तरं वा तदवच्छेदकं कल्पयति गौरवात् । शक्तिग्रहकाले तेषां कल्पनीयोपस्थितिकत्वाच्चेत्यस्मत्पितृचरणाः ।

इदानीं वर्णनित्यतापक्षेऽपि पदानित्यतया सङ्गतिरविशिष्टेत्याह-

**न चेति** । स्वरो = ध्वनिः । तन्मतेऽप्यनित्यः । न हि तावद्वर्णमात्रे शक्तिः, व्युत्क्रमेण ततोऽर्थप्रत्ययाभावादित्यानुपूर्वीविशेषविशिष्टे तत्र शक्तिः, सा चैकवर्णज्ञानानन्तरज्ञानविषयत्वमर्पर-

मकरन्दः ।

यत्र शक्तिरस्ति, परन्तु शाब्दबोधे तस्याः कारणता नास्ति, तत्रैव कुब्जशक्तिरित्येके । यत्र स्वरूपसत्येव शक्तिः कारणं न तु ज्ञाता, तत्र कुब्जशक्तिरित्यपरे ॥ १ ॥

टिप्पणी ।

नित्यत्वेऽपि शब्दत्वसामान्यस्यैव शक्तिः । क्वचिद् ज्ञानानन्तरज्ञानविषयत्वमिति पाठः । इदञ्च शब्दनित्यतामते, स्वमते एकवर्णान्तरापरवर्णत्वस्यैव तथात्वात् ॥ १ ॥

त्वमपि तेषां नित्यम्, तस्मात्तज्जातीयक्रोडनिविष्टा एव पदार्थाः पदानि च संबद्धयन्ते नातोऽन्यथेति, नैतदनुरोधेनापि शब्दस्य नित्यत्वमाशङ्कनीयमिति। यदा च वर्णा एव न नित्यास्तदा कैव कथा पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां, कुतस्तराञ्च तत्समूहरचनाविशेषस्वभावस्य वाक्यस्य, कुतस्तमां तत्समूहस्य वेदस्य॥ १ ॥

परतन्त्रपुरुषपरम्पराधीनतया प्रवाहाविच्छेदमेव नित्यतां ब्रूम इति चेत्। एतदपि नास्ति। सर्गप्रलयसम्भवात्।

अहोरात्रस्याहोरात्रपूर्वकत्वनियमात्, कर्मणां विषमविपाकसमयतया युगपद्वृत्तिनिरोधानुपपत्तेर्वर्णादिव्यवस्थाऽनुपपत्तेः, समयानुपलब्धौ शाब्दव्यवहारविलोपप्रसङ्गाद्, घटादिसम्प्रदायभङ्गप्रसङ्गाच्च कथमेवमिति चेत्।

---

बोधनी।

दर्शयन्नुपसंहरति–**तस्मात्** इति। **एतदनुरोधेन**=संगतिग्रहानुरोधेनेति। तदेवं वर्णानामनित्यत्वं प्रसाध्य वेदानित्यत्वमाह–**यदा वर्णाः** इति। एवं तावत्प्रमायाः परतन्त्रत्वादिति व्याख्यातम्॥१॥

अथ द्वितीयं पादं व्याचिख्यासुः शङ्कते—**परतन्त्र** इति। पूर्वपूर्वोच्चारयितृपुरुषपरतन्त्रोत्तरोच्चारयितृपरम्पराप्रवाहस्याविच्छेदो नित्यता सा च प्रत्युच्चारणविनाशिनोऽपि संभवतीति। **एतदपि** इति। एवंप्रवाहाविच्छेदलक्षणमपि नित्यत्वमिति। सर्गप्रलययोरसंभवे पराभिमतसाधनान्याशङ्कते–**अहोरात्रस्य** इति। विप्रतिपन्नमहोरात्रमव्यवहिताहोरात्रपूर्वकम् अहोरात्रत्वात् अद्यतनाहोरात्रवत्, अन्यथाऽद्यतनमपि तथा न स्यात् नियामकाभावात्। किञ्च, कर्मणां धर्माधर्माणाम् विषमोऽनेकः फलकालः तेनैकस्मिन् भुक्तफले कर्मणि क्षीयमाणे कर्मान्तरमुपतिष्ठते फलान्तरोत्पादनेनेत्येककर्मिणः कियन्त्यपि कर्माणि युगपन्निरुद्धवृत्तीनि न संभवन्तीति किमुतानन्तानां कर्मिणामनन्तानि कर्माणि, तदापि कस्यचित्कर्मणो विपाकावश्यम्भावात्। प्रयोगश्च—विवादाध्यासि-

प्रकाशः।

वर्णस्य, ज्ञानं चानित्यमिति तद्घटितं पदमपि तथेत्यर्थः। अभिमतमुपसंहरति। **तस्मादिति**॥१॥

ननु कूटस्थनित्यतां वेदस्य न ब्रूमः, किन्तु प्रवाहाविच्छेदरूपामित्याह। **परतन्त्रेति**। तज्जातीयानुपूर्वीज्ञानजन्यत्वव्याप्यज्ञानविषयत्वं परतन्त्रपुरुषपरम्पराधीनत्वम्। तथा च कालत्वस्य वेदाधिकरणत्वव्याप्यत्वमेव वेदस्य नित्यतेत्यर्थः। प्रलये बाधकमाह। **अहोरात्रस्येति**। साम्प्रतिकाहोरात्रे तथा दर्शनादित्यर्थः। विपाकः = सहकारिलाभः। **वर्णादीति**। वर्णा = ब्राह्मणादयः, तेषां व्यवस्था ब्राह्मणादिमातापितृजत्वेन, सर्गादौ तदभावात् सा न स्यादित्यर्थः। आदिपदाद्गवादिर्गृह्यते। **समयेति**। सर्गादौ प्रयोज्यप्रयोजकवृद्धव्यवहाराभावाच्छब्दसङ्केतग्रहो न स्यादित्यर्थः। सर्वशब्दानामगृहीतसङ्केततयेश्वरेण शब्दतोऽपि व्युत्पादनस्याशक्यत्वादिति भावः। **घटादीति**। सम्प्रदायः = प्रवाहस्तस्य भङ्गो विच्छेदः। यथा घटादिः क्रियते, तद्रूपस्यादर्शनादित्यर्थः॥

प्रकाशिका।

प्रलयसंभवेऽपि सर्गादित एवारभ्य-परतन्त्रपुरुषपरम्पराधीनत्वं स्यान्न चैतावता प्रवाहाविच्छेदसिद्धिरत आह। **तज्जातीयेति**। ज्ञानविषयत्वमानुपूर्वीरूपं, प्रलयसम्भवे च सर्गादावेव व्यभिचारान्, नैतदस्तीति भावः। **कालत्वस्येति**। कालोपाधित्वस्येत्यर्थः।

मकरन्दः।

ननु पूर्वविच्छेदेऽपि तदुत्तरं परतन्त्रपुरुषपरम्पराधीनत्वसम्भवान्न तावन्मात्रेण प्रवाहाविच्छेदसिद्धिरित्यन्यथा व्याचष्टे **तज्जातीयेति**। विच्छेदे सर्गाद्यवेदस्य तज्जातीयानुपूर्वीज्ञानजन्यत्वाभावादव्याप्त्यसिद्धिरिति भावः। ज्ञानविषयत्वं तद्वत्त्वमित्यर्थः।

उच्यते—

**वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ॥**
**उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥**

तत्पूर्वकत्वमात्रे सिद्धसाधनाद् , अनन्तरतत्पूर्वकत्वे अप्रयोजकत्वाद् , वर्षादि

बोधनी ।

तानि कर्माणि न युगपन्निरुद्धवृत्तीनि विषमविपाकसमयत्वात् इदानीं भुक्तभुज्यमानभोक्ष्यमाणकर्मवदिति । किञ्च, सर्गादिभुवां जातिविशेषव्यवस्थापकस्योत्पादकजातिविशेषस्याभावाद् ब्राह्मणत्वादिवर्णव्यवस्था न स्यात् । विप्रतिपन्ना ब्राह्मणा ब्राह्मणसंतानजन्मानः ब्राह्मणत्वादद्यतनवत् । किञ्च, सर्गादौ सर्वेषामव्युत्पन्नत्वेन समयग्रहणानुपपत्तौ शाब्दव्यवहारोऽपि लुप्येत । विप्रतिपन्नः शाब्दव्यवहारः वृद्धव्यवहारपूर्वकः शाब्दव्यवहारत्वात् अद्यतनवत् । किञ्च, तदानीं कस्यचिदादर्शकस्याभावाद् घटादिनिर्माणसंप्रदायो न स्यात् । विप्रतिपन्नं घटादिनिर्माणं तथाभूतादर्शकज्ञानपूर्वकं घटादिनिर्माणत्वादद्यतनवत् इत्येतैर्हेतुभिर्युगपत्सर्गप्रलययोरभवे सति कथं वेदसंप्रदायविच्छेदः स्यादिति ॥

पञ्चापि साधनानि दूषयति–**उच्यते वर्षादिवत्** इति । न तावदहोरात्रपूर्वकत्वे अहोरात्रत्वं प्रयोजकं, भवस्य ब्रह्माण्डस्थितेस्तत्रोपाधित्वात् । यथा वर्षादिदिनस्य तद्दिनपूर्वकत्वे तद्दिनत्वमप्रयोजकं राश्यादिसंसर्गोपाधित्वात् । तस्य च कर्मणां युगपद्वृत्तिनिरोधोऽपि सुषुप्तिदशायामिव संभवति । ब्राह्मणत्वादिनियमोऽपि गोमयादिजातानामिव वृश्चिकादीनामुपपद्यते । समयग्रहोऽपि सर्गादौ स्वयमेव परिगृहीतप्रयोज्यप्रयोजकवृद्धशरीरव्यवहारस्य परमेश्वरस्य व्यवहारत एव सुकरः, यथैन्द्रजालिकस्य सूत्रप्रोता दारुमयपुत्रिका इदमानयेति नियुज्य तथा कुर्वन्तीभिस्ताभिर्मायाव्यवहारे तद्दर्शिनां बालानां, तथा घटादिक्रियासंप्रदायोऽपि गृहीतकुलालादिविग्रहेण भगवतैव सिध्यतीति ।

प्रथमं पादं व्याचष्टे–**तत्पूर्वकत्वमात्रे** इति । सर्गादिवर्तिनोऽहोरात्रस्याहोरात्रपूर्वकत्वे साध्ये सिद्धसाधनं, तस्यापि पूर्वसर्गान्तिमाहोरात्रपूर्वकत्वात । किञ्च, संप्रतिपन्नाहोरात्रपक्षीकरणे सिद्धसाधनं सर्गादिवर्तिनस्त्वाश्रयासिद्धिरिति भावः । नन्वव्यवहिताहोरात्रपूर्वकत्वं साध्यत इत्यत्राह–**अनन्तर** इति । तत्राहोरात्रत्वमप्रयोजकं संप्रतिपन्नाहोरात्राणामनन्तरतत्पूर्वकत्वस्योपाध्यन्तरप्रयुक्तत्वादिति । अप्रयोजकत्वमेव दृष्टान्तेन दर्शयति–**वर्षादि** इति । यथा हि वर्षाः शरदि-

प्रकाशः ।

**वर्षादिवदिति** । वर्षादौ, वर्षादिनपूर्वकत्वे साध्ये यथा राश्यादिभेदसंसर्गभेद उपाधिः,तथाऽहोरात्रपूर्वकत्वेऽहोरात्रस्य साध्ये भवो ब्रह्माण्डस्य स्थितिकालः, स एवोपाधिरित्यर्थः । सुषुप्तौ यथा कर्मणां युगपन्निरोधस्तथा अन्यत्रापि स्यादित्याह । **वृत्तिरोध इति** । यथा तण्डुलीयवृश्चिकयोस्तत्पूर्वकत्वेऽपि आद्यौ तौ तण्डुलकणगोमयाभ्यां भवतः, तथा ब्राह्मणादीनां तत्पूर्वकत्वेऽपि सर्गादौ तज्जनककर्मोपगृहीतभूतभेदात् स्यादित्याह । **उद्भिदिति** । प्रयोज्यप्रयोजकाद्यधिष्ठातुरीश्वरस्यैव व्यवहारान्मायादिव्यवहारादिव तद्दर्शी व्युत्पन्नः स्यादित्याह । **मायावदिति** ।

विवादाध्यासिताहोरात्रस्याहोरात्रपूर्वकत्वं साध्यम् अव्यवहिताऽहोरात्रपूर्वकत्वं वा ? । नाद्य इत्याह । **तत्पूर्वकत्वेति** । पूर्वसर्गाहोरात्रपूर्वकत्वेन प्रलयेऽपि साध्यसिद्धेरित्यर्थः । नान्त्योऽप्रयोजकत्वादित्याह । **अनन्तरेति** । **वर्षादीति** । तद्दिनं=वर्षादिनम् । ननु शरदाद्यदिनस्य वर्षादिनपूर्वकत्वं

प्रकाशिका ।

**वर्षादाविति** । वर्षाद्यदिन इत्यर्थः । प्रलये = प्रलयाभ्युपगम इत्यर्थः ।

दिनपूर्वकतद्दिननियमभङ्गवदुपपत्तेः। राश्यादिविशेषसंसर्गरूपकालोपाधिप्रयुक्तं हि तत्। तदभाव एव व्यावृत्तेः। तथेहापि सर्गानुवृत्तिनिमित्तब्रह्माण्डस्थितिरूपकालो-

---

बोधनी।

त्यादौ ऋतुमध्यन्दिनानां तत्तदृतुदिनपूर्वकत्वे तद्दिनत्वमप्रयोजकं संप्रतिपन्नाहोरात्राणां तत्तदृतूनां प्रथमदिनेषु व्यभिचारात्। यद्वा, वर्षर्त्वादिदिनस्य तद्दिनपूर्वकत्वे साध्ये तद्दिनत्वमप्रयोजकमभ्युपगम्यते, तथाहोरात्रत्वमप्रयोजकमुपपद्यत इति। कस्तत्रोपाधिर्येन तद्दिनत्वस्य नियमो भज्यत इत्यत्राह—**राश्यादि** इति। राश्यादिविशेषैरादित्यस्य संसर्गात्मको यः कालोपाधिस्तत्प्रयुक्तं तद्दिनपूर्वकत्वं तस्य कालोपाधेरभावे तद्दिनपूर्वकत्वस्यापि व्यावृत्तेः साध्याभावाविनाभावात्पथत्वादिति **यावत्** इति। दार्ष्टान्तिकत्वेऽप्यप्रयोजकत्वमुपाधिप्रदर्शनेनाह-**तथा** इति। **सर्गस्यानुवृत्तौ**

प्रकाशः।

साध्यमस्ति, न च राशिविशेषावच्छेद इति साध्याव्यापकत्वम्। न। वर्षादिनत्वे सति यद्वर्षादिनपूर्वकं तद्राशिविशेषावच्छिन्नमिति साधनावच्छिन्नसाध्यव्यापकत्वात्। तथापि राशिविशेषावच्छिन्नत्वं वर्षादिनत्वस्य साधनस्य व्यापकम्। अत्र, यदा दिनत्वेन वर्षाद्यदिनस्य वर्षादिनपूर्वकत्वं साध्यते, तदा पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति साम्प्रदायिकाः। किञ्च, विवादाध्यासितत्वेनैतत्कालीनाहोरात्रस्य पक्षत्वे सिद्धसाधनम्, सर्गाद्यतत्पक्षत्वे च बाधः। न चाहोरात्र-

प्रकाशिका।

**पक्षधर्मावच्छिन्नेति**। अत्र यद्धर्मावच्छिन्नसाध्यस्य व्यापकः=तदवच्छिन्नस्यैव साधनस्याव्यापक उपाधिरुच्यते। अन्यथा व्यञ्जनवत्वादेरपि प्रसिद्धानुमान उपाधितापत्तेः, तथा च प्रकृतोपाधेरुक्तपक्षधर्मावच्छिन्नसाधनव्यापकत्वादसङ्गतिरित्यरुचिं विभावयति **साम्प्रदायिका** इति। तस्माद्

मकरन्दः।

**वर्षादाविति**। वर्षाद्यदिने इत्यर्थः। **प्रलये** = प्रलयाभ्युपगमपक्षे। **पक्षधर्मेति**। वर्षादिनत्वरूपपक्षधर्मावच्छिन्नेत्यर्थः। ननु वर्षाद्यदिनव्यावृत्तो राश्यादिविशेषसंसर्गविशेष उपाधित्वेनाभिमतः। तदिदमुक्तं प्राक्, **राश्यादिभेदसंसर्गभेद उपाधिरिति**। तथा च वर्षादिनत्वरूपसाधनाव्यापकत्वमप्याद्यदिने सम्भवत्येवेत्यनुशयमाविष्करोति **साम्प्रदायिका इति**। केचित्तु राशिविशेषवत्पूर्वकत्वमत्रोपाधित्वेनाभिमतं, तच्च शुद्धसाध्यव्यापकमेव, शरदाद्यदिनेऽपि तत्पूर्वकत्वसत्वात्, एवञ्चात्र न साधनव्यापकत्वशङ्काऽपि, वर्षाद्यदिने वर्षादिनत्वरूपस्य साधनस्याव्यापकत्वादित्याहुः। पक्षविकल्पभिया पक्षधर्मत्वमाशङ्क्य परिहरति **न चेति**। अहोरात्रत्वं अहोरात्रवृत्ति

टिप्पणी।

**साम्प्रदायिका इति**। राशिविशेषसंसर्गविशेषो वर्षाद्यदिनव्यावृत्तोऽत्रोपाधित्वेनाभिमतस्तस्य वर्षाद्यदिन एव साध्यव्यापकत्वम्, पूर्वोक्तानुमान एव सम्भवतीत्यनुमानान्तरानुसरणं व्यर्थम्। यद्वा राशिविशेषवत्पूर्वकत्वस्यैवोपाधित्वं वाच्यम् तस्य शरदाद्यदिनेऽपि सत्वाच्छुद्धस्यैवोपाधेः साध्यव्यापकत्वसम्भव इति पक्षधर्मत्वाद्यनुसरणं व्यर्थमित्यस्वरसः साम्प्रदायिका इति सूचितः। **न चाहोरात्रत्वमव्यवहितेति**। अहोरात्रमात्रवृत्तिधर्मोऽत्राहोरात्रत्वं विवक्षितं न त्वहोरात्रत्वमहोरात्रवृत्तिधर्मो वा, आद्ये तत्तदहोरात्रत्वादेः पक्षैकदेशत्वाभावेन पक्षैकदेशस्यापीत्यादिग्रन्थासङ्गतेः। न च पक्षैकदेशत्वाभावेऽपि साध्यहेतुमत्तया निश्चितस्य दृष्टान्तत्वसम्भवादेवानुमानदोषाभावे ग्रन्थासङ्गतिरकिञ्चित्करीति वाच्यम्। तस्यैव पक्षत्वे सिद्धसाधनतादवस्थ्यात्। साध्यघटकाव्यवहितेत्यत्र स्वाश्रयाव्यवहितेत्यस्यैव वाच्यत्वात् सामान्यतोऽव्यवहितत्वस्याव्यावर्त्तकत्वात् तत्राहोरात्रत्वे पक्षभूते साध्यसत्वसम्पादने स्वपदेन तस्यैवोपादेयतया स्वाश्रयपूर्वसर्गीयाहोरात्राव्यवहिताहोरात्रपूर्वकत्वस्य सर्गाद्याहोरात्रेऽपि सम्भवेन तदन्तर्भावेनापि व्याप्यत्वक्षतेरभावात्। उक्तरूपेण पक्षत्वेऽवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया सर्गाहो-

पाधिनिबन्धनत्वात्तस्य तदभाव एव व्यावृत्तौ को दोषः । न च तदनुत्पन्नमनश्वरं वा अवयवित्वात् ॥

वृत्तिनिरोधस्यापि सुषुप्त्यवस्थावदुपपत्तेः । न ह्यनियतविपाकसमयानि कर्मा-

बोधनी ।

निमित्तभूता या ब्रह्माण्डस्थितिः सा स्वरूपमात्मा यस्य कालोपाधेः स एव निबन्धनमनन्तराहोरात्रपूर्वकत्वस्य; तस्मात्सर्गादौ तस्योपाधेरभावे साध्यव्यावृत्तिर्नानुपपन्नेति । ननु ब्रह्माण्डस्य सर्वदावस्थानात् कथं च तदभावः तत्राह-न च इति । तत् ब्रह्माण्डमुत्पन्नं विनश्वरं च सावयवत्वादिति।

अथ द्वितीयं पादं व्याचष्टे-वृत्तिनिरोधस्यापि इति । दृष्टान्तं विभजते-न हि इति ।

प्रकाशः ।

स्वमव्यवहिताहोरात्रपूर्वकत्वव्याप्यम्, अहोरात्रवृत्तिधर्मत्वात्. एतदहोरात्रत्ववत् । पक्षैकदेशस्यापि दृष्टान्तत्वाविरोधात् । साध्यवत्तया निश्चितत्वस्यैव तन्त्रत्वादिति वाच्यम् । अहोरात्रत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्योपाधित्वात् । न च ब्रह्माण्डस्य नित्यत्वेन साधनव्यापकोऽयमुपाधिरित्याह । न चेति । वृत्तिनिरोधस्येति । यथा सुषुप्तौ विषमविपाकसमयान्यपि कर्माणि,युगपन्निरुद्धवृ-

प्रकाशिका ।

वर्षादिनपूर्वकत्वे राशिविशेषावच्छिन्नदिवाकरदिनोत्तरत्वमुपाधिः, स च शरदाद्यदिनेऽपि वृत्तेर्न साध्याव्यापकः, वर्षाद्यदिने वृत्तेर्न साधनव्यापक इत्येव मूलतात्पर्य्यमिति भावः । अत एव राश्यादिविशेषसंसर्गभेद उपाधिरित्युक्तं प्रकाशकृता । अहोरात्रस्याहोरात्रपूर्वकत्वे च साध्ये वत्सरावनन्तरितब्रह्माण्डावच्छिन्नकालोपाध्युत्तरत्वमुपाधिरित्यवसेयम् । पक्षैकदेशस्यापीति । इदश्वाहोरात्रमात्रवृत्तिधर्मत्वावच्छिन्नस्य पक्षत्वे, यथाश्रुतेऽहोरात्रत्वस्य सकलाहोरात्रवृत्तिधर्म्मविशेषस्य पक्षतायामेतदहोरात्रत्वस्य पक्षान्यत्वादसङ्गतेः पक्षतावच्छेदकावच्छिन्नसाध्यानुमितेश्च प्रकृतोपयोगितया हेतोरेव पक्षतावच्छेदकतया व्याप्तिग्रहकाल एव सिद्धसाधनमिति निरस्तम् । अहोरात्रत्वेति । पक्षैकदेशे चाहोरात्रकत्वे साधनाव्यापकत्वमुपाधिरिति ध्येयम् । न चेति ।

मकरन्दः ।

धर्म्म इत्यर्थः । तेन पक्षैकदेशस्यापीत्यग्रिमग्रन्थसङ्गतिः । अन्यथैतद्धर्मविशेषस्यापक्षत्वे दृष्टान्तस्य तदेकदेशत्वाभावादसङ्गतिः स्यादिति ध्येयम् । न चैवं हेतुपक्षतावच्छेदकयोरभेदोऽशतः सिद्धसाधनश्चेति वाच्यं, तद्विशेष्यकोद्देश्यप्रतीतेरसिद्धेरिति ।

अहोरात्रत्वेति । अहोरात्रत्वस्य धर्मे पक्षान्तर्भूते साधनाव्यापकत्वमस्येति ध्येयम् । न चेति । न चानित्यत्वेऽपि ब्रह्माण्डस्य तत्कालीनत्वमहोरात्रत्वरूपसाधनव्यापकमेव प्रलयकालेऽहोरात्रानभ्युपगमादिति वाच्यम् । स्थितिकालपदेन सर्गाद्याहोरात्रव्यावृत्तस्य स्थितिकालविशेषस्योक्त-

टिप्पणी ।

रात्रत्वेनाभिमतव्यक्तिनिष्ठतद्व्यक्तित्वे स्वाश्रयाव्यवहिताहोरात्रपूर्वकत्वस्य न्यायमते तदाश्रयेऽसिद्धेः सिद्धसाधनाभावात् । द्वितीये च पक्षतावच्छेदकहेत्वोरैक्येन व्याप्तिग्रहकाले सिद्धसाधनप्रसङ्गादिति भावः । अहोरात्रत्वसमानाधिकरणेत्यादि । अहोरात्रवृत्तिधर्म्मत्वरूपो हेतुर्न साध्यप्रयोजकः, तस्य परिहरयमाननिर्विवादसाध्यवदिदानीन्तनाहोरात्रत्व इव साध्यवत्तया सन्दिग्धेऽहोरात्रत्वेऽपि निश्चितत्वात् किन्तूक्तप्रतियोगित्वमेव, तस्य साध्यवत्तया निश्चितेष्वेव तत्तदहोरात्रत्वेषु सत्त्वादिति इदश्चाहोरात्रत्वे साधनाव्यापक उपाधिरिति यथाश्रुताभिप्रायः । न च ब्रमान्तस्येत्याद्यग्रिमग्रन्थविरोधः स्यात् । नित्यानित्यत्वेऽप्युभयथैवाहोरात्रत्वे साधनव्यापकत्वस्योपाधेः सत्त्वादिति वाच्यम् । स्वपदार्थघटितोक्तसाध्यस्याहोरात्रत्वसत्त्वादौ निश्चयेन तत्रोपाधेरसम्भवात् साध्याव्यापकत्वाद् ब्रह्माण्डान्तस्थितिकालीनवृत्तित्वस्योपाधितया विवक्षणीयत्वात् ।

णीति तदानीं कृत्स्नान्येव भोगविमुखानि। न ह्यचेतयतः कश्चिद्भोगो नाम। विरोधात्। कस्तर्हि तदानीं शरीरस्योपयोगः?। तं प्रति न कश्चित्। तर्हि किमर्थमनुवर्त्तते। उत्तरभोगाऽर्थं, चक्षुरादिवत्। प्राणिति किमर्थम्। श्वासप्रश्वाससन्तानेनायुषोऽवस्थाभेदार्थम्, तेन भोगविशेषसिद्धेः। एकस्यैव तत् कथञ्चिदुपपद्यते, न तु विश्वस्येति चेत्। अनन्ततया, अनियतविपाकसमयतया, उपमर्द्योपमर्दकस्वभावतया च कर्मणां, विश्वस्यैकस्य वा को विशेषो येन तन्न भवेत्। भवति च सर्वस्यैव सुष्वापः। क्रमेण, न तु युगपदिति चेन्न। कारणक्रमायत्तत्वात् कार्यक्रमस्य। न च स्वहेतुबलायातैः कारणैः क्रमेणैव भवितव्यम्, अनियतत्वादेव। सर्वग्रासवत्। ग्रहाणां ह्यन्यदा समागमानियमेऽपि तथा कदाचित् स्यात्। यथा कलाद्यनि-

बोधनी।

अनियतविपाकसमयानीत्येतावता सुषुप्तिदशायां कृत्स्नान्यपि भोगाविमुखानि न हि भवन्ति, किंतु भोगविमुखान्येव। सुषुप्तस्य भोगोत्पादः किमिति न स्यात् अत्राह-**न हि** इति। अचैतन्यं सुषुप्तिमूर्छादिः, भोगश्च सुखाद्यनुभवः। तत्र यदि सुषुप्तस्य भोगः स्यात् तदाऽस्त्यनुभवो नास्ति चेति विरोधः स्यादिति। यदि तदा न भोगः कश्चित्तर्हि भोगसाधनस्य शरीरस्य कोपयोग इत्याह-**कस्तर्हि** इति। गूढाभिसन्धिराह- **तं प्रति** इति। तं = सुषुप्तमिति। अज्ञातपराभिसन्धिः पृच्छति-**किमर्थम्** इति। स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह-**उत्तर** इति। यथा हि ज्ञानजननार्थानि चक्षुरादीनि तदानीं ज्ञानमनुत्पादयन्त्यपि जाग्रद्दशायां तदुत्पादनायानुवर्त्तन्ते तथा शरीरमप्युत्तरभोगायेति। कस्तर्हि उत्तरकालं यावत्तावदवस्थितस्य प्राणनस्य तदानीमुपयोग इत्याह-**प्राणिति** इति। प्राणनं नाम = शरीरान्तर्वर्त्तिनो वायोर्गतिविशेष इति। **श्वास** इति। प्राणाख्यस्य वायोः कालावच्छेदेन संबन्ध आयुरिति। अवस्थाभेदो वा किमर्थ इत्याह-**तेन** इति। अस्मिन्नवस्थाभेदे असौ भोगोऽस्मिंस्त्वयमित्यवस्थाभेदेषु भोगविशेषाः प्राणिनां नियताः, ततस्तत्सिद्ध्यर्थोऽवस्थाभेद इति। नन्वस्त्वेकस्यात्मनः कर्मणां युगपद्वृत्तिनिरोधः, न तु विश्वस्यात्मवर्गस्य, न ह्यनन्तानां भोक्तॄणामनन्तानि कर्माणि युगपन्निरोत्स्यन्त इति संभवतीत्याह-**एकस्यैवेति**। **अनन्त** इति। अनन्तत्वादीनि हि कर्मणां युगपन्निरोधाविरोधीनि; तानि च कर्मणामेकत्वानेकत्वयोरविशिष्टानि। तत्र यथैकस्य सुषुप्तिदशायां तथाभूतानामेव कर्मणां युगपन्निरोधः संभवति। किमिति विश्वस्यायं न संभवेदिति। किंच, सुषुप्तिरपि सर्वस्य भवति न त्वेकस्यैवेत्याह-**भवति च** इति। तेन कर्मणामेकानेकत्वकृतो विशेषो नास्तीति। ननु सत्यमस्ति सर्वस्यापि सुस्वापः, स तु क्रमेण न युगपदित्याह-**क्रमेण** इति। ततश्च न तन्निदर्शनेन युगपत्प्रलयः सिध्यतीति भावः। **न** इति। सुषुप्तेः कारणक्रमवशात् क्रमः, न युगपन्निरोधविरोधादिति। ननु सुषुप्तेरिव प्रलयस्यापि कारणानि क्रमेण भवन्ति दृश्यन्ते, तद्वत्सर्वदापि किमिति न भवन्तीत्यत्राह—**न च** इति। न हि क्वचित्कदाचिद्वा क्रमभावीनि कारणानीति सर्वत्र सर्वदा वा तैस्तथा भवितव्यं स्वहेतूनां क्रमयौगपद्यवशेन संभवत्क्रमयौगपद्यानां कारणानामनियतत्वात् **क्रमस्येति**। एकदा क्रमभाविनामेवान्यदा यौगपद्यं दृष्टमित्याह-**सर्वग्रासवत्** इति। तदेव विभजते-**ग्रहाणामिति**। अत्रैव दृष्टा-

प्रकाशः।

न्तानि प्रतिबद्धभोगजननानि, तद्वत्तदाऽपीत्यर्थः। **आयुष** इति। जीवनस्य कालावच्छेद आयुस्तदर्थमित्यर्थः। **उपमर्द्यति**। प्रतिबद्धयप्रतिबन्धकस्वभावतयेत्यर्थः। **सुस्वाप** इति युक्तः पाठः।

प्रकाशिका।

न चानित्यत्वेऽपि ब्रह्माण्डस्य तत्कालीनत्वं साधनाव्यापकमेव, प्रलयेऽहोरात्रानभ्युपगमादिति वाच्यम्। विवक्षितोपाधेरायाहोरात्रे साधनाव्यापकत्वात्। स्वापसन्तानजनककर्म्मणामनिरुद्ध-

यमेऽपि सर्वमण्डलोपरागः स्यात्।, त्रिदोषसन्निपातवद्वा । यथा हि वातपित्तश्लेष्मणां चयप्रकोपप्रशमक्रमानियमेऽपि एकदा सन्निपातः स्यात्तदा देहसंहारः, तथा कालानलसंहारपवनमहार्णवानां सन्निपाते ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनाः स्युरिति को विरोधः ? । तथापि, विदेहाः कर्मिण इति दुर्घटमिति चेत् । किमत्र दुर्घटम् ? । भोगनिरोधवच्छरीरेन्द्रियविषयनिमित्तनिरोधादेव तदुपपत्तेः ।

वृश्चिकतण्डुलीयकादिवद् वर्णादिव्यवस्थाप्युपपद्यते । यथा हि, वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयादाद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुलकणादाद्यो, वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः, एवं क्षीरदधिघृततैलकदलीकाण्डादयः । तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकास्तत्तत्कर्मोपनिबद्धभूतभेदहेतुका एव, स एव हेतुः सर्वत्रानुगत इति सर्वेषां तत्सान्तानिकानां समानजा-

बोधनी ।

न्तान्तरमाह—त्रिदोष इति । तदेव विभजते—यथा हि इति । वातादिदोषाणां चयप्रकोपप्रशमा न नियताः कदाचिद्धि कश्चिच्चीयते कुप्यति शाम्यति वेति, न तु युगपत्सर्वेऽपि । यथाह—वाहटः ।

> चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।
> वर्षादिषु च पित्तस्य श्लेष्मणः शरदादिषु । इति

तत्रैकैकमात्रकोपे रोगः स्यात् । कदाचित् त्रयाणां सन्निपातो युगपत्कोपः स्यात् । तदा देह एव प्रलीयते । तदप्याह ।

> "रोगस्तु दोषवैषम्याद्दोषसाम्यमरोगता ।
> वातः पित्तं कफश्चेति त्रयो दोषाः समासतः ।
> विकृता विकृता देहं घ्नन्ति ते वर्तयन्ति च" । इति

पक्षेऽप्याह—तथा इति । ब्रह्माण्डात्मनो देहस्य, कालानलः पित्तं, संहारपवनो वातः, महार्णवः श्लेष्मेति, तेषां कोपे तदपि प्रलीयते । तदा च भोग्यभोगसाधनयोरसंभवे भोगरहिताः कर्मिणस्तिष्ठन्तीत्यावरुद्धमिति । तथापि इति । न सन्ति देहाः, सन्ति च तेषां निमित्तानि कर्माणीति व्याहतमिति । किमत्र इति । यथा हि तदानीं सत्स्वेव कर्मसु तन्निरोधात् भोगो निरुध्यते, तथाऽत एव भोगसाधनदेहादिनिरोधोऽपि घटिष्यत इति ।

तृतीयं पादं व्याचष्टे—वृश्चिक इति । दग्धाद्वेत्रबीजात् कदलीकाण्डोत्पत्तिरित्यादयः । पक्षेऽप्याह—तथा इति । तेषां मानुषादीनाम् । तत्तत्कर्म इति । तत्तन्मानुषत्वादिजातिभेदनिमित्तादृष्टवदात्मसंयुक्तारम्भकपरमाणुभेदहेतुका इति । तर्हि वैजात्यात्कारणस्य कार्यसाजात्यं न स्यादित्यत्राह—स एव इति । अद्यतनानामप्यदृष्टोपनिबद्धभूतभेदहेतुकैव जातिव्यवस्था, ततश्च न कारणवैजात्यमिति । यदि सर्वत्र कर्मोपनिबद्धभूतभेदहेतुर्जातिनियमः, तर्ह्युत्पादकजातिपूर्वकत्व-

प्रकाशः ।

"सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इत्यनेन कृतसंप्रसारणस्यैव सुपेः षत्वविधानात् । तथाऽपीति । कर्मभिर्भोगजनने देहस्यावश्योत्पाद्यत्वादित्यर्थः । भोगेति । तदानीं कर्मभिर्भोगजननात् तदर्थं देहोत्पादनमित्यर्थः । तण्डुलीयकमुद्भिद् दृष्टान्तः । एवमिति । क्षीरादक्षीराच्च परमाणोः क्षीरम्, एवं दध्याद्यपीत्यर्थः । नन्विदानीं ब्राह्मणत्वादिव्यवस्थापकं विशुद्धमातापितृजत्वादिकं, सर्गादौ तु कर्मेत्यननुगम इत्यत आह । स एवेति । इदानीमप्यदृष्टविशेषोपगृहीतभूतजनितत्वेनैव तद्व्यव-

प्रकाशिका ।

वृत्तित्वकत्वाद् व्याचष्टे । प्रतिबद्धेति । तण्डुलीयकमिति । "उद्भिद्वृश्चिकव-

मकरन्दः ।

त्वात् । श्वासजनककर्मणां वृत्तिलाभादसिद्धिरिति विवृणोति प्रतिबद्धेति । तण्डुलीयकेति ।

तीयत्वमिति किमसङ्गतम् ? । गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना । न गतम्, योनिजेष्वेव व्यवस्थापनात्, मानसास्त्वन्यथाऽपीति । गोमयवृश्चिकादिवद् इदानीमपि किं न स्यादिति चेन्न । कालविशेषनियतत्वात् कार्यविशेषाणाम्, न हि वर्षासु गोमयाच्छालूक इति हेमन्ते किं न स्यात् ॥

समयोऽप्येकेनैव मायाविनेव व्युत्पाद्यव्युत्पादकभावावस्थितनानाकायाधिष्ठानाद् व्यवहारत एव सुकरः । यथा हि मायावी सूत्रसञ्चाराधिष्ठितं दारुपुत्रकमिदमानयेति प्रयुङ्क्ते, स च दारुपुत्रकस्तथा करोति तदा चेतनव्यवहारादिवत् तद्दर्शी बालो व्युत्पद्यते, तथेहापि स्यात् । क्रियाव्युत्पत्तिरपि तत एव कुलालकुविन्दादीनाम् ।

सर्गादावेव किं प्रमाणमिति चेत् । विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवा-

---

बोधनी ।

मुत्पाद्यजातीनामिति नियमो निरस्तः स्यात् इत्याह-**गतं तर्हि** इति । **न गतम्** इति । न च सोऽपि नियमः सर्वथा निरस्यत इति । कथमित्याह-**योनिजेषु** इति । योनिजेष्वेवायं नियमो नायोनिजेष्विति केवलं व्यवस्थाप्यते, तेन मानसानामन्यथात्वमपि संभवतीति । नन्वद्यत्वेऽपि यथा गोमयाद् वृश्चिका जायन्ते तथा मनसाऽपि केचिज्जायन्ताम् इत्याह-**गोमय** इति । **न** इति । कालविशेषलक्षणसहकारिविरहादित्यर्थः । तत्रैव दृष्टान्तमाह-**न हि** इति । तथा सर्गादावेवादृष्टोपनिबद्धभूतहेतुको जातिनियमः, नेदानीमपीति सिद्ध एव ।

संग्रहस्य तुरीयं पादं व्याचष्टे-**समयोऽपि** इति । मायाविनेत्येतद्विभजते-**यथा हि** इति । शब्दव्युत्पत्तिवद् घटादिनिर्माणव्युत्पत्तिरपि कुलालादिभावव्यवस्थितकायानधिष्ठाय पटादिकं निर्मिमाणेनैवेश्वरेण सुकरेत्याह-**क्रियाव्युत्पत्तिरपि** इति ।

ननु सर्गप्रलययोः सिद्धौ सर्वमेतदेवं स्यात्, तयोरेव सिद्धिः कुतस्त्येत्याह-**सर्गादौ** इति । सर्गसिद्धौ तावदनुमानमाह-**विश्वसंतानोऽयम्** इति । अवयवावयविप्रवाहः संतानः, सिद्धसाध्यतानिवृत्त्यर्थमुक्तं-**विश्व** इति । **दृश्यसंतानशून्यैः** इति । यथा ह्यद्यत्वे घटादिकार्याणि तदारम्भकैः परमाणुभिः तदारम्भात् पूर्वं दृश्यमानमृत्पिण्डादिकार्यसंतानवद्भिरारम्यन्ते, नैवं सर्वदापीति । कदाचिद्दृश्यसंतानशून्यैरनारब्धसर्वकार्यैः स्वरूपेणावस्थितैरिति यावत् । परमाणुभिर्विश्वं कार्यमारभ्यते यथा ह्यरणिजनितोऽग्निः संतानान्तरशून्यैरेवारणिवर्तिभिराग्नेयपरमाणुभिरारभ्यत

प्रकाशः ।

स्येत्यर्थः । गतमिति । सर्गाद्यगोव्यक्तौ व्यभिचारादित्यर्थः । **योनिजेष्विति** । योनिजमात्रवृत्तिगोत्वव्याप्यजातेस्तत्र हेतुत्वादित्यर्थः । तन्निश्चयश्च कालविशेषवृत्त्येति भावः ।

**समयोऽपीति** । नन्वीश्वरव्यवहाराच्छक्तिग्रहे स भ्रमः स्यात् । व्यवहारहेतुतज्ज्ञानस्य नित्यतया शब्दजन्यत्वबाधात् । तथा च तन्मूलकः सर्वशाब्दव्यवहारो भ्रमः स्यात् । न । घटपदजं घटज्ञानमित्यस्य भ्रमत्वेऽपि घटपदं घटशक्तमित्यस्य ज्ञानस्य सत्यज्ञानत्वाद् विषयबाधाभावात् । न च भ्रममूलकत्वेन भ्रमत्वम् । विशेष्यावृत्तिप्रकारकत्वस्योपाधित्वात् । अत एवानुरूपं दृष्टान्तमाह । यथा हीति ।

**विश्वसन्तान इति** । ननु विश्वशब्देन ब्रह्माण्डपक्षत्वे तदसिद्ध्या आश्रयासिद्धिः, कार्यमात्रपक्षत्वे क्रमारब्धदहनपवनादिन्यायेनारम्भेऽपि प्रलयासिद्धौ सिद्धसाधनम् । एकदेति विशेषणे

टिप्पणी ।

प्रलयेऽहोरात्रत्वानभ्युपगमेऽपि ब्रह्माण्डस्यानित्यत्वे सर्गाद्यहोरात्रव्यक्तित्वे साधनाव्यापक-

प्रकाशः ।

तेनैव व्यभिचारात् । एकदाऽऽरम्भहेतुसाकल्ये सतीति विशेषणासिद्धेः । साध्यमपि कार्यद्रव्यशून्यसमवाय्यारभ्यत्वं कार्यमात्रशून्यसमवाय्यारभ्यत्वं वा ? । आद्ये सिद्धसाधनमन्त्ये बाधः, आरम्भकसंयोगादेः सत्त्वात् । अथैककालीनाः सर्वे परमाणवः कदाचित् समग्रोपादेयप्रबन्धशून्याः, आरम्भकत्वान्नष्टपवनारम्भकपरमाणुवत् । सर्वत्र पक्षतावच्छेदकावच्छिन्नसाध्यं प्रतीयते इत्येककाले शून्यता लभ्यते । न च पवनपरमाणूनामपि पक्षत्वेनांशतः सिद्धसाधनम् । पक्षधर्मतावललभ्यसाध्याप्रतीतेः । अभेदानुमानवञ्च पक्षस्यापि दृष्टान्तत्वाविरोधः । न । कार्यद्रव्याधिकरणकालमात्रवृत्तित्वस्योपाधित्वात् ।

प्रकाशिका ।

दिति" कारिकायामुद्भिच्छब्देन तण्डुलीयकशाकविशेषो दृष्टान्त इत्यर्थः । तेनैवेति । धूमारब्धदहनादिनैवेत्यर्थः । समग्रोपादेयप्रबन्धशून्यत्वं सामान्याभावः स च बाधितः । इदानीं प्रतिबन्धसत्त्वादिति कदा चिदिति विशेषणम् । उपादेयपदं = स्वोपादेयद्रव्यपरमतः खण्डप्रलयेऽपि कर्म्मादिसत्त्वान्न बाधः । आरम्भकत्वादिति । द्रव्यसमवायिकारणत्वादित्यर्थः । तेन नाकाशादौ व्यभिचारः । नष्टेति । न च तेजोवाय्वोरपि संसर्गिद्रव्यतया तेनापि द्रव्यान्तरजनने दृष्टान्तस्य साध्यवैकल्यमिति वाच्यम् । पूर्वद्रव्यनाशकालीनस्य परमाणोः साध्यवत्त्वानिश्चयात् । कार्यद्रव्येति । ननूपाधिदातुर्म्मते मात्रपदव्यवच्छेद्याऽप्रसिद्धिः । न च न्यायमतेनैवायमुपाधिः स्यादिति ग्रन्थयोजना दृष्टान्तीकृतपरमाणोरेव साध्याव्यापकत्वात् । न च प्रलयासिद्धौ साध्यव्यापकतासन्देहोऽस्त्येवेति वाच्यम् । प्रलयस्य सिद्धावसिद्धौ चोपाधिताप्रयोजकान्यतररूपव्य-

मकरन्दः ।

उद्भित्पदेन शाकविशेष एव दृष्टान्ततयोक्त इति भावः । तेनैवेति । क्रमारब्धदहनपवनादिनेत्यर्थः । तस्यैकदाऽऽरब्धत्वाभावादिति भावः । संप्रति तद्बाधितमित्यत आह कदा चिदिति । उपादेयपदं स्वोपादेयद्रव्यपरं, तेन खण्डप्रलयसाधने न बाधः । कार्य्यद्रव्येति । ननु मात्रपदोपादाने दृष्टान्तितपवनपरमाणावेव साध्याव्याप्तिः, तस्य प्रलयेऽपि वृत्त्या तादृशकालमात्रवृत्तित्वाभावात् । तदनुपादाने साधनव्यापकत्वम् । उपाधिदातुर्मते मात्रपदव्यवच्छेद्यकार्यद्रव्यानधिकरणकालाप्रसिद्धिश्च । अत एवेदमेवानुमानं सिद्धान्तितं शब्दखण्डे, अन्यथा सोपाधित्वे तदनुपपत्तेः, तस्मादयमनुपाधिरेव । प्रलयसन्देहदशायामुपाधित्वेनास्य सन्देहो दूषक इत्याशयेनास्योपाधित्वेनोद्भावनम् । न च मात्रपदव्यवच्छेद्यासिद्धेरस्यैवाप्रसिद्धतया कथं तथात्वमपीति वाच्यम् । न्यायमतेन तथात्वसम्भवादिति वदन्ति । वयन्तु ब्रूमः । न्यायमतेनैवास्योपाधित्वम् । एवञ्चोपाधित्वादित्यस्य पूर्वं त्वन्मत इति पूरणीयम् । तथा च नाप्रसिद्धिर्न वा साधनव्यापकत्वम् । साध्याव्यापकत्वन्त्ववशिष्यते, तदपि न, सावयवत्वाणुभिन्नत्वाद्यवच्छिन्नसाध्यव्यापकतया पर्यवसितसाध्यव्यापकत्वात् । न चैवं स्वीकृतत्रिविधोपाधिबहिर्भावेऽपसिद्धान्तः, तस्योपलक्षणपरत्वात् । अत एव वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ रूपवत्त्वावच्छिन्नसाध्यव्यापकमुद्भूतत्वमुपाधिः सर्वसिद्धः । न च न्यायमतेन सिद्धान्तितत्वादव्यभिचरिते प्रकृतहेतौ नोपाधिरिति वाच्यं, शून्यपदस्य ध्वंसपरतया कादाचित्काभावपरतया वा यथाश्रुते हेतोर्मनःप्रभृतौ व्यभिचारेणास्य सङ्गतत्वात् । अत एवारम्भकत्वादिति हेतुरुक्तः, अन्यथा मेयत्वादिकमेव समर्थं स्यात् । द्रव्यसमवायिकारणत्वविवक्षया च सिद्धान्तत्वमिति न विरोधगन्धोऽपीति तत्त्वम् । कालमात्रपदयोरन्यतरान्तर्भावेण तन्मतेऽपि सन्दिग्धोपाधिपरत्वमित्याहुः । न चेति । व्योमादिसमानकालीनतया तदतिरिक्तत्वमसम्भवीत्यतआह कार्य्येति । वायवारणाय द्रव्येति । दृष्टान्तसिद्ध्यर्थमाह

टिप्पणी ।

त्वात् नित्यत्वे च तत्राप्यस्त्येवोपाधिरिति नासङ्गतिः । कार्यद्रव्याधिकरणकालमात्रेति ।

प्रकाशः ।

न च परमाणवः कार्यद्रव्यसमानकालिकपरमाणुक्रियाऽतिरिक्तक्रियावन्तो मूर्तत्वात् पटवदि-त्यवान्तरप्रलये, महाप्रलये च कार्यद्रव्यसमानकालिकैतद्वृत्तिध्वंसान्यध्वंसवन्तः तत एव तद्वदिति

प्रकाशिका ।

तिरेकनिश्चयात् सामान्यतोऽनुपाधितानिश्चयात्, प्रलयस्वीकारे साधनाव्यापकत्वनिश्चयेऽपि साध्या-व्यापकत्वनिश्चयादस्वीकारे च साध्यव्यापकत्वनिश्चयेऽपि साधनव्यापकतानिश्चयात् । न च प्रलय-स्वीकारेऽपि सावयवत्वावच्छिन्नसाध्यव्यापकोऽयमुपाधिरुपाधित्वैविध्याभिधानस्योपलक्षणपरत्वादि-ति वाच्यम् । सावयवत्वावच्छिन्नसाधनव्यापकत्वाद् । यद्धर्म्मावच्छिन्नसाध्यव्यापकस्तद्धर्मावच्छिन्न-साधनव्यापकस्यैवोपाधित्वात् । अन्यथा प्रसिद्धानुमाने व्यञ्जनवत्त्वादेरुपाधितापत्तेः । किञ्चात्रानुमाने व्याप्तिदोषो नास्त्येवेति कथमुपाधिः सञ्चच्छताम् । अत एव चिन्तामणाविदमेव सिद्धान्तानुमान-मुक्तमिति । अत्राहुः । आरम्भकत्वमात्रं हेतुर्न च द्रव्यविशेषितमेवञ्च यथा निरुक्तस्य साध्यस्याका-शादावसत्त्वेन हेतोर्व्यभिचार इति एवं द्रव्यविशेषितहेत्वभिप्रायेण च चिन्तामणौ सिद्धान्तानुमान-मिदम् । अणुभिन्नत्वावच्छिन्नसाध्यव्यापकश्चायमुपाधिः । कपालादौ निरुक्तसाध्यव्यापकत्वादाका-शादौ तदवच्छिन्नसाधनाव्यापकत्वाच्च न्यायमतेनैवायमुपाधिरतो न मात्रपदव्यवच्छेद्याप्रसिद्धिः । का-लपदमुपाधौ त्याज्यमेव तथा सति आकाशादेरेव मात्रपदव्यवच्छेद्यत्वमित्यप्याहुः । वस्तुत उपा-धिपदं प्रकृतेऽवच्छेदकपरं तेनायमर्थः, एककालीना इत्यत्र प्रलयरूपकालोपाधेरेवाच्छेदकत्वेऽ-प्रसिद्धिरिति संसाररूपकालोपाधिरेव पक्षतावच्छेदको वाच्यः । तथा सति बाधापत्तिरिति । अनयैव रीत्या कार्यद्रव्यानधिकरणेत्यपि क्वचित्कः पाठो योजनीयः, संसारकालस्यावच्छेदकत्वे बाध इति तदन्यः कालोपाधिरवच्छेदको वाच्यः । तत्र चाप्रसिद्धिरित्येवं कृत्वा, मात्रपदं च उभयपाठप-क्षेऽपि व्युत्क्रमेण योजनीयम् । कार्यद्रव्याधिकरणकालवृत्तित्वमात्रमिति क्रमेणेति दिक् ।

**न च परमाणव इति** । व्योमादेः प्रलयेऽपि सत्त्वाद्बाध इति **कार्येति** । क्रियाकाले कार्यावश्य-म्भावेन बाध इति द्रव्येति । दृष्टान्तसिद्ध्यर्थं **परमाण्विति** । पक्षधर्म्मताबलात् कार्यद्रव्यासमान-कालीनक्रियासिद्धौ, प्रलयसिद्धिरिति भावः । योग्यतैवात्र साध्येति न निष्क्रियविनष्टे व्यभिचारः । क्रियावत्त्वमेव वा हेतुत्वेन विवक्षितमिति स्मर्त्तव्यम् । **तत एवेति** । ध्वंसवत्त्वादेवेत्यर्थः । न च यस्मिन् परमाणौ प्रथमत एव संयोगादिसमस्तकार्यध्वंसः, पश्चाच्च परमाण्वन्तरकर्म्मनाशेन महाप्रल-यस्तस्मिन्नंशतो बाधव्यभिचाराविति वाच्यम् । संयोगनाशाय क्रियायास्तन्नाशाय वा संयोगस्य स्वीकारेणादृष्टनाशादेव चरमनाशे सर्वत्र साध्यसत्त्वात् । योग्यतैवात्रापि साध्येति क्रियावत्त्वमेवात्रापि

मकरन्दः ।

**परमाण्विति । मूर्त्तत्वादिति** । क्रियावत्त्वादित्यर्थः । तेन निष्क्रिये विनष्टे न व्यभिचारः । योग्यता साध्येत्यन्ये । **तत एवेति** । मूर्त्तत्वादेवेत्यर्थः । अत्रापि योग्यतायाः साध्यत्वान्नोत्पन्नविनष्टे व्यभिचारः । वस्तुतो मूर्त्तपदं ध्वंसवत्परमन्यथाऽवच्छिन्नपरिमाणवत्परत्वे व्यर्थविशेषणत्वापत्तेरिति ध्येयम् ।

टिप्पणी ।

न्यायमतेनैवेदमुपाध्युद्भावनम्, तव मते इति च शेषः । यद्यपि दृष्टान्ते साध्याव्या-पकत्वम् । तथापि अणुभिन्नत्वावच्छिन्नसाध्यव्यापकत्वादाकाशे तादृशसाधनाव्यापकत्वाच्च भवत्युपाधिः, न चाकाशे साध्यसत्त्वनिश्चयः, एतदनुमानपूर्वं प्रलयस्य सन्दिग्धत्वात्, साध्यवत्तया निश्चिते यावत्युपाधिनिश्चयस्यैव दूषकत्वात् साध्याव्यापकत्वस्य सन्दिग्धस्यापि दूष-कत्वात् । मात्रपदव्यावर्त्यस्य न्यायमते प्रलयस्य सत्त्वान्न तद्वैयर्थ्यशङ्का । वस्तुतस्तूपाधिपदमव-च्छेदकपरम्, तथा चैककालीनता इत्यत्र पक्षतावच्छेदककालवृत्तित्वं कार्य्यद्रव्याधिकरणकाल-

प्रकाशः ।

वाच्यम् । एतदन्यगुणवत्त्वस्योपाधित्वात् । नाप्यारम्भककालान्यवृत्तिध्वंसप्रतियोगिवृत्तिकार्यद्रव्यत्वं, स्वाधिकरणानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति, कार्यमात्रवृत्तिधर्मत्वात्, एतत्प्रदीपत्ववदिति, वाच्यम् । स्वपदेन पक्षभिन्नाभिधानेऽनन्वयात् । पक्षाभिधाने त्वप्रसिद्धिः ।

अत्राहुः । विश्वसन्तानपदेन कार्यमात्रवृत्त्यनेकवृत्तिर्धर्मः कार्यद्रव्यत्वं पक्षः । तथा हि, समयसम-

प्रकाशिका ।

तत इत्यनेन परामृश्यते मूर्त्तत्वस्यावच्छिन्नपरिमाणवत्त्वार्थकत्वे अवच्छिन्नपदवैयर्थ्यादिति कश्चित् । **एतदन्येति** । पक्षेतरत्वनिरासाय तदन्यत्वं विहाय एतद्वृत्तिगुणान्यगुणवत्त्वपर्यन्तानुधावनम् । यद्यप्ययमपि पर्वतेतरद्रव्यत्ववन्नोपाधिः साध्यव्यापकताग्राहकसत्त्वे तु वह्नीतरत्ववदेतदन्यत्वमुपाधिः सम्भवत्येव, तथापि हेतोरप्रयोजकत्वे तात्पर्य्यम् । **नाप्यारम्भकेति** । आकाशवृत्तिध्वंस-प्रतियोगिवृत्तित्वमादायार्थान्तरमिति **वृत्त्यन्तं** पक्षविशेषणम् । तस्यापि तादृशध्वंसप्रतियोग्यवृत्ती-त्यर्थोऽन्यथो क्तार्थान्तरतादवस्थ्यात् । इयञ्च कालाघटितसाध्यपक्षे व्याख्या । यदा तु कालघटितं, साध्यं तदोक्तार्थान्तरशङ्काविरहादुपरञ्जकमेव तद्विशेषणम् । **स्वपदेनेति** । पक्षभिन्नस्य दृष्टान्ती-कृतैतत्प्रदीपत्वादेरभिधाने अनन्वयः, उद्देश्यप्रलयासाधकत्वात् । पक्षाभिधाने तु तादृशकालाप्रसि-द्धेरित्यर्थः । इदञ्च कालघटितसाध्यपक्षे व्याख्यानम् । तदघटितसाध्यपक्षे तु पक्षभिन्नयावद-भिधाने तदधिकरणानधिकरणधर्मिणोऽभावात् साध्यस्य क्वचिदप्यसत्त्वादनन्वयः । पक्षाभिधाने त्वप्रसिद्धिः, दृष्टान्ते साध्यासिद्धिरिति व्याख्याता उक्तदोषनिरासाय स्वपदकालपदाघटितं साध्य-मादाय सिद्धान्तयति-**तथा हीति** । आकाशादिवृत्तिध्वंसप्रतियोगिवृत्तित्वमादायार्थान्तरशङ्का मा भूदिति बाधस्फोरणाय **समयेत्यादि अवृत्तीत्यन्तं** पक्षविशेषणम् । समयपदं साधारणाधिक-रणपरमतो न पक्षविशेषणासिद्धिः, तादृशशब्दवृत्तित्वेनार्थान्तरमिति पक्षे, द्रव्यपदं स्वरूपासिद्धि-वारणाय, पक्षे **कार्य**पदं महाप्रलयेनार्थान्तरवारणाय, साध्ये **समानकालीनान्तमनधिकरणान्त-**विशेषणं न तु ध्वंसविशेषणमिदानीन्तनध्वंसस्यापि महाप्रलये सत्त्वादुक्तार्थान्तरतादवस्थ्यात् । ध्वंस-

मकरन्दः ।

**एतदन्येति** । यद्यपि पक्षेतरत्वनिरासाय गुणवत्पदमयुक्तं, साध्यव्यापकताग्राहकसत्त्वे वह्नीतरत्व-वत्त्वस्याप्युपाधित्वात्, तदसत्त्वे पर्वतेतरद्रव्यत्वादिवदस्यापि पक्षेतरतुल्यत्वेनानुपाधित्वात्, तथापि हेतोरप्रयोजकत्वे तात्पर्य्यम् । **अनन्वयादिति** । प्रकृतानन्वयात् कार्य्यद्रव्याधिकरणकालासिद्धे-रित्यर्थः । **पक्षेति** । कार्यद्रव्याधिकरणद्रव्यादेः प्रसिद्धत्वेऽपि तादृशकालस्याप्रसिद्धेः साध्ये काल-पदान्तर्भावादप्रसिद्धिरिति भावः । एतदनन्तर्भावेण सिद्धान्तमाह **तथा हीति** । समयेत्युपलक्षणं तदुपाधि-दिक्-तदुपाध्यादिकमपि बोध्यम् । एतच्च तादृशाकाशवृत्तिध्वंसप्रतियोगिवृत्तित्वेनार्था-न्तरं मा भूदिति बाधस्फोरणाय समवायिपदं द्रव्यसमवायिपरम् । तादृशशब्दवृत्तित्वेनार्थान्तर-वारणाय पक्षे द्रव्यपदम् । महाप्रलयेनार्थान्तरवारणाय कालीनान्तं ध्वंसविशेषणम् । कार्य्यप्राग-भावपदयोरन्यतरान्तर्भावेण साध्यद्वयं बोध्यम्, अतो न व्यर्थविशेषणत्वम् । कार्यपदं भावकार्य्य-परम् । कार्य्यद्रव्यानधिकरणत्वं कार्यद्रव्याभाववत्त्वं, तच्च कपालादावपीति तद्वृत्तिध्वंसमादायार्था-

टिप्पणी ।

वृत्तित्वं न तु प्रलयवृत्तित्वन्तस्यासिद्धेस्तथा च बाध इति भावः । **एतदन्यगुणवत्त्वस्योपाधित्वा-दिति** । यद्यप्येतस्य पक्षेतरत्वतुल्यत्वम् । तथापि हेतोरप्रयोजकत्वे तात्पर्य्यम् । **आरम्भकका-लान्येति** । आरम्भको द्रव्यसमवायिकारणं तस्मात् कालाच्च यदन्यत् तद्वृत्तिध्वंसप्रतियोगिवृत्ति-त्वाभावादित्यर्थः । उक्तविशेषणोपादानादाकाशवृत्तिध्वंसप्रतियोगित्वमादाय नार्थान्तरम् । कालघ-

यिभिरारब्धः । सन्तानत्वादारणेयसन्तानवत् । वर्त्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पा

बोधनी ।

इति । प्रलयेऽपि प्रमाणमाह-**वर्त्तमान** इति । यदि संतानारम्भकत्वादित्येवोच्येत द्व्यणुकादिभि र्व्यभिचारः स्यात् , न हि ते पूर्वमुत्पादितसंतानान्तराः अथ चारम्भकाः, अतस्तद्व्यवच्छेदायोक्तं-

प्रकाशः ।

वायिभिन्नवृत्तिध्वंसप्रतियोग्यवृत्तिकार्यद्रव्यत्वं, कार्यद्रव्यप्रागभावसमानकालीनारम्भकातिरिक्तकार्यद्रव्यानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति, कार्यमात्रवृत्तिधर्मत्वात् , शब्दत्ववत् । न चात्र विभुवृत्तिवृत्तित्व मुपाधिः । अन्त्यावयविकर्मत्वे साध्याव्यापकत्वात् । **वर्तमानेति** । ब्रह्माण्डस्यागमसिद्धत्वान्नाश्रया-

प्रकाशिका ।

प्रागभावात्मककर्म्मादिसमानकालीनो द्रव्यध्वंसो महाप्रलयाव्यवहितक्षणे भवत्येवेति तमादायार्थान्तरवारणाय द्रव्यपदम् कार्यद्रव्यपदयोस्तु विकल्पेनान्वयः. कार्यपदञ्च भावकार्यपरं कार्यद्रव्यानधिकरणत्वं कार्यद्रव्याभाववत्वमेवोक्तं तच्च कपालादावस्त्येवेति कपालादिकमादायार्थान्तरवारणायारम्भकातिरिक्तेत्यनधिकरणान्तविशेषणम् । **आरम्भकपदं** द्रव्यसमवायिकारणपरमतो न दृष्टान्ते साध्यवैकल्यम् । कार्येति अनन्तत्वे व्यभिचारवारणाय इति । **मात्रेति** । न चैवमपि ध्वंसत्वे व्यभिचारः, भाववृत्तित्वे सतीति विशेषणात् । नन्वेवमपि चरमक्रियात्वे व्यभिचारः, न च प्रागभावसमानकालीनकार्यमात्रवृत्तित्वादिति हेतुरिति वाच्यम् । तथापि चरमसर्गीयघटत्वे व्यभिचारात् । न च तादृशध्वंसप्रतियोगिजातीयवृत्तित्वं साध्यमिति वाच्यम् । तथा सत्यनन्तत्वे तज्जातीयव्योमादिवृत्तितया साध्यसत्त्वेन मात्रपदवैयर्थ्यापत्तेः । न च ध्वंसप्रतियोगित्वमपि जातीयविशेषण मिति वाच्यम् । तस्याप्रयोजनकत्वेन व्यापकतानवच्छेदकत्वादिति ।

**अत्र मिश्राः** । मात्रपदं हेतौ कात्स्न्यार्थकमिति विभाजकोपाध्यवच्छिन्नयावत्कार्यवृत्तित्वादिति हेतुः । कार्यपदं च भावकार्यपरमिति वदन्ति । तदपि चिन्त्यम् । तथा सति पक्षे कार्यपदस्याप्रयोजनकत्वापत्तेरिति । अत्र ब्रूमः । अनादितावच्छेदकधर्म्मत्वादिति हेत्वर्थः, अनादित्वं च सजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वम् । व्याप्तिश्च कालिकीति न काप्यनुपपत्तिरिति दिक् ।

**अन्त्येति** । अन्त्यावयविनिष्ठकर्म्मवृत्तितयैव कर्म्मत्वे साध्यमित्याविष्कर्त्तुमन्त्यावयविप-

मकरन्दः ।

न्तरवारणायारम्भकेति । द्रव्यसमवायिकारणातिरिक्तेत्यर्थः । **कार्य्यमात्रेति** । ननु ध्वंसत्वे व्यभिचारः । न च कार्य्यपदं भावकार्यपरं, मात्रपदवैयर्थ्यापत्तेः । न च भाववृत्तित्वे सति कार्य्यमात्रवृत्तित्वमर्थः, तथा चानन्तत्वे व्यभिचारवारणाय मात्रपदमिति वाच्यं, तथापि चरमज्ञानत्वादौ व्यभिचारापत्तेरिति चेत् न, तादृशध्वंसप्रतियोगिजातीयवृत्तित्वस्य साध्यार्थस्य तत्रापि सत्त्वात् । न चैवमपि मात्रपदवैयर्थ्यमनन्तत्वे तज्जातीयव्योमादिवृत्तितयाऽपि साध्यसत्त्वादिति वाच्यम् । ध्वंसप्रतियोगित्वेनापि जातीयस्य विशेषणात् । अधिकं शब्दप्रकाशे द्रष्टव्यम् । अन्त्यावयविपदोपादानं

टिप्पणी ।

टितस्य साध्यत्वे तूपरञ्जकमेवेदम् । **कार्यद्रव्यप्रागभावसमानकालीनेति** । महाप्रलयेनार्थान्तरवारणाय कालीनान्तम् । **कार्य्यमात्रवृत्तिधर्म्मत्वादिति** । ध्वंसवृत्तितया कार्य्यमात्रवृत्तावनन्तत्वे व्यभिचारवारणाय मात्रपदम् , तस्याकाशादिवृत्तित्वात् । न च ध्वंसत्वे व्यभिचारस्तस्य कार्य्यमात्रवृत्तित्वादिति वाच्यम् । तद्वारणाय भाववृत्तित्वे सतीत्यस्य विशेषणीयत्वात् । मात्रपदोपादानबलाद् वा भावकार्य्यवृत्तित्वे तात्पर्य्यलाभात् । उक्तध्वंसप्रतियोगिजातीयध्वंसप्रतियोगिवृत्तित्वं साध्यं नातः सर्वमुक्तात्मकमहाप्रलयाव्यवहितपूर्ववर्त्तित्वज्ञानत्वे व्यभिचारः, विवक्षितसाध्यस्य

दितसजातीयसन्तानान्तराः, नित्यत्वे सति तदारम्भकत्वात् प्रदीपपरमाणुवदित्यादि। अवयवानामावापोद्वापाद्रुत्पत्तिविनाशौ च स्यातां, सन्तानाऽविच्छेदश्चेति को विरोध इति चेन्न। एवं तर्हि घटादिसन्तानाविच्छेदोऽपि स्यात्, विपर्ययस्तु दृश्यते। कर्त्रादिभोगविशेषसम्पादनप्रयुक्तोऽसाविति चेन्न। द्व्यणुकेषु तदभावात्। तथा च तदवयवानामपगमाभावेऽनादित्वप्रसङ्गे द्व्यणुकत्वव्याघातः। तस्माद् यत्कार्यं

बोधनी।

**नित्यत्वे सति** इति। पूर्वत्राप्यर्थतः प्रलयः सिध्यति, अत्रापि सर्ग इति द्रष्टव्यम्। अनुमानयोर्विपक्षे बाधकं पृच्छति-**अवयवानाम्** इति। यथा ह्यवरवे तन्त्वाद्यवयवानां संयोगविभागाभ्यामेव पटादेरुत्पत्तिविनाशौ संतानानुच्छेदेन दृश्येते तथैव सर्वदापि तौ स्यातां, किमत्र बाधकमिति। **एवं तर्हि** इति। यदि संतानानुच्छेदः स्यात् तर्ह्यवयवावापोद्धारलक्षणो विनाशोऽपि न स्यात्, दृश्यते चासाविति। **कन्थादि** इति। न संतानत्वप्रयुक्तः पटादेर्विनाशः, किन्तु विनष्टपटावयवारब्धकन्थादिद्वारभोगविशेषप्रयुक्त इति। **कर्त्रादिभोगविशेषेति** पाठे त्वयमर्थः—पटादेः कर्तृणां कुविन्दादीनां पटाद्युत्पादनद्वारेण ये भोगास्तेषां तद्विनाशमन्तरेणानुपपत्तेस्तत्प्रयुक्तो विनाश इति। **द्व्यणुकेषु** इति। द्व्यणुकेषु तस्य भोगविशेषस्य विनष्टद्व्यणुकावयवद्वारस्य द्व्यणुकोत्पादनद्वारस्य वा न संभव इति। ततः किमित्यत्राह-**तथा च** इति। तस्माद्भोगविशेषस्याप्रयोजकत्वात्कार्यस्योत्पत्तिविनाशयोः समवायिकारणसंयोगविभागावेव निबन्धनमङ्गीकर्तव्यमित्याह-**तस्मात्** इति।

प्रकाशः।

सिद्धिः। तदारम्भकत्वं तन्तुभिः पूर्वमनुत्पादितपटैरनैकान्तिकमित्यत उक्तम्। **नित्यत्वे सतीति।** नित्यत्वमात्रन्तु व्योमादिभिरनैकान्तिकमिति तदारम्भकत्वादित्युक्तम्। **प्रदीप**परमाणूनां तैजसद्रव्यत्वेन संसर्गिद्रव्यतयाऽऽरब्धतेजोजातीयत्वसिद्धौ दृष्टान्तत्वम्। न चाप्रयोजकत्वम्। निरुपाधिभङ्गप्रसङ्गस्य विपक्षबाधकत्वात्। न त्वागमो विपक्षबाधकः। तस्य कार्यद्रव्यानाधारकालाबोधकत्वात्। सन्तानाविच्छेदेऽपि उत्पत्तिविनाशयोरन्यथोपपत्तिरित्याह। **अवयवानामिति। आवापोद्वापौ** उपगमापगमौ। यदि नैवं कार्यद्रव्यस्यात्यन्तमुच्छेदस्तदाऽभिमतघटाद्युच्छेदोऽपि न स्यादित्याह। **एवं हीति। विपर्ययस्त्विति।** अत्यन्तोच्छेद इत्यर्थः। ननु न सन्तानप्रयुक्तोऽत्यन्तोच्छेदः, किन्त्वन्योपाधिप्रयुक्त इत्याह। **कर्त्रादीति।** उपाधेः साध्याव्यापकत्वमाह। **द्व्यणुकेष्विति।** तदभावाद्भोगविशेषसम्पादकत्वस्योपाधेरभावादित्यर्थः। न च तत्राप्यत्यन्तानुच्छेदेऽपि अवयवानामावापोद्वापाभ्यामेवोत्पादविनाशसम्भवः। तयोरत्राभावादित्याह। **तथा चेति।** नाशस्य भोगविशेषसम्पादनप्रयोजकत्वे द्व्यणुकनाशो न स्यात्। तेन भोगाजननात्। तथा च विनाशिभावस्यानुत्पन्नत्वेन नित्यतया द्व्यणुकत्वव्याघात इति सन्तानत्वस्यात्यन्तोच्छेदेन स्वाभाविकः सम्बन्धो मन्तव्य इत्यर्थः। सन्तानस्यावस्थानमहेतुकं नित्यहेतुकं वा यदि स्यात्तदा सन्तानाविच्छेदः स्यादित्याह। **तस्मादिति।** यद्धेतुकमिति दृष्टान्तार्थम्। **एतत्**=कार्यं यन्निबन्धनस्थितीत्यादिकम्।

प्रकाशिका।

दोपादानम्। **तस्यैति।** कार्यद्रव्यानधिकरणत्वेन तत्कालाबोधकत्वादित्यर्थः। किञ्चिद्भुवनावच्छिन्ननाशस्यैव पुराणादौ प्रतिपादनादिति भावः। **अभिमतेति।** घटाद्यत्यन्तोच्छेदोऽपीत्यर्थः।

मकरन्दः।

तमादाय साध्याव्याप्तिरिति कृत्वा, वस्तुतः कर्मत्व एव साध्याव्यापकत्वम्। **तस्येति।** यद्यपि प्रलयबोधकागमसत्वादिदमयुक्तं, तथापि तदनाधारत्वेन तत्कालाबोधकत्वादित्यर्थादित्याहुः। **अभिमतेति।** घटात्यन्तोच्छेदोऽपीत्यर्थः॥ २॥

टिप्पणी।

तत्र सत्वात्। **संसर्गिद्रव्यतयेति।** भूयः संसृज्यमानस्वभावतया। **तस्य कार्यद्रव्याना-**

यन्निबन्धनस्थिति, तदपगमे तन्निवृत्तिः, यद् यद्धेतुकं तदुपगमे तस्योत्पत्तिः। न च कार्यस्य स्थितिनिबन्धनं नित्यमेव। नित्यस्थितिप्रसङ्गात्। न च नित्य एव हेतुः, अकादाचित्कत्वप्रसङ्गात्। तदतिनिस्तरङ्गमेतत्।

ईदृश्याञ्च वस्तुस्थितौ भोगोऽपि कर्मभिरेवमेव वस्तुस्वभावानतिक्रमेण सम्पादनीय इति द्व्यणुकवत् पिपीलिकाण्डादेर्ब्रह्माण्डपर्यन्तस्यापि विश्वस्येयमेव गतिरिति प्रतिबन्धसिद्धिः। तथा च ब्रह्माण्डे परमाणुसाद्भवितरि परमाणुषु च स्वतन्त्रेषु पृथगासीनेषु तदन्तःपातिनः प्राणिगणाः क्व वर्त्तन्ताम्? कुपितकपिकपोलान्तर्गतोदुम्बरमशकसमूहवद्, दवदहनदह्यमानदारूदरविघूर्णमानघुणसङ्घातवत्, प्रलयपवनोल्लासनीयौर्वानलनिपातिपोतसांयात्रिकसार्थवद्वेति ॥ २ ॥

अपि च—

**जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्म्मणोः ॥**
**ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥**

---

बोधनी।

अस्त्वेवं, तथापि कार्यस्थितिनिबन्धनमुत्पत्तिहेतुश्च किमिति सर्वदा न स्यातामित्यत्राह—**न च** इति। निरस्तः **प्रवाहोऽनादिमा**नित्यत्रेति।

यदि कार्योत्पत्तिविनाशयोर्भोगविशेषोऽप्रयोजकः तर्हि भोगार्थः कर्मभिः सर्वेषामुत्पाद इति सिद्धान्तो व्याकुप्येतेत्यत्राह—**ईदृश्याम्** इति। इयं तावदर्थस्थितिर्न च तत्र सिद्धान्तहानिः। कर्माण्येव वस्तुस्थितिमनतिक्रामन्ति, तद्भोगसमर्थवस्तूत्पादनद्वारेण भोगविशेषं सम्पादयन्ति, तेन येषां वस्तूनामुच्छेदस्वभावो न तेषामनुच्छिन्नानां भोगसाधनत्वम्, अन्यथा नानापुरुषादृष्टोत्पादितस्यैकस्यैव पटस्य परःसहस्रं वत्सरानवस्थितस्य क्रमेण भोगसाधनत्वप्रसङ्ग इति भावः। तस्माद्यथा द्व्यणुकेषु भोगाभावेऽपि स्थितिनिबन्धनहेत्वोरपगमोपगमाभ्यामेव विनाशोत्पत्ती तथैव विश्वस्यापि कार्यस्य ते भविष्यत इत्याह-इति **द्व्यणुकवत्** इति। एवं विपक्षे बाधकसद्भावात्सृष्टिप्रलयानुमानयोः सिद्धः प्रतिबन्ध इत्याह-**इति** इति। तदेवमापरमाणोर्ब्रह्माण्डस्य विनाशसिद्धौ कैव कथा तदन्तर्वर्त्तिनः कार्यस्येत्याह—**तथा च** इति। तदन्तर्वर्तिभिः सह विनश्यतीत्यत्र निदर्शनान्याह-**कपिकपोल** इति ॥ २ ॥

न केवलमनुमानं दर्शनं च प्रलयसद्भावानुगुणमित्याह—**अपि च** इति। जन्मादेर्ह्रासदर्शनात्स्वाध्यायाध्ययने कर्मणोऽनुष्ठाने पुरुषाणां शक्तेश्च ह्रासदर्शनात् संप्रदायस्य ह्रासोऽवगम्यत इति।

प्रकाशः।

**ईदृश्यामिति**। अनित्यहेतुनिबन्धनायां कार्यस्थितौ कर्मभिः सम्पादनीयो भोग एवमेव वस्तुस्वभावानतिक्रमणेति योजना। नन्वेवमपि ब्रह्माण्डनाशसिद्धौ गिरिसागरादीनां कुतः प्रलय इत्यत आह। **तथा चेति**। **क्व वर्तन्तामिति**। विनश्यन्तीत्यर्थः। महाद्रव्यान्तरेण निहन्यमानाधारत्वाद्, महादहनदह्यमानाश्रयत्वाद्, महापवनक्षुभितसमुद्रविलीयमानाश्रयत्वादित्यत्र हेतुत्रये क्रमेण दृष्टान्तत्रयमाह **कुपितेति**। एतेनाधाराभावात् पतन्त एव सन्तीत्यपास्तम् ॥ २ ॥

एवं सर्वस्य नाशे अर्थाद् वेदोऽपि नश्यतीत्युपपाद्य वेदह्रासदर्शनेनापि तन्नाशोऽनुमेय इत्याह। **अपि चेति**।

प्रकाशिका।

भोगस्य कर्म्मसम्पादनीयत्वं मीमांसकोऽपि स्वीकरोत्येवेति तद्विधानमनर्थकमत आह—**कर्म्मभिरित्यादि** ॥ २ ॥

टिप्पणी।

**बाधकाबोधकत्वादिति**। तत्तात्पर्यवत्त्वानिश्चयेत्यादि ॥ २ ॥

पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसम्भवाः, ततः कामाऽवर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः।

पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादितः इदानीन्तु जातेषु लौकिकव्यवहारमाश्रित्य ।

पूर्वं सहस्रशाखः समस्तो वेदोऽध्यगायि, ततो व्यस्तः, ततः षड्ङ्ग एकः, इदानीन्तु क्वचिदेका शाखेति ।

पूर्वम् ऋतवृत्तयो ब्राह्मणाः प्रायोतिषत, ततोऽमृतवृत्तयः, संप्रति मृतप्रमृत-सत्यानृतकुसीदपाशुपाल्यश्ववृत्तयो भूयांसः ।

पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः, ततो वैश्यावेशिनोऽपि, संप्रति शूद्रान्नभोजिनोऽपि ।

पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, संप्रत्यघभुज एव ।

पूर्वं चतुष्पाद् धर्म आसीत्, ततस्तनूयमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, संप्रति जीर्यति यज्ञे दानैकपात्, सोऽपि पादो दुरागतादिविपादिकाशत-दुःस्थोऽश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यत-या इतस्ततः स्खलन्निवोपलभ्यते । इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते इति चेन्न ।

बोधनी ।

जन्मनो ह्रासं व्याचष्टे–पूर्वं हि इति । पूर्वं श्रुतयः स्मृतिदर्शनात्तत्स्मृतयश्च पूर्वतमविशिष्टाचारद-

प्रकाशः ।

वेदह्रासे दृष्टान्तार्थं जन्मादिह्रास उक्तः । प्रतियुगं क्रमेण ह्रासमाह । पूर्वं हीति । समाधायिषत सम्यगाहिता इत्यर्थः । श्रूयमाणा अपि वेदा उच्छेत्स्यन्ति, वाक्यत्वात्, उच्छि-न्नशाखावदिति भावः ।

> ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
> मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥
> सत्यानृतं तु वाणिज्यं कुसीदञ्च कलान्तरम् ॥

पाशुपाल्यं = गोरक्षादि । श्ववृत्तिः = सेवा । वैश्यावेशिनो = वैश्याऽतिथयः । अमृत-भुजो = यज्ञशेषभुजः । विघसभुजो = अतिथिशेषभुजः । अन्नभुजो = भृत्यशेषभुजः । अघ-भुजः = स्वार्थसाधितभुजः । चतुष्पादिति । तपोज्ञानयज्ञदानानि चत्वारः पादाः । दुरागतं= दुष्टादुपायाद् द्यूतादेरागतम्, तदेव विपादिका = पादरोगः ।

ननु न शाखोच्छेदः, किन्तु यावान् वेद इदानीमधीयते तावानेव सदाऽध्ययनविषय इति वेदह्रासोऽसिद्ध इत्याह । इदानीमिति । विवादपदं स्मृतिः, स्मृत्यर्थानुभावकवेदमूला

प्रकाशिका ।

मूले पूर्वं सहस्रशाखा इत्यादिना विद्याह्रासे कथ्यमाने शक्तिस्वाध्याययोरपि ह्रास उक्त एवेति न तयोरुदाहरणान्तरं पूर्वमृतवृत्तय इत्यादि किन्तु कारिकास्थाऽऽदिपदसंग्राह्यकथनम्, पूर्वं चतुष्पादित्यादिना कर्म्मह्रास उक्त इति बोध्यम् । विवादपदमिति । प्रत्यक्षवेदाऽमूलाऽदृष्टा-चेत्यर्थः । लोभमूलकस्मृतेस्तु स्मृतिपदेनैव वारणम्, स्मृतिपदस्य ऋषिप्रणीतवाक्यपरत्वात् । वेद-मूलत्वं वेदजन्यानुभवजन्यत्वमदृष्टद्वारा वेदजन्यानुभवजन्यत्वासिद्धिशङ्कानिरासाय स्मृत्यर्थानु-भावकेति साध्यविशेषणम् ।

मकरन्दः ।

विवादपदमिति । एतच्च प्रत्यक्षवेदमूलस्मृत्यंशे लोभादिमूलकस्मृत्यंशे च सिद्धसाधनबाधादि-

टिप्पणी ।

ऋतमुञ्छशिलमिति । "उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्" कणिशं= शस्यमञ्जरी ।

इति धर्मदत्तोपाध्याय ( प्रसिद्ध बच्चाझा ) कृतकुसुमाञ्जलिप्रकाशद्वितीयस्तवकटिप्पणी समाप्ता ॥

स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात् । स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्यानभ्युपगमात् । मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात् । आचारात् स्मृतिः स्मृतेश्चाचार इत्यनादिताऽभ्युपगमे अन्धपरम्पराप्रसङ्गात् । आसंसारमनाम्नातस्य च वेदत्वव्याघातेनानुमानायोगात् ।

बोधनी ।

र्शनादिति, बीजाङ्कुरन्यायेनानादित्वेन स्मृत्याचारयोः प्रामाण्यसिद्धेः किं शब्दानुमानेनेत्याशङ्क्याह-**आचारात्** इति । अन्धानां मुग्धरूपस्मरणतुल्यताप्रसङ्गात् । यथा हि तद् रूपनिर्णयसापेक्षं तथा धर्मनिर्णये स्मृत्याचारः स्मृतेरनुभवापेक्षत्वादाचारस्य प्रमेयत्वेन प्रमाणापेक्षत्वात्, अतस्तयोरेवान्योन्यमूलत्वाभ्युपगमेऽन्धवाक्यपरम्परातुल्यता प्रसज्यत इति । तर्हि तयोर्वेदमेव मूलमनुमास्यामः स तु वेदो मन्वादीनां प्रत्यक्षः इदानीमुच्छिन्न इति नाभ्युपगच्छामः, किन्तु तैरपि पूर्वस्मृत्यादिना तैरपि पूर्वतमस्मृत्यादिना, ततश्च सर्वेषां नित्यानुमेयस्यैव वेदस्य मूलत्वान्न शाखोच्छेदः, नाप्यन्धपरम्पराप्रसक्तिरिति प्राभाकरस्तत्राह —**आ संसारम्** इति । यदि सर्वैरप्यनाम्नातः

प्रकाशः ।

अक्लृप्तमूलान्तरत्वे सति महाजनपरिगृहीतस्मृतित्वात्, प्रत्यक्षवेदमूलस्मृतिवत् । अतो न न्यायादिमूलकस्मृतौ व्यभिचारः । तथा, मङ्गलाद्याचारो वेदबोधितः, अलौकिकविषयाविगीतशिष्टाचारत्वात् यागवदिति स्मृत्याचारमूलस्य वेदस्याप्रत्यक्षत्वात् तदुच्छेदे तद्वदधीयमानवेदस्याप्युच्छेदो भावीत्याह । **स्मृतीति** । ननु वेदवत् स्मृत्याचारयोरदृष्टे स्वतः प्रामाण्यमेवेति न तन्मूलकवेदानुमानमित्यत आह । **स्वातन्त्र्येणेति** । वेदनैरपेक्ष्येण स्मृत्यादेस्त्वयाऽपि प्रामाण्यानभ्युपगमादित्यर्थः । ननु स्मृतिकर्त्तारः स्वयमेवापूर्वं साक्षात्कृत्य तत्साधनमुपदेक्ष्यन्तीति न तेषां तदर्थं वेदापेक्षेत्यत आह । **मन्वादीनामिति** । अतीन्द्रियार्थदर्शित्वे तेषामनाश्वासादिति भावः । ननु भूयः शिष्टाचारदर्शनात् स्मृतिप्रणयनम्, ततः पुनरिदानीं शिष्टाचारपरम्परा स्यादिति किं तन्मूलवेदानुमानेनेत्यत आह । **आचारादिति** । उभयोरप्यनुमानमूलकत्वेनाव्यवस्थापकत्वात् तादृशस्मृत्याचारयोर्वेदमूलकत्वव्याप्तिस्तव देशनाया एव धर्मे मानत्वाच्च तयोरमानकत्वापातादित्यर्थः । ननु नित्यानुमेयो वेदस्तन्मूलं स्यादतो न शाखोच्छेद इत्यत आह । **आसंसारमिति** । अनाम्ना-

प्रकाशिका ।

**अक्लृप्तेति** । न्यायमूलकत्वं सत्यन्तार्थः । लोभमूलकस्मृतौ व्यभिचार इति **महाजनपरिगृहीतेति** । प्रत्यक्षमूलकवाक्ये व्यभिचार इति **स्मृतीति** । स्मृतित्वञ्चादृष्टज्ञापकवाक्यत्वम् । अतो न ऋषिप्रणीतदृष्टान्तार्थकवाक्ये व्यभिचारः । नन्वनुमानमपि स्वतःप्रमाणमेवेति कथं तन्मूलकत्वे नाश्वास इत्यरुचेराह । **तादृशस्मृत्याचारयोरिति** । ननु तत्रापि व्याप्तावसम्भवन्मूलान्तरत्वमुपाधिरित्यरुचेराह—**तव देशनाया इति** । मीमांसकस्ये-

मकरन्दः ।

वारणार्थम् । ताद्रूप्यसिद्धयेऽनुभावकान्तम् । न्यायादिमूलकस्मृतौ व्यभिचारवारणाय **अक्लृप्तेति** । असम्भवन्मूलान्तरत्वे, सतीत्यर्थः । ननु महाजनपरिगृहीतपदं व्यर्थमिति चेत् । सत्यम् । भ्रम एवात्र मूलमित्यसिद्धिशङ्कानिरासाय तदुपादानात् न तु हेतुविशेषणत्वे तात्पर्य्यमित्येके । लोभादिभिन्नन्यायादिमूलकत्वाभावमात्रे सत्यन्ततात्पर्य्यम् । एवञ्च लोभादिमूलकस्मृतावेव व्यभिचारवारणाय तदित्यन्ये । लोभस्य वस्तुगत्या मूलत्वाभावान्मूलपदस्य प्रामाणिकमूलपरत्वाद्वा सत्यन्तेन लोभमूलकस्मृतौ व्यभिचारवारणाय तदुपादानमित्याहुः । **अलौकिकेति** । एतच्च द्रव्यप्रकाशे व्याख्यातम् । नन्वनुमानमूलकत्वेऽपि नान्धपरम्परा न हि प्रत्यक्षमात्रं प्रमाणमित्याशयादाह **तादृशेति** । नन्वत्राप्यसम्भवन्मूलान्तरत्वमन्यथा न्यायादिमूलकस्मृतावपि तथात्वापत्तिरित्यनुशयादाह **तवेति** । मीमांसकस्येत्यर्थः । तथा च तवापसिद्धान्त इति भावः ।

**उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतो वाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात् ।**

बोधनी ।

तर्हि वेद एव स न स्यात् । वेदो नाम शुश्रूषाराधितगुरुमुखादिगतं द्विजातिभिरधीयमानं क्रमस्वरादिविशेषोपेतं वर्णकदम्बकं न तु वर्णमात्रम्, न चैतन्नित्यमनुच्चारितस्य सम्भवति, तेन नित्यानुमेयो वेद इति परस्परपराहतं वचनमिति । इतश्च न वेदत्वं तस्येत्याह—**उत्पत्तित** इति । धर्माधर्मयोरावेदनाद्वेदः, वेदत्वं चानुपूर्व्या विशिष्टानां वर्णानां न केवलानाम्, आनुपूर्वी च वर्णानामुत्पत्तितो भवति यथा नैयायिकानाम्, अभिव्यक्तितो वा यथा वैय्याकरणानाम्, अभिप्रायतो वा यथा न्यूनवाक्यप्रयोगे वक्त्रभिप्रायावच्छिन्नैर्वर्णैर्वाक्यपूरणेनार्थप्रतीतिः । त्रिधा चेयमानुपूर्वी नित्यमनुच्चारितानां न सम्भवतीत्यनर्थकत्वाद्वेदत्वव्याघात इति । ननु मा भूद् वेदत्वं तथापि शिष्टैराचर्यमाणत्वादष्टकादेरिष्टसाधनत्वं कर्तव्यत्वं च ज्योतिष्टोमवदनुमाय तत्र चानुमेयवेदस्य

प्रकाशः ।

**तस्य**=अपठितस्य । **उत्पत्तित** इति स्वमते, **अभिव्यक्तित** इति परपक्षे, **अभिप्रायत** इति उभयत्र । यथा मौनिश्लोकोऽपठितः श्रोत्रानभिव्यक्तश्चाभिप्रायस्थस्तथा वेदोऽपीत्यपि नेत्यर्थः । तथात्वेऽनिश्चितानुपूर्वीकपदकदम्बस्वरूपत्वे नित्यानुमेयत्वव्याघात इति भावः ।

अत्र स्मृत्याचारमूलं वेदोऽध्ययनविषयो न वा, वेदत्वमध्ययनविषयत्वव्याप्यं न वेति विप्रतिपत्तिः, ननु स्मृत्यर्थज्ञापकत्वेन ज्ञातस्यैव वेदस्य स्मृत्यर्थानुभावकत्वम्, न हि शाब्दबोधे नियतपदानुपूर्वी हेतुः, गामानयानय गामित्यत्र तदभावेऽपि तत्सत्त्वात् । पदस्य वर्णविशेषानुपूर्वीनियमेऽपि तत्तद्वर्णानुपूर्वीकपदविशेषो न हेतुः, घटकलशपदानां प्रत्येकं व्यभिचारात् । किन्त्वव्यभिचारितदर्थज्ञापकत्वेन ज्ञातस्य, लाघवादावश्यकत्वाच्च । अत एव, वर्णलोपे दन्त्यादिसकारादिसन्देहे सत्यपि वाक्यार्थधीः । न च क्रमिकपदत्वं वाक्यत्वम् अनुच्चार्यमाणस्य चोच्चारणघटितक्रमासम्भव इति वाच्यम् । गौरश्व इत्यादौ तत्सम्भवेऽपि वाक्यत्वाभावात् । विशिष्टार्थपरशब्दत्वन्त्वत्रापि तुल्यम् । न चानुच्चार्यमाणस्य न वाक्यत्वम् । लिप्यनुमितानां मौनिश्लोकस्य च वाक्यत्वात् । किञ्च वाक्यमुच्चार्यते, न तूच्चारणाद्वाक्यत्वम् । वाक्यमुच्चारयेदित्यत्रानन्वयापत्तेः । उच्चारणदशायां वाक्यत्वे वाक्यस्यासत्त्वापत्तेः । एकदा तावत्पदानामुच्चारणाभावात् । अथ तदर्थज्ञापकत्वेन ज्ञातात् पदात् पदार्थज्ञानमात्रं स्यान्न संसर्गज्ञानम् । अन्वयप्रकारकर्मत्वाद्युपस्थापकविभक्त्यादिसमभिव्याहाराभावात् । मैवम् । अनुमितवेदाद्वाक्यार्थानुभवे सामग्र्या वैलक्षण्यात् । धर्मिग्राहकमानेन तवाशरीरेश्वरकर्तृत्वस्यैव स्मृत्यर्थानुभावकत्वेनैव तस्य सिद्धेः । अन्यथाऽन्यत्र फलसहेतुं विना न सोऽनुभावक इत्यादौ तदसिद्धावाश्रयासिद्धिस्तत्सिद्धौ च बाधः । अत एव स्तुतिनिन्दार्थवादकल्पितविधिनिषेधकवेदादर्थमवगत्य प्रवृत्तिनिवृत्ती । अन्यथा विधिनिषेधकवेदानां नानाप्रकारकत्वेन विभक्त्यादिविशेषवत्पदस्यानुमातुमशक्यत्वान्न ततोऽर्थधीः स्यात् । एवमाचारानुमितवेदादपि प्रवर्तककर्तव्यताधीः स्मृत्याचारानुमितो वेदोऽर्थं बोधयतीति पूर्वपूर्वानुमितवेदादुत्तरोत्तरस्मृत्याचाराविति नान्धपरम्परा, स्वतन्त्रप्रमाणमूलकत्वादिति ।

प्रकाशिका ।

त्यर्थः । तथा च तवापि सिद्धान्तविरोध इति भावः । **घटकलशेति** । घटपदकलसपदादीनामित्यर्थः । घटरूपार्थबोधे तेषां जनकत्वेनानुपूर्व्याः परस्परव्यभिचारादिति भावः । अत्र चार्थवा-

मकरन्दः ।

**घटकलशेति** । घटकलसपदानामित्यर्थः । शेषं शब्दप्रकाशे द्रष्टव्यम् ।

यदि च शिष्टाचारत्वादिदं हितसाधनं कर्त्तव्यं वेत्यनुमितं किं वेदानुमानेन, तदर्थस्यानुमानत एव सिद्धेः। न च धर्मवेदनत्वादिदमेवानुमानमनुमेयो वेदः। प्रत्यक्षसिद्धत्वात्। अशब्दत्वाच्च॥

अथ शिष्टाचारत्वात् प्रमाणमूलोऽयमिति चेत्। ततः सिद्धसाधनम्। प्रत्यक्षमू-

बोधनी।

प्रामाण्यमपि निश्चित्य मन्वादयः स्मरिष्यन्ति अनुष्ठास्यन्ति चेत्यत्राह—यदि हि इति। तदर्थस्य= अनुमेयवेदप्रमेयस्य शिष्टाचारत्वानुमानेनैव सिद्धेरिति। धर्माधर्मावेदकत्वं हि वेदत्वं, तच्च शिष्टाचारानुमानस्यास्तीति तदेवानुमेयो वेदो भविष्यतीत्यत्राह—न च इति। शिष्टाचारस्य प्रत्यक्षत्वान्न तावदनुमेयत्वम् अशब्दात्मकत्वादिति।

ननु यदि वयं शिष्टाचारत्वेन कर्तव्यत्वहितसाधनत्वे अनुमास्यामः, ततो वेदानुमानमनर्थकं स्यात्। प्रमाणमूलमात्रमनुमीयत इत्याह—अथ इति। तत्र च पक्षधर्मतावलाद्वेदमूलत्वमेव सिध्यतीति भावः। ततः इति। आचारस्वरूपस्य प्रत्यक्षमूलत्वात्सिद्धसाधनमिति। ननु शिष्टाचार-

प्रकाशः।

अत्राहुः। उच्छिन्नवेदादर्थं प्रतीत्य स्मृत्याचारयोरुपपत्तेः सामग्र्यन्तरकल्पने गौरवम्। अत एव च न बाधाश्रयासिद्धी। स्मृत्याचारमूलस्य वेदस्यास्माभिरभ्युपगमात्, तथा च स्मृत्याचारयोर्वेदजन्यानुभवमूलकत्वानुमानादेव पक्षधर्मतावलेन प्रत्यक्षवेदमूलकत्वसिद्धिः। अननुभावकस्य मूलत्वानुपपत्तेः। स्तुतिनिन्दार्थवादाभ्यामपि प्रवृत्तिनिवृत्तिपराभ्यां प्रवृत्तिनिवृत्तिहेतुरर्थ एव कल्प्यते, लाघवात्। न तु विधिनिषेधवाक्यं, गौरवादुक्तदोषाच्च। यत्र चार्थवादादेव तज्ज्ञानं, तत्र "तरति मृत्यु" मित्यादौ न तत्कल्पनाऽपि। न च बहुभिर्मेधाविभिराध्यात्मिकशक्तिसम्पन्नैर्ध्रियमाणायाः शाखाया न शाखान्तरवदुच्छेदसम्भव इति वाच्यम्। एकस्य न समग्रशाखाऽध्ययने शक्तिरित्येकैनेवापरैरपि तदनध्ययने तदुच्छेदसम्भवात्। एकानधीतायास्तस्या अपराध्ययनविषयत्वनियमे मानाभावात्। न च शाखोच्छेदे वर्णादिहानिशङ्कया प्रत्यक्षवेदादपि वाक्यार्थप्रयोगयोरनिश्चये वैदिकव्यवहारोच्छेदः, श्रूयमाणमात्रस्यैव महाजनपरिगृहीतत्वेन तत एव तन्निश्चयात्, तस्माद् स्मृत्याचारानुमितो वेदः प्रत्यक्षोऽध्ययनविषयश्च वेदत्वात् संमतवत्। विपक्षे च बाधकमुक्तं गौरवमिति सङ्क्षेपः।

दूषणान्तरमाह। यदि चेति। वेदेनापि हि प्रवृत्तिहेतुकार्यत्वज्ञानं तद्धेतुत्वज्ञानं वोत्पाद्य प्रवृत्तिर्जन्येत्यावश्यकत्वाल्लाघवाच्च तदेवानुमीयतां, किं तद्बोधकवेदेनेत्यर्थः। तदर्थस्य= कार्यत्वज्ञानादेः। ननु धर्मवेदकत्वहेतुको वेदव्यवहारस्तच्च लिङ्गेऽप्यस्तीति तदेव नित्यानुमेयवेदशब्देनोच्यते इत्यत आह। न चेति। प्रत्यक्षसिद्धत्वान्न नित्यानुमेयत्वम्, अशब्दत्वाच्च न वेदत्वमित्यर्थः।

प्रमाणसामान्यानुमानेऽपि पक्षधर्मतावलात् तद्विशेषवेदसिद्धिः स्यादित्याह—

अथेति। सामान्यबुद्धेरीश्वरप्रत्यक्षविषयत्वेनाप्युपपत्तेर्न सा विशेषमवगमयतीत्याह। प्रत्यक्षेति। ईश्वरप्रत्यक्षानभ्युपगन्तृमतेऽपि भोजनादेरिव कर्त्तव्यताज्ञानेऽनुमानमेव मूलं स्यादि-

प्रकाशिका।

दादेवेति बलवदनिष्टाननुबन्धित्वज्ञानञ्च न प्रवर्त्तकमिति भावः। तदेवेति। कार्यत्वं हि तद्धेतुत्वं वेत्यर्थः। तदर्थस्येति। तत्प्रयोजनस्येत्यर्थः। विशेषमिति। वेदमित्यर्थः। धर्मिग्राहकेणैव

मकरन्दः।

तदेवेति। कार्य्यत्वं तद्धेतुत्वं वेत्यर्थः। तदर्थस्येति। तत्प्रयोजनस्येत्यर्थः। प्रमाण-

लत्वाभ्युपगमात् । तदसम्भवेऽप्यनुमानसम्भवात् । नित्यमज्ञायमानत्वात्तदप्रत्यायकं, कथमनुमानं, कथञ्च मूलमिति चेत् । वेदः किमज्ञायमानः प्रत्यायकोऽप्रत्यायक एव वा मूलं, येन जडतम ! तमाद्रियसे । अनुमितत्वाज्ज्ञायमान एव इति चेत् । लिङ्गमप्येवमेवास्तु । अनुमेयप्रतीतेः प्राक्तनी लिङ्गप्रतीतिरपेक्षिता, कारणत्वात्, न तु पश्चात्तनीति चेत् । शब्दप्रतीतिरप्येवमेव । आचारस्वरूपेण शब्दमूलत्वमनुमीयते, तेन तु शब्देन कर्त्तव्यता प्रतीयते इति चेन्न । आचारस्वरूपस्य प्रत्यक्षसिद्धत्वेन

---

बोधनी ।

स्येष्टसाधनत्वे प्रत्यक्षमूलत्वासम्भवाद्वेद एव मूलं भविष्यतीत्यत्राह—**तदसंभवेऽपि** इति । तत्रापि शिष्टाचारत्वानुमानस्य मूलत्वासम्भवात्सिद्धसाधनतैवेति । अथवा धर्मादीनां कस्यचिल्लोकोत्तरस्य प्रत्यक्षत्वाभ्युपगमात् न वेदमूलत्वसिद्धिः, अर्वाचीनानां च मन्वादीनां प्रत्यक्षत्वासम्भवे शिष्टाचारानुमानमूलत्वासम्भवात्सिद्धसाधनतेति । **नित्यम्** इति । न तावदाचाराणां श्रेयःसाधनत्वेन व्याप्तं किमपि लिङ्गमिदं नामेति विशेषतो मन्वादिभिरुपगतम् । यथा हि वयं शिष्टानाचरतो दृष्ट्वा कर्तव्यताज्ञानमन्तरेण तदसंभवात्तस्य च ज्ञानस्य प्रत्यक्षमूलत्वासम्भवात् किमप्येषामनुमानं मूलमिति सामान्यतोऽनुमिमीमहे, तथा मन्वादयोऽपि विशिष्टानामाचारमूलं किमप्यस्त्यनुमानमिति सामान्यतोऽनुमिन्वते, न तु लिङ्गविशेषम् । नित्यं च विशेषतोऽज्ञायमानं लिङ्गं कथं प्रत्यायकं भवेत्, अप्रत्यायकं च कथमनुमानं कथं वाऽनुष्ठातॄणां कर्तव्यज्ञानस्य मूलं, ततो वेदत्वस्यैव सिद्धेः कथमनुमानेन सिद्धसाधनतेति भावः । **वेदः** इति । नित्यानुमेयत्वपक्षे विशेषरूपेणाज्ञातो वेदः कथं प्रत्यायको भवेत् कथं च वा मूलमिति । **अनुमितत्वात्** इति । अभियुक्तराचरितत्वेनाष्टकादेरिष्टसाधनत्वकर्त्तव्यत्वे तावदभ्युपगम्य तत्प्रतिपादक एव वेदविशेषोऽनुमीयते, तेन विशेषतो विज्ञात एवेति । **लिङ्गमपि** इति । शिष्टाचारात्तन्मूलत्वेनानुमीयमानं लिङ्गमपि विशिष्टमेवेति । **अनुमेय** इति । अत्र ह्याचारस्य हितसाधनत्वकर्तव्यतयोरनुमापकं लिङ्गम् अनुमेयं, तच्च यदि ताभ्यामेवानुमीयते न ततोऽनुमेयप्रतीतेर्लिङ्गप्रतीतिरिति स्यात्, तच्चायुक्तमिति । तदेतद्वेदानुमानेऽप्यविशिष्टमित्याह—**शब्द** इति । आचाराद्धि कर्तव्यतां ज्ञात्वा तज्ज्ञानमूलं वेदोऽस्माभिरनुमीयते यथा, तथा मन्वादिभिरपि प्रमेयभूतकर्तव्यतावगतेः पश्चात्तन्निर्णायकप्रमाणभूतवेदावगतिरिति । ननु स्यादेवं यदि कर्तव्यतया वेदोऽनुमीयते न त्वेवमित्याह—**आचार** इति । **न** इति ।

प्रकाशः ।

त्याह । **तदिति** । विशिष्य लिङ्गाज्ञानान्न तद् गमकमतो न मूलमित्याह । **नित्यमिति** । नित्यानुमेयो वेदोऽपि विशेषाकारेणानिश्चितत्वान्न तद्बोधकः स्यादित्याह । **वेद** इति । विशेषत इति शेषः । सामान्यतस्तज्ज्ञानं वेद इवानुमानेऽपि तुल्यमित्याह । **अनुमितत्वादिति** । आचारकर्त्तव्यताऽनुमानमूलेत्यनुमेयंपूर्वमाचारकर्त्तव्यतासिद्धौ स्यात् । सा च कर्तव्यताबोधकलिङ्गप्रतीतेः प्रागेव सिद्धेति नानुमानमित्याह । **अनुमेयेति** । एवं शब्दप्रतीतिं विनाऽपि कर्त्तव्यताबुद्धेः सिद्धत्वाद् व्यर्थं शब्दानुमानमिति तुल्यमित्याह । **शब्देति** । विशिष्टशिष्टाचारेण वेदमूलत्वमनुमीयते, अतो न प्रत्यक्षादिना सिद्धसाधनमित्याह । **आचारेति** । आचारस्वरूपसिध्यर्थं वेदानुमानं, तत्कर्त्तव्यताबोधार्थं, व्याप्तिमात्रेण वा ? नाद्यः । तत्र प्रत्यक्षस्यैव मूलत्वादित्याह । **प्रत्यक्षेति** । न द्वितीयः । कर्त्तव्यतायामज्ञातायां वेदानुमानात् तज्ज्ञाने च तदनुमानवैयर्थ्यादित्याह ।

प्रकाशिका ।

प्रमाणत्वमपि तस्य ज्ञातमित्यज्ञायमानत्वमसम्भवीत्यत आह **विशिष्येति** । वेदस्यापि प्रमाणत्वेन रूपेण ज्ञायमानत्वमस्त्वेवेत्यतः पूरयति—**विशेषत इतीति** । तथा च यथा विशिष्याज्ञातस्य

मकरन्दः ।

त्वेनानुमितत्वादज्ञायमानत्वमसम्भवीत्यत आह । **विशिष्येति** । उक्ताभिप्रायेणाह **विशेषत**

मूलान्तरानपेक्षणात् । तत्कर्त्तव्यतायास्तु प्रत्यक्षाभावादप्रमिततया च शब्दानुमानानवकाशात् प्रत्यक्षश्रुतेरसम्भवाच्छिष्टाचारत्वेनैव कर्त्तव्यतामनुमाय तथा मूलशब्दानुमानम्, तथा च किन्तेन ? तदर्थस्य प्रागेव सिद्धेः । तथाप्यागममूलत्वेनैव तस्य व्याप्तेरिति चेत् । अत एव तर्हि तस्य प्रत्यक्षानुमानमूलत्वमनुमेयम् । आदिमतस्तत्त्वं स्यादयं त्वनादिरिति चेत् । आचारोऽपि तर्हि प्रथमतस्तथा स्यादयं त्वनादिर्विनाऽप्यागमं भविष्यति । आचारकर्त्तव्यतानुमानयोरेवमनादित्वमस्तु किन्नश्छिन्नमिति चेत् । प्रथमं तावन्नित्यानुमेयो वेद इति, द्वितीयं च देशनैव धर्मे प्रमाण-

---

बोधनी ।

आचारकर्तव्यताया हि मूलान्तरापेक्षेति । तर्हि तयैव वेदोऽनुमास्यत इत्यत्राह—**तत्कर्तव्यतायास्तु** इति । ततः किमित्यत्राह—**अप्रमिततया** इति । मा भूच्छब्दानुमानं प्रत्यक्षवेदेनैव तु कर्तव्यताप्रतीतिरस्त्वित्यत्राह—**प्रत्यक्ष** इति । आचारमूलस्य नित्यानुमेयत्वाभ्युपगमादिति । तस्माच्छिष्टाचारत्वेन कर्तव्यतामनुमाय वेदोऽनुमातव्यः । सा चेदनुमिता किं तेनानुमितेन वेदेन, तत्प्रमेयस्य कर्तव्यताया अनुमानादेव सिद्धेरिति । नन्वनुमानादेवाचारकर्तव्यतावगमेऽपि वेदमूलतैव तस्या अनुमीयते । कर्तव्यताया वेदमूलत्वेन ज्योतिष्टोमादौ व्याप्त्यवधारणादित्याह -**तथापि** इति। यदि व्याप्तिबलादागमो मूलमनुमीयते तर्ह्यत एवानुमीयमानस्य वेदस्य प्रत्यक्षानुमानयोरन्यतरमूलत्वमनुमीयताम्, आगमत्वस्य तन्मूलत्वेन लोके व्याप्त्यवधारणादित्याह— **त एव** इति । एतच्च प्रकृतानुपयोगेऽपि परेषामनिष्टमित्येतावता प्रसञ्जितमिति । **आदिमत** इति । आगमस्य प्रत्यक्षानुमानमूलत्वं दृष्टम्, अयं त्वनुमीयमानो वेदागमोऽनादिरतः कथमस्य तन्मूलतेति । तदेतदाचारेऽपि वक्तुं शक्यत इत्याह—**आचारोऽपि** इति । य आचार आचरितः स्वयमेव मूलभूतमागममुपलभ्य प्रवर्तितः तस्यैवेदं प्रथमस्य ज्योतिष्टोमादेरागममूलत्वमुपलब्धम् । अयं त्वष्टकाद्याचारः पूर्वपूर्वाचारपरम्परोपलम्भमात्रेणानुष्ठीयमानोऽनादिरतोऽयमागमनिरपेक्षो भविष्यतीति । ननु मा भूदागमो मूलमाचारस्य शिष्टाचारत्वेन कर्तव्यतानुमानमेव मूलं भविष्यति, शिष्टानामपि पूर्वानाचरतो दृष्ट्वा कर्तव्यतामनुमायाचारस्तेषामपि पूर्वतरानाचरतो दृष्ट्वा इत्याचारात् कर्तव्यतानुमानं, तदनुमानाच्चाचार इति अनन्ताभ्युपगमान्नेतरेतराश्रयत्वादिदोषप्रसक्तिरित्याह— **आचार** इति । **किन्नश्छिन्नम्** इति । स्मृत्याचारयोर्मूलभूतो वेदो नित्यानुमेयः, चोदनैव धर्मे प्रमाणमिति राद्धान्तद्वयमपि छिद्यते, अनुमानस्यैव धर्ममूलत्वाभ्युपगमादिति । पुनरपि नित्यानु-

प्रकाशः ।

**तदिति** । तृतीयं शङ्कते । **तथापीति** । दर्शादिव्यवहारस्य वेदपूर्वकत्वसहचारदर्शनादित्यर्थः । न हि सहचारमात्राद् व्याप्तिः । पौरुषेयवाक्यस्येव वैदिकवाक्यस्यापि प्रत्यक्षानुमानविवक्षापूर्वकत्वप्रसङ्गादिति परिहरति । **अत एवेति** । अत्रोपाधिमाह । **आदिमत** इति । आगमस्येत्यर्थः । आचारस्याप्यागमपूर्वकत्वे साध्ये स एवोपाधिरित्यनादिः स तन्निरपेक्षोऽपि स्यादित्याह । **आचारोऽपीति** । **द्वितीयमिति** । अनुमानस्यापि धर्मे प्रमाणत्वाभ्युपगमादित्यर्थः । आचार-

प्रकाशिका ।

लिङ्गस्य न मूलत्वमेवं तादृशवेदस्यापीति भावः । **आचारोऽपीति** । साध्याचारोऽपि प्रत्यक्षवे

मकरन्दः ।

इति । तथा च यथा न नित्यानुमेयलिङ्गमूलत्वं तथा न नित्यानुमेयवेदमूलत्वमपीति निगर्वः । **आचारोऽपीति** । तथा च व्याप्तिबलादपि प्रत्यक्षश्रुतिमूलत्वमेव सिद्ध्यति, अन्यादृशश्रुतेरुक्तयुक्त्या मू-

मिति। अथायमाशयः। वैदिका अप्याचारा राजसूयाश्वमेधादयः समुच्छिद्यमाना दृश्यन्ते, यत इदानीं नानुष्ठीयन्ते, न चैते प्रागपि नानुष्ठिता एव, तदर्थस्य वेदराशेरप्रामाण्यप्रसङ्गात्, समुद्रतरणोपदेशवत्। न चैवमेवास्तु, दर्शाद्युपदेशेन तुल्ययोगक्षेमत्वात्। एवं, पुनः स कश्चित् कालो भविता यत्रैते अनुष्ठास्यन्ते, तथाऽन्येऽप्याचाराः समुच्छेत्स्यन्ते अनुष्ठास्यन्ते चेति न विच्छेदः। ततस्तद्वदागममूलतेति चेत्। एवं तर्हि प्रवाहादौ लिङ्गाभावे कर्त्तव्यत्वागमयोरननुमानादसत्यां प्रत्यक्षश्रुतौ आचारसङ्कथाऽपि कथमिति सर्वविप्लवः। तस्मात् प्रत्यक्षश्रुतिरेव मूलमाचारस्य सा चेदानीं नास्तीति शाखोच्छेदः।

अधुनाप्यस्ति सान्यत्रेति चेदत्र कथं नास्ति ?। किमुपाध्यायवंशानामन्यत्र

---

बोधनी।

मेयवेदवादिनामेवाशयमाशङ्कते-**अथायम्** इति। प्रत्यक्षवेदमूलानामपि च तावदाचरितपूर्वाणामाचाराणामुच्छेदो दृश्यते, न हि ते पूर्वमप्यनाचरिता वक्तुं युक्ता तद्विषयस्य वेदस्यानुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्। न च तस्याप्रामाण्यमेवास्त्विति युक्तम्, अनुष्ठीयमानार्थदर्शपौर्णमासादिवाक्यैरश्वमेधादिवाक्यानां प्रामाण्यहेत्वविशेषात्। पूर्वकालवदुत्तरकालमनुष्ठास्यन्ते च कदाचिदश्वमेधादयस्तद्वदन्येऽप्यप्रत्यक्षवेदमूला आचारत्वादेवोच्छेत्स्यन्ते पुनरनुष्ठास्यन्ते चेति तेषामपि विच्छेदेन भवितव्यम्। अतोऽनादित्वाभावादाचारपरम्परामूलत्वासंभवेनाश्वमेधादीनामिवाष्टकादीनामप्याचारस्यागमो मूलं, स चानुमेय इति भावः। विवादपदाचारा वेदमूला उच्छेदानन्तरभावित्वात् राजसूयाश्वमेधादिवदिति। **एवं तर्हि** इति। यद्येषामुच्छेदस्तर्हि, किं मूलाः पुनः प्रवर्तन्ताम्। न तावत्कर्त्तव्यतानुमानम् अनुमेयवेदो वा मूलं संभवति, तल्लिङ्गस्याचारस्य तदानीमभावात्, न वाऽश्वमेधादिवत्प्रत्यक्षश्रुतिरस्ति तदाचारस्वरूपस्य परिप्लवः स्यात्, न केवलं वेदमूलत्वमस्येत्युपसंहरति-**तस्मात्** इति। तदेवं नित्यानुमेयत्वेन शाखानामुच्छेदाभावं वदन्तो निरस्ताः।

संप्रति मतान्तरमाशङ्कते-**अधुनापि** इति। स्मृत्याचारयोर्मूलभूता श्रुतिरिदानीमपि देशान्तरेऽधीयते तेन न तच्छाखोच्छेद इति। तदपि विकल्प्य दूषयति-**अत्र** इति। स्वाध्याय इत्यध्ययनमुच्यते अध्येतृसमानकर्तृकत्वादिति। न ह्यनधीयानानामनुष्ठेयज्ञानासंभवादनुष्ठानं संभवतीति। देशान्तरा-

प्रकाशः।

स्यागममूलकत्वव्याप्तौ प्रयोजकमाह। **अथेति**। **अप्रामाण्येति**। नित्यमननुष्ठानादित्यर्थः। **तद्वदिति**। विवादाध्यासिता आचारा वेदमूलाः, उच्छेदानन्तरभाविप्रवाहवत्वाद्राजसूयवदिति न प्रत्यक्षादिना सिद्धसाधनं, नाप्यत्यन्तमुच्छेद इत्यर्थः। प्रलये स्मृत्याचारयोरुच्छेदाल्लिङ्गाभावेनासत्यां प्रत्यक्षश्रुतौ अनुष्ठानमेव न स्यादित्यसिद्धो हेतुरित्याह। **एवं तर्हीति**। न च घटादिसम्प्रदायप्रवर्त्तनार्थमीश्वरस्यापि शरीरपरिग्रहात् तदाचारादेव कर्त्तव्यताऽनुमितिः स्यादिति वाच्यम्। बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वाल्लाघवेन वेदरूपवाक्यस्य कल्पनादिति भावः। **शाखोच्छेद इति**। व्यासादीनां ससहस्रशाखवेदज्ञातॄणां सत्त्वेऽपि साम्प्रतं तदध्ययनाभाव एव शाखोच्छेदः।

स्मृत्याचारमूलं वेद इदानीमप्यन्यत्राध्ययनगोचर इति भट्टमतं शङ्कते। **अधुनाऽपीति**। परिहरति। **अत्रेति**। भारतवर्षे तदध्ययनाभावेऽप्यन्यत्र तदध्ययनकल्पनायां गौरवमिति भावः।

प्रकाशिका।

मूल एवान्यादृशस्य वेदस्य मूलत्वानुपपत्तेरुक्तत्वादिति भावः। **असिद्धो हेतुरिति**। इदमुप-

मकरन्दः।

लत्वानुपपत्तेरित्यभिसन्धिः। असिद्ध-इत्युपलक्षणं, चैत्यवन्दनाद्याचारप्रवाहे लौकिकाचारप्रवाहे च

गमनात्, तेषामेवोच्छेदाद्वा, आहोस्वित् स्वाध्यायविच्छेदात् ? । न प्रथमद्वितीयो। सर्वेषामन्यत्र गमने उच्छेदे वा नियमेन भारतवर्षे शिष्टाचारस्याप्युच्छेदप्रसङ्गात्, तस्याध्येतृसमानकर्तृकत्वात्। अन्यत आगतैराचारप्रवर्त्तने, अध्ययनप्रवर्त्तनमपि स्यात्। न तृतीयः। आध्यात्मिकशक्तिसम्पन्नानामन्तेवासिनामविच्छेदे तस्यासम्भवात्।

तस्मादायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात् स्वाध्यायानुष्ठाने शीर्यमाणे कथञ्चिदनुवर्त्तते। विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति युक्तमुत्पश्यामः।

गतानुगतिको लोक इत्यप्रामाणिक एवाचारो, न तु शाखोच्छेदः, अनेकशाखागतेतिकर्त्तव्यतापूरणीयत्वात्, एकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्गादिति चेत्। एवं हि महाजनपरिग्रहस्योपप्लवसम्भवे वेदा अपि गतानुगतिकतयैव लोकैः परिगृह्यन्ते

बोधनी।

दागतैरध्येतृभिराचाराः प्रवर्तिष्यन्त इत्यत्राह अन्यतः इति। आध्यात्मिकी शक्तिर्वक्ष्यमाणायुरादिकम्। तस्य स्वाध्यायविच्छेदस्य। तस्मात्स्वाध्यायविच्छेदोऽपि तावदस्मत्पक्षानुगुण एव भवेदित्याह नातस्मात् इति। आयुरादीनां ग्रहणादिशक्तेश्च प्रत्यहमपचयादेव स्वाध्यायानुष्ठानयोर्विशेषणं न तूपचितेष्वेव तेषु। तत्र कथंचित् केषुचिदेव पुरुषेषु कस्याश्चिच्छाखायाः स्वाध्यायानुष्ठानमनुवर्तते, परिग्रहीतॄणामनेकत्वात्तेषां युगपदनुच्छेदाच्च नैकदैव सर्वस्य स्वाध्यायस्य कर्मानुष्ठानस्य वोच्छेद इति। अनेन शक्तेः स्वाध्यायकर्मणोरित्येतद्विवृतमिति द्रष्टव्यम्।

ननु यद्ययमष्टकाद्याचारः प्रमाणमूलः स्यात् ततस्तन्मूलस्य वेदस्येदानीमनुपलम्भादुच्छेदः कल्प्येत, अयं त्वप्रामाणिक एव। 'गतानुगतिको लोको न लोकस्तत्त्वचिन्तकः' इति तालतलबन्धनन्यायेन प्रवर्त्तत इत्याह-गतानुगतिकः इति। ननु महाजनपरिग्रहात्प्रामाणिकत्वमेव तेषामङ्गीकृत्य शाखोच्छेद एव किमिति न कल्प्य इत्यत्राह-अनेकशाखा इति। सर्वशाखाप्रत्ययमेकं

प्रकाशः।

तस्येति। यद्यप्याचारस्याप्यध्येतृसमानकर्तृकतयाऽध्ययनगोचरशाखाबोधिताचारस्यानुपपत्तिः, तथाप्यत्राध्ययनाभावः शक्त्यभावप्रयुक्तः, स च नैतद्देशनियतः, प्रागप्यत्र तदभावापत्तेः, किन्त्वेतत्कालनियः। अतो भारतवर्षोन्यदेशः, स्मृत्याचारमूलाध्ययनशून्यो, देशत्वात्, एतद्देशवदिति भावः॥

उच्छिन्नशाखाबोधितेतिकर्त्तव्यताशङ्कया एकस्मिन्नपि कर्मणीतिकर्त्तव्यतेयत्तानिश्चयो न स्यादित्यमानक एवायमाचार इत्याह—

गतेति। महाजनपरिगृहीताचारस्यामानकत्वशङ्का वेदेऽपि स्यादित्याह। एवं हीति।

प्रकाशिका।

लक्षणम् लौकिकाचारे चैत्यवन्दनाचारे च प्रवाहापन्ने व्यभिचार इत्यपि द्रष्टव्यम्। किन्त्वेतत्कालनियत इति। एतद्देशावच्छिन्नैतत्कालनियतत्वे च शक्त्यभावस्य गौरवमेव बाधकमिति भावः। स्मृत्याचारेति। ननु यथाश्रुते दृष्टान्ते साध्यवैकल्यम्। न च विवादपदे स्मृत्या-

मकरन्दः।

व्यभिचारोऽपीति द्रष्टव्यम्। किन्त्वेतत्कालेति। यद्यप्येतत्कालावच्छिन्नैतद्देशत्वाभ्युपगमे नोक्तदोषस्तथापि लाघवादेतत्कालावच्छेदेनैव शक्त्यभावः कल्प्यते इति भावः। स्मृत्याचारेति। विवादपदस्मृत्याचारेत्यर्थः। इदानीं तच्छून्य इति साध्यम्। तेन दृष्टान्तस्य न साध्यवैकल्यम्।

इति न वेदाः प्रमाणं स्युः, तथा च वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः ।

एतमेव च कालक्रमभाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः प्रतिविहितमतो नैक-दोषोऽपि, न चायमुच्छेदो ज्ञानक्रमेण येन श्लाघ्यः स्याद्, अपि तु प्रमाद-मदमानाऽऽलस्यनास्तिक्यपरिपाकक्रमेण, ततश्चोच्छेदानन्तरं पुनः प्रवाहः, तदनन्तरञ्च पुनरुच्छेद इति सारस्वतमिव स्रोतः, अन्यथा कृतहानप्रसङ्गात् ।

बोधनी ।

कर्मेति न्यायात्प्रयोगविधयः शाखान्तरगतानप्यङ्गविधीनुपसंहृत्य कर्माणि प्रयुञ्जते, तेन नाना शाखाविहितेतिकर्तव्यतापूरणीयेषु कर्मसु शाखोच्छेद पक्षे कयाचिदुच्छिन्नया विहितमङ्गान्तरं किमपि कदाचित्स्यादिति शङ्कावकाशान्नैकस्मिन्नपि कर्मणि एतावदिदमित्याश्वासः स्यादिति । न इति । यदि महाजनपरिगृहीतोऽप्याचारोऽप्रमाणः स्यात् तर्हि वेदा अपि तथा भवेयुः, न हि ततोऽन्यत्ते-षामपि प्रामाण्ये कारणम् । तत्र च शाखोच्छेदलक्षणाद्वृश्चिकभयादपसर्पन् कृत्स्नवेदाप्रामाण्यरूपे आशीविषमुखे निपतितः स्यादिति । इतश्च शाखोच्छेदोऽवगम्यत इत्याह–एतमेव इति । काल-क्रमवशाद्भाविना शाखोच्छेदेनानुष्ठातॄणां त्वदुक्तमार्गेण भाविनमनाश्वासमाशङ्क्य कल्पसूत्रका-रैर्नानाशाखागतान्यङ्गान्युपसंहृत्य स्मरद्भिरनाश्वासप्रतिविधानं कृतं शाखोच्छेदाभावे कल्पसूत्राणि निष्फलानि भवेयुरिति । ततश्च यदुक्तमेकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्ग इति तदपि निरस्तमि-त्याह–अतः इति । अथैवमित्यारभ्य वाऽनाश्वासपरिहारतया व्याख्येयमिति । उच्छिन्नस्यैव विश्वस्य पुनरपि भविता प्रवाह इति प्रतिपादयिष्यन्पुनः प्रवृत्तिविधुरादपवर्गरूपादुच्छेदस्य भेदं तावदाह–न चायम् इति । श्रवणादिगतस्य विविक्तात्मविषयस्य ज्ञानस्य क्रमेण परिपाकविशेषेण भवन्मोक्षाख्य उच्छेदः श्लाघ्यो भवति आत्यन्तिकत्वात्, अयं तु प्रमादादिपरिपाकक्रमेण । अतः प्रवाहोच्छेदयोः पुनः प्रवृत्तिरिति । अस्तु वर्तमानप्रवाहस्य विच्छेदः, भाविप्रवाहस्तु कुतस्त्य इत्यत्राह–अन्यथा इति । यद्युच्छेदानन्तरं पुनः प्रवाहो न स्यात् तदा कृतस्य कर्मणः फलभोगमन्तरेणैव नाशः स्यादिति । ननु भवतु भाविनः प्रवाहस्योच्छेदः पुनः प्रवाहश्च भावी, तथापीतः पूर्वमपि प्रवाहो-

प्रकाशः ।

वृश्चिकेति । उच्छिन्नशाखवेदाङ्गीकारेऽननुष्ठानं वृश्चिकभीः, तया पलायमानस्य सर्ववेदाप्रामा-ण्यापात आशीविषमुखे निपात इत्यर्थः । अनेकेत्यादि दूषयति । एतमिति । तत्तत्कर्मणि नाना-शाखाबोधितेतिकर्त्तव्यताबोधनाय महर्षिप्रणीता महाजनपरिगृहीताश्च स्मृतयः सन्तीति नाऽनाश्वास इत्यर्थः । अन्यथैकस्य सकलानवगमाच्छाखान्तरबोधितेतिकर्त्तव्यताशङ्कया एकशाखातो नार्थनि-श्चयः स्यादिति भावः । नन्वाचारस्योच्छिन्नशाखामूलकत्वे साऽपि शाखान्तरवच्छिद्येर्गृह्येतेति नोच्छेदः । स चेन्नूनं समुद्रतरणोपदेशवच्छाखैवाप्रमाणमित्यत आह । न चेति । अप्रामाणिक-धिया न तच्छाखानध्ययनमपि त्वन्यप्रयुक्तमित्यर्थः । तदेवं वेदत्वादाचारानुमितवेदवद्वेदा उच्छेत्स्य-न्तीत्युपसंहरति । ततश्चेति । दिनरात्रिहासैश्च न व्यभिचारस्तस्यापि पक्षत्वादिति भावः । ननु वर्तमानप्रवाहोच्छेदसिद्धावपि भाविप्रवाहोच्छेदसिद्धिः कुत इत्यत आह । अन्यथेति । प्रागुपात्ता-दृष्टस्य देहाद्यभावेन भोगाजनकत्वादित्यर्थः । नन्वेवमपि प्राग्व्यविच्छेदासिद्धौ परतन्त्रपुरुषपूर्वकोऽ-

प्रकाशिका ।

चारमूलवेदशून्यत्वं साध्यम् । प्रतियोग्यप्रसिद्ध्याऽप्रसिद्धेरिति । मैवम् । तादृशवेदसिद्धौ सत्यामेवान्यत्रेच्छेदार्थमुक्तानुमानप्रवृत्तेरिति । विवादपदेत्यादिसाध्यस्यैवादूष्यत्वादिति । एत-त्कालावच्छिन्नमध्ययनशून्यत्वं साध्यमतो न दृष्टान्ते साध्यवैकल्यम् । भाविप्रवाहोच्छेदेति ।

मकरन्दः ।

भाविप्रवाहेति । भाविप्रवाहतदुच्छेदयोः सिद्धिः कुत इत्यर्थः । परैः पूज्यानामप्यत्र प्रवेशा-

तथा च भाविप्रवाहवद्भूवत्ययमुच्छेदपूर्वक इत्यनुमीयते। स्मरति च भगवान् व्यासो गीतासु भगवद्वचनम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ इति

कः पुनरयं महाजनपरिग्रहः ?। हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिः, स ह्यत्र न स्याद् ऋते निमित्तम्।

न ह्यत्रालस्यादिर्निमित्तम्। दुःखमयकर्मप्रधानत्वात्। नाप्यन्यत्र सिद्धप्रामाण्येऽभ्युपायेऽनधिकारेणाऽस्मिन्ननन्यगतिकतयाऽनुप्रवेशः। परैः पूज्यानामप्यत्राप्रवेशात्। नापि भक्ष्यपेयाद्यद्वैतरागः, तद्विभागव्यवस्थापरत्वात्। नापि कुतर्काभ्यासाऽऽहितव्यामोहः, आकुमारं प्रवृत्तेः। नापि सम्भवद्विप्रलम्भपाषण्डसंसर्गः, पित्रादिक्रमेण प्रवर्त्तनात्। नाऽपि योगाभ्यासाभिमानेनाव्यग्रताभिसन्धिः, प्राथमिकस्य कर्मकाण्डे

---

बोधनी।

च्छेदौ कथं सिध्यत इत्यत्राह—**तथा च** इति। वर्तमानोऽयं प्रवाहः प्रवाहोच्छेदपूर्वकः प्रवाहत्वाद्भाविप्रवाहवत्। प्रवाहविच्छेदयोः पुनः प्रवृत्तावागमसंवादं दर्शयति—**स्मरति च** इति। महाजनपरिग्रहाद् वेदस्य प्रामाण्यमित्युक्तं, तत्र कोऽयं परिग्रहो नामेत्याह—**कः पुनः** इति। **हेतुदर्शनशून्यैः** इति। दृष्टहेतुदर्शनशून्यैरिति। वेदपरिग्रहे न कश्चिद् दृष्टो हेतुरित्याह—**न ह्यत्र** इति। न च सिद्धपुरुषार्थावगत्युपाय आगमान्तरेऽनधिकारिणः केचिद् गत्यन्तराभावादर्थसंदेहादेवात्र प्रवर्तन्ते। यद्ययं वेदागमः प्रमाणं स्यात् ततः पुरुषार्थसिद्धिः, नो चेत् पूर्वावस्थाया न हानिरिति। न तु प्रामाण्यनिश्चयादिति वाच्यमित्याह—**नापि** इति। परैर्बौद्धैः, सम्मतानामप्यत्र प्रवेशो नास्ति किमु तैरपि त्यक्तानामिति। न चागमान्तराणां भक्ष्याभक्ष्यविभागपरत्वात्सिद्धप्रामाण्यान्यपि तानि परित्यज्य स्वैरभक्षणाद्यर्थमत्र प्रवर्तन्त इत्यत्राह—**नापि** इति। भक्ष्यस्य पेयस्य वा भक्ष्येण पेयेन च सह द्वैतं नास्ति किं तु सर्वं भक्ष्यं च पेयं चैकत्वमेव तयोरिति कामयमाना इति। नापि कुतर्काभ्यासवन्तस्तैः कुतर्कैरप्रमाणमेवेदं प्रमाणतया निश्चित्य प्रवर्तन्ते तदभ्यासविरहिणामेव कुमाराणां प्रवृत्तेरित्याह—**नापि** इति। नापि संभवद्विप्रलम्भैः षडङ्गैः संसर्गेण तैर्विप्रलब्धाः प्रवर्त्तन्ते, पितृपितामहादयोऽत्र प्रवृत्ता इत्यवगम्य प्रवृत्तेरित्याह—**नापि** इति। नापि योगमभ्यस्यता मया तूष्णीमास्यत इति व्यपदेशेनाव्यग्रतां निर्व्यापारतां फलत्वेनाभिसंधायात्र प्रवृत्तिरित्याह—**नापि** इति। कर्मकाण्डे ह्ययं प्राथमिकः प्रवर्तते न तु ब्रह्मकाण्डे "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति वचनात् तत्र चास्यानेकधाऽनुष्ठानव्यग्रत्वात्। यद्वा, अन्तिममोक्षाश्रममप्राप्तः प्राथमिकस्तस्य कर्मकाण्डव्यग्रत्वादिति। नापि जीविकाऽत्र प्रवृत्तेर्निमित्तं, 'दृष्टलाभफला नापि' (न्या०कु०१। ८)

प्रकाशः।

नादिरेवायं सम्प्रदाय इत्यत्र न किञ्चिदनिष्टमित्यत आह। **तथा चेति**। प्रवाहत्वादिति शेषः।

**धर्मो** = यागादिः, तस्य ग्लानिरुच्छेदः। **अधर्मस्य** = मण्डलीकरणादेः। **संस्थापना** = व्यवस्था।

ननु महाजनपरिग्रहाद्वेदस्य प्रामाण्यधीः, स एव क इत्यत आह **कः पुनरिति**। **हेतुदर्शनेति**। अनन्यथासिद्धप्रवृत्तिविषयत्वमित्यर्थः। तदेवाह। **न ह्यत्रेति**। निमित्तमित्यग्रे सर्वत्रानुषज्यते। **योगेति**। योग एव कर्तव्यो, न तु चित्तविक्षेपहेतुर्यागादिरित्यभिमानेनेत्यर्थः। **प्राथमिकस्येति**। ब्रह्मचारिण इत्यर्थः। योगव्यग्रताभिमानेन कर्मकाण्डे प्रवृत्तिर्न स्यात् तस्य

सुतरां व्यग्रत्वात् । नापि जीविका, प्रागुक्तेन न्यायेन दृष्टफलाभावात् । नापि कुहकवञ्चना, प्रकृते तदसम्भवात् ।

सम्भवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे । तथा हि । भूयस्तत्र कर्मलाघवमित्यलसाः । इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिकाः । भक्ष्याद्यनियम इति रागिणः । स्वेच्छया परिग्रह इति कुतर्काऽभ्यासिनः । पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः । "उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते" इत्यादिश्रवणादव्यग्रताऽभिमानिनः । सप्तघटिकाभोजनादिसिद्धेर्जीविकेत्ययोग्याः । आदित्यस्तम्भनं, पाषाणपाटनं, शाखाभङ्गो, भूतावेशः, प्रतिमाजल्पनं, धातुवाद इत्यादिप्रबन्धनात् कुहकवञ्चिताः । ततस्तान् परिगृह्णन्तीति सम्भाव्यते । अतो न ते महाजनपरिगृहीता इति विभागः ।

स्यादेतत् । यद्येवं सर्वकर्मणां वृत्तिनिरोधो न किञ्चिदुत्पद्यते, न किञ्चिद्विनश्यतीति स्तिमिताकाशकल्पे जगति कुतो विशेषात् पुनः सर्गः ? । प्रकृतिपरिणतेरिति साङ्ख्यानां शोभते । ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते । वासनापरि-

---

बोधनी ।

इत्यनेन निरस्तत्वादित्याह—नापि इति । नापि कुहकानां वञ्चकानां वञ्चना प्रवृत्तेर्निमित्तं वेदागमे वञ्चनाया असंभवादित्याह—नापि इति । न ह्यत्रादित्यस्तम्भादीनामुपाया उपदिश्यन्त इति ।

अत्रासंभवन्तः सर्व एवैते दृष्टहेतवो बौद्धाद्यागमपरिग्रहे संभवन्तीत्याह—संभवन्ति तु इति । संभवमेव दर्शयति—यथा हि इति । बौद्धादयोऽपि विहारकुहरकोटरेषु चक्षुषी निमील्य निर्व्यापारा आसत इत्यलसास्तान् बौद्धाद्यागमान् परिगृह्णन्तीति संबन्धः । इतः वैदिकात् पथः, रागिणः भोज्याद्यद्वैतरागिणः स्वेच्छया परिग्रहः पित्रादीनां नियामकानामभावात् ।

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।

आदित्यस्तम्भनादीनामुपायस्य बौद्धाद्यागमेषूपदिष्टत्वात् कुहकवञ्चिताः परिगृह्णन्ति । अतः यत एव दृष्टहेतवः संभवन्तीति ।

तदेवं प्रसङ्गाद्वेदप्रामाण्यहेतोर्महाजनपरिग्रहस्य स्वरूपं दर्शयित्वाऽधिकृतयोरेव सृष्टिप्रलययोः किंचनाशङ्कते - स्यादेतत् इति। विश्वोत्पत्तिनाशयोर्निमित्तानां कर्मणां प्रलयावस्थायां युगपन्निरुद्धवृत्तित्वेन कस्यचिदपि वस्तुन उत्पत्तेर्विनाशस्य चासंभवात् स्तिमिताकाशसदृशं जगदवतिष्ठते, तदा चागन्तोः कुतो हेतुविशेषात् पुनः सर्गः ? न हि तदा हेतुविशेषः कुतश्चिदस्ति, न हि तमन्तरेणाहेतुकः सर्गः सम्भवतीति । प्रकृतेर्महदादिरूपेण परिणतेः पुनः सर्गोऽस्त्वित्यत्राह—प्रकृतिपरिणतेः इति । मातुलदुहितेव दाक्षिणात्यानां न तु प्रामाणिकानाम् , प्रकृतितन्नित्यत्वयोरप्रामाणिकत्वात्तत्परिणतिहेतोरागन्तुकस्याभावाच्चेति । ब्रह्मपरिणतेरिति भास्करगोत्र एव युज्यते कुलवधूरिव श्रोत्रियगोत्रे । वासना नाम = आलयसंततिपतितानां ज्ञानक्षणानां पूर्वं पूर्वं विज्ञानं, तस्य परिपाकः

प्रकाशः ।

योगबहिर्भावादित्यर्थः । प्रागुक्तेन = विफला विश्ववृत्तिर्न—इत्यादिना ॥

बौद्धाद्यागमपरिग्रहे अन्यथासिद्धिमाह—सम्भवन्तीति ।

उभयोरिति । "अत्यन्तमलिनः कायो देही चाऽत्यन्तनिर्मलः"—इति पूर्वार्द्धम् । साङ्ख्यानामिति । प्रकृतिपरिणतावपि प्रयोजनाकाङ्क्षायाः सत्वात् तेषामेव शोभते, न त्वस्माकमित्यर्थः । एवमग्रेऽपि । भास्करः = त्रिदण्डिमतभाष्यकारः । ननु वर्तमानोपाध्यभावेऽप्यतीतसूर्यस्पन्दा

पाकादिति सौगतमतमनुधावति । कालविशेषादिति चोपाधिविशेषाभावादयुक्तम् । असताञ्चोपलक्षणानां न विशेषकत्वं, सर्वदा तुल्यरूपत्वात् । न च ज्ञानद्वारा । अनित्यस्य तस्य तदानीमभावात् । नित्यस्य च विषयतः स्वरूपतश्च अविशेषादिति चेन्न । शरीरसंक्षोभश्रमजनितनिद्राणां प्राणिनामायुःपरिपाकक्रमसम्पादनैकप्रयोजनश्वाससन्तानाऽनुवृत्तिवन्महाभूतसंप्लवसंक्षोभलब्धसंस्काराणां परमाणूनां मन्दतरतमाऽऽदिभावेन कालावच्छेदैकप्रयोजनस्य प्रचयाख्यसंयोगपर्यन्तस्य कर्मस-

बोधनी ।

सहकारिलाभस्तस्मादिति सौगतमतमनुधावति वेशवनितेव धनवन्तमिति । कालविशेषावच्छिन्नया भगवतः सिसृक्षया सहकृतैर्भोक्तृकर्मभिः परमाणुषु क्रियोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिक्रमेण पुनः सर्ग इति नैयायिकानां मतमाशङ्क्याह–कालविशेषात् इति । कालस्य स्वतो भेदाभावादुपाधिविशेषाद्विशेषो वक्तव्यः, प्रलये च कालावच्छेदकस्योपाधेरभावादिति न संगच्छत इति । नन्वसन्त एव तदानीमुपाधयः सर्वकालमुपलक्षयिष्यन्ति असतामेवोपलक्षणत्वाविरोधादित्यत्राह– असतां च इति । कुत इत्यत आह–सर्वदा इति । प्रलयारम्भात् प्रभृति सर्वोपाधीनामसत्त्वेना विशेषान्नैवागन्तुकसर्गकालस्य विशेषकत्वमिति । ननु मा भूवन्नसन्तो विशेषकाः सर्वदा तुल्यरूपत्वात् तथापि तद्विषयं विज्ञानं कदाचिदुपपद्यते, ततश्चागन्तुकज्ञानावान्तरव्यापारद्वारा तेषामेव विशेषकत्वं भविष्यतीत्याशङ्क्याह–न च ज्ञानद्वारा इति । तच्च ज्ञानमस्मदादीनां भवेदीश्वरस्य वा ? नाद्यः–तस्यानित्यत्वेन प्रलये विनाशाच्छरीरेन्द्रियादिकारणाभावेन पुनरनुत्पादाच्च । न द्वितीयः– तस्य नित्यसर्वविषयस्य च स्वरूपतो विषयतश्चाविशेषकत्वात् । ततश्च सर्गादावागन्तोः कस्यचिद्धेतोरभावादनुत्पत्तिः सर्वदा उत्पत्तिर्वा सर्वस्य स्यात्, न तु कदाचिदुत्पत्तिरिति चोद्याभिप्रायः । न इति । मा भूवन्नन्ये प्रकृतिपरिणामादयः सर्गस्य निमित्तं, कालविशेषस्तु भविष्यति । अस्ति च तदानीं तस्योपाधिविशेष ईश्वरनिःश्वसितलक्षणः । कथमशरीरस्य तस्य निःश्वसितमित्यत उक्तं– परमाणूनां कर्मसंतानस्य इति । परमाणवो हीश्वरशरीरं साक्षात्प्रयत्नाधिष्ठेयत्वात्, तेन तदा अयं कर्मेश्वरनिःश्वसितं भवति । तथा च श्रुतिः- "अस्य महतो भूतस्य निःश्वसितमेतत्" इति ननु यदि परमाणुषु कर्म स्यात् तर्हि संयोगस्यावर्जनीयत्वाद् द्व्यणुकादिक्रमेण तदानीमेव विश्वं जगदुत्पद्येत, अत उक्तं–प्रचय इति । प्रचयाख्यमेव संयोगं तदा कर्मारभते न तु कार्यारम्भकं, तर्हि किमर्थं कर्मसंतानोऽनुवर्त्तेत इत्यत उक्तं–कालावच्छेदैकप्रयोजनस्य इति । इयन्तं कालं प्रलीनं ब्रह्माण्डमिति प्रलयकालावच्छेद एव प्रयोजनं तस्य-नान्यत् । सर्वस्मिन्नेव प्रलीने कुतः कर्मण एवोत्पत्तिरित्यत उक्तं–महाभूत इति । महाभूतानां पृथिव्यप्तेजोवाय्ववयविनां संप्लवो=विनाशः तदर्थं यः संक्षोभोऽभिघातस्तेन तदारम्भकेषु परमाणुषु कर्मोत्पत्तिद्वारेण वेगाख्यः संस्कार उत्पद्यते, तेन चावयविनाशोत्तरकालमपि मन्दतरतमादिभावेन कर्मसंतानोऽनुवर्त्तते, कार्यान्तराभावेऽपि कालावच्छेदैकप्रयोजनमीश्वरनिश्वसितमनुवर्त्तत इत्यत्र दृष्टान्तः–शरीर इति । यथा हि निद्राणानां प्राणिनामेतावानस्यायुषो भोग इदानीं परिपक्वः इदानीं त्वेतावानित्यायुःपरिपाकक्रमसंपादनैकप्र-

प्रकाशः ।

उपाधयः स्युरित्यत आह । असतामिति । तस्य =ज्ञानस्येत्यर्थः । शरीरेति । यथा सुषुप्तौ कर्मणां युगपद्वृत्तिनिरोधेऽपि श्वासानुवृत्तिवलात् कदाचित् प्रबोधस्तथा परमाणूनां कर्मसन्तानानुवृत्तिवशात् कदाचित् सर्ग इत्यर्थः । प्रचयेति । यावत् प्रचयाख्यः संयोगोऽनुवर्त्तते, तावत् कर्मसन्तानाऽनुवृत्तिरित्यर्थः । प्रचयश्च यद्यप्यवयवमात्रवृत्तिः संयोगस्तथापि द्व्यणुकारम्भकसंयोगमात्रमत्र विवक्षितम् ।

**न्तानस्येश्वरनिःश्वसितस्यानुवृत्तेः । कियानसावित्यत्राविरोधादागमप्रसिद्धिमनतिक्रम्य तावन्तमेव कालमित्यनुमन्यते । ब्रह्माण्डान्तरव्यवहारो वा कालोपाधिः । तदवच्छिन्ने काले पुनः सर्गः । यथा खल्वलाबुलतायां चितानि फलानि, तथा परमेश्वरशक्तावनुस्यूतानि सहस्रशोऽण्डानीति श्रूयते । तस्मादेवं विच्छेदसम्भवे कस्य केन परिग्रहो, यतः प्रामाण्यं स्यात् । ज्ञापकश्चायमर्थो न कारकः ततः कारकाभावान्निवर्तमानं कार्यं ज्ञापकाभिमतः कथङ्कारमास्थापयेत् ।**

---

बोधनी ।

योजनः श्वाससंतानोऽनुवर्तते, इतरथा हि तदानीं जीवनकालावच्छेदयोग्यक्रियाभावादियन्तं कालमनेन जीवितमतोऽयमायुर्भोगः पक्ष इति तत्क्रमो न स्यादिति । यद्यत्र कश्चित्पृच्छेत् कियन्तं कालमसौ प्रलयोऽनुवर्तत इति, तत्रैवमुत्तरितव्यमित्याह-**कियानसौ** इति । प्रमाणविरोधाभावादागमप्रसिद्ध्यनुसारेण यावन्तं कालं सर्गानुवृत्तिस्तावन्तं कालमिति । यद्वा, यावानागमेषूपदिश्यते तावानिति । सर्वथा ब्राह्मेण मानेन वर्षशतमिति । उपाध्यन्तरमाह-**ब्रह्माण्डान्तर** इति । यदेकस्मिन् ब्रह्माण्डे विनष्टे ब्रह्माण्डान्तरमुत्पद्यते तद्व्यवहारो वा तत्समये भाविनो ब्रह्माण्डान्तरस्यानुवृत्तिकालं यावदन्यस्य प्रलय इत्यर्थः । सन्ति च बहूनि ब्रह्माण्डानीत्याह-**यथा खल्विति** । श्रुतिरेवात्र प्रमाणमित्यर्थः । परमप्रकृतमुपसंहरति-**तस्मादिति** । उक्तैर्हेतुभिरेव सर्वेषां विच्छेदे परिग्राह्यपरिग्रहीतृपरिग्रहाणामभावान्न तद्द्वारेण प्रामाण्यं शक्याभ्युपगममिति । परिग्रहमङ्गीकृत्याप्याह-**ज्ञापकश्चेति** । महाजनपरिग्रहः खलु प्रामाण्यस्य ज्ञापकः । ननु ज्ञापकानि च कारकोत्पादितानीति केवलं ज्ञापयन्ति, शब्दानां च मूलप्रमाणवत्ता प्रामाण्यकारणं, न हि सा नित्यस्य संभवति, स्वतः प्रामाण्यमित्युक्तं, ततः कारकाभावान्निवर्तमानं प्रामाण्यं ज्ञापकाभिमतः परिग्रहः सन्नपि कथं व्यवस्थापयेत् । न हि सहस्रचक्षुषाऽपि नभसि नभस्वति वा रूपं शक्यसंपादमिति ।

प्रकाशः ।

**कियानिति** । ब्रह्मवर्षशतमेव कालोपाधिरित्यागमप्रसिद्धेरास्थीयते इत्यर्थः । यद्वा, प्रकृतब्रह्माण्डान्यब्रह्माण्डवृत्तिः कालोपाधिरित्याह । **ब्रह्माण्डेति** । पूर्वं शब्दनित्यत्वस्य प्रवाहाविच्छेदरूपस्य नित्यत्वस्य चासिद्धिरुक्ता । इदानीमस्मदभिमतस्यापि महाजनपरिग्रहस्य सर्गादावसम्भवादसिद्धिमाह । **एवमिति** । किञ्च महाजनपरिग्रहः प्रामाण्यज्ञापको, न तूत्पादकः, यस्तूत्पादको गुणस्तदभावे ग्राह्यस्य प्रामाण्यस्याभावात् किन्तेन ग्राह्यमित्याह । **ज्ञापकश्चेति** । **अयमर्थो** = महाजनपरिग्रहरूपः ।

द्वितीयामन्यथासिद्धिं दूषयितुमुपन्यस्यति—

प्रकाशिका ।

भाविप्रवाहोच्छेदयोः सिद्धिः कुत इत्यर्थः । षष्ठीसमासेऽन्यथेत्यादेरसङ्गतेः । यद्यपि भाविप्रवाहसिद्ध्यैव दृष्टान्तसिद्धिः, तथापि तदुच्छेदासिद्धौ उत्पन्नब्रह्माण्डादेरविनाशित्वे इदानीन्तनब्रह्माण्डस्याप्यनाशप्रसङ्ग इत्याशयेनोच्छेदोऽप्युक्तः । "परैः पूज्यमानानामप्यत्र प्रवेशा" दिति मूलं पूज्यत्वमत्र सद्दर्शनं प्रविशन्त्विति श्लाघाविषयत्वं तथा च नान्यत्रानधिकारेणात्र प्रवेश इत्यर्थः । क्वचिदप्रवेशादिति पाठः, तत्र तन्मतपूज्यानामपि चेदत्रानधिकारस्तर्हि तन्मतानधिकृतानामत्र प्रवेशा-

मकरन्दः ।

दिति मूलम् । पाषण्डैः स्वमतप्रवेशार्थं पूज्यमानानामप्यत्र प्रवेशदर्शनादनन्यगतिकतया नात्र प्रवेश इत्यर्थः । वस्तुतोऽप्रवेशादिति पाठः । अत एव बौद्धाधिकारेऽपि तथैव पाठः । तत्र तन्मतप्रविष्टानां पूज्यानामेव नात्र प्रवेशाधिकारः, तत्राप्यनधिकृतानामत्र प्रवेशस्त्ववसम्भावित एवेत्यर्थः ।

विशेषेण ब्राह्मणत्वाद्यप्रतिसन्धानेऽनुष्ठानरूपस्याश्वासस्याभावात्। न हि पूर्वजन्मनि मातापित्रोर्ब्राह्मण्यात्तदुत्तरत्र ब्राह्मण्यमिति नियमो, येन सर्गादौ वर्णादिधर्मव्यवस्था स्यात्। ईश्वरवददृष्टविशेषोपनिबद्धभूतविशेषानुपलम्भात्। अतीन्द्रियार्थदर्शित्वे चानाश्वासस्योक्तत्वात्।

एतेन ब्रह्माण्डान्तरसञ्चारिवर्णव्यवस्थया सम्प्रदायप्रवर्त्तनमपास्तम्। सञ्चारशक्तेरभावात्। वर्षान्तरसञ्चरणमेव हि दुष्करं, कुतो लोकान्तरसञ्चारः, कुतस्तरां च ब्रह्माण्डान्तरगमनम्। अणिमादिसम्पत्तेरेवमपि स्यादिति चेन्न। अत्रापि प्रमाणाभावात् सम्भावनामात्रेण समाश्वासानुपपत्तेः। आद्यमहाजनपरिग्रहान्यथाऽनुपपत्तिरेवात्र प्रमाणमिति चेत्। न। एवम्भूतैककल्पनयैवोपपत्तौ भूयःकल्पनायां गौरवप्रसङ्गात्। विदेहनिर्माणशक्तेरणिमादिविभूतेश्चावश्याभ्युपगन्तव्यत्वात्। अस्त्वेक एवेति चेत्, न तर्हीश्वरमन्तरेणान्यत्र समाश्वास इति ॥ ३ ॥

---

बोधनी।

श्वास्यन्तीत्यत्राह—**ईश्वरवत्** इति। स हि तज्जातिविशेषे निमित्तमदृष्टविशेषसहकृतभूतभेदारब्धशरीरत्वं जानाति नित्यसर्वज्ञत्वेनादृष्टविशेषवेदित्वात्तस्य, नैवं कपिलादयः तेषामदृष्टविशेषज्ञानहेतोर्भावनाया निरस्तत्वादिति। तर्हि ब्रह्माण्डान्तरवर्तिनो ब्राह्मणा ब्राह्मणादिवर्णान् तत्र संचार्य तत्तद्वर्णविशेषप्रयुक्तान् धर्मान् व्यवस्थापयन्तीत्यत्राह—**एतेन** इति। एतेन वक्ष्यमाणेन संचरणशक्त्यभावेनेति। **अणिमादि** इति। अणिमा, महिमा, लघिमा, गरिमा, प्राप्तिः, प्राकाम्यमीशित्वं, वशित्वमित्येभिरैश्वर्यैः संपन्नाः कपिलादयः। ततस्तेषां किन्नाम दुष्करमिति। **न** इति। अत्राणिमादिसंपत्ताविति। तत्र संभावना तावदस्तीत्यत्राह—**संभावना** इति। **आद्य** इति। अत्र कपिलादीनामैश्वर्येऽतीन्द्रियार्थदर्शित्वे च तदानीन्तनमहाजनपरिग्रहान्यथानुपपत्तिः प्रमाणमिति। **न** इति॥ विशिष्टैकरूपकल्पनयापि परिग्रहस्योपपत्तौ न भूयसां विशिष्टानां कल्पनायां प्रमाणमस्तीति। नन्वेककल्पनायामपि तस्य विदेहस्यैव निर्मातुं शक्तिरणिमाद्यैश्वर्यसंपत्तिश्च कल्प्येतेति कल्पनागौरवमस्त्येवेत्यत्राह—**विदेह** इति। अनेककल्पनायामपि तदविशिष्टमेवेत्यर्थः। अस्तु तर्हि कपिलादीनामन्यतमः स एकः किमीश्वरेणेत्यत्राह—**अस्तु** इति ॥ ३ ॥

यद्येक एवाङ्गीक्रियते स तर्हीश्वर एव स्यात् तमन्तरेणान्यत्र कपिलादावनाश्वासस्योक्तत्वादिति परिच्छेदार्थं संकलय्य दर्शयन् सर्वास्वपि जातिष्वात्मनः परमेश्वरं प्रति प्रणतिं प्रार्थयते

प्रकाशः।

प्रत्यक्षादित्याह। **न हीति**। ननु यथेश्वरेणादृष्टविशेषजन्यतया शरीरे ब्राह्मण्यादि साक्षात्कृत्य सर्गादौ कपिलादयो वेदमध्याप्यन्ते, तथा कपिलादिभिरप्यध्येष्यत इत्यत आह। **ईश्वरवदिति**।

अणिमादिसम्पत्तावप्यागम एव मानम्। तत्प्रामाण्यग्रह एव चानाश्वास इत्याह। **अत्रापीति**। हेतुदर्शनशून्यैर्ग्रहणधारणादिरूपमहाजनपरिग्रहानुपपत्तिरेवाऽणिमादिसम्पत्तौ मानमित्याह। **आद्येति**। तथाविधाः किं बहवः कल्पनीयाः, एक एव वा? नाद्य इत्याह। **एवमिति**। कल्पनायां लाघवसाचिव्यादेक एव विषय इति तन्नानात्वे मानाभाव इत्यर्थः। कल्पनागौरवमाह **विदेहेति**। विविधो देहो विदेहः। अन्यमाशङ्क्य ईश्वरादन्यत्रानाश्वासेन तत्रैव पर्यवसानमिति परिहरति। **अस्त्वित्यादि** ॥ ३ ॥

मकरन्दः।

न्धानं न स्यात्, न त्वेवमित्यर्थः। मूलयुक्तिमाह। **कल्पनायामिति** ॥ ३ ॥

**कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्**
**हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ॥**
**तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं**
**विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥४॥**

इति द्वितीयः स्तवकः ॥ २ ॥

---

बोधनी ।

-कारं कारम् इति । संसारिचेतनवर्गसमवेतमदृष्टं माया, तद्वशादलौकिकमन्यत्रादृष्टचरमद्भुतमयं विचित्रं च जगत्कृत्वा कृत्वा पुनः संहृत्य संहृत्य पुनरपि कुर्वन् ऐन्द्रजालिक इवेन्द्रजाले यः क्रीडति तं देवं, **निरवग्रहस्फुरदभिध्यानानुभावं** निरवग्रहम्=अप्रतिघातं, स्फुरत् प्रकाशमानम् । अभिध्यानं सर्वानपि विषयानदृष्टपरमाण्वादीनभिध्याय व्यवस्थितं ध्यानं ज्ञानं, तदेव तस्यानुभावो = महिमा यस्य तथोक्तः । यद्वा, अनुभावः = क्रियाशक्तिः, अप्रतिहते सर्वविषये ज्ञानशक्तिक्रियाशक्ती यस्य स तथा । नित्यज्ञानत्वेन विश्वासभुवां कपिलादीनां निरस्तत्वात् तस्यैकभुवं शिवं प्रति नमन्, भूयासमन्त्येष्वपि जननेषु नीचास्वपि जातिषु वर्तमानः शिवं प्रति नमन् भूयासमिति यावत् । यदि शिवं प्रति नमन् भवे, अन्त्येष्वपि भूयासम्, अन्यथा तूत्तमेष्वपि न भूयासमित्यर्थः॥४॥

इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ न्यायकुसुमाञ्जलिटीकायां द्वितीयः परिच्छेदः ॥

प्रकाशः ।

परिच्छेदार्थमुपसंहरन् ईश्वरस्य नतिमाह । **कारमिति** । जगत् = कार्यद्रव्यजातं, कृत्वा कृत्वा संहरन्, हृत्वा हृत्वा सृजन्, मायावशात् सृष्टिसंहारसहकारिसम्पत्तेर्यः क्रीडतीव, तं, देवं= स्तुत्यं, सत्यविश्वासैककारणं, भवं = जगन्मूलकारणम्, निष्प्रतिबन्धस्फुरदिच्छाप्रभावं शिवं प्रत्युद्दिश्य नमन्नन्तकालेष्वपि भूयासमित्याशंसा ॥ ४ ॥

इति श्रीमहामहोपाध्यायश्रीवर्द्धमानविरचिते कुसुमाञ्जलिप्रकाशे द्वितीयः स्तवकः ॥ २ ॥

प्रकाशिका ।

जगतो नित्यघटितत्वात्, संहरणादिकमसम्भवीति व्याचष्टे । **कार्यद्रव्येति** । कार्यमात्रसंहरणं महाप्रलय एवेति तत्र पौनःपुन्यमनुपपपन्नमत उक्तं-द्रव्येति । माया पदार्थान्तरं न्यायमते नास्त्येव, मिथ्याज्ञानात्मिकापि नेश्वर इत्यन्यथा व्याचष्टे—**सृष्टीति** । तथा चादृष्टमेवात्र मायापदार्थ इति भावः । क्रीडनमपि वास्तवमीश्वरे बाधितमित्यत आह—**इवेति** । ननु दीव्यतीति देवः वेदः देवनं च क्रीडनं तच्चेश्वरे नास्तीत्य ( त आह ) र्थान्तरमाह । **स्तुत्यमिति** । अवग्रहशब्दस्यैव वृष्टिप्रतिबन्धके शक्तिर्न च तेनार्थेन प्रकृते सङ्गतिरिति प्रतिबन्धकमात्रपरतया व्याचष्टे-**निष्प्रतिबन्धकेति** । अन्त्येष्वपीत्यर्थः । विशिष्टस्य भवनस्याऽऽशंसायां मुमुक्षुताविरोधः, बहुत्वविशिष्टस्यान्तस्य जन्मबहुत्वाधीनत्वात्, न च जन्म मुमुक्षोराशंसनीयमित्याशंसाविषयं विच्छिद्य दर्शयति । **भूयासमित्याशंसेति** । तेन भूयासमित्याशीर्लिङ् स्फुटत्वादाशंसेति विफलमिति न दोषः । तथा च नमनविशिष्टभवनमात्रमाशास्यमित्यर्थः ॥ ४ ॥

इति श्रीमहामहोपाध्यायश्रीभगीरथापरनामकमेघठक्कुरविरचितायां
कुसुमाञ्जलिप्रकाशिकायां द्वितीयः स्तवकः ।

मकरन्दः ।

नित्यस्य संहरणादिकमसम्भवीति व्याचष्टे-**कार्य्यद्रव्येति** । कार्य्यमात्रसंहरणं महाप्रलय एवेति तत्राभीक्ष्णत्वमनुपपन्नं तस्याप्रकृतत्वञ्चेति द्रव्यपदमुपात्तम् । ईश्वरस्य मायावित्वे संसारित्वापत्तिरिति व्याचष्टे **सृष्टीति** । वास्तवक्रीडनमपि तस्य नास्तीत्यत आह । **इवेति** ॥ ४ ॥

इति महामहोपाध्यायदेवदत्तात्मजमहामहोपाध्यायरुचिदत्तविरचिते कुसुमाञ्जलिप्रकाशव्याख्याने मकरन्दे द्वितीयः स्तवकः ॥

श्रीगणेशाय नमः ॥

# न्यायकुसुमाञ्जलौ

## तृतीयस्तवकः ।

**नन्वेतदपि कथं, तत्र बाधकसम्भवात् । तथा हि । यदि स्यादुपलभ्येत । अयोग्यत्वात् सन्नपि नोपलभ्यते इति चेदेवं तर्हि शशश्रृङ्गमप्ययोग्यत्वान्नोपलभ्यते इति स्यात् । नैतदेवम् । श्रृङ्गस्य योग्यतयैव व्याप्तत्वादिति चेत् । चेतनस्यापि योग्यो-**

बोधनी ।

तदेवमीश्वरविषयस्योपदेशलिङ्गानुमानस्यान्यथासिद्धिर्निराकृता । अथेदानीं तदभावावेदकप्रमाणसद्भावादित्याशङ्कितं, तस्य कालात्ययापदिष्टत्वं निराचिकीर्षुः स्मारयति तावत्—**नन्वेतदपि** इति । मा भून्नित्यवेदद्वारा वा कपिलादिद्वारा वा धर्मसंप्रदायस्तथाप्येतदीश्वरद्वारकत्वमपि कथं सिध्यति, तत्रेश्वरे बाधकसद्भावात् । यद्वा, यद्यप्यन्यथासिद्धिर्निराकृता, तथाप्येतत्परोक्तं कालात्ययापदिष्टत्वं कथं निरसनीयम् । यद्वानन्यत्प्रत्यक्षं सिद्धमप्येतत्कथं साधकं तत्रानुमाने बाधकसद्भावादिति । बाधकमेवोपपादयितुमुपक्रमते—**तथा हि** इति । तत्र प्रत्यक्षानुपलम्भेन बाधकं तावदाह—**यदि स्यात्** इति । न चोपलभ्यत इति शेषः । तर्केणानेनानुगृहीतं प्रत्यक्षं जगत्कर्तुरभावमावेदयतीति भावः । सिद्धान्ती शङ्कते-**अयोग्यत्वात्** इति । योग्यानुपलम्भो हि बाधक इति । **एवं तर्हि** इति । न चासत्त्वादिति शेषः । शशश्रृङ्गप्रतिबन्दीमुन्मोचयन् सिद्धान्ती शङ्कते-**नैतदेवम्** इति । श्रृङ्गस्य रूपवत्त्वमहत्त्वाभ्यां प्रत्यक्षयोग्यत्वेन गवादिश्रृङ्गे व्याप्तिदर्शनादस्यापि श्रृङ्गस्य सतो योग्यतया भवितव्यम्—तस्माच्छशश्रृङ्गस्य योग्यानुपलम्भोऽस्तीति । इतरः पुनरीश्वरस्यापादयति—**चेतनस्य** इति । चेतनादियोगिनो हीश्वरस्य शरीराद्युपाधिसंबन्धोऽवश्यंभावी तत्कार-

प्रकाशः ।

तृतीयां विप्रतिपत्तिं दूषयितुमुपन्यस्यति—

**नन्वेतदपीति** । अन्यथासिद्धिनिराकरणमपि कथमीश्वरसाधनाय, तत्र प्रत्यक्षबाधादित्यर्थः । तत्र स्वरूपसदनुपलब्धिसहकृतप्रत्यक्षबाधमाह । **तथा हीति** । यद्यप्यनुपलम्भेनेश्वरान्योन्याभावात्यन्ताभावसाधने इष्टापत्तिः, प्रागभावप्रध्वंससाधने चापसिद्धान्तः । तथापि क्षित्यादिकं यदि सकर्तृकं, चेदत्र यदि सकर्तृकः स्यात्तदा तद्वत्तयोपलभ्येत इत्यर्थः । अनुपलब्धिमात्रस्य बाधकतायामयोग्योच्छेद इति योग्यानुपलब्धिर्बाधिका वाच्येत्याह । **अयोग्यत्वादिति** । एवं शशः श्रृङ्गी पशुत्वादित्यत्रापि तद्बाधो न स्यादयोग्यत्वाच्छृङ्गस्येत्याह । **एवमिति** । श्रृङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यतया योग्यव्यक्तिवृत्तित्वनियमान्नायोग्यं श्रृङ्गमित्याह । **श्रृङ्गस्येति** । एवं शरीरविशिष्टात्मनि कर्तृत्वेन कर्तृयोग्यतानियमाद्विशेषणबाधेन विशिष्टबाध एवेत्याह । **चेतनस्यापीति** । न तु कर्तृव्यापकशरी-

प्रकाशिका ।

**श्रीगणेशः पातु ।** अनुपलब्धेः स्वातन्त्र्येण न बाधकत्वमप्रमाणत्वादत आह । **तत्रेति ।** **इष्टापत्तिरिति** । यद्यपि भावाभावसाधारणपदार्थमात्रे ईश्वरान्योन्याभावसाधने नेष्टापत्तिः, एवमीश्वरसत्ताविरोध्यत्यन्ताभावसाधनेऽपि । तथापि तथासति असत्प्रतियोगिकत्वमेव दोषोऽन्यथा त्विष्टापत्तिरित्यत्र तात्पर्यम् । अनुपलब्धिमात्रस्य बाधकत्वेऽयोग्यत्वाभिधानमफलमत आह । **अनुपलब्धिमात्रस्येति ।** **विशेषणबाधेनेति ।** विशेषणबाधात्मक एव विशिष्टबाध इत्यर्थः । मीमांसकैर्विशेषणाभावादी-

मकरन्दः ।

अनुपलब्धेः स्वातन्त्र्येण प्रामाण्यानभ्युपगमान्न बाधकत्वमत आह **तत्रेति ।** **विशेषणबाधेनेति ।**

पाधिमत्तयैव व्याप्तत्वात् तद्बाधे सोऽपि बाधित एवेति तुल्यम्। व्यापकस्वार्थाद्य-नुपलम्भेनाप्यनुमीयते, नास्तीति। को हि प्रयोजनमन्तरेण किञ्चित् कुर्यादिति। उच्यते—

**योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्॥**
**क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम्॥ १॥**

**स्वात्मैव तावद् योग्यानुपलब्ध्या प्रतिषेद्धुं न शक्यते, कुतस्त्वयोग्यः परमा-**

बोधनी।

णकत्वाच्चेतनादेर्योग्यं च शरीरादि, तथा च तस्यानुपलम्भेन बाधात् तद्वतोऽपि बाधः स्यादिति न केवलं प्रत्यक्षमनुमानमपि बाधकमित्याह—**व्यापक** इति। कर्तृव्यापकत्वेन स्वप्रयोजनसिद्धिः कुलालादिषूपलब्धा, न च साऽनवाप्तावाप्तकामविरहिणि जगत्कर्तरि संभवति। तस्माद्व्यापकानुपलब्ध्या जगत्कर्तुरभावोऽनुमीयत इति। स्वार्थस्य कर्तृव्यापकत्वमेवाह—**को हि** इति। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायादिति। तदेवं प्रत्यक्षानुमानबाधितविषयमीश्वरानुमानमिति पूर्वपक्षिते सिद्धान्तमाह—**उच्यते** इति। अयोग्यत्वात्परमात्मनस्तस्मिन् योग्यानुपलब्धिः कुतो भवेत्, न कुतश्चिदित्यर्थः। यद्वा, योग्येऽपि स्वात्मन्यनुपलब्धिर्नाभावं गमयितुमलं, कुतोऽयोग्ये परमात्मनि। ततश्चोन्मोचिता शशशृङ्गप्रतिबन्दिर्न हि शृङ्गमयोग्यमनुपलब्ध्या बाध्यते, किन्तु योग्यमेव। न च परमात्मा योग्य इति। न तावत्प्रत्यक्षबाधः, न च व्यापकानुपलब्धिलक्षणमन्यद्वाऽनुमानं बाधकमीश्वर-स्यानभ्युपगमेनाश्रयासिद्धेरिति व्याचष्टे—**स्वात्मैव** इति। स्वात्मनः प्रत्यक्षयोग्यत्वं सुख्यहं दुःख्य-हमित्यादिप्रतीतिसाक्षिकमेवेति। किमिति स्वात्मा योग्योऽप्यनुपलब्ध्या न प्रतिषेद्धुं शक्यत इत्य-

प्रकाशः।

स्वबाधाद्व्याप्यकर्तृबाधपरोऽयं ग्रन्थः प्रत्यक्षबाधस्योपक्रान्तत्वात्। व्यापकानुपलब्धिलिङ्गकानुमानं बाधकमाह। **व्यापके**ति। व्यापकश्चासौ स्वार्थादिश्चेति कर्मधारयः। आदिपदाच्छरीरादि। चेतन-प्रवृत्तेः स्वेष्टसाधनताज्ञानव्याप्तत्वात् तद्बाधनेन सापि बाधितैवेत्यर्थः।

**योग्यादृष्टिरि**ति। योग्यानुपलब्धिः क्वायोग्ये = परमात्मनि बाधिका, शृङ्गस्यापि तथात्वे तत्रापि योग्यानुपलब्धिर्न बाधिका। न हि शशशृङ्गमयोग्यं योग्यानुपलब्ध्या निषिध्यते येन प्रति

प्रकाशिका।

नामेव विशिष्टाभावतास्वीकारात्**प्रत्यक्षबाधस्येति**। इदमुपलक्षणं, व्यापकेत्याद्यग्रिमग्रन्थेन पौनरु क्त्यापत्तिश्चेत्यपि द्रष्टव्यम्। न च शरीरातिरिक्तमेव व्यापकं तत्र व्यापकपदार्थो गोबलीवर्दवदिति वाच्यम्। तत्रानन्यगतेः, इह तु प्रकारान्तरसम्भवादिति। न च प्रत्यक्षबाधपरत्वे चास्य तदनुद्धारेण सिद्धा-न्तकारिकायां न्यूनतेति वाच्यम्। शरीरविशिष्टस्य कर्तृतायां गौरवमिति शङ्कायां एव तुच्छतया सिद्धान्ते तदुद्धारोपेक्षणात्। षष्ठीतत्पुरुषभ्रमं निवारयति। **व्यापकश्चासाविति**। **स्वेष्टेति**। यद्यपि जगदेवे-श्वरेच्छाविषयः, तथापि स्वसुखदुःखाभावान्यतरप्रयोजकताज्ञानव्याप्तत्वादित्यत्र तात्पर्य्यम्। प्रतिबन्दि-सामान्यनिषेधे, कृतेऽतिशयेन प्रतिबन्ध्यभावो युज्यत इति तृतीयमेव पादं प्रथमतो व्याचष्टे। **शृङ्गस्या-**

मकरन्दः।

शरीरबाधेन कर्तृबाध एवेत्यर्थः। प्रत्यक्षबाधस्येत्युपलक्षणम्, अग्रिमेण पौनरुक्त्यापाता-दित्यपि द्रष्टव्यम्। **स्वेष्टेति**। यद्यपि जगत एव तदिच्छाविषयत्वात् स्वेष्टसाधनताज्ञानं तस्यापि, तथापि स्वप्रयोजनव्याप्यत्वादिति मूलोक्त एव तात्पर्य्यम्। स्वप्रयोजनप्रयोजकताज्ञानव्याप्यत्वा-दित्यर्थः। **तथात्वे**=अयोग्यत्वे। प्रतिबन्धिसामान्यनिषेधे कृते अतितरां न प्रतिबन्धिरिति दुज्यते

**त्मा। तथाहि, सुषुप्त्यवस्थायामात्मानमनुपलभमानो नास्तीत्यवधारयेत्। कस्यापराधेन पुनर्योग्योऽप्यात्मा तदानीं नोपलभ्यते ?। सामग्रीवैगुण्यात्। ज्ञानादिक्षणिकविशेषगुणोपधानो ह्यात्मा गृह्यते इत्यस्य स्वभावः। ज्ञानमेव कुतो न जायते इति**

---

**बोधनी।**

आह—**तथाहि** इति। जाग्रदवस्थायामुपलम्भदर्शनात्सिद्धं स्वात्मनो योग्यत्वमन्यदा नापैतीति भावः। पृच्छति—**कस्य** इति। स्वरूपायोग्यत्वाभावेऽपि सहकारिविरहादनुपलम्भो युक्त इत्याह—**सामग्रीवैगुण्यात्** इति। का तर्हि स्वात्मनो ग्रहणसामग्री यद्वैगुण्यात्तदानीमनुपलम्भ इत्यत्राह—**ज्ञानादि** इति। जानाम्यहमिच्छाम्यहमित्यादिरूपेणैवात्मनो ग्रहणदर्शनाद् ज्ञानादिविशेषगुणोपगृहीतत्वमात्मनो ग्रहणसामग्रीति। सुषुप्तिसमये कस्यापराधेन ज्ञानमेव न जायते, कस्यानुग्रहाद्वाऽन्यदा जायत इत्याह—**ज्ञानमेव** इति। मनसो बाह्येन्द्रियप्रत्यासत्तिभावाभावाभ्यां जननाजनने इत्याह—

**प्रकाशः।**

बन्धिः स्यात्। अथ शृङ्गं योग्यमेव नायोग्यं, तदा अतितरां न प्रतिबन्धिः। व्यापकानुपलब्धिलिङ्गकञ्चानुमानमीश्वरासिद्धावाश्रयासिद्धम्, तत्सिद्धौ वा धर्मिग्राहकप्रमाणबाधितमित्यर्थः।

**सामग्रीति**। यथा योग्योऽपि घटादिरालोकाभावान्नोपलभ्यते, तथाऽऽत्मा क्षणिकज्ञानादियोग्यविशेषगुणाद्युपधानसहकार्यभावाद् नोपलभ्यत इत्यर्थः। यद्यप्येवमुपधायकतृतीयलिङ्गपरामर्शसत्त्वादात्मबुद्धिरेव स्यान्नानुमितिः। न चानुमितिसामग्र्येव प्रतिबन्धिका, कारणमेलकरूपायां सामग्र्यामितरकारणानां व्यभिचारात् तृतीयलिङ्गपरामर्श एव प्रतिबन्धको वाच्यः, तस्य च योग्यविशेषगुणत्वेनात्मोपलम्भकस्यातथात्वम्। तथापि रूपवत्प्रत्यक्षविशेषणगुणत्वाज्ज्ञानेऽप्युद्भूतत्वजातिसत्त्वादनुद्भूत-

**प्रकाशिका।**

**पीति। व्यभिचारादिति**। तेषु सत्स्वप्यात्मप्रत्यक्षोदयात्, प्रतिबन्धकतायामन्वयव्यभिचारादित्यर्थः। **अतथात्वादिति**। एकस्य एकं प्रति कारणत्वप्रतिबन्धकत्वविरोधादित्यर्थः।

**मकरन्दः।**

इति तदर्थपरतया प्रथमं तृतीयमेव पादं व्याख्याय द्वितीयपादं व्याचष्टे **अथेति। व्यभिचारादिति**। तेषु सत्स्वप्यात्मप्रत्यक्षप्रतिबन्धाभावादित्यर्थः। **अतथात्वमिति**। एकस्य कारकत्वप्रतिबन्धकत्वविरोधादित्यर्थः। **तथापीति**। तथा च परामर्शेऽप्यनुद्भवान्न तथात्वमिति भावः। ननु हेत्वन्तरवत् परामर्शोऽपि व्यभिचारी, सत्यपि तस्मिन् बाधादिना अनुमितिप्रतिबन्धे परामर्शोपहितात्मप्रत्यक्षसत्त्वात्। अन्यथा वह्निव्याप्यवन्तं जानामीत्यनुव्यवसायानभ्युपगमे अनुभवविरोधात्। तस्मात् प्रत्येकमप्रतिबन्धकत्वेऽप्यनुमितिसामग्रीत्वेन तद्धेतूनां फलबलात् प्रतिबन्धकत्वम्। परामर्शस्य च रूपान्तरेण तदुपलम्भकत्वमिति नोक्तविरोधः। यदि च सकलहेत्वधिकरणक्षणः सामग्री, तदा तस्य परामर्शभिन्नत्वाद्विरोधशङ्कैव नास्ति। एवञ्चोपपत्तौ न ज्ञानादावुद्भूतत्वं, मानाभावात्। आद्यशब्दाग्रहश्च श्रोत्रेणासम्बन्धात्। सम्बन्धे वा तद्ग्रहस्येष्टत्वात्। क्षणिकान्तशब्दस्य च स्वसमयवर्त्तितया विशिष्य हेतुत्वपक्ष एवाप्रत्यक्षत्वात्। न च कर्तृत्वादिनिर्विकल्पकापेक्षायां पक्षान्तरेऽप्यसम्भवः,

**टिप्पणी।**

**यद्यप्येवमुपधायकतृतीयेति**। एवं=ज्ञानाद्युपधायकविशेषगुणसत्त्वेनैवात्मनः प्रत्यक्षत्वे। **इतरकारणानां व्यभिचारादिति**। असति परामर्शे परामर्शेतरेषु कारणेषु सत्स्वप्यात्मप्रत्यक्षप्रतिबन्धाभावात् परामर्षेतरकारणस्यान्वयव्यभिचारात् परामर्षस्यान्वयव्यतिरेके दृष्टे सामग्रीत्वेन न प्रतिबन्धत्वं गौरवात्। न च सत्यपि परामर्षे पक्षताया बाधनिश्चयस्य वाऽभावे प्रत्यक्षप्रतिबन्धाभावात्तत्राप्यन्वयव्यभिचार इति वाच्यम्। तयोरभावत्वेन तुच्छस्वभावत्वात् तदुभयविशेषितपरामर्षस्यैव तथात्वौचित्यात् परामर्षे स्वरूपघटितसामानाधिकरण्येन तदुभयवैशिष्ट्यस्य निवेशयितुं शक्यत्वात्। पराम-

चिन्त्यते । पश्चाद्वा कथमुत्पत्स्यते इति चेत् , मनसोऽनिन्द्रियप्रत्यासन्नतयाऽजननात्तत्प्रत्यासत्तौ च पश्चाज्जननात् ।

मनोवैभववादिनामिदमसंमतम् । तथाहि । मनो विभु, सर्वदा स्पर्शरहितद्रव्यत्वात् , सर्वदा विशेषगुणशून्यद्रव्यत्वात् , नित्यत्वे सत्यनारम्भकद्रव्यत्वात् ,

बोधनी ।

**मनस** इति । तदेतन्मनसोऽनिन्द्रियप्रत्यासन्नत्वं कौमारिला न सहन्ते विभुत्वान्मनस इत्याह— **मनोवैभववादिनाम्** इति । तेषां मनोवैभवहेतूनुपन्यस्यति— **तथाहि** इति । न हि द्रव्यसमकालं तत्समवेतानां स्पर्शादीनाम् उत्पत्तिः कार्यकारणयोः पौर्वापर्यनियमात् , तेनानुत्पन्नस्पर्शैः प्रथमक्षणावस्थितैर्घटादिद्रव्यैरनैकान्तिकत्वमाशङ्क्योक्तं— **सर्वदा** इति । आकाशादिरत्र दृष्टान्तः । **विशेषगुणशून्यद्रव्यत्वात्** इति । अत्रापि सर्वदेत्यनुषज्यते । दिक्कालावत्र दृष्टान्तः । अनारम्भकद्रव्यत्वमन्त्यावयविनोऽप्यस्तीति तद्व्यावृत्त्यर्थमुक्तं— **नित्यत्वे सति** इति । अनारम्भकत्वमिति

प्रकाशः ।

ज्ञानस्य नात्मोपलम्भकत्वमिति तदुपधानेऽपि नात्मग्रहः । अत एवाद्यन्तशब्दयोरुद्भवत्वाभावान्न प्रत्यक्षत्वमित्येके । आत्ममनःसंयोगविशेषस्यात्मग्राहकत्वमनेनोक्तमित्यन्ये । **मनस** इति । यद्यपि सुषुप्तौ यत एव न ज्ञानं तत एवात्माऽग्रहोपपत्तौ योग्यविशेषगुणोपधानमतन्त्रं, तथापि द्रव्यसाक्षात्कारे सामान्यत एवं योग्यविशेषगुणस्य प्रयोजकत्वावधारणादेतदुक्तम् । **असम्मत**मिति । विभुनो मनस इन्द्रियाप्रत्यासत्तेरभावादित्यर्थः । **सर्वदे**ति । द्रव्यत्वं परमाणुभिः, स्पर्शरहितत्वं च गुणादिभिर्व्यभिचारीति विशिष्टं लिङ्गम् । तस्याप्युत्पत्तिक्षणे घटे सत्त्वाद् व्यभिचार इत्यत उक्तं, **सर्वदे**ति । अनारम्भकद्रव्यत्वं = द्रव्यानारम्भकद्रव्यत्वमत्र विवक्षितम् , अतो न कर्मसंयोगाद्यारम्भके मनसि स्वरूपासिद्धिः । तथापि घटेऽनैकान्तिक इत्यत उक्तं, **नित्यत्व** इति । कालादिर्दृ-

प्रकाशिका ।

**एके** इत्यरुचौ । तद्बीजन्तु प्रत्येकं परामर्शेऽपि प्रतिबन्धकतायां व्यभिचार्येव उद्भूतपरामर्शे सत्यपि बाधदशायामात्मप्रत्यक्षोदयात् । तथा च परामर्षस्यापि अनुमितिसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यमेवं च रूपान्तरेण जनकत्वे रूपान्तरेण प्रतिबन्धकत्वमविरुद्धमेवेति अनुमितिसामग्र्या एव प्रतिबन्धकत्वान्नात्मप्रत्यक्षमिति किमर्थं ज्ञानेऽप्युद्भवकल्पना । आद्यन्तशब्दयोरपीन्द्रियप्रत्यासत्तिविरहात् प्रत्यक्षसमये नाशाच्च न प्रत्यक्षतेति न तत्राप्युद्भवकल्पना, न च कर्णशष्कुल्यवच्छेदेनैव यत्राद्यशब्दोत्पत्तिः, तत्र स गृह्येतेति वाच्यम् , इष्टापत्तेः । न च तदा कत्वादिनिर्विकल्पकाभावान्नैवमिति वाच्यम् । तथा सति सुतरां नोद्भूतत्वकल्पना । आद्यशब्दाप्रत्यक्षत्वस्याप्रामाणिकत्वात् , स्मरणात्मकविशेषणज्ञानेन तत्सम्भवाच्च । केचित्तु स्वभिन्नज्ञानसामग्रीत्वानापन्नस्यैव ज्ञानस्यात्मोपधायकत्वम् । अत एव विशेषणज्ञानानन्तरं वाक्यविशिष्टज्ञानं पदार्थस्मृत्यनन्तरं शाब्दज्ञानं विशेषदर्शनोत्तरं पुरुषप्रत्यक्षमिति नानुमितिसामग्रीत्वापन्नपरामर्षकाले आत्मज्ञानमिति न ज्ञाने उद्भूतत्वं प्रामाणिकमिति वदन्ति । **अन्य** इत्यरुचौ । तद्बीजन्तु संयोगविशेषकल्पनमप्रामाणिकमुक्तेनैवोपपत्तेरिति द्रष्टव्यम् । **कर्मेति** न्यायमते, संयो-

मकरन्दः ।

सुतरां तर्हि नोद्भूतत्वम् । स्मरणरूपविशेषणज्ञानमादाय तत्सम्भवाच्चेत्यनुशयमाविष्करोति **इत्येके** इति । उक्तेनैवोपपत्तौ मनःसंयोगविशेषत्वेन हेतुत्वे गौरवं, संयोगे विशेषश्च जातिरूपः प्रत्यक्षखण्डोक्तसङ्करानत्या निरस्तः, अन्यश्च दुर्वच इत्यस्वरसमाविष्करोति इत्यन्ये इति । **कर्मेति** न्यायमते ।

टिप्पणी ।

र्शघटितोभयवैशिष्ट्यस्य निवेशासम्भवात् उभयोरेकसम्बन्धाभावात् प्रत्येकवैशिष्ट्यनिवेशे सम्बन्धद्वयप्रवेशे गौरवाच्च तस्यापि तदुपलम्भकारणत्वेन प्रतिबन्धकत्वासम्भवः । वस्तुतस्तु **इत्येक** इत्यनेन प्रत्येकप्र-

ज्ञानासमवायिकारणसंयोगाधारत्वादित्यादेरिति चेन्न । सर्वेषामापाततः स्वरूपासिद्धत्वात् । तथाहि । यदि रूपाद्युपलब्धीनां क्रियात्वेन करणतया मनोऽनुमितिर्न तदा द्रव्यत्वसिद्धिः । अद्रव्यस्यापि करणत्वात् ।

बोधनी ।

च द्रव्यानारम्भकत्वमिह विवक्षितम् । आकाशादय एव दृष्टान्तः । ज्ञानस्यासमवायिकारणमात्ममनसोः संयोगः, तदाश्रयत्वान्मनसो वैभवमनुमीयते । आत्मवत्सर्वत्रोपलभ्यमानकार्यत्वादात्मवदित्यादिशब्दार्थः । **न** इति । द्रव्यत्वासिद्ध्या चतुर्णां हेतूनामापाततः स्वरूपासिद्धिः, निरूपणदशायां तु धर्मिग्राहकप्रमाणबाध इति भावः । स्वरूपासिद्धिं तावदाह—**तथाहि** इति । अद्रव्यमपि ह्यदृष्टप्रयत्नसंयोगादिक्रियाकरणं दृष्टमिति ।

यद्यासां सुखाद्युपलब्धीनां साक्षात्काररूपत्वादिन्द्रियस्यैव तत्साधनत्वाच्चेन्द्रियतया मनोऽनुमीयते, तथा च द्रव्यत्वं सिध्यति द्रव्यस्यैवेन्द्रियत्वादित्युच्येत तथापि व्यापकत्वे तस्योपाध्यवच्छेदेनैवेन्द्रियत्वं

प्रकाशः ।

ष्टान्तः । चतुर्थहेतावात्मा दृष्टान्तः । न च महत्त्वमुपाधिः, साधनव्यापकत्वात् । न च सुखादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमत्, नित्यवृत्त्यनित्यविशेषगुणत्वाच्छब्दवत् पाकजवच्चेति प्रतिरोधः । मूर्तत्वस्याप्रयोजकत्वात्, अनात्मवृत्तित्वस्योपाधित्वाच्चेति भावः । **आपातत** इति । यावन्मनो न सिद्ध्यतीत्यर्थः । स्वरूपासिद्धिमेवाह । **तथाही**ति ! **अद्रव्यस्या**पीति । लिङ्गज्ञानादेरित्यर्थः । द्रव्यत्वविनाकृतश्च रूपादिभिर्व्यभिचारीति भावः ।

प्रकाशिका ।

गादीति साधारणम् । **साधनेति** । स्वमतावष्टम्भेनेदमुक्तम् । **न च सुखादिकमिति** । अत्र संयोगमादाय सिद्धसाधनमिति **मूर्त्तेति** । सुखकारणचन्दनसंयोगमादाय सिद्धसाधनमिति **असमवायीति।** कालिकव्याप्त्या गुणत्वव्याप्यत्वं सत्ताया अपीति तामादाय सिद्धसाधनमिति **गुणवृत्तीति** । तथा च गुणवृत्त्या समवायेन गुणत्वव्याप्यत्वमर्थो लभ्यत इति न सत्तामादाय प्रसङ्गः । शब्दजशब्दे व्यभिचार इति जातिगर्भता रूपसुखान्यतरत्वमादाय सिद्धसाधनमिति **जातीति** । न च समवायेन गुणत्वव्याप्यत्वस्य पूर्वं विवक्षितत्वान्नोक्तसिद्धसाधनमिति वाच्यम् । समवायेनेत्यस्य दैशिकव्याप्तिमात्रतात्पर्यात् । हेतौ जलावयविस्नेहे व्यभिचार इति **नित्येति** । जलपरमाणुस्नेहे व्यभिचार इत्य**नित्येति** । परमाणुद्वित्वे व्यभिचार इति **विशेषेति** । भट्टमते शब्दस्य द्रव्यतयोभयसिद्धं दृष्टान्तान्तरमाह । **पाकजवच्चेति । अनात्मवृत्तित्वस्येति** । विशेषगुणत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरन्यथा प्रचयजन्यपरिमाणवृत्तिजातिमादायारम्भपरिमाणे साध्याव्यापकतापत्तेः । **यावन्मन** इति ।

मकरन्दः ।

**संयोगादी**ति भट्टमते । स्वमतावष्टम्भेनाह **साधनेति** । अन्यथा पक्ष एव साधनाव्यापकत्वात् । अजसंयोगेन सिद्धसाधनादाह **मूर्त्तेति** । चन्दनसंयोगेन सिद्धसाधनादाह **असमवा**यीति । शब्दजशब्दे व्यभिचारवारणाय जातिगर्भत्वम् । तत्र च गुणपदं स्पष्टार्थम् । गुणत्वावान्तरपदं तादृशशब्दवृत्तिसत्तायोगित्वेनार्थान्तरवारणाय । शब्दसुखान्यतरत्वादिकमादायार्थान्तरादाह **जाति**पदम् । जलावयविस्नेहे व्यभिचारादाह **नित्यवृत्तीति** । परमाणुस्नेहे व्यभिचारादाह **अनित्येति** । आत्मवृत्तिद्वित्वे व्यभिचारादाह **विशेषे**ति । भट्टमते शब्दस्य द्रव्यत्वादुभयसिद्धं दृष्टान्तान्तरमाह **पाकजवच्चेति** । **अनात्मेति** । साधनावच्छिन्नसाध्यव्यापकोऽयमुपाधिः, अन्यथा प्रचयजन्यपरिमाणवृत्तिजा-

टिप्पणी ।

तिवन्धकतायामुक्तरीत्या व्यभिचारादभावस्यापि सिद्धान्तेऽनुच्छरूपत्वात् सामग्रीत्वेनैव प्रतिबन्धकत्वम्, रूपभेदाच्चैकस्यापि कारणत्वप्रतिबन्धकत्वे क्षत्यभावाज् ज्ञाने उद्भवत्वकल्पनमप्रामाणिकमित्येवास्वरसः

अथासामेव साक्षात्कारितयेन्द्रियत्वेन तदनुमातव्यम्,

तथापि व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र यदि कर्णशष्कुलीवन्नियतशरीरावयवस्योपाधित्वं, तदा तावन्मात्रे वृत्तिलाभः। तद्दोषे च वृत्तिनिरोधः श्रोत्रवत् प्रसज्येत। ततः शरीरमात्रमुपाधिरवसेयः। तथा च तदवच्छेदेन वृत्तिलाभे शिरसि मे वेदना, पादे मे सुखमित्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः। असमवायिकारणानुरोधेन विभुकार्याणां प्रादेशिकत्वनियमात्। शरीरत-

बोधनी।

वक्तव्यम्; न हि कर्णशष्कुल्यनुपहितमाकाशं श्रोत्रं भवतीत्याह—अथ इति। अस्तु तर्हि शरीरावयवः कश्चिदत्रोपाधिरित्यत्राह—तत्र यदि इति। दृश्यते चावयवान्तरे शरीरमात्रेऽपि मनसो वृत्तिरिति भावः। ततः किमित्यत आह—ततः इति। ततोऽपि किमित्यत आह—तथा च इति। ननु न कर्णशष्कुलीवन्नियतः शरीरावयवः कश्चिदुपाधिः, किन्तु शरीरं तदवयवाश्चानियमेनोपाधयः सन्तु, तेन व्याप्यवृत्तिरवयवान्तरवृत्तिश्चोपपत्स्यत इत्यत्राह—शरीरतदवयव इति। किंच सर्वेषामप्यवयवानामुपाधित्वे शिरसि सुखमित्ययं नियमो नोपपद्येत, अवयवान्तराणामप्युपाधित्वेन तत्रापि

प्रकाशः।

अथेति। ज्ञानकरणाजन्यः सुखाद्यनुभव इन्द्रियजन्यः जन्यप्रत्यक्षत्वात्, रूपप्रत्यक्षवत्। स्पर्शाद्यविषयत्वेन विशेषणान्न त्वगादिना अर्थान्तरम्। गन्धादिष्वेकैकमात्रप्रत्यक्षजनकत्वेन पृथिव्यादिभेदसिद्धौ निःस्पर्शं, लाघवाच्च निरवयवमित्यर्थः। तथापीति। यथा श्रोत्रस्य विभ्विन्द्रियतया कर्णशष्कुल्यवच्छिन्नस्यैवेन्द्रियत्वात्तदनवच्छेदेनोत्पन्नोऽपि शब्दो न गृह्यते, तदवच्छेदेनोत्पन्नस्यापि तस्य तदुपघातान्न ग्रहः। तथा मनोऽनवच्छेदकशरीरावयवावच्छेदेनोत्पन्नं सुखाद्यपि तदवच्छेदेनोत्पन्नञ्च तदुपघातान्न गृह्येतेत्यर्थः। असमवायीति। कार्यविभुविशेषगुणे चायन्नियमोऽतो न व्याप्यवृत्तिकर्मजन्यविभुपरमाणुसंयोगेन व्यभिचारः।

ननु किमसमवायिकारणं स्वावच्छिन्ने विभुकार्यं जनयतीति नियमः, स्वावच्छिन्ने जनयत्येवेति वा, स्वावच्छिन्न एव जनयतीति वा? आद्ये सुखादेरधिकदेशतायामापादकाभावः। द्वितीये

प्रकाशिका।

द्रव्यतयेति शेषः। ज्ञानकरणेति। जन्यत्वमपि पक्षविशेषणं, तेन नेश्वरप्रत्यक्षे भागबाधः, इन्द्रियजन्यत्वं च विषयप्रत्यासन्नसंयोगिकरणसाध्यत्वमन्यथा इन्द्रियत्वस्य मनोगर्भतया साध्याप्रसिद्धेः, अत एव च ज्ञातकरणाजन्यत्वादिकमंशतो बाधवारणाय पक्षविशेषणमन्यथा मनोजन्यत्वमादायानुमित्यादावपि साध्यसत्त्वेनांशतो बाधप्रसङ्गात्, निःस्पर्शमिति। अत इति पूरणीयन्तेन च कारणसङ्गतिः

मकरन्दः।

तियोगिन्यात्मपरिमाणे साध्याव्यापकत्वात्। ज्ञानेति। जन्यत्वमपि पक्षविशेषणमतो नेश्वरप्रत्यक्षभागे बाधः। इन्द्रियजन्यः = विषयप्रत्यासन्नसंयोगिकरणजन्य इत्यर्थः। तेनेन्द्रियत्वस्य मनोगर्भत्वादिदानीं न साध्याप्रसिद्धिः। यथेति। यद्यप्यतिप्रसङ्गभिया श्रोत्रस्योपाधिकल्पनेऽप्यत्र तदभावान्न तत्क-

टिप्पणी।

सूचितस्तथा च नासङ्गतिः। आद्यन्तशब्दयोरप्युद्भवत्वकल्पनमप्रामाणिकम्। श्रोत्रप्रत्यासत्तिप्रत्यक्षकालस्थित्याद्यभावेनैवाप्रत्यक्षोपपत्तेरिति। कार्य्यविभुविशेषगुणे चेति। मूलानुवादो न विशेषणम्, तेन विशेषगुणस्याकार्य्यत्वेऽपि न क्षतिः। स्वावच्छिन्न विभु कार्य्यं जनयतीति नियम इति। अथ प्रथमपक्ष एवकारार्थाप्रत्ययात् कथं नियम इति चेन्न। न हि परिसङ्ख्यावन्नियमेऽपीतरव्यावृत्तिमुखेनैव प्रतीतिनियमः, किन्तु प्राप्तांशपरिपूरणमुखेन पश्चात्तत्प्रतीतिरिति प्रथमपक्षे, पक्षप्राप्तस्वावच्छिन्नांशपूरणेन तद्विशेषणदानलब्धेन यद्यद् विभुकार्य्यं तदसमवायिकारणावच्छिन्नं

द्वयवादिपरमाणुपर्यन्तोपाधिकल्पनायां कल्पनागौरवप्रसङ्गो नियमानुपपत्तिश्चेति ततोऽन्यदेवैकं सूक्ष्ममुपाधित्वेनातीन्द्रियं कल्पनीयम् । तथा च तस्यैवेन्द्रियत्वे स्वाभाविकेऽधिककल्पनायां प्रमाणाभावाद्धर्मिग्राहकप्रमाणबाधः । अथ ज्ञानक्रमेणे-

बोधनी ।

सुखाद्युत्पत्त्युपलम्भयोः प्रसङ्गादित्याह—**नियमानुपपत्तिश्च** इति । यतो नियतस्य शरीरावयव-स्योपाधित्वे सुखादीनामपि नियतत्वप्रतीतिविरोधः, शरीरमात्रस्योपाधित्वे च व्याप्यवृत्तित्वप्रतीतिवि-रोधः, शरीरतदवयवानामनियमेनोपाधित्वे कल्पनागौरवप्रसङ्गो नियमानुपपत्तिश्चेत्येते दोषाः प्रादुष्युः तस्मादेवमङ्गीकार्यमित्याह—**ततोऽन्यत्** इति । आशुतरसंचारीत्युपसंख्यानं कार्यं, तेन शिरःपाद-योर्युगपदुपलम्भाभिमानः सिध्यतीति । अस्तु तादृश उपाधिः, ततः किमित्यत आह—**तथा च** इति । तस्यैवोपाधित्वेनाङ्गीकृतस्य शरीरसंयुक्तत्वे सति साक्षात्प्रतिसाधनत्वेनेन्द्रियलक्षणलक्षितत्वादि-न्द्रियत्वे स्वभावतः सिद्धे तदेवास्तु मन इति । तथा चाणुत्वेनैव मनःसिद्धेर्धर्मिग्राहकप्रमाणबाधो वैभवहेतूनामिति । तदेवं सुखादिसाक्षात्कारसाधनत्वेन मन इन्द्रियकल्पनायां धर्मिग्राहकप्रमाणबाध उक्तः । यदा बाह्येन्द्रियेषु युगपद्विषयैः संयुक्तेष्वपि यत्संनिधानक्रमाज्ज्ञानोत्पत्तिक्रमः प्रक्रमते, तेनेन्द्रि-यसहकारिणा केनचिद्भवितव्यमिति युगपज्ज्ञानानुत्पत्तिलिङ्गेन मनोऽनुमीयते, तदा स्फुट एव धर्मिग्रा-हकप्रमाणबाध इत्याह—**अथ** इति । व्यापकत्वे हि तस्य युगपत्सर्वेन्द्रियैः युगपज्ज्ञानोदयप्रसङ्गात्,

प्रकाशः ।

चाणुमनःसंयोगोऽपि स्वावच्छिन्नेऽधिकदेशे च जनयेत्, नियामकाभावात् । अन्त्ये,तत्रापि सुखा-देरणुदेशतापत्तिः, मनोवैभवेऽपि तदविरोधश्च । अथ निमित्तचन्दनाद्यनुरोधेन सुखादौ न्यूनाधिक-देशता निमित्तवायुसंयोगादिव शब्दे, न त्वसमवाय्यनुरोधात् । तर्हि मनोवैभवेऽपि तथाऽस्तु । न च विभुकार्यासमवायिकारणं स्वावच्छिन्नं करोत्येव, भेर्याकाशसंयोग इव शब्दमिति चन्दनाद्यनवच्छि-न्नेऽपि सुखादि स्यादिति वाच्यम् । तद्देशावच्छिन्नचन्दनसुखे हि तद्देशचन्दनसापेक्षोऽसमवायीति कथं तन्निरपेक्षस्तत् कुर्यात् । तथा च शरीरमात्रस्योपाधित्वेऽपि निमित्तवशात् सुखादेर्नियतदेशत्वं स्यात् ।

अत्राहुः । विभुकार्यविशेषगुणस्य न स्वासमवायिकारणन्यूनदेशत्वमिति नियमः । मनोवैभवे च शरीरं व्याप्यैव मनःसंयोगोऽसमवायीति तदवच्छेदं व्याप्यैव सुखादेरुत्पत्त्यापत्तिः । ततः पादावच्छिन्नं सुखं यदि शरीरावच्छिन्नासमवायिकारणकं स्यात्, शरीरव्यापकं स्यात् । निमित्तकारणस्य चाधिकदे-शत्वमात्रप्रयोजकत्वात् । अत एव निदाघतप्तस्य अम्भसि मग्नस्य सर्वाङ्गीणसुखधीरुपपन्नेति भावः । **नियमेति** । सर्वेषामेव शरीरादीनामुपाधित्वे कुतो नियतदेशसुखाद्युत्पत्तिरित्यर्थः । **धर्मिग्राहकेति** ।

टिप्पणी ।

भवत्येवेति कार्य्यस्य स्वानवच्छिन्नता व्यावृत्तिः । द्वितीये स्वव्याप्ययत्किञ्चिद्देशासम्बन्धव्यावृत्त्या स्वाव-च्छिन्नसकलदेशसम्बन्धः, तृतीये चातिरिक्तदेशावच्छिन्नव्यावृत्तिः प्रतीयते, एवञ्च नियमस्थाने यावता विना नियमस्यानुपपत्तिर्भवेत्, तावदेव कल्पितं भवति, तेनैव चान्यप्रसक्तयप्रसक्ती व्यवस्थाप्येते । तथा च सति प्रथमे पक्षे हस्तादिशरीरावयवावच्छिन्नकार्य्यस्य शरीरानवच्छिन्नत्वविरहेण नियमस्य सकलशरीरावयवावच्छिन्नत्वं विनानुपपत्तेरभावात्, तथोपपादकस्याकल्पनाद् हस्तावच्छिन्नस्य पादा-द्यधिकदेशावच्छिन्नत्वे को ममापि पक्षे प्रसञ्जक इति पूर्वपक्षिणोऽभिप्रायः । द्वितीये च यथा मम पक्षे हस्तावच्छिन्नस्य पादानवच्छिन्नत्वे नियमभङ्गः स्यादित्युपपादकमहिम्ना सकलावयवावच्छिन्नत्वेऽधि-कदेशतापत्तिस्तथा तवापि मतेऽणुरूपमनोदेशाधिकहस्तादिदेशावच्छिन्नत्वस्यापि नियमानुपपत्त्य-भावमात्रादेव स्वीकरणीयतया तस्य हस्ताद्यधिकपादादिदेशावच्छिन्नत्वेऽपि नियमानुपपत्तेरभावात् तदपि स्यात्, अणुदेशाधिकहस्तावच्छिन्नत्वस्वीकर्त्रा अधिकदेशताविघटकनियामकस्य वक्तु-मशक्यत्वादित्यभिप्रायः । अन्त्ये स्पष्टः । **तत्रापि**=तत्रैवेत्यर्थः । यद्वा हस्ताद्यवच्छिन्नस्यापि

न्द्रियसहकारितया तदनुमानं, ततः सुतरां प्रागुक्तदोषः। यदि च मनसो वैभवेऽप्यदृष्टवशात् क्रम उपपाद्येत, तदा मनसोऽसिद्धेराश्रयासिद्धिरेव वैभवहेतूनामिति।

अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव। अन्यथा अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत, जातोऽपि वा कदाचिन्निर्गुणः स्यात्, बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत। यत्र तु दृष्टानुपहारेणादृष्टव्यापारस्तत्र तद्वैगुण्यात् कार्यानुदयः। यथा परमाणुकर्मणः। तदिहापि यदि विषयेन्द्रियात्मनां समवधानमेव ज्ञानहेतुः, तदा तत्सद्भावे सदैव कार्यं स्यात्, न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति, न च सदैव ज्ञानोदयः, ततोऽतिरिक्तमपेक्षितव्यम्। तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथापि

---

**बोधनी।**

ज्ञानक्रमार्थं कल्प्यमानस्याणुत्वेनैव सिद्धिरिति। न च विभुत्वेऽपि मनसोऽदृष्टस्यापि ज्ञानोत्पत्तिहेतुत्वात् तत्क्रमवशादेव ज्ञानक्रम उपपद्यत इति वाच्यम्, युगपज्ज्ञानानुत्पत्तेरन्यथासिद्धत्वेन प्रमाणाभावात् मनस एवासिद्धिप्रसङ्ग इत्याह—**यदि च** इति।

अत्र शङ्कते—**अथेत्यादिना चे**दित्यन्तेन। द्वेधा ह्यदृष्टस्य कारणत्वं दृष्टकारणोपहारमात्रेण, तदनपेक्षं स्वयमेव चेति। तत्र पूर्वत्र दृष्टकारणसाकल्ये कार्यमुत्पद्यत एव न पुनस्तस्मिन्सत्येवादृष्टवैकल्यादेव कार्यानुत्पत्तिरिति। अन्यथा द्रव्यगुणकर्मणां सत्स्वेव दृष्टकारणेषु कदाचिददृष्टवैकल्याद‍नुत्पादः स्यात्, न चैतदस्ति। यत्र तु साक्षाददृष्टस्यैव कारणत्वं यथा परमाणोराद्यकर्मणि—तदुक्तम्—"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति (वै. सू. ५. २. १३)—तत्राहृष्टवैकल्यादेव कार्यानुत्पत्तिरिति। अस्त्वेवं, प्रकृते किमायातमित्यत आह—**तदिहापि** इति। विषयेन्द्रियात्मनां साहित्येऽपि सुषुप्त्यादौ ज्ञानानुदयात्तदतिरिक्तं किमप्यदृष्टोपहरणीयं दृष्टं कारणमस्ति तन्मन इति मनःसिद्धेर्नाश्रयासिद्धिरिति। तथापि तस्य विभुत्वाङ्गीकारे युगपज्ज्ञानोत्पत्तिप्रसङ्गस्तदवस्थ इत्यत्राह—**तच्च** इति। विभुत्वेऽपि तस्य करणत्वेन कल्प्यमानत्वात्,

**प्रकाशः।**

सुखाद्युपलब्धीनामिन्द्रियजत्वानुमाने मनोऽणुत्वानुल्लेखेऽपि अनुपपत्तिवशादणुत्वं विषय इति धर्मिग्राहकतुल्यतया तद्बाध उक्तः। **प्रागुक्तेति।** धर्मिग्राहकमानबाध इत्यर्थः। युगपदनेकविषयसम्बद्धनानेन्द्रियसंयोगे सति ज्ञानक्रमानुपपत्तेरणुत्वेनैव तदुपपत्तेरिति भावः। यदि चादृष्टवशान्नोक्तदोषावकाशस्तदा तत एव ज्ञानक्रमोऽपि स्यादिति मनःसिद्धौ न मानमस्तीत्याश्रयासिद्धा हेतव इत्याह। **यदि चेति।** **तथापीति।** एकं करणमेकत्रैकदा एकावच्छेदेनैकजातीयामेकामेव क्रियां

**प्रकाशिका।**

**एकं करणमिति।** एकेनापि कालेनानेकक्रियोत्पादात्, **एकावच्छेदेनेति।** करणमिति विशेषणं करणत्वञ्चासाधारणकारणत्वम्। **एकत्रेत्यादी**ति। एकत्रैकदापदयोः कुठार एव व्यभिचारवारकत्वम्। एकेनैव कुठारेण पङ्क्तिधृतनानापत्रच्छिदाजननात् कालभेदेनैकत्रैव नानाच्छिदाजननाच्च। **एकदेति** पाठो यत्र नास्ति तत्रापि तत्पूरणीयम्। अन्यथोक्तव्यभिचारापत्तेः। नानारूपादिजनकेऽग्निसंयोगे व्यभिचारवारणाय **एकजातीयामिति।** नानादिगवच्छिन्ननानाशब्दजनके शब्दे व्यभिचारवारणाय **एकावच्छेदेनेति।** नचैकावच्छेदेनेति दत्ते एकत्रेति व्यर्थम्। चरणावच्छेदेन शाखावृक्ष-

**मकरन्दः।**

ल्पनमर्हं बहिरिन्द्रियत्वञ्चाप्रयोजकं, तथाप्यापातत इदं, व्यासङ्गानुपपत्तावेव तात्पर्यम्। **एकं करणमिति**

**टिप्पणी।**

पादाद्यवच्छिन्नत्वे नियमक्षतेरभावान्नियामकाभावादापत्तिः, तथा तवाप्यणुदेशतापत्तिरित्यपि कथंचिद् व्याख्या सम्भवतीति। **धर्म्मिग्राहकतुल्यतयेति।** मनोवैभवानुमानेन मनोरूपधर्मिप्रसिद्ध्यर्थं

करणधर्मत्वेन क्रियाक्रमः सङ्गच्छते । अकल्पिते तु तस्मिन्नायं न्यायः । प्रतिपत्तुरकरणत्वाच्चक्षुरादीनामनेकत्वादिति चेत् ।

नन्वेवमपि युगपज्ज्ञानानि मा भूवन्, युगपज्ज्ञानं तु केन वार्यते ।

बोधनी ।

करणानां च क्रमेण क्रियाकरणस्वभावत्वात् ज्ञानक्रम उपपद्यत इति । ननु कल्पितेऽपि मनसि यदि करणधर्मत्वादेव ज्ञानक्रमः तर्हि क्लृप्तस्यैवात्मनो बाह्येन्द्रियाणां चानेन न्यायेन क्रियाक्रमोऽस्तु किं मनःकल्पनयेत्यत्राह—**अकल्पिते तु** इति । कुत इत्यत आह—**प्रतिपत्तुः** इति ।

करणधर्मोऽयं न तु कर्तृधर्मः कर्ता चात्मा करणत्वेऽपि चक्षुरादीनामनेकत्वादेकस्य चैकैकज्ञानोत्पादनाविरोधात् पञ्चभिरपीन्द्रियैर्युगपच्च ज्ञानान्युत्पाद्येरन् । कल्पिते तु मनसि तस्यैकत्वात्करणत्वाच्च न युगपज्ज्ञानानुत्पत्तिरुपपन्नेति निराकरोति—**नन्वेवम्** इति । मा नाम भूत् पञ्चानां ज्ञानानां युगपदुत्पत्तिस्तथापि गन्धादिसंयुक्तघ्राणादिपञ्चेन्द्रियव्यापिना मनसा गन्धादिपञ्चकविषयैकज्ञानोत्पत्ति-

प्रकाशः ।

जनयति, न त्वनेकाम् । एकत्रेत्यादिविशेषणात् कुठाराग्निशब्देषु युगपदनेकच्छिदारूपादिनानादिगवच्छिन्नानेकशब्दजनकेषु न व्यभिचार इति करणधर्मत्वेन क्रियाक्रमः स्यादित्यर्थः ।

न च तथापि चक्षुराद्यवच्छेदेन शब्दवद्भिन्नदेशां परमाणाविव विजातीयमग्निसंयोगवदनेकां क्रियां कुर्यादेवेति वाच्यम् । ज्ञानकरणमेकत्रात्मनि एकदैकमेव ज्ञानं जनयति । समूहालम्बनकरणवत् । कथमन्यथा सामग्रीसत्त्वे समूहालम्बनमेकज्ञानम् । नन्वन्यज्ञानसामग्रीसत्त्वे कार्यावश्यम्भावः, तदसत्त्वे किं करणधर्मत्वेन । तस्य सहकार्यन्तरमात्रपर्यवसायित्वात् । न । ज्ञानकरणस्यैकत्रैकदैकज्ञानमात्रजनकतया तत्र नानाज्ञानकारणाभावेनैव सामग्र्यसत्त्वात् । **प्रतिपत्तुरि**ति । तस्यानेककरणोपेतस्यानेककार्यकर्तृत्वादिति भावः । **चक्षुरादीना**मिति । एषां यौगपद्यात् पुनः स एव ज्ञानयौगपद्यप्रसङ्गः । करणधर्मत्वेनापि प्रत्येकमविशेषादिति भावः ।

**नन्वेव**मिति । एवमप्येकदा बहूनां ज्ञानानामनुत्पत्तावप्येकदा नानेन्द्रियकरणकं रूपादिज्ञानमेकं स्यादेव, एकेन्द्रियजन्यसमूहालम्बनज्ञानवदित्यर्थः । न च चाक्षुषत्वादिजातिसंकरापत्तेर्नैकं ज्ञानमिति वाच्यम् । तथा सति फलविरोधेनैकस्यापि ज्ञानस्याजननापत्तेः, चित्ररूपवच्चाक्षुषादिविजातीय

प्रकाशिका ।

संयोगजनके श्येनकर्म्मणि व्यभिचारवारकत्वात् । एकत्वं चाधिकरणस्य सर्वस्य विवक्षितमन्यथोक्तव्यभिचारावारणात् । नचावच्छेदक एव यावत्वविवक्षास्त्वीति वाच्यम् । प्रकृतव्याप्तौ वैयर्थ्याभावात् । **नानेति** । अत्र नानादिगवच्छिन्नेति पाठो युज्यते अन्यथानन्वयात् । **ज्ञानकरणमिति** । अत्राप्येकमिति

मकरन्दः ।

प्रत्यक्षप्रकाशे द्रष्टव्यम् । **नाने**ति । अत्र नानादिगवच्छिन्नेति पाठो युज्यते, अन्यथानन्वयात् ।

टिप्पणी ।

यदि उपलब्धिक्रियासकरणकत्वानुमानमुपजीव्यमङ्गीकरणीयं तदापि द्रव्यत्वरूपहेतुघटकसिद्ध्यर्थत्वेनेन्द्रियजन्यत्वानुमानमप्युपजीव्यमित्येतदप्युपजीव्यत्वेन तत्तुल्यमित्येतद्बाधोऽपि दोष इति भावः । **कुठाराग्निशब्देष्विति** । पङ्क्तिस्थितानेकपत्रेष्वेकेन कुठारेण युगपच्छिदाजननाद् व्यभिचारवारणाय एकत्रापि कालभेदेनानेकच्छिदोत्पत्त्या व्यभिचारवारणाय **एकदेति** । अग्निसंयोगेनैकदैकधर्म्मिणि विजातीयरूपरसादिजननाद् व्यभिचारवारणायैकजातीयामिति । शब्दे व्यभिचारवारणाय **एकावच्छेदेनेति** विवेकः । **ज्ञानकरणमेकत्रेति** । कायव्यूहस्थले युगपदेकत्रात्मनि नानाज्ञानकल्पनाद् व्यभिचारः स्यादित्येकमिति पूरणीयम् । ज्ञानकारणस्यानेकस्यानेकात्मन्येकदानेकज्ञानजनकत्वाद् व्यभिचारवारणायैकत्रेति । **ज्ञानकरणस्यैकत्रैकदेति** । अदृष्टस्य दृष्टमात्रोपहारकत्वाद्

**भवत्येव समूहालम्बनमेकं ज्ञानमिति चेन्न । एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात् । तेष्वपि भवत्येवेति चेन्न । व्यासङ्गकाले ज्ञानक्रमेण विवादविषये क्रमानुमानात् । बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेन्नैवम् ।**

### बोधनी ।

भवन्ती गीर्वाणशापेनापि नापयाति, तच्चानिष्टमिति । उक्तमर्थं यथावदजानानश्चोदयति—**भवत्येव** इति । इष्यत एतत्सेनावनादिष्वनेकालम्बनमेकं ज्ञानमतो नानिष्टमिति स्वाभिसन्धिमुद्घाटयन्नाह—**न** इति । अनेकेन्द्रियग्राह्यगन्धरसादिविषयैकज्ञानोत्पत्तिरापद्यते, तच्चानिष्टमिति । अत्र सांख्यः शङ्कते—**तेष्वपि** इति । दीर्घशष्कुलीं भक्षयतः पुरुषस्य तद्गतगन्धरसस्पर्शशब्दादिविषयमेकमुत्पद्यत एव ज्ञानं ततो नेदमप्यनिष्टमिति । न तत्राप्यनेकविषयमेकं ज्ञानमुत्पद्यते भिन्नानां क्रमवतामेव ज्ञानानां कालभेदः सूक्ष्मत्वान्नोपलभ्यत इत्येवाङ्गीकर्तव्यमिति । कुत इत्यत्राह—**व्यासङ्ग** इति । आत्मेन्द्रियविषयसमवधाने सत्यपि यदा कस्मिंश्चिदेव विषये ज्ञानमुत्पद्यते न सर्वेषु तस्मिन्व्यासङ्गकाले ज्ञानक्रमदर्शनादन्यदापि मनसः क्रमकरणस्वभावोऽनुमीयत इति तत्रान्यथासिद्धिमाशङ्कते **बुभुत्सा**–इति । व्यासङ्गकाले ज्ञानक्रमो बुभुत्सातत्क्रमप्रयुक्तो न तु मनसः क्रमकरणस्वभावप्रयुक्त इति । **मैवम्**–इति न हि बुभुत्साया एष महिमाऽस्ति यत्तव्यतिरेके ज्ञानव्यतिरेक इति, किन्तु

### प्रकाशः ।

स्यैव ज्ञानस्य सामग्रीसत्त्वेनोत्पत्त्यापत्तेर्वा । न च तत्र फलबलात्तथा । अत्र फलाभावे हेतोः कल्प्यत्वापत्तेः । अन्योन्यप्रतिबन्धस्य तत्त्वे वाऽज्ञानमेव स्यान्न त्वेकस्य ज्ञानमित्युक्तम् । वस्तुतः पञ्चसु यदेकं करणं ज्ञानं जनयति नापराणि, तत्र नियामकमास्थेयम् । अन्यथा ज्ञानजनने तेषां कलहं कः समादध्यादिति भावः । आशयमविद्वानाह । **भवत्येवेति** । एकैकेन्द्रियेण स्वस्वविषये समूहालम्बनमेकैकं जन्यत एवेत्यर्थः । आशयमुद्घाटयति । **एकेति । तेष्वपीति** । दीर्घां शष्कुलीं भक्षयतो गन्धादिज्ञानमेकमनेकेन्द्रियजन्यमुत्पद्यते इत्यर्थः । **व्यासङ्गेति** । एकेन्द्रियासक्तमनसोऽणुना मनसा युगपदनेकेन्द्रियासन्निकर्षात्तत्र ज्ञानक्रमस्य सर्वसिद्धत्वात् तद्दृष्टान्तेन तत्रापि गन्धादिज्ञानोत्पादः क्रमेण भवतीत्यनुमीयते । कालसौक्ष्म्याच्च क्रमो न लक्ष्यत इत्यर्थः । ननु दृष्टान्ते नानेकेन्द्रियमनःसंयोगाभावः क्रमप्रयोजकः, किन्तु बुभुत्साप्रयुक्त इत्याह । **बुभुत्सेति** । बुभुत्सा न रूपादिग्रहहेतुर्न

### प्रकाशिका ।

पूरणीयम् । अन्यथा कायव्यूहस्थले व्यभिचारात् । न चैकत्रेत्यधिकम् । आलोकादौ कारणे व्यभिचारवारकत्वात् । ननु रूपादिषु मध्ये रूपमात्रव्यञ्जकत्वं हेतुस्तैजसत्वसाधने चाक्षुष उक्त इति रूपान्यसाक्षात्कारे चक्षुःस्वरूपायोग्यं ( संयोगजन्य ) कथं तं जनयेदत आह । **वस्तुत** इति । नचादृष्टमेवात्र नियामकं गोगोत्वोभयविषयकनिर्विकल्पकानन्तरं गोविशेष्यकज्ञान इवेति वाच्यम् । अणुना मनसा दृष्टेनैवोपपत्तावदृष्टकल्पनानवकाशात्, अन्यथा मनस एवासिद्धेः । **अणुना मनसेति** । यद्यपि मनोऽणुत्व एव विवादः, तथापि व्यासक्तमनसो ज्ञानक्रमस्य सर्वसिद्धत्वादणुत्वं तदुपपादकतया मनसः कल्पनीयमिति भावः । **ननु दृष्टान्त इति** । आलोकेन्द्रियमनःसंयोगस्याभावो ज्ञानजनकत्वाभावः,

### मकरन्दः ।

ननु रूपादिषु मध्ये रूपादिमात्रग्राहकत्वेनैव चक्षुरादिसिद्धेस्तदन्यगुणग्रहे तदसामर्थ्याच्चित्रज्ञानमसम्भवीत्यरुचेराह **वस्तुत** इति । ननु गोगोत्वनिर्विकल्पकानन्तरमन्यतरविशेष्यकज्ञानोत्पत्ताविवादृष्टमेवात्र नियामकमस्तु, यथा च तत्र नोभयविशेष्यकसमूहालम्बनं तथाऽत्र न युगपज्ज्ञानमिति चेत् । न, अणुना मनसा दृष्टेनैवोपपत्तावदृष्टकल्पनाऽनवकाशात् । अन्यथा स एव न कल्प्येतेति भावः । **सर्व्वसिद्धत्वादिति** । यद्यपि युगपदनेकेन्द्रियसन्निकर्षो न सर्वसिद्धः, तथापि ज्ञानक्रमस्य तत्र सर्व्वसिद्धत्वात् अत्रापि क्रम इत्यत्रैव तात्पर्य्यम् । तटस्थः शङ्कते **नन्विति** । मद्वा, गूढाभि-

**न ह्येष बुभुत्साया महिमा यदबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न ज्ञानमपि तु**

बोधनी ।

सामग्रीव्यतिरेकादेव ज्ञानव्यतिरेक इति । कस्तर्हि बुभुत्साया महिमेत्यत्राह—**अपि तु** इति ।

प्रकाशः ।

वा इतरज्ञानप्रतिबन्धिका, किं त्वन्यथा उपयुज्यते इत्याह । **न हीति** ।

ननु बुभुत्साया अतन्त्रत्वे कथं मनोऽणुत्वपक्षे मन्दोऽपि बुभुत्सितः शब्दो गृह्यते, नान्यः । तन्त्रत्वेऽपि कथं दशभिः पठ्यमानासु गाथासु तावद्गोचरबुभुत्सायां प्रणिधाने च सर्वेषामज्ञानमेकज्ञानञ्च । न च श्रोत्रमनःसंयोगविशेषः कार्योन्नेयोऽस्ति, स एव किञ्चिच्छब्दग्रहहेतुस्तदन्यग्रहप्रतिबन्धक एवेति वाच्यम् । विभुत्वेऽपीन्द्रियमनःसंयोगविशेषस्य तथात्वे व्यासङ्गोपपत्तेः । अथ प्रत्यक्षानुकूलेन्द्रियमनःसंयोगद्वारा बुभुत्साप्रणिधानयोः प्रत्यक्षहेतुत्वमिति चाक्षुषादिबुभुत्सितग्रहे क्लृप्तत्वात्ताभ्यां श्रोत्रे बुभुत्सितशब्दावच्छेदेन मनःसंयोगः कृत इति स एव गृह्यते, नान्य इति चेन्न । युगपत्पठ्यमानासु विंशतिगाथासु तावद्गोचरबुभुत्साप्रणिधानयोः सत्त्वे तावद्गाथावच्छेदेन मनःसंयोगाद् युगपत्तासामुपलम्भप्रसङ्गात् । प्रत्येकसामग्रीसत्त्वात् ।

उच्यते । यद्यपि बुभुत्साप्रणिधाने न शब्दग्रहमात्रे सहकारिणी, न चेतरग्रहप्रतिबन्धके, तथापि नानाशब्दसमवायदशायां यः शब्दग्रहस्तत्र तयोस्तथाभावः । तथैव तेषामन्वयव्यतिरेकनियमात् ।

प्रकाशिका ।

किन्न बुभुत्साप्रयुक्त इत्यर्थः । गूढाभिसन्धिः पृच्छति । **नन्विति** । अभिसन्धिमुद्घाटयति **विभुत्वेऽपीति** । **तथापीति** । यद्यपि नानेन्द्रियनानाविषयसन्निकर्षकालीनान्यतरबुभुत्साया रूपादिग्रा-

मकरन्दः ।

सन्धिः शङ्कते **नन्विति** । अत एवाभिसन्धिमुद्घाटयति **विभुत्वेऽपीति** । **तथैव** तेषामिति ।

टिप्पणी ।

दृष्टेऽनेकज्ञानकारणे सम्भूते सहसैवादृष्टविलम्बेन कारणाभावस्य वक्तुमशक्यत्वात्, कारणधर्म्मत्वे चास्थिते प्रामाणिकतन्निर्वाहाय, तत्कल्पनस्य सम्भवादिति भावः । **प्रणिधाने चेति** । संयोगविशेषानुकूलो मनःकर्मविशेषः प्रणिधानम् । **श्रोत्रमनःसंयोगविशेष इति** । विशेषश्च कालदेशेन्द्रियविषयादिसम्बन्धः । **स एव गृह्यते नान्य इति** । स एवेत्येकवचनं बुभुत्सितसाकल्यव्यवच्छेदार्थम् । तथा च बुभुत्सितेत्यनन्तरं कियदिति लभ्यते एवञ्च बुभुत्साया अनेकशब्दगोचरत्वेऽपि स्वातन्त्र्येण तस्या अहेतुत्वान्मनसोऽणुत्वाद् यच्छब्दावच्छेदेन श्रोत्रमनःसंयोगस्तेषामेव ग्रहणं न बुभुत्सितानां सर्वेषां नाप्यबुभुत्सितानामिति भवति प्रकटित आशयः । एतेन **तन्त्रत्वेऽपी**त्यन्तेन ग्रन्थेन यः कृतो निरासः स एव न युगपदित्यादावपि प्रतीयते इति कथमयेत्यादिशङ्कोन्मेष इति निरस्तम् । कर्णशष्कुल्यवच्छिन्नमाकाशं श्रोत्रं न तत्सावयवं यत्र तत्तदवयवरूपावच्छेदकभेदेन विद्यमानशब्दस्याणुमनःसंयोगं प्रत्यवच्छेदकत्वे विशेषः स्यादिति । श्रोत्रशब्देषु विद्यमानेषु तत्र च मनःसंयोगे तत्प्रत्यवच्छेदकत्वतदभावौ तेषु केषुचिद् व्यवस्थितौ न भवत एवेति न प्रसङ्गस्य वारणम् । न च कर्णशष्कुल्यवयवस्य श्रोत्रावच्छेदकत्वम् । न चाकाशे विद्यमानेषु शब्देषु तत्संबन्धानामवयवानां कस्यचिदवच्छेदकत्वं कस्यचिन्नेत्यपि वक्तुं शक्यमिति भावः ॥ **शब्दसमवायदशायामिति** । ननु शब्दसमवायस्याविशेषे बुभुत्सायाश्चाविशेषे कस्यचिदेव शब्दस्य ग्रहः, कस्यचिन्नेत्यत्रैव मानाभावात् कथमेतत्सङ्गच्छत इति चेन्न । कस्यचिदेव शब्दग्रहणेऽनुभवसिद्धे हि सर्वेषां ग्रहणप्रसङ्गरूपो दोषः, अन्यथेष्टापत्तेः, तदर्थं कस्यचिद् विशेषोऽनुभवगोचरोऽपि शब्दे तद्द्वारा बुभुत्सायाञ्च कल्प्यः, स चानेकभवीयानुस्यूतरागप्रभववासनाविशेषविषयत्वादिर्यद्यप्यस्ति सम्भावितः, तथापि कार्यकारणत्वयोर्लाघवेन कार्य्यकारणवृत्तितद्व्यक्तित्वयोरेवावच्छेदकत्वं द्व्यक्तीतरप्रतिबन्धकत्वे च कारणतावच्छेदकतद्व्यक्तित्वस्य चावच्छेदकत्वमिति कल्प्यते । न चैवम्मनोवैभवेऽप्येवमेवास्तु कल्प-

न तत्र संस्कारातिशयाधायकः प्रत्ययः स्यात्। यदि त्वबुभुत्सिते विषये सामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत्, तस्मात् बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपज्ज्ञानानुत्पत्तावुपयुज्यते, न तु स्वरूपतः। विभुनोऽपि मनसो व्यापारक्रमात् क्रम इति चेन्न।

---

बोधनी।

स्वसामग्र्या जायमानः प्रत्ययो बुभुत्सया दृढतरसंस्काराधानसमर्थो भवतीति। ज्ञानमात्रोत्पत्तावपि बुभुत्सोपयोगेऽनिष्टमाह—**यदि तु** इति। यदि बुभुत्सा न कारणं तर्हि बुभुत्सिताबुभुत्सितयोरविशेषेण ज्ञानं जायेत। न च मधुरतरसङ्गीतमादरेणाकर्णयतः सन्निहितेष्वपि विषयान्तरेषु युगपदेव ज्ञानोत्पत्तिर्दृश्यत इत्याशङ्क्याह—**तस्मात्** इति। यतो ज्ञानोत्पत्तौ बुभुत्सायाः साक्षादनुपयोगस्तस्मात्तत्रापि मनःसंयोगक्रमादेव ज्ञानक्रमस्ततसंयोगक्रम एव बुभुत्साया उपयोग इत्यर्थः। पुनरपि ज्ञानक्रमवादी शङ्कते—**विभुनोऽपि** इति। **न** इति। तस्य व्यापारस्य संयोगरूपत्वे तावन्न क्रमः संभवति विभुत्वान्मनसः, तदतिरेकेण तु कल्प्यमानस्य कर्मत्वेऽपि विभुत्वव्याघातः, गुणत्वेऽपि

प्रकाशः।

न चाणावपि मनसि रसनसंयुक्ते त्वक्संयोगस्यापि सत्वाद् रसगुडद्रव्यज्ञानयौगपद्यापत्तिः। रसनसंयोगकाले मनसस्त्वक्संयोगे मानाभावात्। तस्माच्चाक्षुषज्ञानवतो मैत्रस्य स्वविषयसंबद्धानि त्वगादीनि स्वविषयसाक्षात्कारहेतुसंयोगशून्यानि, तदा स्वविषयसाक्षात्काराजनकत्वात् पटवत्, अन्यथा सामग्रीसत्त्वे युगपज्ज्ञानोत्पादप्रसङ्गः।

प्रकाशिका।

हकत्वमिति समः समाधिः। तथाप्यणुनैव मनसोपपत्तौ नैवं हेतुता गौरवादित्यभिसन्धिः। **मिश्रास्तु** तादृशबुभुत्सापि न प्रयोजिका, असत्यामपि तस्यामुत्कटसूचीसर्पादिवेधव्यथानुभवेन व्यभिचारादित्याहुः। तच्चिन्त्यम्। शब्देऽपि, सत्यामपि तादृशबुभुत्सायां निकट आहन्यमानढक्कादिशब्दस्य तारतम्यस्याबुभुत्सितस्यापि ग्रहेण तस्या व्यभिचारात्। वस्तुतो विभुत्वे मनस आत्मसंयोग एव कारणाभावान्न स्यादित्येव बाधकम्। न च नित्य एव स संयोगः। संयोगत्वस्यैव लाघवेन द्रव्यजन्यतावच्छेदकत्वादिति दिक्। **रसनसंयोगेति**। न च त्वङ्मनस्संयोगस्य ज्ञानमात्रजनकत्वादिदमयुक्तमिति वाच्यम्। त्वचस्तथात्वेऽपि त्वङ्मनःसंयोगस्य तथात्वे मानाभावात्। न च सुषुप्त्यनुपपत्तिरेव मानम्। शरीरमनःसंयोगेनैव तदुपपत्तेः। न चैवं "मनसोऽनिन्द्रियप्रत्यासन्नतये"त्यादि मूलविरोध इति वाच्यम्। इन्द्रियपदस्येन्द्रियाश्रयपरत्वात्। **चाक्षुषेति**। सामान्यतः साक्षात्कारजनकत्वं स्वरूपासिद्धमत उक्तं **चाक्षुषज्ञानवत** इति। तेन तदानीमित्यनेन चाक्षुषज्ञानकालपरामर्षान्नासिद्धिरिति भावः। विषयसम्बन्धव्यतिरेकमादायार्थान्तरमिति **सम्बद्धानीत्यन्तं** पक्षविशेषणम्। साध्ये संयोगेति पक्षधर्म्म-

मकरन्दः।

नन्वेवं वैभवेऽपि रूपादिसकलगोचरबुभुत्साया अहेतुत्वेऽपि तदन्यतमबुभुत्सा तद्ग्राहिका अन्यग्रहप्रतिबन्धिका चास्तामिति तुल्यः समाधिः। न च तादृशबुभुत्सायामपि सूचीसर्पादिवेधानुभवेन तादृश्या अपि व्यभिचारान्नैवमिति वाच्यम्। शब्देऽपि तादृशबुभुत्सायां निकटाहन्यमानढक्काशब्दानुभवेन तुल्यत्वात्। अत्रापि यदि विशेषकल्पनं, तदा तदपि तुल्यमिति। मैवम्। अणुना मनसैवोपपत्तौ तादृशबुभुत्साहेतुत्वादिकल्पनायामेव गौरवात्। **रसनसंयोगकाल** इति। न च त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वे तदावश्यकमिति वाच्यम्। त्वचस्तथात्वमतेऽपि तत्तन्मनोयोगस्य तथात्वे मानाभावात्। न च सुषुप्तौ ज्ञानानुत्पत्तिरेव मानं, शरीरमनःसंयोगाभावात्तदुपपत्तेः। **चाक्षुषेति**।

टिप्पणी।

नेति वाच्यम्। अणुत्वपक्षेऽल्पतरप्रतिबन्धकत्वस्य कल्पनीयत्वात्। इन्द्रियान्तरजन्यानन्तज्ञानस्य मनःसम्बन्धाभावेनैवोपपत्तेः, वैभवे चानन्तप्रतिबन्धकत्वस्यैव कल्पनीयत्वादिति भावः॥

**तस्य संयोगातिरिक्तस्य कर्मरूपत्वे वैभवविरोधात् । गुणरूपत्वे नित्यस्य क्रमानुपपत्तेः । अनित्यस्य च नित्यैकगुणस्याविभुद्रव्यसंयोगासमवायिकारणकत्वेन तदन्तरेणानुपपत्तेः । तदपि कल्पयिष्यते इति चेत्, तदेव तर्हि मनःस्थाने निवेश्यतां लाघवाय । तस्मादण्वेव मन इति ॥**

**तथा च, तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः । एतदेव मनसः शीलमिति कुतो निर्णीतमिति चेत्, अन्वयव्यतिरेकाभ्याम् । न केवलं तस्य, किन्तु सर्वेषामेवेन्द्रियाणाम् । न हि विशेषगुणमनपेक्ष्य चक्षुराद्यपि द्रव्ये प्रवर्त्तते । स्वापावस्थायां कथं ज्ञानमिति चेत् तत्तत्संस्कारोद्बोधे**

बोधनी ।

तस्य नित्यत्वाभ्युपगमे क्रमोत्पत्तिरिति न संभवति अनित्यत्वे तु विभुद्रव्यैकगुणस्याप्यविभुद्रव्यसंयोगासमवायिकारणकत्वेन व्याप्तेराकाशैकगुणे शब्दे भेर्याद्यविभुद्रव्यसंयोगासमवायिकारणकत्वदर्शनेनावधारणादविभुद्रव्यमन्तरेण तदनुपपत्तेरसमवायिसंयोगाधिकरणं किञ्चिदविभुद्रव्यं कल्पनीयम् । यदि तदपि कल्प्येत तर्हि कल्पनालाघवाय तदेवाऽस्तु मन इत्युपसंहरति—**तस्मात्** इति ।

उपपादितमर्थमुपजीव्य पूर्वप्रकृतमेवोपक्रम्याह—**तथा च** इति । यथोक्तमार्गेणाणुनि मनसि तस्यानिन्द्रियप्रदेशावस्थानोपपत्तौ मनःसहकारिविधुरैरिन्द्रियैः ज्ञानादिविशेषगुणानुत्पादादात्मनो निरुपधानत्वात् सुषुप्तावस्थायामनुपलम्भः सिध्यतीति । **एतत्** इति । विशेषगुणोपहितमेवात्मानं गृह्णातीत्येतदेवेति । विशेषगुणे प्रधानानुपधानयोरात्मनो ग्रहणाग्रहणाभ्यां तन्निश्चितमित्याह—**अन्वय** इति । न केवलं मनस एवेदं शीलं किन्तु सर्वेन्द्रियाणामपीत्याह—**केवलम्** इति । एतदेवोपपादयति—**न हि** इति । अन्यथा वाय्वादावपि चक्षुः प्रवर्त्तेतेति भावः । स्वप्ने वा कथं सुषुप्तिवन्मनसो

प्रकाशः ।

**नित्यैकगुणस्येति** । नित्यपदं स्नेहे, एकपदञ्च द्वित्वादौ व्यभिचारवारणाय । नित्यवृत्त्येकवृत्त्यनित्यगुणत्वेन मूर्त्तसंयोगासमवायिकारणगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वं साध्यमित्यर्थः ।

ननु मनोऽन्वयव्यस्तु तस्य संकोचविस्तराभ्यां ज्ञानक्रमयौगपद्ययोरुपपत्तेः । शष्कुलीभक्षणानन्तरं गन्धादीन् युगपद् प्रत्येमीत्यनुव्यवसायस्य बाधकं विना प्रमात्वात् । मैवम् । यदि संकोचविस्तारहेतुरदृष्टं, तदा तत एव तदुभयमस्तु, किं मनसा । नाप्येकपञ्चबुभुत्सया तौ भवतः । बुभुत्साया अहेतुत्वात्, हेतुत्वे वा लाघवाद्विभु मनोऽस्तु । एतेनाणुमनःपञ्चकमस्तु अवयविनो लघुत्वाद् बुभुत्सावशात्तेषामेवैकपञ्चेन्द्रियसम्बन्धादुभयोपपत्तेरित्यपास्तम् । पञ्चबुभुत्सायां पञ्चेन्द्रियसम्बन्धे व्यासज्ञानुपपत्तेरित्यभिप्रेत्याह । **तस्मा**दिति ॥

एवमौपोद्घातिकं मनोवैभवनिराकरणं समाप्य प्रकृते योजयति ।

**तथा चे**ति । **एतदे**वेति । विशेषगुणोपहितात्मग्राहकत्वमित्यर्थः । अनिन्द्रियप्रत्यासन्नत्वान्मनसः स्वप्नप्रत्यया अपि न स्युरित्याह । **स्वापे**ति । सर्वेन्द्रियप्रत्यासत्तिविरहे मनसो ज्ञानाजनकत्वं, न तु त्वगादिप्रत्यासत्तिमतोऽपीत्याह । **तत्त**दिति । **उद्बोधः**=सहकारिसाकल्यम् । विषयस्मृतिदोषादृष्टादिसान्निध्यान्मनसा स्वप्नानुभवो जन्यत इत्यर्थः । सदृशादर्शनादेरुद्बोधकस्याभावात् संस्का-

प्रकाशिका ।

तावलल्भ्योत्कीर्तनं व्यापकता तु तदनन्तर्भावेनैव । अन्यथानुद्भूतरूपतया साक्षात्काराजनके ऊष्मादौ व्यभिचारापत्तेः । यद्विषयकसाक्षात्काराजनकत्वं तद्विषयसाक्षात्कारहेतुसंयोगशून्यत्वमिति व्याप्तिलाभाय साध्यहेत्वोः स्वविषयपदमिति दिक् । शब्दजशब्दे व्यभिचारवारणाय साध्यं जातिगर्भतया व्याचष्टे **मूर्त्तेति** । गुणपदं पूर्ववद्दैशिकव्याप्तिलाभाय ।

मकरन्दः ।

प्रत्यक्षप्रकाशे विपश्चितम् । शब्दजशब्दे व्यभिचारवारणाय साध्यं व्याचष्टे **मूर्त्तेति** । गुणपदं स्पष्टार्थम् ।

विषयस्मरणेन स्वप्नविभ्रमाणामुत्पत्तेः। उद्बोध एव कथमिति चेत्। मन्दतरतमादिन्यायेन बाह्यानामेव शब्दादीनामुपलम्भाद्, अन्ततः शरीरस्यैवोष्मादेः प्रतिपत्तेः, यदा च मनस्त्वचमपि परिहृत्य पुरीतति वर्त्तते, तदा सुषुप्तिः।

स्यादेतत्। परात्मा तु कथं परस्यायोग्यः। न हि साक्षात्कारिज्ञानविषयतामेवायं न प्राप्नोति। स्वयमप्यदर्शनप्रसङ्गात्। नापि ग्रहीतुरेवायमपराधः। तस्यापि हि ज्ञानसमवायिकारणतयैव तद्योग्यता। नापि करणस्य। साधारणत्वात्। न ह्या-

बोधनी।

व्याप्रियमाणेन्द्रियसंयोगाभावात् ज्ञानोत्पत्तिरित्याह—**स्वप्न** इति। तत्तद्विषयेन्द्रियव्यापाराभावेऽपि पूर्वानुभवजनितसंस्कारोद्बोधप्रभावितत्तद्विषयस्मरणसहकृतं मनः स्वप्नभ्रमानुत्पादयतीत्याह-**तत्तत्** इति। तदानीं बाह्यविषयानुपलम्भे संस्कारोद्बोध एव कुत इत्याह—**तदुद्बोधः** इति। **मन्द** इति। तदापि बाह्येन्द्रियाणां मन्दतरतमादिभावेन व्यापारानुवृत्तेः शब्दाद्युपलम्भात्तदनुपलम्भेऽप्यन्ततो गत्वा शरीरोष्मादेस्त्वगिन्द्रियेणोपलम्भासंभवात् संस्कारोद्बोधोपपत्तिरित्याह—**अन्त** इति। यदा तु मनस्त्वगिन्द्रियेणाप्यसंयुक्तं पुरीतति, तदा स्वप्नस्याप्यभावात् सुषुप्तिरेव स्यादित्याह—**यदा तु** इति।

एवं तावद्योग्यस्यापि स्वात्मनोऽनुपलब्धिकारणमुक्तम्। इदानीं तु कुतस्त्वयोग्यः परमात्मेत्यत्र शङ्कते—**स्यादेत**दिति। न कथञ्चिदयोग्य इत्यर्थः। न तावत्स्वरूपयोग्यता नास्तीत्याह—**न हि** इति। अयं परमात्मा, स्वयं स्वेन परमात्मनापीति। न च प्रमातृत्वरूपसहकारियोग्यता नास्तीत्याह—**नापि** इति। **तद्योग्यता** = ग्रहीतत्वयोग्यतेति। न च करणरूपसहकारियोग्यताविरह इत्याह—**नापि** इति। न चास्ति एकाकीयस्य मनसः परमात्मानं प्रत्ययोग्यत्वतेत्याशङ्क्याह-**साधारणत्वात्**

प्रकाशः।

रोद्बोधो न स्यादित्याह। **उद्बोध एवेति**। न तदेवोद्बोधकं, किं त्वदृष्टादिकमपि यथासम्भवमित्याह। **मन्देति**। मन्दत्वं = गत्वादिव्याप्यजातिः। **ऊष्मादे**रिति। अनुद्भूतरूपोद्भूतस्पर्शं तेजसः स्पर्शादेरित्यर्थः। स्वापमुक्त्वा सुषुप्तिमाह। **यदा चेति**। आत्मनो निरिन्द्रियप्रदेशः = पुरीतत्। किञ्चिन्मनः कञ्चिदेवात्मानं गृह्णातीत्यपि नास्तीत्याह। **नापीति**। एकस्यापि मनसोऽनेकात्मग्राहकत्वादित्यर्थः। **न हीति**। नैयायिकमत इति शेषः। भट्टानां तु ज्ञानार्थयोरिवात्ममनसोरपि

प्रकाशिका।

**न तदेवेति**। न सदृशदर्शनमेवेत्यर्थ। **अदृष्टादिकमिति**। आदिपदेन शब्दादिज्ञानसंग्रहः। मन्दत्वं तारधीनिरूप्यमिति कथं ताराग्रहे मन्दत्वविशिष्टग्रह इत्यत आह **मन्दत्वमिति**। तथा च जातेर्न सावधित्वमपितु तन्निष्ठधर्म्मस्येति भावः। यद्यपि बाह्यानामेव शब्दादीनामुपलम्भादिति मूलानुरोधेनादिपदग्राह्यः प्रकाशे शब्दोपलम्भ एव वाच्यः स च न मानसो बहिरर्थे मनसोऽस्वातन्त्र्यात, नापि श्रौत्रः मनसस्तदा स्वप्नवहननाडीप्रविष्टतया श्रोत्रसंयोगाभावात्। तथापि स्वप्नवहननाड्याः शरीरव्यापकतया श्रोत्रावच्छिन्नदेशेऽपि सत्त्वेन स्वप्नकाले श्रोत्रमनःसंयोगो न विरुद्ध इत्यत्र तात्पर्यम्। यदि च नैवं तदा तत एवास्वरसादन्ततः शारीरस्यैवोष्मादेरिति मूलं स्वप्नकाले च शरीरमनःसंयोगस्यावश्यकतया त्वङ्मनः संयोगोऽपि न विरुद्ध इति तस्याशयः। ऊष्मणोऽप्रत्यक्षतया ऊष्मादेरित्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा स्पर्शादिकमेवोक्तमित्याह। **अनुद्भूतरूपेत्यादि**। **भट्टानामिति**। तथा च

मकरन्दः।

**न तदेवेति**। न सदृशदर्शनमेवेत्यर्थः। **अदृष्टादिकमपीति**। अपि पदात्क्वचिच्छब्दाद्युपलम्भपरिग्रहः। तथा च क्व चिददृष्टं क्व चिज् ज्ञानान्तरमुद्बोधकमिति भावः। ननु-मन्दत्वं तारत्वनिरूप्यमिति तदज्ञाने तदसम्भवीत्यत आह **मन्दत्वमिति**। जातिज्ञाने च नेतरज्ञानापेक्षेति भावः। ननूष्मा तेजस्तच्चातीन्द्रियमित्यत आह **अनुद्भूतरूपेति**। ऊष्मादेरित्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणादिति भावः। **भट्टानामिति**। तथा च तेषां तथा नियम एवेत्यर्थः।

संसारमेकमेव मनः एकमेवात्मानं गृह्णातीत्यत्र नियामकमस्ति । स्वभाव इति चेत्, तर्हि मुक्तौ निःस्वभावत्वप्रसङ्गः । तदेकार्थताया अपायादिति । न । भोजकादृष्टोपग्रहस्य नियामकत्वात् । यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाकृष्टानि, तानि तस्यैवेति नियमः । तदुक्तं प्राक्-प्रत्यात्मनियमाद्भुक्तेरिति । एतेन परबुद्ध्यादयो व्याख्याताः ॥

तदेवं योग्यानुपलब्धिः परात्मादौ नास्ति, तदितरा तु न बाधिकेति तवापि सम्मतम् । अतः किमधिकृत्य प्रतिबन्धिः । न हि शशशृङ्गमयोग्यानुपलब्ध्या कश्चिन्निषेधति । न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते । अथायमाशयः । अयोग्य-

---

बोधनी ।

इति । सर्वेषां मनसां सर्वात्मनः प्रति साधारणत्वादिति । साधारण्यमेवाह—न हि इति । न ह्येकस्यात्मनः सर्वदैकमेव मन इत्यत्र नियमहेतुरस्तीति । नन्वस्ति मनःस्वभाव एव नियामक इत्याह—स्वभावः इति । यदि तदेकात्मसंबन्धित्वमस्य स्वभावात्तर्हि मुक्तात्मनां मनःसम्बन्धाभावात् स्वभावहानिः स्यादित्याह-मुक्तौ इति । सिद्धान्ती नियमहेतुमाह—न इति । यस्यात्मनो यद्भोजकमदृष्टमसाधारणं तेनोपनीतं मनस्तस्यैव ज्ञानहेतुर्नान्यस्य शरीरादीनामप्यसाधारणादृष्टाकृष्टत्वमेवासाधारण्ये हेतुः, व्युत्पादितं चैतदन्यत्रेति । एतेन मनसोऽसाधारण्येन परात्मवत्परदुःखादयोऽप्यप्रत्यक्षा इति व्याख्याता इत्याह—एतेन इति ।

तदेवं "योग्यादृष्टिः कुतोऽयोग्ये" इत्येतद् व्याख्यायोपसंहरति—तदेवम् इति । द्वितीयं पादं व्याचष्टे—तदितरा इति । तृतीयं व्याचष्टे—न हि इति । किन्तु योग्यानुपलब्ध्येति । न च प्रकृते परमात्मनीश्वरे योग्यानुपलब्धिरस्तीत्याह-न च इति । तस्मान्न प्रतिबन्धिरिति पराशयमाशङ्कते-अथ इति । यद्ययोग्यस्य शशशृङ्गस्यानुपलब्धिर्न बाधिका स्यात् ततो बाधकाभाव-

प्रकाशः ।

स्वाभाविक एव सम्बन्धो, यतो मुक्तावप्यात्मनो नित्यनिरतिशयानन्दसन्दोहाभिव्यक्तिः । एकात्ममात्रज्ञानजनकत्वं मनसः स्वभाव इत्याह । स्वभाव इतीति । एकस्यात्मन एकमेव मन इति स्वभावः, एकं मन एकमेवात्मानं गृह्णातीति वा, द्वयमपि जीवन्मुक्तौ नास्ति, तत्र कायव्यूहे बहुतरमनःस्वीकाराद्योगिनामप्यात्मसाक्षात्कारजननादित्याह । मुक्ताविति । जीवन्मुक्तौ । यदीयादृष्टाकृष्टं यन्मनस्तत्तस्यैव ग्राहकं, योगिनामपि तत एव तदीयत्वं तस्य । अदृष्टस्यापि तदीयत्वं तदीयमनोनिष्पन्नत्वेन, बीजाङ्कुरवच्च नानवस्थादोष इत्याह । भोजकेति । यथा परात्मनि परमनसो न साक्षात्कारजनकत्वं तथा परबुद्ध्यादावपि, तुल्यत्वादित्याह । एतेनेति ।

यत्र प्रतिबन्धिः स्यात् तदुभयमपि नेष्यते इत्याह । न हीति । न हि तेन ईश्वरसाधने किञ्चिद्

प्रकाशिका ।

तेषां तथा नियम एवेति भावः । एकात्ममात्रेति । नियामकान्तराभावेऽपि स्वभाव एव नियामक इति भावः । एकस्यात्मन इति । एकमेव मन एकत्रात्मनि ज्ञानादिजनकम्, एकं मन एकात्मगोचरमेव ज्ञानं जनयतीति वा विकल्पार्थः, निर्वाणमुक्तौ ज्ञानजनकत्वमसम्भवीति व्याचष्टे । जीवन्मुक्ताविति । वस्तुतो मुक्ताविति मूलं निर्वाणाभिप्रायकमेव तथा च स्वभावो वस्तूनां यावद्द्रव्यभावीति एकात्मग्राहकत्वरूपस्वभावहानिर्निर्वाणदशायां स्यादिति मूलार्थ इति प्रतिभाति । तस्यैवेति । तत्रैवात्मनि ज्ञानजनकमित्यर्थः । देवदत्तमनसा समस्तात्मसाक्षात्कारविरहेण यथाश्रुतस्याप्रसक्तेः । ननु प्रत्यक्षं यो-

मकरन्दः ।

एकात्ममात्रेति । तथा च नियामकान्तराभावेऽपि स्वभाव एव नियामक इति भावः । अयोग्यस्यैव

शशशृङ्गादावनुपलब्धिर्न बाधिका स्यादिति। ततः किं? तत् सिद्ध्येदिति चेत्। एव मस्तु यदि प्रमाणमस्ति। पशुत्वादिकमिति चेत्। परसाधने प्रतिबन्धिस्तर्हि न तद्बाधने। तत्रैव भविष्यतीति चेत्। तत् किं तत्र प्रतिबन्धिरेव दूषणम्। अथ कथञ्चित्तुल्यन्यायतया योग्या एव परात्मबुद्ध्यादयस्ते च बाधिता एवेत्यपहृतविषयत्वम्?। न प्रथमः। अव्याप्तेः। न हि पशुत्वादेः शशशृङ्गसाधकत्वेन कार्यत्वादेः कर्तृमत्त्वादिसाधकत्वं व्याप्तं, येन तस्मिन्नसति तत्प्रतिषिद्ध्येत। न द्वितीयः। मिथोऽनुपलभ्यमानत्वस्य वादिप्रतिवादिस्वीकारात्। तथापि पशुत्वादौ को दोष इति चेत्। न जानीमस्तावत्तद्विचारावसरे चिन्तयिष्यामः।

---

बोधनी।

मात्रात् किं तच्छृङ्गं सिध्यति। अयमत्राभिसन्धिः—अयोग्यानुपलब्धिप्रतिपादनेन बाधकाभावमीश्वरस्य सिध्यति न तु सद्भाव इति। केचित्तु व्याचक्षते यदि शशशृङ्गमप्ययोग्यं तदा तस्यानुपलब्धिर्न बाधिका स्यादिति। उत्तरं—**ततः किम्** इति। बाधकाभावात्किमायातं शशशृङ्गस्येति शङ्कितुर्भावाविष्करणं तत्सिध्येदिति। बाधकाभावादीश्वरवन्न शशशृङ्गं सिध्येदिति। निराकरोति—**एवमस्तु** इति। स्यादेवं यदि शशशृङ्गस्यास्तित्वे प्रमाणं स्यात्, तत्तु नास्ति। न हि वयं बाधकाभावमात्रेणेश्वरमभ्युपगच्छामः किन्तु साधकसद्भावादेवेति भावः। शृङ्गेऽपि प्रमाणमाशङ्कते—**पशुत्वादिकम्** इति। शशः शृङ्गवान् पशुत्वात् गवादिवदिति। हन्तैवमश्वारूढोऽश्वस्यैवास्मार्षीरित्याह—**परसाधने** इति। प्रथममीश्वरस्यानुपलब्ध्या बाधकमभिधाय तदबाधे शृङ्गस्याप्यबाधः तद्बाधे तस्यापि बाध इति बाधने प्रतिबन्धिमुद्भावयितुमुपक्रान्तः संप्रति परसाधने प्रतिबन्धिमुद्भावयसि परेण हीश्वरसाधने कार्यत्वादिति हेतौ प्रयुक्ते शशोऽपि शृङ्गवान् पशुत्वादित्यादि वक्तुं संगच्छत इति। तर्हि परसाधन एतत्प्रतिबन्धिर्भविष्यतीत्यत्राह—**तत्र** इति। तदेतद्विकल्प्य निराकरोति—**किं तत्र** इति। यदि कार्यत्वं कर्त्तारं साधयेत् पशुत्वमपि शृङ्गं साधयेदिति किं प्रतिबन्धिरेव दूषणं किं वा योग्यानुपलब्ध्या पशुत्वस्येव कार्यत्वादेरपि बाधितविषयत्वमिति। तस्मिन् व्यापके पशुत्वादेः शृङ्गादिसाधनत्वेऽसति तत्कार्यत्वादेः कर्तृत्वसाधनं व्याप्यभूतं प्रतिषिध्येतेति। **मिथोऽनुपलभ्य** इति। यदि परात्मादेर्योग्यानुपलब्धिर्बाधिका स्यात् तदा परस्परमनुपलभ्यमानयोरेव वादिप्रतिवादिनोः परस्पराङ्गीकारो न स्यादिति। ननु मा भूदिदं परसाधने दूषणं, तथापि शृङ्गसाधनतया प्रयुक्ते पशुत्वादौ को दोष इत्याह—**तथापि** इति। पृच्छतोऽयमाशयः—य एवात्र दोषः स एवेश्वरानुमाने भविष्यतीति। अनवसरत्वान्नेदमिह वक्तव्यमित्याह—**न जानीमस्तावत्** इति।

तदेवं प्रत्यक्षस्य बाधकत्वं निराकृतम्, इदानीं तु व्यापकानुपलब्धिलक्षणमनुमानमङ्कुरादिषु

प्रकाशः।

दूष्यत इत्यर्थान्तरं निग्रहस्थानमित्याह। **तत** इति। आशयमविद्वानाह। **तदि**ति। तत्सिद्धावपि न प्रकृते दूषणमित्याह। **एवमि**ति। मानमाह। **पशुत्वादिकमि**ति। पक्षसमत्वादेव नाश्वादौ व्यभिचार इति भावः। आशयं स्फुटयति। **परे**ति। यदीश्वरः सिद्ध्येत्, तदा शशशृङ्गमपि सिद्ध्येदितीश्वरसाधने प्रतिबन्धिस्तथा चार्थान्तरमित्युक्तम्। नन्वनुपलब्धिमात्रेण यथा शशे शृङ्गाभावस्तथा क्षित्यादौ कर्तुरप्यभाव इति बाधनेऽपि प्रतिबन्धिः स्यात्, इष्टापत्तेरभावादित्याह। **तत्रैवे**ति। **मिथ** इति। परात्मादेः परायोग्यत्वस्योभयवादिस्वीकारात् प्रत्यक्षेणानुपलम्भमात्रं, नायोग्ये बाधकमित्यर्थः। अर्थान्तरं हि पुरुषदोषो, न तु साधनदोष इत्याशयेन पृच्छति। **तथापी**ति। शशे शृङ्गस्यात्यन्तमभाव इति सर्वेषामबाधितप्रत्यक्षबाधः।

स्यादेतत् । यत्प्रमाणगम्यं हि यत्, तदभाव एव तस्याभावमावेदयति । यथा रूपादिप्रतिपत्तेरभावश्चक्षुरादेरभावम् । कायवाग्व्यापारैकप्रमाणकश्च परऽऽत्मा, तदभाव एव तस्याभावे प्रमाणमङ्कुरादिषु । तन्न । तदेकप्रमाणकत्वासिद्धेः । अन्यथा सुषुप्तोऽपि न स्यात् । श्वाससन्तानोऽपि तत्र प्रमाणमिति चेन्न । निरुद्धपवनोऽपि न स्यात् । कायसंस्थानविशेषोऽपि तत्र प्रमाणमिति चेन्न, विषमूर्च्छितोऽपि न स्यात् । शरीरोष्मापि तत्र प्रमाणमिति चेन्न । जलावसिक्तविषमूर्च्छितोऽपि न स्यात् ।

तस्माद् यद्यत् कार्यमुपलभ्यते तत्तदनुगुणश्चेतनस्तत्र तत्र सिद्ध्यति । न च कार्यमात्रस्य क्वचिद् व्यावृत्तिरिति । न च त्वदभ्युपगतेनैव प्रमाणेन भवितव्यं नान्येनेति नियमोऽस्ति । न च प्रमेयस्य प्रमाणेन व्याप्तिः । सा हि कार्त्स्न्येन

बोधनी ।

कर्तृबाधकमाशङ्कते—**स्यादेतत्** इति । **तन्नेति** । परमात्मन इति शेषः । कायवाग्व्यवहारैकप्रमाणकत्वेऽनिष्टमाह-**अन्यथा** इति । न हि तस्य कायिको वाचिको वा व्यापारोऽस्तीति । निरुद्धपवनः प्राणानायम्य तूष्णीमासीनः । शेषं सुगमम् । यस्मान्न कायवाग्व्यापारैकप्रमाणकः परमात्मा तस्मादेवमङ्गीकर्त्तव्यमित्याह-**तस्मात्** इति । तथापि विश्वकर्तुः कथं सिद्धिरित्यत्राह-**न च कार्यमात्रस्य** इति । न वयं कार्यप्रमाणकत्वं चेतनस्याभ्युपगच्छाम इत्यत्राह-**न च** इति । किं चास्तु त्वदभ्युपगमे तदेव प्रमाणं तथापि तदभावान्नाभावश्चेतनस्येत्याह—**न च प्रमेयस्य** इति । व्याप्त्यभावमेव विकल्प्याह— **सा हि** इति । प्रमेयस्य प्रमाणव्याप्तिः सर्वैः प्रमाणैरिति प्रमाणकार्त्स्न्येनाभ्युपगम्येत किं वा येन केनचित्प्रमाणैकदेशेन ? तत्र कृत्स्नप्रमाणव्याप्त्यैः प्रत्यक्षाद्यन्यतमनिवृत्तावपि प्रमेयं निवर्त्तेत, न चैतदस्ति । द्वितीयेऽपि यदि नियतस्यैकस्य पुरुषस्य तर्ह्येकस्य सर्वप्रमाणनिवृत्तावपि प्रमेयं निवर्तेत, अथानियमेन सर्वेषां न हि तदा सर्वपुरुषाणां यत्किञ्चिदपि प्रमाणं नास्तीति निश्चेतुं शक्यत

प्रकाशः ।

शृङ्गत्वस्य जातेर्योग्यसंस्थानव्यङ्ग्यत्वेनायोग्ये शङ्कितुमप्यशक्यत्वात्, अन्यथा तद्व्यतिरेकाप्रसिद्ध्या अनुमानानवकाशात्, अन्वयिनश्चानङ्गीकारात् । परात्मनश्चायोग्यस्यापि कर्तृत्वान्न कर्तृत्वं योग्यत्वनियतमित्याशयवत उत्तरं, **नेति** ।

**यत्प्रमाणेति** । यदेकप्रमाणगम्यमित्यर्थः । अतो न धूमाभावेऽपि अग्निसत्त्वाद् व्यभिचारः । अत एव "तदेकप्रमाणत्वासिद्धेरिति वक्ष्यति । कार्यमात्रप्रमाणोऽयस्तद्विशेषनिवृत्तिमात्रेण न निवर्तते । कार्यमात्रस्य च न व्यावृत्तिरित्युपसंहरति । **तस्मादिति** । तथा च, प्रमाणविशेषनिवृत्तावपि प्रमाणसामान्यसत्त्वात्तदेकप्रमाणगम्यत्वमसिद्धमित्यर्थः । न च प्रमाणप्रमेययोर्व्याप्तिर्यतः प्रमाणविशेषाभावे

प्रकाशिका ।

व्यभ्यङ्गाभावविषयकमिति कथं तेन लाभ इत्यरुचेराह **शृङ्गत्वस्येति** । अत्राप्रयोजकत्वमाशङ्क्याह **अन्यथेति** । **अन्वयिनश्चेति** । केवलान्वयिनश्चेत्यर्थः । ननु कार्यत्वावच्छिन्नं प्रति कर्तृत्वेनैव पशुत्वेनैव शृङ्गजनकत्वमिति तुल्यमित्यत आह । **परात्मनश्चेति** । तथा च कर्तृत्वेनायोग्यतानियतमित्ययोग्येश्वरसिद्धौ न किञ्चिद्बाधकम् शृङ्गत्वं तु योग्यसंस्थाननियतमिति नायोग्यशृङ्गसिद्धिरिति भावः ।

मकरन्दः ।

बाध इत्याशङ्क्याह **शृङ्गत्वस्येति** । अप्रयोजकत्वमाशङ्क्याह **अन्यथेति** । अन्वयिनः = केवलान्वयिनः ॥ १ ॥

टिप्पणी ।

**अन्यथा तद्व्यतिरेकेति** । सर्वत्राप्ययोग्यस्य शृङ्गसम्भावनया अभावस्यानिश्चयात् ॥ १ ॥

वा स्यादेकदेशेन वा स्यात्? । न प्रथमः । प्रत्यक्षाद्यन्यतमासद्भावेऽपि तत्प्रमेयावस्थितेः । न द्वितीयः । पुरुषनियमेन सर्वप्रमाणव्यावृत्तावपि प्रमेयावस्थितेः । अनियमेनासिद्धेः । न हि सर्वस्य सर्वदा सर्वथाऽत्र प्रमाणं नास्तीति निश्चयः शक्य इति । कथन्तर्हि चक्षुरादेरभावो निश्चेयः? । व्यापकानुपलब्धेः । चरमसामग्रीनिवेशिनो हि कार्यमेव व्यापकं, तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः । योग्यतामात्रस्य कदाचित् कार्यं, तन्निवृत्तौ तथाभूतस्याऽपि निवृत्तिः । अन्यथा, तत्रापि सन्देहः। प्रकृतेऽपि व्यापकानुपलब्ध्या तत्प्रतिषेधोऽस्तु, न । आश्रयासिद्धत्वात् । न ही-

बोधनी ।

इति । ननु यदि न प्रमेयस्य प्रमाणव्याप्तिः कथं तर्हि रूपादिज्ञानाभावात्तदेकप्रमाणकस्य चक्षुरादेरभावनिश्चय इत्याह-**कथं तर्हि** इति । उत्तरं-**व्यापक** इति । न हि तत्रापि प्रमाणाभावादनिश्चयः । किं तर्हि? व्यापकानुपलब्धेरिति । कथं रूपादिज्ञानं चक्षुरादेर्व्यापकं, न हि कार्यं कारणस्य व्यापकं वैपरीत्यादित्यत्राह—**चरम** इति । चरमसामग्रीत्वेन निविशमानस्य हि कारणस्य कार्यमेव व्यापकं यथा अन्त्यतन्तुसंयोगस्य पटस्तेन तस्य व्यापकस्य कार्यस्य निवृत्तौ व्याप्यभूतस्यैव कारणस्य निवृत्तिरवसीयते, न तु प्रमाणनिवृत्त्या प्रमेयनिवृत्तिरित्यर्थः । किंचित्तु कारणमस्मिन्सत्येव भवति नासतीति कार्यं प्रति योग्यतया निविशते यथा तन्त्वादयस्तस्यापि कदाचिद्भवत्कार्यं व्यापकं न हि सर्वदा कार्यानन्वितं कारणमिति शक्यं वक्तुम् । तस्मात्तस्य कादाचित्कस्यापि कार्यस्य निवृत्तौ तथाभूतस्य योग्यतयानिष्टस्यापि निवृत्तिः । **अन्यथा** इति । यदि विधाद्वयमपि चक्षुरादौ नास्ति तदा रूपादिज्ञानाभावान्न तत्राप्यभावनिश्चयः किंतु संदेह एव स्यादिति । यद्वा, योग्यतामात्रस्य कदाचित् कार्यं न तु व्यापकं तेन कारणस्य निवृत्तौ कादाचित्कस्यापि कार्यस्य निवृत्तिस्तद्व्यतिरेकेणास्य निवृत्तिरन्यथा कार्यनिवृत्तौ तत्रापि कारणेऽपि संदेहो नाभावनिश्चय इति । केचित्तु न तन्निवृत्तौ तथाभूतस्यापि निवृत्तिरिति नञ्प्रश्लेषेण पठन्ति । तत्रायमर्थः । ननु चरमसामग्रीनिवेशिन इति विशेषणं योग्यस्येत्येवोच्यतामित्यत्राह-**योग्यतामात्रस्य** इति । तस्य कार्यं न व्यापकं । तस्मात्कार्यनिवृत्तौ योग्यतामात्रस्य निवृत्तिः । **अन्यथा** इति । चक्षुरादेश्चरमसामग्रीनिवेशाभावे तत्रापि नाभावनिश्चयः, संदेह एवेति ।

चक्षुरादिवत्प्रकृतेऽपीश्वरे व्यापकस्य प्रयोजनादेरनुपलब्ध्या व्याप्यस्य कर्तुः प्रतिषेधोऽस्तु न प्रमाणाभावेनेत्याह-**प्रकृतेऽपि** इति । **न** इति । प्रतिषेधाधिकरणस्य सिद्धिमेवाह-**न हि** इति । न

प्रकाशः ।

प्रमेयासत्त्वं स्यादित्याह । **न चेति** । **अनियमेनेति** । सर्वपुरुषापेक्षयेत्यर्थः । **व्यापकेति** । तत्तद्व्यापकनिवृत्तौ तत्तद्व्याप्यनिवृत्तेरित्यर्थः । कार्यविशेषस्य कारणविशेषव्यापकत्वमाह । **चरमेति** । कार्यरूपज्ञानादि । **योग्यतामात्रस्येति** । व्यापकमित्यनुषज्यते । न च भक्षितविनष्टबीजे व्यभिचारः । यत्सामान्यं यत्कारणतावच्छेदकं तदवश्यं तज्जनकवृत्तीत्यर्थात्, नित्ययोग्याभिप्रायकत्वाद्वा । **अन्यथेति** । कदाचित्कार्यव्यतिरेके योग्यतायामपि सन्देह इत्यर्थः । **प्रकृतेऽपीति** । ईश्वरो न कर्ता तद्व्यापकस्वार्थादिशून्यत्वाद् व्योमवदिति व्यापकाभावलिङ्गकमनुमानयित्यर्थः ।

प्रकाशिका ।

**रूपज्ञानादीति** । तथा च सामग्र्यन्तरसमवधानदशायां रूपाद्यनुपलब्ध्यैव चक्षुरभावोऽनुमीयत इत्यर्थः । **यत्सामान्यमिति** । कस्य चिदुद्भूतरूपस्य विषयसाक्षात्कारकारणतावच्छेदकस्य न फलोपहितवृत्तित्वमिति सामान्यपदम् । तेन तत्रापि परम्परासम्बन्धेनावच्छेदकस्य सामान्यस्य तेनैव सम्बन्धेन फलोपहितवृत्तितया न व्यभिचार इति भावः ॥ १ ॥

श्वरस्तज्ज्ञानं वा क्वचित् सिद्धम्। आभासप्रतिपन्नमिति चेन्न। तस्याश्रयत्वानुपपत्तेः। प्रतिषेध्यत्वानुपपत्तेश्च ॥ १ ॥

**व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ॥**
**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥**

न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वं निषेध्यता चेति। कथं तर्हि शशशृङ्गस्य निषेधः। न कथञ्चित्।

---

**बोधनी।**

सनाश्रय एव सर्वकर्तृत्वस्य विषयत्वस्य वा प्रतिषेधः संभवतीति। **आभास** इति ॥ तेनाश्रयत्वोपपत्तिरिति। **न** इति। न परमाभासप्रतिपन्नाश्रयतानुपपत्तिः। प्रतिषेधप्रतियोगित्वं च नोपपद्यत इति ॥ १ ॥ उभयीमप्यनुपपत्तिमुपपादयति **व्यावर्त्य**-इति। व्यावर्त्यस्य=निषेधस्य। अभाववत्ता=तत्संबन्धिता। भाविकी=पारमार्थिकी। विशेष्यता नामाभावाधिकरणतेति। यावत्पारमार्थिकी चाभाववत्ता पारमार्थिकस्यैव भावस्य न चाभासप्रतिपन्नस्येति भावः। निषेध्यस्य प्रतियोगिनः परमार्थतोऽभावविरुद्धात्मत्वं हि प्रतियोगिता निषेध्यत्वमिति यावत्, न चैतदप्याभासप्रतिपन्नस्यास्तीति। यथाहुः "लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिद्ध्यते" इति। **न चैतत्** इति ॥ विशेष्यप्रतियोगिनोर्दर्शितं रूपमिति। **कथं तर्हि**-इति। यथासिद्धस्यैतन्नास्तीति। उत्तरं **न कथञ्चित्**-इति। शशशृङ्गप्रतियोगिको निषेधो न

**प्रकाशः।**

**आभासेति।** असत्ख्यात्युपस्थितमित्यर्थः। यदीश्वरे कर्तृत्वनिषेधः साध्यते तदाऽऽश्रयत्वमीश्वरस्य, यदा तस्यैवाभावः, तदेश्वरस्य प्रतियोगित्वम्, उभयमपि नास्तीत्याह। **तस्येति।** ॥ १ ॥

कुत इत्याह। **व्यावर्त्येति।** व्यावर्त्यः=प्रतियोगी, तदभाववत्ता भाविकी पारमार्थिकी विशेष्यता आश्रयता, वस्तुनः प्रामाणिकस्य, स्वाभावविरहरूपत्वं च प्रतियोगित्वम्। असत्ख्यातेः कारणाभावेन निरासादित्यर्थः।

नन्वनुमितिरेव पक्षः। तथा हि इयमनुमितिरयथार्था, अशरीरे कर्तृत्वज्ञानत्वात्, ज्ञाने नित्यत्वज्ञानत्वाद्वा। घटः कर्त्ता, चैत्रज्ञानं नित्यमिति ज्ञानवदित्यस्तु। न चोपजीव्यविरोधः। अनुमितिर्हि उपजीव्या, न तु तद्यथार्थत्वमपि। न। अप्रयोजकत्वात्। अन्यथा, पर्वते ग्रग्न्यनुमितिरयथार्था उभयसिद्धाग्निमद्भिन्नेऽग्निमत्वज्ञानत्वात्, ह्रदोऽग्निमानितिवदित्यापत्तेः। अपि चानुमितेरयथार्थत्वं दोषादुत्पन्नमनेन ज्ञाप्यं, न त्वनेनोत्पाद्यम्। तत्र चायमेव दोषो दोषान्तरं वा? नाद्यः, अन्योन्याश्रयात्। नान्त्यः, तदभावात्।

**न चेति।** आभासानाभाससङ्करापत्तेरिति भावः। **कथमिति।** यदि नासतो निषेध्यत्वमिति शेषः। **न कथञ्चिदिति।** नात्रापि कल्पितस्य निषेध्यत्वं, शशेऽधिकरणे शृङ्गस्यैव निषेधा-

**प्रकाशिका।**

**अयमेवेति।** प्रकृतानुमानरूप एवेत्यर्थः। **आभासेति।** आभासप्रतिपन्नस्यापि वस्तुत्वे वस्त्ववस्तुनोरभेदापत्तिरित्यर्थः। तर्हीत्यस्य तदेत्यर्थः। तस्य च यदीतिशब्दसापेक्षतया शेषं पूरयति। **यदीति।**

**मकरन्दः।**

**अयमेवेति।** प्रकृतानुमानमेवेत्यर्थः। **आभासेति।** आभासप्रतिपन्नस्यापि वस्तुत्वाभ्युपगमे वस्तुत्वावस्तुत्वसङ्करापत्तिरित्यर्थः। **यदीति।** यद्यपि तर्हीत्यस्य तदेत्यर्थः, तस्य च नित्यसापेक्षतया शेषदानं विनाऽपि तदर्थलाभः, तथापि नित्यसापेक्षतया अध्याहारात् तदपेक्षया शेषस्य

**टिप्पणी।**

**अप्रयोजकत्वादिति।** कृतिं प्रति शरीरस्य कारणत्वे सिद्धे सप्रयोजकत्वं स्यात्, नित्यकृत्यभ्युपगमेन तदभावादिति भावः। **आभासानाभाससङ्करेति।** आभासप्रतिपन्नस्यापि वस्तुत्वाभ्युपगमे

स ह्यभावप्रत्यय एव। न चायमपारमार्थिकप्रतियोगिकः परमार्थाभावो नाम। न चापारमार्थिकविषयं प्रमाणं नामेति(१) ॥ २ ॥

अपि च—

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ॥**

**न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने ॥ ३ ॥**

केन च शशशृङ्गं प्रतिषिध्यते। सर्वथाऽनुपलब्धस्य योग्यत्वासिद्धेः। तदितरसामग्रीसाकल्यं हि तत्। ननूक्तमाभासोपलब्धं हि तत्। अत एवाशक्यनिषे-

बोधनी।

कथञ्चित्संभवतीति। कुत इत्यत्राह **स हि** इति। स हि निषेधोऽभावप्रत्यय एव प्रतीयते। **न**–इति। प्रत्ययः प्रमाणं प्रमाणत्वेनैव,स हि निषेधोऽभ्युपगम्यत इत्यर्थः। ततः किमित्यत्राह **न च**–इति। मा भूदभावः पारमार्थिकः, ततोऽपि किमित्यत आह **तथा**–इति। न चेत्यनुषञ्जनीयमिति ॥ २ ॥

न केवलमाभासप्रतिपन्नस्य पारमार्थिकप्रतिषेधप्रतियोगित्वमेव नास्ति प्रतिषेधमात्रविषयत्वमपि न संभवतीत्याह **अपि च**–इति। यद्यपि तदतिरिक्तसामग्रीसाकल्यमेव योग्यता, तथापि कल्पितस्य शशशृङ्गस्य दुष्टैव सामग्री योग्यता, अन्यथोपलम्भस्याप्यदुष्टत्वेनोपलम्भस्यापि तात्त्विकस्य प्रसङ्गात्। ततः किम्? तस्यां तादृश्यां योग्यतायां सत्यां शशशृङ्गादेर्नानुपलम्भोऽस्ति, अपि तूपलम्भ एव स्यात्तस्या आभासोपलम्भव्याप्तेः, अत एवानुपलम्भकाले योग्यता नास्ति।

तस्माद्योग्यतानुपलम्भयोरेकतरसंनिधानेऽन्यतरस्याभावात् समुदायसाध्यमभावावधारणं दुष्करमिति व्याख्यातुमुपक्रमते **केन**–इति। योग्यानुपलम्भेनेति चेत्तत्राह **सर्वथा**–इति। कदाचिदुपलम्भे ह्यन्वयव्यतिरेकाभ्यां शक्यज्ञाना सामग्रीति। **आभास**–इति। तेन सर्वथानुपलब्धिरसिद्धेति।

प्रकाशः।

दित्यर्थः। **स हीति**। पारमार्थिकाभावप्रत्यय एवेत्यर्थः। प्रतियोग्यधिकरणयोर्वस्तुत्वादिति भावः। **न चेति**। प्रामाणिकनिषेधव्यवहारे प्रामाणिकस्यैव निषेध्यत्वादित्यर्थः ॥ २ ॥

किञ्चानुपलब्धिमात्रान्निषेधनिश्चयेऽतीन्द्रियोच्छेदाद् योग्यानुपलम्भात् स वाच्यः। योग्यता च प्रतियोगितद्व्याप्येतरतत्प्रमापकसाकल्यरूपा अलीके नास्तीति दोषसचिवतज्ज्ञानसामग्रीरूपा सा वाच्या तस्यां च सत्यां नालीकस्यानुपलम्भः उपलम्भस्यैव सत्त्वात् अनुपलम्भदशायाञ्च तज्ज्ञानसामग्रीरूपा योग्यतैव नास्तीत्याह—

**अपि चेति। केन चेति।** न केनापीत्यर्थः। **सर्वथेति।** प्रमाणत इति शेषः। नन्वाभासोपलब्धस्यापि नेदं रजतमिति निषेधादुपलब्धमात्रस्य निषेधो, न तु प्रमितस्यैवेत्यत आह। **तदितरेति**। रजतादेः प्रामाणिकत्वेन योग्यस्यैवानुपलम्भान्निषेधो, न त्वाभासोपलब्धस्येत्यर्थः। तथैव किं न स्यादित्याह। **नन्विति**। आभाससामग्रीकालेऽनुपलम्भाभावादनुपलम्भकाले च तद्रूपयोग्यताया असत्त्वादित्याह। **अत एवेति**।

प्रकाशिका।

**शश इति**। कार्य्यकारणभावेन सम्बन्धेनायमभावो बोद्धव्यः, अन्यथा संयोगेन शृङ्गस्य सत्त्वादभावासम्भवः, समवायेन गव्यपि शृङ्गाभाव इति तद्वैलक्षण्यं न स्यादिति ॥ २ ॥

मकरन्दः।

त्वरितप्रतिपत्तिकरत्वमिति भावः। **शशे** इति। यद्यपि शशे गवादिशृङ्गस्य संयोगवृत्त्या सत्त्वात् कथं शृङ्गाभावः, समवायवृत्त्या च तदभावो गवादावपि शृङ्गस्य संयोगित्वात्, तथापि जन्यजनकभावसंबन्धेन तदभावो बोध्यः ॥ २ ॥

टिप्पणी।

वस्तुत्वावस्तुत्वसङ्करापत्तेरित्यर्थः ॥ २ ॥

(१) अपारमार्थिकविषयं प्रमाणं तथा नामेति बोधनीकारसम्मतः पाठः।

धमित्युक्तम् । अनुपलम्भकाल आभासोपलम्भसामग्र्या अभावात्तत्काले चानुपलम्भाभावादिति । कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थः ? । शशे अधिकरणे विषाणाभावोऽस्तीति ॥ ३ ॥

बोधनी ।

तदुत्तरत्वेन श्लोकार्धं विवृणोति **अत एव**-इति । **कस्तर्हि**-इति । यद्यशक्यनिषेधम् इति । सुहृद्भावेनाह **शश** इति । प्रमाणसिद्धमेव विषाणं निषिद्ध्यते न स्वाभासप्रतिपन्नं तादृशमेवेति ॥३॥

प्रकाशः ।

नन्वेवं घटादावपि दोषस्योपलम्भकारणत्वात्तदभावोऽपि न गृह्येत । प्रमापकसाकल्यस्य च विवक्षितत्वे गुणस्यैव प्रमापकस्याभावात् तत्साकल्यासिद्धेः । अत्राहुः । प्रत्यक्षप्रमायामिन्द्रियार्थसन्निकर्षस्य गुणत्वात्तस्य च तद्व्याप्यत्वादेव । तदन्यगुणस्य च तत्राकारणत्वात् । घटादौ गुणान्यप्रमाकारणत्वेन योग्यता । शशशृङ्गे च न दोषान्यज्ञानकारणत्वेन योग्यता । दोषान्यप्रमापकस्याभावादित्यन्ये ।

**शश इति** । ननु गवि शशशृङ्गं नास्तीतिप्रतीतिबलात् प्रतियोग्यवृत्तिधर्मेण शशीयत्वेनावच्छिन्नः शृङ्गाभावः प्रतीयते । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् । मैवम् । प्रतियोगितावच्छेदकधर्मविशिष्टप्रतियोगिज्ञानस्याभावधीहेतुतया तादृशप्रतीतेरसिद्धेः । अन्यथा, प्रतियोगिनिर्विकल्पकादपि व्यतिरेकप्रतीत्यापत्तेः ॥ ३ ॥

प्रकाशिका ।

**प्रत्यक्षप्रमायामिति** । तथा च तत्, तद्व्याप्येतरयावत्तत्प्रमापकसाकल्ये सत्यनुपलब्धिरभावग्राहिका । गुणस्यार्थनियतत्वेन व्याप्यपदादेव व्यवच्छेदान्नासंभवः । सा च न शशशृङ्गे तत्प्रमापकासिद्धेः । न च दोषान्यज्ञापकसामग्रीसाकल्यमेव योग्यता तत्साकल्यं चात्मादिकमादाय तत्राप्यस्त्येवेति वाच्यम् । तत्तद्व्याप्येतरस्यावश्यकत्वे गौरवादित्यर्थः । **प्रमापकस्येति** । ज्ञापकस्येत्यर्थः । **अन्य इत्यरुचौ** तद्बीजन्तु आत्मादिकमेव दोषान्यज्ञापकमस्तीति । वस्तुतोऽसत्ख्यातेः कारणबाधेन निरासे प्रतियोगिज्ञानाभावारोपादेव नालीकाभावप्रतीतिरित्यत्र बाधकं स्मर्त्तव्यम् । **प्रतियोगितेति** । इदञ्चाभावप्रत्यक्षे एव कारणं प्रमेयोऽभाव इति शब्देन तद् विनापि अभावग्रहात् । वस्तुतोऽभावप्रतीतौ यो धर्म्मः प्रतियोगिनिष्ठत्वेन भासते तत्प्रकारकप्रतियोगिज्ञानं कारणं, विशिष्टवैशिष्ट्यज्ञाने सामान्यत एव विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य कारण-

मकरन्दः ।

**प्रत्यक्षप्रमायामिति** । तथा च प्रतियोगितद्व्याप्येतरयावत्प्रमापकसमवधाने सति अनुपलब्धिरभावग्राहिका, गुणस्य चार्थनियतत्वेन तद्व्याप्यपदेनैव व्यवच्छेदान्नासम्भवः । सा च न शशशृङ्गाभावे, तत्प्रमापकाप्रसिद्धेः, न च दोषान्यज्ञापकसाकल्यं विवक्षितं, तच्चेन्द्रियाद्येव तत्रापि प्रसिद्धमिति वाच्यम् । **गौरवादित्याहुः** । वस्तुतोऽसत्ख्यातेः कारणाभावेनानभ्युपगमादलीकस्य नोपलब्धत्वमपीति न तन्निषेध्यमिति भावः । **प्रमापकस्येति** । प्रज्ञापकस्येत्यर्थः । अत्रेदमनभिमतिबीजम् । असत्ख्यातिपक्षे दोषान्यज्ञापकमिन्द्रियाद्येव, अन्यथा दोषोऽपि न तज्ज्ञापक इति दोषान्यविशेषणं व्यर्थमिति । **प्रतियोगितेति** । यद्यपि तादृशज्ञानं विनापि प्रमेयाभाव इति शब्दादिनाऽभावग्रहान्न तस्याहेतुत्वं, तथापि प्रत्यक्षे तथात्वं बोध्यम् । यद्यप्याहार्यादिरूपं तादृशज्ञानं प्रकृते सम्भवत्येव, तथाप्यनुमानप्रकाशे मदुक्तमनुसन्धेयम् ॥ ३ ॥

टिप्पणी ।

**दोषान्यप्रमापकस्याभावादित्यन्य** इति । असत्ख्यातिपक्षे दोषान्यमिन्द्रियमेव ज्ञापकम्, अन्यथा दोषोऽपि ज्ञापको न स्यादिति दोषान्येति व्यर्थमित्यस्वरसः ॥ ३ ॥ ४ ॥

स्यादेतत्। यद्यपीश्वरो नावगतो, यद्यपि च नाभाससिद्धेन प्रमाणव्यवहारः शक्यसम्पादनः, तथाऽप्यात्मानः सिद्धास्तेषां सार्वज्ञ्यं निषिद्ध्यते, क्षित्यादिकर्तृत्वञ्चेति। तथाहि। मदितरे न सर्वज्ञाश्चेतनत्वादहमिव, न च ते क्षित्यादिकर्त्तारः पुरुषत्वादहमिव। एवं, वस्तुत्वादेरपीति। तदेतदपि प्रागेव परिहृतम्। तथाहि—

इष्टासिद्धिः प्रसिद्धेऽशे हेत्वासिद्धिरगोचरे॥

नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा॥ ४॥

प्रमाणेनप्रतीतानां चेतनानां पक्षीकरणे सिद्धसाधनम्। ततोऽन्येषामसिद्धौ हेतोराश्रयासिद्धत्वम्। आत्मत्वमात्रेण सोऽपि सिद्ध इति चेत्। कोऽस्याऽर्थः ?। किं

बोधनी।

प्रकृतेऽपि प्रमाणसिद्धं निषेधाधिकरणं दर्शयन्नाह। **स्यादेतत्**–इति। तस्यामेव प्रतिज्ञायां वस्तुत्वद्रव्यत्वादयोऽपि हेतव इत्याह **एवम्**–इति। यथाहुः—

"प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च। अभावकरणे शक्तं को नु तं कथयिष्यति"

(श्लो० वा०, पृ० ८५)।

एतदप्याश्रयासिद्धत्वादिना दत्तोत्तरमित्याह **तदेतत्**–इति।

तदेव विकल्प्योपपादयति **इष्टसिद्धिः**–इति। उभयवादिसिद्धेषु पक्षीकृतेषु सिद्धसाधनं तेषामसर्वज्ञत्वासर्वकर्तृकत्वयोः अस्माकमपि सिद्धत्वात् भवतामगोचरेऽपीश्वरे पक्षीकृते हेतोराश्रयतोऽसिद्धिः। नन्वात्ममात्रे पक्षीकरणे सोऽपि तत्तया गृह्यत इत्यस्ति सामान्यतः सिद्धिरित्यत उक्तम् **नान्या सामान्यतः सिद्धिः**–इति। उभयसिद्ध्यनुभयसिद्धिभ्यामन्यतः सिद्धिर्नाम न काचिदस्ति। न ह्युभयीमपि विधामतिक्रम्य विधान्तरमस्ति।

आत्मत्वजातावपि पक्षीकृतायां यथेष्टसिद्ध्या पक्षत्वानिपातेनाश्रयासिद्धिः तथा सैवाश्रयासिद्धिः स्यात्। निषेधस्य सर्वज्ञत्वादेः क्वचिदप्यसिद्धेरप्रसिद्धविशेषणत्वात्पक्षस्येति व्याचष्टे **प्रमाणेन**–इति। तृतीयं पादं व्याचिख्यासुः शङ्कते **आत्मत्वमात्रेण**–इति। विकल्प्य दूषयति **कोऽस्यार्थः**–इति। भवतोऽसिद्धाप्यस्मदभिमतैव सर्वज्ञसर्वकर्तृव्यक्तिरात्मत्वेनोपलक्षिता किं पक्षीक्रियेत तस्या अप्यात्मत्वोपलक्षितत्वेन वस्तुगत्या सिद्धत्वात्। अथ तदन्या संप्रतिपन्नैव व्यक्तिः, अथ वात्मत्वमात्रमेव। प्रथमे हेत्वसिद्धिरगोचर इति स्यात्। द्वितीये त्विष्टसिद्धिरिति स्यात्। तृतीयेऽपि सैव, आत्मत्वस्यासर्वज्ञ-

प्रकाशः।

**न सर्वज्ञा** इति। परेषां सर्वज्ञाप्रसिद्धेः। अत्र किञ्चिदनभिज्ञत्वमेव साध्यम्। **तत** इति॥ सामान्यलक्षणप्रत्यासत्तेस्तैरनभ्युपगमान्नात्मत्वेनापि तदुपस्थितिरिति भावः॥

प्रकाशिका।

त्वात्। न चैवं शुद्धरूपाभावप्रतीत्यापत्तिः कारणबाधाभावादिति वाच्यम्। शुद्धरूपविशिष्टघटप्रतीत्यापत्तेस्त्वयापि समाधेयत्वात्। न च विशिष्टधीसामग्री शुद्धव्यक्तिविशेषणकज्ञानाजनिकेति तत्र समाधिरिति वाच्यम्। इहाप्यभावज्ञानसामग्री शुद्धप्रतियोगिकाभावज्ञानाजनिकेति समाधेः सत्त्वात्। ननु तथाप्याहार्यमेव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं व्यधिकरणधर्मावच्छिन्नाभावग्रहे कारणमस्त्विति चेन्न। अनाहार्यस्यैव तस्य कारणत्वादित्यन्यत्र विस्तरः। वस्तुतो विरोधिशून्येऽभावसंज्ञायाः पारिभाषिकतापत्तिः, विरोधि च प्रकृते न शृङ्गम्, तस्य तत्समानाधिकरणत्वात्, नापि शशीयत्वविशिष्टं शृङ्गम्। तस्यालीकतया विरोधाप्रतियोगित्वादिति नैतादृगभावस्वीकार इति॥ ३॥

**परेषामिति।** सर्वगोचरप्रत्यक्षाभाव एवात्र साध्यः, अन्यथा शब्दे सर्वगोचरज्ञानसत्त्वेन बाधापत्तेः, तथा सति प्रतियोग्यप्रसिद्धिरिति भावः। **सामान्यलक्षणेति।** इदमुपलक्षणम्। व-

मकरन्दः।

**परेषामिति।** यद्यपि शाब्दादिज्ञानमादाय तेषामपि तत्प्रसिद्धिरस्त्येव, तथापि तथा सति

मात्मत्वेनोपलक्षिता सैव वस्तुगत्या सर्वज्ञविश्वकर्तृव्यक्तिः, अथ तदन्या, आत्मत्वमेव वा पक्षः ? । सर्वत्र पूर्वदोषानतिवृत्तेः । अथायमाशयः । आत्मत्वं न सर्वज्ञसर्वकर्तृव्यक्तिसमवेतं, जातित्वात्, गोत्ववदिति । तदसत् । निषेध्यासिद्धेर्निषेधस्याशक्यत्वात् । तथा चाऽप्रसिद्धविशेषणः पक्ष इत्याश्रयासिद्धिरिति स एव दोषः ॥ ४ ॥

त्वदभ्युपगमैर्लोकप्रसिद्ध्या च प्रसिद्धस्येश्वरस्यासर्वज्ञत्वमकर्तृत्वञ्च साध्यत इति चेन्न ।

**आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ॥**
**आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥**

---

बोधनी ।

त्वासर्वज्ञकर्तृकत्वयोः सिद्धत्वादिति । तुरीयपादव्याचिख्यासया शङ्कते **अथायम्**-इति । तत्राश्रयासिद्धिसिद्धसाध्यते न स्यातामिति भावः । **तदसत्**-इति । न हि मीमांसकस्य सर्वज्ञत्वादिकं क्वचित्सिद्धमिति । किमतोऽनुमानस्येत्यत आह **तथा च**-इति । साध्यविशिष्टस्य पक्षत्वाद् विशेष्यप्रसिद्धावपि विशेषणाप्रसिद्धावपि विशिष्टस्यासिद्धेराश्रयस्य पक्षस्याभावेन हेतुराश्रयासिद्धो भवतीति ॥ ४ ॥

**त्वदभ्युपगमैः**-इति । नैयायिकाभ्युपगमैर्लोकप्रसिद्ध्या चाश्रयः सेत्स्यतीति । **न**-इति । किमाश्रयग्राहकोऽयमागमादिः प्रमाणमाभासो वा ? प्रमाणत्वे तत एव धर्मिग्राहकप्रमाणात् बाधितविषयं निषेधानुमानमात्मानमेव नासादयेत् । आभासे तु पूर्वोक्ताश्रयासिद्धिरागमादिप्रमाणोपन्यासेन तिरोभूता तत्परित्यागे पुनरुद्भूता स्यादिति ।

प्रकाशः ।

**सर्वज्ञेति** ॥ आत्मत्वपक्षेऽप्यसर्वज्ञत्वे क्षित्याद्यकर्तृकत्वे च साध्ये सिद्धसाधनमित्यर्थः । न चात्मत्वमसर्वज्ञत्वव्याप्यं ज्ञानत्वमनित्यत्वव्याप्यमिति वाच्यम् । विपक्षे बाधकाभावात् । अन्यथा, मूर्तत्वमनवयवित्वव्याप्यमिति परमाणुरपि न सिद्ध्येदिति भावः ॥ **तथा चेति** ॥ जिज्ञासितधर्मिणो धर्मिणः पक्षत्वात्तदभावेनाश्रयासिद्धिरित्यर्थः ॥ ४ ॥

**आगमादेरिति** ॥ न चाऽऽगमादेर्धर्म्यंशे प्रामाण्येऽपि अन्यत्र न प्रामाण्यमिति वाच्यम् । तद्रूपेणाप्यस्मदादितदन्यपक्षत्वे सिद्धसाधनासिद्धिभ्यां व्याघातादिति भावः ॥ ५ ॥

प्रकाशिका ।

स्वतस्त्वयापि तदुपस्थितौ तस्य सर्वज्ञत्वे बाधः, असर्वज्ञत्वे सिद्धसाधनमिति दूषणं द्रष्टव्यम् । **जिज्ञासितेति** प्राचीनमतेनेदम् ॥ ४ ॥

**तद्रूपेणापीति** । सर्वज्ञत्वादिधर्मांशेऽप्रामाण्येऽपि धर्मिणः सर्वज्ञस्य सिद्धिरसर्वज्ञस्य वा,

मकरन्दः ।

बाधापत्तेः, सर्वज्ञत्वस्य सर्वविषयकप्रत्यक्षाश्रयपरतयैव प्रसिद्धिर्बोध्या । **जिज्ञासितेति** । प्राचीनमतेनेदम् ॥ ४ ॥

**तद्रूपेणेति** । यद्यपि धर्मिमात्रसिद्धौ न सिद्ध्यसिद्धिव्याघातः, तथाप्याप्तोपात्तविशेषण-

टिप्पणी ।

**तद्रूपेणेति** । आगमसिद्धधर्मिमात्ररूपेणेत्यर्थः । अभेदे तृतीया । यद्वा तद्रूपेणात्मत्वरूपेणास्मदाद्यस्मदाद्यन्यपक्षत्व इत्यर्थः । आगमस्य प्रामाण्येऽलौकिकधर्मिणीवालौकिकधर्मेऽपि तत्

निगदव्याख्यातमेतत् ॥ ५ ॥

चार्वाकस्त्वाह, किं योग्यताविशेषाग्रहेण ? । यन्नोपलभ्यते तन्नास्ति, विपरीतमस्ति । न चेश्वरादयस्तथा । ततो न सन्तीत्येतदेव ज्यायः । एवमनुमानादिविलोप इति चेत् । नेदमनिष्टम् । तथा च लोकव्यवहारोच्छेद इति चेन्न । सम्भावनामात्रेण तत्सिद्धेः । संवादेन च प्रामाण्याभिमानादिति ।

अत्रोच्यते—

**दृष्ट्यदृष्ट्योः क्व सन्देहो भावाभावविनिश्चयात् ॥**
**अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥**

सम्भावना हि सन्देह एव । तस्माच्च व्यवहारस्तस्मिन् सति स्यात् । स एव

बोधनी ।

संग्रहस्याविवरणे कारणमाह—**निगद्**-इति । निगदः पाठः, स एव व्याख्यानमस्येति ॥ ५ ॥

तदेवमनुपलब्धिमात्रं न बाधकं योग्यानुपलब्धिस्तु नास्तीति मीमांसके निरस्ते परमनास्तिकश्चार्वाकः प्रत्यवतिष्ठत इत्याह-**चार्वाकस्तु**-इति। सिद्धान्ती शङ्कते **एवम्**-इति । इतर आह **नेदम्**-इति ।प्रत्यक्षैकप्रमाणवादिनो हि वयमिति ।**तथा च**-इति। प्रायशो व्यवहाराणामनुमानाधीनत्वादिति । **न**-इति । धूमादिदर्शनेऽग्निसंभावनामात्रेण व्यवहरन्ति न तु निश्चयात्, अतो न तदर्थमनुमानप्रामाण्यमङ्गीकर्त्तव्यमिति । कथं तर्हि व्यवहर्तृणां प्रमाणमूलोऽयं व्यवहार इत्यभिमान इत्यत्राह **संवादेन च**-इति । संभावनामात्रेण प्रवर्त्तमाना यादृच्छिककार्यसंवादेन प्रवर्त्तकविज्ञानस्य प्रामाण्यमभिमन्यन्ते न तु निश्चायकत्वादिति ।

**अत्रोच्यते**—इति । संदेहात् प्रवृत्तिरिति तावन्न संभवति, भवत्पक्षे संदेहस्यैवासंभवात् । दृष्टौ सत्यामदृष्टौ वा सत्यां क्व कस्मिन्विषये दृष्टेऽदृष्टे वा, संदेहः स्यादुभयोरप्युभयत्रापि न संभवति । संशयस्य हेतुर्विषयश्च नास्तीत्यर्थः । कुतः भावाभावनिश्चयात् दृष्ट्यदृष्ट्योरित्येव दर्शनदशायां भावावधारणादर्शनदशायां वाऽभावावधारणात् अतो व्यवहारार्थमनुमानादिकमेवाङ्गीकरणीयं, तच्चानुपलम्भमात्रेणाभावनिश्चये दुर्लभम् । न केवलम् अनुमानादिकमेव, प्रत्यक्षमपि तद्धेतौ चक्षुरादावनुपलब्धिमात्रेण बाधिते कारणाभावात् कार्याभाव इति न्यायेन दुर्लभमिति सर्वोपप्लव इति ।

ननु मा नाम भूत्संदेहः संभावनया व्यवहारमभ्युपगच्छतः किमायातमिति शङ्कामपनुदन्व्याचष्टे

प्रकाशः ।

**सम्भावने**ति ॥ उत्कटकोटिकसंशयमात्रेणेत्यर्थः ॥

**दृष्ट्यदृष्ट्यो**रिति, सप्तमीद्विवचनान्तम् । दर्शने तत्सत्त्वनिश्चयाद् अदर्शने चाभावनिश्चयाच्च सन्देहः प्रत्यक्षहेतौ गोलकादावदृष्ट्या अनुपलब्ध्या, बाधिते हेत्वभावात् प्रत्यक्षमपि न स्यादित्यर्थः ॥

प्रकाशिका ।

असिद्धिरेव वा, आद्ये बाधो, द्वितीये सिद्धसानम्, तृतीय आश्रयासिद्धिरित्यर्थः । वस्तुत आप्तोक्तत्वादेर्धर्म्म्यंशवद् धर्म्मांशेऽपि तस्य प्रामाण्यमिति भावः ॥ ५ ॥

मकरन्दः ।

र्म्मांशेऽपि प्रामाण्यमन्यथा न धर्म्यंशेऽपीत्याश्रयासिद्धिरेवेति भावः । अस्मदादिपक्षत्वे सिद्धसाधनं बोध्यम् ॥ ५ ॥

टिप्पणी ।

स्यादिति सर्वज्ञत्वाद्यभावसाधने व्याघातः, धर्म्यंशेऽप्रामाण्ये धर्म्मांशे तत्स्यादिति धर्म्मसिद्धौ व्याघात इति भावः ॥ ५ ॥

**तु कुतः ? । दर्शनदशायां भावनिश्चयात्, अदर्शनदशायामभावावधारणात् । तथा च गृहाद् बहिर्गतश्चार्वाको वराको न निवर्त्तेत । प्रत्युत, पुत्रदारधनाद्यभावावधारणात् सोरस्ताडं शोकविकलो विक्रोशेत् । स्मरणानुभवान्नैवमिति चेन्न । प्रतियोगिस्मरण एवाभावपरिच्छेदात्, परावृत्तोऽपि कथं पुनरासादयिष्यति । सत्त्वादिति चेदनुपलम्भकालेऽपि तर्हि सन्तीति न तावन्मात्रेणाभावावधारणम् । तदैवोत्पन्ना इति चेन्न । अनुपलम्भेन हेतूनां बाधात् । अबाधे वा स एव दोषः । अत एव प्रत्यक्षमपि न स्यात्, तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात् । उपलभ्यन्त एव**

---

बोधनी ।

**संभावना हि**-इति । ततः किमित्यत आह **तथा च**-इति । गृहान्तर्वर्त्तिनोऽपि निर्गतस्याभावावधारणात् विलीयेयुरिति भावः । **स्मरण**-इति । बहिर्निर्गतेनापि पुत्रादीनां स्मरणेनोपलम्भात् नोक्तः प्रसङ्ग इति । **न**-इति । प्रतियोगिस्मरणसहकृतस्यैवानुपलम्भस्याभावविशेषपरिच्छेदहेतुत्वान्न स्मरणोपलम्भो न केवलमभावपरिच्छेदं प्रतिबध्नाति प्रत्युतोन्मथ्नातीति यदृच्छया परावृत्तोऽपि न पुनः पुत्रादीनासादयेदित्याह **परावृत्तोऽपि**-इति । तेऽपि नासादयेयुरिति भावः । ननु परावृत्तिकाले तेषां सत्त्वादासादयिष्यन्तीत्याह **सत्त्वात्**-इति । अनुपलम्भकाल इति स्पष्टः परिहारः नानुपलम्भकालेऽपि सन्तः पुत्रादयः पुनरासाद्यन्ते । किन्तु यदोपलभ्यन्ते तदैवोत्पन्ना अन्य एवेत्याह **तदैव**-इति । **न**-इति । तदुत्पत्तिहेतूनां तदानीमनुपलम्भेन बाधितत्वात्तदुत्पत्तेरसंभवादनुपलम्भेऽपि वा तेषामबाधे स एवानुपलम्भमात्रेण नाभावावधारणमिति दोषः स्यादिति संग्रहस्योत्तरमर्थं व्याचष्टे **अत एव**-इति । यत एवानुपलम्भमात्रेणासत्त्वाङ्गीकार इति । **उपलभ्यन्ते**-इति । स्पष्टम् । तन्मतमङ्गीकृत्य-

प्रकाशः ।

**तथा चेति** ॥ पुत्रादिभिस्तस्यादर्शनात् स न स्यादिति गृहं न प्रत्यावर्ततेत्यर्थः ॥ **प्रत्युतेति** ॥ पुत्रादेरदर्शनादित्यर्थः ॥

ननु नाप्रत्यक्षं प्रमाणमिति चार्वाकसिद्धान्तादनुपलब्धिः प्रत्यक्षसहकारिणी । न च गेहाद्बहिर्गमनेऽधिकरणेन सहेन्द्रियसन्निकर्षोऽस्तीति न पुत्राद्यभावनिश्चयः स्यात् । सन्निकृष्टे देशे चाभावनिश्चयेऽपि ध्वंसानिश्चयान्न शोकः स्यात् । अत एव, पर्वते परभागेन सह इन्द्रियाऽसन्निकर्षाद् नाग्न्यभावनिश्चय इति तत्र संशयादनुमानप्रवृत्तिः । अत्राहुः । अधिकरणज्ञानमात्रमभावधीहेतुर्न तु तदिन्द्रियसन्निकर्षोऽपि । अत एव, देवताद्यभावस्तदधिकरणासन्निकर्षेऽपि गृह्यते इति चार्वाकसिद्धान्तमाश्रित्योक्तम् ॥

पुत्रादेः स्मरणान्नैवं करोतीत्याह ॥ **स्मरणेति** ॥ स्मरणादिति वक्तव्ये अनुभवग्रहणं तत्र प्रमाणसूचनार्थम् । पुत्रादिस्मरणं तदभावग्रहेऽनुकूलमेव, प्रतियोगिज्ञानं विना तदग्रहादित्याह ॥ **प्रतियोगीति** ॥ **अनुपलम्भकाल** इति ॥ तथा चानुपलब्धिमात्रमभावसंशये हेतुर्न तन्निश्चायकमित्यर्थः । हेतूनां पुत्राद्युत्पादकानामित्यर्थः ॥ **स एवेति** ॥ नानुपलब्धिमात्रेणाभावनिश्चय इत्यर्थः ॥ **अत एवेति** ॥ हेतूनां बाधादेवेत्यर्थः । ननु चक्षुरादीनामपि स्वोपलब्धिकाले सत्त्व-

प्रकाशिका ।

**सप्तमीति** । सति सप्तमीत्यर्थः । **संशयादनुमानप्रवृत्तिरिति** । भवतां नैयायिकानामिति

टिप्पणी ।

**अनुमानप्रवृत्तिरिति** । पराभ्युपगतानुमानजन्यप्रवृत्तिः ।

**गोलकादय इति चेन्न। तदुपलब्धेः पूर्वं तेषामनुपलम्भात्। न च यौगपद्यनियमः। कार्यकारणभावादिति॥**

**एतेन, न परमाणवः सन्ति अनुपलब्धेः। न ते नित्या निरवयवा वा पार्थिवत्वात् घटादिवत्। न पाथसीयपरमाणुरूपादयो नित्याः, रूपादित्वात्, दृश्यमानरूपादिवत्। न रूपत्वपार्थिवत्वादि नित्याकार्यातीन्द्रियसमवायि जातित्वात् शृङ्गत्ववत्। नेन्द्रियाणि सन्ति, योग्यानुपलब्धेः। अयोग्यानि च शशशृङ्गप्रतिबन्दिनिरसनीयानीत्येवं स्वर्गापूर्वदेवतानिराकरणं नास्तिकानां निरसनीयम्।**

**मीमांसकश्च तोषयितव्यो भीषयितव्यश्चेति॥ ६॥**

**यद्येवमनुपलम्भेनादृश्यप्रतिषेधो नेष्यते, अनुपलभ्योपाधिप्रतिषेधोऽपि तर्हि**

---

बोधनी।

वाह **न**-इति। गोलकादयः स्वोपलब्धेः पूर्वमनुपलम्भेनासन्तः कथं स्वस्वविषयमुपलम्भमुत्पादयेयुरिति। तर्हि स्वोपलम्भकाल एव सन्तः स्वविषयमुपलम्भान्तरमारभेरन्नित्यत्राह **न च**-इति। न हि चक्षुरादीनां स्वविषयोपलम्भस्य च कार्यकारणभावाद्यौगपद्यं भवतीति।

एवं तावदनुपलम्भमात्रेण ईश्वरनिषेधोऽशक्य इत्युक्तम्, इदानीमनेनैव मार्गेण तेषां परमाण्वादिनियमोऽपि न सिध्यतीत्याह **एतेन**-इति। एतेन निरसनीयमिति संबन्धः। तत्र परमाणूनां परमेश्वरस्येव योग्यानुपलम्भाभावेन प्रत्यक्षेण बाधः, तत्सर्वज्ञत्वसर्वकर्तृत्वयोरिव तेषां नित्यत्वनिरवयवत्वयोर्निषेधे धर्मिग्राहकप्रमाणबाधः। तज्ज्ञानं पक्षीकृत्य सर्वविषयत्वनिषेधवत् पाथःपरमाणुगतरूपादिविशेषगुणानां नित्यत्वनिषेधे चाश्रयासिद्धिः, आत्मत्वं पक्षयित्वा तस्य सर्वज्ञसर्वकर्तृव्यक्तिसमवायनिषेधवद्रूपत्वादेरतीन्द्रियाश्रयत्वनिषेधे चाप्रसिद्धविशेषणः पक्षः, इन्द्रियासत्त्वहेतोर्योग्यानुपलम्भस्य विशेषणासिद्धिः। यद्ययोग्यानीन्द्रियाणि सन्ति तर्हि शशशृङ्गमप्ययोग्यमस्ति चेति प्रतिबन्दिग्रहणेनेमानि निरसनीयानि इत्येतदपि परमात्मयोग्यत्वप्रतिपादनेन निरसनीयम्। तथा स्वर्गादिनिराकरणमपि निरसनीयम्। स्वर्गादिनिराकरणप्रदर्शनेन मीमांसको भीषयितव्यः, तन्निषेधं दर्शयित्वा च परितोषयितव्यः। यद्वा, ईश्वरनिराकरणनिषेधेन तस्य भीषणमितरनिराकरणनिषेधेन तोषणमिति॥६॥

चार्वाकः सिद्धान्तिनं प्रत्याह **यद्येवम्**-इति। मा भूत्प्रत्यक्षानुपलभ्यपिशाचाद्युपाधिनिषेधः, ततः

प्रकाशः।

मन्यदा त्वसत्त्वमिष्यत एवेत्यत आह। **न चेति**। उपलम्भेन्द्रिययोर्युगपदुत्पन्नयोः पौर्वापर्याभावादित्यर्थः। **एतेनेति**॥ अनुपलम्भमात्रस्याऽसाधकत्वेन हेत्वन्तरस्य चाश्रयासिद्ध्यादिनेत्यर्थः॥

**मीमांसकश्चेति**। अनुपलम्भमात्रस्याभावासाधकत्वादपूर्वादिसिद्ध्या तोषणम्। योग्यानुपलम्भस्य बाधकत्वेनाऽयोग्यपरमात्माऽबाध इति भीषणम्॥ ६॥

यद्यनुपलम्भमात्रान्नाभावनिश्चयः, तदाऽतीन्द्रियोपाधिशङ्कया व्याप्त्यनिश्चयान्नानुमानमिति न तत ईश्वरसिद्धिरित्याह—

**यद्येवमिति**। अनुमानाभावे तद्ग्राह्यप्रामाण्यं शब्दाद्यपि न तत्र मानमित्याह।

प्रकाशिका।

शेषः। मम तु चार्वाकस्यात एव तत्र संशय इति भावः। **उपलम्भेन्द्रिययोरिति**। प्रत्यक्षज्ञानस्य विषयजन्यत्वात्तदन्यज्ञानस्य च त्वयानभ्युपगमादिति भावः॥ ६॥

मकरन्दः।

**उपलम्भेन्द्रिययोरिति**। प्रत्यक्षस्य विषयजन्यत्वनियमात्तदन्यज्ञानस्य त्वयानभ्युगमादिति भावः॥ ६॥

टिप्पणी।

**अयोग्यपरात्माऽबाध इति भीषणमिति**। ईश्वरसिद्धेरीश्वरानङ्गीकर्तुस्तस्य भयम्॥ ६॥

तद्ग्राह्यप्रामाण्यं **शब्दाद्यपि न तत्र मानमिति**। अनुपलभ्यमानार्थे॥

नैष्फल्यः। तथा च कथं तथाभूतार्थसिद्धिरपि अनुमानबीजप्रतिबन्धासिद्धेः। तदभावे शब्दादेरप्यभावः। प्रामाण्यासिद्धेः। सेयमुभयतःपाशा रज्जुः॥

अत्र कश्चिदाह। मा भूदुपाधिविधूननं, चतुःपञ्चरूपसम्पत्तिमात्रेणैव प्रतिबन्धनिर्वाहात्। तस्याश्च सपक्षासपक्षदर्शनादर्शनमात्रप्रमाणकत्वात्। यत्र तु तद्भङ्गः, तत्र प्रमाणभङ्गोऽप्यावश्यकः। न ह्यस्ति सम्भवो दर्शनादर्शनयोरविप्लवे हेतुरुपप्लवत इति। अप्रयोजकोऽपि तर्हि हेतुः स्यादिति चेत्, भूयोदर्शनाविप्लवे कोऽयमप्रयोजको नाम ?। न तावत् साध्यं प्रत्यकार्यमकारणं वा। सामान्यतो दृष्टानुमानस्वीकारात्। नापि सामग्र्यां कारणैकदेशः। पूर्ववदभ्युपगमात्। नापि व्यभिचारी। तदनुपलम्भात्। व्यभिचारोपलम्भे वा स एव दोषः। न च शङ्कितव्यभिचारः।

---

बोधनी।

किमित्यत्राह **तथा च**-इति। तथाभूतस्य = यथाज्ञानमवस्थितस्य। यद्वा, अनुमित्सितस्य। यद्वा अनुमित्सितस्य जगत्कर्तुरिति। कथमसिद्धिरित्यत्राह **अनुमान**-इति। निरुपाधिको हि संबन्धः प्रतिबन्ध इति। अनुमानाभावे शब्दादेरपि प्रमाणस्याभाव इत्याह **तदभावे**-इति। प्रामाण्यग्राहिणस्तज्जातीयत्वानुमानादेरपि प्रामाण्याभावापराधेन शब्दादिप्रामाण्यासिद्धेरिति। एवं चानुपलम्भमात्रस्यानिषेधकत्वेऽनुमानाद्युच्छेदादीश्वरो न सिध्येत्, निषेधकत्वे तु तत एव निषिध्येतेति। सेयं शिरोद्वयेऽपि पाशवती रज्जुरित्याह **सेयम्**-इति।

अत्रैकदेशिनः परिहारं दूषयितुमुपन्यस्यति **अत्र कश्चित्**-इति। किमनेनोपाधिविधूननव्यसनेन केवलान्वयिकेवलव्यतिरेकिणोश्च रूपसंपत्तिमात्रेण प्रतिबन्धसिद्धेर्न हि तयोर्विपक्षसपक्षाभावेन तद्व्यावृत्त्यनुवृत्ती संभवतः। अन्वयव्यतिरेकिणस्तु पञ्चरूपसंपत्तिमात्रेण तस्य सपक्षविपक्षयोर्भावेन तदनुवृत्तिव्यावृत्त्योः संभवादिति। न च रूपसंपत्त्यवधारणेऽप्युपाधिविधूननमुपयुज्यत इत्याह **तस्याश्च**-इति। कथं तत्प्रमाणकत्वं तस्या इत्यत्राह **यत्र तु**-इति। तयोर्भङ्गे प्रमाणभङ्गस्यावश्यकत्वादिति। कस्मादेवमित्यत्राह **न हि**-इति। हेतोश्चतुःपञ्चानां रूपाणां विप्लवो हेतुविप्लवः। प्रमाणविप्लवाविप्लवयोर्हि प्रमेयविप्लवाविप्लवौ भवत इति भावः। यदि दर्शनादर्शनाभ्यामेव प्रतिबन्धसिद्धिस्तर्हि मैत्रीतनयत्वादिरपि हेतुः स्यादित्याह **अप्रयोजकः**-इति। तयोरविप्लवे तु नाप्रयोजको नाम कश्चिदस्तीत्याह **भूयोदर्शन**-इति। स एवाप्रयोजकत्वेन संभावितानाशङ्क्य निराकरोति **न तावत्**-इति। अनुमानसूत्रे पूर्ववच्छेषवदिति कार्यकारणानुमाने परिगृह्य सामान्यतो दृष्टमित्यकार्याकारणभूतस्य सलिलादिविषयबलाहकाद्यनुमानस्यापि स्वीकारादिति। **नापि**-इति। सामग्री कार्यलिङ्गं तदेकदेशोऽप्रयोजकः स्यादित्यपि न युक्तम्। पूर्वं = कारणं यस्यास्ति लिङ्गत्वेन तत्पूर्ववदिति। पूर्ववतोऽपि तत्र सूत्रेऽनुमानत्वेन स्वीकारादिति। **नापि व्यभिचारी**-इति। न हि मैत्रीतनयत्वादेर्व्यभिचार उपलभ्यते तदुपलम्भे वा व्यभिचार एव दोषः स्यान्नाप्रयोजकत्वमिति। **न च**-

प्रकाशः।

**तदभाव** इति। **चतुःपञ्चे**ति। पक्षसत्त्वसपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि केवलान्वयिनि, सपक्षसत्त्वाभावे विपक्षासत्त्वं केवलव्यतिरेकिणि, उभयन्तु रूपमन्वयव्यतिरेकिणीति तत्र पञ्चरूपाणि। **तद्भङ्ग** इति। यत्र उक्तरूपसम्पत्तिभङ्गस्तत्र दर्शनादर्शनात्मकप्रमाणभङ्गोऽप्यावश्यकः, अन्यथा तयोर्निर्विषयतापात इत्यर्थः। **सामान्यत** इति। रूपरसयोरकार्यकारणभूतयोरपि व्याप्त्यभ्युपगमादित्यर्थः। **पूर्ववदि**ति। पूर्वं कारणं तदस्यास्ति विषयतया लिङ्गज्ञानस्य, तत्तथा।

निर्वीजशङ्कायाः सर्वत्र सुलभत्वात्। नापि व्याप्यान्तरसहवृत्तिः। एकत्रापि साध्येऽनेकसाधनोपगमात्। नाप्यल्पविषयः, धूमादेस्तथाभावेऽपि हेतुत्वात्। ननु धूमो वह्निमात्रे अप्रयोजक एव, तन्निवृत्तावपि तदनिवृत्तेः। आर्द्रेन्धनवन्तं वह्निविशेषं प्रति तु प्रयोजकः, तन्निवृत्तौ तस्यैव निवृत्तेरित्येतदप्ययुक्तम्। सामान्याप्रयोजकतायां विशेषसाधकत्वायोगात्तदसिद्धौ तस्यासिद्धिनियमात्। सिद्धौ वा सामान्यविशेषभावानुपपत्तेः। नापि क्लृप्तसामर्थ्येऽन्यस्मिन् कल्पनीयसामर्थ्योऽप्रयोजकः, नाशे कार्यत्वसावयवत्वयोरपि हेतुभावादिति॥

---

बोधनी।

इति। तथा च सर्वोऽपि हेतुरप्रयोजकः स्यादिति। नापि **व्याप्यान्तर**-इति। स्पष्टम्। **नाप्यल्पविषय**-इति। न हि धूमादिः सपक्षव्यापक इति। स एव तत्र किञ्चिदाशङ्क्य निराकरोति **ननु**-इति। न हि धूमः स्वनिवृत्तावप्यनिवर्तमाने वह्नौ प्रयोजको नामेति। कुत्र तर्हि प्रयोजक इत्यत्राह **आर्द्रेन्धनवन्तम्** इति। तस्यैव वह्निविशेषस्यैवेति। कुतो युक्तमित्यत्राह **सामान्य**-इति। न हि संभवति वह्निविशेषं साधयति न तु सामान्यमिति सामान्यासिद्धौ विशेषस्यासिद्धेर्नियतत्वात्। यदि वा तदापि विशेषः सिध्येन्न तर्हि सामान्यविशेषभावः स्यात्, न हि तस्मिन्नसिद्धेऽपि सिध्यतस्तद्विशेषकत्वमिति। सकलसपक्षवर्त्तिनि हेत्वन्तरे सत्येकदेशवृत्तिरप्रयोजको यथा निषिद्धत्वे सति हिंसात्वम्। निषिद्धत्वं हि सकलञ्जभक्षणादेरप्यधर्मत्वसिद्ध्यर्थं क्लृप्तसामर्थ्यमिति। तदेव सर्वत्राधर्मत्वे प्रयोजकं हिंसात्वं च नैवंविधमप्रयोजकमित्याशङ्क्याह **नापि क्लृप्त**-इति।

प्रकाशः।

कारणैकदेशस्यापि तदितराशेषकारणव्याप्यस्यान्त्यतन्तुसंयोगादेः पटादौ लिङ्गत्वाङ्गीकारादित्यर्थः। **निर्वीजे**ति। साध्याभावसहचारदर्शनस्य शङ्काबीजस्याभावात्, भावे वा व्यभिचार एव स्फुटो दोष इत्युक्तमित्यर्थः। **अल्पविषय** इति। व्यापकवह्निनिष्ठात्यन्ताभावप्रतियोगीत्यर्थः। **तन्निवृत्ता**विति। धूमनिवृत्तावपि वह्न्यनिवृत्तेरित्यर्थः। **तस्यैवे**ति। आर्द्रेन्धनप्रभववह्नेरित्यर्थः। **सामान्ये**ति। वह्निसामान्याव्याप्यत्वे तद्विशेषव्याप्यतैव न स्यात्, सामान्यस्य विशेषव्यापकत्वादित्यर्थः। तथा च, विशेषव्याप्यत्वे सामान्यव्याप्यत्वं ध्रुवमिति भावः। **नाश** इति। गुणादिनाशे भावकार्यत्वस्य प्रयोजकत्वे क्लृप्तेऽपि द्रव्यनाशे तद्व्याप्यसावयवत्वस्यापि तत्त्वाङ्गीकारादित्यर्थः।

प्रकाशिका।

ननु कारणं व्यापकं तत्कथं व्याप्ये लिङ्गमत आह। **कारणैकदेशस्यापीति**। **साध्याभावसहचारदर्शनस्येति**। यद्यपि साध्याभावसहचारो व्यभिचार एवेति तद्दर्शनं न तत्तच्छङ्काबीजम्। तथाप्युपाधिशङ्काबीजं तत्, उपाधेर्व्याप्त्यभावात्मकत्वादिति मन्तव्यम्। ध्वंसेऽतिप्रसक्तं कार्यत्वमिति भावपदेन पूरयित्वा व्याचष्टे। **भावकार्यत्वस्येति**। यद्यपि कल्पनायां पौर्वापर्यनियमे

मकरन्दः।

ध्वंसे व्यभिचारेण भावपदमन्तर्भावयति। **भावकार्यत्वस्येति**। यद्यप्यत्र पौर्व्वापर्य्यनियमे मानाभावः, तथापि सामान्यविशेषयोः प्रथममुत्सर्गतः सामान्यस्योपस्थितिरित्याशयेन तथोक्तम्।

टिप्पणी।

**साध्याभावसहचारदर्शनस्य शङ्काबीजस्येति**। हेतुतावच्छेदकाश्रये यत्किञ्चिद्धर्म्मिणि साध्याभावसहचारग्रहस्य व्यभिचारशङ्काप्रयोजककोटिद्वयसहचरितहेतुतावच्छेदकरूपसाधारणधर्म्मदर्शनसम्पादकतया पक्षस्थहेतौ व्यभिचारशङ्काप्रयोजकत्वमिति भावः॥ **भावे वा व्यभिचार एवेति**। पक्षधर्म्महेत्वसाधारणधर्म्मेण हेतुत्वस्य सहचारग्रहाभावेनासम्भवात् सामान्यधर्म्मेणैव हेतुत्वमभ्युपेयं तत्र व्यभि-

**तदेतदपेशलम्** । कथं हि विशेषाभावात् कश्चिद्व्यभिचरति, कश्चिच्च नेति शक्यमवगन्तुम् । अतो निर्णायकाभावे सति साहित्यदर्शनमेव शङ्काबीजमिति क्वासौ निर्बीजा । एवं सत्यतिप्रसक्तिरपि चार्वाकनन्दिनो नोपालम्भाय । स्वभावादेव कश्चित् किञ्चिद्व्यभिचरति, कश्चिच्च नेति स्वभाव एव विशेष इति चेत् केन चिह्नेन पुनरसौ निर्णेय इति निपुणेन भावनीयम् । भूयोदर्शनस्य शतशः प्रवृत्तस्यापि भङ्गदर्शनात् । यत्र भङ्गो न दृश्यते तत्र तत् तथेति चेत् । आपाततो न दृश्यते इति सर्वत्र कालक्रमेणापि न द्रक्ष्यते इति को नियन्तेति । तस्मादुपाधितद्विरहावेव व्यभिचाराव्यभिचारनिबन्धनं, तदवधारणञ्चाशक्यमिति ॥

---

बोधनी ।

अत्र सामर्थ्यं व्याप्तिस्तस्या अनुमितिज्ञानोत्पादने लिङ्गसहकारित्वादिति तदेकदेशिमतं पूर्वपक्षी दूषयति—**तदेतत्** इति । किमुपाधिविधूननेन भूयःसाहचर्यदर्शने सति कोऽयमप्रयोजको नामेत्येतदशोभनं शङ्कितव्यभिचारस्याप्रयोजकत्वादुपाधिविधूननायत्तत्वाच्च शङ्कानिरासस्येति भावः । तदेवोपपादयति—**कथं हि** इति । निश्चिताव्यभिचारो हि हेतुर्गमकः, अन्यथातिप्रसङ्गात् । तन्निश्चयश्च न साहचर्यमात्रात्सिध्यति भूयःसहचरितानामपि क्वचिद् व्यभिचारदर्शनात्, तस्माद् व्यभिचार्यव्यभिचारिणोः साहचर्ये विशेषाभावात्तन्मात्रेणाव्यभिचारनिश्चयानुपपत्तेर्व्यभिचारशङ्कानिरसनहेतुः कश्चिदन्वेष्टव्यः, स चोपाधिविधूननमेवेति भावः । तत्र यदुक्तं निर्बीजशङ्का न युक्तेति तदप्यत एव निरस्तमित्याह—**अत** इति । निर्णायकविशेषादर्शने सति साहचर्यमेव व्यभिचार्यव्यभिचारिणोः साधारणधर्मत्वात्संशयहेतुर्भवतीति । एवं च यदि भूयोदर्शने सत्यपि शङ्का स्यात् सर्वत्रापि सा स्यादित्येकदेशिना चार्वाकं प्रत्यापादिताऽतिप्रसक्तिरनुमानप्रामाण्यमनिच्छतस्तस्य नोपालम्भाय भवति प्रत्युत नन्दनायेत्याह—**एवं सति** इति । यद्वा, अनुमानमिच्छतः सिद्धान्तिनो नोपालम्भाय तस्योपाधिविधूननेन शङ्कानिवारणाभ्युपगमादिति । एकदेश्याह—**स्वभावादेव** इति । तेनाव्यभिचारः स्वभावमात्राधीनः न तु तदर्थमन्योऽन्वेष्टव्य इति । इतर आह—**केन** इति । सत्यमेवं, स तु स्वभावो निर्णीत एव व्यभिचारशङ्कां निवर्त्तयतीति तन्निर्णयार्थमन्योऽन्वेष्टव्य इति । तर्हि भूयोदर्शनमेवास्तु निर्णायकमित्यत्राह—**भूयोदर्शनस्य** इति । शङ्काया एव बीजमेतदित्युक्तमिति भावः । **यत्र** इति । तद् = अदृष्टभङ्गम् । तथा अव्यभिचारस्वभावम्—इति । **आपाततः** इति । सर्वत्र सर्वदा व्यभिचारो न भूयोदर्शनमात्रात्सिध्यतीति तत एवं वक्तव्यमित्याह—**तस्मात्** इति । तर्ह्यनुपलम्भे नोपाधिविरहोऽवधार्यत इत्यत्राह—**तदवधारणम्** इति । अनुपलम्भमात्रस्य निषेधकत्वाभ्युपगमादिति ।

प्रकाशः ।

**कथं हीति** । सहचारदर्शनस्य व्यभिचार्यव्यभिचारिसाधारणत्वात्तदेव विशेषादर्शनसहकृतं व्यभिचारशङ्काबीजमित्यर्थः । **एवं सतीति** । "अवश्यं शङ्कया भाव्यं नियामकमपश्यताम्"* इति चार्वाकोक्तातिप्रसक्तिर्नोपालम्भाय, शङ्काबीजस्य सहचारदर्शनस्य सत्त्वादित्यर्थः । यथा किञ्चित् कस्यचित् कार्यं कारणं चेत्यत्र स्वभाव एव नियामकः, तथा किञ्चित् कस्यचिद्व्याप्यं व्यापकं चेत्यनीत्याह । **स्वभावादेवेति** । स स्वभावविशेष एव कुतोऽवधार्य इत्याह । **केनेति** । **भूयोदर्शनस्येति** । पार्थिवत्वलोहलेख्यत्वयोरपि व्यभिचारदर्शनादित्यर्थः । अनन्यगतिकतयोपाधिविरह एव तदुपायः । स च दुरवधारण इत्याह । **तस्मादिति** ।

प्रकाशिका ।

मानाभावः, तथापि गुणादिसाधारण्यार्थमवश्यकल्पनीयमेवात्र क्लृप्तत्वम् । **सहचारदर्शनेति** ।

मकरन्दः ।

**सहचारदर्शनस्येति** । शङ्कितव्यभिचार एवाप्रयोजक इति भावः । स उपाध्यभावः । नन्वनौ-

**ननु यः सर्वैः प्रमाणैः सर्वदाऽस्मदादिभिर्यद्वत्तया नोपलभ्यते नासौ तद्वान्। यथा बकः श्यामिकया, नोपलभ्यते च वह्नौ धूम उपाधिमत्तयेति शक्यमिति चेन्न। अस्याप्यनुमानतया तदपेक्षायामनवस्थानात्। "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः" सर्वदेत्यसिद्धेः।**

**तादात्म्यतदुत्पत्तिभ्यां नियम इत्यन्ये।**

---

**बोधनी।**

तर्ह्यनुमानाभिपेत्स्यत इत्याह—**ननु** इति। वह्नौ=वह्निसंबन्ध इति। **न** इति। अस्याप्यनुमानस्योपाध्यभावनिश्चयायानुमानान्तरापेक्षायां तस्य तस्यापीत्यनवस्थेति। किं च, सर्वैः सर्वदोपाधिमत्तया धूमस्यानुपलम्भो नासर्वज्ञेन निश्चेतुं शक्यत इति संदिग्धासिद्धो हेतुरित्याह—**सर्वादृष्टेश्च** इति। अस्तु तर्हि स्वेनैकेनानुपलम्भो हेतुस्तत्राह—**स्वादृष्टेः** इति। न ह्येकेन तद्वत्तानुपलम्भस्तदभावव्याप्त इति सर्वदा स्वादृष्टिरप्यसिद्धेत्याह—**सर्वदा** इति। **असिद्धेः** इति। कदाचिदपि न दृश्यत इति निश्चयासंभवादिति। तदेवमेकदेशिनं निराकृत्य बौद्धमतं दूषयितुमुपन्यस्यति—**तादात्म्य** इति। यस्य य आत्मा वा यत्कार्यं तयोस्तेनात्मना कारणेनाविनाभावः, अन्यथा तदात्मकत्वव्याघातात् कार्यकारणभावभङ्गप्रसङ्गाच्च, ततोऽविनाभावनिश्चयार्थमुपाधिविधूननापेक्षेति। यथाह—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनान्न न दर्शनात्। इति।

**प्रकाशः।**

ननु सहचारदर्शनव्यभिचारादर्शने एव व्याप्तिग्राहके। न च तयोरव्याप्तसाधारण्यम्। उपाध्यभावज्ञानस्याप्यव्याप्यसाधारणत्वात्। न च स्वरूपसन्नेव स तद्ग्राहकः व्याप्तिभ्रमानुपपत्तेः। नापि वस्तुगत्या यत्रोपाध्यभावस्तत्र तज्ज्ञानाद्व्याप्तिप्रमाऽन्यत्र तु तद्भ्रम इति वाच्यम्। यत्र वस्तुसती व्याप्तिस्तत्र सहचारदर्शनादेरपि तत्त्वापत्तेः।

अत्राहुः। व्यभिचारादर्शनस्य व्याप्तिनिश्चायकत्वे तस्मिन् सति व्याप्तिसन्देहानुपपत्तिः। अनौपाधिकत्वनिश्चये तु न सन्देह इति तदेव व्याप्तिग्राहकम्। किञ्च, यथा व्यभिचारादर्शनाद व्यभिचारनिश्चयः। एवमव्यभिचारादर्शनाद् व्यभिचारनिश्चयोऽपि स्यादविशेषात्। न च भावानुपलब्धिरभावनिश्चायिका, न त्वभावानुपलब्धिर्भावनिश्चायिकेति वाच्यम्। अव्यभिचारस्यापि भावत्वात्। साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपत्वात्। क्षित्यादि द्विकर्तृकं कार्यत्वात् पटवदित्यादेरपि गमकत्वापाताद्वा।

**तदपेक्षायामिति**। उपाध्यभावापेक्षायामित्यर्थः। **असिद्धेरिति**। सर्वदा उपाधिमत्तयाऽनुपलम्भस्येत्यर्थः।

बौद्धोक्तं तद्ग्राहकमाह। **तादात्म्येति**। विपक्षबाधकञ्च क्षणभङ्गप्रस्तावे व्याख्यातम्। प्रत्यक्षाऽनुपलम्भावन्वयव्यतिरेकौ। अपि चाग्नीन्धनादिसमवधानेऽप्यन्यस्य पिशाचादेः सन्निधिराशङ्क्यमानो नाग्नीन्धनादिव्यभिचारिणोऽन्यत्र धूमस्यादर्शनादिति नियतस्य तस्य वाच्यः। स च नेत्याह।

**प्रकाशिका।**

तथा च शङ्कितव्यभिचार एवाप्रयोजक इति भावः। **स्वरूपसन्नेव स** इति। उपाध्यभाव इत्यर्थः। **सन्देहानुपपत्तिरिति**। भवति च सत्यपि तस्मिन् कदाचित् सन्देह इति भावः। ननु अनौपाधिकत्वस्यापि व्याप्तिव्याप्यत्वेनाऽनिश्चये सन्देहो भवत्येव। न चानौपाधिकत्वव्याप्तिपक्ष इदं, तस्य व्याप्तिग्राहकत्वेनाभिधानादित्यरुचेराह **किञ्चेति**। **अव्यभिचारेति**। व्याप्तिनिश्चयवदित्यर्थः। अत एवाग्रे तथैव वक्ष्यति **साधनेत्यादि**। **उपाध्यभावेति** उपाध्यभावज्ञानेत्यर्थः। **नियतस्येति**। अग्नीन्ध-

**मकरन्दः।**

पाधिकत्वं व्याप्तिव्याप्यमिति व्याप्यत्वेन तदनिश्चयदशायां तत्सन्देहः स्यादेव, न चानौपाधिकत्वव्याप्तिमतेनेदं, तस्य व्याप्तिग्राहकत्वेनाभ्युपगमादित्यरुचेराह **किञ्चेति**। **अव्यभिचारेति**। व्याप्तिनिश्चय इत्यर्थः। अत एवाग्रे तथैव वक्ष्यति। **उपाध्यभावेति**। उपाध्यभावनिश्चयापेक्षायामित्यर्थः। नियतस्य=अग्नीन्धनादिनियतस्य। तस्य=तादात्म्यादेरित्यर्थः।

तत्र तादात्म्यं विपक्षे बाधकाद्भवति। तदुत्पत्तिश्च पौर्वापर्येण प्रत्यक्षानुपलम्भाभ्याम्। न ह्येवं सति शङ्कापिशाच्यवकाशमासादयति, आशङ्क्यमानकारणभावस्यापि पिशाचादेरेतल्लक्षणाविरोधेनैव तत्त्वनिर्वाहादिति। न। एवमप्युभयगामिनोऽव्यभिचारनिबन्धनस्यैकस्याऽविवेचनात्, प्रत्येकं चाव्यापकत्वात्। कुतश्च कार्यात्मानौ कारणमात्मानञ्च न व्यभिचरत इति ॥

अत्रोच्यते—

**शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ॥**

---

बोधनी।

तादात्म्यतदुत्पत्त्योरेव निश्चयः कुतस्त्य इत्यत्राह तत्र-इति। अवृक्षे शिलादौ शिंशपात्वस्यानुपलब्धिबाधितत्वाद् वृक्षः शिंशपात्मेति निश्चीयते। तदुत्पत्तिस्तु पूर्वापरभावेन प्रत्यक्षानुपलम्भाभ्यां सिध्यति। "प्रत्यक्षानुपलम्भपञ्चकेन तदुत्पत्तिनिश्चयः" इति हि बौद्धाः। तत्र पौर्वापर्येण वह्निधूमयोरुपलम्भौ प्रत्यक्षद्वयं वह्न्यनुपलम्भे धूमानुपलम्भः अन्यस्मिन्पूर्वभावेनोपलब्धेऽपि धूमस्यानुपलम्भ इत्यनुपलम्भत्रयमिति प्रत्यक्षानुपलम्भपञ्चकम्। अन्येषां तु वह्नेर्धूमस्य पौर्वापर्यस्य च त्रीणि प्रत्यक्षाणि वह्नेर्धूमस्य च द्वावनुपलम्भाविति। नन्वेवमप्यदृश्यभावः पिशाचादिर्धूमस्य कारणं, वह्निस्तु नान्तरीयकसंनिधिर्न वेति शङ्कायां न तदुत्पत्तिसिद्धिरित्यत्राह **न ह्येवम्**-इति। पिशाचादेस्तु पौर्वापर्येण प्रत्यक्षानुपलम्भगोचरत्वरूपस्य कारणलक्षणस्य विरोधाभावेन तत्त्वस्य कारणत्वस्य निर्वाहाश्च शङ्कावकाश इति नानेनापि प्रकारेणाविनाभावनिश्चय इत्याह **नैवम्**-इति। कुत इत्यत आह **उभय**-इति। किमत्र क्वचित्तादात्म्यमव्यभिचारनिबन्धनमन्यत्र तदुत्पत्तिरिति विषयव्यवस्थयोच्यते किं वा स्वतन्त्रमुभयं तादात्म्यं तदुत्पत्तिर्वेति। नाद्यः, अनुवृत्तस्याव्यभिचारनिबन्धनस्यावचनात्, तदवचने च तस्यालक्षितत्वात्। नाप्युत्तरः, तादात्म्यस्य तदुत्पत्तावभावात् तस्याश्चेतरत्राभावादव्यापकत्वादत एव नापि संभूयेति भावः। किं च उपाधिविधूननापेक्ष एव ताभ्यामप्यविनाभावनिश्चय इत्याह **कुतश्च**-इति। तदेवमनुमानस्याव्यभिचारनिश्चयापेक्षत्वात्तस्य चोपाधिनिषेधायत्तत्वात्तन्निषेधे योग्यानुपलम्भाभावादनुपलम्भमात्रस्य च निषेधकत्वानङ्गीकारादनुमानेन च तन्निषेधेऽनवस्थाप्रसङ्गात्। बौद्धानामपि निषेधाच्चानुमानादिविलोपप्रसङ्ग इति।

चार्वाके प्रत्यवस्थिते परमसिद्धान्तीत्याह **अत्रोच्यते**-इति। उपाधिविरहस्य दुरवधारणत्वेनानुमानकुलोत्सादशङ्कास्ति चेत् तत एवानुमाऽस्त्येव तत्कालतद्देशयोः सहदृष्टस्य किं कालान्तरे देशान्तरे वाऽविनाभावो भविष्यति न वेत्येवं व्यभिचारस्य शङ्कनीयत्वात् कालान्तरभवनमसंनिहितं च देशमनाकलय्य शङ्कानुपपत्तेः तदाकलनस्य चानुमानमन्तरेणाशक्यत्वादिति हृदयम्। तदनाकलने तु शङ्कैव न स्यान्निराश्रयत्वादित्यभिसंधायोक्तं **न चेच्छङ्का ततस्तराम्**-इति। न चेच्छङ्का,

प्रकाशः।

**आशङ्क्यमाने**ति ॥ अग्निं विना पिशाचादेव धूमः स्यादिति पिशाचस्य कारणत्वशङ्काऽन्वयव्यतिरेकावादाय वाच्या तौ चाग्नेः प्रत्यक्षसिद्धस्येति नान्यकारणशङ्केत्यर्थः। दूषयति ॥ **नैवमपी**ति ॥ तयोर्न मिलितयोर्व्याप्तिग्राहकत्वमसिद्धेरिति प्रत्येकं तत्त्वे व्याप्तिग्राहकतावच्छेदकानुगतरूपाभाव इत्यर्थः। ननु ज्ञापकस्याननुगमो न दोषः, एकस्याप्यनेकज्ञाप्यत्वादित्यत आह। **कुतश्चे**ति ॥ विपक्षबाधकतर्कस्यापि व्याप्त्यपेक्षया तत्रापि तर्कान्तरानुसरणेऽनवस्था तर्कं विनाऽपि व्याप्तिग्रहे व्यभिचारात् तर्कोऽपि न तद्धेतुः स्यादित्यर्थः ॥

**शङ्का चेदि**ति ॥ कालान्तरदेशान्तरयोर्व्यभिचारोपाध्यन्यतराशङ्का यदि, तदाऽनुमानमस्त्येव। तां विना तयोरप्रतीतेः। यदि च तयोरप्रतीतौ न शङ्का, सुतरामनुमानम्। शङ्कानिरासकस्याप्यनपेक्ष-

प्रकाशिका।

नादिनियतस्येत्यर्थः। **अनेकज्ञाप्यत्वादिति**। कार्यं च ज्ञानरूपे विषय एव विशेष इति न परस्पर-

**व्याघातावधिराशङ्का तर्कः शङ्काऽवधिर्मतः ॥ ७ ॥**

कालान्तरे कदाचिद् व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्क्येत तदाकलनञ्च नानुमानमवधीर्य कस्य चित् । मुहूर्त्तयामाऽहोरात्रपक्षमासर्त्त्वयनसंवत्सराऽऽदयो हि भाविनो भवन्मूहूर्त्ताद्यनुमेया एव । अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात् । अनाकलने वा, कमाश्रित्य व्यभिचारः शङ्क्येत । तथा च सुतरामनुमानस्वीकारः । एवञ्च देशान्तरेऽपि वक्तव्यम् ॥

स्वीकृतमनुमानम् । सुहृद्भावेन पृच्छामः, कथमाशङ्का निवर्त्तनीया ? इति

---

बोधनी ।

ततः शङ्काभावादेव सुतरामनुमाऽस्त्येव शङ्कानिरासप्रयासस्याप्यभावः । स्वीकृत्यैवानुमानं कथमियं व्यभिचारशङ्का निवर्तनीयेति तत्त्वबुभुत्सया पृच्छत उत्तरम्–अर्थक्रमानुरोधेन पाठक्रममनादृत्य **तर्कः शङ्कावधिर्मत** इति । तावदेवावकाशः शङ्कापिशाच्या यावत्तर्केण नागतं, समागतस्तु तर्कः शङ्काया अवधिरन्तो मतो न्यायविदाम् । ननु तर्कोऽप्यविनाभावमूल एव प्रवर्तमानोऽन्यथासिद्धिशङ्कया तर्कान्तरमपेक्षत इति अनवस्थादौस्थ्यात् पुनरप्यनुमानं दत्तजलाञ्जलि स्यादित्यत उक्तं **व्याघातावधिराशङ्का**–इति । अयमाशयः–किमियमाशङ्काऽर्थक्रियार्थिनो लौकिकस्य, हेतुफलभावं जिघांसतः परीक्षकस्य वा ? प्रथमे क्रियाव्याघातावधिराशङ्का लोकस्य न तु यथा क्रियाव्याघातादयोऽवतरन्ति तथा भवतीत्यर्थः । तथा च द्वित्रस्थानपर्यवसानानानुमानप्रामाण्यनिघातः । द्वितीये तु शङ्कैव न स्यात् तस्या अपि कस्यचित् फलत्वात्तया हेतुफलभावप्रत्यक्षे प्रामाण्यनिश्चयोऽपि न स्यात् तस्या अपि तथाभावात् , सोऽयं व्याघात इति ।

व्याचष्टे **कालान्तरे** इति । **भवन्मुहूर्त्ता अनुमेया**-इति । वर्त्तमानमुहूर्त्तादयो भाविमुहूर्तादिवन्तः मुहूर्त्तत्वादतीतमुहूर्त्तवदिति । मा भूदनुमानं स्मरणं तु भविष्यति कालान्तर इत्यात्राह **अनवगत**-इति । भाविनः कालस्य प्रत्यक्षासंभवादिति सर्वथा चानाकलने निर्विषया शङ्कैव न स्यादित्याह **अनाकलने**–इति । तर्हि ननु माभूद् व्यभिचाराशङ्केत्यत्राह **तथा च**–इति । तुरीयं पादं व्याचिख्यासुः शङ्कते **स्वीकृतम्**–इति । सुहृद्भावेनैवोत्तरमाह **न**–इति । द्वयी हि शङ्का किमस्य हेतोरनेन साध्येन संबन्ध उपाधिरस्ति वा न वेत्येका, अन्या तूपाधिशङ्कानिमित्ता **हेतोः** साध्यव्यभिचारशङ्का,

प्रकाशः ।

णादित्यर्थः । वादकथामाश्रित्य शङ्कानिवर्त्तकमाह ॥ **व्याघातेति** ॥ शङ्काया अवधिस्तर्कः, तन्निवर्त्तकत्वात् । ननु तर्केऽपि व्याप्तिमूलकतया तर्कान्तरापेक्षायामनवस्थेत्यत आह ॥ **व्याघातावधि**-रिति ॥ तर्कमूलव्याप्तौ स्वक्रियाव्याघातेन व्यभिचारशङ्कैव नोदेतीति न तत्र तर्कापेक्षेत्यर्थः ॥

पूर्वार्द्धं व्याचष्टे ॥ **कालान्तरेत्यादि, तथाचेत्यन्तेन** । ननु साध्याऽत्यन्ताभावसामानाधिकरण्यं साधने वर्त्तते न वेति शङ्का, देशकालावनन्तर्भाव्यैवेति नानुमानावश्यकत्वम् । मैवम् । साध्यात्यन्ताभावसामानाधिकरण्यं तदनधिकरणाधिकरणत्वम् । तत्र प्रसिद्धधूमाधिकरणे वह्निनिश्चयादेव न शङ्का । तदन्यच्चानुमानगम्यमेव ॥

तथापि सामान्यलक्षणया प्रत्यासत्त्या प्रत्यक्षेणापि कालादेरुपस्थितेर्नानुमानादेव तदुपस्थितिः ।

प्रकाशिका ।

व्यभिचार इति भावः । **वादकथामिति** । तथा च कथं शङ्कानिवृत्तिरिति जिज्ञासुं प्रत्युत्तरमेतदित्यर्थः । आर्थक्रमानुरोधेन शाब्दक्रमव्युत्क्रमेण व्याचष्टे **शङ्काया अवधिरिति** । **ननु तर्केऽपीति** । बाधकाभावेन शङ्काया अवश्यम्भावो एतन्निवर्त्तनाय तर्कान्तरापेक्षायामनवस्थितेरिति भावः ॥ **क्रियेति** । वस्तुतः कोटिस्मरणादिविरहेणैव शङ्काविच्छेदे न तन्निवर्त्तकतर्कापेक्षेति न अनवस्था इति परिभाव- [illegible] । [illegible]त्वेन सामान्यलक्षणया कालदेशयोरुपस्थितेरित्यर्थः ।

चेन्न । यावदाशङ्कं तर्कप्रवृत्तेः । तेन हि वर्त्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयतेच्छा विच्छिद्यते । विच्छिन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति, अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम् ॥

---

बोधनी

तत्रोभयत्रापि तर्कप्रवृतेः शङ्कानिवृत्तिरिति । कथं तर्हि ततस्तन्निवृत्तिरित्यत्राह **तेन हि**=इति । यद्यत्रोपाधिः स्यात् तदायत्तो वा हेतोर्व्यभिचारस्तत एव स्यादिति । प्रामाणिकत्यागाप्रामाणिकस्वीकारात्मकानिष्टमुपनयता तर्केण पक्ष एव जाता विपक्षजिज्ञासात्मिकेच्छा विच्छिद्यते, तद्विच्छेदे चानुमाता निरस्तान्तरायेण भूयोदर्शनेनावधारिताव्यभिचारं लिङ्गं निःशङ्क एवानुमितिज्ञानोत्पादे विनियुङ्क्ते विनियुक्ताच्च कारणलिङ्गादनुमितिक्रियानिष्पत्तिरिति न संकटं किञ्चिदिति ॥

प्रकाशः ।

सा च प्रत्यासत्तिरनुमानप्रामाण्यवादिनाऽपि स्वीकार्या । अन्यथा, यस्य व्याप्तिग्रहः स न पक्षधर्मः, तादृशश्च न व्याप्तिग्रहगोचर इत्यनुमानविलयापत्तिः । मैवम् । इदमसाधकमनुपलभ्यमानव्यभिचारशङ्काग्रस्तत्वादित्यनुमानमपि शङ्काऽऽस्कन्दतीति जात्युत्तरत्वात् । व्याप्तिग्रहाभावव्यभिचारशङ्कयोस्त्वयापि व्याप्तिस्वीकारात् । व्यभिचारशङ्कायामव्यभिचारकोटेरावश्यकत्वाच्च । अपि चानुमानाप्रामाण्यं नानुमानगम्यम् । तदनङ्गीकारात् । नापि प्रत्यक्षगम्यम् । तथाऽनुव्यवसायाभावात् । एतेनोत्कटकोटिकसंशयरूपाऽनुमितिस्तत्करणमनुमानमित्यपास्तम् । धूमादग्निं निश्चिनोमीत्यनुव्यवसायेन तन्निश्चयत्वस्य प्रत्यक्षत्वात् । अन्यथा, प्रत्यक्षस्यापि निश्चयत्वे कः समाश्वासः ? ।

**यावदाशङ्कमिति** ॥ तर्कसहकृतभूयोदर्शनजसंस्कारसचिवप्रमाणेन व्याप्तिर्गृह्यत इत्यर्थः तर्कव्यापारमाह ॥ **तेन हीति** ॥ **इच्छा विच्छिद्यते** इति ॥ संशयजनितसाध्याभाववति जिज्ञासा निवर्त्यते इत्यर्थः । तज्जनकसंशयसहितेति शेषः । अन्यथा, जिज्ञासाविच्छेदेऽपि

प्रकाशिका ।

ननु सामान्यलक्षणा वा स्वीक्रियतामनुमानं वेत्यत्र किं विनिगमकमत आह । **सा चेति** । ननु सम्भावनैवानुमानप्रयोजनं प्रकृतेऽपि स्यादित्यरुचेराह । **व्याप्तिग्रहेति** । ननु भूयःसहचारमात्रमेव तत्रापि स्वीकरणीयमत आह । **व्यभिचारशङ्कायामिति** । **तथानुव्यवसायाभावादिति** । इदमुपलक्षणम् । प्रत्यक्षस्य तत्रासामर्थ्यादित्यपि द्रष्टव्यम् । **निश्चिनोमीति** निश्चयत्वं जातिरिति मतेनेदम् , वस्तुतः संशयान्यत्वमपि ज्ञाननिष्ठं योग्यमेवेति भावः । **तर्कसहकृतेति** । तर्कस्य च शङ्कानिवर्त्तनद्वारा प्रयोजकत्वमित्यवधेयम् । आशुविनाशिनां क्रमिकाणां मेलकानुपपत्तेराह **संस्कारेति** । **संशयजनितेति** । यद्यपि जिज्ञासा ज्ञानेच्छा सा च ज्ञानेष्टसाधनताज्ञानादिति न संशयाद्भवितुमर्हति, न वा तन्निवर्त्तनमनिष्टप्रसञ्जनरूपात् तर्कात्, "इच्छानिवर्त्तकमनिष्टसाधनताज्ञान"मित्यत्रानिष्टं दुःखरूपं प्रकृते च प्रमाणबाधितत्वरूपमनिष्टं प्रसञ्जनीयं यतः, तथापि संशये सति संशयजन्यदुःखाभावरूपेष्टसाधनताज्ञानादेव ज्ञानेच्छा सत्प्रतिपक्षस्थलेऽज्ञानजन्यदुःखाभावरूपेष्टसाधनताज्ञानादिवत् तदुच्छेदोऽपि तत्प्रयोजकीभूतसंशयजनकीभूतविरोधिप्रमाणशङ्कोच्छेदद्वारैवेति **मिश्राः** । **केचित्तु** अन्वयव्यतिरेकाभ्यां संशयस्य प्रतिपक्षोपस्थितेश्च स्वातन्त्र्येणैव जनकत्वं तर्कस्य च जिज्ञासानिवर्त्तक-

मकरन्दः ।

ननु व्याप्तिस्वीकारेऽपि नानुमानप्रामाण्यस्वीकारस्तयोर्भेदादित्यत आह । **अपि चेति** । **धूमादिति** । निश्चयत्वं जातिरिति मतेनेदम् । उपनीतभानाभिप्रायेण वा । अन्यथा अनुव्यवसायविषयत्वानुपपत्तेरित्याहुः । आशुविनाशिनां क्रमिकाणां मेलकानुपपत्तेराह । **संस्कारेति** ।

**अन्यथेति** । प्रतिबन्धकतावच्छेदके ज्ञानत्वस्यैव न प्रवेशो गौरवात्, कुतो निश्चयत्वस्येति

प्रकाशः ।

संशयसत्त्वे व्याप्त्यग्रहात् । न च साध्याभावविषयकज्ञानस्य प्रतिबन्धकत्वात् तन्निवर्त्तनमफलं, लाघवात्साध्याभावविषयत्वस्यैव प्रतिबन्धकतावच्छेदकत्वात् ॥

प्रकाशिका ।

त्वमित्याहुः। **तज्जनितेति**। न चैवं मूलविरोधः, ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीत्यत्र मूले शङ्काया अनुमाननिवर्त्तनीयत्वाभिधानादिति वाच्यम् । तन्मूलस्य ततस्तदानुमानप्रवृत्तौ अनुमानेऽनुमानप्रवृत्त्यर्थं शङ्कास्वरूपमपीति निमित्तसप्तम्याश्रयणेनार्थोन्नयनात, मतान्तरेण तन्मूलमित्यन्ये। व्याप्तिग्राहकतर्करूपपरः प्रकाशः विषयपरिशोधकतर्कपरश्च मूलमित्यपरे । नन्वेवमपि विषयपरिशोधकस्य नोपयोगः, परामर्शेनैव विशेषदर्शनात्मकेन शङ्कानिवृत्तौ जिज्ञासाया अपि तन्मूलाया निवृत्तेरिति चेत, न । विशेषदर्शनेन स्वारसिकशङ्कानिवृत्तावपि विरोधिप्रमाणशङ्कानिबन्धनसाध्याभावशङ्काजिज्ञासयोरनुवृत्तेस्तन्निवृत्त्यर्थं तर्कोपयोगात, एवं च तर्केण विरोधिकोटावनिष्टमुपनयता विरोधिप्रमाणशङ्कापगमे तन्मूलकसाध्याभावसंशयापगमे तन्मूलकजिज्ञासोच्छेद इति तात्पर्य्यम् । केचित्तु पक्षे धूमदर्शनमात्रस्य तदविरोधित्वेन साध्याभावशङ्कायां जिज्ञासापि भवत्येव, ततश्च साध्यतदभावान्यतरावधारणोपायानुसरणव्यग्रः प्रतिपत्ता स्मृतामपि व्याप्तिं पक्षवृत्तिधूमे न परामृषति व्यग्रत्वादिति परामर्षसामग्र्यां प्रतिरुद्धायां तर्केणानिष्टप्रतिसन्धानात्मकेनापहृतायां जिज्ञासायामवधारणोपायानुसरणरूपविषयान्तरसञ्चाराभावे परामर्षोत्पादः । न चैवमस्य कथं विषयपरिशोधकत्वमिति वाच्यम् । न्यायस्य विषयो लिङ्गं तस्य शुद्धिः परामर्षप्रतिबन्धकजिज्ञासाया उक्तरूपोपायानुसरणपरतायाश्चापगम इति तदुपपत्तेः । तदुक्तम्—"प्रमेयतत्त्वावबोधे विरोधिनानाविषयस्य जिज्ञासा तदुपायानुसरणञ्च वास्तवकोटिप्रमाणप्रवृत्तावंशतः परिपन्थी"ति । न चैवं तर्कस्य न्यायोत्तराङ्गत्वव्युत्पादनविरोधः, मतभेदेन तदुपपत्तेः, अत एव तत्त्वबोधे तर्को न्यायस्य पूर्वाङ्गं न्यायविषयपरिशोधकत्वात, व्याप्तिग्राहकत्वाच्चेत्युक्तमिति वदन्ति । **संशयसत्त्व** इति । प्रतिबन्धकतायां ज्ञानत्वस्यैव

मकरन्दः ।

भावः । ननु संशयो न जिज्ञासाहेतुः, तस्या इच्छात्वेन ज्ञानेष्टसाधनताज्ञानसाध्यत्वात् । साध्यार्थिनश्च साध्याभावज्ञानं नेष्टसाधनमिति न तत्र जिज्ञासा । तथा च कथं तन्निवर्त्तकता तर्कस्येति चेत न, अन्वयव्यतिरेकाभ्यां सत्प्रतिपक्षस्येव संशयस्यापि जिज्ञासाजनकत्वात् । ननु विरोधिविषयत्वाभावात्तर्कः कथं संशयजिज्ञासयोर्निवर्त्तक इति चेत्, न, वैषयिकविरोधाभावेऽपि स्वरूपेणैव दाहादौ मण्यादिवत् फलबलेन तस्य विरोधित्वात्, इच्छायामनिष्टप्रतिसन्धानत्वेनापि विरोधित्वाच्च, मधुविषसंपृक्तान्नबुभुक्षादौ तथा दर्शनात् । नन्वेवमपि यदि निर्व्वह्निः स्यादिति विषयपरिशोधकस्य तर्कस्य कथमनुमितावुपयोगः, परामर्शादेव विशेषदर्शनत्वेन शङ्कानिवृत्तेरिति चेत् । विशेषदर्शने स्वरसवाहिशङ्काऽनुदयेऽपि अन्याहितशङ्कोदयेन बाधकप्रमाणावतारशङ्कानिबन्धनसाध्याभावशङ्कानिवर्त्तकत्वेन तदुपयोगादिति विपश्चितमनुमानप्रकाशे । केचित्तु प्राथमिकलिङ्गदर्शनस्य तदविरोधित्वेन धूमवानयं वह्निमान्न वेति संशयः, ततो जिज्ञासा, ततश्च साध्याभावज्ञानोपायानुसन्धानपरस्य तामपि वह्निव्याप्तिं पक्षधर्म्मधूमे न परामृशति व्यग्रत्वादिति प्रसिद्धायां परामर्शसामग्र्यां तर्कावतारे तेनापहृतायां जिज्ञासायां तदुपायानुसरणपरत्वरूपविषयान्तरसञ्चाराभावे परामर्शोत्पादः, अत एवायं न्यायविषयपरिशोधक इति गीयते, न्यायस्य परामर्शस्य विषयो लिङ्गं, तस्य परिशुद्धिः परामर्शप्रतिबन्धकसाध्याभावजिज्ञासातदुपायानुसरणपरत्वयोरपगमः । तदाह प्रमेयतत्त्वबोधे वर्द्धमानः—"एवञ्च विरोधिनानाविषयस्य जिज्ञासा तदुपायानुसरणञ्च वास्तवकोटिप्रमाणप्रवृत्तावंशतः परिपन्थी"—इति । न चैवं तर्कस्य न्यायोत्तराङ्गत्वप्रतिपादनविरोधः, परामर्शव्यापारस्तर्क इति मतेन तदुत्थानात् । तदाह तत्रैव वर्द्धमानः । "तर्को न्यायस्य पूर्व्वाङ्गं न्यायविषयपरिशोधकत्वात्, व्याप्तिग्राहकत्वाच्च" इत्याहुः ।

**ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्त्तते, ततोऽनवस्थया भवितव्यम् । न । शङ्काया व्याघातावधित्वात् । तदेव ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्या-**

बोधनी ।

ननु यदि तर्केण व्यभिचारशङ्कानिवृत्तिः तर्हि तर्कस्याप्यविनाभावापेक्षत्वात्तत्रापि शङ्कानिवृत्त्यर्थं तर्कान्तरापेक्षायामनवस्था स्यादित्याशङ्क्याह **ननु**-इति । अत्रोत्तरत्वेन तृतीयं पादमवतारयति **न**-इति । नानवस्थया भवितव्यम् , न हि यत्र यत्राविनाभावग्रहस्तत्र सर्वत्र शङ्कोदय इति । व्याघातावधित्वमेवाह **तदेव हि**-इति । यस्मिन्नाशङ्क्यमाने लोकस्य व्यवहारव्याघातादयो न प्रादुष्यन्

प्रकाशः ।

नन्वन्यथैव तर्कमूलव्याप्तावपि शङ्काऽनुवृत्तौ मूलशैथिल्यात्तन्निवर्त्तनं तर्कादेवेत्यनवस्थेत्याह—**नन्विति** ॥ न चानादिसिद्धव्याप्तिका एव केचित्तर्का इति वाच्यम् । तत्रापि प्रमाणानुयोगेऽनुमान एव पर्यवसानेऽनवस्थापत्तेरिति भावः । तत्तर्कमूलव्याप्तिग्रहो न तर्कान्तरात् किन्त्वन्यथैवेत्याह ॥ **शङ्काया** इति ॥ तदेव स्पष्टयति ॥ **तदेव** हीति ॥ धूमो यदि वह्निसमवहितसामग्र्यजन्यत्वे तत्समवहितसामग्र्यजन्यः स्यान्नोत्पन्नः स्यादित्यत्र तर्के प्रवृत्ते किमवह्नेरेव धूमः स्यादिति शङ्का, क्वचिद्वह्निं विनाऽपि स्यादिति वा, अकारणत एवोत्पद्यते इति वा ? । सर्वत्र स्वक्रियाव्याघातः । यदि ह्यन्वयव्यतिरेकावधृतकारणभावं कारणं विना कार्योत्पत्तिं शङ्केत, तदा नियमेन धूमार्थं वह्नेस्तृप्त्यर्थमन्नस्य परप्रतिपत्त्यर्थं शब्दस्योपादानं न कुर्यात्, तैर्विनाऽपि तेषां सम्भवात् । तस्मात् तदुपादानमेव तादृशशङ्काप्रतिबन्धकम् । न ह्यस्ति सम्भवो धूमाद्यर्थं वह्न्यादिकमुपादत्ते तत्कारणं तन्नेत्याशङ्कते चेत्यर्थः । अतश्च—

> व्याघातो यदि शङ्काऽस्ति न चेच्छङ्का ततस्तराम् ।
> व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥

प्रकाशिका ।

रति **धूमो यदीति** । अत्र सत्यन्तं विशेषणं पक्षेऽयोजनीयम् । तेनाभिमतविपर्य्ययपर्य्यवसायित्वं तर्कस्येति बोध्यम् । **तदुपादानमिति** । उपादानकारणीभूतं कार्यकारणभावज्ञानमित्यर्थः । उपादानस्य क्रियायाः शङ्काप्रतिबन्धकत्वात् । नन्वेवमन्योन्याश्रयः कार्यकारणभावग्रहार्थमेवैतत्तर्कानुसरणादिति वाच्यम् । न ह्यनेनैव तर्केण धूमवह्निव्याप्तिग्रहनियमः कोटिस्मरणादिविरहेण शङ्काविच्छेदे तर्कं विनापि व्याप्तिग्रहात् , किन्तु सर्वत्र शङ्का स्यादेवेति शङ्कापिशाच्या न क्वापि व्याप्तिग्रह इति नानुमानं प्रमाणमिति वदन्तं चार्वाकं प्रति तर्कोऽयमुपदर्श्यते । एवमाशङ्कमानस्य भवतोऽपि स्वक्रियाव्याघात इति प्रतिपादनाय तथा च भवतोऽप्युपादानकारणीभूतं कार्यकारणभावज्ञानं वर्त्तत एवेति नास्ति शङ्केति तदुद्भावनं वाङ्मनसविसंवाद इति भयेन शङ्कामनुद्भावयन् सोऽनुमानप्रामाण्यानु-

मकरन्दः ।

यत्तर्कमूलव्याप्तौ व्याघातः शङ्काप्रतिबन्धकस्तमुदाहरति **धूमो यदीति** । सत्यन्तं घटादौ व्यभिचारवारणाय । पक्षविशेषणमप्येतद् बोध्यम् । तेनैतद्विशेषणस्यैव व्यतिरेकमादाय नास्य विपर्य्ययपर्य्यवसानम् । तद्ग्रहश्च योग्यानां व्यभिचारदर्शनात्, अयोग्यानामनुपस्थितकल्पनागौरवात् । **तदुपादानमिति** । तदुपादानहेतुभूतधूमवह्न्यादिकार्य्यकारणभावज्ञानमेवेत्यर्थः । शङ्काया विरोधिनिश्चयाप्रतिबध्यत्वादिति ध्येयम् । यद्यप्येवमन्योन्याश्रयः, शङ्कानिवृत्तावेव तर्कस्य कार्य्यकारणभावनिवर्त्तकत्वं निश्चिते च कार्य्यकारणभावे ततः शङ्कानिवृत्तिरिति, तथापि न सर्व्वत्रानेनैव तर्केण वह्निधूमकार्य्यकारणभावग्रहः, स्वतः सिद्धशङ्काविरहेऽन्वयादिज्ञानवतस्तद्ग्रहे बाधकाभावात् तस्मात् सर्व्वत्र शङ्का स्यादेवेति यश्चार्व्वाकादिरनुमानविरोधी मन्यते, तं प्रत्युच्यते तथा सत्येतादृशतर्केऽपि तादृशशङ्कायां भवतो धूमार्थवह्न्युपादानं व्याहन्येत । तदिदमाह, न ह्यस्ति सम्भवो धूमाद्यर्थं वह्न्यादिकमुपादत्ते

प्रकाशः ।

इति खण्डनमपास्तम् । व्याघातस्य शङ्काऽनाश्रितत्वात् । स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात् ।

एतेन व्याघातो विरोधः, स च सहानवस्थाननियमो, नियमश्च व्याप्तिरिति तत्राप्यनवस्थेत्यपि निरस्तम् ॥

नन्वेवं तर्कं विनाऽपि व्याप्तिग्रहाद्व्यभिचारेण तर्कोऽपि न व्याप्तिग्राहकः । **अत्रास्मत्पितृचरणाः ।** तर्को न व्याप्तिग्राहकः, किन्तु व्यभिचारज्ञानाभावसहकृतं सहचारदर्शनम् । ज्ञानञ्च निश्चयः शङ्का च । शङ्का क्वचिदुपाधिसन्देहात्, क्वचिद् विशेषादर्शनसचिवसाधारणधर्मदर्शनात् । तदभावश्च क्वचिद्विपक्षबाधकतर्कात्, क्वचित् स्वतः सिद्ध एवेति नानुगमः । ननु सहचारदर्शनव्यभिचारादर्शनवद् व्यभिचारज्ञानाभावानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततो व्याप्तिनिश्चयः

प्रकाशिका ।

कूलव्याप्तिग्रहमङ्गीकारयितुं शक्यत इति भावः । तर्कस्यैव व्याप्तिग्राहकत्वमित्याचार्याभिमतमिति भ्रान्तः शङ्कते **नन्वेवमि**ति । अत्रास्मत्पितृचरणा आचार्याशयं स्फोरयन्तीति शेषः । **व्यभिचारज्ञाने**ति । यद्यपि व्यभिचारज्ञानवदव्यभिचारज्ञानमपि वर्त्तत इति व्यभिचारस्यापि ग्रहापत्तिरिति

मकरन्दः ।

तत्कारणं तर्कस्याशङ्कते चेति दिक् । **किन्त्वि**ति ।न चैवमव्यभिचारज्ञानाभावसहकृताद्व्यभिचारनिश्चयप्रसङ्ग इति पूर्वोक्तदोषानपाय इति वाच्यम् । सहचारदर्शनस्य व्यभिचारनिश्चयानङ्गत्वात्, मानाभावात्, विरुद्धे व्यभिचारनिश्चयस्य तेन विनाऽपि भावाच्च । शेषन्त्वनुमानप्रकाशे ।

टिप्पणी ।

चारो गृहीत इति भावः ॥ **ननु सहचारदर्शनव्यभिचारादर्शनवद्व्यभिचारज्ञानाभावानुकूलेति** । सहचारदर्शनेत्यादिचिन्तामणिफक्किका तत्र व्यभिचारज्ञानाभावेत्यत्र व्यभिचारशङ्काविरहेति पाठमूरीकृत्य व्याख्यातं मथुरानाथेन तथा हि यथा सहचारदर्शनं व्यभिचारनिश्चयाभावश्च व्यभिचारिसाधारणम् सन्दिग्धव्यभिचारिसाधारणम् व्यभिचारसंशयस्थलेऽपि वर्त्तते । न च तत्र व्याप्तिग्रह इति न व्याप्तिग्राहकः, तथा व्यभिचारशङ्काविरहज्ञानमनुकूलतर्कज्ञानञ्च व्यभिचारसंशयस्थलसाधारणमिति न व्याप्तिग्राहकम्, तयोः सहचारदर्शनव्यभिचारज्ञानसामान्याभावयोरित्यर्थः, केन सन्दर्भेण तत्रेदं चिन्त्यम् । व्यभिचारशङ्काविरहज्ञानस्य व्यभिचारनिश्चयस्थलेऽपि व्याप्तिज्ञानोत्पत्तिव्यभिचारित्वसम्भवात्तत्संशयस्थलानुधावनमसङ्गतं ज्ञातव्यभिचारसाधारणमिति व्याख्यानस्यैवोचितत्वात् । व्यभिचारज्ञानसामान्याभावस्य पूर्वानुक्तत्वेन **तयो**रित्यत्र तच्छब्देन तत्परामर्शासम्भवाच्च । प्रकाशस्थचिन्तामणिग्रन्थस्त्वेवं व्याख्येयः, यथा व्यभिचारनिश्चयाभावः संशयस्थले ज्ञातव्यभिचारसाधारणस्तथा व्यभिचारज्ञानसामान्याभावज्ञानमपि संशयनिश्चयस्थलयोः ज्ञातव्यभिचारसाधारणमिति न व्याप्तिग्राहक इति व्यभिचारज्ञानाभावस्योपक्रान्तत्वेन तच्छब्देन तत्परामर्शोऽप्युपपन्नः । वस्तुतस्तु पूर्वग्रन्थे व्यभिचारज्ञानसामान्याभावस्य स्वरूपत एव कारणत्वमुक्तमस्ति तत्र निर्बीजन्तु ज्ञानकारणत्वभ्रान्तिङ्कल्पयित्वा ग्रन्थोत्थापनमयुक्तमेव प्रतिभातीतीत्थं व्याख्येयः, सहचारदर्शनं व्यभिचारज्ञानाभावश्च व्यभिचारज्ञानकारणाभावे सद्धेताविव व्यभिचारिण्यपि विशेषदर्शिनामपि सम्भवतीति तत्रापि व्याप्तिग्रहप्रसङ्गः, न च का क्षतिरिति देश्यम् व्याप्तिनिश्चये व्याप्यत्वप्रसङ्गात्, न चोत्तरकालं व्यभिचारदर्शनाद् व्याप्तिबाध इति वाच्यम् । न ह्यस्ति नियमो व्यभिचारज्ञानेन प्रमात्मकेनैव भावितव्यमिति व्यभिचारज्ञानस्य प्रमात्वनिश्चये व्याप्तिबाधः, व्याप्तिबाधे प्रमात्वनिश्चय इत्यन्योन्याश्रयः, एवं सद्धेतौ व्यभिचारो द्रक्ष्यत इति का प्रत्याशा, तस्माद् व्यभिचारिसाधारण्यम् व्याप्तिग्राहकस्यानिष्टम्, ननु व्यभिचारज्ञानाभावज्ञानमेवास्तु कारणम् ज्ञानाभावो ज्ञानकारणविरहनियतः; सुषुप्ताविवान्यदापि विशेषद-

घातादयो दोषा नावतरन्तीति लोकमर्यादा । न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते । तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत् ।

बोधनी ।

तत्रैव शङ्का न सर्वत्रेति । कुत इत्यत आह न हि–इति । न हि कार्यकारणभावोऽपि न स्यादिति शङ्कायाः संभवस्तस्या अपि कस्यचित्कार्यत्वादिति न केवलं शङ्कानुदयः सर्वमपि कार्यजातं मिथ्या कार्यकारणभङ्गादित्यादि च बाधकमूहनीयमित्याह सर्वम्–इति । यद्वा, सर्वं व्यभिचरिष्यतीतिवत्सर्वं मिथ्या भविष्यतीत्यपि शङ्काया अनुत्थानं तस्या अपि सर्वान्तर्भावेन मिथ्यात्वेन व्याघातादिति प्रसङ्गादुच्यते–इति । नन्वसार्वत्रिकत्वेऽपि यत्र कुत्रचिदपि संभवन्तीत्याशङ्कोपाधि-

प्रकाशः ।

स्यात् । न । तयोः स्वरूपसतोरेव व्याप्तिग्राहकत्वात् । सत्तर्काद् व्याप्तिप्रमा, तदाभासात्तदप्रमा, विशेषदर्शनसत्यत्वासत्यत्वाभ्यां तादृशपुरुषज्ञानवत् । इयञ्च प्रत्यक्षेण व्याप्तिग्रहे सामग्री । तदभावेऽपि शब्दानुमानाभ्यां व्याप्तिग्रहादिति ।

शङ्काऽपि हेतुमती, न वा ? । आद्ये हेतुं विना न स्यादेव । द्वितीये देशादिनियमहेतोरभावात् सर्वासत्यत्वप्रसङ्ग इत्याह । तथा सतीति ॥ नन्वतीन्द्रियेऽसाध्यभावनिश्चयोऽशक्यः । योग्योपा-

प्रकाशिका ।

पूर्वाक्षेपलादवश्यम् । तथापि सहचारज्ञानस्यात्राधिकत्वं तर्कसाहित्यञ्चेति विनिगमकं तुल्यत्वे तु सन्देह एवेति अहेतुकैवाशङ्कोत्पत्तिरित्युपगमे हेतुफलभावेऽपि शङ्का स्यादिति विकल्प्य व्याचष्टे । शङ्कापि हेतुमतीति । देशादीति । अत्रैव शङ्का नान्यत्रेति नियामकाभावेन शङ्कायामपि शङ्का स्यात्, एवं सर्वं मिथ्येत्यपि शङ्का स्यादिति सर्वासत्यत्वप्रसङ्ग इत्यर्थः ।

मकरन्दः ।

अहेतुकैवोत्पत्तिरित्यभ्युपगमे हेतुफलभावाभावेऽपि शङ्का स्यादेवेत्यतो व्याचष्टे शङ्काऽपीति । देशादीति । अत्रैव शङ्का नान्यत्रेति नियमहेतोरभावात् शङ्कायामपि शङ्का, एवं सर्वं मिथ्या भवि-

टिप्पणी ।

र्शिनां यद्यपि सम्भवति, तथापि ज्ञानाभावज्ञानं दुर्घटम्, विशेषदर्शिभिर्व्यभिचारिणि व्यभिचारज्ञानस्य शक्यपरिच्छेदत्वात्, विशेषदर्शनानुरोधेनैव वस्तुव्यवस्थापनोचितेत्येवं मन्वानस्य सिद्धान्त्याभासस्य निराकरणम्, यथा ज्ञानकारणविरहाद् व्यभिचारज्ञानं व्यभिचारिसाधारणम्, विशेषदर्शिनां तथा व्यभिचारज्ञानासत्वे तदभावस्य प्रमेयत्वे विशेषदर्शिनामपि ज्ञानं व्यभिचारिण्यपि न दुर्लभम्, व्यभिचारज्ञानकारणनियमस्यैव तज्ज्ञानज्ञानकारणनियमस्याप्यभावेन कारणाभावादेव प्रतिबन्धकस्य ज्ञानज्ञानस्य विशेषदर्शिनां सर्वदा सत्त्वासम्भवेनात्रापि व्यभिचारिसाधारण्यमिति न व्यभिचारादर्शनञ्चापि तज्ज्ञानञ्च ग्राहकमिति व्याप्तिग्राहकाभाव प्रसङ्ग इति। स्वरूपसतोरेव व्याप्तिग्राहकत्वादिति । ग्राहकत्वञ्च साक्षात्परम्परासाधारणं तेन तर्कस्याहेतुतायाः पूर्वमुक्तत्वेऽपि न क्षतिः। सत्तर्काद्व्याप्तिप्रमेति व्याप्तिमद्धर्मीन्द्रियादिसन्निकर्षादित्यर्थः। तेनासत्तर्कादपि व्याप्तिसत्त्वे प्रमोत्पादेऽपि न क्षतिः। ग्राहक सत्त्वे व्यभिचारिण्यपि व्याप्तिग्रहः स्वीक्रियत एव न च व्याप्तिसत्त्वप्रसङ्गः। व्यभिचारिणि हेतुमति योग्यस्य साध्यस्याभावनिश्चये दोषाभावनिश्चये व्यभिचारज्ञानस्य प्रमात्वनिश्चयात् सद्धेतौ तादृशनिश्चयाभावात् सम्भावना तु तर्कनिरस्तेत्याशयः । आद्ये हेतुं विना न स्यादेवेति । उभयथापि शङ्कैव न स्यात् । शङ्का हेतुमतीत्यभ्युपगतश्चेद्धेतुफलभावस्यासत्तया शङ्क्यत इति हेतोरभावान्न स्यात्, शङ्का हेतुमती नेत्यभ्युपगतञ्चेन्नियामकाभावाद्धेतुफलभावयोरिव सम्भावितसत्त्वं शङ्कायामपि स्यादिति न स्यात्। सा यथेन्द्रजालिकपदार्थासत्त्वेन

तथापि, अतीन्द्रियोपाधिनिषेधे किं प्रमाणमित्युच्यतामिति चेत्। न वै कश्चि-दतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति, यस्याभावे प्रमाणमन्वेषणीयम्। केवलं सा-हचर्ये निबन्धनान्तरमात्रं शङ्क्यते ततः शङ्कैव फलतः स्वरूपतश्च निवर्त्तनीया। तत्र फलमस्या विपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्त्तते। ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्। न चैतदनागमं, न्यायाङ्गतया तर्कं व्युत्पादय-

बोधनी।

निषेधेनैव निवर्तनीया, तत्रैन्द्रियकस्य योग्यानुपलम्भेन निषेधेऽप्यतीन्द्रियस्य कथं निषेध इत्याह **तथापि**-इति। न वै **कश्चित्**-इति। प्रसक्तं हि प्रतिषिध्यत इति। तर्हि भूयोदर्शनेनैव प्रतिबन्धसिद्धेस्तर्कः शङ्कावधिरित्यादिकमरण्यरुदितं स्यादित्यत्राह **केवलम्**-इति। न तावत् भूयोदर्शनमात्रात्प्रतिबन्धनिश्चयः, नापि सर्वत्रोपाध्याशङ्का, किन्तु निबन्धनान्तरकृतस्यापि साहचर्यस्य क्वचिद्दर्शनात् किमत्रापि निबन्धनान्तरमस्ति वा न वेति क्वचिच्छङ्का जायते, सा च हेतोर्विपक्षसंसर्गशङ्कां फलति, ततो न प्रतिबन्धनिश्चयः स्यात्, तेन हेतोः साध्यसंसर्गे निबन्धनान्तरशङ्का स्वरूपतः फलतश्च प्रतिबन्धनिश्चयार्थं निबन्धनीया। तत्र या फलभूता धूमवानपि पर्वतः किमनग्निः स्यादिति पक्ष एव विपक्षत्वेन जिज्ञासा सा तर्केण साक्षान्निवर्तते। यदि तथा स्याद् धूमस्याकारणत्वेन कादाचित्कत्वभङ्गप्रसङ्गः दुष्टत्वं वाग्नेरनियतत्वान्नियतस्य च हेत्वन्तरस्याभावादिति। ततो निवृत्तव्यभिचारशङ्को निष्कलङ्को भूयोदर्शनेनावधृतप्रतिबन्धाल्लिङ्गाल्लिङ्गिनमनुमिनोति, तत उपाधिशङ्कास्वरूपमपि निवर्तते, न चोपाधिशङ्काऽप्यनुमानप्रवृत्तेः पूर्वमेव निवर्तनीया विपक्षजिज्ञासानिवृत्त्यैवानुमानप्रवृत्तेः पाश्चात्या तूपाधिशङ्कानिवृत्तिर्वस्तुगत्योक्ता, न त्वनुमानप्रवृत्त्युपयोगित्वेनेति। न च तर्कसनाथेन भूयोदर्शनेन निश्चितप्रतिबन्धं लिङ्गमनुमानाङ्गमित्ययमर्थः स्वमनीषिकामात्रकल्पित इत्याह **न चैतत्**-इति।

प्रकाशः।

वैयोग्यानुपलब्धेरभावनिश्चयेऽप्ययोग्योपाधिव्यतिरेकस्य अनुमानाधीनज्ञानत्वेनानवस्थापातादित्याह **तथापीति**॥ उपाधिर्निश्चितः, शङ्कितो वा?। आद्ये, **न वै कश्चिदिति**॥ शङ्काऽपि भविष्यति कश्चिदत्रोपाधिरित्यात्मिका, सकललोकयात्राविलोपकतया नाद्रियत एवेति। साध्यव्यापकतया निश्चितमिदं साधनाव्यापकं स्यादिति शङ्का स्यात्तत्राह। **केवलमिति**॥ साधने साध्यसम्बन्धितावच्छेदकान्तरमित्यर्थः॥

अथ व्याप्तिविशिष्टपक्षधर्मताज्ञानमनुमितिजनकम्, तत्र का व्याप्तिर्यत्र तर्कोपयोगः। न तावत् स्वाभाविकत्वम्। स्वभावजन्यत्वस्याव्याप्तेः, स्वभावाश्रितत्वस्य चातिव्याप्तेः। नापि विशिष्टवै-

प्रकाशिका।

**विशिष्टेति**। साधनविशिष्टे साध्यवैशिष्ट्यमित्यर्थः। व्यापकत्वं व्याप्तिघटितं स्वसमानाधिकरणात्यन्ता-

मकरन्दः।

ष्यतीत्यपि शङ्का स्यादिति सर्वासत्त्वप्रसङ्ग इत्यर्थः। **सकलेति**। शङ्कापिशाचीसत्त्वेनातिप्रसङ्गान्न सा प्रतिबन्धिकेत्यर्थः। यद्यपि संशयसहितजिज्ञासाया एव शङ्कानिवर्तकत्वेनोक्तत्वात् तथैव युक्तत्वाच्च ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति मूलमयुक्तं, तथापि मतान्तरेणेदमित्येके। अनुमानप्रवृत्ताविति न सतिसप्तमी किन्तु निमित्तसप्तमी, न च कर्म्मयोगाभावान्न तथेति वाच्यम्। शङ्कास्वरूपस्य कर्म्मकर्तृत्वादित्यन्ये। **विशिष्टेति**। साधनविशिष्टे साध्यवैशिष्ट्यमित्यर्थः। व्यापकत्वं व्याप्तिघटितं तत्

टिप्पणी।

सर्वमिन्द्रजालवन्मिथ्या भविष्यतीति शङ्कितासत्त्वं सर्वस्य तथेति भावः। स्वाभाविकत्वं स्वभावेन साध्यस्य जन्यत्वम् स्वभावतः साध्यसम्बन्धित्वं वेति विकल्पयन् दूषयति **स्वभावजन्यत्वस्या-**

प्रकाशः ।

शिष्टयं, रासभादिविशिष्टेऽपि वह्निवैशिष्ट्यात् । नापि निमित्तनैमित्तिकत्वं, रूपरसयोरभावात् । निमित्तत्वस्य नियमघटितत्वाच्च । नाऽपि कार्त्स्न्येन सम्बन्धः । एकव्यक्तिकाव्याप्तेः । नानाव्यक्तिकेऽपि धूमादौ सकलधूमसम्बन्धस्य प्रत्येकं वह्नावसम्भवात् । अत एव, न कृत्स्नेन साध्येन सम्बन्धः । नापि यावत्साधनाश्रयाश्रितसम्बन्धः । साधनाश्रये महानसादौ सकले प्रत्येकवह्नेराश्रितत्वाभावात् । नाप्यविनाभावः । केवलान्वयिनि अव्याप्तेः । नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यम् । यावद्धर्मसामानाधिकरण्यं हि यावद्धर्माधिकरणाधिकरणत्वम् । तच्चाप्रसिद्धम् । साधनसमानाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः । नाप्यव्यभिचारित्वम् । तद्धि न साध्यात्यन्ताभाववदवृत्तित्वं, साध्यवदन्योन्याभाववदवृत्तित्वं वा । केवलान्वयिन्यव्याप्तेः । नापि साध्यवैयधिकरण्यानधिकरणत्वं, साध्यासामानाधिकरण्याऽनधिकरणत्वं वा । तदुभयमपि साध्यानधिकरणानधिकरणत्वम् । तच्च केवलान्वयिन्यसम्भवि । यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमादौ चासिद्धम् । नापि व्यापकसामानाधिकरण्यं, व्याप्तिनिरूप्यत्वात् । नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् । पर्वतीयाग्नेर्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । न च धूमवन्निष्ठात्यन्ताभावप्रतियोगि न वह्निसामान्यमिति वाच्यम् । न हि विशेषाभावादन्यः सामान्यावच्छिन्नप्रतियोगिकाभावः । विशेषाभावसमूहादेव तद्व्यवहारोपपत्तेस्तत्र मानाभावात् । अव्याप्यवृत्तिसंयोगादेर्द्रव्यत्वाद्यव्याप्यतापत्तेश्च । न च प्रतियोगिविरोधित्वमभावविशेषणम् । संयोगे साध्ये सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात् । न हि प्रतियोगिविरोधी संयोगादेरत्यन्तोऽभावः, अधिकरणभेदेनाभावभेदाभावात् । एतेन प्रतियोगिसमानाधिकरणात्यन्ताभावेतरत्वेनाऽपि विशेषणं परास्तम् । वह्नेर्धूमवन्निष्ठात्यन्ताभावप्रतियोगित्वात् ॥

अथ साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वम् । न च द्रव्यत्ववन्निष्ठान्योऽन्याभावप्रतियोगि संयोगवत्, द्रव्यं न संयोगवदित्यप्रतीतेरिति चेत् । न । मूले वृक्षः कपिसंयोगवानित्यबाधितानुभवादवच्छेदभेदेन संयोगवदन्योन्याभावस्याव्याप्यवृत्तित्वात् । न चैवं भेदाभेदापातः । इष्टस्यावच्छेदकभेदमादाय तदुपगमात् । वह्निमत्पर्वतस्य धूमवन्महानसनिष्ठान्योन्याभावप्रतियोगित्वाच्च । न च सामान्यावच्छिन्नप्रतियोगिकोऽन्योन्याभावः, प्रमाणाभावादित्युक्तम् । किञ्च, साधनवन्निष्ठान्योन्याभावाप्रतियोगि साध्यवद् यस्येत्यत्र षष्ठ्यर्थो न व्याप्यव्यापकभावः । तस्यानिरूपणात् । नान्योऽतिव्याप्तेः । साध्यञ्च यदि सिद्धिकर्म विवक्षितं, तदा पर्वतवह्निधूमयोरेव व्याप्तिः । व्यापकश्चेत्तदाऽन्योन्याश्रयः । नापि साधनसमानाऽधिकरणयावद्धर्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यम् । साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैयधिकरण्याऽप्रसिद्धेः । नाप्यनौपाधिकः सम्बन्धो व्याप्तिः । तथाहि । उपाधिः साधनाव्यापकत्वे सति साध्यव्यापको वाच्यः । तत्र व्यापि व्यापकत्वं न व्याप्तिनिरूपकत्वमात्माश्रयत्वात्, किन्तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम् । प्रतियोगित्वमपि न विरोधित्वं सहानवस्थाननियमलक्षणम् । गोत्वाश्वत्वयोरतिव्याप्तेः । अन्योऽन्याभावप्रतियोगिन्यव्याप्तेश्च किन्त्वभावविरहात्मत्वम् । तथापि यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मनिषेधो धूमादावसिद्धः । प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मश्च सिद्ध्यसिद्धिभ्यां निषेद्धुमशक्यः । यावत्साध्य-

प्रकाशिका ।

भावाप्रतियोगित्वं वा, आद्ये दोषमाह व्याप्तिनिरूप्यत्वादिति । अन्त्यमाशङ्क्य निराकरोति 'नापीति ।

मकरन्दः ।

समानाधिकरणात्यन्ताभावाप्रतियोगित्वं वा विवक्षितम् । आद्ये दोषमाह व्याप्तिनिरूप्यत्वादिति । अन्त्यमाशङ्क्य निराकरोति नापीति ।

टिप्पणी ।

व्याप्तेरिति । प्रत्येकम् वह्नावसम्भवात् इति । धूमे सकले प्रत्येकं वह्निनिरू-

प्रकाशः।

व्यापके प्रमेयत्वादौ साधनाव्यापकत्वं, यावत्साधनाव्यापके घटत्वादौ साध्यव्यापकत्वं निषिध्यते इति चेत्। न। व्यधिकरणत्वात्। यावत्साध्यव्यापकव्याप्यत्वमनौपाधिकत्वमिति चेत्। न। आत्माश्रयात्। एतेन, यावत्साधनाव्यापकमव्यापकं यस्य, यावत्साध्यव्यापकं व्यापकं वा यस्य, तत्त्वमनौपाधिकत्वमित्यप्यपास्तम्॥

अथ यावत्साधनसमानाधिकरणात्यन्ताभावप्रतियोगिधर्मप्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यमनौपाधिकत्वम्। न ह्येवं सोपाधिः, साधनसमानाधिकरणात्यन्ताभावप्रतियोगिन उपाधेरार्द्रेन्धनवत्त्वादेर्योऽत्यन्ताभावस्तेन समं साध्यस्य धूमादेः सामानाधिकरण्याभावात्। आर्द्रेन्धनविरहिणि धूमस्यावृत्तेरिति चेत्। न। सोपाधौ गतत्वात्। तथाहि। वह्निः साधनं, तत्समानाधिकरणो योऽत्यन्ताभावस्तप्तायःपिण्डे तत्प्रतियोगि, चत्वरवर्त्यार्द्रेन्धनं, तत्प्रतियोगिको योऽत्यन्ताभावो महानसे, तत्समानाधिकरणः साध्यो धूमस्तेन सामानाधिकरण्यं वह्नेः साधनस्य। तथाप्यार्द्रेन्धनसामान्याभाववति धूमो न वर्त्तते इति चेत्। न। सामान्यावच्छिन्नाभावस्यामानकत्वात्।

नापि यावत्साधनव्यभिचारितव्यभिचारि यत् साध्यं तेन सामानाधिकरण्यं व्याप्तिः। अनेकव्यक्तिकोपाधिमति प्रसङ्गतादवस्थ्यात्।

अथ केवलाऽन्वयिनि केवलाऽन्वयिसाध्यसामानाधिकरण्यं व्याप्तिः, साध्यवदन्यावृत्तित्वं व्यतिरेकिणि। एतयोरनुमितिविशेषे प्रयोजकत्वम्। अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका। न च तन्मात्रादनुमित्यापत्तिः। विशेषसामग्रीसहिताया एव सामान्यसामग्र्या जनकत्वनियमादिति चेत्। न। धूमे साध्यवदन्यावृत्तित्वस्याभावात्। वह्निमत्पर्वतादन्यत्र महानसे धूमस्य वृत्तेः। सकलसाध्यवदन्यवृत्तित्वं न धूमे इति चेत्। न वह्निमतां प्रत्येकं सकलसाध्यवदन्यत्वात्॥

अथ सम्बन्धमात्रं व्याप्तिः। व्यभिचारिणोऽपि सम्बन्धस्य केनचित् सह व्याप्तित्वात् वह्निधूमादिव्याप्तिस्तु विशिष्यैव वक्तव्येति चेत्। न। अनुमितिकारणलिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे सम्बन्धमात्राभिधानस्यार्थान्तरत्वात्। तज्ज्ञानादनुमित्यनुत्पत्तेः। नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदं, सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात्॥

अत्रोच्यते। यत्सम्बन्धितावच्छेदकावच्छिन्नत्वं यस्य, तस्य सा व्याप्तिः। तथाहि। धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं, धूममात्रस्य वह्निसम्बन्धित्वात्। वह्नेस्तु धूमसम्बन्धित्वे न वह्नित्वमवच्छेदकं, धूमासम्बन्धिनि गतत्वात्। न ह्यतिप्रसक्तमवच्छेदकम्। संयोगादौ तथात्वादर्शनात्। किन्तु वह्नावार्द्रेन्धनप्रभववह्नित्वं धूमसम्बन्धितावच्छेदकं, तादृशश्च व्याप्यमेव। यद्वा, यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यद्यस्य रूपं, तदेव तस्य व्याप्यत्वम्। वह्निसामानाधिकरण्यं च धूमे धूमत्वेनावच्छिद्यते, सोपाधौ तूपाधिना। यद्वा प्रतियोगिवैयधिकरण्यावच्छिन्नस्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नेन सामानाधिकरण्यं व्याप्तिः। न च धूमवन्निष्ठात्यन्ताभावप्रतियोगिता वह्नित्वेनावच्छिद्यते, धूमवति वह्निर्नास्तीत्यप्रतीतेः। रासभत्वन्तु तथा, धूमवति रासभो नास्तीति प्रतीतेः सामान्यावच्छिन्नप्रतियोगिकाभावधान्यः, विशेषाभावप्रमायामपि सामान्ये संशयात्। न चैवं संयोगित्वव्याप्यत्वं सत्त्वस्य स्यात्, कर्मणि संयोगात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यात् एतदेवानौपाधिकत्वमित्युच्यते इति संक्षेपः।

प्रकाशिका।

**सम्बन्धज्ञानेऽपीति**। इदमुपलक्षणम्। एवम् अर्थान्तरमित्यपि द्रष्टव्यम्। इतरदन्यत्र व्याख्यातम्।

मकरन्दः।

सम्बन्धज्ञानेऽपीत्युपलक्षणम्। एवमप्यर्थान्तरतादवस्थ्यादित्यपि द्रष्टव्यम्। व्याप्तिलक्षणान्यनुमानप्रकाशे द्रष्टव्यानि।

तः सूत्रकारस्याभिमतत्वात् । अन्यथा तद्व्युत्पादनवैयर्थ्यात् ॥

तदयं संक्षेपः । यत्रानुकूलतर्को नास्ति सोऽप्रयोजकः । स च द्विविधः, शङ्कितोपाधिर्निश्चितोपाधिश्च ।

यत्रेदमुच्यते—

**यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।**
**विपक्षस्य कुतस्तावद् हेतोर्गमनिकाबलम् ॥**

---

बोधनी ।

"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क" इति तर्कं लक्षयित्वा वादसूत्रे प्रमाणतर्कसाधनोपालम्भ इति न्यायाङ्गतां तर्कस्य व्युत्पादयतः सूत्रकृतो न्यायोपकारकत्वस्याभिमतत्वात्, अन्यथा तर्कस्य न्यायानङ्गत्वे तद्व्युत्पादनमनर्थकं स्यात् प्रयोजनान्तराभावादिति विस्तरतः प्रतिपादितमर्थं शिष्यानुकम्पया संक्षिप्य वक्ष्याम इत्याह **तदयम्**–इति । यत्र हेतावुपाधिविधूननेन भूयोदर्शनसहायकमाचरन्ननुकूलस्तर्को नास्ति सोऽप्रयोजकः, उपाधिमानप्रयोजक इत्युक्तं भवति तत्र शङ्कितोपाधेरप्रयोजकत्वे मीमांसावार्त्तिकमुदाहरति **यावच्च**–इति ।  कोऽसावुपाधिर्नाम यद्वा-

प्रकाशः ।

भूयोदर्शनाविप्लवे कोऽयमप्रयोजको नामेत्यत्रोत्तरमाह-**तदयमिति** । अनुकूलत्वञ्च तर्कस्य व्याप्तिग्राहकत्वं व्यभिचारशङ्कानिवर्त्तनद्वारेत्युक्तम् । सोऽयमप्रयोजकः शङ्कितोपाधिः, साधनाऽव्यापकत्वेन साध्यव्यापकत्वेनोभयथा वा सन्दिग्धः । यथा, मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वम् । यथा तुल्ययोगक्षेमत्वेन उपाधेः साध्यव्यपकतया सन्देहे ईश्वरानुमाने शरीरजन्यत्वादि । यथा, मित्रातनयत्वे शाकपाकजत्वस्य साध्यव्यापकतासन्देह इति क्रमेणोदाहरणम् । न चोपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति वाच्यम् । व्यभिचारशङ्काऽऽधायकत्वेन सन्दिग्धानैकान्तिकस्यैव दूषकत्वात् । अत्रैव वृद्धसम्मतिमाह ॥ **यत्रेति** ॥ विपक्षस्याव्यतिरेकित्वं यावच्छङ्क्यते, तावन्न हेतुर्गमक इत्यर्थः । उपाधिसन्देहस्य च ज्ञायमानत्वेनानमितिप्रतिबन्धकत्वाभावान्न हेत्वाभासान्तरत्वं, स्वरूपसति सन्देहे कारणाभावादेवानुमित्यनुत्पत्तेरिति भावः ॥

प्रकाशिका ।

**शरीरजन्यत्वादिरिति** । यद्यपि वस्तुगत्या न्यायमते नायमुपाधिरीश्वरानुमानभङ्गापत्तेः, तथापि विशेषदर्शनदशायामेव तत्सन्देहे प्रतिबन्धक इत्युपन्यस्तः । वस्तुतो धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वमेव कार्यकारणभावाग्रहदशायामुदाहरणं द्रष्टव्यम् । **सन्दिग्धेति** दूषकत्वमात्रे दृष्टान्तोऽयम् । **विपक्षस्येति** विपक्षगामित्वं हेतोरित्यर्थः । **ज्ञायमानत्वेनेति** । इदमापाततः । परमार्थतोऽनुमितिपरामर्शान्यतरसाक्षाद्विरोधाभावादिति द्रष्टव्यम् । अन्यथोपाधेरेव हेत्वाभासतापत्तेरिति सो

मकरन्दः ।

**यथा तुल्येति** । यद्यप्यस्योपाधित्वाभावान्न सन्दिग्धोपाधित्वं, अन्यथेश्वरानुमानस्य सोपाधित्वापत्तेः, तथापि विशेषादर्शनदशायां कदाचित् तत्सन्देहोऽप्यनुमितिप्रतिबन्धक इति तदपि तथात्वेनोदाहृतम् । वस्तुतः शाकपाकजत्वादिकमेव साध्यव्यापकत्वमात्रसन्देहदशायां तथेति बोध्यम् । **सन्दिग्धेति** । दूषकत्वमात्रे दृष्टान्तोऽयम् । **विपक्षस्येति** । विपक्षगामित्वमित्यर्थः ।

ज्ञायमानत्वेनेत्यापाततः, परमुखनिरीक्षकतयेति बोध्यम् । अन्यथोपाधेस्तथात्वं स्यादेवेति ।

टिप्पणी ।

पितस्य सम्बन्धस्यासम्भवात् । **क्षित्यङ्कुरादौ साध्यव्यापकतया सन्देह इति** । क्षित्यङ्कुरादौ सन्देहे तथा च साध्यव्यापकत्वसाधनव्यापकत्वसन्देहः । **शाकपाकजत्वस्य साध्यव्यापकतया सन्देह इति** । पक्षधर्ममित्रातनयत्वावच्छिन्नश्यामत्ववति मित्रातनये शाकपाकजत्वसन्देहात्

तत्रोपाधिस्तु, साधनाव्यापकत्वे सति साध्यव्यापकः। तद्धर्मभूता हि व्याप्तिः जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते इति॥

बोधनी।

नप्रयोजक इत्यत्राह उपाधिस्तु- इति। एकस्मिन्साध्ये साधनत्वेनोपप्लवमानयोः यः साधनाव्यापकत्वे सति साध्यसमव्याप्तिकः स इतरस्य साध्यसंबन्धे उपाधिः स्यात्, तत्र साध्यव्यापक इत्येवोच्यमाने अनित्यत्वसाधने सावयवत्वे कृतकत्वमुपाधिः स्यात्, अथ साधनाव्यापक इत्येवाभिधीयते तदा कृतकत्वे सावयवत्वमुपाधिः स्यात्, न चैतद्युक्तमुभयस्यापि प्रयोजकत्वादिति। एवं लक्षणमुपाधिशब्दप्रवृत्तिनिमित्तमाह तद्धर्म- इति। संसृज्यमाने तद्धर्मविरहिणि धर्मिणि स्वधर्मप्रतिभास-

प्रकाशः।

साधनाव्यापकश्च इति॥ साधनत्वाभिमताव्यापकत्वे साध्यत्वाभिमतव्यापक इत्यर्थः। व्यापकत्वञ्च तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वमिति न व्यापकादिज्ञानेऽन्योन्याऽऽश्रयः॥

ननु साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तिः। न च तयोरनुपाधित्वं, दूषकतावीजसाम्यात्। बाधानुन्नीतपक्षेतरेऽतिव्याप्तिश्च। अथ प्रयोजको धर्म उपाधिः। तत्त्वञ्च न न्यूनाधिकदेशवृत्तेः। तस्मिन् सत्यप्यभवतस्तेन विनाऽपि भवतश्च तदप्रयोज्यत्वात्। पक्षेतरत्वन्तु

प्रकाशिका।

पाधौ न वास्तवः साध्यसाधनभाव इत्यत्र उभयत्राभिमतपदं पूरयति। साध्यत्वाभिमतेत्यादि। नान्योन्याश्रय इति। उपाध्यभावज्ञानाधीनं व्याप्तिज्ञानमित्यन्योन्याश्रयो नोक्तक्रमेणेत्यर्थः। साधनावच्छिन्नेति। आत्मा प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र साधनावच्छिन्नसाध्यव्यापकं रूपवत्त्वं, वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र च वहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकं रूपवत्त्वमुपाधिरित्युभयोरसङ्कीर्णमुदाहरणं द्रष्टव्यम्। बाधानुन्नीतेति स्वन्मत इति शेषः। अन्यथा स्वमतेनाप्यव्याप्त्यभिधानमप्रेतनं विरुध्येत। पक्षानन्तर्भावेनैव च साध्यव्यापकताज्ञानं दूषकमिति दूषकतावीजस्यैवातिव्याप्तिरियं द्रष्टव्येति। साध्यप्रयोजकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणं। तच्च पक्षेतरत्वे नातिव्याप्तमित्याशङ्कते। अथ प्रयोजक इति।

मकरन्दः।

साधनत्वसाध्यत्वे—व्याप्यत्वव्यापकत्वे, न च सोपाधौ वस्तुतस्तथात्वमत आह अभिमतेति। ननु व्यापकत्वं व्याप्तिनिरूपकत्वम्। तथा च व्याप्तौ गृहीतायामुपाधिप्रत्ययस्तत्प्रत्यये च तदभावरूपानौपाधिकत्वप्रत्ययाधीनव्याप्तिप्रत्यय इत्यन्योन्याश्रय इत्यत आह व्यापकत्वञ्चेति। प्रतियोग्यसमानाधिकरणत्वमप्यत्यन्ताभावविशेषणम्। तेन संयोगस्य द्रव्यत्वव्यापकत्वम्। पक्षेतरस्योपाधित्वं मन्यमानोऽपि नैयायिकसिद्धान्तानुसारेण तल्लक्षणेऽतिव्याप्तिं ददाति बाधानुन्नीतेति। स्वन्मते इति शेषः। एतदपि पक्षान्तर्भावेण साध्यव्यापकत्वानिश्चयात् पक्षातिरिक्तसाध्यव्यापकत्वाभिप्रायेण बोध्यम्। एतच्चाग्रे स्फुटम्। ननु साध्यप्रयोजकत्वे सतीति लक्षणविशेषणं तच्च न पक्षेतरत्वे इति नातिव्याप्तिरित्याह अथेति। न तथा, न प्रयोजकत्वघटितलक्षणवदित्यर्थः। एतेनोक्ताशङ्काया

टिप्पणी।

सन्देहः। तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वमिति न तु व्याप्तिनिरूपकत्वमिति शेषः। न व्यापकादिज्ञानेऽन्योन्याश्रय इति। व्याप्तौ गृहीतायामुपाधिप्रत्ययः, तस्मिन् सति तदधीनानौपाधिकत्वज्ञानाधीनव्याप्तिग्रह इत्यन्योन्याश्रयः॥ तर्कश्च त्वया व्यभिचारज्ञानाभावसम्पादनाय व्याप्तिग्राहकोऽभ्युपेयते व्यभिचारज्ञानश्चोपाध्यधीनम्, उपाधिरेव च न निर्वक्तुं शक्य इति कुतस्तर्कोऽभ्युपेय इति खण्डनरसिकः स्वेष्टासाधकमपि चार्वाकः शङ्कते नन्विति। स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं साधनावच्छिन्नसाध्यव्यापकम्, वायुः प्रत्यक्षः प्रत्यक्षगुणत्वादित्यत्रोद्भूतरूपवत्त्वम् पक्षधर्मवहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकमुपाधिः।

प्रकाशः ।

न तथेति चेत् । न । दूषकतौपयिकप्रयोजकत्वस्य साध्यव्यापकसाधनाव्यापकत्वस्य तत्राप्यनपायात् । साध्यव्याप्यत्वस्य चादूषणत्वात् । व्यर्थविशेषणत्वादनुपाधिरिति चेत् । न । तद्धि न निष्प्रयोजनकत्वं, साधनव्याप्तिपरिहारस्यैव प्रयोजनत्वात् । नापि व्यभिचारावारकत्वम् । पक्षे स्वसिद्धस्य व्यभिचार-

प्रकाशिका ।

**दूषकतेति** । तथा च प्रयोजकत्वघटितमपि लक्षणन्तत्रातिव्याप्तमेवेति भावः । **अदूषण-त्वादिति** । इदमुपलक्षणम् । विषमव्याप्तिमदुपाधावव्याप्त्यापत्तेश्चेत्यपि द्रष्टव्यम् । व्यर्थविशे-षणरहितत्वं लक्षणविशेषणमतो नातिव्याप्तिरित्याशङ्कते । **व्यर्थेति । अनुपाधिरिति** । उपाधिलक्ष-णानाक्रान्त इत्यर्थः । **साधनव्याप्तीति** । इतरत्वस्य केवलान्वयितया साधनव्यापकत्वात् पर्वतेतर-त्वस्य च पर्वत एव साधनव्यापकत्वादित्यर्थः । ननु साधने साध्याव्यभिचारावारकत्वेनैवात्र व्यर्थवि-षणता साधने साध्यव्यभिचारवारकस्यैवोपाधित्वात् आर्द्रेन्धनस्यैव धूमव्यभिचारवारकस्य वह्नौ । न च पर्वतेतरत्वं तथा शुद्धस्यैव धूमस्य वह्न्यव्यभिचारादत आह । **नापीति । स्वसिद्धस्येति** । पक्षेतरत्वस्योपाधित्वादिमते धूमो वह्निव्यभिचार्येव पक्ष इति पर्वतेतरत्वविशिष्टस्यैव धूमस्य वह्निव्या-प्यत्वमिति भवत्युपाधिस्तन्मते व्यभिचारवारक इत्यर्थः । तथा चोक्तातिव्याप्तिः सुदृढैवेति भावः ।

मकरन्दः ।

अतिव्याप्तिपोषकतयाऽसङ्गतिरित्यपास्तम् । **दूषकतेति** । तथा च प्रयोजकत्वगर्भस्यापि तस्य तत्र सत्त्वादतिव्याप्तिस्तदवस्थैवेति भावः । ननु व्यर्थविशेषणरहितत्वं तद्विशेषणमिति नातिव्याप्तिरित्याह **व्यर्थेति** । अनुपाधिः उपाधिलक्षणानाक्रान्त इत्यर्थः । **साधनेति** । इतरत्वस्य केवलान्वयितया साधनव्यापकत्वमिति पर्वतादिपदं विशेषणम् । ततश्च पक्ष एव साधनाव्यापकत्वमित्यर्थः । तथा च पुनरतिव्याप्तितादवस्थ्यमेवेति भावः । ननु साधने साध्यव्यभिचारावारकतयैव व्यर्थत्वं ब्रूमः, तत्र तद्वारकस्यैवोपाधित्वात् । यथा वह्नौ धूमव्यभिचारवारकमार्द्रेन्धनवत्त्वमुपाधिः, पक्षेतरत्वञ्च न धूमे वह्निव्यभिचारवारकं, तत्र तस्यैवाप्रसिद्धेरित्यत आह **नापीति** । **स्वसिद्धस्य** = पक्षेतरोपाधिवा-दिसिद्धस्य । तन्मते धूममात्रस्य पर्वत एव वह्निव्यभिचारित्वात्तद्वारकं धूमे पर्वतेतरत्वं विशेषणम् । पर्वतेतरधूमवत्त्वस्य वह्न्यव्यभिचारित्वात् । तथा च सर्वथा व्यर्थविशेषणरहितत्वस्य तत्र सत्त्वादु-क्तातिव्याप्तिः सुदृढैवेति भावः । यद्यपि वास्तवव्यभिचारवारकत्वविवक्षायां नातिव्याप्तिः, तथापि

टिप्पणी ।

**नापि व्यभिचारावारकत्वमिति** । साधननिष्ठसाध्यव्यभिचारस्य वारकः साध्यविशेषणीभवन्नुपाधि-र्भवति, अतथाभूतस्तु नोपाधिरभ्युपेयः, यथा धूमवान् वह्नेरित्यत्र स्वतोऽवह्निर्धूमव्यभिचारी आर्द्रेन्धन-वत्त्वविशिष्टो भवत्यव्यभिचारीति सव्यभिचारकत्वादुपाधिः, वह्निमान् धूमादित्यत्र धूमस्य नास्ति स्वतो वह्निव्यभिचार इति न तद्वारकः पक्षेतरत्वादिर्धूमादिहेतुविशेषणीकृतोऽपीत्याशयः । **स्वसि-द्धस्य व्यभिचारस्य वारणादिति** । यस्य पुरुषस्यानुमितिसम्पादनाय साधनोपग्रहस्तेनैवोपाधि-रुद्भावनीय इति स स्वपदार्थः । तेन गृहीतस्य व्यभिचारस्य वारकत्वादित्यर्थः । पक्षेतरोपाधिवादि-सिद्धस्येति तात्पर्यार्थः, यं प्रति साध्यसाधनाय हेतून्यासः क्रियते स प्रतिवादी सन्नुपाधिमुद्भाव-यतीत्युपाध्युद्भावनकर्ता स्वपदार्थः, तथा च यः पक्षेतरत्वमुपाधिमुद्भावयति, हेतोः पक्षे सन्दिग्ध-साध्याभाववति वृत्तित्वस्य स्वसिद्धस्य वारणाय पक्षविशेषितस्य भेदस्योपाधितामाह इति पक्षविशेषणं व्यभिचारवारकमेव । पक्षेतरत्वोपाधिवादिनामयमाशयः, यथा साध्याभाववत्तया निश्चिते हेतुसन्देहः सन्दिग्धानैकान्तिकः तथा हेतुमत्तया निश्चिते साध्याभावसन्देहोऽपीति पक्षेतर एव हेतुव्यापकत्वं साध्ये निर्णयस्तथा पक्षेतरस्मिन् पक्षेतरत्वस्यापि साध्यव्यापकत्वं निर्णेतुं शक्यमिति पक्षेतरत्वमुपाधि-र्भवति, पक्ष एव हेतोः साध्यव्यभिचारवारकश्च सिद्धान्तिमते हेतुमति साध्याभावसन्देहस्य सन्दिग्धो

प्रकाशः ।

स्य वारणात् । तादृशस्याप्यस्मदादिपदादेरुपादानात् । नापि पर्वतेतरान्यत्वादेरित्यत्र व्यतिरेके इतरान्यत्वस्याप्रसिद्धेरसिद्धिवारणार्थं पर्वतपदं विशेषणमित्येव व्यर्थत्वम् । इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहात् । येन विशेषणेन विना व्याप्त्यग्रहस्तस्यैव सार्थकत्वात् । व्यभिचारवारकस्यापि सार्थकत्वे तस्यैव तन्त्रत्वात् । अत एव गन्धादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यत्राऽसिद्धिवारकविशेषणस्य सार्थकत्वम् । अन्यथा बाधोन्नीतपक्षेतरत्वस्याप्यनुपाधित्वापत्तेः । पक्षे साध्यसन्देहे साध्यव्यापकत्वानिश्चयान्न तदुपाधिः । यत्र तु पक्षे साध्याभावप्रमा, तत्र बाधोन्नीतत्वेनोपाधिरेवेति चेन्न । पक्षाऽतिरिक्ते साध्यव्यापकत्वग्रहादेवोपाधेर्दूषकत्वात् । अन्यथा, पक्षे साध्यसन्देहादुपाधिमात्रोच्छेदापत्तेः । विपक्षाव्यावर्त्तकविशेषणशून्येति विशेषणान्न तदुपाधिः । बाधोन्नीतपक्षेतरत्वं चोपाधिः । तत्र पक्षाभिमतस्य विपक्षत्वादिति चेत् । न । वस्तुनो विपक्षाऽव्यावर्त्तकविशेषणशून्यत्वाभावात् । सर्वत्र प्रमेयत्वादेः सत्त्वात् । तत्रोपात्तत्वेन विशेषणे च व्याघातः । न हि तत्रोपात्तं तेन शून्यं चेति सम्भवति॥

तथापि साध्यव्यापकत्वे सति साधनाव्यापकत्वस्य पक्षेतरत्वे सत्त्वात् तद्व्यावृत्त्या साध्यव्यावृत्तिरा-

प्रकाशिका ।

यद्यपि वास्तवव्यभिचारविवक्षायां नातिव्याप्तिः । तथापि वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ व्यभिचारावारकस्यापि रूपवत्त्वादेरुपाधितास्वीकारादव्याप्तिर्द्रष्टव्या । **तादृशस्यापीति ।** असिद्धव्यभिचारवारकस्यापीत्यर्थः । पक्षापक्षसाधारणसाध्यव्यापकत्वघटितमेव लक्षणं तच्च पक्षेतरे नास्तीत्याशयेन शङ्कते । **पक्ष** इति । दूषकताबीजं पक्षानन्तर्भावेनैव साध्यव्यापकताज्ञानम्, अन्यथा निश्चितोपाधिमात्रोच्छेदापत्तेरित्याशयेन दूषयति । **पक्षातिरिक्त** इति । परमतेन परस्यातिव्याप्तिं दत्वा स्वमते पक्षेतरत्वस्योपाधित्वमेव । तथा च तद्वारकविशेषणप्रक्षेपेऽव्याप्तिरित्याह । **तथापीति । तद्व्यावृत्त्येति ।**

मकरन्दः ।

एतादृशस्याप्युपाधित्वेन सर्वसिद्धत्वात्तत्राव्याप्तिर्बोध्या । **तादृशस्यापीत ।** स्वसिद्धव्यभिचारवारकस्यापीत्यर्थः । पक्षापक्षसाधारणसाध्यव्यापकत्वमेव विवक्षितमिति नोक्तातिव्याप्तिरित्याह **पक्ष इति ।** परमतेनैव परस्यातिव्याप्तिं दत्वा अनुमानद्वेषी चार्वाकस्तस्योपाधित्वमेवोपपादयति **तथापीति । तद्व्यावृत्त्येति ।** अत्र पक्षातिरिक्तसाध्यव्यापकत्वमेवेति तद्व्यावृत्तावपि पक्षनिष्ठसाध्याव्यावृत्तेः

टिप्पणी ।

नैकान्तिकत्वाभावात्, पक्षेतरत्वस्य न व्यभिचारवारकत्वमिति स्वसिद्धस्येत्युक्तम् । **अस्मदादिपदादेरुपादानादिति ।** त्वं घटज्ञानाभाववानात्मत्वादित्यनुमानं यं प्रत्युद्भाव्यते तेनास्मदितरत्वमत्रोपाधिरित्युद्भाव्यते तत्रास्मत्पदं स्वस्मिन् साध्याभाववत्तया निश्चिते हेतोर्वृत्तित्वग्रहः, परेषामशक्यः स्वेनैव निर्णयस्तस्य च हेतुनिष्ठस्य व्यभिचारस्य स्वसिद्धस्य वारकः अस्मदिति पदार्थः, इतरत्वमात्रस्य सामानाधिकरण्येन हेतुविशेषणत्वेऽपि गृहीतव्यभिचारवारणस्याशक्यत्वादिति भावः । **अन्यथा** असिद्धिवारकत्वमात्रेण व्यर्थत्वे । पूर्वोक्तां बाधोन्नीतपक्षेतरत्वेऽतिव्याप्तिं वारयितुं शङ्कते **पक्षे साध्यसन्देह इति । विपक्षाव्यावर्त्तकेति ।** इदञ्च समव्याप्तोपाध्यभिप्रायेण तत्रोपाधेर्विपक्षगतत्वे साध्यव्याप्यत्वासम्भवः स्यात् । **तत्रोपात्तत्वेन विशेषण इति ।** उपाधावुपात्तत्वस्य विपक्षाव्यावर्त्तकविशेषणत्वे । पराभिमतेनैव पक्षेतरत्वस्यानुपाधित्वेन परस्यातिव्याप्तिं दत्वाऽनुमानद्वेषी चार्वाकस्तस्योपाधित्वमेवोपपादयति । **तथापीति ।** साध्यव्यापकतावच्छेदकत्वे सति साधनाव्यापकतावच्छेदकं यद्विपक्षाव्यावर्त्तकविशेषणशून्यं तद्धर्मवत्त्वोक्तौ प्रमेयत्वमादाय न दोष इत्यत आह **तथापीति ।** उपाधेर्दूषकताबीजस्य साध्यव्यापकत्वे सति साधनाव्यापकत्वस्य सत्त्वे उपाधित्वं स्वीकरणीयमेव भवता तद्व्यावर्त्तकत्वञ्च विशेषणेनोपादेयमित्यनौपाधिकत्वं कथं व्याप्तिः स्यादसम्भवादित्यभिप्रायः । **तद्व्यावृत्त्या साध्यव्यावृत्तिरिति ।** अत्र पक्षतातिरिक्तत्व-

प्रकाशः ।

वश्यकीति हेतोर्व्यभिचारात्तत्र चावश्यमुपाधिसत्त्वादन्यस्योपाधेरभावात् पक्षेतरत्वमेवोपाधिः स्यात् । किञ्च, व्यभिचारावारकत्वं न व्याप्तिविरोधि, नाऽपि तज्ज्ञानविरोधि । नीलधूमे तदुभयसत्त्वात् ॥

अथोपाधेः स्वव्यतिरेकेण सत्प्रतिपक्षतया दूषकत्वम् । तथाहि । नास्य व्यभिचारोन्नायकतया दूषकत्वम् । वह्निमत्त्वं धूमवत्त्वव्यभिचारि तद्व्यापकार्द्रेन्धनव्यभिचारित्वात्प्रमेयत्ववदित्यत्रार्द्रेन्धनवत्त्वस्य धूमवत्त्वव्यापकत्वासिद्धेः । धूमवत्त्वव्यापकवह्निमत्त्वाव्यापकत्वात् । व्यापकत्वे वा साधनव्यापकत्वेनानुपाधित्वापत्तेः । न च धूमव्याप्यत्वं वह्निमत्त्वस्यासिद्धम् । तद्धि न व्यभिचारात्, स्फुटे व्यभिचारे उपाध्युपन्यासस्यानर्हत्वात् । तस्य तदर्थत्वात् । नाप्युपाधिनिश्चयात् । उपाधित्वासिद्धेः ॥

अथ यथा सहचारदर्शनव्यभिचारादर्शनाभ्यां वह्निमत्त्वं व्याप्यं धूमवत्त्वञ्च व्यापकं, तथा आर्द्रेन्धनवत्त्वमपि व्यापकं, धूमवत्त्वञ्च व्याप्यम् । तथा च व्यापकनिवृत्त्या व्याप्यनिवृत्तिवद् व्याप्यसत्त्वाद् व्यापकसत्त्वमावश्यकमित्यविशेषादुभयमप्यसाधकमित्युच्यते । हन्त तर्हि सिद्धमुपाधेः सत्प्रतिपक्षतया दूषकत्वम् ।

नापि व्याप्यत्वासिद्धिरूपत्वेन । सा हि न तावद्व्याप्तिभङ्गनिश्चयात्, तस्योपाधित्वनिश्चयसाध्यत्वात् । प्रकृते च तदनिश्चयात् । सहचारदर्शनव्यभिचारादर्शनाभ्यां तन्निश्चय इति चेत् । न । तयोर्हेतावपि सत्त्वात् । तत्रोत्पन्नमपि व्याप्तिज्ञानमुपाधिदर्शनाद् बाध्यते इति चेत् । न । उपाधावपि तद्बाधापत्तेः। तत्राप्युपाधिसद्भावात् । तथा ह्यार्द्रेन्धनवत्त्वस्य धूमवत्त्व उपाधित्वे तदभावो धूमवत्त्वाभावव्याप्तो वाच्यः । अन्यथा आर्द्रेन्धनस्यापि धूमवत्त्वव्यापकत्वानुपपत्तेः । न हि यदभावो यदभावव्यभिचारी तत्तस्य व्यापकम् । एवं व्यतिरेके निर्वह्नित्वमुपाधिः । इदं हि निर्धूमस्य व्यापकतयाऽभिमतस्य व्यापकं, निर्धूमस्य वह्निमतोऽदर्शनात् । दर्शने वा व्यभिचारस्य स्फुटतयोपाध्युपन्यासस्यानर्हत्वादित्युक्तम् । आर्द्रेन्धनविरहस्य चाऽव्यापकं, आर्द्रेन्धनाभाववति पक्षे तदसत्त्वात् । नापि व्याप्त्यनिश्चयाद्व्याप्यत्वासिद्धिः । व्याप्त्यनिश्चये हि पक्षे वह्निमत्त्वस्यार्द्रेन्धनविरहस्य च दर्शनात् । एवञ्च,

प्रकाशिका ।

यद्यपि पक्षातिरिक्ते साध्यव्यापकत्वग्रहे तादृशसाध्यव्यावृत्तावपि पक्षीयसाध्यव्यावृत्तेः कथं व्यभिचारः तथापि पक्षसाधारण्येनापि साध्यव्यापकतायाः संशयोऽस्त्येवेति व्यभिचारसंशयोऽस्त्येवेति भावः । अनौपाधिकत्वस्यापि व्याप्तितया व्याप्तिविरहरूपत्वमुपाधेरसम्भावितमेवेति तदुन्नायकत्वेन व्याप्यत्वासिद्धित्वं वक्तव्यं तथा सत्याह **तर्हीति । निर्धूमस्येति ।** तथा चापातत उक्तोपाधिनोक्तोपाधौ

मकरन्दः ।

कथं व्यभिचार इति चिन्त्यम् । अनौपाधिकत्वस्य व्याप्तित्वानभ्युपगमान्न व्याप्यत्वासिद्धिरूपत्वमिति तदुन्नायकत्वेन तथात्वं वाच्यम्, एवं सत्याह **सा हीति । निर्धूमस्येति ।** तथा चापातत उक्तो-

टिप्पणी ।

विशिष्टसाध्यव्यापकत्वमेवेति तद्व्यावृत्तावपि पक्षनिष्ठसाध्याव्यावृत्तेः कथं व्यभिचार इति चिन्त्यम् । किञ्च **व्यभिचारावारकत्वमिति**। व्यभिचारावारकत्वं पक्षेतरत्वविशेषणे स्वीकृत्य नापि व्यभिचारावारकत्वमित्यत्र समाधानान्तरमाह **किञ्चेति**। भवतु पक्षेतरत्वे विशेषणस्य व्यभिचारवारकत्वं किं तेन उपाध्यभावेन साध्याभावसाधने उपाधिव्यभिचारेण साध्यव्यभिचारसाधने वा या व्याप्तिस्तज्ज्ञानं वा तदुभयविरोधित्वेन व्यभिचारवारकत्वस्येष्टाव्याघातकत्वादित्यर्थः । **सत्प्रतिपक्षतया दूषकत्वं** सत्प्रतिपक्षतयेति सावधारणम्, तत्रेतरव्यवच्छेदमुपपादयति **तथाहीत्यादि । आर्द्रेन्धनविरहस्य च दर्शनादिति ।** आर्द्रेन्धनस्य धूमव्यापकत्वनिश्चये तदभावस्य व्यापकाभावत्वेनावधारणे धूमाभावनिश्चये व्यभिचारनिश्चयादनिश्चयो यदि स्यात् स्यादप्यसिद्धिस्स च नास्त्येव अपि तु धूमव्यापकत्वेन सन्दिग्धस्य वह्निमत्त्वस्य धूमव्यापकत्वेन सन्दिग्धार्द्रेन्धनवत्त्वाभावस्य च दर्शने चेत्यर्थः **व्याप्त्यनिश्चयो हीति** ।इयञ्च सत्प्रतिपक्षतैवेत्यन्वयः, इयं व्याप्त्यनिश्चयेन व्याप्यत्वासिद्धिः,सत्प्र-

प्रकाशः।

धूमवत्त्वनिर्धूमवत्त्वाप्रसक्तौ वस्तुनो विरुद्धद्वैरूप्याभावादेकत्र व्याप्तिभङ्गो वाच्यः। स च विनिगमकाभावादेकत्र निश्चेतुं न शक्यते इति वाच्यम्। इयं च सत्प्रतिपक्षतैव। तस्मादुपाधेः सत्प्रतिपक्षभावेन दूषकत्वस्थितौ पक्षेतरत्वस्य नोपाधित्वम्। तद्व्यतिरेकस्य साधारणतया साध्याभावासाधकत्वादिति॥

मैवम्। तथा सति प्रतिपक्षानुमाने सत्प्रतिपक्षान्तरस्योपाधेरनुद्भावनापत्तेः। न च, सत्प्रतिपक्षान्तरमपि तत्रोद्भाव्यम्। उत्तम्भकाऽप्रतिबद्धस्य मन्त्रस्येवाप्रतिबद्धस्यैव प्रतिबन्धकत्वादिति वाच्यम्। सर्वत्र स्थापनाया अपि प्रतिबद्धत्वेनाप्रतिबन्धकत्वप्रसङ्गात्। न च प्रतिपक्षबाहुल्येनाधिकबलत्वार्थमुद्भावनम्। बलं ह्यत्रानुमित्यौपयिकं व्याप्तिपक्षधर्मताऽऽत्मकं विवक्षितम्। तच्च तुल्यमेव। न तु भूयस्त्वमपि तथा। एकस्मादनुमित्यनुदयापत्तेः। तदाहुराचार्याः-"बहुत्वेऽत्यन्वाचये चकारः" इति। सन्दिग्धोपाधेरदूषकत्वापाताच्च। तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात्। केवलव्यतिरेकिणा च सत्प्रतिपक्षसम्भवाच्च। न चासाधारण्यम्। तस्यापि सत्प्रतिपक्षोत्थापकतया दूषकत्वात्। किञ्चैवं, बाधोन्नीतपक्षेतरत्वमपि नोपाधिः स्यात्। व्यतिरेकेऽसाधारणत्वात्, केवलान्वयि-

प्रकाशिका।

व्याप्तिज्ञानबाधा स्यादेवेति भावः। उपसंहरन्नेव प्रकृते योजयति। **तस्मादिति**। तथा च दूषकताबीजाभावान्न तस्योपाधित्वमिति न तत्राव्याप्तिर्दोष इति भावः। नन्वनयोरन्यतरद् बाध्यमिति सामान्यतो दृष्टे विनिगमकतर्कप्रवृत्त्यर्थं सत्प्रतिपक्ष उपाध्युद्भावनं युक्तमेवेत्यरुचेराह। **सन्दिग्धेति**। ननु निश्चितोपाधावुक्तं दूषकताबीजं सन्दिग्धोपाधौ त्वन्यदेव तदित्यरुचेराह। **केवलव्यतिरेकिणेति**। ननु नेदमपि युक्तमसाधारणस्य व्याप्तिग्रहप्रतिबन्धकतया दोषत्वादित्यरुचेराह। **किञ्चैवमिति**। बाधोन्नीते साध्याभावसाधने पक्षस्यैव सपक्षत्वाद्युक्तमेतदपीत्यरुचेराह **केवलान्वयिनीति**। केवलान्वयिसाध्यके साध्याभावाप्रसिद्ध्या व्यतिरेके सपक्षाभावादसाधारण्या

मकरन्दः।

पाधिना प्रकृतोपाधौ व्याप्तिज्ञानबाधा स्यादेवेति भावः। उपसंहरन्नेव प्रकृते योजयति **तस्मादिति**। ननु सन्दिग्धोपाधेर्व्यभिचारसंशयाधायकतया पृथगेव दोषत्वमभ्युपगम्यते न तु सत्प्रतिपक्षतयेत्यरुचेर्दोषान्तरमाह **केवलेति**। व्यतिरेकव्याप्तिपुरस्कारेण तेनापि सत्प्रतिपक्षसम्भवादित्यर्थः। **तस्यापीति**। असाधारणस्यापीत्यर्थः। तथा च सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवत्तत्रासाधारणोऽपि न दोष इति भावः। ननु बाधेन व्यतिरेके पक्षस्यैव सपक्षत्वेन तद्व्यावृत्तत्वाभावान्नासाधारण्यमित्यरुचेराह **केवलान्वयिनीति**। केवलान्वयिधर्मसाध्यकानुमाने इत्यर्थः। तत्र व्यतिरेके साध्याप्रसिद्ध्या

टिप्पणी।

तिपक्षतामुपपादयति **व्याप्त्येति**। सत्प्रतिपक्षान्तरस्यैवोपाधेरनुद्भावनापत्तेरिति यत्र सत्प्रतिपक्ष उद्भाव्यते, तत्रोपाध्युद्भावनमपि क्रियते तत्र स्यादुपाधेरपि सत्प्रतिपक्षपर्यवसायित्वेन एकदोषस्य द्विधोद्भावनस्य वैयर्थ्यादिति भावः। न च सत्प्रतिपक्षान्तरमपि तत्रोद्भाव्यमिति सत्प्रतिपक्षान्तरानुद्भावने स्थापनानुमानेन प्रतिबन्धस्य प्रत्यनुमानप्रतिबन्धकत्वं न स्यादिति सत्प्रतिपक्षान्तरोद्भावने तेनोत्तम्भकेन मणेरिव स्थापनानुमानस्य प्रतिबन्धशक्त्यपाकरणे भवत्यप्रतिबन्धप्रकृतसत्प्रतिपक्ष प्रतिबन्धकमित्याशयः। **सर्वत्र स्थापनाया अपि प्रतिबद्धत्वेनेति**। प्रकृतसत्प्रतिपक्षेण प्रतिबन्धकेन स्थापनाया अपि प्रतिबद्धत्वात् स्थापनायाः प्रतिबन्धकत्वसिद्धये उत्तेजकविधया स्थापनान्तरोद्भावनमपि स्यात्। अन्यथा स्थापनाया अप्रतिरोधकत्वे प्रतिपक्षाभावे सत्प्रतिपक्षतैव न स्यादिति भावः। **केवलव्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्चेति**। सत्प्रतिपक्षविधया पक्षेतरत्वस्याप्युपाधित्वसम्भवात् साध्याभावेन तदभावस्य व्यतिरेकव्याप्तेः सम्भवात्। **केवलान्वयिन्यसाधारणत्वाभावादिति**। सपक्षविपक्षव्यावृत्तत्वमसाधारण्यं केवलान्वयिनि व्यतिरेकानुमाने

प्रकाशः ।

न्यसाधारणत्वाभावात् पक्षेतरत्वस्योपाधितापत्तिश्च । अपि चैवमन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वात् त्र्यणुकवदित्यत्राश्रावणत्वमुपाधिर्न स्यात् । तद्व्यतिरेकस्य पक्षावृत्तित्वात् । न च नायमुपाधिः, तल्लक्षणसत्त्वात् । पर्वतावयववृत्त्यन्यत्वादिकञ्चैवमप्युपाधिः स्यादेव । तद्व्यतिरेकस्यासाधारणत्वाभावात् । यत्तु, पक्षेतरत्वस्य ग्राहकसाम्यात् साध्यव्यापकत्ववत् साध्याभावव्यापकत्वात्तन्निवृत्त्या साध्यसाध्याभावाभ्यां निवर्त्तितत्वं । न चैवमिति तस्य साध्यव्यापकत्वे सन्देह इति । तन्न । तथापि साध्यव्यापकतापक्षमाश्रित्योपाधित्वापत्तेः ॥

अथ साध्यसमव्याप्तत्वे सति साधनाव्यापक उपाधिरिति पक्षेतरत्वं नोपाधिः । युक्तञ्चैतत् । यद्धर्मोऽन्यत्र भासते तस्यैव जपापुष्पस्येवोपाधित्वात् । उपाधिवृत्ति हि साध्यव्याप्यत्वं साधनाभिमते भासते इति तथैवोपाधिरद्वृत्तिः । साध्यव्याप्यत्वमात्रञ्च न दूषकमिति तस्य साध्यव्यापकत्वमपीष्यते । मैवम् । दूषकतावीजस्य विषमव्याप्तेऽपि सत्त्वात् । दूषकतायां साध्यव्याप्यत्वस्य व्यर्थत्वात् । दूषणान्तरसंकीर्णस्य चानुपाधित्वे समव्याप्तस्यापि तत्त्वापत्तेः ॥

अथोपाधिः स उच्यते, यदभावो व्यभिचारविरोधी । न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि । यत्र हि व्यभिचारस्तत्र समव्याप्तमन्ततः साध्यमप्युपाधिर्भवत्येव, स्वस्य स्वव्यापकत्वे

प्रकाशिका ।

भावादित्यर्थः । यद्यपि साध्याप्रसिद्ध्यैव तत्र सत्प्रतिपक्षाभावः, तथापि साध्याप्रसिद्धावपि अप्रसिद्धसाध्यकव्यतिरेकिणीव व्यतिरेकव्याप्तिपक्षधर्मतापरामर्शात्तस्यान्वयव्याप्तिपक्षधर्मतापरामर्शप्रतिवन्धकतया सत्प्रतिपक्षत्वमुपपद्यत एवेति भावः । यद्यपि विरोधिपरामर्शसत्त्वेन प्रतिबन्धकत्वं प्रकृते च विरोधनिरूपकाप्रसिद्धिः, तथापि विरोधप्रतिसन्धानमात्रमेव प्रयोजकं तच्च प्रमेयत्वमत्यन्ताभावप्रतियोगि न वेति भ्रमसंभवादस्त्येव प्रकृत इत्याशयेनेदं बोध्यम् । आकाशात्यन्ताभावादिकेवलान्वयिपरमेतत् तत्र तस्य प्रसिद्धत्वात् । तत्वतस्त्वप्रसिद्धत्वादित्यन्ये । वस्तुत इत्येवास्वरसादाह । **अपि चेति । तथापीति ।** व्यभिचारसंशयाधायकत्वादिति भावः । समव्याप्त एवोपाधिः, तथा च न विषमव्याप्तावव्याप्तिर्दोष इत्युपपादयन्नाह **यदभाव** इति । यदिदं साधनव्यापकत्वमापादितं हेतौ साध्यव्यभिचाराभावापादकमित्यर्थः । **अभावः** = साधनाव्यापकत्वाभावः । साधनव्यापकमिति यावत् ।

मकरन्दः ।

सपक्षाभावान्नासाधारण्यमिति भावः । यद्यप्येवमसाधारण्याभावेऽपि साध्याप्रसिद्ध्यैव व्यतिरेके सत्प्रतिपक्षत्वाभावान्न तस्योपाधित्वं स्यात्, तथाप्यसाधारण्यनिरासमात्राभिप्रायकोऽयं ग्रन्थ इत्याहुः । वस्तुतः, साध्याप्रसिद्धावप्यप्रसिद्धसाध्यकव्यतिरेकिणीव व्यतिरेकव्याप्तिपक्षधर्मतापरामर्शसम्भवात्तस्य प्रकृतहेतुपक्षधर्मताव्याप्तिपरामर्शसंवलनदशायां सत्प्रतिपक्षत्वमित्यभिप्रायकोऽयं ग्रन्थः । यद्यपि विरोधिपरामर्शत्वेन तथात्वं प्रकृते च विरोधनिरूपकाप्रसिद्धिः, तथापि विरोधप्रतिसन्धानमेव तत्प्रयोजकम् । तच्च प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्रमसम्भवात् सम्भवत्येवेति मतविशेषेण तथोक्तमिति । यद्वा, आकाशात्यन्ताभावादिकेवलान्वयिपरमेतत् । तत्र तद्वतोऽप्रसिद्ध्या सपक्षाभावादिति । केचित्तु पूर्वास्वरसादाह **अपि चेति । तथापीति ।** साध्यव्यापकताकोटिमाश्रित्य सन्दिग्धोपाधितापत्तेरित्यर्थः ।

समव्याप्त एवोपाधिरित्युपपादयन्नेवाह **अथेति** । यदीयं प्रसञ्जितं साधनव्यापकत्वं हेतुसाध्य-

टिप्पणी ।

सपक्षाप्रसिद्धेः । न च तत्र साध्यव्यतिरेकस्यैवाप्रसिद्ध्या सत्प्रतिपक्षविषया कथं पक्षेतरत्वस्य दूषकत्वमिति वाच्यम् । भ्रमात्मकस्यैव व्याप्तिज्ञानादेः सर्वस्य सम्भवादिति भावः । **न चैवमिति** । सत्प्रतिपक्षविधयैव दूषकत्वे ॥ **यदभावो व्यभिचारविरोधीति** । उपाध्यभावो हि उपाधिव्याप्यत्वम्,

प्रकाशः ।

सति व्याप्यत्वात् । साधनाव्यापकत्वाच्च । विषमव्याप्तिके तु साध्यव्यापको यो धर्मस्तद्व्याप्यत्वमात्रेण तद्व्याप्यत्वम् । दृष्टं ह्यनित्यत्वस्य व्यापकं प्रमेयत्वं तद्व्याप्यञ्च गुणत्वम् । न च गुणत्वानित्यत्वयो मिथो व्याप्तिः । समव्याप्तिके च तद्व्यापकव्याप्येन व्याप्तश्च तद्व्यभिचारि चेति व्याहतम् ।

मैवम् । तथापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वमात्रं प्रयोजकं, लाघवाद्, न तु साध्यव्यापकव्याप्यत्वमपि व्यभिचारस्थलस्य स्वयैवोक्तत्वात् । न च साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वं, साध्यव्याप्यमित्यत्रापि ह्यनौपाधिकत्वं तदेव वाच्यं, तथाचानवस्थेति । व्यभिचारव्यावर्त्तनार्थमनौपाधित्वलक्षणे यावदिति पदं साध्यव्यापकत्वे विशेषणं प्रक्षिप्तमेव । यदि च यद्व्यतिरेकेऽनुमितिर्भवत्येव तद् दूषणं, तदा विरुद्धत्वादेरप्यदूषणत्वमिति यस्मिन् सत्यनुमितिर्न भवति तदेव दूषणमिति विषमव्याप्तोऽप्युपाधिः ॥

अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । तेन मित्रातनयत्वेन श्यामत्वे ध्वंसस्य च जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं शाकपाकजत्वं भावत्वं चोपाधिः । काकादौ प्रागभावे च केवलसाध्याव्यापकत्वादिति । तन्न । सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वादित्यर्थे साधनावच्छिन्नेत्यस्य वैयर्थ्यापत्तेः । जलं प्रमेयं रसवत्वादित्यत्र रसवत्वावच्छिन्नप्रमेयत्वव्यापकस्य पृथिवीत्वस्योपाधित्वप्रसङ्गात् । पक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेश्च । किञ्च, विशिष्टसाध्यव्यभिचारं प्रसाध्य केवलसाध्यव्यभिचारः साध्यः तत्र चाऽर्थान्तरम् । केवले साध्ये हि विप्रतिपत्तिर्न तु विशिष्टे । प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टव्यभिचारः साध्यवति इति चेन्न । अप्राप्तकालत्वात् । प्रथमं साध्यव्यभिचार एवोद्भाव्यस्तत्रासिद्धौ

प्रकाशिका ।

**तथापीति ।** तथा च साध्याव्यापकोऽप्युपाधिः स्यादिति भावः । तत् किं साध्यव्यापकव्याप्यत्वमेवानौपाधिकत्वं तथासत्यनित्यत्वव्यापकप्रमेयत्वव्याप्यगुणत्वस्यानित्यत्वव्याप्यतापत्तिरित्यत आह **व्यभिचारीति ।** साध्यव्यापकत्वे तद्गर्भलक्षणे साध्यव्यापकात्यन्ताभावस्येति शेषः । **यदि चेति ।** यद्यपि समव्याप्तिकोपाधिव्यतिरेकिणापि नानुमितिनियमः, स्वरूपासिद्धे व्यभिचारात्तथापि पक्षवृत्तित्वे बाधप्रतिरोधाभावे च यद्व्यतिरेके सति लिङ्गस्य समीचीनत्वनियमः, तद् दूषणमित्यर्थः । **विरुद्धत्वादेरिति ।** आदिपदाद् व्यभिचारित्वपरिग्रहः, तयोरन्यतरव्यतिरेके केवलान्वय्यन्यतरसत्त्वेन लिङ्गस्यासमीचीनत्वादित्यर्थः । साधनावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिरिति यदुक्तं तत् परिहारमात्राभिप्रायेण शङ्कते। **साधनेति। आर्द्रेन्धनवत्त्वादौ**विति। यद्यपि तत्र प्रमेयत्वमेव तथा।

मकरन्दः ।

योऽव्यभिचाराभावापादकमित्यर्थः । अभावः साधनव्यापकत्वम् । तत् किं साध्यव्यापकव्याप्यत्वमेवानौपाधिकत्वं, तथा चोक्तगुणत्वाद्यतिप्रसङ्ग इत्यत आह **व्यभिचारीति । यदि चेति ।** ननु समव्याप्तव्यतिरेके व्यभिचाराभावनियमेऽप्यनुमितिनियमो नास्ति, ह्रदोऽग्निमान् धूमादित्यादौ तादृशोपाधेरभावेऽपि स्वरूपासिद्ध्या अनुमित्यभावादिति चेत् । न । पक्षवृत्तित्वे बाधप्रतिरोधाभावे च सति यद्व्यतिरेके लिङ्गस्य समीचीनत्वनियमस्तद् दूषणमित्यर्थात् । **विरुद्धत्वादेरिति ।** आदि-

टिप्पणी ।

उपाधेः साधनाव्यापकत्वगर्भत्वेन व्याप्यत्वे साधनस्य सति तदसम्भवात् । **व्यभिचारस्थलस्य स्वयैवोक्तत्वादिति ।** तथा चोपाध्यभावो व्यभिचारानुमाने व्यर्थविशेषणत्वं तवेति भावः । अनौपाधिकत्वलक्षणे **यावदिति** यावत्साधनव्यापकव्याप्यत्वमित्यनौपाधिकत्वलक्षणे तथा चानुपाधित्वेनाव्यभिचारानुमानस्य न ममापि हानिरिति भावः । पक्षेतरत्वे दोषस्तत्रस्त्येवाव्याप्तिमात्रवारणायाह **अथ साधनावच्छिन्नसाध्येति । पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधीति ।** वायुः

प्रकाशः ।

पश्चात्तन्निर्वाहार्थमुपाधिर्वाच्य इति चेत् । न । एवं सति प्रकृतानुमाने उपाधेरदूषणत्वापत्तेः । अत एव पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्यपास्तम् । आर्द्रेन्धनवत्त्वादौ नियततादृशधर्माभावेनाव्याप्तेश्च । शब्दोऽभिधेयः प्रमेयत्वादित्यत्र शब्दधर्म्मगुणत्वावच्छिन्नाभिधेयत्वव्यापकस्याश्रावणत्वस्योपाधित्वापाताच्च । नापि पक्षावृत्तित्वे साध्यव्यापकत्वमुपाधित्वम् । शब्दोऽनित्यः गुणत्वादित्यत्र कृतकत्वस्य शब्दवृत्तेरनुपाधित्वापातात् । न च स्फुटे व्यभिचारे निष्फलमुपाध्यनुसरणमिति वाच्यम् । व्यभिचारेऽवश्यमुपाधिसत्त्वात् । अन्यथैकत्र साधने साध्यतदभावसम्बन्धस्यावच्छेदभेदं विनाऽनुपपत्तेः ॥

अथ पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । पर्यवसितं च साध्यं पक्षधर्मतावललभ्यम् । यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् प्रमेयत्वादित्यत्र यथोक्तसाध्याव्यापकत्वेऽपि पक्षधर्मतावललभ्यस्यानित्यत्वस्य साध्यस्य व्यापकं कृतकत्वमुपाधिः, कृतकत्वे चैवं साध्यमानेऽनित्यत्वमुपाधिः । तन्न । पक्षधर्मतावललभ्यसाध्यसिद्धौ हि निष्फल उपाधिः, तदसिद्धौ च कस्य व्यापकः ? । न हि सोपाधौ पक्षधर्मतावलात् साध्यं सिद्ध्यति, यदव्यापक

प्रकाशिका ।

तथापि विशेषणस्य साध्येऽवच्छेदकत्वमाश्रित्येदं दूषणमुक्तम् । वस्तुत आत्मा प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र साधनावच्छिन्नसाध्यव्यापकरूपवत्त्वोपाधावव्याप्तिरिति दूषणं द्रष्टव्यम् । नन्वस्योपाधेर्व्यभिचारोन्नायकत्वमसम्भवि यथाश्रुतसाध्यस्य केवलान्वयित्वात् पर्यवसितसाध्यव्यभिचारस्य प्रकृतानुमानादूषणत्वात् तथा च सत्प्रतिपक्षोन्नायकतया दूषणत्वं वाच्यम् तच्चासम्भवि, कृतकत्वस्याप्युक्तरीत्या शब्दे सिद्धौ तद्व्यतिरेकस्य हेतौ स्वरूपासिद्धेरत आह । **कृतकत्वे चेति** । तथा चोपाधिदातुर्मते शब्दे कृतकत्वमसिद्धमेवेति तद्व्यतिरेकेण सत्प्रतिपक्षत्वमविकलमेवेति भावः ।

मकरन्दः ।

पदाद्व्यभिचारादिपरिग्रहः । अन्यतरव्यतिरेकेऽप्यन्यतरसत्त्वे लिङ्गस्यासमीचीनत्वादित्यर्थः । ननु साधनावच्छिन्नसाध्यस्य पक्षेऽपि सत्त्वात्तदव्यापकतया नातिप्रसङ्ग इत्यनुशयादाह **पक्षधर्मेति** । वायुः प्रत्यक्षः प्रमेयत्वादित्यादावुद्भूतरूपवत्त्वाद्युपाधावव्यापनादित्यर्थः । **आर्द्रेन्धनवत्त्वादाविति** । यद्यपि द्रव्यत्वादिकमवच्छेदकं सम्भवत्येव तथाप्यवच्छेदकस्य साध्ये व्याप्यतावच्छेदकत्वमभिप्रेत्यैतदुक्तम् । तदिदमाह **नियतेति** । नियतावच्छेदकेत्यर्थः । धूमत्वस्यैवार्द्रेन्धनव्याप्यतावच्छेदकत्वादिति भावः । वस्तुतः प्रागभावो विनाशी जन्यत्वादित्यादौ भावत्वाद्युपाध्यव्याप्तिर्बोध्या । **शब्दोऽभिधेय** इति । एतच्च पक्षातिरिक्तसाध्यव्यापकत्वमादाय बोध्यम् । **व्यभिचार** इति । अस्फुटत्वदशायां तदनुसरणसम्भवाच्चेत्यपि द्रष्टव्यम् । **यथेति** । यद्यप्यत्र व्यभिचाराभावात्तद्दृष्टान्तोपाधेरनुपपत्तिः, तथापि सत्प्रतिपक्षे विरोधमात्रस्य तन्त्रत्वेन पर्य्यवसितानित्यत्वरूपसाध्याभावसाधनद्वारा तद्व्यापकतयैवोपाधित्वमित्येतन्मततात्पर्यम् । न च कृतकत्वस्य पक्षवृत्तितया तद्व्यतिरेकस्यासिद्धत्वान्न तद्व्यापकत्वमपीति वाच्यम् । शब्दनित्यतावादिन उपाधिदातुर्मते शब्दस्याकृतकत्वादिति

टिप्पणी ।

प्रत्यक्षः प्रत्यक्षगुणत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकोद्भूतरूपवत्त्व इत्यर्थः । **उपाधेरदूषकतापत्तेरिति** । तस्य प्रकृतसाध्यव्यभिचारोन्नायकत्वाभावाद् विशिष्टसाध्यव्यभिचारस्यैव तथात्वादित्यर्थः । **नियततादृशधर्म्माभावेनेति** । साध्यतावच्छेदकमात्रस्यैवोपाधिव्याप्यतावच्छेदकत्वेन व्यर्थविशेषणघटितसाध्यतावच्छेदकस्य व्याप्यतानवच्छेदकत्वात् तद्धर्म्मावच्छिन्नव्यापकत्वाप्रसिद्धेरित्यर्थः । **नियततादृशधर्म्मे**त्यस्य नियततावच्छेदकेति तात्पर्यार्थः । यदि स्वतः साध्यमुपाधिव्याप्यन्न भवेद् भवेत् कश्चित् तत्सम्पादको धर्म्मो नियतः स नास्तीत्यक्षरार्थः ।

प्रकाशः ।

उपाधिः स्यात् । द्व्यणुकस्य सावयवत्वे सिद्धे, द्व्यणुकं द्रव्यसमवेतं जन्यमहत्त्वानाधारद्रव्यत्वादित्यत्र निःस्पर्शद्रव्यसमवेतत्वं चोपाधिः स्यात् । नित्यद्रव्यसमवेतत्वस्य पर्यवसितस्य साध्यस्य व्यापकत्वात् । साधनाव्यापकत्वाच्च ।

अथ साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापक उपाधिः, तेन ध्वंसस्य जन्यत्वेनानित्यत्वे साध्ये यद्यपि भावत्वं प्रागभावे साध्यव्यापकं तथापि जन्यत्वे सति यदि नित्यत्वं तद्व्यापकत्वादुपाधिरिति । न । इदमसाधकं साध्यसाधनसम्बन्धव्यभिचारित्वादित्यत्र साध्यव्यभिचारित्वादित्यस्यैव गमकत्वे शेषवैयर्थ्यापत्तेः । सम्बन्धव्यभिचारानुमानेऽर्थान्तरत्वापत्तेश्च । यद्विशिष्टे साधने साध्यसामानाधिकरण्यं स उपाधिरिति चेन्न । रासभादीनामप्युपाधित्वापत्तेः । तद्विशिष्टेऽपि साधने साध्यसम्बन्धात् । यद्विशिष्ट एवेति चेत् । न । प्रमेयत्वादेरप्युपाधित्वापत्तेः । यद्विशिष्टे साधने साध्यसामानाधिकरण्यमस्त्येवेति चेत् । न । गुरुत्वेन रसवत्त्वे साध्ये गन्धवत्त्वादेः साध्याव्यापकस्याप्युपाधित्वापत्तेः ॥

अथोपाधिमात्रस्य व्यतिरेकिधर्मत्वं, क्वचित् बाधोन्नीतस्य पक्षेतरत्वस्याप्युपाधित्वात् । तत्तदुपाधेश्च तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वं, वह्निधूमोपाधेस्तु न लक्षणं लक्ष्याभावात् । न च पर्वतेतरत्वं वह्निधूमसम्बन्धोपाधिः स्यात् । आपाद्याप्रसिद्धेः । न च पक्षेतरत्वं वह्निव्यापकं कुतो न भवतीति वाच्यम् । एतस्योपाधिलक्षणप्रस्तावे अर्थान्तरत्वादिति मतम् । तन्न । अनुमितिप्रतिबन्धकज्ञानविषयत्वावच्छेदकमुपाधित्वमिह निरूपयितुमुपक्रान्तम्, अन्यस्याप्रयोजकत्वात् । तच्च न व्यतिरेकिधर्मत्वम् । अतिप्रसङ्गात् । किन्तु साधनाव्यापकत्वे सति साध्यव्यापकत्वम् । तच्च पक्षेतरेऽतिव्याप्तमेवेत्युक्तम् ॥

अत्राहुः । यद्व्यावृत्त्या यस्य साधनस्य साध्यं पक्षे व्यावर्तते, स धर्मस्तत्र हेतावुपाधिः । स च धर्मः कतमो भवति, यस्य व्यावृत्तिः साध्यसाधनसम्बन्धविरोधिनी । यथाऽऽर्द्रेन्धनवत्त्वं वह्निमत्त्वे । व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वं तप्तायःपिण्डे । व्यावर्तते च भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानि-

प्रकाशिका ।

असमवेतत्वपर्यवसानवारणायाह । **सावयवत्व इति । जन्येति** । जन्यमहत्त्वं महत्त्वावान्तरजातिरेवेति न वैयर्थ्यम् । वस्तुतः परमाण्वसिद्धौ मनसोऽणुत्वासिद्धौ चासाधारण्यं स्यादिति जन्यपदम् तथा सति च गगनमेव दृष्टान्त इति भावः । **निःस्पर्शेति** । द्रव्यपदमत्र समव्याप्तोपाध्यभिप्रायकम् । **रासभादीनामिति** । रासभविशिष्टे धूमे वह्निसामानाधिकरण्यादित्यर्थः । रासभादावतिप्रसङ्गे सत्येव दोषान्तरमाह । **गुरुत्वेनेति । रसवत्त्वे** रसयोग्यत्वे । अन्यथा हरीतक्यादौ व्यभिचारेण नियमासिद्धेः । **यद्व्यावृत्त्येति** । यद्व्यावृत्त्या सन्निहीभूतया साधनवति क्वचिदपि साध्यव्यावृत्तिरनुमातुं

मकरन्दः ।

भावः । असमवेतत्वपर्यवसानवारणायाह । **सावयवत्वे** इति । **जन्येति** । परमाणुसिद्धिदशायां मनसोऽणुत्वादिसिद्धिदशायाञ्च गगनादौ व्याप्तिग्रहार्थं जन्यपदम् । अखण्डाभावे न वैयर्थ्यमिति । **निःस्पर्शेति** । अत्र द्रव्यपदं समव्याप्तत्वाभिप्रायेण । रासभादावतिप्रसङ्गे सत्येव दूषणान्तरमाह **गुरुत्वेनेति** । रसवत्त्वे = रसयोग्यत्वे । अन्यथा विशिष्टस्यापि हरीतक्यादौ व्यभिचारेण नियमासिद्धेः । **यद्व्यावृत्त्येति** । पक्षे यद्व्यावृत्त्या यस्य साधनस्य साध्यव्यावृत्तिरनुमीयते इत्यर्थः । साध्यसाधनसम्बन्धव्यापकत्वाभिप्रायेणा **भावत्वेति** । नन्वेवं सम्बन्धाभावसाधनेऽर्थान्तरं साध्या-

टिप्पणी ।

**जन्यमहत्त्वानाधारद्रव्यत्वादित्यत्रेति** । परमाण्वसिद्धदशायां मनसोऽणुत्वासिद्धिदशायाञ्चाकाशादौ व्याप्तिग्रहार्थं जन्येति । अखण्डाभावघटकतया च सार्थक्यम् । **पर्यवसितसाध्यस्य व्यापकत्वा-**

प्रकाशः ।

स्यत्वसम्बन्धः, शाकपाकजत्वव्यावृत्त्या श्यामत्वमैत्रातनयत्वयोः सम्बन्धश्च ।
पक्षधर्मताबलाच्चानित्यत्वश्यामत्वाभावयोः पर्यवसानम् । तथा, वायावुद्भूतरूपवत्त्वं व्यावर्त्तमानं द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत्, प्रत्यक्षत्वाभावमादाय सिद्ध्यतीति सर्वत्र पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्ति । अत एव साधनावच्छिन्नादौ साधनव्यापकोऽप्युपाधिः, यत्र पक्षावृत्ति र्हेतुः । यथा, करका पृथिवी कठिनसंयोगवत्त्वादित्यत्रानुष्णाशीतस्पर्शवत्त्वमुपाधिः । न च स्वरूपासिद्धिरेव तत्र दोषः, सर्वत्रोपाधेर्दूषणान्तरसङ्करात् । एतेन बाधानुन्नीतपक्षेतरत्वस्योपाधित्वं निरस्तम् । स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वात् ॥

**अस्मत्पितृचरणास्तु**—यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं, स उपाधिः, लक्षणं

प्रकाशिका ।

शक्यत इत्यर्थः । नन्वेवं सम्बन्धव्यावृत्त्यनुमानेऽपि न साध्यव्यावृत्तिरनुमितेति न तद्गर्भलक्षणसंभवस्तत्रेत्यत आह । **पक्षधर्मताबलाच्चेति । अत एवेति** । इदञ्चैकदेशिमतेन तन्मते च साधनवतीत्यत्र पक्ष इति लक्षणे देयम् । साध्यसाधन**सम्बन्धव्या**पकत्वे सति पक्षवृत्तित्वमेव चोपाधिताप्रयोजकमिति बाधोत्थापकतयाप्युपाधेर्दोषत्वम् । अत एवेत्यस्य यत एव तादृशोपाधिव्यावृत्त्या पक्षसाध्यव्यावृत्त्यनुमितिरित्यर्थः । **साधनेति** । साधनावच्छिन्नसाध्यव्यापकोपाधौ साध्य इत्यर्थः । इदञ्चैकदेशिमतमयुक्तम् । पक्षवृत्तेरनुपाधितापत्तेः, नचेष्टापत्तिः, घटः प्रत्यक्षो द्रव्यत्वादित्यत्र द्रव्यत्वावच्छिन्नसाध्यव्यापकप्रत्यक्षपरिमाणवत्वोपाधेर्व्यभिचारोन्नायकस्योपाधित्वेन व्यवहारादिति । व्यभिचारोत्थापकत्वगर्भमुपाधिस्वरूपमाह । **यद्व्यभिचारित्वेनेति ।** साध्ये उपाधिव्याप्यताप्रयोजको यो धर्म्मस्तद्रूपविशेषणातिरिक्तविशेषणाविशेषितेन सन्निज्ञीभूतेन यद्व्यभिचारित्वेन

मकरन्दः ।

भावसिद्धेरुद्देश्यत्वादित्यत आह **पक्षधर्म्मतेति । अत एवेति** । यत एव तादृशोपाधिव्यावृत्त्याऽपि पक्षे साध्यव्यावृत्त्यनुमितिरित्यर्थः । तथा च साध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वे प्रयोजकमिति बाधोत्थापकतयोपाधेर्दोषत्वमित्येतन्मततात्पर्य्यम् । **साधनेति** । साधनावच्छिन्नसाध्यव्यापकादावुपाधौ साध्ये इत्यर्थः ।

नन्वेवं पक्षवृत्तिरुपाधिर्न स्यात् तद्व्यतिरेकस्य पक्षे साध्याव्यापकत्वात् । न चेष्टापत्तिः, तस्याप्युपाधित्वेन व्यवहारात् । न च पक्षपदं साधनवत्परं, तथा चान्यत्र क्वचित् साधनवति साध्यव्यावर्त्तकत्वाद्व्यभिचारज्ञानद्वारैव तस्य दूषणत्वमिति वाच्यम् । अनुष्णाशीतस्पर्शवस्यैवमनुपाधितापत्तेः, तस्य साधनव्यापकत्वेन साधनवति स्वव्यावृत्त्या साध्याव्यावर्त्तकत्वादित्यरुचेराह **अस्मत्पितृचरणास्त्विति ।** यद्व्यभिचारित्वेन लिङ्गेन साधनस्य साध्यव्यभिचारित्वमनुमीयते, स उपाधिरि-

टिप्पणी ।

**दिति** । उक्तानुमानात् प्राक् नित्यस्य परमाणोरसिद्धेर्व्यभिचारादिति । साध्यसाधनसम्बन्धाभावसिद्धावर्थान्तरं स्यात् साध्याभावस्यैव साधनीयत्वादित्यत आह **पक्षधर्म्मताबलाच्चेति । द्रव्यत्वे सति प्रत्यक्षत्वन्निर्वर्त्तयत् इति** । यद्यपि प्रत्यक्षत्वं सामान्यतः साध्यं तस्य साधनेन सम्बन्धं विनाप्युद्भूतरूपवात्मन्यस्ति, तथापि पक्षे प्रत्यक्षत्वमनुमानात् सिद्ध्यद्, बहिरिन्द्रियजन्यप्रत्यक्षत्व एव पर्यवस्यतीति पर्य्यवसितसाध्यसाधनसम्बन्धव्यावृत्तौ तात्पर्यम् । **अत एवेति** । यत एव येनोपाधिना स्वव्यतिरेकेण पक्षे साध्यसाधनव्यावृत्तिर्भवति तस्योपाधित्वादेवेत्यर्थः । बाधोत्थापकतयैव चोपाधेर्दूषकत्वमित्येतन्मततात्पर्य्यम् । **स्वव्याघातकत्वे न तद्व्यतिरेकस्येति** । यदि पक्षेतरत्वमुपाधिः स्यात् , क्वापि तदेव न सिद्ध्येत यत्र तत् साधनीयन्तदितरत्वस्य तत्राप्युपाधेः सम्भवात् । न च प्रत्यक्षसिद्धमतीन्द्रिये तथापि हि तद्व्यावृत्तं स्यात् प्रत्यक्षसिद्धेऽपि वा प्रत्यक्षसदोषतासन्दे-

प्रकाशः ।

पुनः, पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । यद्धर्मावच्छेदेन साध्यं प्रसिद्धं, तदवच्छिन्नं साध्यं पर्यवसितम् । तत्रार्द्रेन्धनप्रभवत्वाद्युपाधौ महानसत्वादेव तादृशो धर्मः । तदवच्छेदेन साध्यस्य धूमस्य प्रसिद्धेः । पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधौ द्रव्यत्वं, साधनावच्छिन्नसाध्यव्यापकोपाधौ च साधनमेव तथा । तथा च तदवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साधनस्य साध्यव्यभिचारः स्यादेव । व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारित्वनियमादिति ॥

प्रकाशिका ।

साधने साध्यव्यभिचारित्वमनुमातुं शक्यत इत्यर्थः । अत एवाकाशे साध्ये घटादेरनुपाधित्वम्, आकाशव्यभिचारित्वे साध्ये घटव्यभिचारित्वस्य व्यर्थविशेषणतया सन्निज्ञत्वाभावात् प्रथमविशेषणपूरणेन चावच्छिन्नसाध्यव्यापकस्यापि संग्रहो न चातिप्रसङ्गः इदञ्च सकलसंग्राहकम् । दूषकताबीजं तु भिन्नभिन्नमेव अन्यथा निरुक्तोपाधिज्ञानकाल एव व्यभिचारस्फुरणादस्य व्यभिचारोन्नायकत्वं न स्यात् । लक्ष्यतावच्छेदकमुक्त्वा सकलसंग्राहकं लक्षणमाह । **पर्यवसितेति** । यत्र साधनाव्यापकत्वं तद्वृत्तिधर्म्मसामानाधिकरण्यं पर्यवसितपदार्थः, तेन महानसत्वावच्छिन्नसाध्यव्यापकं व्यञ्जनवत्त्वं नोपाधिः, वह्निसाध्यकधूमसाधने, इदमपि संग्राहकमात्रम् न तु सर्वत्र प्रतिबन्धकज्ञानविषयः, शुद्धसाध्यव्यापकत्वेनापि ज्ञातस्य प्रतिबन्धकत्वात्, अवच्छिन्नसाध्यव्यापके त्विदमेव(साध्य)प्रतिबन्धकज्ञानविषयः, तेनानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वमुपाधित्वमिह निरूपयितुमुपक्रान्तमिति प्रागुक्तेन न विरोधः । **यद्धर्म्मावच्छेदेनेति** । यद्धर्म्माधिकरण इत्यर्थः, स च धर्म्मः साधनाधिकरणोपाध्यनधिकरणवृत्तिरभिमतस्तेन प्रागुक्तार्थलाभः । **महानसत्वादीति** । आर्द्रेन्धनशून्यतत्संयुक्तमहानसवृत्तिधर्म्म इत्यर्थः । **द्रव्यत्वमिति** । वायुर्बहिरिन्द्रियप्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र रूपवत्त्वोपाधिरित्यर्थः । **साधनमेवेति** । धूमो विनाशी जन्यत्वादित्यत्र भावत्वोपाधा-

मकरन्दः ।

त्यर्थः । न चाकाशादिसाध्यकहेतौ घटादेरुपाधिताऽऽपत्तिः, यस्य पर्य्यवसितसाध्यव्यापकस्य व्यभिचारित्वेनेत्यर्थात् । तच्च क्वचिद्विशेषितं क्वचिदविशेषितञ्च लिङ्गमित्यन्यदेतत् । साधनाव्यापकत्वं व्यभिचारिसाधनाव्यापकत्वम् । तेन महानसत्वाद्यवच्छिन्नवह्निव्यापके धूमाव्यापके व्यञ्जनवत्त्वादौ नातिप्रसङ्गः । नन्वेवमुपाधिज्ञानकाल एव व्यभिचारभाने तदुन्नायकत्वमस्य न स्यादिति चेत् । भ्रान्तोऽसि । न ह्यनेनैव रूपेण ज्ञातस्यास्य तदुन्नायकत्वं, किन्तु शुद्धसाध्यव्यापकत्वादिना । इदन्तु सकलसङ्ग्राहकमात्रम् । साधारणादीनामुभयकोट्युपस्थापकत्ववत् । इदञ्च सर्वैरेवाभ्युपेयम्, अन्यथा पर्य्यवसितत्वाद्यस्फुरणे शुद्धसाध्यव्यापकत्वस्फुरणेऽपि तदुन्नायकत्वं न स्यात् । न चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूपयितुमुपक्रान्तमिति प्रागुक्त-

टिप्पणी ।

हप्रसक्तावप्रामाणिकत्वशङ्कानिरासाय यद्युद्भावनस्य करणीयत्वात्, प्रमाणसंप्लवस्यात एवायमात्मा गौर इत्यादौ दर्शितत्वात् । अथवा साध्यव्यापकतानिर्णायकतर्कविरहेऽपि पक्षातिरिक्ते तन्निर्णयात् सामान्यतस्तत्संशयाद्वा पक्षेतरत्वस्योपाधित्वे स्वस्योपाधित्वस्यैव व्याघातात् साध्यव्यतिरेकानुमापकव्यतिरेकप्रतियोगित्वेन साध्यव्यभिचारानुमापकव्यभिचारकत्वेन वा वाच्यतया तत्राप्यनुमाने पक्षेतरत्वस्यैवोपाधित्वसम्भवेनानुमानासम्भवादसम्भवादिति भावः । **यद्धर्म्मावच्छेदेन साध्यप्रसिद्धमिति** । साध्यस्य यत्राधिकरणे उपाधिव्यतिरेकस्तद्व्यावृत्तो यः कश्चन धर्म्मः प्रकृतपक्षनिष्ठः साध्यः पक्षे सिद्ध्यन् तत्समानाधिकरण एव सिद्ध्यतीति तदवच्छिन्नं साध्यम् पर्य्यवसितसाध्यम् । एवञ्च प्रकृतसाध्यनिष्ठोपाध्यव्यभिचारित्वनिरूपककिञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सतीति प्रथमदलार्थः, स

प्रकाशः ।

साध्यव्यापकत्वसाधनाव्यापकत्वे एक दूषकताबीजम् । न च पक्षधर्मावच्छिन्नसाधनावच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साधनस्य साध्यव्यभिचारोन्नयनेऽर्थान्तरं, विशेषणाव्यभिचारित्वेन निश्चिते साधने विशिष्टव्यभिचारस्य सिध्यतो विशेष्यसाध्यव्यभिचारमादाय पर्यवसानात्, पक्षधर्मतावलात्। न च पक्षधर्मतावललभ्याऽर्थसिद्धावर्थान्तरत्वं, व्यक्तिसाधकानुमानमात्रे तदापत्तेः । भवतु वाऽर्थान्तरं, तथापि हेतुराभास एव । अर्थान्तरस्य पुरुषदोषत्वात् । हेत्वाभासान्तरस्य च तत्राभावादुपाधिरेव भावत्वादिकं दोषस्तत्रोद्भाव्यः । अपि च यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स एवोपाधिः । व्यभिचारोन्नायकत्वञ्च साक्षात्परम्परया वेति नाऽर्थान्तरत्वम् । न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वं जलं प्रमेयं रसवत्वादित्यत्र पृथिवीत्वमुपाधिः स्यादिति वाच्यम् । केवलान्वयित्वग्राहकमानवाधादुपाधेर्विशिष्टाव्यापकत्वात् । न च स्वव्याघातकत्वेनानुपाधौ पक्षेतरत्वेऽतिव्याप्तिः ।

प्रकाशिका ।

वित्यर्थः । **साध्यव्यापकत्वेति** । क्वचित् शुद्धसाध्यव्यापकत्वं क्वचिदवच्छिन्नसाध्यव्यापकत्वमित्यर्थः । **पक्षधर्मतावलादिति** । इदञ्चापाततः, विशिष्टसाध्यव्यभिचारप्रकारकबुद्धावपि शुद्धसाध्यव्यभिचारप्रकारकबुद्ध्यभावेनानुमित्यप्रतिबन्धात् । तात्पर्यं तु ग्रन्थकृतो विशेषणवति विशिष्टस्य व्यापकव्यभिचारित्वेन हेतुना शुद्धसाध्यव्यभिचारानुमितौ, अत एव मणिकृतोऽस्मिन् पक्षेऽरुच्या यद्वेति कृत्वा तमेव कल्पं सिद्धान्तितवन्तः एतत्तात्पर्यानुसारेणैव प्रथम(लक्षण)विशेषणमुपाधिलक्षणे मया पूरितम् प्रकाशलिखितपक्षाश्रयणे तु तदपि विशेषणं न देयमित्यवधेयम् । **साधनव्यभिचारीति** । साधनं व्यभिचारि यस्य स तथा साधनाव्यापक इति यावत् एवञ्च साधननिष्ठेन यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं साक्षात् परम्परया वानुमातुं शक्यत इत्यर्थः । परम्परा च विशिष्टव्यभिचारानुमानद्वारिका अयमेव पूर्वतो भेद इति भावः ।

मकरन्दः ।

विरोधः, तस्य यथाश्रुताभिप्रायेण साधनाव्यापकत्वसाध्यव्यापकत्वांशाभिप्रायेण वा सर्वसमाधेयत्वात् । पर्वतत्वरूपपक्षधर्मावच्छिन्नवह्निव्यापकत्वादिना पाषाणवत्त्वादिग्रहेऽपि धूमे न तदुन्नयनं, बाधात् । तदवतारे व्यभिचारानुमितेर्भ्रमरूपाया इष्टत्वात् । अस्तु वा व्यभिचारिपदं व्यभिचारित्वसमनियतधर्मान्तरपरम् । न चैवं तेनैव तदुन्नयनापत्तिः, स्वरूपेणैव तस्य ज्ञानात्। तथा च नियतत्वास्फुरणदशायां तदभावात् । तथापि च तस्य तदुन्नायकत्वे बाधकानभिधानाच्च । केचित्तु यद्व्यभिचारित्वेनेत्यादिकमेव लक्षणम् । इदन्तु येन रूपेण ज्ञातस्य तस्य व्यभिचारानुमापकत्वं तन्निर्वचनम् । तथा च लक्षणमित्यस्य व्यभिचारानुमापकतावच्छेदकमित्यर्थ इत्याहुः । विस्तृतमिदमनुमानप्रकाशे । **साधनेति** । साधनं व्यभिचारि यस्य, साधनाव्यापक इत्यर्थः । अत्र स्वव्यभिचारित्वेनेति शेषः । तेन तदुन्नायकाप्रयोजकत्वादौ नातिप्रसङ्गः । एवञ्च साधनव्यभिचारिपदं स्वरूप-

टिप्पणी ।

च यत्किञ्चिद्धर्म्म उक्तरूपो गृह्यते । **साध्यव्यभिचारोन्नयनेऽर्थान्तर**मिति । उक्तोपाधिव्यभिचारेण व्याप्यीभवद्विशिष्टव्यभिचारस्यैव साधनीयता न च साभिमतेति भवत्यर्थान्तरम् । **व्यक्तिसाधकानुमानमात्रे तदापत्तेरि**ति।अतिरेकत्वात् पक्षधर्म्मतावलादपि व्याप्तिनिरूपकत्वेन गृहीतैव सिद्ध्यतीति व्यक्तीति । व्यक्तिश्च नानाविधा साधयितुरभिमता पक्षीया व्यक्तिः न व्याप्तिनिरूपकत्वेन ग्रहीतुं शक्या, अन्या च बाधितेति सामान्यमेव साध्यते पक्षधर्म्मतावलादेव चाभिलषितव्यक्तिविशेषपर्यवसानम् । **भवतु वार्थान्तरमिति** । यद्वा प्रत्यक्षस्पर्शाश्रयत्वं द्रव्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यत्वविशिष्टप्रत्यक्षत्वव्यापकोद्भूतरूपव्यभिचारित्वात् महत्त्ववदिति साधने नार्थान्तरतालेशोपीति । व्यक्तं चैतच्चिन्तमणाविति । **केवलान्वयित्वग्राहकमानवाधादिति** । यद्व्यभिचारिसाधनमेवं

प्रकाशः ।

अनुकूलतर्काभावेन तस्य साध्यव्यापकत्वानिश्चयात् । न हि सहचारदर्शनव्यभिचारादर्शनमात्राद्व्याप्तिग्रहः । अप्रयोजकेऽपि तद्ग्रहप्रसङ्गात् । न चाप्रयोजकत्वादेव तदगमकम् । न हि व्याप्तस्य पक्षधर्मत्वेऽप्रयोजकत्वम् । सहचारदर्शनमात्रस्य संशायकत्वाच्च । न च व्यभिचारसंशयाधायकत्वेन तथापि सन्दिग्धोपाधित्वम् । स्वव्याघातकत्वेन तस्य तत्संशयानाधायकत्वात् । बाधोन्नीते च साध्यव्यापकताग्राहकानुकूलतर्कसत्त्वात् । अत एव पर्वतावयववृत्त्यन्यत्वादिकमप्युपाधित्वेन निरस्तम् । धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वस्य, बहिरिन्द्रियद्रव्यप्रत्यक्षत्वे चोद्भूतरूपवत्त्वस्य, व्यापकताग्राहकः प्रत्यक्षावधृतः, मित्रातनयत्वेन साध्ये श्यामत्वे साध्यशाकपाकजत्वस्य च वैद्यकाऽवधृतः कार्यकारणभावः । एवं जन्यत्वेनानित्यत्वे साध्ये भावत्वव्यापकताग्राहको घटोन्मज्जनप्रसङ्गः । एवमन्येषामपि तत्तदनुकूलतर्कात् साध्यव्यापकत्वग्रहः । यत्र च साध्योपाध्योर्हेतुसाध्ययोर्व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयस्तत्र सन्दिग्धोपाधित्वम् । न च यत्र सन्दिग्धोपाधिः, तत्र तत एव हेतोरुपाधिः साध्यः । तत्रापि श्यामत्वादेरुपाधित्वात् । न चोभयमपि साध्यम् । अर्थान्तरत्वात् । केवलसाध्ये हि विप्रतिपत्तिर्न तूभयत्र । यत एवोपाधेः साध्यव्यापकत्वं तर्कान्निश्चेयमत एव तुल्ययोगक्षेमत्वाभावान्न साध्यव्याप्याव्यापकत्वेन साध्याव्यापकत्वं साधनीयमिति । व्यभिचारोन्नयनद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतयोपाधेर्दूषकत्वम् । एवं चासिद्धेरुपजीव्योऽप्युपाधिर्न हेत्वाभासान्तरम् । सिद्धसाधनवद् दूषकतायां परमुखनिरीक्षकत्वेन स्वतो दूषकत्वाभावात् । न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने प्रतिबन्धकमिति ॥

अन्वर्थत्वमुपाधिपदस्याह । **तद्धर्मेति** । यद्धर्मोऽन्यत्र भासते स एवोपाधिपदवाच्यो यथा जवाकुसुमं स्फटिके । तथा यद्वृत्तिव्याप्यत्वं साधनत्वाभिमते भासते, स धर्मस्तत्र हेतावुपाधिरिति समव्याप्तौ उपाधिपदं मुख्यं, विषमव्याप्तौ तु साध्यव्यापकत्वादिगुणयोगाद्गौणमुपाधिपदमित्यर्थः ।

प्रकाशिका ।

दूषणान्तरमाह **सहचारदर्शनेति** । तथा च संशयसामग्री न निश्चायिकेति भावः । न च यत्रेति पक्षे साधनाव्यापकसन्देहप्रयुक्तं यत्र सन्देहोपाधित्वं सन्दिग्धत्वं मैत्रतनयत्वादौ हेतौ शाकपाकजत्वादेस्तत्र मैत्रतनयत्वादित्यत्र हेतोरेव शाकपाकजत्वादिकं साधनीयमिति साधने साध्यव्यापकत्वनिश्चयान्नोपाधिरित्यर्थः । **अर्थान्तरत्वादिति** । इदमापाततो वस्तुत उभयसाधनेऽपि प्रत्येकस्य प्रत्येकमुपाधित्वमिति द्रष्टव्यम् । **परमुखेति** । अनुमितिपरामर्शान्यतरसाक्षादविरोधित्वेनेत्यर्थः । **उपाधिपदं मुख्यमिति** । योगरूढ्युभयपुरस्कारेणेत्यर्थः । **गौणमिति** । केवलरूढिपुरस्का-

मकरन्दः ।

निवर्चनं बोध्यम् । **तत एव हेतोरिति** । मित्रातनयत्वादेव शाकपाकजत्वमुपाधिः साध्यः ।

टिप्पणी ।

विनैव केनापि धर्मेण साधने पक्षधर्मेण वावच्छिन्नस्य साध्यस्य व्यापकत्वात् गन्धाद्यवच्छिन्नसाध्यव्यापकत्वेऽपि तेनोपाधिव्यभिचारेण विशिष्टसाध्यव्यभिचारे साधनीये विशेषणव्यभिचार एव तस्य पर्यवसानाद् विशेष्यव्यभिचारस्य केवलान्वयित्वग्राहकमानेन बाधितत्वात् उक्तपक्षम्यन्तं हि तादृशधर्माभावं गमयद् विशिष्टाव्यापकत्वे हेतुरिति भावः । तर्कं विनापि सन्दिग्धोपाधौ साध्यव्यापकत्वनिश्चायकत्वमाशङ्क्य निराकरोति **न च यत्र सन्दिग्धोपाधिरिति । तत एव हेतोरुपाधिरिति ।** तस्य मित्रातनयत्वस्य हेतोः पक्षे उपाधिसन्देहात् साध्यव्यापकत्वसन्देहस्तत्र तत एव मित्रातनयत्वहेतोः पक्षे उपाधिनिश्चित्य साध्यव्यापकत्वं निश्चेयमित्यर्थः । **अत एव तुल्ययोगक्षेमत्वाभावादिति** । साध्यसाधनयोर्व्याप्यव्यापकभावग्राहकतर्काभावादुपाधिसाध्ययोस्तद्ग्राहकतर्कसम्भवान्न तुल्ययोगक्षेमतेत्यर्थः ।

तदिदमाहुः—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशाऽवधारणा ॥ इति,

तदनेन विपक्षदण्डभूतेन तर्केण सनाथे भूयोदर्शने, कार्यं वा कारणं वा ततोऽन्यद्वा समवायि वा संयोगि वा अन्यथा वा भावो वाऽभावो वा सविशेषणं वा निर्विशेषणं वा लिङ्गमिति निःशङ्कमवधारणीयम् । अन्यथा तदाभास इति रहस्यम् ॥

तादात्म्यतदुत्पत्त्योरप्येतदेव बीजम् । यदि कार्याऽऽत्मानौ कारणमात्मानञ्चातिपतेतां, तदा तयोस्तत्त्वं व्याहन्येत । अत एव, सामग्रीनिवेशिनश्चरमकारणादपि कार्यमनुमिमते सौगता अपि । तस्माद्विपक्षबाधकमेव प्रतिबन्धलक्षणम् । तथाहि । शाकाद्याहारपरिणतिविरहिणि मित्रातनये न किञ्चिदनिष्टमिति नासौ तस्य व्यापिका, व्यापिका तु श्यामिकायाः, कारणत्वावधारणात् । कारणञ्च तत् तस्य, तदतिपत्य भवति चेति व्याहतम् । एवमन्यत्राप्यूहनीयमिति ॥

---

बोधनी ।

निमित्तत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति । अत्रापि वार्तिकमुदाहरति **तदिदमाहुः**—इति । येऽपि वैशेषिकादयः "अस्येदं कार्यं कारणं संयोगि समवायि विरोधि चेति लैङ्गिकम्" इति ( वै. सू. ९. २. १. ) वदन्ति तेषामपि तत्प्रतिबन्धनिश्चये तर्कसनाथं भूयोदर्शनमेव निदानम् , न च तस्मिन्सति सविशेषणनिर्विशेषणयोर्बलाबलं प्रति कश्चिद्विशेषः, अन्यथा यदि तर्कसनाथं भूयोदर्शनं न स्यात् ततस्तत् सर्वं लिङ्गाभासं भवेदित्याह **तदनेन**—इति ।

तादात्म्यतदुत्पत्तिनिबन्धनः प्रतिबन्ध इति वदतामपि तन्निश्चयोपायस्तर्क एवेत्याह **तादात्म्य**—इति । तत्र तर्कं दर्शयति **यदि हि**—इति । तयोः कार्यात्मनोस्तत्त्वं कार्यत्वमात्मत्वं चेति यतस्तर्क एव प्रतिबन्धबीजं न तु कार्यत्वमात्मत्वं वा, तत एव बौद्धानामयमभ्युपगमः सिद्धान्तीत्याह **अत एव**—इति । तस्माद्विपक्षे दण्डभूतस्तर्क एव प्रतिबन्धहेतुः सर्वत्रेत्युपसंहरति **तस्मात्**—इति । विपक्षे बाधकाभावेन सोपाधिकमुदाहरति **तथाहि**—इति । श्यामत्वे साध्ये मैत्रतनयत्वस्य हेतोः शाकाद्याहारपरिणतिरुपाधिः पक्षभूते मैत्रतनये शाकाद्याहारपरिणतेर-

प्रकाशः ।

**अन्ये** इति । ये सोपाधयस्ते परप्रयुक्तानामुपाधिप्रयुक्तानां व्याप्तीनामुपजीवकाः, तैः सोपाधिभिर्हेतुभिः पक्षे निश्चितैरपि, न साध्यव्यापकस्य सिद्धिरित्यर्थः । कार्यकारणसम्बन्धानामननुगमेऽप्यनुगमकमाह । **तदनेनेति** । अनौपाधिकसम्बन्धत्वमेव सर्वत्रानुगमकमित्यर्थः । **भूयोदर्शन** इति । अत्र न वारसङ्ख्यानियमः, किन्तु यावता दर्शनेन यस्य व्यभिचारशङ्कानिवृत्तिस्तस्य तावत्त्वं विवक्षितमिति ॥

परैरपि व्यभिचारशङ्काऽपसरणेऽस्मदुक्तप्रकारोऽभ्युपेयः, अन्यथा तन्निवृत्तिर्दुर्लभा इत्याह—

**तादात्म्येति** ॥ व्यभिचारिण्यपि कुतस्तादात्म्यतदुत्पत्ती न स्यातामिति शङ्का सुलभेत्यर्थः । यत एव विपक्षे बाधकादविनाभावग्रहो न स्वभावकार्ययोरेवात एव बधिरादेर्मुखजाभिघातादिना शब्दाद्यनुमानमित्याह । **अत एवेति** । उपसंहरति । **तस्मादिति** । प्रतिबन्धो लक्ष्यते निश्चीयतेऽनेनेति लक्षणं बोधकं विपक्षबाधकमित्यर्थः । यत्र तु तदभावः, तत्राप्रयोजके न तन्निश्चयो यथाऽत्रेत्याह । **तथा हीति** । अतः शाकपाकजत्वं न साधनव्यापकमित्यर्थः । मित्रातनयत्वादिना ययोपाधिर्नानुमीयते, तथोक्तमधस्तात् । तत् किं साधनाव्यापकत्वसन्देहवत् साध्यव्यापकत्वेऽपि सन्देह एव, नेत्याह । **व्यापिका त्विति** ।

मकरन्दः ।

**पक्षेऽपीति** । साधनव्यापकत्वनिश्चयान्न सन्दिग्धोपाधित्वमित्यर्थः । साध्याभावप्रमा बाध इति मतानु-

क पुनरप्रयोजकोऽन्तर्भवति ?। न क्वचिदित्येके। यथाहि, सिद्धसाधनं न बाधितविषयम्,। विषयापहाराभावात्। नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः। कालातीतविलोपप्रसङ्गात्। न चानैकान्तिकादिः। व्यभिचाराद्यभावात्। तथाऽयमपि। सूत्रं तूपलक्षणपरमिति ॥

तदसत्। विभागस्य न्यूनाधिकसंख्याव्यवच्छेदफलत्वात्। क तर्हि द्वयोरन्तर्निवेशः। असिद्ध एव। तथाहि व्याप्तस्य हि पक्षधर्मताप्रतीतिः सिद्धिः। तद-

---

बोधनी।

सत्त्वे बाधकाभावेन तद्विरहसंभवेन साधनं मैत्रतनयत्वं प्रति तस्या अव्यापकत्वात् श्यामिकां प्रति च कारणत्वेन व्यापकत्वात्कारणातिपाते च कार्यासंभवप्रसङ्ग इति विपक्षे बाधकेन कार्यं प्रति कारणस्य व्यापकत्वसिद्धेः। इदं च शङ्कितोपाधेः प्रयोजकस्योदाहरणं शाकादिपरिणतेर्मैत्रतनयत्वं प्रति व्यापकत्वानिश्चयात् निश्चयोपाधेस्त्वधर्मत्वसाधनं निषिद्धत्वोपाधिकं हिंसात्वं गमकमिति सव्यभिचारादिषु कुत्रान्तर्भावो अप्रयोजकस्येति प्रसङ्गात् पृच्छति क पुनः-इति। तत्रैकदेश्युत्तरमाह न क्वचित्-इति। कथं सव्यभिचारादिषु पञ्चस्वनन्तर्भूतो हेत्वाभासः स्यादित्याशङ्क्याह यथा हि-इति। सिद्धसाधनवदयमपि पृथगेव हेत्वाभास इति संदिग्धसाध्यधर्मविशिष्टस्य पक्षत्वात् साध्यनिर्णये सति तदभावादपक्षधर्मः सिद्धसाधनमिति सिद्धान्तदृष्ट्याशङ्क्याह नापि-इति। एवं कालातीतोऽपि न पृथक् हेत्वाभासः स्यात् तत्रापि विपर्ययनिर्णयेन साध्यसन्देहाभावात् अपक्षधर्मतोपपत्तेरिति। न च-इति। विरुद्धत्वादेस्तत्संभावनैव नास्तीति भावः। दार्ष्टान्तिके निगमयति तथाऽयमपि-इति। यद्यनयोर्नान्यत्रान्तर्भावः कथं तर्हि "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति विभागोद्देशसूत्रमित्यत आह सूत्रं तु-इति। विभागस्य-इति। अन्यथा विभागोद्देशोऽनर्थकः स्यादिति। यद्यनयोर्हेत्वाभासान्तरत्वं न स्यात् तर्हि सव्यभिचारादिषु कस्मिन्नन्तर्भाव इत्याह क तर्हि-इति। असिद्ध एव-इति तयोर्निवेश इत्यनुषङ्गः, सिद्धिनिरूपणपुरःसरमसिद्धिप्रकारानभिधाय तत्रैवानयोरन्तर्भावमुपपादयति तथाहि- इति। तत्रान्यथासिद्धोऽप्रयोजकः, मध्यमाप्याश्रयासिद्धिर्द्विधा भवति। आश्रयस्य धर्मिणोऽभावात्। तद्विशेषणस्य सन्दिग्धसाध्यधर्मवत्त्वस्याभावाद्विशेष्याभाव इव विशेषणाभावेऽपि विशिष्टाभावस्याविशिष्टत्वात्तयोर्द्वितीया

प्रकाशः।

क पुनरिति। पञ्चसु हेत्वाभासेष्वित्यर्थः। तत्र कस्यचिन्मतमाह। न क्वचिदिति। पञ्चभ्यो हेत्वाभासान्तरमेवेत्यर्थः। विषयेति। प्रमितसाध्याभाववद्धर्मिकत्वाभावादित्यर्थः। नापीति। साध्यनिश्चये सन्देहघटितपक्षत्वाभावादित्यर्थः। कालेति। साध्याभावस्य धर्मिणि प्रमायामपि तत्सन्देहाभावादपक्षधर्मत्वाद् बाधोऽप्यसिद्ध एवान्तर्भवत्वित्यर्थः। सूत्रं त्विति। सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः (न्याय० १. २. ४५) इति विभागोद्देशसूत्रमित्यर्थः। विभागस्येति। यद्यपि विभागसूत्रं न शब्दविधया न्यूनाधिकसंख्याव्यवच्छेदं प्रत्याययति युक्तिशास्त्रत्वव्याघातादिति परीक्षकैकवाक्यतया स तेन प्रत्याय्यस्तथा च परीक्षायास्तत्र तात्पर्यावश्यकत्वे विभागसूत्रस्यापि तत्र तात्पर्यकल्पने मानाभावः। तथापि परीक्षकैकवाक्यतया पर्यवसित एवार्थो विभागस्य दर्शितः। द्वयोरिति। सिद्धसाधनाप्रयोजकयोरित्यर्थः। व्याप्तस्ये-

प्रकाशिका।

रात् स्थलपङ्कजे पङ्कजपदमिवेत्यर्थः। आधिक्येऽपि क्वचिदन्तर्भाव एवेत्यत आह। पञ्चस्विति। साध्याभावप्रमाबाध इति मतानुसारादाह। प्रमितेति। असावकृतानुमान इति विशिष्टाभावस्य

मकरन्दः।

रोधादाह प्रमितेति। ननु ज्ञानावनुपजीव्यत्वेऽपि स्वस्य एवोपजीव्यत्वं तस्य स्यादित्यत आह

प्रकाशः ।

ति । ननु व्याप्तिपक्षधर्मतयोः प्रत्येकमभावो नासिद्धिरननुगमादिति प्रत्येकाभावानुगतो व्याप्तिपक्षधर्मताविशिष्टाभावोऽसिद्धिर्वाच्या । तथा च यत्र विशिष्टाभावाज्ञाने व्याप्त्यादिप्रत्येकाभावज्ञानादनुमितिप्रतिबन्धस्तत्राव्याप्तिः । तेषां हेत्वाभासान्तरत्वापत्तिर्वा । विशिष्टाभावस्य दोषतायामसाधकतानुमाने व्यर्थविशेषणत्वञ्च । प्रत्येकाभावस्य समर्थत्वेनैवान्यथासिद्धेः । न च व्याप्तिपक्षधर्मताऽन्यतराभावोऽसिद्धिः, अन्यतरत्वाज्ञानेऽपि प्रत्येकाभावस्यैव दूषकत्वेन व्यर्थविशेषणत्वात् ॥

यत्तु व्याप्तिपक्षधर्मताप्रमितिविरह आश्रयासिद्ध्याद्यनुगतोऽसिद्धिः, तत् प्रमितिसत्त्वे तत्रानुमितिप्रमित्यापत्तेरिति । तदपि, व्यर्थविशेषणत्वात् तदभावेऽपि प्रत्येकज्ञानस्यैव दोषत्वाच्च परास्तम् । किञ्च, प्रकृतसाधनस्य व्याप्तिपक्षधर्मतावैशिष्ट्यतत्प्रमित्योरप्रसिद्ध्या तदभावो दुरवधारणः । यत्किञ्चिद्विरहश्च सदसद्धेतुसाधारणः । स्वप्रमित्यभावो यत्किञ्चित्प्रमित्यभावो वा सद्धेतावपि । सकलतत्प्रमित्यभावश्च दुर्निरूपः । न च प्रमितिविरहः स्वरूपसन्नेव दूषणं कारणाभावत्वादिति वाच्यम् । हेत्वाभासस्य ज्ञायमानस्यैवानुमितिप्रतिबन्धकत्वात् । व्याप्त्यादिभ्रमादनुमित्यनुत्पादापत्तेश्च ॥

अथ व्याप्तिपक्षधर्मताभ्यां निश्चयः सिद्धिस्तदभावोऽसिद्धिः । अत एवाव्याप्तापक्षधर्मयोरपि तदारोपरूपा सिद्धिरित्यनुमितिर्न तु तदनिश्चये व्याप्तपक्षधर्मादपि सा । न च व्याप्त्यादिप्रत्येकप्रमित्यभाव एव दूषक आवश्यकत्वादिति वाच्यम् । विशिष्टनिश्चयस्य हेतुत्वेन तदभावस्य कार्यानुत्पादकत्वादिति । मैवम् । तथा सति सव्यभिचारादेरपि अत्रैवान्तर्भावापातात् । असिद्धेः स्वरूपसत्या एव दोषत्वे स्वज्ञानार्थं व्यभिचाराद्यनुपजीवनात् । यदि च तस्मात्तत्प्रमितिर्नोत्पद्यते इति तस्योपजीव्यत्वं तदाऽऽश्रयासिद्ध्यादिज्ञानात्तत्सिद्धिर्नेति सैव पृथग्दोषः स्यादिति ॥

**अत्रास्मत्पितृचरणाः** । आश्रयासिद्ध्यादीनां प्रत्येकमेव दूषकत्वं, प्रत्येकज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात् । न तु विशिष्टाभावस्य, व्यर्थविशेषणत्वात् । तज्ज्ञानं विनाप्यनुमितिप्रतिबन्धात् । अनुमितिकारणलिङ्गपरामर्शविषयाभावत्वेन अनुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधहेत्वाभासाधिक्ये । न चैवं साक्षादनुमितिप्रतिबन्धकत्वेन बाधप्रतिरोधयोर्व्याप्तिभङ्गलिङ्गत्वेन विरुद्धव्यभिचारयोरपि सङ्ग्रहे विभागव्याघातः । स्वतन्त्राभिप्रायस्य निषेद्धुमशक्यत्वा-

प्रकाशिका ।

विशेषणाद्यभावात्मकत्वमिति मतमाश्रित्य अन्यथा विशिष्टाभावस्य भिन्नत्वेन व्यर्थविशेषणत्वानुपपत्तिरिति । वस्तुतः पूर्वमेव दूषणं द्रष्टव्यम् ज्ञप्तावनुपजीव्यत्वे स्वरूप एवोपजीव्यत्वं स्यादित्यत आह **यदि चेति । सैवेति** । आश्रयासिद्धिः स्वरूपासिद्धिर्व्याप्यत्वासिद्धिश्चेत्यर्थः । वस्तुतः स एवेति पाठस्तस्य चाश्रयासिद्धादावित्यर्थः । **व्यर्थविशेषणत्वा**दिति । एतच्चातिरिक्तविशिष्टाभावानभ्युपगमेऽन्यतरत्वादिनानुगमे तदभ्युपगमे तु सोऽपि दोष एव परामर्षविषयाभावत्वाविशेषात् । **परामर्षविषयाभावत्वेनेति** । यद्रूपोपस्थितयद्विषयतया परामर्षस्यानुमितिजनकत्वं,तद्रूपावच्छिन्नतदभावत्वेनेत्यर्थः । तेन न व्यभिचारविरोधबाधितेष्वतिव्याप्तिः ।

मकरन्दः ।

**यदि चेति । सैवेति** । आश्रयासिद्धिः स्वरूपासिद्धिर्व्याप्यत्वासिद्धिरित्यर्थः । ज्ञानगर्भहेत्वाभासानुरोधादिति भावः । वस्तुतः, **स एवेति** पाठः । आश्रयासिद्ध्यादिरित्यर्थः । चिन्तामणिविरोधादेव **नेति** स्थाने **नन्विति** पाठः क्वचित्को हेयः, अर्थासङ्गतेश्च । **व्यर्थेति** । एतच्चाखण्डाभावानभ्युपगमेन तदभ्युपगमे व्यर्थत्वाभावात् । विशिष्टस्यापि ग्राह्यतया तदभावज्ञानस्यापि विरोधित्वाच्च । विशिष्टाभावोऽपि दोष एव । अत एव तत्साधारणमेव संग्राहकमनुपदं वक्ष्यतीत्यवधेयम् ।

टिप्पणी ।

**व्यर्थविशेषणत्वञ्च प्रत्येकाभावस्य समर्थत्व इति** । उक्तविशेषणं विनापि साधनस्य लघुरूपेण साध्यसिद्ध्यनुकूलव्याप्तिमत्त्वे तद्विशेषणघटितत्वमप्रकृते व्यर्थविशेषणत्वम् तेन स्वावच्छिन्नाविषयकेत्यादेरसत्त्वेपि न क्षतिः ।

**भावोऽसिद्धिः। इयञ्च व्याप्तिपक्षपक्षधर्मतास्वरूपाणामन्यतमाऽप्रतीत्या भवन्ती यथासङ्ख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते। मध्यमाऽप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या वेति द्वयी। तत्र चरमा सिद्धसाधनमिति व्यपदिश्यते। व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात्। न त्वेवं बाधे, व्याप्तेरेव प्रथमं विघटनादिति विशेषः॥**

---

बोधनी।

सिद्धसाधनमिति, तत्र कालातीतविलोपप्रसङ्ग उक्त इति चेत्तत्राह **व्याप्तिस्थितौ**—इति। सिद्धसाधने हि सत्यामेव व्याप्तौ पक्षत्वमात्रविघटनादाश्रयासिद्धिरेव, बाधितविषये तु व्याप्तेरेवाहत्य भङ्गः, पश्चात्तु साध्यविपर्ययनिर्णयात् पक्षत्वातिपात इत्यनयोर्विशेष इति अप्रयोजकस्य व्या-

प्रकाशः।

त्। अन्यथा शास्त्रे परिभाषोच्छेदापत्तेः। सव्यभिचारादेश्च एवंरूपत्वेऽप्युपजीव्यत्वेन पार्थक्यम्। उपधेयसङ्करेऽप्युपाधेरसङ्करात्॥

**इयं चेति**। विशिष्टाभावस्य विशेषणाद्यभावव्यापकत्वादित्यर्थः। अन्यथासिद्धिः=सोपाधित्वम्। स्वरूपासिद्धिः=अपक्षधर्मत्वम्। **मध्यमाऽपीति**। आश्रयासिद्धेः सन्दिग्धसाध्यधर्मवद्धर्म्यप्रमितिरूपत्वाद् यत्र विशेष्यस्य धर्मिण एवाज्ञानं तत्रैकाऽऽश्रयासिद्धिरन्या च तद्विशेषणसाध्यसन्देहाभावात् सिद्धसाधनमुच्यते इत्यर्थः। न च सिद्धसाधनं न हेत्वाभासोऽनैकान्तिकवदनुमितिकारणाविघटकत्वात्। सत्प्रतिपक्षवत् स्वत एवाप्रतिबन्धकत्वादिति वाच्यम्। लाघवात् कारणविघटकत्वेनैव प्रतिबन्धकतया तद्विशेषकरणत्वस्य व्यर्थत्वात् साध्यज्ञानस्य तद्विशेषितसाध्यानुमित्यविरोधित्वेऽपि साध्यमात्रानुमितिविरोधित्वमस्त्येवेति तस्य हेत्वाभासत्वमपि। साध्यसाक्षात्कारे सति लिङ्गज्ञानेऽप्यनुमिनोमीत्यनुव्यवसायाभावात्। न च केवलान्वयिनि संशयाभावः। तत्रापि साध्यं पक्षनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयात्। पक्षविशेष्यकत्वस्य चातन्त्रत्वात्॥

**पक्षत्वस्येति**। सन्दिग्धसाध्यत्वस्येत्यर्थः। **व्याप्तेरेवेति**। यद्यपि जलह्रदोऽग्निमान् धूमवत्त्वादित्यत्र बाधेऽपि न व्याप्तिभङ्गः। तथापि धर्मिणि यत्र साधनाभिमतस्य वृत्तिस्तदभिप्रायकोऽयं ग्रन्थः।

प्रकाशिका।

**सव्यभिचारादेरिति**। व्यभिचार्यादेरित्यर्थः। व्यभिचारादिहेत्वाभासोपाधिभिन्नहेत्वाभासोपाधित्वमेवानुगमकमिति केचित्। **कारणविघटकत्वेनेति**। यद्यपि सिद्ध्यभावरूपकारणविरह एव सिद्धसाधनं न कारणविघटकम्, तथापि सन्देह एव पक्षतेति मतमवलम्ब्येदमुक्तम्। **तद्विशेषेति**। सिषाधयिषाकालीनत्वविशेषितानुमित्यविरोधित्वेऽपि तदविशेषितसाध्यानुमितिविरोधित्वमस्त्येवेत्यर्थः। तदेव दर्शयति। **साध्यसाक्षात्कार इति**। सिषाधयिषाविरहे सतीति शेषः। एवं च साक्षात्कारत्वमविवक्षितम्। ज्ञानमात्रमेव विवक्षितम्। एतच्च सर्वमनुमित्यसाधारणदोषत्वमेव हेत्वाभासत्वमिति मतमाश्रित्योक्तम्। व्यभिचारे पक्षभिन्नत्वस्येत्यादिका फक्किका

मकरन्दः।

**एवंरूपत्वेऽपीति**। परामर्शविषयाभावत्वेऽपीत्यर्थः। **उपधेयेति**। ननु यद्युपाध्यसङ्करमात्रेण पार्थक्यं, तदा आश्रयासिद्ध्यादीनामपि तथात्वे विभागव्याघात एव। यदि चोक्तानुगतरूपसंगृहीततया न तथात्वं, तदा व्यभिचारादावपि तुल्यम्। अत एव नोपजीव्योपजीवकभावोऽपि। अभेदे तदभावात्। अन्यथा आश्रयासिद्ध्यादेरपि तथात्वापत्तिरिति चिन्त्यम्। वस्तुतो व्यभिचारादिभिन्नपरामर्शविषयाभावत्वं, व्यभिचारादिचतुष्टयभिन्नहेत्वाभासत्वं वा विभाजकोपाधिरिति तत्त्वम्। **तद्विशेषितेति**। साध्यविशेषितसाध्यान्तरानुमित्यविरोधित्वेऽपि साध्यमात्रानुमितिविरोधित्वमस्त्येवेत्यर्थः। तदेव दर्शयति **साध्यसाक्षात्कारे** इति। सिषाधयिषाविरहे सतीति द्रष्टव्यम्। एवञ्च साक्षात्कारत्वमविवक्षितं बोध्यम्। एतच्च सर्वं प्राचीनमतेनेत्यवधेयम्। व्यभिचारे पक्षभिन्नत्वस्येति फक्किका साध्याभाव-

टिप्पणी।

**तद्विशेषितसाध्यानुमित्यविरोधित्वेऽपीति**। सिषाधयिषाकालीनत्वविशेषितेत्यर्थः।

प्रकाशः ।

ननु साध्याभाववति पक्षत्वाभिमते हेतोः सत्त्वाज्ज्ञानासिद्धिः । तज्ज्ञाने च व्यभिचारः । साध्याभावप्रमितौ सन्देहाभावेन पक्षत्वाभावादाश्रयासिद्धिश्च । व्यभिचारे पक्षभिन्नत्वस्य व्यर्थत्वेनातन्त्रत्वात् । सर्वोपसंहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमिति ज्ञानादेव भङ्गात् । न चोपजीव्यत्वाद् बाधः पृथक् । तद्धि न तमवगम्यैवावगमः । एकत्र हेतुसाध्याभावावित्येकवित्तिविषयतया व्यभिचारज्ञानस्य तदनुपजीवकत्वात् । नाप्युद्भावितव्यभिचारनिर्वाहार्थं तदुद्भावनम् । इदं व्यभिचारीत्युक्ते कथमिति परानुयोगस्यानावश्यकत्वात् । तथात्वेऽपि निर्वाह्यमेव दूषणमस्तु क्लृप्तत्वात् ।

अथ अर्थान्तरोपनायकस्मृत्यादिसहकारिता सामान्यत एव प्रमाणस्य क्लृप्ता प्रत्यभिज्ञानादौ, तदिह समीचीनव्याप्तिपक्षधर्मताकलिङ्गपरामर्शस्यासदर्थकाञ्चनमयत्वादिस्मृत्यादिसहकारिवशाद् यत्र आभासधीकारणत्वं तत्र बाधः पृथक्, न व्याप्तिपक्षधर्मतोपनीतादन्यस्यानुमितौ भाने मानाभावात् । प्रत्यभिज्ञानादौ प्रतीतिबलेन तत्कल्पनात् । अन्यथा पूर्वानुभूतसकलार्थभानेऽनुमितेर्याथार्थ्योच्छेदापत्तेः । भानेऽपि तस्य विप्रतिपत्त्यविषयतया तेन हेत्वाभासत्वानिरूपणात् । अन्यथाऽतिप्रसङ्गात् । अथ प्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधस्य दोषत्वेन क्लृप्तत्वादनुमितावपि स एव दोष इति चेत् । न तर्हि हेत्वाभासः । अनुमित्यसाधारणदोषस्यैव तत्त्वात् ।

अथ पक्षाभिमते साध्याभावग्रहवत् साध्याभावव्याप्यग्रहोऽपि दूषकः विरोधित्वाविशेषात् । एवञ्च, साध्याभावसामानाधिकरण्यमनैकान्तिकत्वं, साध्याभावव्याप्यसामानाधिकरण्यं च बाधः । तादृशं चाग्नित्वाद्येवेति । मैवम् । पक्षाभिमते साध्याभावग्रहस्य दूषकत्वासिद्धौ दृष्टान्तत्वानुपपत्तेः, सिद्धौ वा तस्योक्तरूपबाधानन्तर्भावे षष्ठहेत्वाभासत्वापत्तेः । उक्तरूपश्च बाधः पक्षाभिमतविषयसाध्याभावबुद्धौ सत्यामसत्यां वा ? । आद्येऽनैकान्तिकत्वमेव, साध्याभावसामानाधिकरण्यग्रहात् । अन्त्ये लिङ्गत्वाभिमतसाध्याभावव्याप्ययोरगृह्यमाणविशेषतया सत्प्रतिपक्ष एव दोषो न बाधः । तत्र तुल्यबलत्वं प्रयोजकं, बाधे त्वधिकबलत्वमिति चेन्न । गमकताप्रयोजकरूपसम्पत्तेरेव बलत्वेन तस्य द्वयोरपि ज्ञातत्वात् ।

टिप्पणी ।

प्रकृतसाध्यविशेषितसाध्यान्तरानुमितीत्यर्थ इति साध्यवत्पक्षविधेयकानुमितीत्यर्थ इति यावत् । तत्रापि प्राचां साध्यव्यवहारादिति कश्चित् । वस्तुतः साध्यज्ञानं न पक्षे साध्यनिश्चयः, किन्तु साध्यज्ञानमात्रम् तस्यापि व्यतिरेकिमात्रानुमितिविरोधित्वमस्त्येवेति तदपि संग्राह्यम्, तथा च तद्विशेषितेत्यस्याव्यवहितोत्तरत्वसम्बन्धेन साध्यज्ञानविशेषितेत्यर्थः, अन्वयव्याप्तिज्ञानजन्येति तद[illegible] । एतेन सिषाधयिषाकालीनत्वस्याप्रकृततया तत्पदेन तद्ग्रहणस्याशक्यत्वेऽपि न क्षतिः, साध्यविशेषितसाध्यानुमितेरप्रतिबन्धकत्वकथनस्याप्रसक्तत्वेऽपि न क्षतिः **साध्यमात्रानुमितीति** । सिषाधयिषाकालीनत्वविशेषितानुमितीत्यर्थः । साध्यमात्रविषयकानुमितीत्यर्थ इति कश्चित् । वस्तुतो व्यतिरेकव्याप्तिज्ञानजन्यानुमितिरेव साध्यमात्रानुमितिः । साध्यस्य ज्ञातत्वेन तन्मात्रस्यैव तत्रानुमितिनिरूपितविलक्षणविषयत्वादन्वयव्याप्तिस्थले साध्यस्य ज्ञातत्वेन तन्मात्रस्यातथात्वात् पक्षसाध्यसम्बन्धस्यैव तथात्वादिति भावः । तादृशञ्चाग्नित्वाद्येवेति अयोगोलके धूमसाधने तत्र धूमाभावनिश्चये वह्निः साध्याभावसमानाधिकरणो व्यभिचारी धूमव्यापकत्वेन गृहीतार्द्रेन्धनसम्बन्धाभावस्य धूमाभावव्याप्यस्य पक्षे निश्चितस्य वह्नावपि निश्चितत्वेन तत्समानाधिकरणवह्नित्वं हेतुकृतं बाधितं तादृशं साध्याभावव्याप्यसमानाधिकरणत्वेन बाधितमित्यर्थः । **तत्र तुल्यबलत्वम्प्रयोजकमिति** । अगृह्यमाणविशेषत्वमात्रञ्च सत्प्रतिपक्षत्वप्रयोजकमपि तु तुल्यबलत्वं गृह्यमाणमूलञ्च प्रामाण्यग्रहणन्तच्चोभयत्र न समानम् यत्रैकत्र दोषादपरत्र सत्तया प्रमाकत्वाद् गृह्यते तत्र सत्प्रतिपक्षो यत्र साध्याभावव्याप्यग्रह एव तद्ग्रहणन्तत्र बाधः यत्र साध्यव्याप्ये ग्रहणं यत्र न किमपीत्याशङ्क्यते अत्रेति । सत्प्रतिपक्ष इत्यर्थः । **इति चेन्न गमकत्वप्रयोजकरूपसम्पत्तेरिति ।**

प्रकाशः ।

अथ हेतुतः साध्यसिद्धिसम्भावनायामनैकान्तिकत्वासिद्धेः पक्षाभिमते धर्मिणि साध्याभावप्रमितेः साधनाभिमतात् साध्यसिद्धिसम्भावनाविरह एवानैकान्तिकावतार इत्युपजीव्यत्वाद् बाधः पृथक्। अन्यथा हेतोरसाधकत्वे सिद्धे साध्यसिद्धिसम्भावनाविरहादनैकान्तिकत्वबुद्धिस्तस्यां च सत्यां हेतोरसाधकत्वधीरित्यन्योन्याश्रयः । मैवम् । साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्रमितसाध्याभावसहचरितहेतुविषयत्वेनानैकान्तिकत्वज्ञानतया दूषकत्वात् । यद्यप्यनैकान्तिकत्वेऽपि साध्याभावप्रमैव प्रयोजिका तां विना तदभावादिति तस्या एव दोषत्वमर्हं, तथापि तस्याः साध्याभावसमानाधिकरणहेतुज्ञानत्वेन दूषकत्वं, क्लृप्तत्वात् । न तु साध्याभावप्रमात्वेन, तस्यावश्यकत्वेऽपि तेन रूपेण दूषकत्वाकल्पनात् ।

अत्रोच्यते । गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यत्र बाधः पृथक्, न च तत्राप्यनैकान्तिकमेव दोषः । साध्यात्यन्ताभाववद्वृत्तित्वस्य तत्वात् । अन्यथा द्रव्यत्वेन गुणाननुमानापत्तेः । आद्यक्षणे साध्याभाववद्वृत्तित्वात् । न च वस्तुतो यो गन्धप्रागभावावच्छिन्नस्तत्र साध्यमस्त्येवेति सिद्धसाधनमेव तत्र दोषः । पक्षतावच्छेदकधर्मविशिष्टे साध्यवैशिष्ट्यस्यानुमेयत्वात् ।

प्रकाशिका ।

साध्याभावप्रमिताविस्यस्य पूर्वं युज्यत इति प्राहुः । **गन्धप्रागभावावच्छिन्न इति** । यद्यपि धर्म्मिणि गन्धासिद्धाविष्टापत्तिः, गन्धप्रागभावसमयावच्छेदेन च न गन्धसिद्धिः साधकाभावात् । न च पक्षधर्म्मताबलमेव साधकं पक्षधर्म्मता हि हेतोः पक्षवृत्तिता सा च साध्यसामान्यव्याप्तस्य तस्य पक्षीयं साध्यं विना नेति तादृशं साध्यं सिद्ध्यति, न तु पक्षतावच्छेदकावच्छिन्नं तेन विनापि पृथिवीत्वे व्याप्तिपक्षधर्म्मतयोरुपपत्तेः । तथापि सामान्यत एव विना बाधकं विशिष्टवैशिष्ट्यज्ञानजनकत्वं प्रमाणानां स्वभाव इति गन्धप्रागभावावच्छेदेनैव गन्धमनुमितिविषयीकुर्यादित्यादि न बाधो दूषणमित्यत्र तात्पर्यम् । केचित्तु शब्दे तात्पर्यस्येव सिषाधयिषाया अनुमितौ विषयतानियामकतया तदवच्छिन्नसिषाधयिषायां तथानुमितिः स्यादेव यदि न बाधो दूषणमिति तात्पर्यमित्याहुः । तन्न । सिषाधयिषाया अनुमित्यकार-

मकरन्दः ।

प्रमिताविस्यस्य पूर्वं युज्यते इति प्राहुः । **गन्धप्रागभावावच्छिन्न** इति । यद्यपि गन्धप्रागभावसमयावच्छेदेन गन्ध साधकाभावादेव न गन्धानुमितिर्न तु बाधात्, न च पक्षधर्मताबलात् तथा, पक्षधर्मता हि लिङ्गस्य पक्षे वृत्तिरेव, सा च साध्यसामान्यव्याप्तिमतस्तस्य पक्षीयं साध्यविशेषं विनाऽनुपपन्नेत्यतो व्याप्त्या सह परामृश्यमाना पक्षसम्बन्धं साध्यं साधयति, न तु पक्षतावच्छेदकत्वेन यदुपादीयते तदवच्छेदेन साध्यस्य पक्षे सम्बन्धं, बीजाभावात्, तं विना तस्या अनुपपत्त्यभावात् । तदवच्छेदेन पक्षे साध्यसम्बन्धं विनाऽपि प्रकृते पृथिवीत्वादिहेतोर्व्याप्तिपक्षधर्मताया उपपन्नत्वात् । तथापि प्रमाणस्यायं स्वभावो यद्बाधकं विना विशिष्टवैशिष्ट्यज्ञानमेव जनयति, तथा च ज्ञानसामान्यसामग्रीबलादेव तदवच्छेदेनानुमितिः स्यात्, यदि न बाधो दोष इति प्राहुः । यत्तु यथा शब्दतात्पर्यवशेन क्वचिदेकस्य द्वयं क्वचिद्विशिष्टवैशिष्ट्यञ्चेत्यन्वयबोधद्वैविध्यं, तथा सिषाधयिषावशादनुमितिद्वैविध्यमपीति, तन्न, सिषाधयिषा-

टिप्पणी ।

प्रामाण्यज्ञानञ्च बलं तस्य साधकत्वदूषकत्वयोरनुपयोगात् अप्रामाण्यज्ञानाभावे सति गृहीतव्याप्तिपक्षधर्म्मतैव बलन्तदुभयत्र तुल्यवदेवास्तीति सत्प्रतिपक्ष इति समाधत्ते **नेति** । तथाचैकत्राप्रामाण्यज्ञाने बाधोऽपि न स्यात् साध्यव्याप्यवत्त्वपरामर्षे तद्ग्रहे तत एवानुमित्यनुत्पत्तेर्बाधस्य दूषकत्वकल्पने मानाभावात् । बाधग्रहे च तद्ग्रहे दूषकत्वासम्भवादुभयत्र तद्ग्रहे सत्प्रतिपक्ष एव दोष इति भावः । **साध्यसिद्ध्युन्मुखहेतुज्ञानस्येति** । साध्यवत्तया साधनीये धर्म्मिणि हेतोर्वृत्त्यवगाहित्वं साध्यसिद्ध्युन्मुखत्वम् । **ज्ञानत्वेन दूषकत्वं क्लृप्तत्वादिति** । पक्षादन्यत्र साध्याभावसामानाधिकरण्यग्रहे दूषकत्वेन क्लृप्तत्वादिति ॥ ७ ॥

**यत्त्वप्रयोजकः सन्दिग्धानैकान्तिक इत्यनैकान्तिकेऽन्तर्भाव्यते । तदसत् । व्याप्त्यसिद्ध्या हि निमित्तेन व्यभिचारः शङ्कनीयः, अन्यथा वा ? । प्रथमे, असिद्धिरेव दूषणमुपजीव्यत्वात्, नानैकान्तिकम्, उपजीवकत्वात् । अन्यथा शङ्का स्वदूषणमेव; निर्णीते तदनवकाशादिति ॥ ७ ॥**

**उपमानन्तु बाधकमनाशङ्कनीयमेव, विषयानतिरेकादिति केचित् । तथाहि । न तावदस्य विषयः सादृश्यव्यपदेश्यं पदार्थान्तरमेव सम्भावनीयम् ।**

---

बोधनी ।

प्त्यसिद्धावन्तर्भावं मन्यमानो मतान्तरमाशङ्क्य दूषयति **यत्तु**-इति । प्रथमव्याप्त्यसिद्धिं निमित्तीकृत्य व्यभिचारशङ्केत्यत्र पूर्वसिद्धासिद्धिरेव दूषणं स्यान्न तु तदुपजीवनेन प्रवृत्ता व्यभिचारशङ्का, अन्यथा व्याप्तिनिर्णये तु, व्यभिचारशङ्कात्मकं दूषणमेव नोदेतीति निर्णीते विषये शङ्काया निरवकाशत्वादिति ॥ ७ ॥

तदेवं प्रत्यक्षानुमानयोस्तदभावावेदकत्वं निराकृत्य संप्रत्युपमानस्य निराचिकीर्षुरेकेषां मतं तावदुपन्यस्यति **उपमानं तु**-इति । क्लृप्तप्रमाणविषयातिरिक्तविषयासंभवादुपमानस्य पृथक्प्रामाण्यमेव नास्ति कुतस्तेन बाध आशङ्क्येतेति । विषयानतिरेकमेवाह **न तावत्**-इति । पदार्थान्तरं हि भवत् सादृश्यं किं भावाभावाभ्यामन्यत्किं वोभयात्मकं किमुत भावात्मकमेव षट्पदार्थातिरेकेणेति विकल्पं हृदि निधाय सामान्येन कोटिद्वयातिरेकस्यापि न संभवतीत्याह ।

प्रकाशः ।

अथैवं विद्यमानेयं नदी, उपरि देशे वृष्टिमती, विशिष्टपूरवत्त्वादित्यत्र विद्यमानवृष्ट्यनुमानापत्तिः । न चेष्टापादनं, विद्यमानवृष्टेर्वर्तमाननदीपूरं प्रत्यहेतुत्वादिति चेन्न । तत्र समयभेदेनैव व्याप्तिग्रहात्तथैव साध्यसिद्धेः । किञ्चैवं सिद्धसाधने प्रागभावतत्प्रतियोगिनोरेकदेशवृत्तित्वेनैककालवृत्तित्वमपि स्यात् । यदि च तयोरेकसमयावच्छेदेनैकत्रावृत्तेर्न तथात्वं, तर्हि तत्प्रागभावावच्छिन्ने धर्मिणि तत्प्रतियोग्यनुमितावपि न सिद्धसाधनमपि तु बाध एव । अधिकन्तु न्यायनिबन्धनप्रकाशे विपञ्चितमस्माभिः । मतान्तरं विकल्प्य निराकरोति । **यत्त्विति** ॥ ७ ॥

अनुमानादिभ्यः फलव्यापारवैजात्याभावादुपमानं न मानान्तरमिति तन्नेश्वरबाधकमित्याह—

**उपमानं त्विति** ॥ ननु सादृश्यमेव तद्विषयः स्यात् । न हि तदिन्द्रियगम्यं, तदापातमात्रेणाज्ञानात् । नापि लिङ्गादिगम्यं, तदभावेऽपि सादृश्यज्ञानात् । तच्च न द्रव्यमगुणत्वात् । न गुणः कर्म वा गुणेऽपि वृत्तेः । न सामान्यं, सप्रतियोगिकत्वात् । न च विशेषसमवायौ, प्रत्यक्षत्वादित्याह । **तथा हीति** ।

प्रकाशिका ।

णतया तद्विषयतानियामकत्वायोगादिति । **विद्यमानेति** । एतत्कालावच्छिन्नेत्यर्थः । **तत्र समये**-**ति** । तथा च तत्तत्कालावच्छिन्नानुमितौ व्याप्तिविरोध एव बाधक इति भावः । वस्तुतस्तत्रापि बाधादेव नानुमितिरितीदमपि बाधोदाहरणं द्रष्टव्यम् ॥ ७ ॥

**प्रत्यक्षत्वादिति** । समवायाप्रत्यक्षत्वे सतीत्यस्य हेतुरन्यथा तु समवायभेदसाधनेऽनेकत्वं लि-

मकरन्दः ।

याः पक्षताशरीरानिरपादकत्वेनान्यथासिद्धतया व्यभिचारेण चानुमित्यहेतुत्वात् । न चानुमितिविशेषे तद्धेतुत्वं, मानाभावात्, पक्षताया अहेतुत्वापाताच्चेति सङ्क्षेपः । **विद्यमानेति** । वर्तमानकालावच्छिन्नेत्यर्थः । **तत्रेति** । पूर्वकालीनवृष्ट्यैव व्याप्तेस्तस्या एव सिद्धिरित्यर्थः । बाधादेव न तत्सिद्धिरबाधे चेष्टापत्तिरित्यपि बोध्यम् ॥ ७ ॥

प्रत्यक्षत्वादिति वैशेषिकमतेन । न्यायमते समवायभेदसाधनेऽनेकत्वादिकं लिङ्गमिति ध्येयम् ।

परस्परविरोधे हि न प्रकारान्तरस्थितिः ॥
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

न हि भावाभावाभ्यामन्यः प्रकारः सम्भावनीयः, परस्परविधिनिषेधरूपत्वात्। न भाव इति भावनिषेधमात्रेणैवाभावविधिः। ततस्तं विहाय कथं स्ववचनेनैव पुनः सहृदयो निषेधेन्नाभाव इति। एवं, नाभाव इति निषेध एव भावविधिः। ततस्तं विहाय स्ववाचैवानुन्मत्तः कथं पुनर्निषेधेन्न भाव इति। अत एवम्भूतानामेकताप्यशक्यप्रतिपत्तिः। प्रतिषेधविध्योरेकत्रासम्भवात्। तस्माद्भावाभावावेव तत्त्वम् ॥

भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव पूर्ववत्। पूर्वं द्रव्यमेव। उत्तरत्राश्रितमनाश्रितं वेति द्वयमेव पूर्ववत्। तत्रोत्तरं समवाय एव। अनवस्थाभयात्। आश्रि-

बोधनी।

**परस्पर**-इति। भावाभावयोः परस्परप्रतिक्षेपत्वलक्षणस्वरूपत्वाद्भावनिषेधोऽभावविधिः स्यात् तन्निषेधश्च भावविधिः, तेन ताभ्यामन्यः प्रकारः संभवति न कस्यापीति शेषः। हि यस्मात्तस्माद्दूरे सादृश्यस्य विशेषस्य प्रकारान्तरस्थितिर्वार्तेति भावः। न च क्वापि विरुद्धानामैकात्म्यं विरुद्धत्वादेव अन्यथा विरोध एव न स्यात्। तथा च कथं परस्परविरुद्धभावाभावात्मकं भवेत्सादृश्यमिति भावः। किं च आस्तां तावद्वस्तुगतो विरोधः, वचनमात्रस्यैव विरोधात् भावाभावात्मता निरस्तेत्याह **उक्ति**-इति ॥

एतेनैव भावत्वेऽपि षट्पदार्थातिरेको निरस्तः। परस्परविरोधिसगुणनिर्गुणादिव्यतिरेकेण प्रकारान्तरासंभवादुभयात्मकत्वासंभवाच्चेति व्याचष्टे **न हि**-इति। भवतु भावात्मकमेव तत्त्वान्तरमित्यत्रापि श्लोकं व्याचक्षाण आह **भावत्वेऽपि**-इति। **पूर्ववत्**-इति। भावाभावयोरिव परस्परविधिनिषेधरूपत्वात्सगुणनिर्गुणयोरित्यर्थः। एवमुत्तरेष्वपि द्रष्टव्यम्। समवायस्याश्रितत्वे बाधकम**नवस्था** इति। आश्रितत्वं नाम समवायस्य समवायित्वमेवाद्रव्यत्वेन संयोगासम्भवात्। तत्र च सम-

प्रकाशः।

**परस्परेति** ॥ विरोधोऽत्र न परस्पराभावव्याप्यत्वम्। नीलपीतयोरन्यतरनिषेधेऽप्यन्यतरस्याविधेः। किन्तु परस्पराभावरूपत्वम्।

**पूर्ववदिति**। परस्परविरोधे प्रकारान्तराभावादित्यर्थः। एवमग्रेऽपि।

नन्वेतादृशविकल्पेन परिशेषे सामान्यविशेषसमवायानामपि द्रव्यादित्रयसाधर्म्यात्तदन्तर्भावः स्यात्। अथानुगतव्यवहारान्यथानुपपत्त्या तेषां तद्बहिर्भावः। तुल्यं सादृश्येऽपि। न हि तत् सामान्यं, तत्रोत्कर्षादिव्यवहारानुपपत्तेः सामान्यस्यैकरूपत्वात्। सामान्यस्याश्रयभेदेऽप्यभेदात्। सादृश्यस्य च प्रत्याश्रयं भेदात्। अथ तद्भेदे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यं, भेदश्च प्रत्याश्रयं भिन्नः सप्रतियोगिकश्चेति चेन्न। सादृश्यस्य भेदघटितत्वेन सावधित्वे तस्मात् सदृश इति प्रतीत्यापत्तेः।

प्रकाशिका।

न्नमिति द्रष्टव्यम्। **तदन्तर्भाव इति**। गुणवन्निर्गुणं वा, अन्तेऽपि कर्मभिन्नं कर्म वा यथाक्रमं द्रव्यगुणकर्मान्तर्भाव इत्यर्थः। व्यवहारान्यथानुपपत्तिमेवाह। **न हीति। भेदघटितत्वेनेति।** भेदो-

मकरन्दः।

व्यवहारान्यथानुपपत्तिमेवाह **न हीति। भेदघटितत्वेनेति**। यद्यपि भेदोऽन्योन्याभावः, स च न सावधिः, किन्तु सप्रतियोगिकः अन्यथा घटो नेत्यत्र घटान्नेति प्रतीत्यापत्तेः, तथापि भेदपदमत्र

टिप्पणी।

**द्रव्यादित्रयसाधर्म्यादिति**। द्रव्यं द्विविधं स्पन्दनवन्निःस्पन्दश्च निःस्पन्देष्वन्तर्भवतु सामान्यादिकमित्यर्थः। **अनुगतव्यवहारान्यथानुपपत्तेरिति**। अनुगतव्यवहारान्यथानुपपत्त्या सिद्धं सामान्यं न द्रव्यं न गुणो न कर्म्म गुणकर्मणोरनुगतव्यवहाराभावप्रसङ्गादिति सामान्यस्य द्रव्यादिबहिर्भाव इति भावः। **भेदश्च प्रत्याश्रयं भिन्न** इति। पृथक्त्वञ्चेत्यर्थः। तेन

तन्तु सामान्यवन्निःसामान्यञ्चेति पूर्ववत् द्वयमेव । तत्र प्रथममपि स्पन्दोऽस्पन्द इति द्वयमेव । एतच्च यथासङ्ख्यं कर्म गुण इति व्यपदिश्यते । निःसामान्यं निर्गुणमाश्रितन्त्वेकाश्रितमनेकाश्रितं चेति प्रागिव द्वयमेव । एतदपि यथासंख्यं विशेषः सामान्यञ्चेत्यभिधीयते । तदेतत्सादृश्यमेतास्वेकां विधामासादयन्नातिरिच्यते । अनासादयन्न पदार्थीभूय स्थातुमुत्सहते ॥

एतेन शक्तिसंख्यादयो व्याख्याताः । ततोऽभावेन सह सप्तैव पदार्था इति नियमः । अतो नोपमानविषयोऽर्थान्तरमिति ॥ ८ ॥

---

बोधनी ।

वायस्याश्रितत्वाभ्युपगमेऽनवस्था स्यात् । इह पटे रूपसमवाय इति प्रतीतिस्तु विशेषणविशेष्यमात्रनिबन्धनेति, तदेवं पदार्थव्यवस्थितौ यदि सादृश्यं सगुणत्वादिविधास्वन्तर्भवेत् पदार्थषट्कान्नातिरिच्येत्, अनन्तर्भावे वा पदार्थ एव न स्यादित्याह **तत्**-इति । शक्तिसंख्यादीनामपि षट्पदार्थान्तरत्वमनेनैव मार्गेण निराकृतमिति प्रसङ्गादाह **एतेन**-इति । उपसंहरति **ततः**-इति । ततश्चाप्रमाणत्वादेव न बाधकमिति ॥ ८ ॥

तदेवं तत्त्वान्तरभूततत्रान्तर्भूतसादृश्यविषयमुपमानं पृथक्प्रमाणमिति गुरुमतं निराकृत्य

प्रकाशः ।

पदार्थान्तरत्वे च सप्रतियोगिकत्वेऽपि सावधित्वाभावेन तदभावोपपत्तेः । न च सप्रतियोगित्वमेव सावधित्वं, घटान्नेति प्रतीत्यापत्तेः ।

अत्राहुः । असाधारणान्यतद्गतबहुधर्मवत्त्वं तत्सादृश्यं जात्यादिसाधारणं, भेदाघटितत्वाच्च निरवधि । तद्गतबहुधर्मवत्त्वं च तन्निरूप्यमितीतरनिरूप्यत्वमेव तस्य सप्रतियोगिकत्वम् । तथापि सादृश्ये तदेव सप्रतियोगिकत्वं, न तु भेददीर्घादिवत् सावधिकत्वम् । तस्मात्सदृश इति प्रतीत्यापत्तेः । किञ्च यादृशं तद्गतबहुधर्मवत्त्वमनतिप्रसक्तं तव सादृश्यव्यञ्जकं, तदेव सदृशव्यवहारनिमित्तमस्तु, किमधिकेनेति सङ्क्षेपः ।

**एतेनेति** ॥ षट्पदार्थानतिरेकेणेत्यर्थः । **तत** इति ॥ भावरूपपदार्थाः षडभावस्यापि मानसिद्धतया पदार्थत्वोपगमादिति भावः । प्रत्यक्षादिविषयद्रव्यादिपदार्थातिरिक्तं सादृश्यमुपमानपरिच्छेद्यमित्यसिद्धमित्याह । **अत** इति ॥ ८ ॥

मा भूत् सादृश्यं पदार्थान्तरं, तथापि तदेवोपमानपरिच्छेद्यम्, प्रत्यक्षाद्यपरिच्छेद्यत्वात्, इन्द्रियसन्निकर्षेऽपि तदज्ञानात्, लिङ्गाद्यज्ञानेऽपि ज्ञायमानत्वाच्चेति जरन्मीमांसकमतमाह—

प्रकाशिका ।

ऽत्र पृथक्त्वं न त्वन्योन्याभावः, तस्य सावधित्वाभावात्, अन्यथा घटान्नेति प्रतीत्यापत्तेः । **असाधारणेति** । तदसाधारणधर्माभावे सति तस्य तद्गतबहुधर्मवत्त्वमित्यर्थः । तेन नाभेदे सादृश्यप्रसङ्गः । तत्र चेष्टापत्तावसाधारण्येऽन्यपदवैयर्थ्यापत्तेरिति ध्येयम् ॥ ८ ॥

मकरन्दः ।

पृथक्त्वपरम् । अत एव भेदाघटितत्वादिति सिद्धान्तोऽपि सङ्गच्छते । अन्यथा तस्याप्यन्योन्याभावघटितत्वे विरोधापत्तेः । **असाधारणेति** । असाधारणान्यमात्रेत्यर्थः । एतच्च स्वस्मिन्नपि स्वसदृशत्वप्रसङ्गवारणाय ॥ ८ ॥

टिप्पणी ।

भेदघटितत्वेन सावधित्व इति ग्रन्थस्य नासङ्गतिः । भेदस्य सप्रतियोगिकत्वेऽपि सावधित्वाभावात् । **सावधित्वाभावेनेति** । तादृशव्यवहाराभावेन निरवधितयैव कल्पनात् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

**स्यादेतत्।** भवतु सामान्यमेव सादृश्यं, तदेव तस्य विषयः स्यात्। तत्सदृशो-ऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, सदापातमात्रेणानुत्पत्तेरिति चेन्न। पूर्वपिण्डानुसन्धानरूपसहकारिवैधुर्येणानुत्पत्तेः। सोऽयमिति प्रत्यभिज्ञानवदिति ॥

नन्वेतत्सदृशः स इति नेन्द्रियजन्यम्। तेन तस्यासम्बन्धात्। न चेदं स्मरणम्। तत्पिण्डानुभवेऽपि विशिष्टस्याननुभवात्। न चैतदपि, अयं स इति विपरीतप्रत्यभिज्ञानवदुपपादनीयम्। तत्तेदन्तोपस्थापनक्रमविपर्ययेऽपि विशेष्यस्येन्द्रियेण सन्निकर्षाविरोधात्। तस्य सन्निहितवर्त्तमानगोचरत्वात्। प्रकृते तु तद-

बोधनी।

भाट्टमतं निराचिकीर्षुः शङ्कते **स्यादेतत्**-इति। पदार्थान्तरावयवादिवर्तीनि सामान्यान्येव पदार्थान्तरस्यावयवादिषु वर्तमानानि सादृश्यं न तु तत्त्वान्तरम्, तथाहुः-"सामान्यान्येव भूयांसि गुणवयवकर्मणाम्। भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते" इति। न च तत् प्रत्यक्षविषयः संभवतीत्याह **गोसदृशोऽयम्**-इति। **न पूर्व**-इति। प्रतियोग्यनुसंधानस्येन्द्रियसहकारिणो वैधुर्येणेन्द्रियसंनिपातमात्रात्सादृश्यज्ञानानुपपत्तिः। न च तावतेन्द्रियजन्यत्वहानिः प्रत्यभिज्ञानवदिति। तस्मिन्सन्निहितपदार्थप्रतियोगिकसादृश्यविशिष्टासन्निहितपदार्थविषयमेतत्सदृशः स इति ज्ञानमुपमानफलं भविष्यति। न ह्येतदिन्द्रियेण जन्यते व्यवहितस्येन्द्रियेण संबन्धाभावादित्याह **ननु**-इति। न चेदं स्मरणं व्यवहितस्य पिण्डस्य सादृश्यविशिष्टतयाननुभूतत्वादित्याह **न चेदम्**-इति। ननु तत्सदृशोऽयमिति ज्ञानं तावदैन्द्रियकं, तस्माच्चैतत्सदृशः स इति ज्ञानस्य तत्तेदन्ताक्रमविपर्यय एव विशेषः। न च तावता प्रत्यक्षत्वहानिः सोऽयमिति प्रत्यभिज्ञानवदयं स इति विपरीतप्रत्यभिज्ञानस्याप्यैन्द्रिकत्वेनेष्टत्वादित्यत्राह **न चैतत्**-इति। उभयमपि प्रत्यभिज्ञायां विशेष्यस्यैकत्वात्तस्य च संनिहितवर्त्तमानत्वादिन्द्रियसंनिकर्षे न कश्चिद्विशेषः, एतत्सदृशः स इत्यत्र तु विशेष्यस्यासंनिहितत्वेनेन्द्रियसंनिकर्षासंभवात्तत्सदृशोऽयमित्येतस्मान्महान्विशेष इति। तस्मादसंनिहितपिण्डस्मरणसहायं तत्प्रतियोगिकसंनिहितपिण्डवर्त्तिसादृश्यज्ञानमेव तथाविधसंनिहितपिण्डप्रतियोगिकासंनिहितपिण्डवर्त्तिसादृश्य-

प्रकाशः।

**स्यादेतदिति**। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यत्वात्तद्भेदांशस्य च प्रतियोगिज्ञानज्ञेयत्वात् सहकारिवैधुर्यादापाततः प्रत्यक्षेणाज्ञानेऽपि तत्समवधाने तत एव तज्ज्ञानोत्पत्तिरित्याह। **पूर्वेति**। यथा तत्तास्मरणाभावादापाततः प्रत्यभिज्ञानाभावेऽपि तत्समवहितादिन्द्रियादेरेव तदुत्पत्तिरित्याह। **सोऽयमिति**।

सादृश्यमात्रस्योपमानापरिच्छेद्यत्वेऽपि गोप्रतियोगिकगवयनिष्ठसादृश्यज्ञानकरणकगवयप्रतियोगिकगोनिष्ठसादृश्यधीरुपमानफलमिति शाबरमतमाह। **नन्विति**। न च सा प्रत्यक्षफलम्। विशेष्यस्य गोरसन्निकर्षादित्याह। **नेन्द्रियेति**। गत्यन्तरमाशङ्क्य निराकारोति। **न चेति**। गोपिण्डानुभवेऽपि गवयस्याज्ञानात् तत्प्रतियोगिकसादृश्यवैशिष्ट्यानानुभवादित्यर्थः। **न चेति**। ऋजुप्रत्यभिज्ञाने तत्ताविशिष्टे इदन्ताविशिष्टाभेदो भासते अयं स इत्यत्र तु इदन्ताविशिष्टे तत्ताविशिष्टाभेद इति तत्तेदन्तयोरनुयोगित्वप्रतियोगित्वावच्छेदकभेदात्, प्रत्यभिज्ञानयोर्भेदेऽपि तत्र विशेष्यसन्निकर्षादत्र तु तदभावादित्यर्थः।

प्रकाशिका।

**तद्भिन्नत्वे सतीति**। तदन्यत्वे सतीत्यर्थः। ऋजु **प्रत्यभिज्ञान** इति। उद्देश्यतावच्छेदकविशिष्टे विधेयवैशिष्ट्यप्रतीतेर्व्युत्पत्तिसिद्धत्वात् प्रथमप्रतीतस्यैव चोद्देश्यतावच्छेदकत्वादिति भावः।

मकरन्दः।

**तद्भिन्नत्वे** इति। तदन्यत्वे सतीत्यर्थः।

भावात् । तस्मात्, तत्पिण्डस्मरणसहायमेतत्पिण्डवृत्तिसादृश्यज्ञानमेव तथाविधं ज्ञानमुत्पादयदुपमानं प्रमाणमिति । एतदपि नास्ति ॥

**साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ॥**
**अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥**

यदा हि एतद्विसदृशोऽसौ इति प्रत्येति, तत्रापि तुल्यमेतत् । न हि तत्प्रत्यक्षमसन्निकृष्टविषयत्वात् । न स्मरणम् । विशिष्टस्याननुभवात् । नोपमानमसादृश्यविषयत्वात् । नन्वेतद्धर्माभावविशिष्टत्वमेव तस्य वैधर्म्यं, तच्चाभावगम्यमेवेष्यते । न च प्रकृतेऽपि तथाऽस्तु । सादृश्यस्य भावरूपत्वादिति चेन्न । इतो व्यावृत्तधर्मविशिष्टताया अपि वैधर्म्यरूपत्वात् । तस्य च भावरूपत्वात् ॥

---

बोधनी ।

विषयं विज्ञानं जनयत्तदुपमानं नाम प्रमाणान्तरमास्थेयमित्युपसंहरति **तस्मात्**-इति । सदेतदतिप्रसङ्गापादनेन दूषयति **एतदपि**-इति ।

तद्यसंनिहितपिण्डवर्त्तिवैसादृश्यज्ञानं जनयत्तत्प्रतियोगिकसंनिहितपिण्डवर्त्तिवैसादृश्यज्ञानं सममं प्रमाणं प्रसज्येत, तुल्यन्यायत्वात् । अथ तद्वैधर्म्यमेतस्य प्रत्यक्षसिद्धमन्यथानुपपद्यमानं तस्यैतद्वैधर्म्यं कल्पयतीति न तत्र प्रमाणान्तरप्रसक्तिरिति चेत् तर्हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्षसिद्धं तस्यैतत्सादृश्यं विनानुपपन्नं तस्यैतत्सादृश्यं कल्पयदर्थापत्तिरेव स्यादिति व्याचष्टे **यदा हि**-इति । ननु संनिहितपिण्डगतधर्माभावविशिष्टत्वमेव सन्निहितस्य तद्वैधर्म्यं तत्राभावरूपत्वादभावप्रमाणस्यैव विषयः, सादृश्यस्य तु भावरूपत्वात्प्रमाणान्तरमन्वेषणीयमित्याशयादाह **न चेति** । **न** इति ।

प्रकाशः ।

तादृशी धीः प्रत्यक्षायफलमप्यर्थापत्तिफलमिति नैतत्करणमुपमानं मानान्तरं सिद्ध्यति । अन्यथा तद्विधर्मायमिति बुद्ध्यनन्तरमेतद्विधर्माऽसाविति धीकरणं मानान्तरं स्यादित्याह । **साधर्म्यमिति** । गवि करभवैधर्म्यं हि करभवृत्तिधर्माभाववत्त्वम् । तच्च स्मृते गवि प्राङ्नास्तितावदनुपलब्धिगम्यमेवेति न तत्र मानान्तरापत्तिरित्याह । **नन्वेतदिति** । करभावृत्तिधर्मवत्त्वं गवि तद्वैधर्म्यं, तच्च भाव एवेति नानुपलब्धिगम्यमित्याह । **इत** इति ।

नन्विदमप्युपमानमेव । तथाहि, सप्रतियोगिकपदार्थज्ञानेन तत्प्रतियोगिकपदार्थज्ञानमुपमानम् । अन्यथैतद्विधर्मा स एतस्माद्दीर्घ इति प्रतीतिः कुतः ? न तावदनुमानात् । विशेष्यासन्निकर्षे तद्गतैतन्निष्ठसादृश्यप्रतियोगित्वादेर्लिङ्गस्याज्ञानात् । नाप्यर्थापत्तेः, तस्या व्यतिरेक्यनुमानरूपत्वात् । न च तत्प्रतियोगिकैतन्निष्ठसादृश्यादौ भासमाने समानसंवित्संवेद्यतया एतत्प्रतियोगिकतन्निष्ठसादृश्यादिरपि भासते इति वाच्यम् । विशेषणविशेष्यप्रतियोगिभेदेन समानसंविद्वेद्यत्वासिद्धेः । एतत्सदृश एतद्विधर्मा स इति तद्विशेष्यकज्ञानानुदयाच । तद्विशेष्यकप्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वात् । न च प्रत्यक्षे विशेष्यसन्निकर्षो हेतुः, न तु यावद्विशेष्यसन्निकर्षो गौरवात् । अन्यथा अतीतानागतव्याप्यविशेष्यकं व्याप्तिप्रत्यक्षं न स्यादिति वाच्यम् । अतीतानागतविशेष्ये सामान्यलक्षणायाः प्रत्यासत्तेः सत्वात् ।

प्रकाशिका ।

**अतीतानागतविशेष्य** इति । यद्यपि गौरवमेतावतापि नापाकृतम् । तथापि तद्विषयकप्रत्यक्षे तदिन्द्रियसन्निकर्षत्वेन कारणत्वमवश्यं वाच्यम् । अन्यथा घटसन्निकर्षमात्रेण घटापटोभयविशेष्यकसमूहालम्बनापत्तेरिति गौरवं प्रामाणिकतया न दूषणमिति भावः ॥ ९ ॥

मकरन्दः ।

**अतीतानागतेति** । यद्यप्येवमपि गौरवं नापाकृतं तथापि प्रमाणिकं तदिति भावः । अन्यथा घटसन्निकर्षात् पटविशेष्यकस्यापि समूहालम्बनस्यापत्तेः । तथा च तत्तद्विशेष्यकप्रत्यक्षे तत्तद्विशेष्यसन्निकर्षो हेतुः, अत एव सामान्यलक्षणाभ्युपगमोऽपीति ॥ ९ ॥

स्यादेतत्। तद्धर्मा इह न सन्तीत्यवगते, अर्थादापद्यते इहाविद्यमानास्तत्र सन्तीति। न हि तद्विधर्मत्वमेतस्योपपद्यते, यद्येतद्विधर्माऽसौ न भवतीति चेत्। एवं तर्हि प्रकृतमप्यर्थापत्तिरेव। न हि तत्सादृश्यविशिष्टत्वं मेतस्य प्रत्यक्षसिद्धमपि तस्यैतत्सादृश्यविशिष्टत्वं विनोपपद्यते ॥

एतेन दृष्टासन्निकृष्टप्रत्यभिज्ञानं व्याख्यातम्। तत्रापि तद्धर्मशालित्वं तस्य स्मरणाभिव्यक्तमनुपपद्यमानं तदिदन्तास्पदस्यैकतां व्यवस्थापयति। तस्मान्नोपमानमधिकमिति ॥ ९ ॥

---

बोधनी।

इतः पुरोवर्तिनः पिण्डाद्व्यावृत्तधर्मयोगोऽपि वैधर्म्यं, तस्य च भावत्वाभावप्रमाणविषयतेति।

उत्तरार्धं व्याचष्टे **स्यादेतत्**-इति। व्यवहितपिण्डवर्त्तिधर्माभाववत्त्वं तत्राविद्यमानधर्मत्वं वा-संनिहितस्य तावत्प्रत्यक्षं, तच्च व्यवहितस्यैतद्धर्माभाववत्त्वेनात्राविद्यमानधर्मवत्त्वेन वा विनानुपपद्यमानं तत्कल्पयतीति न तदर्थं प्रमाणान्तरं मृग्यमिति। तर्हि सादृश्यमप्यर्थापत्तिरेव गमयेत् तुल्यन्यायत्वादित्याह **एवं तर्हि**-इति।

**एतेन** इति। पूर्वं मथुरायां पश्चादुज्जयिन्यां दृष्टस्य पुनः प्रत्यभिज्ञानसमये चाथ संनिकृष्टस्य यत्प्रत्यभिज्ञानं य एव मथुरायां दृष्टः स एवोज्जयिन्यां दृष्ट इति तदप्यर्थापत्तिरिति व्याख्यातं कथमिति तत्राह **तत्रापि**-इति। मथुरायां दृष्टपुरुषवर्त्तिस्वरवर्णादिशालित्वमुज्जयिनीदृष्टस्येदानीं स्मर्यमाणमुभयत्रापि दृष्टस्यैकतामन्तरेणानुपपद्यमानं तां कल्पयतीति। यद्वा, दृष्टस्यासंनिकृष्टस्य चैकगोचरं यत्प्रत्यभिज्ञानमयं स इति विपरीतप्रत्यभिज्ञानं तदप्यर्थापत्तिरेव, तत्र संनिकृष्टस्य पिण्डस्य ये धर्मा उपलभ्यन्ते तद्धर्मशालित्वमसंनिकृष्टस्य स्मर्यमाणं तस्य संनिकृष्टस्य चैकतामन्तरेणानुपपद्यमानं तयोस्तां कल्पयति, इदन्ताश्रय एव तत्ताश्रय इति व्यवस्थापयति। न हि तत् प्रत्यक्षफलम्, अयं स इत्यसंनिकृष्टपर्यवसायित्वात्तेन चेन्द्रियसंनिकर्षाभावादिति। तस्मात्सामान्यरूपसादृश्यविषयत्वेऽप्युपमानस्य प्रमाणान्तरत्वाभावात् सिद्धं विषयानतिरेकादबाधकत्वमिति उपसंहरति **तस्मात्**-इति। ॥ ९ ॥

प्रकाशः।

अथ गवयसादृश्यं गवि गवयगतशृङ्गित्वादिधर्मवत्त्वं, तच्च गवये गोसादृश्ये भासमाने गवि भासत एव। सामान्यस्यैकत्वेनेन्द्रियसन्निकर्षादिति चेत्। न। तथापि गोविशेष्यकगवयगतशृङ्गित्वादिज्ञानस्य गोरसन्निकर्षेणेन्द्रियाजन्यत्वात्।

मैवम्। अन्योन्यसदृशवस्तुप्रत्यक्षेण जानतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गौर्गवयसदृशः तत्सादृश्यप्रतियोगित्वात् यथा भ्राता भगिनी गवयगतसादृश्यप्रतियोगित्वञ्च गोर्गवयगतसादृश्यवित्तिवेद्यमेव। सादृश्ये गोः प्रतियोगित्वेनैव ज्ञानात्। यत्सादृश्यं सामान्यतो व्याप्तिग्रहञ्च विना गवयसदृशो गौरिति फलासिद्धेः। ताद्रूप्येण व्याप्तिग्रहेऽस्माकं व्यतिरेकी, परेषामर्थापत्तिरित्यन्यदेतत्।

ननु प्रत्यभिज्ञायमानस्य पूर्वापरकालमध्यावस्थानं नाध्यक्षगम्यम्। मध्ये इन्द्रियासम्बन्धात्। न लिङ्गादिगम्यम्। तदज्ञानेऽपि ज्ञानात्। तदिदमेवोपमानपरिच्छेद्यं स्यादित्यत आह। **एतेनेति**। साधर्म्यवैधर्म्ययोरर्थापत्त्यन्तर्भावेनेत्यर्थः। दृष्टश्च तन्मध्येऽसन्निकृष्टं चेति तत् तथा, तस्य प्रत्यभिज्ञानम्। तदेव स्फुटयति। **तत्रापीति**। तत्तेदन्ताविशिष्टाभेदो मध्यासन्निकृष्टस्य मध्यसत्त्वं विना अनुपपन्नो मध्यस्य सत्त्वं कल्पयतीत्यर्थः ॥ ९ ॥

एवं प्राप्ते अभिधीयते—

**सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ॥**
**प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥**

यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य गोसदृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयमसौ गवयशब्दवाच्य इति भवति मतिः। सेयं न तावद् वाक्यमात्रफलम्, अनुपलब्धपिण्डस्यापि प्रसङ्गात्। नापि प्रत्यक्षफलम्, अश्रुतवाक्यस्यापि प्रसङ्गात्। नापि समाहारफलम्, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात्। वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसम्बन्धेनापीन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः। फलसमाहारे तु तदन्तर्भावे अनुमानादेरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव?, अन्तर्भावे वा कियती सीमा?। तत्तदसाधारणेन्द्रियादिसाहित्यम्।

---

बोधनी।

अथ सिद्धान्ती प्रमाणान्तरत्वमङ्गीकृत्योपमानस्य नियतविषयत्वादबाधकत्वं वक्तुमुपक्रमते **एवम्**—इति। गवयादिसंज्ञायाः संज्ञिना गवयादिना सह संज्ञासंज्ञिलक्षणस्य संबन्धस्य प्रमितिरुपमानस्यैव फलं प्रत्यभिज्ञानादिना तदसिद्धेरिति संज्ञासंज्ञिसंबन्धप्रतीतिस्तावदस्तीत्याह **यथा गौ**रिति। तस्याः प्रत्यक्षादिभिरसाध्यत्वमाह **सेयम्**—इति। ननु नगरस्थस्य गवये नेन्द्रियसन्निकर्ष इति भिन्नकालतया तयोः स्वरूपतः समाहाराभावेऽपीन्द्रियसंनिकर्षसमये वाक्यतदर्थयोः स्मर्यमाणत्वेन समाहारसंभवात्तत्फलमेवास्त्वित्यत्राह **वाक्यतदर्थयो**रिति। न ह्यसत्येवेन्द्रियसंबन्धे उत्पद्यमानं प्रत्यक्षेऽन्तर्भवतीति। ननु सादृश्योपलम्भे तावदुत्पद्यते, तच्च प्रत्यक्षफलं, तेन वाक्यफलस्य वाक्यार्थस्मरणस्य प्रत्यक्षफलस्य सादृश्यज्ञानस्य च समाहारादुत्पद्यमानः समयपरिच्छेदस्तयोरेवान्तर्भवेदित्यत्राह **फलसमाहार** इति। अनुमेयादिज्ञानमपि हि प्रत्यक्षफललिङ्गादिज्ञानहेतुकमेवेति। ननु यदि समयं परिच्छिन्दतः सादृश्यज्ञानस्य समाहारादुत्पद्यमानप्रत्यक्षफलस्यापि प्रत्यक्षेऽनन्तर्भावः, तर्हि विकल्पजनकं निर्विकल्पकमपि प्रत्यक्षे नान्तर्भवेत् अनुमानादिकमपि तथा स्यादिति नियमहेतुर्वाच्य इति पृच्छति **तत्किम्** इति। नियमहेतुमासाक्षात्कारादिरूपस्य यस्य ज्ञानविशेषस्य यदसाधारणं

प्रकाशः।

उपमानफलं विदुरित्यनयोर्मध्ये, इतिरध्याहार्य इति **सम्प्रदायविदः**। ननु प्रत्येकं व्यभिचारेऽपि समुदितयोस्तयोः फलं स्यादित्यत आह **नापीति** ॥ नन्विन्द्रियसम्बद्धे गवये वाक्यतदर्थस्मृतौ च सत्यां प्रमाणसमाहारः स्यादित्यत आह **वाक्येति** ॥ गवयगतगोसादृश्यावेदने समयपरिच्छेदो न भवत्येवेत्यर्थः। फलसमाहारमाशङ्क्य निराकरोति **फलेति** ॥ प्रत्यक्षफलं हि प्रायशो लिङ्गपरामर्शोऽनुमितिकरणम्, श्रोत्रानुभवजनितपदज्ञानञ्च वाक्यार्थप्रमायां प्रत्यक्षं स्यादित्यर्थः। ननु तत्फलस्य तदनन्तर्भावे विकल्पोऽप्यालोचनफलं प्रत्यक्षं न स्यात्, अन्तर्भावे वा लिङ्गसादृश्याध्यक्षयोः कः प्रद्वेष इति पृच्छति **तत् किमिति** ॥ उत्तरं—**तत्तदिति** ॥ यत्र व्यापारिण इन्द्रि-

प्रकाशिका।

**फल**मित्यस्य प्रथमान्तत्वे **विदु**रिति कर्त्राख्यातानुपपत्तिः, द्वितीयान्तत्वे च **परिच्छेद** इत्यनेन प्रथमान्तत्वेन सामानाधिकरण्यानुपपत्तिरत आह **इतिरि**ति। तथा चेति विदुरित्यन्वये इतिकिमित्याकाङ्क्षायां शुद्धप्रातिपदिकोपस्थितस्य परिच्छेदः, फलमित्यस्यान्वय इति भावः। **सम्प्रदाय विद** इति। इदमरुचिविभावनम्, तद्वीजन्तु फलमिति द्वितीयान्तमेव, किन्तदिति शुद्धप्रातिपदिकार्थाकाङ्क्षायां परिच्छेद इत्यर्थेति वाक्यार्थ एव वा कर्म्मेति ॥ १० ॥

**अस्ति तर्हि सादृश्यादिज्ञानकाले विस्फारितस्य चक्षुषो व्यापारः। न। उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यतदर्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तेः॥ १०॥**

**ननु च वाक्यदेवानेन समयः परिच्छिन्नः—गोसदृशस्य गवयशब्दः संज्ञेति, केवलमिदानीं प्रत्यभिजानात्ययमसाविति। प्रयोगाद्वाऽनुमितः—यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते स तस्य वाचको यथा गोशब्द एव गोः, प्रयुज्यते चायं गोसदृशे, इति किमुपमानेनेति। न—**

बोधनी।

कारणमिन्द्रियादि तदनुवृत्तौ जायमानं ज्ञानं तस्य प्रमाणस्य फलं भवति, तन्निवृत्तौ तु ततो बहिर्भवतीति। यदीन्द्रियव्यापारानुवृत्तावुत्पद्यमानं प्रत्यक्षफलं तर्हि समयं परिच्छिन्दतः सादृश्यज्ञानस्य कालेऽप्यस्ति चक्षुर्व्यापार इति समयपरिच्छेदोऽपि प्रत्यक्षफलं स्यादित्याह **अस्ति तर्हि** इति। **न**—इति। न खलु तत्र सन्नपि चक्षुर्व्यापारः कारणं व्यभिचाराद्—भवति हि वाक्यार्थस्मरणाभावेन केवलं सादृश्यविशिष्टतया पिण्डमनुभूतवतः पश्चादुपरतेन्द्रियव्यापारस्यैव वाक्यार्थस्मरणे सति गोसदृशपिण्डस्मरणादेव समयपरिच्छेदः, यो गवयपदवाच्यः स गोसदृश इति॥ १०॥

अत्र जरन्नैयायिक आह **ननु** इति। नगरस्थेनैव वाक्यमात्रात्समयः परिच्छिन्नः, वनस्थेन तु केवलं प्रत्यभिज्ञायते सोऽयं गवयशब्दवाच्य इति, तेन शब्दप्रमाणक एव समय इति। आधुनिकस्त्वाह **प्रयोगाद्वा** इति। गोसदृशो गवय इत्यत्र गोसदृशे वस्तुनि गवयशब्दप्रयोगमुपलभ्य तस्मादेव हेतोर्गोसदृशस्य गवयवाच्यत्वमनुमीयत इति। तदेव दर्शयति **यो यत्र** इति। गौणलाक्षणिकप्रयोगे व्यभिचारो मा भूदित्युक्तं **असति वृत्त्यन्तरे** इति। पक्षद्वयमप्युपसंहरति **तत् किम्**(१) इति।

प्रकाशः।

यत्सन्निकर्षादेरवस्थितिस्तत्र तत्फलस्यावान्तरव्यापारता, यत्र तु तस्यानवस्थितिस्तत्र प्रमाणबहिर्भूतत्वमित्यर्थः। इममेव विशेषमादाय शङ्कते **अस्तीति**॥ उक्तयुक्त्या परिहरति **उपलब्धेति**॥ इन्द्रियव्यापारोपरतौ लिङ्गशब्दानुसन्धानस्येव वाक्यार्थस्मृतिसचिवस्य सादृश्यज्ञानस्यापि मानान्तरत्वादित्यर्थः॥ १०॥

निमित्तम्—प्रवृत्तिनिमित्तम्(२)॥ **समय** इति॥ गवयत्वप्रवृत्तिनिमित्तकगवयपदवाच्योऽयं पिण्ड इत्याकार इत्यर्थः। गवयपदस्याग्रहीतसमयत्वेनाप्रत्यायकत्वाद्गोसदृशपदस्य च सादृश्यमात्रबोधकत्वादिति भावः॥

**अयमसाविति**॥ यो गोसदृशो धर्मी गवयशब्दवाच्यतयाऽवगतस्तं साक्षात्करोमीति प्रत्यभिजानातीत्यर्थः॥

प्रकाशिका।

कर्मणि सङ्केतः पूर्ववाक्यादेव गृहीत इत्यत आह। **गवयत्वप्रवृत्तनिमित्तकेति**। ननु गवयपदादेव गवयत्वप्रतीतिरस्त्वित्यत आह **गवयपदस्येति**। **तर्केति** लाघवेत्यर्थः॥ १०॥

मकरन्दः।

धर्मिणि समयस्य पूर्वं गृहीतत्वादाह **गवयत्वप्रवृत्तिनिमित्तकेति**। ननु गवयपदादेव गवयत्वं प्रतीत्य तद्विशिष्टे समयं ग्रहीष्यत्यत आह **गवयपदस्येति**।

(१) एतन्मतेनात्र 'तत्किमुपमानेति' मूले पाठो द्रष्टव्यः।
(२) एतद्व्याख्यानमूलं 'निमित्त'मिति पदं मूले नोपलभ्यत इति द्रष्टव्यम्।

**साद्दश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ॥**

**समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥ ११ ॥**

न हि गवयशब्दस्य सादृश्यं प्रवृत्तिनिमित्तम् , अप्रतीतगूनामव्यवहारप्रसङ्गात् । न चोभयमपि निमित्तम् , स्वयं प्रतीतसमयसंक्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः । गवयत्वे ह्ययं व्युत्पन्नो वृद्धव्यवहारान्न सादृश्ये । कथमेतन्निर्धारणीयमिति चेत् । वस्तुगतिस्तावदियं, तदापाततः सन्देहेऽपि न फलसिद्धिः । गन्धवत्त्वमिव पृथिवीत्वस्य, गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणमिदमेव वा निमित्तमित्यनिर्धारणात् ॥ ११ ॥

स्यादेतत् । पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिरिदानीन्तु तस्मिन्नुपलब्धे तदेव

---

बोधनी ।

**सादृश्यस्य** इति । प्रतीते हि प्रवृत्तिनिमित्ते संबन्धग्रहस्तदत्र वाक्ये शक्यग्रहः प्रतीतं सादृश्यंच निमित्तं, निमित्तितु गवयत्वं न प्रतीतं, तस्मान्न तावद्वाक्यमात्रेण सम्बन्धग्रहः, नाप्यनुमानेन तद्वाचकत्वज्ञानमन्तरेणासति वृत्त्यन्तर इति विशेषणस्यासिद्धेरिति ।

**नहि** इति । यदि गोसादृश्यं निमित्तं स्यात् तदा नित्यवनवासिनां गवयपदेन व्यवहारो न स्यात् , तेषां गोरप्रतीतौ तत्प्रतियोगिकस्य सादृश्यस्य गवयेऽवगन्तुमशक्तेरिति । तर्हि तेषां गवयत्वं नागरिकाणां तु गोसादृश्यमित्युभयं विकल्पेन निमित्तमस्त्वित्यत आह **न चोभयम्** इति । तदा हि कथमारण्यकस्तेनाप्रतीतं गोसादृश्यविषयं समयं परस्मै प्रतिपादयितुमतिदेशवाक्यं प्रयुञ्जीतेति । **कथमेतत्** इति । गवयत्व एव न सादृश्येऽपीत्येतत्त्राप्रतीतगुत्वेन तस्य सादृश्ये व्युत्पत्तिर्न संभवतीत्युत्तरमुक्तप्रायमेवेति मन्वानोऽन्यथा परिहरति **वस्तुगति**रिति । ननु वस्तुगतिरित्येतावता न तत्प्रतिपादनमन्तरेण निर्धारणा सिध्यतीत्यत्राह **तदापाततः** इति । तत्रापाततः प्रतिपादनं यावन्निमित्तसंदेहेऽपि न पराभिमतस्य वाक्यादेव समयपरिच्छेद इत्यस्य फलस्य सिद्धिरिति कुत इत्यत आह **गन्धवत्त्वम्** इति । यथा हि गन्धवती पृथिवीत्यत्र गन्धवत्त्वं पृथिवीशब्दप्रवृत्तिनिमित्तस्य पृथिवीत्वस्योपलक्षणं, तथा गोसादृश्यं निमित्तस्योपलक्षणम् । यद्वा इदं सादृश्यमेव निमित्तमिति निर्धारणाधीनश्च वाक्यादेव संबन्धग्रह इति न पराभिमतसिद्धिरिति ॥ ११ ॥

**स्यादेतत्** इति । मा भूत् सादृश्यं निमित्तं मा च भून्निमित्तस्य गवयत्वस्याप्रतीतेः पूर्वं सम-

प्रकाशः ।

**अप्रतीतेति** । गवयत्वस्य जातितया लघुत्वात्, सादृश्यस्य चोपाधितया गुरुत्वादिति भावः । उभयं समुचितं निमित्तं विकल्पो वा ? । आद्योऽप्रतीतगूनामव्यवहारापातादेव निरस्तः । द्वितीये त्वाह **स्वयमिति** । स्वयं यत्र प्रवृत्तिनिमित्ते व्युत्पत्तिर्गृहीता, तत्र परस्यापि सा भवत्विति धियाऽऽरण्यको वाक्यं प्रयुङ्क्ते, तेन च सा गवयत्व एव ज्ञातेति तदेव प्रवृत्तिनिमित्तं बोधयेदित्यर्थः । **वस्तुगतिरिति** । तर्कादिपुरस्कारादित्यर्थः । **सन्देहेऽपीति** । गोसादृश्यं प्रवृत्तिनिमित्तं तदुपलक्षितं वा धर्मान्तरमिति संशये सति न प्रवृत्तिनिमित्तविशेषनिश्चय इत्यर्थः । सन्देहाकारमाह **गन्धवत्त्वमिवेति** ॥ ११ ॥

**पूर्वमिति** । गवयपिण्डदर्शनादित्यर्थः । फलसिद्धिः प्रवृत्तिनिमित्तविशेषनिश्चय इत्यर्थः । **इदा-**

प्रकाशिका ।

पूर्वत्वस्य किञ्चिन्निरूप्यत्वमित्यत आह **गवयपिण्डेति** । लक्षणयेति वाक्य एव लक्षणेति

मकरन्दः ।

**तर्कादीति** । लाघवपुरस्कारादित्यर्थः ॥ ११ ॥

वाक्यं स्मृतिसमारूढं फलिष्यति, अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे । न च वाच्यं–'वाक्येन स्वार्थस्य प्रागेव बोधितत्वात् प्रागेव पर्यवसितमिति' । गोसादृश्यस्योपलक्षणनिमित्तत्वयोरन्यतरत्र तात्पर्ये सन्देहात्, इदानीन्तु गवयत्वेऽवगते तर्कपुरस्कारात् सादृश्यस्योपलक्षणतायां व्यवस्थितायां, गङ्गायां घोष इतिवदन्वयप्रतिपत्तिरिति चेत्, न–

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ॥
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

गोसदृशो गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात् । रक्तारक्तसन्देहेऽपि घटो भवति इति वाक्यवत्, अन्यथा वाक्यभेददोषात् । न च गङ्गायां

---

बोधनी ।

ग्रहस्तथापि पश्चाद्वनगतस्य प्रवृत्तिनिमित्तोपलम्भे सति तत्सहकृतप्रागनुभूतमतिदेशवाक्यमेव स्मृतिस्थं तत्फलिष्यति संबन्धग्रहं, यथा ह्यध्ययनसमये पाठमात्रगृहीतो वेदः पश्चादङ्गोपाङ्गसंस्कृतः तस्य वाक्यार्थज्ञानं प्रसूत इति । ननु युक्तं तत्राङ्गाध्ययनात्पूर्वं वाक्यार्थप्रतिपादनाय गृहीतस्य वेदस्यापर्यवसानादङ्गादिसहकृतस्य तस्यैव धर्मादिज्ञानहेतुत्वम्, अत्र त्वतिदेशवाक्यस्य स्वार्थप्रतिपादनेन पर्यवसानादयुक्तः समयपरिच्छेदहेतुभाव इत्याशङ्क्याह **न च वाच्यम्** इति । अतिदेशवाक्यमपि न तावत्पर्यवस्यति गोसदृशपदस्य तात्पर्यानवधारणेनार्थानिश्चयात्पदार्थपूर्वकत्वाच्च वाक्यार्थस्य गवयत्वावगतौ तु तर्कं पुरस्कृत्य गोसदृशपदस्योपलक्षणपरत्वसिद्धौ च गवयत्वविषयं समयवाक्यमेव प्रतिपादयति । यथा गङ्गायां घोष इत्यत्र मुख्यार्थबाधेन गङ्गापदस्य तीरोपलक्षणत्वस्थितौ पश्चादन्वयप्रतिपादनम् । तर्कश्चात्र–सादृश्यस्य गवयत्वातिरेकिणः निमित्तत्वे क्लृप्तकल्प्यविरोधः, सादृश्यमात्रनिमित्तत्वेऽतिप्रसङ्गः, सादृश्यस्य निमित्तत्वे विशेषणस्य गोरप्यभिधानेऽशक्तिकल्पनागौरवमिति वक्ष्यते । तस्माच्छब्द एव समये प्रमाणमिति ।

**न, श्रुतान्वयात्** इति । तदर्थानामाकाङ्क्षासंनिधियोग्यतावशेन परस्परमन्वयादेव पर्यवसितमतिदेशवाक्यं नान्यत्पक्षोपनीतं गवयत्वादिकमाकाङ्क्षति वाक्यार्थप्रतिपादनायेति शेषः । गङ्गायां घोष इत्यत्र तु गङ्गापदस्य मुख्यार्थेन पदार्थान्तरागमनन्वयात् मुख्यार्थलक्षितेन तु कूलेन सह संगतिरिति व्याचष्टे **गोसदृश** इति । कोऽसौ गोसदृश इति विशेषसंदेहेऽपि यो गोसदृशः स गवयशब्दवाच्य इति सामान्येनैवान्वयसिद्धेर्न मानान्तरोपमेयविशेषाकाङ्क्षा वाक्यस्य, न हि पटो भवतीति वाक्यं रक्तत्वादिनिश्चयादृते न पर्यवस्यतीति, यदि हि वाक्यमेव सामान्येनान्वयं प्रतिपाद्य विशेषा-

प्रकाशः ।

**नी**मिति । गवयत्वविशिष्टपिण्डप्रत्यक्षकाल इत्यर्थः । **तर्के**ति । प्रागुक्ततर्काद्गवयत्वे प्रवृत्तिनिमित्ते तात्पर्यनिश्चयाद् गोसदृशपदं लक्षणया गवयत्वबोधकमित्यर्थः ।

उपलक्षणत्वनिमित्तत्वसन्देहेऽपि यो गोसदृशः स गवयपदवाच्य इति सामाधिकरण्यरूपयथाश्रुतपदार्थान्वयेनैव वाक्ये पर्यवसिते पश्चाल्लक्षणा न कल्प्यते, यत्र त्वयोग्यतया मुख्यार्थान्वयाऽसम्भवः, तत्रैव सेत्याह **श्रुतेति** ।

**मानान्तरे**ति । मानान्तरं प्रत्यक्षं, तेनोपनीतं दर्शितमित्यर्थः । **अन्यथे**ति । यदि पर्यवसि-

प्रकाशिका ।

मतेनेदमुपपादनीयम् । वस्तुतो गम्भीरायां नद्यामितिवदेकपद एव लक्षणा पदान्तरन्तु नियामक-

मकरन्दः ।

पूर्वत्वस्य किञ्चिन्निरूप्यत्वादाह **गवयपिण्डे**ति । **गोसदृशपद**मिति । यद्यप्येतन्न पदं किन्तु

घोष इतिवत् पदार्था एवान्वयायोग्याः, येन प्रमाणान्तरोपनीतेनाऽन्वयः स्यात् । प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थः स्यात् । तस्माद्यथा गवयशब्दः कस्यचिद्वाचकः शिष्टप्रयोगादिति सामान्यतो निश्चितेऽपि विशेषे मानान्तरापेक्षा, तथा गोसदृशस्य गवयशब्दो वाचक इति वाक्यान्निश्चितेऽपि सामान्ये विशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति ॥

अस्त्वनुमानम्—तथाहि-गवयशब्दो गवयस्य वाचकः, असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वात्, गवि गोशब्दवदिति-चेन्न, असिद्धेः । न ह्यसति

बोधनी ।

वगत्युत्तरकालं तदन्वयमपि प्रतिपादयेत् तदा वाक्यभेदः स्यादित्याह अन्यथा इति । गङ्गायां घोष इत्यत्र मुख्यार्थस्यान्वयायोग्यत्वात्तीरलक्षणयैवान्वयप्रतीतिः, नैवमत्र सामान्यस्यैवान्वययोग्यत्वादिति विशेष इत्याह न च इति । ननु पर्यवस्यतां नाम वाक्यं, तथापि तत्प्रतिपादितार्थबलायत्तः समयपरिच्छेदस्तत्स्यैव वाक्यस्यार्थः स्यादित्यत आह अथ इति । यथा हि भवतः साधुत्वादेव गवयपदस्य सामान्यतोऽर्थवत्त्वे सिद्धेऽपि विशेषज्ञानार्थं वाक्यार्थापेक्षा तथा गोसदृशस्य वाचक इति वाक्यावगतेऽपि तद्विशेषार्थं मानान्तरमित्युपसंहरति तस्मात्-इति ।

अस्तु तर्ह्यनुमानं प्रमाणं संज्ञासंज्ञिसम्बन्धे इत्याह अस्तु इति । नासिद्धेरिति । विशेषणासिद्धिमेवाह न हि इति । संगतिग्रहे हि सति मुख्यवृत्त्यवगमेन वृत्त्यन्तरासत्त्वं ज्ञातुं शक्यते,

प्रकाशः ।

तेऽपि वाक्ये तत्तदाकांक्षायां तत्तद्वाक्याऽर्थज्ञानं स्यात्तदा वाक्यभेद इत्यर्थः । यत्र तु लक्षणा, तत्र नैवं वाक्यपर्यवसानमित्याह न चेति । ननु प्रतीत्यपर्यवसानाभावेऽपि प्रतीताऽपर्यवसानाद् येन विनाऽनुपपत्तिः, सोऽपि वाक्यार्थः स्यादित्याह प्रतीतेति । यदि कल्पनागौरवाद् गोसादृश्यस्य प्रवृत्तिनिमित्तत्वानुपपत्तौ गवयत्वस्य तथात्वकल्पनाऽपि वाक्यार्थः स्यात्, तदा दिवाऽभोजिनः पीनत्वानुपपत्त्या रात्रिभोजनकल्पनापि वाक्याऽर्थः स्यादित्यर्थः ।

तस्मादिति । ननु सामानाधिकरण्यमात्रेणान्वयोपपत्तावपि तात्पर्यानुपपत्त्या यष्टीः प्रवेशयेतिवल्लक्षणाऽस्तु, गवयपदव्युत्पित्सुं प्रति व्युत्पत्तये हि वाक्यमाप्तेनोक्तम्, तच्च न प्रवृत्तिनिमित्तप्रतिपादनं विना, न च गोसादृश्यं तथेति तात्पर्यतो गोसदृशपदेन गोसादृश्यसमानाधिकरणं गवयत्वमुपलक्षितमिति कल्प्यते । न च यथा धूमोऽस्तीत्यत्राग्नौ तात्पर्यमनुमानेन निर्वहतीति न लक्षणा, तथाऽत्र मानान्तरमस्ति, येन तन्निर्वाह्यम् । उपमानस्यासिद्धेः । न च वाक्ये न लक्षणा, तस्या वृत्तित्वेन शक्तिवच्छब्दधर्मत्वादिति वाच्यम् । एकपद एव लक्षणा, पदान्तरं तन्नियामकमित्युपगमात् । न च गोसदृशपदस्य गवयत्वे साक्षात्तात्पर्यग्रह एव लक्षणा, स च मानाभावान्नास्ति, अन्यथा धूमोऽस्तीत्यत्रापि सा स्यादिति वाच्यम् । उपस्थापकान्तराभावे सति तत्तात्पर्यस्यैव साक्षात्तात्पर्यरूपत्वात् ।

अत्राहुः । यत्र प्रवृत्तिनिमित्तविशेषबोधने न तात्पर्यं, किन्तु यो गोसदृशः स गवयशब्दवाच्य इति स्वरूपाख्यानमात्रं तत्राप्युक्तसामग्रीतः प्रवृत्तिनिमित्तविशेषपरिच्छेदः । न च तत्र तात्पर्यं, यदनुपपत्तिर्लक्षणाबीजं स्यात् । यत्र वा करभनिन्दातात्पर्यकं धिक्करभमित्यादिकं, तत्रापि तादृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयङ्करभशब्दवाच्य इति धीः । न च प्रवृत्तिनिमित्तविशेषे तत्र तात्पर्यम् ।

प्रकाशिका ।

मात्रमित्येवमित्याकार एवाग्रे व्यक्तम् । शक्यसम्बन्धमाह गोसादृश्यसमानाधिकरणमिति ।

मकरन्दः ।

वाक्यं, तत्र च न लक्षणा तस्याः पदधर्मत्वात्, तथाप्येकपद एव लक्षणा पदान्तरञ्च नियामकमिति

वृत्त्यन्तरे तद्विषयतया प्रयोगः सङ्गतिमविज्ञाय ज्ञातुं शक्यते । सामानाधिकरण्यादिति चेन्न । पिण्डमात्रे सिद्धसाधनात्, निमित्ते चासिद्धेः, सादृश्यस्यानिमित्तत्वादित्युक्तम् ॥

ननु व्याप्तिपरमिदं वाक्यं स्यात्-यो गोसदृशः स गवयपदार्थ-इति, तथा च वाक्यादवगतप्रतिबन्धोऽनुमिनुयात्-अयमसौ गवयो गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदिति । न । विपर्ययात्, न हि गोसदृशं बुद्धावारोप्यानेन पृष्टः स किंशब्दवाच्य इति, किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति । तथा

---

बोधनी ।

तदसत्त्वविशेषिताच्च च प्रयोगात्सङ्गतिग्रह इतीतरेतराश्रयप्रसङ्ग इति । अस्तु तर्हि गोसदृशपदेन सामानाधिकरण्यात् गवयपदस्य गोसदृशविषयत्वसिद्धेर्गवयत्वस्य तत्सदृशत्वात्तद्वाचकत्वसिद्धिरित्याह **सामानाधिकरण्यात्** इति । **न** इति । सामानाधिकरण्येन गोसदृशपिण्डमात्रविषयताप्रयोगः स्यात्, तेन च तन्मात्रवाचकत्वमेव सिध्येत् नाभिमतं गवयत्ववाचकत्वमिति । न च निमित्तेन च गवयत्वेन सामानाधिकरण्यं सिद्धं गवयत्वस्याप्रतीतेः, प्रतीतेन तु सादृश्येन सामानाधिकरण्यसिद्धावपि नास्त्युपयोगस्तस्यानिमित्तत्वादित्याह **निमित्ते** इति ।

**नन्विति** । गवयपदवाच्यं पृष्टः साक्षात्तत्प्रतिपादनाशक्तेः तदनुमानसामग्रीं व्याप्तिमेवाचष्टे यो

प्रकाशः ।

**अस्मत्पितृचरणास्तु,** सर्वत्रान्वयानुपपत्तिरेव लक्षणाबीजम् । यष्टीः प्रवेशयेत्यत्रापि प्रकरणादिना भोजनादिप्रयोजनकप्रवेशनस्य ज्ञानात् तादृशे च प्रवेशने यष्ट्यादेरनन्वयात्, तात्पर्यग्रहार्थमपि प्रकरणादेरवश्योपजीव्यत्वादित्याहुः ।

**मानान्तरमिति** । तर्कः प्रमाणसहकारी, न च तस्यां दशायां मानान्तरमस्तीत्युपमानं तर्कोपकार्यमास्थेयमित्यर्थः । **असिद्धेरिति** । वस्तुतो गवयव्यक्तिवाचकत्वसिद्धावपि गवयत्वस्य प्रवृत्तिनिमित्तत्वं न सिद्ध्यतीति भावः । गवयसामानाधिकरण्येन गोसदृशो गवय इतिवाक्यप्रतिपादनाद्गवयवाचकत्वं गवयपदस्य ज्ञायते इत्याह **सामानाधिकरण्यादिति** । गवयसामानाधिकरण्येनेत्यत्र यदि पिण्डसामानाधिकरण्यं विवक्षितं, तदा पिण्डवाचकत्वसिद्धावपि गवयत्वविशिष्टवाच्यत्वासिद्धेर्नोपमानपरिच्छेद्यस्य मानान्तरात् प्रतीतिरित्याह **पिण्डेति** । गवयत्वजातिसामानाधिकरण्यं तु मानाभावादसिद्धमित्याह **निमित्ते चेति** ॥

प्रकाशिका ।

**सर्वत्रान्वयेति** । यद्यप्येवमपि प्रकृते लक्षणा स्यादेव प्रकरणसाचिव्येनैव प्रवृत्तिनिमित्तविशिष्टपरत्वनिश्चयात् तस्य धर्मिमात्रेऽनन्वयात्, तथापि तात्पर्यानुपपत्त्या लक्षणेत्येतावन्निराकरणपरोऽयं ग्रन्थः । बाधकन्तु लक्षणायां तादृशप्रकरणाद्यभावेऽपि गवयत्वप्रवृत्तिनिमित्तत्वपरिच्छेद इत्येवेति स्मर्तव्यम् । **असिद्धिरिति,** मूलं विशिष्टस्य हेतोरिति शेषः । अत एवाग्रे विशेष्यसिद्धये **सामानाधिकरण्यादिति** मूलम् । **वस्तुत** इति । गवयत्वविशिष्टवाचकत्वे च साध्ये साध्याप्रसिद्धिरिति भावः । **गवयवाचकत्वमिति** । गवये प्रयुज्यमानत्वमित्यर्थः । एवमग्रेऽपि वाचकत्वपदं प्रयुज्यमानत्वपरम् । केचित्तु सामानाधिकरण्यादिति मूलं न पूर्वहेतोर्विशेष्यसिद्धिपरं किन्तु गवयपदस्य गवयत्ववाचकत्वे साध्ये हेत्वन्तरोपदर्शनपरमेवेति यथाश्रुतप्रकाश एव सम्यगित्याहुः । **पिण्डसामानाधिकरण्यमिति** । तादृशहेतौ गवयत्वविशिष्टवाचकत्वे साध्ये द्रव्यं प्रमेयमिति वाक्ये

मकरन्दः ।

भावः । वाक्येऽपि लक्षणेतिमतेन पदमिह वाक्यमेवोक्तमित्यन्ये । शक्यसम्बन्धमाह गोसादृश्यसमानाधिकरणमिति । **सर्वत्रान्वयेति** । यद्यप्येवमपि प्रकृते लक्षणा स्यादेव, उक्तप्रकरणादिना प्रवृत्तिनिमित्तवाच्यत्वज्ञानात्, तस्य च धर्मिमात्रेऽनन्वयात्, तथापि तात्पर्यानुपपत्त्या लक्षणेति परोक्तनिराकरणमात्रपरोऽयं ग्रन्थ इति प्रतिभाति । **यदीति** । उद्देश्यस्य व्याप्यत्वं विधेयस्य

च यद्योगप्राथम्यास्यां तस्यैव व्याप्यत्वं, ततः किं तेन ? प्रकृतानुपयोगात् ।

अथ किंलक्षणकोऽसाविति प्रश्नार्थः । तदा व्यतिरेकपरं स्यात्, लक्षणस्य तथाभावात् । तथा च गोसदृशो गवय इत्यस्यार्थो यो गवय इति न व्यवह्रियते नासौ गोसदृश इति । एवञ्च प्रयोक्तव्यम्—अयमसौ गवय इति व्यवहर्त्तव्यः गोसदृशत्वात्, यस्तु न तथा, नासौ गोसदृशो यथा हस्ती । न च हस्त्याऽऽदीनां विपक्षत्वे प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधारणत्वात्, कतिपयाव्यवहारस्य चानैकान्तिकत्वात् ॥

---

बोधनी ।

गोसदृशः स गवयपदवाच्य इति, ततः श्रोतुरनुमानप्रवृत्तेर्नावकाशः प्रमाणान्तरस्य इति । **न** इति । व्याप्यव्यापकयोर्विपर्ययादिति । तमेवाह **न हि** इति । अस्तु तर्हि यो गवयपदार्थः स गोसदृश इति वाक्यार्थः, तत्राह **ततः किम्** इति । न हि गवयपदार्थं जिज्ञासमानस्य व्याप्यत्वेन तस्य निर्देश उपयुज्यत इति ।

**अथ** इति । असौ-गवयपदार्थवाच्य इति । **तदा** इति । लक्षणप्रश्ने सत्युत्तरवाक्यं केवलव्यतिरेकिहेतुप्रतिपादनपरं स्यात् लक्षणस्य केवलव्यतिरेकित्वात् । तदुक्तं तार्किकरक्षायां—"असाधारणधर्मत्वात् व्यतिरेक्येव लक्षणम्" इति । विवृतश्च सारसंग्रहेऽस्यार्थ इति । व्यतिरेकिपरत्वे चातिदेशवाक्यस्यायमर्थः स्यादित्याह **तथा च** इति । एवं वाक्यावगतव्यतिरेकव्याप्तिना च नागरिकेण लक्षणज्ञानार्थमेवमनुमानप्रयोगः कार्य इत्याह **एवं च** इति । तथा नाम प्रयुक्तम् इत्यत्राह **न च** इति । येन विपक्षाद्व्यतिरेकः सिध्येदिति । हस्त्यादिषु गवयपदाप्रयोगस्तेषां विपक्षत्वे प्रमाणमित्याशङ्कयाह **सर्वेति** । मा भूत्तर्हि व्यतिरेकिरूपलिङ्गविशेषप्रश्नः, सामान्यप्रश्नस्तु भविष्यति—

प्रकाशः ।

**न हीति** ॥ येन सादृश्यस्य व्याप्यत्वं स्यादिति शेषः । यदि गोसदृशः किंशब्दवाच्य इति पृच्छेत्, तदा तमुद्दिश्य गवयशब्दवाच्य इति विदध्यादपि तु कीदृग्गवय इति पृष्टः, तथा च यो गवयशब्दवाच्यः स गोसदृश इति उत्तरमतो विपरीत एव व्याप्यव्यापकभाव इत्यर्थः । **यद्योगेति** । व्याप्यं यच्छब्देन पूर्वमुद्दिश्यते यथा यो धूमवान् सोऽग्निमानित्यर्थः ॥

यद्योगप्राथम्याभावेऽपि गन्धवती पृथिवीत्यादिवद्व्यतिरेकिरूपलक्षणपरत्वं स्यादित्याह— **अथेति** ॥ हस्त्यादीनां गवयव्यवहाराविषयत्वं तत्राप्रयोगेण निश्चेयं, तत्राह **सर्वेति** । न चैवं व्यवहारसाध्ये सर्वत्र लक्षणोच्छेदः स्यादिति वाच्यम् । यथा पृथिवीत्वेन पृथिवीपदवाच्यत्वं साध्यते, तथा गवयत्वेन निमित्तेन गवयपदवाच्यत्वस्य साधयितुमशक्यत्वात्, गवयत्वस्यातिदेशवाक्यादप्रतीतेः ।

प्रकाशिका ।

प्रमेयपदे व्यभिचार इति धर्म्मिवाचकत्वमात्रं साध्यम्, तथा च तत्सिद्धावपि न विशिष्टवाचकत्वसिद्धिरित्यर्थः । **विदध्यादिति** । तथा सति च विधेयस्य गवयशब्दवाच्यत्वस्य व्यापकता प्रतीयेतेति भावः । **कीदृग् गवय इति** । गवयपदवाच्यः कीदृगित्यर्थः । **तथा चेति** । न तु यो गोसदृशः स गवयपदवाच्य इत्युत्तरम् येन यद्योगादिना गोसादृश्यस्य व्याप्यत्वं प्रतीयेतेति भावः । **पृथिवीत्वेनेति** । पृथिवीत्वनिमित्तकपृथिवीपदवाच्यत्वेनेत्यर्थः । एवमग्रे **गवयत्वेनेत्य**त्रापि धर्म्मिमात्रवा-

मकरन्दः ।

व्यापकत्वं प्रतीयते इति भावः । **कीदृग् गवय** इति । गवयपदवाच्यः कीदृगित्यर्थः । गवयत्वविशिष्टवाच्यत्वमेवमपि न सिद्ध्यतीत्यपि बोध्यम् । **तथा चेति** । न तु यो गोसदृशः स गवयपदवाच्य इत्युत्तरं, येन गोसादृश्यस्य वाच्यत्वं यद्योगादिना लभ्येतेति भावः । **पृथिवीत्वेनेति** । पृथिवीत्वनिमित्तकपृथिवीपदवाच्यत्वमित्यर्थः । **गवयत्वेनेति** । गवयत्वनिमित्तकगवयपदवाच्यत्व-

**ननु लिङ्गमात्रे प्रश्नो भविष्यति – कीदृक् किं लिङ्गमिति । न । न ह्यनेन लिङ्गमविज्ञाय गवयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वाऽवगतं, येन तदर्थः प्रश्नः, स्यात् । प्रवृत्तिनिमित्तविशेषलिङ्गे प्रश्नो, येन निमित्तेन गवयशब्दः प्रवर्त्तते तस्य किं लिङ्गमिति चेन्न । न हि तदवश्यमनुमेयमेवेत्यनेन निश्चितं, यत इदं स्यात् । ज्ञानोपायमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न । अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत् । पर्यायान्तरं वा,—यथा गवयमहं कथं जानीयामिति प्रश्ने, वनं गतो द्रक्ष्यसीति । यथा वा कः पिक इत्यत्र, कोकिल इति । तस्मान्निमित्तभेदप्रश्न एवायं, गवयो गवयपदवाच्यः कीदृक् केन निमित्तेनेति युक्तमुत्पश्यामः ॥**

---

बोधनी ।

केन लिङ्गेन गवयपदार्थं जानीम—इति तदेतदाह **ननु** इति । **न** इति । जिज्ञासितविषयो हि प्रश्नः, यद्यनेन प्रष्ट्रा गवयपदप्रवृत्तिनिमित्तं ज्ञात्वा तस्य लिङ्गमात्रमेवाविज्ञातं जिज्ञास्येत तदा हि तदेव पृष्टं भवेदस्य तु प्रवृत्तिनिमित्तमेवावगतं जिज्ञासमानस्य तदेव प्रष्टुं युक्तमिति । तर्हि प्रवृत्तिनिमित्तमेव जिज्ञासमानस्य तत्र ज्ञानोत्पादाय लिङ्गप्रश्नो भविष्यतीत्याह **प्रवृत्तिनिमित्ते**ति । **न** इति । स्पष्टम् । ननु ज्ञानोपायमात्रे जिज्ञासुरप्राक्षीदितरस्तु लिङ्गस्य तदुपायत्वात् तेनैवोपायेनोदतीतरदित्याह **ज्ञानोपाये**ति । तर्हि ज्ञानोपायत्वाविशेषात्प्रत्यक्षं पर्यायान्तरं वोत्तरयेदित्याह **न** इति । न हि तल्लिङ्गैकवेद्यमिति भावः । गत्यन्तराभावादयमेव प्रश्नवाक्यार्थ इत्याह **तस्मात्** इति । तर्हि गवयत्वमेवोपदिशेत् न गोसादृश्यं तत्राह **तस्य च** इति । किमनेनोपमानस्य सिध्यतीत्यत्राह **तच्च** इति । तद्वाक्यं सादृश्यात्मकमुपलक्षणं वोपमानसामग्रीं वाक्यार्थस्मरणसह-

प्रकाशः ।

**न ह्यनेने**ति । अज्ञातसामान्यस्य विशेषजिज्ञासा न युक्तेति भावः । उपसंहरति । **तस्मादि**ति ।

ननु यदि निमित्तप्रश्नस्तत् किं तदेव नोत्तरयतीत्यत आह **तस्य चे**ति । व्युत्पाद्यस्याप्रतीतगवयत्वजातिकत्वादिति भावः । **तच्चे**ति । सामग्र्युत्थानानुकूलमित्यर्थः ॥

ननु सादृश्यप्रवृत्तिनिमित्ततायां गौरवानवतारे नोपमानस्याऽप्यवतारः, तथा च तर्केणेतराप्रवृत्तिनिमित्तकत्वे निश्चिते गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात्, यन्नैवं तन्नैवमिति चेन्न । तर्कस्यानिश्चायकत्वात् । न चायं तर्को व्याप्तिमूलको येन विपर्ययानुमानादर्थसिद्धिः स्यात् । न च गवयपदं किञ्चित्प्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टमेव तर्कसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकतां परिच्छिनत्ति, न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यते इति वाच्यम् । इदं सप्रवृत्तिनिमित्तमन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि

प्रकाशिका ।

चकत्वस्य शब्दादेव प्रतीतेरिति भावः । **अज्ञाते**ति । धर्म्मितावच्छेदकविशिष्टधर्म्यज्ञानेन तद्धर्म्मविशेषजिज्ञासेत्यर्थः । तथा च गवयपदवाच्यप्रतीतौ तल्लिङ्गमपि प्रतीतमेव प्रकारान्तरेण तदप्रतीतेरिति लिङ्गस्य तदप्रतीतत्वादेव न तत्र प्रश्नो गवयपदवाच्याज्ञाने च धर्म्मप्रतीतिरेव न तत्र प्रश्न इत्यर्थः । यद्वा गवयपदवाच्यस्य किञ्चिल्लिङ्गमस्तीति यदा न ज्ञानं तदा कथं लिङ्गविशेषजिज्ञासा अज्ञातसामान्यस्य विशेषजिज्ञासाविरहादित्यर्थः । अत्र च पक्षेऽविज्ञायेत्यस्य मूलस्य सामान्यतो ज्ञात्वेत्यर्थः । **अयमिति** । लाघवाख्य इत्यर्थः । **अन्यच्च न प्रवृत्तनिमित्तमिति** । विशेषत

मकरन्दः ।

स्येत्यर्थः । धर्मिमात्रवाच्यत्वस्य शब्दादेव प्रतीतेरिति भावः । **अज्ञाते**ति । गवयपदवाच्यस्य प्रतीतौ स किंलिङ्गक इति प्रश्नः, तत्प्रतीतिश्च तस्य लिङ्गादेव जातेति लिङ्गस्य ज्ञातत्वान्न तत्र प्रश्न इति भावः । **अयमिति** । लाघवाख्य इत्यर्थः । **अनुमितेरि**ति । तथा चेतराप्रवृत्तिनिमित्तकतां परिच्छिनत्ती-

**तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुपलक्षणं किञ्चिदाचष्टे, तच्चोपमानसामग्रीसमुत्थापनमेव । तस्य च प्रमाणस्य सतस्तर्कः सहायतामापद्यते, सादृश्यस्यैव निमित्ततायां कल्पनागौरवम्, निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध इति तदेव निमित्तमवगच्छतीति ॥**

बोधनी ।

कृतसादृश्यप्रत्यभिज्ञानरूपामुत्थापयतीति किमेतावता गवयत्वमेव प्रवृत्तिनिमित्तमिति सिध्यतीत्यत्राह—**तस्य च** इति । तर्कस्वरूपमाह—**सादृश्यस्य** इति ।

प्रकाशः ।

गवयत्वप्रवृत्तिनिमित्तकं गवयपदमिति मानान्तरमन्तरेणाप्रतीतेः, अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वात् ॥

ननु यथेच्छायां सामान्यतोदृष्टेन विशेषबाधकसहकृतेनाष्टद्रव्यानाश्रयत्वं ज्ञायते, अन्यथा विशेषबाधकानां पृथिव्याद्येकैकमात्रव्यतिरेकविषयत्वेनाष्टद्रव्यानाश्रयत्वं केन ग्राह्यम्, तथात्रापि गौरवाऽऽख्यतर्कसहकृतसामान्यतोदृष्टादितराप्रवृत्तिनिमित्तकत्वे निश्चिते पश्चाद्व्यतिरेकि स्यात्, कल्प्यमानान्तरसहकारित्वापेक्षया क्लृप्तप्रमाणसहकारित्वस्य युक्तत्वात् ॥

मैवम् । इच्छायामेकैकबाधसहकृतापरापरबाधकैरेव तावद्विशिष्टवैशिष्ट्यरूपाष्टद्रव्यानाश्रयत्वपरिच्छेदात्, न तु सामान्यतोदृष्टेन, विशेषणद्वयोपस्थित्यैव विशिष्टवैशिष्ट्यज्ञाननिर्वाहात्, तर्कानवतारदशायां तस्य तदपरिच्छेदकत्वाच्चेति सङ्क्षेपः ॥

प्रकाशिका ।

उपस्थितं गोसादृश्यादित्यर्थः । **मानान्तरमन्तरेणेति ।** सामान्यत इतराप्रवृत्तिनिमित्तकत्वज्ञानाभावेन व्यतिरेकिणोऽप्रवृत्तेरिति भावः । ननु सामान्यतोदृष्टादेवेतराप्रवृत्तिनिमित्तिकत्वसिद्धिरित्यदूषितमेवेत्यत आह **अनुमितेरिति । तथात्रापीति ।** उक्तान्यथानुपपत्त्याऽनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वमसिद्धमेवेत्याशयः । **व्यतिरेकीति ।** पूर्वोक्तव्यतिरेकीत्यर्थः । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमभङ्गो] यत्रानुपपत्त्या स्वीकरणीयः, तमेव खण्डयति **इच्छायामिति ।** इदमुपलक्षणम् पृथिव्यनाश्रितत्वादिकं प्रत्येकमेव हेतुविशेषणमिति द्रष्टव्यम् । **तर्कानवतारेति ।** सामान्यतोदृष्टस्येतराप्रवृत्तिनिमित्तकत्वापरिच्छेदकत्वादित्यर्थः । तथा च

मकरन्दः ।

त्यप्ययुक्तमिति । **तथाऽत्रापीति ।** अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमोऽसिद्ध एवेत्याशयः । **व्यतिरेकीति ।** पूर्वोक्तव्यतिरेकीत्यर्थः । तस्य सामान्यतोदृष्टस्य । तदपरिच्छेदकत्वात् इतराप्रवृत्तिनिमित्तकत्वापरिच्छेदकत्वात्, तर्कसहकारेणैव तस्य तथात्वाभ्युपगमादिति भावः । यद्यपि तद्दशायां नोपमानस्याप्यवतारः, तथापि तर्कानवतारे सामान्यतोदृष्टस्य किञ्चित्प्रवृत्तिनिमित्तकत्वमात्रमनुमाय पर्य्यवसितत्वादग्रे पुनस्तर्कावतारे उपमानप्रवृत्तिरप्रत्यूहैवेति भावः । अत्रेदमालोचनीयम्—क्लृप्तप्रमाणभावस्य सामान्यतोदृष्टस्य पुनरनुसन्धानमात्रं कल्पयितुमर्हं लाघवात्, न तु मानान्तरं, गौरवात् । न च पुनरनुसन्धीयमानादपि तर्कसहकृतादपि तस्मान्नेतराप्रवृत्तिनिमित्तकत्वपरिच्छेदोऽनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति वाच्यम् । लाघवगौरवसहकारेण व्यापकतानवच्छेदकस्यापि भानाभ्युपगमात्, अत एवेश्वरानुमाने क्षित्यादावेकमात्रकर्तृकत्वानुमितिः, अस्तु वा तथा, तथापि इतरद् न प्रवृत्तिनिमित्तं गुरुत्वादिति मानान्तरादितराप्रवृत्तिनिमित्तकत्वनिश्चये उक्तव्यतिरेकिणा गवयत्वप्रवृत्तिनिमित्तकत्वसिद्धिरविकलैव । न च साध्याप्रसिद्धेर्न तत्सिद्धिरिति वाच्यम् । तथा सत्युपमानादपि तद्विशिष्टबुद्ध्यनुदयापत्तेः, विशेषणज्ञानं विना तदभावात् ।

टिप्पणी ।

**तर्कानवतारदशायां तस्य तदपरिच्छेदकत्वाच्चेति ।** तदानीम्पर्य्यवसितस्य तस्य प्रत्य-

**लक्षणन्त्वस्य** – अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम् । वाक्यार्थश्च क्वचित् साधर्म्यं क्वचिद्वैधर्म्यमतो नाव्यापकम् , तस्मान्नियतविषयत्वादेव न तेन बाधो, न त्वनतिरेकादिति स्थितिः ॥ १२ ॥

बोधनी ।

एवमुपमानस्य प्रमाणान्तरेभ्यो विषयभेदाद् भेदं दर्शयित्वा लक्षणतोऽप्याह **लक्षणं तु** इति । अनवगतस्वार्थसंबन्धया गवयादिसंज्ञया समभिव्याहृतं यद्वाक्यमतिदेशवाक्यमिति यावत् , तस्य योऽर्थस्तस्य संज्ञिनि गवयादिपिण्डे यदनुसंधानमयमसौ गोसदृश इत्यादि प्रत्यभिज्ञानं तदुपमानमिति। नन्वव्यापकमेतत् , कीदृगश्व इति हि प्रश्ने गवयादिविलक्षणः केसरादिमानश्व इति वैधर्म्यरूपवाक्यार्थप्रत्यभिज्ञानस्याप्युपमानत्वेनेष्टत्वादित्यत्राह **वाक्यार्थश्च** इति । ननु तथाप्यव्यापकं 'कीदृक्करभ' इति पृष्टेनोदीच्येनोदीरितं 'दीर्घग्रीवः प्रलम्बोष्ठः कठोरतीक्ष्णकण्टकाशी पशुः करभ' इति वाक्यं श्रुतवतो दाक्षिणात्यस्योत्तरापथे पुनस्तादृशपिण्डे तांस्तान् धर्मान् प्रत्यभिजानानस्यायं करभशब्दवाच्य इति । यथोक्तं तार्किकरक्षायाम्—

अत्रातिदेशवाक्यार्थस्त्रिविधः परिगृह्यते । साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः ॥ इति ।

परमप्रकृतमुपसंहरति **तस्मात्**–इति । नियतविषयत्वात्संज्ञासंज्ञिसंबन्धमात्रविषयत्वादिति ॥१२॥

प्रकाशः ।

एवमुपमानस्य क्लृप्तमानातिरेकं प्रसाध्याव्याप्तिं परिहर्तुं लक्षणमाह **लक्षणन्त्विति** ॥ अनवगतसङ्गतिश्चासौ संज्ञा चेति कर्मधारयः । न च गोविसदृशो न गवयपदवाच्य इत्यत्र अर्थादापद्यते गोसदृशो गवयपदवाच्य इति, तथा च नात्र वाक्यार्थानुसन्धानमस्तीति वाच्यम् । परम्परया तत्रापि वाक्यतात्पर्यात् । वस्तुतस्तु उपमितिकरणत्वमुपमानत्वम् , उपमितित्वञ्च जातिः । न च तदसिद्धिः सामग्रीविशेषे कार्यवैजात्यमावश्यकमिति कारणव्यङ्ग्यत्वात् , सैव सामग्री अनवगतसङ्गतीत्यादिना दर्शिता। **क्वचिद्वैधर्म्यमिति** ॥ धिक्करभमतिदीर्घग्रीवमित्यादौ ॥ प्रकृतमुपसंहरति **तस्मादिति** ॥१२॥

प्रकाशिका ।

तदनवतारदशायां सामान्यतोदृष्टे पर्यवसिते प्रश्नोत्तरकालं तर्कावतारः, तत्रोपमानं मानान्तरं सामान्यतोदृष्टपुनरनुसन्धानस्यानुभवकलहग्रस्तत्वादिति भावः । वस्तुतोऽनुमितेर्व्यापकतावच्छेदकप्रकारकेत्यादिपूर्वोक्तबाधकमेव सम्यगिति । अत्र वदन्ति–प्रमाणान्तरकल्पनापेक्षया सामान्यतोदृष्टानुसन्धानकल्पनमेव लघु, अन्यथा प्राङ्नास्तितास्थले लिङ्गानुसन्धानकल्पनं न स्यादित्यनुपलब्धेर्मानान्तरतापत्तिः । न चानुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमः, क्षित्यादौ लाघवेनैकमात्रकर्तृकत्वानुमानाभावापत्तिः । न चेष्टापत्तिः, एकानेककर्तृकत्वसंशयापत्तेः, तस्मात् सप्रवृत्तिनिमित्तिकत्वानु ( रोधेन ) मानमेवेतरप्रवृत्तिनिमित्तकत्वं विषयीकरोति, पश्चादुक्तव्यतिरेकिणा गवयत्व-

मकरन्दः ।

यदि च गवयत्वं किञ्चित्पदप्रवृत्तिनिमित्तं जातिविशेषत्वादित्यादिना तस्य तुल्यवित्तिवेद्यतया किञ्चित्पदे तत्प्रसिद्धिसम्भवात्तथात्वं, तदा प्रकृतेऽपि तुल्यम् । व्यतिरेक्यन्तरेऽपीयमेव गतिः । किञ्च यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतोदृष्टं तर्कसहकृतं पुनरनुसन्धीयमानं जीवित्वप्रकारकं ज्ञानं जनयति, तथा गवयपदं गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तकं पदत्वादिति सामान्यतोदृष्टं तर्कसहकृतमनुसन्धीयमानं गवयत्वप्रवृत्तिनिमित्तकत्वं परिच्छिनत्तु, कृतं मानान्तरेण । तदाह गङ्गेशः—'विचित्रसहकारिवलेनैकस्यापि विचित्रफलजनकत्वादिति' । अन्यथा

टिप्पणी ।

चेण परत्वोपस्थितौ तर्कसाम्राज्ये पुनः परिच्छेदकत्वासम्भवादिति भावः ।

प्रकाशिका ।

प्रवृत्तिनिमित्तकत्वं गृह्यते । सामान्यतोदृष्टमेव वा गवयत्वप्रवृत्तिनिमित्तकत्वप्रकारकमुक्तलाघवसहकारादिति । तदयुक्तम्—लाघवस्य विशेषविषयीकरणमात्रे सामर्थ्येन इतराप्रवृत्तिनिमित्तकत्वविषयतायां मानाभावात् तस्य व्यापकताच्छेदकानाक्रान्तत्वात् । अत एव गवयत्वप्रवृत्तिनिमित्तप्रकारकत्वमपि, सामान्यतोदृष्टस्यासंभवितस्य व्यापकतानवच्छेदकतया प्रकारत्वासम्भवात्, ईश्वरानुमानेऽप्येकमात्रकर्तृकत्वं प्रमाणान्तरगम्यमेव । यत्तु इतरन्न प्रवृत्तिनिमित्तं गुरुत्वादित्यनुमानेनेतराप्रवृत्तिनिमित्तकत्वावधारणमिति । तत्तुच्छम् । जात्यात्मकस्याप्यन्यस्य पक्षीकरणे हेतोरसिद्धेः । अपक्षीकरणे च तस्यैवाप्युदासात् । न चैवमुपमानेनापि कथं गवयत्वस्य प्रवृत्तिनिमित्तपरिच्छेदः, अनुपस्थितानां तत्त्वेनोपस्थितानाञ्चातिप्रसङ्गगौरवादिना निरासात् । न च स्वन्मते तथा घटेत, तदप्रवृत्तिनिमित्तकस्य लिङ्गीभूतस्यानिश्चयात् । अस्तु वा इतराप्रवृत्तिनिमित्तकत्वपरिच्छेदो यथातथा, तथापि न व्यतिरेकिप्रवृत्तिः, गवयत्वप्रवृत्तिनिमित्तकत्वसाध्याप्रसिद्धेः । न च गवयत्वं किञ्चित्पदप्रवृत्ति-

मकरन्दः ।

तत्र लिङ्गविशेषणजीवितत्वानिश्चये अर्थापत्तिर्लब्धावकाशा स्यात् । तस्मात् त्यज वोपमानं मानान्तरं, स्वीकुरु वाऽर्थापत्तिं संशयकरणिकामन्यामिति । वस्तुतस्तु संज्ञासंज्ञिपरिच्छेद उपमानार्थ इत्याकर एव स्फुटं, न तु प्रवृत्तिनिमित्तपर्य्यन्तपरिच्छेदोऽपि, तस्य शक्यत्वे शक्यवृत्तित्वे इत्यादिघटितस्य नियमत उपस्थितौ मानाभावात्, तद्ग्रहस्य व्यवहारानङ्गत्वेनानुद्देश्यत्वाच्च, तथा च गवयत्वविशिष्टवाच्यत्वसिद्धिरेवोद्देश्या । तदिदमुक्तम्—पिण्डवाचकत्वसिद्धावपि गवयत्वसिद्धावपि गवयत्वविशिष्टवाच्यत्वासिद्धेर्नोपमानपरिच्छेद्यस्य मानान्तरात् प्रतीतिरिति । एवञ्च शब्दाद्विशेष्यवाच्यत्वावगमेऽपि गवयत्ववाच्यत्वपरिच्छेदार्थमुपमानस्वीकार इति परमार्थः । तदिदमुक्तमाकरे 'सामान्यविशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति' । तत्र ब्रूमः । एवं व्यवहारादेरपि शक्तिग्राहकस्य व्यक्तिग्राहकस्य व्यक्तिमात्रविषयत्वात् घटत्वादिवाच्यत्वग्रहार्थं मानान्तरमनुस्रियेत, यदि च लाघवादिसहकृतं व्यक्तिशक्तिग्राहकमेव तद्ग्राहकं, तदा प्रकृतेऽपि तुल्यम् । तदिदमुक्तं गङ्गेशेन—'शक्तिग्राहकमेव लाघवादिसहकृतं निमित्तमप्यवधारयति, यथा क्षित्यादौ कर्तृग्राहकं कर्तुरेकतामिति' । ननु प्रकृते विशिष्टशक्तिग्राहकं नास्ति शब्दस्य गवयत्वोपस्थितिकाले पर्य्यवसितत्वादिति चेत् । न । गवयत्वविशिष्टोऽयं गवयपदवाच्यः गोसदृशत्वादित्यादेर्लाघवसहकृतस्य सत्त्वात् लिङ्गाभासादिनाप्यनुमित्यविरोधाच्च । अन्यथा व्यवहारादिना घटत्वादिविशिष्टशक्तिग्रहोऽप्यशक्यः । यद्वा धर्म्मिवाच्यत्वे शब्दादेव सिद्धे गवयत्वं गवयपदवाच्यं गवयत्वादिति व्यतिरेकिणा लाघवसहकृतेन तद्वाच्यत्वसिद्धिः । तस्मात् पिण्डादेः सपक्षाद्व्यावृत्तावसाधारण्यं, तस्य सत्प्रतिपक्षोत्थापकतया दोषत्वादस्य च तर्कसहकारेणाधिकबलत्वात् । अस्तु वा गवयपदप्रवृत्तिनिमित्तत्वमेव साध्यम्, तथा च सपक्षाभावान्नासाधारण्यम् । न च साध्याप्रसिद्धिः, गवयपदं किञ्चित्प्रवृत्तिनिमित्तकमिति सामान्यतोदृष्टादेव सामान्यतस्तत्सिद्धेः । न च व्याप्त्याद्यप्रतिसन्धानदशायामपि तत्परिच्छेदान्नैवमिति वाच्यम्, मानाभावात् । अन्यथा मूलप्रकाशयोरनुमानदूषणप्रयासस्यासङ्गतत्वापातात् । तददुष्टत्वेऽपि तदनवतारे उपमानावतारसम्भवात् । तथा च यत्र यत्परिच्छेदस्तत्र क्लृप्तप्रमाणभावस्यैवावतारः कल्प्यते, लाघवात्, अतीन्द्रियादिलिङ्गे व्याप्यत्वपरामर्शवदुपनयसहकृतेन मनसा विशिष्टवाच्यत्वपरिच्छेदसम्भवाच्च । न चोपमिनोमीत्यनुव्यवसायबलाद्विजातीयप्रमासिद्धौ तत्करणसिद्धिरिति वाच्यम् । संज्ञासंज्ञिसम्बन्धबुद्धौ तादृशानुव्यवसायासिद्धेः । गवा गवयमुपमिनोमीत्यनुव्यवसायस्य सादृश्यबुद्धिविषयत्वात्, अत एवान्यत्रापि मुखचन्द्रादिसादृश्यप्रतीतौ तथेति विद्वद्भिः परिचिन्तनीयमिति । नन्विदमुपमितावेवातिव्याप्तं लिङ्गोपहितलैङ्गिकभानवत् सादृश्यज्ञानोपनीतस्य तत्र भानसम्भवादित्यरुचेराह वस्तुवस्त्विति ॥ १२ ॥

**शब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः। तथाहि—यद्यप्येते**

बोधनी।

अथ प्रमाणान्तरस्यैव सतः शब्दस्याबाधकत्वं प्रतिपादयिष्यन्मतान्तरं तावदाह **शब्दोऽपि** इति। अनुमानानतिरेकात्तस्य चाबाधकत्वस्य स्थितत्वादिति शेषः। द्वयोरपि 'यद्यपि'शब्दयोः तथापीति वक्ष्यमाणेन संबन्धः। पदार्थत्वस्य घटपटादिभिरनैकान्तिकता, पदस्मारितत्वस्य तु गौरश्वः पुरुषो हस्तीत्यादिपदस्मारितैः, पदपक्षीकारेऽपि पूर्वोक्तदोषस्तावदस्ति, तन्निस्तारेऽपि साध्याभावेन बाधितविषयत्वं पदानां पदार्थसंसर्गेण सह संयोगादिसंबन्धलक्षणस्य मत्वर्थस्याभावाज्ज्ञापकत्वलक्षणस्य चानुमानप्रवृत्त्युत्तरकालीनत्वेन ततः पूर्वं भवतामसिद्धत्वादिति। तर्हि लिङ्गतया ज्ञापकत्वमेव

प्रकाशः।

**शब्दोऽपीति** ॥ यद्यपि शब्दस्याबाधकत्वेऽनुमानानतिरेकित्वं न हेतुरनुमानात्मकस्यैव शब्दस्य बाधकत्वसम्भवात्, तथाप्यनुमानबाधकत्वनिरासेनैव शब्दबाधकत्वमपि निरस्तमित्यर्थः। अनुमानानतिरेकादिति ल्यब्लोपे पञ्चमी। अनुमानाभेदं प्राप्य शब्दो न बाधकं, 'प्रकृतेः क्रियमाणानि—' इत्यादिशब्दस्य वक्तव्ययुक्त्याऽन्यपरत्वादित्यन्ये॥

प्रकाशिका।

निमित्तम् द्रव्यवृत्तिजातित्वादित्यनुमानेन पदेऽपि गवयत्वप्रवृत्तिनिमित्तकतां समानसंवित्संवेद्यतया विषयीकुर्वता साध्यप्रसिद्धिरिति वाच्यम्। बाल्यादिभिन्नगवादिशरीरवृत्तिजातौ व्यभिचारात्। उपमानेन तु गवयत्वस्यावच्छेदकत्वलक्षणः सम्बन्धः प्रथमं संसर्गविधया विषयीक्रियत इति न तज्ज्ञानापेक्षा तत्र। ननु तथापि यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतोदृष्टेन जीवित्वे निश्चिते तेन लिङ्गेन वहिःसत्त्वनिश्चयेनार्थापत्तिर्मानान्तरम्, तथा गवयपदं गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तकमिति सामान्यतोदृष्टं लाघवसहकृतं गवयत्वप्रवृत्तिनिमित्तकतां विषयीकरोतीति नोपमानं मानान्तरम्, तथा च गङ्गेशः 'विचित्रसहकारिवत्त्वेनैकस्यापि विचित्रकार्यजनकत्वा'दिति, अन्यथा संशयकरणकार्थापत्तेरपि मानान्तरत्वप्रसङ्ग इति। मैवम्। आकाशपदे व्यभिचारात्। न च तदपि सप्रवृत्तिनिमित्तमिति वाच्यम्। अस्तु तथा, तथापि हेतुसत्त्वसन्देहदशायां व्यभिचारसंशयेनानुमानानवतारे उपमानस्यैव प्रमाणत्वात्। एतेन प्रत्यक्षवाचकपदत्वादिति हेतुरित्यपास्तम्। बाल्यादिभेदेऽप्यभिन्नमेव शरीरमित्यभिमानदशायां चैत्रादिपदे व्यभिचारसंशयात्। यत्तु व्यवहारेण शक्तिग्रहे यथा धर्म्मिणि शक्तिग्राहकमेव धर्म्मस्यावच्छेदकतामवगाहते तथा प्रकृतेपीति मतम्, तन्न, तत्रानुमानवदत्र तादृशप्रमाणाभावात् शब्दस्य प्रागेव पर्यवसानात्। न च गवयत्वविशिष्टोऽयं गवयपदवाच्यो गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदित्यनुमानेन प्रवृत्तिनिमित्तपरिच्छेदः, लिङ्गस्य व्यभिचारात्, व्यभिचारास्फुरणदशायामुत्पन्नानुमितिरबाधेन प्रमेयमिति वाच्यम्। तत्स्फुरणदशायामपि सङ्केतपरिच्छेदात्। यत्तु गवयत्वं गवयपदप्रवृत्तिनिमित्तं गवयस्त्वत्वादित्यनुमानेन प्रवृत्तिनिमित्तत्वपरिच्छेद इति। तन्न। साध्याप्रसिद्धेरित्यास्तां विस्तरः। यत्तूपमिनोमीत्यनुव्यवसायेन विजातीयज्ञानसिद्धौ तत्करणं मानान्तरमिति मतम्। तदयुक्तम्। सङ्केतज्ञाने तादृगनुव्यवसायाभावात् तस्य सादृश्यबुद्धिविषयकत्वात्, अत एव चन्द्रेण मुखमुपमीनोमीत्याकारकोऽनुव्यवसाय इति। अनवगतसङ्केतेतिपदस्य बहुव्रीह्यन्तस्य पुरुषपरत्वभ्रमो मा भूदित्यत आह **कर्म्मधारय इति। वाक्यार्थतात्पर्यादिति।** तथा च लक्षणे वाक्यार्थानुसन्धानं वाक्यतात्पर्यविषयानुसन्धानमेव विवक्षितमिति भावः। ननु प्रसिद्धपदसामानाधिकरण्येन यत्र सङ्केतज्ञानं तत्रातिव्याप्तिः, किञ्च लिङ्गोपहितलैङ्गिकभानवत् सादृश्योपहितसङ्केतभानाभ्युपगमे उपमितावेवातिव्याप्तिरित्यरुचेराह **वस्तुतस्त्विति** ॥ १२ ॥

**पदार्था मिथः संसर्गवन्तो वाक्यत्वादिति व्यधिकरणं, पदार्थत्वादिति चाऽनैकान्तिकं, पदैः स्मारितत्वादित्यपि तथा । यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः । नह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा सम्भवति । ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते । न च लिङ्गतया ज्ञापकत्वं, यल्लिङ्गस्य विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात्—तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति ॥**

---

बोधनी ।

मत्वर्थः साध्यः स्यादित्याह **न च लिङ्गतया** इति । प्रसङ्गमेवाह **तदुपलम्भे** इति । तस्य लिङ्गतया ज्ञापकत्वस्य साध्यस्योपलम्भे हि सति तेन सह शब्दलिङ्गस्य व्याप्तिनिश्चयः तन्निश्चये च ज्ञापकत्वानुमानमिति प्रकारान्तरासंभवेऽनतिरेक एव, पदार्थपक्षीकारेण तु तेषां मिथः संसर्गस्यैवमनुमा-

प्रकाशः ।

पदानां तदर्थानां वाऽऽकाङ्क्षादिमतां वाक्यार्थप्रत्यायने लिङ्गभावेनैव करणत्वमस्तु, किं शब्देनातिरिक्तमानेनेत्यभिप्रेत्य पदाऽर्थकरणत्वपक्षेऽनुमानमिदं साधयति **यद्यपीति** ॥ **अनैकान्तिकमिति** ॥ निराकाङ्क्षादिभिरित्यर्थः ॥ **तथेति** ॥ तैरेवानैकान्तिकमित्यर्थः । पदकरणत्वमाश्रित्याह **यद्यपि चेति** ॥ **समवाय** इति ॥ न पदार्थसंसर्गाणां पदेषु समवाय इत्यर्थः ॥ **विशेषणेति** ॥ स हि पदाऽर्थानां मिथोऽन्वयो न पदधर्म इत्यर्थः ॥ **न चेति** ॥ लिङ्गतया ज्ञापकत्वं यच्छब्दस्य, तदेव तस्य लिङ्गस्य तत्स्मारकत्वादित्यर्थस्य विषयः कर्मेति न चेति योजना । परस्पराश्रयत्वं स्पष्टयति **तदुपलम्भे** हीति ॥ लिङ्गतया ज्ञापकत्वोपलम्भे हीत्यर्थः । मानान्तरेण शब्दस्य लिङ्गत्वसिद्धौ ततोऽनुमित्या लिङ्गतया ज्ञापकत्वे व्याप्तिः सिध्द्येत्, इतश्च ज्ञापकत्वे लिङ्गत्वसिद्धिरिति भावः । यद्यपि पूर्वपूर्वविषयानुमितिजनकत्वेनानादित्वान्न परस्पराश्रयत्वं, तथापि ज्ञापकत्वसिद्धावपि नार्थसिद्धिः, प्रमापकत्वे तु साध्येऽनैकान्तिकमिति भावः ॥

प्रकाशिका ।

**तथापीति** । तथा च शब्दो नेश्वरे बाधको अबाधकत्वव्यवस्थितानुमानाभिन्नत्वादिति हेत्वर्थ इति भावः । पञ्चम्या हेतुत्वार्थत्यागाद्धेत्वन्तरं पूरयति **प्रकृतेरिति** । हेत्वध्याहारगौरवेणारुचिं विभावयति **अन्य इति** । **निराकाङ्क्षादिभिरिति** । अतद्गुणसंविज्ञानबहुव्रीहिणाऽयोग्यैरित्यत्र तात्पर्यम् योग्यतासत्त्वे आकाङ्क्षादिविरहेण व्यभिचाराभावादिति ध्येयम् । पदपक्षकप्रयोगे मूले आकाङ्क्षासत्वादित्येव हेतुरधिकस्य व्यर्थत्वादित्यवधेयम् । **प्रमापकत्व इति** । पयसा सिञ्चती-

मकरन्दः ।

एवं सति हेतुं पूरयति **प्रकृतेरिति** । **निराकाङ्क्षादिभिरिति** । अयोग्यैरित्यत्रैव तात्पर्य्यम् । योग्यतासत्त्वे आकाङ्क्षाविरहे व्यभिचाराभावादिति ध्येयम् । शेषं शब्दप्रकाशे विपश्चितम् । द्वितीयप्रयोगे **मूले** आकाङ्क्षादिमत्त्वादित्येव हेतुः तत्स्मारकत्वादित्यस्य व्यर्थत्वात् । **प्रमापकत्वे** इति । आकाङ्क्षादिमतोऽपि सहकारिविरहेण कदाचित् प्रमानुत्पादकत्वादिति भावः । यद्यपि

टिप्पणी ।

**ज्ञापकत्वे लिङ्गत्वसिद्धिरित्यर्थ** इति । न **मानान्तरेणेति** शेषः । तथा चान्योन्याश्रयदोषसङ्गतिः॥ **प्रमापकत्वे साध्येऽनैकान्तिक** इति । पदार्थस्मारके सहकारिविरहेण प्रमाया अजनके योग्यताभ्रमेण भ्रमजनके व्यभिचारः ॥

तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वाद् गामभ्याजेतिपदार्थवदिति स्यात्। न च विशेषासिद्धिर्दोष, संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा-एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात् गामभ्याजेति पदवत्। न चैवमर्थासिद्धिः। ज्ञानावच्छेदकतयैव तत्सिद्धेः। तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति॥

अत्रोच्यते—

**अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः॥**

**आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिनिबन्धना॥ १३॥**

---

बोधनी।

नसंभव इत्याह **तथापि** इति। नन्वेतावता संसर्गमात्रं सिध्येन्नत द्विशेष इत्यत्राह **न च** इति। पदस्मारितान् पदार्थविशेषान् पक्षीकृत्य तेषां संसर्गे साध्यमाने तद्विशेष एव सिध्यतीति। **यद्वा** इति। तथा ज्ञानपूर्वकत्वस्य साध्यत्वान्न साध्याभावः, न चानैकान्तिकता आकाङ्क्षादिमत्त्वेन विशेषणात्। तदितिपदार्थपरामर्श इति। नन्वेवं कुतः संसर्गवत्ता सिध्येत् कुतो वा तद्विशेष इत्यत्राह **न चैवम्** इति।

तत्र प्रथमप्रयोगे दोषमाह **अनैकान्त** इति। यद्यत्र संसर्गवन्त एवेति परिच्छेदो नियमः

प्रकाशः।

**तथापीति**॥ अत्रैते पदार्थास्तात्पर्यविषयमिथःसंसर्गवन्त इति साध्यमतो नानभिमतसंसर्गसिद्या अर्थान्तरम्। नन्वेवं संसर्गमात्रसिद्धावपि व्यवहारौपयिकस्तद्विशेषो न सिद्ध्येदत आह **न चेति**॥ संसृज्यमानपदार्थव्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य पक्षधर्मताबलात् सिद्धिरित्यर्थः। ननु संसर्गज्ञानपूर्वकत्वसिद्धावपि कुतो वाक्यार्थसिद्धिरित्यत आह **न चैवमिति**॥ संसर्गविशेषसिद्ध्यर्थमाह **तस्य चेति**॥ तस्य संसर्गस्य पदार्थविशेषोपहितस्यैव ज्ञानावच्छेदकत्वाज्ज्ञानज्ञानस्य च तद्विषयविषयकत्वात् संसर्गे च सम्बन्धिन एव विशेषत्वादत्रापि पक्षधर्मताबलाद्व्यापकत्वेनाज्ञातस्यापि संसर्गविशेषस्य सिद्धिरित्यर्थः॥

नन्वेवं भ्रान्तिज्ञोऽपि भ्रान्तः स्यात्, न चेष्टापत्तिः, ईश्वरस्यापि भ्रान्तत्वापत्तेः, भ्रान्तस्येव भ्रान्तिज्ञस्यापि भ्रमात् प्रवृत्त्यापत्तेश्च। अत्राहुः। न भ्रमविषयविषयकत्वेन भ्रमत्वं, किन्तु विशेष्यावृत्तिप्रकारकत्वेन। न च शुक्तौ रजतत्वप्रकारकज्ञानवानयमित्यत्र विशेष्यावृत्तिः प्रकारः, रजतत्वप्रकारकत्वस्य भ्रमे सत्त्वात्। न च प्रतारकवाक्ये व्यभिचारः। तत्र योग्यताविरहात्, तस्या व्याहार्यसंसर्गज्ञानवत्त्वाच्च। तथापि संसर्गज्ञानं विना शुकस्यान्यस्य वा वाक्ये भ्रान्तप्रतारकवाक्ये च व्यभिचारः। कथञ्च तत्र संसर्गप्रमा? वक्तुर्ज्ञानानुमानासम्भवादिति चेन्न। तत्र वेदवदीश्वरसंसर्गज्ञानपूर्वकत्वादित्युक्तत्वात्॥

**अनैकान्त** इति॥ परिच्छेदेऽवधारणे। द्वितीयं दूषयति॥ **आकाङ्क्षेति**॥ आकाङ्क्षायाः

प्रकाशिका।

त्वादौ योग्यताया अन्वयप्रयोजकरूपवत्त्वात्मिकायाः सत्त्वादिति भावः। **प्रमापकत्वं** प्रमोपहितत्वम्। तथा चानुपजातफले व्यभिचार **इत्यन्ये**। **निराकाङ्क्ष इति**। तत्र तात्पर्यघटितसाध्या-

मकरन्दः।

ज्ञापकत्वेऽपि व्यभिचारः, तथापि दूषणान्तरस्यैव सम्भवादयं नोद्भावित इति भावः। **निराकाङ्क्ष**

एते पदार्था मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः, सम्भाविनसंसर्गा इति वा ? न प्रथमः। अनाप्तोक्तपदकदम्बस्मारितैरनैकान्तात्। आप्तोक्त्या विशेषणार्थ इति चेन्न। वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः। न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितं, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्, अपि तु तदनुभवप्रामाण्यमपि। न चैतच्छक्यमसर्वज्ञेन सर्वदा सर्वविषये सत्यज्ञानध्यानयमिति निश्चेतुम्। भ्रान्तेः पुरुषधर्मत्वात्। तत्र क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः। ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्। न चैतत् संसर्गवि-

बोधनी।

साध्येत तदा नामोक्तपदस्मारितैरनैकान्तो हेतुस्तेषां तन्नियमाभावात्, अथ संभवो योग्यतामात्रं साध्येत तदा वाक्यफलं निश्चयो न सिध्येदिति। द्वितीयेऽप्याह आकाङ्क्षा इति। आकाङ्क्षा नाम प्रतिपत्तुर्जिज्ञासा, सा च सत्तामात्रेणान्वयप्रतीतिहेतुस्ततः तया न व्यभिचारव्यावर्तनाय हेतुर्विशेषणीयः, तर्हि योग्यतासन्निधिभ्यामेव विशेष्यत इत्यत्राह योग्यासत्तिरिति। न हि तावन्मात्रमन्वयप्रतीतौ निबन्धनमयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ वाक्यद्वयस्थयो राजपुरुषयोः सतोरपि तयोरन्वयप्रतीत्यभावादिति ॥

आद्यं पादं व्याचष्टे एते इति। आप्तोक्तपदस्मारितत्वादिति हेतुः स्यादित्याह—आप्तोक्त्या इति। न इति। अस्मिन्नर्थेऽयमाप्त इति वाक्यार्थप्रतीतिपूर्वकमाप्तत्वमवगन्तव्यं, तदवगत्युत्तरकालं च तद्विशिष्टहेतुना वाक्यार्थप्रतिपत्तिरिति परस्पराश्रयतापत्तिरिति भावः। प्रागाप्तत्वासिद्धिमाह न हि इति। येन प्रागेव वाक्यार्थप्रतीतेस्तत्सिध्येत् इति। नन्वस्तु वाक्यार्थज्ञानसत्यत्वमाप्तिस्ततः

प्रकाशः।

सत्त्वमात्रेणैव कारणतया लिङ्गविशेषणत्वमनुपपन्नमित्यर्थः। योग्यताऽऽसत्तिमात्रेण विशेषणे दोषमाह योग्येति न बन्धनं सम्बन्धो व्याप्तिरूपो यस्यां, सा तथा। निराकाङ्क्षे व्यभिचारादित्यर्थः ॥

संसृष्टा एवेति ॥ नच सम्भावना नियमो वा न साध्यः, किन्तु संसृष्टा इत्येव साध्यमिति वाच्यम्। संसर्गव्यभिचारिव्यभिचारिसाधारणतया ययोरेव घटानयनयोः परस्परसंसर्गो न जातस्तेनैव व्यभिचारादिति भावः ॥ तदुक्तेरपीति ॥ भ्रान्तेन पित्रादिनाऽप्यप्रतारकेणोक्तपदानां तदर्थानां वा संसर्गाभावादित्यर्थः। ननु पदार्थज्ञानमात्रनिरूपणादभ्रान्तत्वनिरूपणमस्त्वित्यत आह पदार्थेति ॥ तस्य चेति ॥ आप्तोक्तत्वरूपविशेषणासिद्धेरित्यर्थः ॥ तद्रेकेति ॥ निश्चयैकफल-

प्रकाशिका।

भावादिति भावः। संसर्गस्येति। क्वचिन्नियतः संसर्गः यथा घटे रूपं, क्वचिदनियतोऽपि यथा नीलं सरोजमित्यत्र- तथाचानियतसंसर्गस्थलेऽप्रयोजकरूपवत्त्वलक्षणयोग्यतासत्त्वाद् व्यभिचार इत्यर्थः। केचित्तु संसर्गव्यभिचारीति पाठः। तत्रोक्तहेतोरुक्तसाध्यतदभावसाधारणतया व्यभिचार इत्यर्थः। साधारण्यमेव दर्शयति ययोरितीति व्याख्यातवन्तः। अनिश्चयस्य सन्नि-

मकरन्दः।

इति। तात्पर्यघटितसाध्ये व्यभिचारोऽयमुन्नेयः। संसर्गव्यभिचारीति। आकाङ्क्षादिमत्पदस्मारितत्वादिति हेतोः संसर्गव्यभिचारिसाधारणतया व्यभिचार इत्यर्थः। संसर्गव्यभिचारिसाधारण्यमेव दर्शयति ययोरिति। न चैवं तत्र योग्यतैव नेति कथं व्यभिचार इति वाच्यम्, घटस्यानयनमित्यत्र संसर्गव्यभिचारिणोरपि घटानयनयोर्योग्यपदस्मारितत्वात्। संसर्गस्य व्यभिचारीति क्वचित्पाठः स तु चिन्त्यः। अनिश्चयस्य सन्निहिततया तत्परामर्शभ्रमं वारयति निश्चयैकेति। योग्य-

टिप्पणी।

उक्तपदानां तदर्थानां वा संसर्गाभावादित्यर्थ इति। पदानां संसर्गाभावदित्यप्रकृतमिति

शेषमप्रतीत्य शक्यम्। बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यत्वात्। पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्। अनाप्तसाधारण्यात्। एतेषां संसर्गोऽयमभ्रान्त इति शक्यमिति चेन्न। एतेषां संसर्ग इत्यस्या एव बुद्धेरसिद्धेः। अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति॥

नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गाऽनिश्चयात्, वाक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य प्रागेव सिद्धेः। अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात्। तथा चाऽग्निना सिञ्चेदित्यादिना स्मारितैरनैकान्तः। तथाविधानां सर्वथा संसर्गायोग्यत्वादिति॥

द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति। तत्र केयमाकाङ्क्षा नाम? न तावद्विशेषणविशेष्यभावः, तस्य संसर्गस्वभावतया साध्यत्वात्। नाऽपि तद्योग्यता, योग्यतयैव गतार्थत्वात्। नाप्यविनाभावः। नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात्। तत्रापि विशेषाक्षिप्तसामान्ययोरविनाभावोऽस्तीति चेन्न। 'अहो विमलं जलं नद्याः कच्छे महिषश्चरती'त्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात्। नापि प्रतिपत्तुर्जिज्ञासा। पटो भवतीत्यादौ शुक्लादिजिज्ञासायां, रक्तः पटो भवतीत्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात्॥

---

बोधनी।

किमित्यत्राह **न चैतत्** इति। क्वचिदाप्तत्वमवधार्य सर्वत्रायमीदृश इत्यनुमास्यामह इत्यत्राह **यत्र क्वचित्** इति। वाक्यार्थप्रतीतेः आगमाप्तत्वासिद्धिमुपसंहरति **ततोऽस्मिन्** इति। ननु पदार्थास्तावत्प्रागेव प्रतीयन्ते तेषां सत्यत्वात्तत्राप्तिरप्यवधार्यत इत्यत्राह **पदार्थमात्रे च** इति। नन्वनवगतेऽपि वाक्यार्थे पदस्मारितानां पदार्थानां परस्परसंसर्गयोग्यतावदागमादेतत्संसर्गोऽयमभ्रान्त इति निश्चेतुं शक्यमित्याह **एतेषाम्** इति। **न** इति। नहि तदानीमेषां संसर्ग इत्यनुभवात्मिका बुद्धिः सिध्यति कारणाभावादिति। तत एव न स्मरणात्मिकापीत्याह **अननुभूत** इति।

द्वितीयं पादं व्याचष्टे **नापि द्वितीयः** इति। न परं साध्यासिद्धिः सिद्धसाधनं चेत्याह **योग्य-**

प्रकाशः।

त्वादित्यर्थः॥ **प्रागेवेति**॥ योग्यतया लिङ्गविशेषणेन सिद्धेरित्यर्थः॥ **तस्येति**॥ एकत्र पदार्थे पदार्थान्तरवैशिष्ट्यस्यैव संसर्गरूपत्वादित्यर्थः॥ **विशेषेति**॥ नीलेन गुणसामान्यमाक्षिप्यते, सरोजेन द्रव्यमात्रं, तयोश्चाविनाभावोऽस्त्येवेत्यर्थः॥ **अहो** इति॥ जलान्वितनद्या आश्रयीभूतकच्छे साकाङ्क्षतापत्त्यैकवाक्यतापातादित्यर्थः॥ **रक्त** इति॥ यथा रक्तः पटो भवतीत्यत्र रक्तपदार्थान्वयं विना पटो भवतीत्येकदेशो न पर्यवस्यति, तथा रक्तपदं विना यत्र पटो भवतीत्येव वाक्यमुच्चारितं, तत्रापि तन्न पर्यवस्येदित्यर्थः। अजिज्ञासोरपि वाक्यार्थज्ञानाच्चेति भावः॥

प्रकाशिका।

हितत्वात् परामर्षभ्रमं वारयति। **निश्चयेति**। **योग्यतयेति**। इदञ्च सम्भावितपदस्य योग्यपरत्वे दूषणम्, सन्दिग्धपरत्वे तु संसर्गासिद्धिरेव दोष इति स्मर्त्तव्यम्। **राजपदा-**

मकरन्द

**तया** इति। सम्भावितपदस्य लिङ्गविशेषणयोग्यतापरत्वे दूषणमिदम्। सन्दिग्धपरत्वे संसर्गानिश्चयादित्येव दूषणं बोध्यम्।

टिप्पणी

चिन्त्यम्। यथा वाक्यवाचकभावेनाभ्रान्तेनोक्तानां पदानामर्थेन यथा न वाच्यवाचकभावसंसर्गस्तथा योग्यताभ्रान्तेनोक्तपदार्थानां संसर्गः, वाकारः सादृश्य इतितु कथञ्चिद् व्याख्येयः॥

गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा । पट इत्युक्ते किंरूपः कुत्र किं करोतीत्यादिरूपजिज्ञासा । तत्र भवतीत्युक्ते किं करोतीत्येषैव पदस्मारितविषया, न तु किंरूप इत्यादिरपि । यदा तु रक्त इत्युच्यते, तदा किंरूप इत्येषाऽपि स्मारितविषया स्याद्, इति न किञ्चिदनुपपन्नमिति चेत् ।

एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान् । किमस्यां जातायामन्वयप्रत्ययोऽथ ज्ञातायामिति । तत्र प्रथमे नानया व्यभिचारव्यावर्त्तनाय हेतुर्विशेषणीयः, अनःसंयोगादिवत् सत्तामात्रेणोपयोगात् । आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकः । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ व्यभिचारात् । द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्व-

बोधनी ।

तामात्रस्य च इति । प्रागसिद्धौ दोषमाह अन्यथा इति । उत्तरमर्धं व्याचक्षाणः पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीति प्रयोगं दूषयति एवं द्वितीयेऽपि इति । एतच्च पूर्वत्रापि द्रष्टव्यम् । स एव संभविनः साक्षादुपन्यस्य निरस्यति न तावत् इति । साध्यत्वादिति । न साध्यमेव हेतुविशेषणमाकाङ्क्षा भवतीति । अस्तु तर्हि विशेषणविशेष्यभावयोग्यत्वैवाकाङ्क्षा तत्राह नापि इति । तस्याः प्रागेव हेतुविशेषणत्वेनोपादानादिति । तर्हि पदस्मारितानां पदार्थानामन्योन्याविनाभाव आकाङ्क्षेत्यत्राह नापि इति । नन्वस्ति तावद् गुणद्रव्यविशेषाभ्यां नीलसरोजाभ्यामाक्षिप्तयोः गुणद्रव्यसामान्ययोरविनाभावः, सोऽप्याकाङ्क्षेत्याह विशेष इति । यद्यविनाभाव आकाङ्क्षा तर्ह्यहो विमलं जलं नद्या इत्येतद्वाक्यगतस्य नदीपदस्य कच्छे महिषश्चरतीति वाक्यान्तरगतस्य कक्षपदस्य स्वार्थाविनाभावलक्षणं साकाङ्क्षत्वमस्तीत्यनयोर्वाक्यभेदो न स्याद्विभागे साकाङ्क्षाणामेकवाक्यत्वादित्याह न इति ।

ननु श्रोतुर्जिज्ञासा आकाङ्क्षा, तस्याश्च विमलं जलं नद्या इत्येतावतैव पर्यवसानाद्वाक्यभेदोपपत्तिरित्यत्राह—नापि इति । ननु न वयं जिज्ञासामात्रमाकाङ्क्षेति ब्रूमः किन्तु पदस्मारितविशेषविषयम्, अतो नातिप्रसङ्ग इत्याह—गुणक्रिया इति । सत्यमियमेवाकाङ्क्षा तथापि नैष हेतुविशेषणं संभवतीत्याह—एवं तर्हि—इति । जातायां जातमात्रायामज्ञातायामेवेति । नानया इति । न ह्यज्ञातमेव विशेषणं हेतोर्विपक्षाद् व्यावृत्तिं बोधयतीति मा भूदाकाङ्क्षा विशेषणमित्यत्राह—आसत्ति—इति । अयमेति पुत्रो राज्ञ इति एकं वाक्यं, पुरुषोऽपसार्यतामित्यपरं, तत्र राज्ञः पुरुष इत्यनयोर्योग्यतासत्ती स्तः तथापि नैकवाक्यत्वं क्रियान्तरसंबन्धेन निराकाङ्क्षत्वादिति । तर्ह्याकाङ्क्षापि ज्ञातैव विशेषणं भविष्यतीत्यत्राह द्वितीयस्तु इति । यथा हि सविशेषणेष्वनुमानान्तरेषु

प्रकाशः ।

गुणक्रियेति । पट इत्युक्ते किंगुणः ? किंक्रियः ? इति जिज्ञासा । तत्र यदा भवतीत्युच्यते, तदा जिज्ञासाविषयस्य क्रियाविशेषस्य पदेन स्मारणात् सैव जिज्ञासा आकाङ्क्षा । रक्त इत्युक्ते किंगुण इत्यपि सेत्यर्थः । सत्तामात्रेणेति ॥ स्वरूपसदाकाङ्क्षायोग्यतादिसान्निध्याच्छब्द एव ज्ञानजनने सम्भृतसामग्रीको लिङ्गमेव विलम्बितमिति भावः । व्यभिचारादिति । राजपदा-

प्रकाशिका ।

र्थेति । यद्यपि योग्यतासत्त्व ईश्वरसंसर्गज्ञानपूर्वकतया साध्यसत्त्वान्न व्यभिचारः । तथापि

मकरन्दः ।

राजपदार्थेति । यद्यपि योग्यतासत्त्वे ईश्वरसंसर्गज्ञानसत्त्वान्न व्यभिचारः, तथाप्यजनितान्वयबोधे

टिप्पणी ।

लिङ्गमेव विलम्बितमिति भाव इति । स्वविशेषणज्ञानापेक्षणादिति । प्रतिपदार्थान्विता-

यप्रत्ययो न जायते । न त्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्, निवृत्ताकाङ्क्षस्य च तदभावात् ॥

कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्, तावन्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः, अन्यत्र तथा दर्शनाच्च । यदा हि दूराद् दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदंश्च स्थाणुरयमिति प्रत्येति, तदाऽस्य ज्ञातुमहमिच्छामीत्यनुव्यवसायाभावेऽपि स्थाणुरयमित्यर्थप्रत्ययो भवति । तथेहाप्यविशेषाद् विशेषोपस्थानकाले संसर्गावगतिरेव जायते, न तु जिज्ञासावग-

बोधनी ।

सत्यपि विशेषणे तज्ज्ञानाभावेनानुमानाप्रतीतिः तद्वदत्रापि सत्यामप्याकाङ्क्षायां तज्ज्ञानाभावे यदि संसर्गप्रतीतिर्न स्यात्स्यादपि तदा द्वितीयकल्पे, न चैतदस्ति योग्यतासत्तिमात्रं प्रतिसंदधानस्याकाङ्क्षास्वरूपमात्रान्वयव्यतिरेकानुविधायित्वेनान्वयप्रतीतेर्दर्शनादिति ।

नन्वाकाङ्क्षासत्तैवान्वयप्रतीतिहेतुर्न तु ज्ञानमिति कुतो निश्चय इत्याह **कथम्** इति । सत्तामात्रेणोपपत्तौ ज्ञानकल्पनायां प्रमाणाभावाच्छब्दादन्यत्र जिज्ञासाहेतुकेषु तावन्मात्रेण तदुपयोगदर्शनाच्चेत्याह **न इति** । अविशेषादिति जिज्ञासाहेतुकत्वेनाविशेषादिति । किञ्च संसर्गप्रतियोगिपदार्थविशेषस्मरणकाले तद्विषयजिज्ञासावगतिरपेक्षेत ततः प्रागेव वा ? न प्रथमः, घटमित्युक्ते पश्यतीतिपदस्मारिते क्रियाविशेषे तत्संसर्गस्यैवावगमात् । न द्वितीयः, पदस्मारितविशेषजिज्ञासाया एवाकाङ्क्षापदार्थत्वेन ततः प्राग्भाविन्यास्तस्या गुणक्रियाद्यशेषविषयत्वेनाकाङ्क्षानात्मनो वाक्यार्थज्ञानं प्रत्यनङ्गत्वादित्याह **विशेषेति** । अस्तु ज्ञातैवाकाङ्क्षा संसर्गज्ञानहेतुः अस्तु च हेतोर्वि-

प्रकाशः ।

र्थपुरुषपदार्थयोरन्योन्यान्वये वक्तृज्ञानाभावादित्यर्थः । **अनुमानान्तरवदिति** । अनुमितिकारणान्तरव्याप्त्यादिवदित्यर्थः । यद्यऽपि प्रतिपदार्थान्विताकाङ्क्षायास्तत्काल एव नाशान्न कालान्तरे सत्त्वं, तज्ज्ञानहेतुत्वञ्च संस्कारद्वारा सम्भवति, तथापि पदार्थसमूहविषयाया एकस्या एवाकाङ्क्षायाः स्वरूपसत्त्वमस्त्येवेति भावः । **विशेषोपस्थानेति** । अन्वयप्रतियोगिपदार्थस्मरणानन्तराव्यवहितकाले इत्यर्थः ।

नन्वाकाङ्क्षा ज्ञाताऽन्वयधीहेतुः ज्ञायमानकारणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्याद् व्याप्तिवत् ।

प्रकाशिका ।

अजनितफले तात्पर्यघटितसाध्ये व्यभिचार इति भावः । **नन्विति** । तथा च तथा लिङ्गविशेषण-

मकरन्दः ।

तत्रेश्वरतात्पर्याभावात्तात्पर्यघटितसाध्ये व्यभिचार इति भावः । **नन्विति** । तथा चाकाङ्क्षाया

टिप्पणी ।

**काङ्क्षेति** । आकाङ्क्षाभाग्यः सम्बन्धपदार्थः प्रतिपदार्थतदन्वितपदार्थान्तरगोचरेत्यर्थः । **तत्काल एव नाशादिति** । उत्तरपदश्रवणकाले नाशात् न कालान्तरे सत्त्वमिति इति स्वरूपसत्या हेतुत्वञ्च सम्भवतीत्यर्थः । **तथापि पदार्थसमूहविषयाया इति** । तत्तत्पदार्थान्वितजिज्ञासामूलिकायाः । **नन्वाकाङ्क्षा ज्ञातान्वयधीहेतुरिति** । कार्यत्वेनाभिमतसंसर्गज्ञानहेतुस्तेन न दृष्टान्ते साध्यवैकल्यम् । **ज्ञायमानकारणे ज्ञानोपयोगिव्यभिचारीति** । ज्ञायमानकारणे ज्ञानेन य उपयोगस्सहकारिसम्पादनन्तद्व्यभिचरितुं शीलमस्य तद्विलक्षणत्वात् कारणज्ञाननिष्ठव्यभिचारनिरूपकज्ञानविषयान्यत्वादित्यर्थः । न हि कारणज्ञानमूलजनने व्याप्तिज्ञानम् व्यभिचरतीति भवति तत्तथा । यद्वा ज्ञायमानकारणे ज्ञानस्य फलीभूतज्ञानस्योपयोगिव्यभिचारिज्ञानान्तरस्थलसाधारणम् साधारणकारणमनःसंयोगादिकन्तद्वैलक्षण्यादित्यर्थः, एतेन प्रथमहेतोराकाङ्क्षादेर्ज्ञायमानहेतुत्वाधीनहेतुत्वेऽपि न

तिरिति । न च विशेषोपस्थानात् प्रागेव जिज्ञासाऽवगतिः प्रकृतोपयोगिनी, तादृग्मात्रस्यानाकाङ्क्षत्वात् । न चैवम्भूतोऽप्ययमैकान्तिको हेतुः । यदा ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वक्तोच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेनायमेति पुत्र इत्यश्रुत्वैव राज्ञः पुरुषोऽपसार्यतामिति शृणोति, तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वं, न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति ॥

---

बोधनी ।

शेषणं, तथापि न वाक्यार्थप्रतीतिरानुमानिकी विशेषणत्रयविशिष्टस्यापि पदार्थस्मारकत्वस्य हेतोरनैकान्तिकत्वादित्याह **न चैवंभूतोऽपि** इति । **न च** इति । न हि राज्ञ इत्यादिपदत्रयस्मारितानां राजपुरुषापसारणानां संसर्गबुद्ध्या तदुच्चारितं राजपुरुषयोः पुत्रापसारणाभ्यां संसर्गज्ञानपूर्वकत्वादिति ।

प्रकाशः ।

न चाप्रयोजकत्वम्, आकाङ्क्षासत्त्वेऽपि ज्ञानादन्वयबोधाभावापातात् । राजा पुत्रमाकाङ्क्षति पुरुषं वेति संशये तद्विपर्यये वाऽन्वयधीप्रतिबन्धाच्च ।

अत्रास्मत्पितृचरणाः—प्रवृत्तिपरत्वं शब्दस्य लिङ्गत्वे न स्यात् । अर्थज्ञानं हि प्रवर्तकं न तु तज्ज्ञानज्ञानं, गौरवात्, तदभावेऽप्यर्थज्ञानात् प्रवृत्तेश्च । अतो वक्ता घटज्ञानवानिति ज्ञानं न प्रवर्त्तकमपि त्वयं घट इति । घटज्ञानज्ञानमपि घटविषयमिति चेत् । सत्यम् । न तु घटत्वप्रकारकं, प्रवर्त्तकञ्च तथा । अन्यथा भ्रान्तस्यैव भ्रान्तिज्ञस्याऽपि प्रवृत्तिप्रसङ्गः । अत एव लक्षणानानार्थयोरन्वयबोधात् तात्पर्यग्रहो वाक्यार्थधीहेतुस्तच्च पदार्थसंसर्गविशेषज्ञानोद्देश्यकत्वमतस्तद्ग्राहकानुमानादेव तात्पर्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तम् । तात्पर्यज्ञानं न वाक्यार्थहेतुरिति वक्ष्यमाणत्वाच्च ।

प्रकाशिका ।

मुचितमिति न व्यभिचार इति भावः । ननु संशयसाधारणं ज्ञानमित्यर्थमयुक्तं निश्चयस्य क्वचिदप्य-

मकरन्दः ।

लिङ्गविशेषणत्वसम्भवादनुमान एवान्तर्भाव इति भावः । क्वचिदपि तदनिश्चये तत्संशयोऽपि

टिप्पणी ।

क्षतिः । **ज्ञायमानकारण इति** प्रत्यक्षासाधारणकारणे स्वरूपत उपयोगिनि व्यभिचारवारणायेति बोध्यम् । **अज्ञातोपयोगिव्यभिचारीति** पाठे व्यभिचारिणो प्रमाणादज्ञातोपयोगिनो यद्वैलक्षण्यन्तत्वादित्यर्थः । अप्रमाणदोषादि बोध्यम् । इष्टापत्तेराह **राजेति ।** स्वज्ञानाधीनस्वसम्बन्धिविशेषजिज्ञासाविषयपदस्मारितपुत्रकत्वराजनि तादृशजिज्ञासाविषयस्मारकपुत्रसमभिव्याहृतत्वं राजपदे तादृशजिज्ञासावत्त्वम्प्रमातरि यथायथमाकाङ्क्षा बोध्या । **न तु तज्ज्ञानज्ञानङ्गौरवादिति ।** शरीरगौरवात् सर्वत्रानुव्यवसायकल्पनागौरवाच्चेत्यर्थः । **तदभावेऽप्यर्थज्ञानादिति ।** विपक्षबाधकतर्काभावे व्यभिचारसंशयस्यापि कारणत्वग्रहविरोधित्वादिदमुक्तम्, तेन तदभावानिश्चयेऽपि न क्षतिः । **न तु घटत्वप्रकारकमिति ।** इदन्त्वावच्छिन्नघटत्वप्रकारकम्, किन्तु इदंविशेष्यकघटत्वप्रकारकत्वविषयकमित्यर्थः । **अन्यथा भ्रान्तस्यैव भ्रान्तिज्ञस्यापीति ।** विशेष्ये प्रकारानवगाहिनोऽपि विशेष्यप्रकारकत्वमात्रेण प्रवर्त्तकत्वे बाधकाले भ्रान्तिभ्रान्तित्वेन प्रकाररहिते विशेष्ये तत्प्रकारकत्वेन ज्ञानं जनयतोऽपीत्यर्थः । **अत एव लक्षणानानार्थादीति ।** लक्षणानुरोधान्नानार्थानुरोधाच्चेत्यर्थः । काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्तेरभावात्तात्पर्यानुपपत्तेरेव तद्बीजत्वम् तच्च तात्पर्य्यज्ञानस्यानपेक्षितत्वे न घटेतेति लक्षणानुरोधेन तात्पर्य्यज्ञानस्योपयोगः, नानार्थस्थलेऽपि तात्पर्य्यग्रहं विना व्यवस्थितैकार्थबोधो न स्यादिति तदुपयोग इति भावः । **पदार्थसंसर्गविशेषज्ञानोद्देश्यकत्वमिति ।** पदार्थसंसर्गविशेषज्ञानमुद्देश्यं स्वजन्यत्वेनेच्छाविषयो यस्य तत्कत्वम्, तदिच्छयोच्चारितत्वमिति यावत् । **संसर्गसिद्धिरित्यपास्तमिति ।** तत्प्रकारकत्वविशेष्यकत्वस्यैव ज्ञानविशेषणतया

स्यादेतत् । यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, तथाविधस्य व्यभिचारोदाहरणाऽस्पर्शात् । कुतस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः ?। अलिङ्ग एव लिङ्गत्वाध्यारोपात् । एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः । न । तत्सन्देहेऽपि श्रुतानुरूपसंसर्गावगमात् । भवति हि तत्र प्रत्ययो, न जाने किमपरमनेनोक्तमेतावदेव श्रुतं, यद्गाढः पुरुषोऽपसार्यतामिति । भ्रान्तिरसा-

बोधनी ।

**स्यादेतत्** इति । यावन्ति समभिव्याहृतानि पदानि तावतामाकाङ्क्षादिमत्त्वे सति पदार्थस्मारकत्वं हेतुस्ततो न व्यभिचार इति यदि विशिष्टो हेतुः कुतस्तर्हि तदभावे संसर्गप्रत्यय इत्याह **कुत** इति । वाक्यैकदेश एव यावत्समभिव्याहृतत्वभ्रान्तेरित्याह **अलिङ्ग** इति । भ्रान्तिमेव दर्शयति **एतावानेव** इति । यावत्समभिव्याहृतत्वसंदेहेऽपि संसर्गावगमान्न तदध्यारोपकारणमिति । नन्वसावेकदेशश्राविणः संसर्गप्रत्ययो भ्रान्तिरित्याह **भ्रान्ति**रिति । भवतु भ्रान्तिस्तथापि कुतश्चि-

प्रकाशः ।

अपि चानुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वात् पदानि स्मारितार्थसंसर्गज्ञानपूर्वकानीत्यनुमितिः स्यान्न घटज्ञानपूर्वकानीति । योग्यतायाश्च लाघवात् संशयादिसाधारणं ज्ञानमात्रं हेतुः । बाधसंशयस्य ज्ञानाप्रतिबन्धकत्वाच्च । अन्यथा प्रमामात्रोच्छेदप्रसङ्गात् । स्वपरबाधकप्रमाविरहः क्वचिन्निश्चीयतेऽपि यदेह भूतले घटो नास्तीत्यत्र स्वयोग्यानुपलब्ध्या घटाभावनिश्चयेनान्यस्यापि घटाप्रमाविरहो निश्चीयते । अत एव सा न लिङ्गविशेषणम् । बाधकप्रमाणविरहस्य सर्वत्र निश्चेतुमशक्यत्वात्, तत्संशयेऽपि शाब्दादन्वयबोधाल्लिङ्गविशेषणस्य च सर्वत्र निश्चितत्वादिति सङ्क्षेपः ।

एतदेवाभिसन्धाय पूर्वापरितोषेणाह **न चैवमिति** । आकाङ्क्षादेर्ज्ञायमानतया हेतुविशेषणत्वेऽपीत्यर्थः । **तत्सन्देहे** इति । यावत्समभिव्याहृतत्वसन्देहेऽपीत्यर्थः । **भ्रान्तिरसा**विति ।

प्रकाशिका ।

भावादत आह **स्वपरेति** । **अत एवेति** । यत एव संशयसाधारणं तज्ज्ञानं हेतुरित्यर्थः । ननु योग्यतासंशयस्य हेतुत्वमेव कुत इत्यत आह **बाधकेति** । **एतदेवेति** । आकांक्षाज्ञानहेतु-

मकरन्दः ।

दुर्लभ इत्यत आह **स्वपरेति** । **अत एवेति** । यत एव संशयसाधारणं तज्ज्ञानं हेतुरित्यर्थः । नन्वेतदेव कुत इत्यत आह बाधकेति । **एतदेवेति** । आकाङ्क्षाज्ञानहेतुत्वमेवेत्यर्थः । **दोषवत** इति **विपर्य्यय**

टिप्पणी ।

तत्पदार्थज्ञाने भानाभ्युपगमान्न तु विशेष्यप्रकारस्येति भावः । **तात्पर्यज्ञानं न वाक्यार्थधीहेतुरिति** । आवश्यकप्रकरणज्ञानहेतुतयैवोपपत्तेर्लक्षणां विना विवक्षितस्य दध्युपघातकत्वस्यान्वयानुपपत्तेरेव लक्षणाबीजत्वाल्लक्षणानुरोधेन तत्रोपयोगेऽपि हेतुत्वे मानाभावाच्चेति । **न घटज्ञानपूर्वकानीति** । तथैव तु न साध्यता दृष्टान्तेऽसम्भवादपूर्ववाक्यार्थस्थले साध्यज्ञानस्यैव सम्भवाच्चेति । **योग्यतायाश्च लाघवादिति** । बाधकप्रमाविरहो यत्र योग्यता स्वपरेत्याद्यग्रिमग्रन्थानुरोधात् न तु बाधकप्रमासंशयस्य बाधकसंशयपर्यन्तत्वात्तस्मिन् सति कथं शाब्दज्ञानं स्यादित्यत आह **बाधसंशयस्येति** । अथ बाधनिश्चयाभावस्यैव स्वरूपतो हेतुत्वमस्तु तस्य विशिष्टबुद्धिसामान्ये क्लृप्तत्वात् । न च वह्निना सिञ्चतीत्यादायोग्यस्य शाब्ददर्शनाच्छाब्दबोधे योग्यतापेक्षणीया, सा न बाधनिश्चयविरहमात्रं योग्ये बाधभ्रमसम्भवेनायोग्यत्वापत्तेः, नापि सा स्वरूपसत्येव हेतुः बाधप्रमाविरहभ्रमे शाब्दबोधस्यानुभविकत्वादिति वाच्यम् । वह्निना सिञ्चतीत्यादौ बाधनिश्चये कारणाभावादेव शाब्दाभावोपपत्तेर्योग्यताया अनपेक्षितत्वादिति चेत् । सत्यम्, यत्र भ्रमत्वप्रमात्वग्रहौदासीन्येन बाधनिश्चये सत्यपीच्छावशादुक्तयोग्यताग्रहे काव्यादिस्थले शाब्दबोधोऽनुभवसिद्धस्तत्रैव योग्यताज्ञानकारणताया आव-

विति चेद्, न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्। न लिङ्गाऽऽभासजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात्। एतादृक्पदकदम्बप्रतिसन्धानमेव तां जनयतीति चेत्। यद्येवमेतदेवादुष्टं सद्भ्रान्तिं जनयत् केन वारणीयम्?। व्याप्तिप्रतिसन्धानं विनापि तस्य संसर्गप्रत्यायने सामर्थ्यावधारणात्, चक्षुरादिवत्। नास्त्येव तत्र संसर्गप्रत्ययोऽसंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्। तर्हि यावत्समभिव्याहारेणापि विशेषणे नाप्रतिकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात्। असंसर्गाऽग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्। एवन्तर्हि

---

बोधनी।

त्प्रमाणाभासाद्भवितव्यं, न तावत्प्रत्यक्षाभासात् लिङ्गाभासाद्वा भवति, तत्फलवैधर्म्यादित्याह **न तावत्** इति। यदि कतिपयाग्रहणदूषितं पदकदम्बकप्रतिसंधानमेव भ्रान्तिं जनयेत्तदेवादुष्टमभ्रान्तिं जनयेन्नानुमानं लिङ्गाभिमानाभावेऽपि यथोक्तप्रकारेण प्रतीतिजननसामर्थ्यावधारणादित्याह **एतादृक्** इति। ननु स्यादेवं यदि यावत्समभिव्याहृतत्वसंदेहेऽपि व्याप्तिप्रतिसन्धानविधुरस्य संसर्गावगमो जायेत, न त्वेतदस्तीत्याह **नास्त्येव** इति। कुतस्तर्हि तत्र संसर्गव्यवहार इत्यत्राह

प्रकाशः।

कतिपयपदश्राविणो यः संसर्गप्रत्यय इत्यर्थः। **व्याप्तीति**। शब्दो न लिङ्गतया ज्ञापकः व्याप्त्यादिज्ञानरहितस्यापि दोषवतः अविपर्य्ययहेतुत्वाच्चक्षुर्वदित्यर्थः। **नास्त्येवेति**। कतिपयपदश्रवणं यत्रेत्यर्थः। संसर्गे बाधकाच्चेति भावः। **एवं तर्हीति**। असंसर्गाग्रहपूर्वकत्वसिद्धावपि तस्याप्रवर्त्त-

प्रकाशिका।

त्वमेवेत्यर्थः। **दोषवत इति**। व्याप्तिज्ञानं विना ज्ञानहेतुत्वादिति हेतुः, ज्ञानहेतुत्वञ्च प्रकृते विपर्ययमादायैव सिद्धमिति विभावयितुं **विपर्ययपदम्**। ननु कुतो विशेषाद् विपर्यय इत्यत उक्तं **दोषवत**

मकरन्दः।

इति च स्वरूपनिर्वचनं, ज्ञानहेतुत्वादित्यत्र तात्पर्यम्। **संसर्ग इति**। समस्ताश्रवणमेव बाधकमित्याशयः।

टिप्पणी।

**श्यकत्वात्**। नचैवं तदनुरोधेन बाधनिश्चयाप्रतिबन्धकत्वमेवास्त्विति वाच्यम्। **वह्निना सिञ्चतीत्यादावपि** तदापत्तेः, योग्यताज्ञानस्य चमत्कारादिरूपेष्टसाधनत्वग्रहविरहनिबन्धनेच्छाविरहेणानुत्पत्त्या मन्मतेऽसम्भवात्। न चेच्छया शाब्द एवाङ्गीक्रियतामिति वाच्यम्। परोक्षं ज्ञानमनाहार्य्यमिति सिद्धान्तभङ्गात्। योग्यताज्ञानाभावप्रत्यक्षे शाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवानुरोधेनापि योग्यतायाः कारणत्वाच्च। नचोक्तयुक्तिभिः पदार्थे तत्र तद्वत्त्वरूपयोग्यताज्ञानमेवास्तु हेतुर्लाघवादिति वाच्यम्। अपूर्ववाक्यार्थस्थले यत्र क्वचित् साधारणधर्मज्ञानादिविरहादुक्तयोग्यतायाः संशयोऽपि नोत्पन्नस्तत्रापि स्वस्य बाधकप्रमाविरहनिश्चये पुरुषत्वादिरूपसाधारणधर्मदर्शनात् पुरुषान्तरेऽप्युक्तयोग्यताया निश्चयस्य संशयस्य च सम्भवादस्मन्मते तत्रापि शाब्दसम्भवात्। ये त्वेतादृशं स्थलं न मन्यन्ते तैः पदार्थे तत्र तद्वत्त्वमेव योग्यत्वमुपेयते तन्मतेऽपि स्वपरेत्यादिग्रन्थः स्वपरबाधकप्रमाविरहः क्वचिन्निश्चीयते न सर्वत्र तदा कैव कथा योग्यतानिश्चयस्य सर्वत्रानेवंपरतया व्याख्येयः अत्र पक्षे बाधकसंशयस्येत्यादिग्रन्थः यथाश्रुत इति। **अन्यथा प्रमामात्रोच्छेदप्रसङ्गादिति**। बाधसंशयस्थलीयप्रमायोपवैजात्यावच्छिन्नोच्छेदप्रसङ्गादित्यर्थः। **एतदेवाभिसन्धायेति**। संशयसाधारणं योग्यतादिज्ञानं हेतुरित्येतदेवेत्यर्थः। **पूर्वापरितापेनाहेति**। पूर्वदोषस्याकाङ्क्षादेः स्वरूपत एव कारणत्वात् लिङ्गविधया हेतुत्वे ज्ञानस्यापेक्षणीयत्वं स्यात् तच्च नास्तीत्येतदभिप्रायकत्वात्। ज्ञातस्योपयोगित्वे लिङ्गविधयापि हेतुत्वे उक्तदोषासम्भव इत्यपरितोषः। **व्याप्त्यादिज्ञानेति**। यथाश्रुतस्य प्रकृतहेतुत्वासम्भवात् प्रकृतसङ्गमनाय व्याचष्टे **व्याप्त्यादीति**। आदिपदाल्लिङ्गतावच्छेदकस्य पक्षे लिङ्गस्य च परिग्रहः। यज्जातीयस्य व्याप्त्यादिप्रतिसन्धानं विना दोषवति विपर्य्ययहेतुत्वं तज्जातीयस्य न लिङ्गविधया प्रमाणत्वम् लिङ्गवि-

संसर्गो न सिद्ध्येत्। आप्तवाक्येषु सेत्स्यतीति चेन्न। सर्वविषयाऽऽप्तत्वस्यासिद्धेः। यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात्। प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्॥

न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात्। आकाङ्क्षापदार्थस्तर्हि कः? । जिज्ञासां प्रति योग्यता। सा च पदस्मारिततदाक्षिप्तयोरविनाभावे सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः। न चैषोऽपि ज्ञानमपेक्षते, प्रतियोगिनिरूपणाऽधीननिरूपणत्वात्, तदभावनिरूपणस्य च विषयनिरूप्यत्वादिति॥१३॥

बोधनी।

**असंसर्ग** इति। यदि यावत्समभिव्याहृतत्वविशेषणविधुरस्य संसर्गज्ञानपूर्वकत्वाभावो न दोषाय विशिष्टस्य हेतुत्वात् तर्हि तद्विशेषितेऽपि हेतावनैकान्तिकत्वं सुवचमित्याह **तर्हि** इति। नन्वनाप्तवाक्यस्याप्यसंसर्गाग्रहपूर्वकत्वात्तावन्मात्रसाधने न व्यभिचार इत्याह **असंसर्गाग्रह** इति। एवं हि न कुतश्चिदपि वाक्यात् संसर्गावगतिः स्यादित्याह **एवं तर्हि** इति। नन्वाप्तप्रणीतत्वेनापि हेतुं विशेषयिष्यामः, तथा च तस्य न व्यभिचार इत्याह **आप्तवाक्येषु** इति। तदेतत्प्रथमानुमान एवाशङ्क्य निरस्तमित्याह **न** इति।

एवमाकाङ्क्षा नाम जिज्ञासेत्यङ्गीकृत्य तस्याः सत्तया वाक्यार्थज्ञानहेतुत्वाल्लिङ्गविशेषणत्वं न संभवतीत्युक्तम्, इदानीं तु सत्तयापि हेतुत्वं नास्तीत्याह **न च सर्वत्र** इति। न हि प्रथममेव पूर्णवाक्यश्राविणो जिज्ञासापूर्वकः संसर्गप्रत्यय इति। यदि न जिज्ञासा का तर्हि वाक्यार्थप्रतीतिहेतुराकाङ्क्षेत्याह **कस्तर्हि** इति। **जिज्ञासाम्** इति। अयमर्थः—पदस्मारितस्य स्मारिताक्षिप्तस्य वा स्मारितेन तदाक्षिप्तेन वाऽविनाभावे सति श्रोतरि तत्पदार्थोत्पाद्यस्य संसर्गावगमस्य प्रागभावो जिज्ञासां प्रति योग्यता, सा चात्राकाङ्क्षेति। पदार्थाविनाभाव आकाङ्क्षेत्युक्ते पटो भवतीतिवाक्यपदपदार्थस्य गुणाविनाभावेन तत्साकाङ्क्षत्वात् रक्तः पटो भवतीति वाक्यैकदेशवच्च पर्यवस्येदत उक्तं **पदस्मारित** इति। तर्हि नीलं सरोजमित्यत्र पदस्मारितयोर्नीलसरोजयोरविनाभावाभावादेकवाक्यता न स्यादत उक्तं **तदाक्षिप्तस्य** इति। तत्र च विशेषयोर्विनाभावेऽपि तदाक्षिप्तगुणत्वद्रव्यत्वसामा-

प्रकाशः।

कत्वात् प्रवर्त्तकं संसर्गज्ञानं न स्यादित्यर्थः। **सर्वेति**। आप्तोक्तत्वस्य च लिङ्गविशेषणतया ज्ञातस्यैव हेतुत्वादित्यर्थः। **सिद्ध्यभ्युपगमादिति**। सिद्ध्यभ्युपगमप्रसङ्गादित्यर्थः। तथा च शब्दस्यानुवादकत्वेनाप्रामाण्यापत्तिरिति भावः। तदेवं पदस्मारितपदाऽर्थविषया जिज्ञासेत्यङ्गीकृत्य उक्तं, सम्प्रति तामप्यव्यापकतयाऽऽस्कन्दितुमाह **न चेति**। अथ योग्यतैव केत्यत आह **सा चेति**। शब्दस्मारितयोरविनाभावो, यथौदनं पचतीत्यत्र क्रियाकारकयोः। तदाक्षिप्तयोरविनाभावो यथा नीलं सरोजमस्तीत्यत्र विशेषाक्षिप्तयोर्द्रव्यगुणसामान्ययोः। प्रतिपादके संसर्गज्ञानप्रागभावो नास्तीत्यत उक्तं **श्रोतरीति**। वाक्यान्तरोच्चारणेन तत्रापि सोऽस्तीत्यत उक्तं **तदुत्पाद्येति**। तद्वाक्योच्चारणजन्य इत्यर्थः। **प्रतियोगीति**। संसर्गाऽवगमप्रागभावो हि प्रतियोगिनि तदवगमे ज्ञाते ज्ञातव्यः, स च स्वविषये संसर्गे ज्ञाते बोद्धव्य इति संसर्गस्य प्रागेव ज्ञानाद्वाक्यस्याऽनुवादकत्वादप्रामाण्यापत्तिरित्यर्थः।

प्रकाशिका।

इति। **संसर्गबाधकाच्चेति**। संसर्गज्ञाने समस्ताश्रवणमेव बाधकमिति भावः। चकारोऽनभ्युपगमादिति हेतुमाश्रयत्यं समुच्चिनोति। **तर्हीति मूलम्** असंसर्गाग्रहेणापि व्यवहारस्वीकारेण शब्दप्रयोगात्मकोऽपि व्यवहारोऽनाप्तस्यासंसर्गाग्रहादेव स्यादिति यावत्। समभिव्याहा-

टिप्पणी।

यथा प्रमाणं धूमः, दोषवति व्याप्त्यादिप्रतिसन्धानं विना ह्रदो वह्निमानिति भ्रमञ्च जनयति जनयति च चक्षुरतो धूमजातीयपर्वते वह्निबोधे न लिङ्गविधयैव प्रमाणं न चक्षुः, प्रकृते च भ्रान्तिजनकत्वेना-

बोधनी।

न्ययोरविनाभावात्साकाङ्क्षत्वेनैकवाक्यतेति । तथाप्यहो विमलं नद्या जलं कच्छे महिषश्चरतीति वाक्ययोर्भेदो न स्यात् नदीकच्छयोरविनाभावेन साकाङ्क्षत्वादत उक्तं **तदुत्पाद्य** इति । अत्र हि पूर्ववाक्यस्थनदीपदार्थोत्पाद्यस्य जलसंसर्गावगमस्य न प्रागभावस्तथोत्तरवाक्यस्थकच्छपदार्थोत्पाद्यस्य महिषसंचरणसंसर्गावगमस्यापि न प्रागभावः, तेन तयोर्निराकाङ्क्षत्वान्नैकवाक्यतेति । अस्त्वियमाकाङ्क्षा ततः किमित्यत आह **न चैष** इति । तेन हेतुविशेषणत्वायोगान्नानुमानत्वमिति । कुतो नापेक्ष्यत इत्यत्राह **प्रतियोगि** इति । संसर्गावगमप्रागभावोऽपि प्रतियोगिभूतसंसर्गावगमनिरूप्यः, स चाकाङ्क्षाधीननिरूपण इति इतरेतराश्रयत्वप्रसङ्ग इति । तदेवं शब्दमात्रस्यानुमानान्तर्भावं वदन्तो निरस्ताः ॥

प्रकाशः।

ननु निराकाङ्क्षे तदुच्चारणजन्यसंसर्गज्ञानप्रागभावस्य सिद्ध्यऽसिद्धिभ्यां व्याघातः । प्रागभावस्य च कार्यमात्रहेतुत्वान्न शब्दासाधारण्यम् । प्रागभावाभावस्य च कारणान्तराभावव्याप्यत्वात्तत एव कार्याभाव इति आकाङ्क्षा न हेतुः स्यात् । योग्यताऽऽसत्योरकारणत्वापत्तिश्च । अयोग्यानासन्नयोस्तदुच्चारणजन्यसंसर्गधीप्रागभावाभावादेवान्वयबोधानुत्पत्तेः ।

अथ ज्ञाप्यतदितरान्वयप्रकारकजिज्ञासानुकूलोपस्थितिहेतुत्वे सत्यजनिततात्पर्यविषयान्वयबोधक-

प्रकाशिका।

रविशिष्टोऽपि हेतुस्तत्र व्यभिचारी स्यादित्यर्थः । **असंसर्गाग्रहेति** । संवादिप्रवृत्तौ विशिष्टज्ञानस्य हेतुतयाप्तवाक्यादावपि संसर्गासिद्धौ प्रवृत्तिर्न स्यादित्यर्थः । एवं च संसर्गो न सिद्ध्येदिति मूले क्वचिदपीति शेषः । **आप्तवाक्येष्विति** मूलं, तथाचाप्तोक्तत्वेन हेतुविशेषणान्न व्यभिचार इति भावः । अभ्युपगमो वस्तुगत्या नास्तीत्यत आह **सिद्ध्यभ्युपगमेति** । **तथा चेति** । शब्दस्यानाभिषिक्तस्यानुमानस्याप्रामाण्यापत्तिरित्यर्थः । यथाश्रुते इष्टापत्तेः । **स्मारितयोरिति** । सत्यन्तं चाकांक्षालक्षणे स्वरूपनिर्वचनपरमित्यवसेयम् । नन्वेवं गौरश्व इत्यादेरप्यभेदान्वये साकाङ्क्षतापत्तिरित्यत आह **गौरश्व इति** । तथाचेष्टापत्तिरिति भावः । पदार्थानां स्वरूपेणोपस्थितिरुक्तजिज्ञासानुकूला न वा, अन्त्ये दोषमाह **नामेति** । आद्ये दोषमाह **घटः कर्मत्वमिति** । **अभिधानेति** । अन्वयबोधानिष्पत्तिरित्यर्थः । अन्वयावोधापर्यवसानमात्रं स्वरूपायोग्येऽप्यस्तीत्यतः **तद्विशेषणेति** । **येन विनेति** । स्वरूपायोग्ये च तत्प्रयुक्तमेवान्वयबोधापर्यवसानम् न तु पदान्तरव्यतिरेकप्रयुक्तमिति भावः ॥ १२ ॥

मकरन्दः।

**तस्येति** । असंसर्गाग्रहस्येत्यर्थः । **स्मारितयेरिति** । एतच्च सत्यन्तं विशेषणं स्वरूपनिर्वचनम् । नन्वेवं गौरश्व इत्यादावभेदान्वयबोधे आकाङ्क्षा स्यादित्यत्र आह **गौरश्व** इति । तथा चेष्टापत्तिरिति भावः । यदि च स्वरूपेणैव तदुपस्थितिस्तदनुकूला, तत्राह **घटः कर्मत्वमिति** । **अभिधानेति** । अभिधानमन्वयानुभवः, तस्यापर्यवसानमनिष्पत्तिरित्यर्थः । एतच्च घटः कर्मत्वमित्यादावप्यस्तीत्यन्यमपर्य्यवसानपदार्थमाह **येनेति** । घटः कर्मत्वमित्यादेश्च नेतरव्यतिरेकप्रयुक्तं क्रियाकर्मभावेनान्वयानुभावकत्वं, किन्तु स्वरूप योग्यत्वप्रयुक्तं, तत्समवधानेऽपि तदननुभावकत्वात् अभेदान्वये च तत्राप्याकाङ्क्षाऽस्त्येव, अयोग्यत्वाच्च नान्वयधीरित्यत आह **घटः कर्मत्वमिति** । आकाङ्क्षालक्षणादिकं शब्दप्रकाशे सम्यग्व्याख्यातमनुसन्धेयम् ॥१२॥

टिप्पणी।

न्यत्र प्रमाणत्वेन सम्प्रतिपन्नशब्दजातीय एव तथा स्वीकृतो न च तत्रास्ति लिङ्गतावच्छेदकनिश्चय इति न शब्दो लिङ्गविधया प्रमाणमिति प्रकृते सङ्गतम् । व्याप्तिज्ञानविरहेऽपि ज्ञानजनकत्वमात्रपरत्वेऽदृष्टं सदा भ्रान्तिं जनयेदित्यत्र किमिव सङ्गतं स्यात्, अत एव विपर्य्ययहेतुत्वादित्यस्य ज्ञानहेतुत्वादिदित्यत्र तात्पर्य्यमित्युक्तिः केषाञ्चिदनादरणीयैव। **सिद्ध्यसिद्धिभ्यां व्याघात इति**। घटः कर्मत्वमित्यादिवाक्यं निराकाङ्क्षमिति व्यवहारविज्ञेय इत्यर्थः । **अथ ज्ञाप्यतदितरान्वयेति** । यत्पदे

प्रकाशः।

त्वमाकाङ्क्षा। घटमानयतीत्यत्र हि घटमित्युक्ते किमानयति पश्यति वा, आनयतीत्युक्ते किं घटमन्यद्वेति जिज्ञासा भवति गौरश्व इत्यत्र नामभेदेनान्वयोऽयोग्यत्वात्। राज्ञ इति पुत्रेण जनितान्वयबोधत्वाच्च पुरुषमाकाङ्क्षति। मैवम्। नामविभक्तिधात्वाख्यातार्थानां घटकर्मत्वानयनकृतीनां स्वरूपेणोपस्थितिर्नान्वयप्रकारकजिज्ञासानुकूलेति तत्राकाङ्क्षाविरहापत्तेः। घटः कर्मत्वमानयनं कृतिरित्यत्र घटमानयतीत्यत्रेवान्वयबोधापत्तेश्च।

अत्राहुः—अभिधानापर्यवसानमाकाङ्क्षा। येन विना यस्य न स्वार्थान्वयानुभावकत्वं, तस्य तदपर्यवसानम्। नामविभक्तिधात्वाख्यातक्रियाकारकपदानां परस्परं विना न स्वार्थान्वयानुभावकत्वम्। घटः कर्मत्वमानयनं कृतिरित्यत्राभेदेन नान्वयज्ञानमयोग्यत्वात्। योग्यता च बाधकमानाभावः। अन्यत्र यद् बाधकं तदभावस्यायोग्येऽपि सत्त्वात्। प्रकृतसंसर्गे च न तदभावः, सिद्ध्यसिद्धिव्याघातात्। न च प्रकृतसंसर्गेऽन्यत्र सिद्धबाधकमानाभावः, प्रकृतसंसर्गस्य प्रागप्रतीतेः। स्वबाधकप्रमाणविरहस्यायोग्येऽपि सत्त्वात्। सकलतदभावस्य च ज्ञातुमशक्यत्वात्। न च स्वरूपसन्नेवायं हेतुः। योग्यताभ्रमादन्वयबोधानुपपत्तेः। नापि सजातीयेऽन्वयदर्शनं, यथाकथञ्चित् साजात्यस्याव्यावर्त्तकत्वात्। पदार्थतावच्छेदकरूपेण च तस्य वाक्यार्थापूर्वतया निरासात्। नापि समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मशून्यत्वं, प्रमेयमभिधेयमित्यादौ संसर्गाभावाप्रसिद्ध्या तदनिरूपणात्। नापि समभिव्याहृतपदार्थसंसर्गव्याप्यधर्मवत्त्वं, वाक्यार्थस्यानुमेयतापत्तेः। किं त्वितरपदार्थसंसर्गे

टिप्पणी।

वाक्यघटके यत्साकाङ्क्षत्वं रक्षणीयं तत्पदार्थान्वययोग्यतत्पदोपस्थाप्यं ज्ञाप्यम्, ज्ञाप्यतदितरयोरन्वयस्य यः प्रकारो विशेषस्तस्य जिज्ञासेत्यर्थः। **राज्ञ इति पुत्रेण जनितेति।** अयमेतीत्यादौ राजपदार्थस्य पुत्रपदार्थेनान्वयबोधे जाते पश्चात् पुरुषपदार्थेनान्वयबोधवारणाय विशेष्यम् स्वरूपेणान्वयप्रकारकेति। परस्परासंसृष्टतया च ज्ञानमपूर्ववाक्यार्थस्थलेप्यसम्भवत्किमिति न विवक्षितुं शक्यम् सम्भवन्ती चोपस्थितिर्नानुकूला अनुकूलत्वे च तस्याः स्वीकृते घटः कर्मत्वमित्यत्रापि स्यादिति भावः। **येन विना यस्य न स्वार्थेति।** यत्पदव्यतिरेकप्रयुक्तो यत्पदार्थान्वितस्वार्थानुभावकत्वाभावो यस्य तस्य स एव तत्पदसाकाङ्क्षत्वम्, अर्थात्तत्तत्प्रकृतिप्रत्ययक्रियाकारकपदानां तत्तदर्थान्वयबोधानुकूलः समभिव्याहार आकाङ्क्षेति पर्यवसितम्। **अन्यत्र यद्बाधकमिति।** अन्यत्र प्रकृतसंसर्गभिन्ने योग्यस्थलेऽपि प्रकृतसंसर्गान्वयत्किञ्चिद्गोचरबाधकप्रमाविरहोऽस्त्येव क्वचिद्बाधकप्रमासत्त्वेन योग्यस्थलेऽपि बाधकप्रमासामान्यविरहासम्भवेन तस्य विवक्षितुमशक्यत्वादिति। **बाधकमानाभाव इति।** विषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकः। बाधप्रमासत्त्वेऽपि काव्यस्थले चमत्काररूपेष्टसाधनत्वग्रहादिच्छया बाधकप्रमाविरहज्ञानमाहार्यमुपजायमानञ्चमत्कारहेतुं शाब्दं जनयति स्वरूपतो बाधकप्रमाविरहस्य हेतुत्वे तन्न स्यात्। नचेच्छया शाब्द एव भवत्विति वाच्यम्। परोक्षं हि ज्ञानमनाहार्यमिति प्रवादादिति। योग्यताज्ञानाभावप्रयुक्तं शाब्दसामग्रीप्रतिबन्धकत्वाकल्पनेन लाघवाच्च तज्ज्ञानस्यैव हेतुत्वं वाच्यमित्यभिप्रेत्याह **प्रकृतसंसर्गस्येति।** **प्रागप्रतीतेरिति।** तत्रोक्तयोग्यताया प्रत्येतुमशक्यत्वादिति। **स्वबाधकेति।** स्वं प्रकृतान्वयबोधाश्रयः श्रोता। **प्रकृतसंसर्गे च न तदभाव इति।** प्रकृतैकपदार्थविशेष्यप्रकृतापरपदार्थसंसर्गाभावस्य यन्मना प्रमितिस्तदभावेत्यर्थः। योग्यस्थले बाधप्रमासिद्धौ न तदभावः तदसिद्धौ अलीकप्रतियोगिकत्वान्नाभाव इत्युभयथा योग्यताव्याघात इत्यर्थः। **अयोग्येऽपि सत्त्वादिति।** स्वस्य बाधज्ञानाभावकाले तत्र च तज्ज्ञानस्य प्रमात्वात् प्रमाशाब्दबोधापत्तिरिति भावः। **सकलतदभावस्येति।** स्वपरनिष्ठतदभावस्येत्यर्थः। **ज्ञातुमशक्यत्वादिति।** परज्ञानाभावस्य

प्राभाकरास्तु—लोकवेदसाधारणव्युत्पत्तिबलेनाऽन्विताभिधानं प्रसाध्य वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वतन्त्र्येण प्रामाण्यमास्थिषत । लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभिधानबलायातेऽपि प्रतिपादकत्वेऽनुवादकतामात्रं वाक्यस्येति-निर्णीतवन्तः । तदतिस्थवीयः—

**निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ॥**
**व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥**

यावती हि वेदे सामग्री, तावत्येव लोकेऽपि भवन्ती कथमिव नार्थं गमयेत्,

---

बोधनी ।

संप्रति ये वैदिकस्य पृथक्प्रमाणत्वमङ्गीकृत्य लौकिकस्यानुमानान्तर्भावमातिष्ठन्ते तेषां मतमुपन्यस्य निरस्यति **प्राभाकरास्तु** इति । स्थूलतामेवाह **निर्णीतशक्ते**रिति । लोकवेदसाधारणव्युत्पत्तिबलेन वाक्यार्थप्रतिपादने निर्णीतशक्तेर्वाक्यादेव वेदवल्लोकेऽपि वक्तृज्ञानानुमानात् प्रागेव वाक्यार्थनिर्णये जाते सति व्याप्तिस्मृतिसव्यपेक्षत्वेन विलम्बितप्रवृत्तेः वक्तृज्ञानस्यैवानुवादत्वं भवेन्न वाक्यस्येति व्याचष्टे **यावती** इति । आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थाभिधानशक्तिप्रतिसन्धानमेव हि वेदवाक्यार्थप्रतिपादनसामग्री, सा च लौकिकानामप्यविशिष्टेति कथमिव तानि न वाक्यार्थं प्रतिपादयेयुः । वक्तृज्ञानलिङ्गे तु वाक्ये सति स्वार्थविषयज्ञानानुमानायार्थाभिधानशक्तिं तावत् प्रतिसंधाय वाक्यस्य वक्तृज्ञानेन व्याप्तिरनुसंधातव्या । ततश्च विलम्बकारिणो लिङ्गस्य निर्णेतव्यं नावशिष्यते । यथाहुः 'अश्वैरुपहृतं को हि गर्दभैः प्रार्थितुं क्षमः' इति । लोके वक्तुराप्तिनिश्चयः सामग्रीति वाच्यं

प्रकाशः ।

अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो योग्यता । प्रमेयमभिधेयमित्यत्र प्रमेयनिष्ठात्यन्ताभावप्रतियोगिप्रमाविशेष्यत्वं गोत्वे प्रसिद्धम्, अभिधेयत्वसंसर्गे च तदभावः । आसत्तिश्चाव्यवधानेनाऽन्वयप्रतियोगिस्मृतिरिति सङ्क्षेपः ॥ १३ ॥

प्रसङ्गसङ्गतेराह—**प्राभाकरा**स्त्विति । **लोके**ति । य एव लौकिकास्त एव वैदिका इति भावः । **व्युत्पत्तिबले**नेति । व्यवहारेणेतरान्वितपदार्थज्ञानस्यैव स्वकारणस्यानुमितेरित्यर्थः ।

वेदे क्लृप्तसामग्रीतो लोकेऽपि संसर्गानुभवादन्यथा तत्रानुवादकताऽपि न स्यादित्याह **निर्णीतेति** । आकाङ्क्षादिमत्तया ज्ञानात् प्राग् लिङ्गज्ञानाभावात् तद्वत्तया च ज्ञाने वेदतुल्यतयाऽन्वयबोधे विलम्बाभावादन्यथा वैदिकवाक्यादपि स न स्यात्, तस्य लौकिकोपजीवकत्वादिति

प्रकाशिका ।

**लौकिकोपजीवकत्वादिति** । लोकस्थल एव व्यवहारेण शक्तिग्रहादित्यर्थः । लौकिकतुल्यत्वात् य एव लौकिका इति न्यायादित्यर्थ इत्यन्ये ॥ १४ ॥

मकरन्दः ।

उपजीवकत्वात् तुल्यत्वात् । य एव लौकिकास्त एव वैदिका इत्याशयात् । लोके व्युत्पत्तिग्रहो व्यवहारादिति तस्योपजीव्यत्वमित्यप्याहुः ॥ १४ ॥

टिप्पणी ।

परायोग्यत्वात् । **प्रतियोगित्वप्रमाविशेष्यत्वाभावो योग्यतेति** । न च योग्यताज्ञानकारणत्वमुक्त्वा पदार्थे तत्र तद्रूपाया योग्यताया एवास्तु ज्ञानकारणत्वं लाघवादिति वाच्यम् । अपूर्ववाक्यार्थस्थले तदसम्भवात् । नचानिश्चयेऽपि संशय एवास्तु कारणं, सर्वत्र तत्सामग्रीसम्पत्तौ मानाभावात्तथात्वे च स्यादेव तस्याहेतुत्वमुच्यते च तत् कैश्चिदिति ॥ १३-१४ ॥

न ह्यपेक्षणीयान्तरमस्ति, लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयाऽस्तीति विलम्बेन किं निर्णयम्? । **अन्वयस्य प्रागेव प्रतीतेः** ॥

लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न । तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात् । अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात् । न च लोके अन्यान्येव पदानि, येन शक्तिवैचित्र्यं स्यात् । अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्याऽपि सामग्री सन्देहेन शिथिलायते इति चेन्न । चक्षुरादौ व्यभिचारदर्शनेन शङ्कायामपि सत्यां ज्ञानसामग्रीतरतदुत्पत्तिदर्शनात् ॥

ज्ञायमानस्यायं विधिर्यत्सन्देहे सति निश्चायकं यथा लिङ्गं, चक्षुरादि तु सत्तयेति चेन्न । वाक्यस्य निश्चितत्वात्, फलप्रामाण्यसन्देहस्य च फलोत्तरकालीनत्वात् । आप्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात् । लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः । भवति हि वेदानुकारेण पठ्यमानेषु मन्वादिवाक्येषु अपौरुषे-

---

**बोधनी ।**

व्युत्पत्तिकाले तस्यातन्त्रीकृतत्वादित्याह **लोके तु** इति । आप्तेरपि शक्त्यवधारणोपयोगित्वे तद्विरहिणि वेदे वाक्यार्थप्रत्ययो न स्यादित्याह **अन्यथा** इति । **न च** इति । लौकिकवेदाधिकरणसिद्धान्तव्याकोपप्रसङ्गादिति । ननु तुल्यापि सामग्री अनाप्तवाक्येषु दृष्टव्यभिचारपौरुषेयत्वसाधर्म्येण सर्वत्रापि व्यभिचारशङ्कायां नार्थप्रतिपादनसमर्था भवतीत्याह **अनाप्तोक्तौ** इति । **न** इति । न हि दृष्टव्यभिचारं चक्षुर्ज्ञानं न जनयतीति ।

ननु ज्ञायमानतया ज्ञापकत्वाद्वाक्येन लिङ्गस्य रीतिरनुसर्तव्या न तु चक्षुरादेरित्याह **ज्ञायमानस्य** इति । किमत्र वाक्यस्य स्वरूपसंदेहो वाक्यार्थज्ञानजननं प्रतिबध्नाति, किं वा वाक्यफलस्य ज्ञानस्य विसंवादात् प्रामाण्यसंदेहः । तत्र वाक्यं तावन्निश्चितमेव, ज्ञानप्रामाण्यसंदेहस्तु कथं ज्ञानोत्पत्तेः पश्चाद्भवन् पूर्वभाविनीं तदुत्पत्तिं प्रतिबध्नीयादित्याह **न वाक्यस्य** इति । नन्वाप्तोक्तत्वसंदेह एव वाक्यस्य प्रत्यायकत्वं प्रतिबध्नातीत्यत आह **आप्तोक्तत्वस्य** इति । वेदे तदभावेऽप्यर्थप्रत्यायकत्वदर्शनादनङ्गत्वमिति मा भूद्वेदे, लौकिके तु तदङ्गं भविष्यतीत्यत्राह **लोकेऽपि** इति । वेदानुकारः स्वरविशेषस्तेन सादृश्याद्वेदत्वाभिमानालम्बनमुक्तं, मन्वादिवाक्येष्वत्यर्थसादृश्यात् । गौडो मीमांसकः पञ्चिकाकारः । गौडो हि वेदाध्ययनाभावादवेदत्वं न जानातीति गौडमीमांसकस्येत्युक्तमिति । ननु

**प्रकाशः ।**

भावः । प्रत्युतानुमाने व्याप्तिस्मृत्यादिविलम्बादनुमितिविलम्बेन तस्यैवानुवादकत्वमित्याह **व्याप्तिस्मृतीति । लोके** इति । स च न वक्तृज्ञानानुमानं विनेति भावः । तं विनाऽपि वेदादन्वयबोधादव्यभिचारात् स न तत्र हेतुरित्याह **तद्रहितस्याऽपी**ति । य एव लौकिकास्त एव वैदिकास्त एवामीषामर्था इत्याह **न चे**ति । यथा स्थाणुपुरुषसंशये चक्षुर्न निश्चायकं, तथाऽऽप्तोक्तत्वानाप्तोक्तत्वसन्देहे तुल्याऽपि सामग्री न निश्चायिकेत्याह **अनाप्तोक्ता**विति । यथा समानविषयकसन्देहस्यैव प्रतिबन्धकत्वाद्भिन्नविषयकोऽप्रमाजनकत्वसंशयो न चाक्षुषनिश्चयप्रतिबन्धकः, तथाऽऽप्तोक्तत्वसन्देहोऽपि न शाब्दनिश्चयप्रतिबन्धक इत्याह **चक्षुरादा**विति । सन्देहः किं वाक्यस्वरूपे, तज्जनितज्ञानप्रामाण्ये वा, आप्तोक्तत्वे वा? । आद्ये **वाक्यस्ये**ति । द्वितीये **फले**ति । अन्त्ये **आप्तोक्तत्वस्ये**ति । न चाप्रमाजनकत्वे सन्देहः, तत्प्रतिबन्धकत्वे मानाभावादिति भावः । ननु लोके आप्तोक्तत्वसन्देहे वाक्यार्थज्ञानानुदयात् तन्निश्चयस्तद्धेतुः, तथा च वाक्यार्थगोचरपदार्थज्ञानजन्यत्वग्राहकात् तदुपजीविनोऽनुमानाद्वाक्यार्थधीरित्यत आह **लोकेऽपी**ति ॥ १४ ॥

यत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयः। न चासौ भ्रान्तिः, पौरुषेयत्वनिश्चयदशायामपि तथा निश्चयादिति ॥ १४ ॥

स्यादेतत्, नाप्तोक्तत्वमर्थप्रतीतेरङ्गमिति भ्रमः, किन्त्वनाप्तोक्तत्वशङ्कानिरासः, स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वावधारणादिति चेत्। तत् किमपौरुषेयत्वस्याप्रतीतौ सन्देहे वा वेदवाक्याद्विदितपदार्थसङ्गतेरर्थप्रत्यय एव न भवेत्, भवन्नपि वा न श्रद्धेयः ?। प्रथमे सत्यादय एव प्रमाणम्। न चासंसर्गाग्रहे तदानीं संसर्गव्यवहारो, बाधकस्यात्यन्तमभावात्। तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात्। द्वितीये त्वश्रद्धा प्रत्यक्षवन्निमित्तान्तरान्निवर्त्स्यतीति वेदे यदि, लोकेऽपि तथा स्यादविशेषात् ॥

अन्यथा वेदस्याप्यनुवादकताप्रसङ्गः।

---

बोधनी।

पौरुषेयत्वाग्रहणकृतोऽयं निश्चयो भ्रान्तिरित्यत आह न चासौ इति। यदि हि तथा स्यात्पौरुषेयत्वग्रहे सति बाध्येत तदग्रहकृतस्य भ्रमस्य तद्ग्रहणे निवर्त्तनीयत्वात्, न बाध्यते चायं निश्चय इति ॥ १४ ॥

स्यादेतत् इति। शङ्कानिराकरणे अङ्गमित्यनुषङ्गः, तत् किमिति न श्रद्धेयः प्रमाणत्वेनेति शेषः। सत्यादय इत्यर्थः। प्रत्ययस्याभावः शपथादिभाव्यः, सद्भाव एव प्रतिपत्तॄणां संसर्गव्यवहारदर्शनादवगम्यत इति भावः। व्यवहारस्यान्यथासिद्धिमाशङ्क्याह न च इति। यदि बाधकाभावेऽपि असंसर्गाग्राहक इति कल्प्येत तर्हि सर्वत्रापि तथात्वापत्तेः संसर्गप्रत्यय एवोच्छिद्येत, तथा च शब्दप्रामाण्यमेव दत्तजलाञ्जलि स्यादित्याशयवानाह तथापि इति। भवन्नेवार्थप्रत्ययः केवलमश्रद्धेय इति पक्षे कथमियमश्रद्धा वेदे निवर्त्तनीयेति पृच्छामः। यदि ब्रूयात् यथा प्रत्यक्षे बाधदर्शनादश्रद्धा निवर्त्तते तथैवापौरुषेयत्वनिश्चयादिति, तर्हि लोकवाक्येऽपि पूर्वमेवार्थप्रत्ययो जायते तदश्रद्धा चाप्तोक्तत्वनिश्चयान्निवर्त्तत इत्यभ्युपगच्छेत्याह द्वितीये तु इति।

लोके पूर्वमर्थप्रत्ययानङ्गीकारे बाधकमाह अन्यथा इति। यद्वा वेदेऽप्यपौरुषेयत्वनिश्चयोत्त-

प्रकाशः।

बाधकस्येति ॥ न चाप्तोक्तत्वकारणबाध एव बाधक इति वाच्यम्। व्यभिचारात् तद्धेतुतायामेव बाधात्। नापि लौकिकत्वेन ज्ञाते तद्धेतुः। मानाभावात्, आप्तोक्तत्वस्य च ज्ञातुमशक्यत्वात्। वाक्यार्थस्यापूर्वत्वादिति भावः। यथोत्पन्नप्रत्यक्षज्ञानप्रामाण्यग्राहकादप्रामाण्यशङ्कात्मकाऽश्रद्धापगमः, तथा वेदवाक्यजेऽपीत्याह द्वितीये त्विति ॥

यदि चापौरुषेयत्वनिश्चये सत्येव वेदार्थधीः, तदेते पदार्था मिथः संसृष्टाः दोषवत्पुरुषाप्रणीताकाङ्क्षादिमत्पदस्मारितत्वादिति वेदेऽन्वयधीरस्त्विति वेदोऽप्यनुवादकः स्यादित्याह—

अन्यथेति ॥ तथा च शब्दः प्रमाणमेव न स्यात्, सर्वत्रानुमानादेव वाक्यार्थप्रमोत्पत्तेरिति

प्रकाशिका।

दोषवदिति। अत्र च दोषवत्पुरुषाप्रणीतपदस्मारितत्वमात्रे तात्पर्यमन्यथा वैयर्थ्यात्। न च विसंवादिशुकोक्तवाक्ये व्यभिचारः। तादृशसतात्पर्यकपदस्मारितत्वस्याहेतुत्वात्। न च सतात्पर्यकत्वं मन्मते वेदस्यासिद्धमिति वाच्यम्। स्वमतेनैव हेतुत्वात्, दोषवत्पदेन संवादिवाक्य-

मकरन्दः।

दोषवदिति। अत्र हेतुद्वये तात्पर्य्यम्। न चाद्यहेतोर्विसंवादिशुकवाक्ये व्यभिचारः, दोष-

तदुच्यते—

**व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ॥**
**अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥**

यदा ह्यपौरुषेयत्वनिश्चयात् प्राग् वेदो न किञ्चिदभिधत्ते इति पक्षः, तदाऽऽप्तोक्तत्वनिश्चयोत्तरकालं लोकवद् वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः। इयांस्तु विशेषो-यदत्र पदार्थानेव पक्षीकृत्य निरस्तपुंदोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वादाप्तोक्तपदकदम्बकस्मारितपदार्थवत् संसर्ग एवाहत्य साध्यो बुद्धिव्यवहितस्त्वितरत्रेति फलतो न कश्चिद्विशेष-इति। तथा चान्विताभिधानेऽपि अधन्यत्वाद्वेदस्यानुवादकत्वप्रसङ्गः। न चैवं सति तत्र प्रमाणमस्ति। विशिष्टप्रतिपत्त्यन्यथानुपपत्त्या हि शब्दस्य तत्र शक्तिः परिकल्पनीया, सा चानुमानेनैवोपपन्नेति वृथा प्रयासः। तस्माल्लोके शब्दस्यानुवादकतेति विपरीतकल्पनेयमायुष्मताम् ॥

---

**बोधनी।**

रकालमेवाभिधायकत्वे दोषमाहेति। **तदुच्यते** इति। यथानुवादकत्वं वेदस्य प्रसज्यते तथोच्यत इत्यर्थः। **व्यस्त** इति। अमी पदार्था मिथः संसर्गवन्तः निरस्तसमस्तदोषशङ्कैः पदैः स्मारितत्वात् इत्यनुमानेन निर्णीते संसर्गे पश्चात्प्रवर्तमानस्य तदनुवादकत्वं कुतो न स्यादिति ॥ १५ ॥

**प्रकाशः।**

भावः। **बुद्धीति** वक्तृज्ञानावच्छेदकतेत्यर्थः। इतरत्र-लौकिकवाक्ये। किञ्चैवं लोकवेदसाधारणादनुमानादेव वाक्यार्थप्रमोत्पत्तौ वेदस्य तत्र सामर्थ्यानवधारणादन्विते शक्तावपि न मानमित्याह **न चैवमिति। तत्रेति।** अन्विते शक्तावित्यर्थः॥ सा-विशिष्टप्रतीतिः। **विपरीतेति।** लोके सम्भृतसामग्रीकत्वेन शब्दस्यैव पूर्वं बोधकत्वाध्याप्तिस्मृतिविलम्बेन लिङ्गमेवाऽनुवादकमित्यर्थः। यद्वा अन्विते पदानां शक्तिर्लोके चानुवादकः शब्द इति विरुद्धकल्पनेत्यर्थः॥

नवीनास्तु—अप्रमाणशब्दव्यावृत्तं प्रमाणशब्दानुगतं प्रामाण्यप्रयोजकं किञ्चित् कार्यवैलक्षण्यान्यथानुपपत्त्या कल्प्यम्। तच्च ज्ञातं तत्प्रयोजकं, ज्ञायमानकरणे ज्ञानोपयोग्यप्रमाणवैलक्षण्यत्वात्, व्याप्त्यादिवत्। न चाप्तोक्तत्वदोषाभावौ तथा, भ्रान्तप्रतारकवाक्यजे ज्ञाने तदभावात्। किन्तु यथार्थतात्पर्यकत्वम्। तच्च यथार्थवाक्यधीप्रयोजनकत्वं लोकवेदसाधारणं, तदभावाच्चाप्रमा, स एव दोषः। तत एव भ्रान्तप्रतारकवाक्यं संवादिशुकादिवाक्यञ्च प्रमाणम्। तच्च ज्ञातमुपयोगि, ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यत्वादित्युक्तम्। अन्यथा, अन्यपरस्यान्वयबोधो न स्यात्। न स्याच्च यष्टीः प्रवेशयेत्यत्र लक्षणा नानार्थे विनिगमना च, तयोस्तात्पर्यग्रहमूलकत्वात्। न च तात्पर्यग्राहकप्रकरणादेः प्राथम्यादावश्यकत्वाच्च शब्दसहकारित्वमिति वाच्यम्। तेषामननुगमेनाहेतु-

**प्रकाशिका।**

प्रयोक्तुरभिधानेन सर्वसामञ्जस्यादेति। **नवीना इति।** प्राभाकरनवीना इत्यर्थः। सामान्यतः सिद्धस्य ज्ञातोपयोगित्वं साधयित्वा विशेषतः सिद्धस्य तत्साधयति **तच्च ज्ञातमुपयोगीति।** **तयोरिति।** लक्षणाविनिगमनयोरित्यर्थः।

**मकरन्दः।**

यत्पुरुषाप्रणीतसतात्पर्यकपदस्मारितत्वस्याप्रहेत्वर्थत्वात्। **तच्चेति।** न च पौनरुक्त्यं, विशेषतः साधनात्। **तयोरिति।** लक्षणविनिगमनयोरित्यर्थः।

**टिप्पणी।**

**तेषामननुगमेनाहेतुत्वा**दिति। न च प्रकरणादेस्तात्पर्यग्रहं प्रति कारणत्वेऽप्यननुगमाद-

**किं चेदमन्विताभिधानं नाम ? । न तावदन्वितप्रतिपादनमात्रम् । अविवादात् । नापि स्वार्थाभिधायास्तत्र तात्पर्यम् । अविवादादेव । नापि सङ्गतिबलेन तत्प्रति-**

प्रकाशः ।

त्वात् । तात्पर्यग्राहकता त्वननुगतानामपि व्याप्यत्वात्, धूमादीनामिव । तच्च तात्पर्यं वेदे न्यायगम्यं, लोके च न्यायाविषयेऽपि पुंसां तात्पर्यान्न तन्न्यायगम्यम्, अपि तु प्रथममाप्तवाक्याद्वक्तृज्ञानानुमानपूर्वकमर्थतथात्वमवधार्य तन्निश्चयः । अनुमानं च—इदं वाक्यं भ्रमादिविशिष्टज्ञानान्यतरज्ञानजन्यं, वाक्यत्वात् । ततो भ्रमादिनिरासे सति परिशेषाद्वाक्यार्थानुमानम्—अयं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात्, अहमिव । तत एते पदार्था यथोचिततत्संसर्गवन्तः यथार्थज्ञानविषयत्वात्, मदुक्तपदार्थवत् । एवं वक्तुर्वाक्यार्थज्ञानेऽनुमिते प्रकरणादिना वक्त्रभिप्रेतयथार्थज्ञानपरत्वज्ञानम्, ततो वेदतुल्यतया शब्दादर्थज्ञानमित्यनुवादकः शब्दो वक्तृज्ञानावच्छेदकतया वाक्यार्थस्य प्रागेव सिद्धेरित्याहुः ॥

मैवम् । यथार्थप्रतीतिपरत्वस्य ज्ञातस्य प्रमाऽनुत्पादकत्वात् । अपूर्ववाक्यार्थनिरूप्यतया तस्य पूर्वं ज्ञातुमशक्यत्वात्, गौरवाच्च । न वा भ्रमाजन्यत्वग्रहः, वाक्यार्थमज्ञात्वाऽत्रायमभ्रान्त इति निश्चेतुमशक्यत्वात्, पुंसो भ्रमादिसम्भवात् । न च संवादात् तद्ग्रहः, तस्य ज्ञानोत्तरकालीनत्वात् । न च भ्रमादिजन्यवैलक्षण्येन शब्दज्ञानमस्ति ज्ञाने वा यादृशो लिङ्गत्वं तादृशः प्रत्यायकत्वमेवास्तु । किञ्च पुंवाक्यस्य भ्रमादिविशिष्टज्ञानान्यतरजन्यत्वेऽनुमिते परिशेषाद्भ्रमाद्यजन्यत्वनिश्चयदशायां वेदतुल्या सामग्री लौकिकवाक्येऽपि वृत्तेति तत एवार्थस्य निश्चयाद्वेदवत् तस्यापि प्रामाण्यम् । अनुमितावनुमानस्य व्याप्तिस्मृत्यादिविलम्बितत्वात् । यदि च यथार्थतात्पर्यकत्वज्ञानं प्रमोत्पादकं, तदा लोकवेदयोस्तादृशपदस्मारितत्वेन पदार्थसंसर्गानुमितिसम्भवान्न शब्दः प्रमाणं स्यात् । अनेकार्थेऽश्लिष्टे चानेकोपस्थितावपि प्रकरणादेकमादायान्वयबोधः । लक्षणाऽपि न तात्पर्यानुपपत्त्या, किन्त्वन्वयानुपपत्तेरित्युक्तम् । यद्वा नानार्थे लक्षणायाञ्च नियतपदार्थोपस्थित्यर्थं पदार्थे तात्पर्यग्रहापेक्षा, तेन विना तदभावात्, न वाक्यार्थे । अन्यत्रान्वयप्रतियोग्युपस्थितिस्तात्पर्यग्रहं विनैवेति न तदपेक्षेत्यस्मत्पितृचरणाः ॥

इदानीं प्रसङ्गागतं पदानाम् अन्विताभिधानं विकल्प्य सिद्धसाधनादिना निराकरोति—

**किं चेति । अविवादादिति ।** पदानां साक्षाद्वाक्यार्थानभिधायकत्वेऽप्यन्वितस्वार्थाभिधानद्वारा अन्वितज्ञानोत्पादकत्वाङ्गीकारादित्यर्थः । **नापीति ।** स्वार्थे पदानां शक्तिस्तस्या इतरान्वितस्वार्थ-

प्रकाशिका ।

प्रकरणादीनामननुगमेन न हेतुत्वमित्यरुचेराह **यद्वेति ।**

मकरन्दः ।

ननु प्रकरणादीनामननुगमेनाहेतुत्वादित्युक्तमित्यरुचेराह **यद्वेति ।**

टिप्पणी ।

व्यवहितोत्तरत्वस्य कार्य्यतावच्छेदके निवेशेनैव वारणं व्यभिचारस्य कार्य्यन्तथा च शाब्दप्रत्येवास्तु तयेति वाच्यम् । शाब्दं प्रति कारणत्वेऽपि तात्पर्यग्रहं प्रति कारणत्वस्यान्वयव्यतिरेकसिद्धस्य दुर्वारतयोभयथा कारणानन्त्यात् मम तु शाब्दं प्रति तात्पर्यग्रहस्य हेतुत्वे तथात्वविरहादिति भावः ।

**न तदपेक्षेत्यस्मत्पितृचरणा इति ।** तत्तदर्थशाब्दबोधस्य कारणं या नियतपदार्थोपस्थितिस्तन्मात्रविषयिण्युपस्थितिस्तदर्थमित्यर्थः । इयञ्चोपस्थितिर्द्वितीया उपस्थितार्थ एव तात्पर्यस्य गृहीतुं शक्यत्वात् प्राथमिकी चोपस्थितिरनेकार्थविषयैव भवति । इदन्तु चिन्तनीयम्—तात्पर्य्यग्रहस्येतरार्थोपस्थितिप्रतिबन्धकतयैवेदं निर्वाह्यं न च तत्सम्भवति, उद्बुद्धे च संस्कारे स्मृतिप्रतिबन्धस्य क्वाप्यदर्शनात्, प्रकरणस्यैव वा तथात्वे निर्वाहसम्भवात् तात्पर्य्यग्रहस्य किमर्थकल्पनम् शाब्दबोधे चानुगतैवोपस्थितिर्हेतुरित्यनुगमोऽपि न प्रकरणापेक्षायामिति । **अन्वित स्वार्थाभि-**

पादनं, वाक्यार्थस्यापूर्वत्वात्। नापि स्वार्थसङ्गतिबलेन, तस्य स्वार्थ एवोपक्षयात्। नापि सैव सङ्गतिरुभयप्रतिपादिका, प्रतीतिक्रमानुपपत्तेः। यौगपद्याभ्युपगमे तु योग्यत्वादिप्रतिसन्धानशून्यस्यापि पदार्थप्रत्ययवद् वाक्यार्थप्रत्ययप्रसङ्गात्। नापि सैव सङ्गतिः स्वार्थे निरपेक्षा, वाक्यार्थे तु पदार्थप्रतिपादनाऽवान्तरव्यापारेति युक्तम्। तस्याः स्वयमकरणत्वात्। सङ्गतानि पदानि हि करणं, न तु सङ्गतिः। तथापि तत्प्रतिपादनानुगुणसङ्गतिशालीनि पदानीति चेत्। न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गतेस्तदाश्रयत्वेन, सामान्यमात्रगोचरत्वात् तद्भेदमात्रगोचरत्वाद् वा। नापि तदनुगुणव्यापारवत्त्वेन, अकरणत्वादित्युक्तम्। तदनुगुणकरणव्यापारोत्थापकत्वात्तदनुगुणत्वे न नो विवादः।

अन्वित एव शक्तिरिति चेत्। उक्तमत्र वाक्यार्थस्यापूर्वत्वात् प्रतीतिक्रमानुपपत्तेश्चेति। स्मृतक्रियान्विते कारके स्मृतकारकान्वितायाञ्च क्रियायां सङ्गतिरतो

---

प्रकाशः।

प्रतीतिप्रयोजनकत्वस्याभिहितान्वयपक्षेऽप्युपगमादित्यर्थः। संगतिः—शक्तिग्रहः। सा किं प्रत्याय्ये वाक्यार्थे पदार्थमात्रे वा?। आद्ये, **वाक्यार्थस्येति**। उपस्थिते हि शक्तिग्रहः, न च शब्दानुभवात् पूर्वं वाक्यार्थस्योपस्थितिरिति कुत्र शक्तिर्गृह्येतेत्यर्थः। अन्त्यमाशङ्क्य निराकरोति **नापीति**। पदार्थशक्त्या तन्मात्रमुपस्थापयेन्न त्वन्वितमित्यर्थः। न च स्वार्थसङ्गतिरेव स्वार्थतदन्वितयोः प्रतिपादिकेत्याह **नापीति**। अपेक्षणीयाभावात् पदार्थस्मृतिकाल एवान्वितमपि प्रतिपादयेदित्यर्थः। न चेष्टापत्तिः, पदार्थस्मृत्यनन्तरं तेषां योग्यतादिज्ञानापेक्षयाऽन्वितानुभवोत्पादात्; तदनपेक्षायाञ्चातिप्रसङ्गादित्याह **यौगपद्येति**। ननु पदार्थे सङ्गतिरन्वितज्ञाने कर्त्तव्ये पदार्थस्मृतिमपेक्षत इति क्रमः स्यादित्याह **नापीति**। **तस्या** इति। करणानामवान्तरव्यापारयोगः। न च सङ्गतिः करणं, किन्तु पदानि, तेषामन्वयाद्यनुविधानादित्यर्थः। **तथापीति**। करणमित्यनुषज्यते। तथा च सङ्गतेः करणकोटावन्तर्भाव इति तस्या अवान्तरव्यापारयोग इति भावः। सङ्गतेर्वाक्यार्थज्ञानानुकूलत्वं साक्षाद्वाक्यार्थधीजनकत्वं, वाक्यार्थज्ञानानुकूलव्यापारवत्त्वं, तदनुकूलपदार्थस्मृतिहेतुत्वं वा? तत्राद्य इत्याह **न तावदिति**। अस्य पदस्येदं वाच्यमिति पदार्थाश्रयत्वेन सङ्गतेर्ग्रहान्न वाक्यार्थाश्रयत्वमित्यर्थः। न चान्याश्रया सङ्गतिरन्यद् बोधयत्यतिप्रसङ्गादिति भावः। **सामान्यतद्भेदमात्रेति** मतभेदेन द्रष्टव्यम्। द्वितीयमाशङ्क्य निराकरोति **नापीति**। विशिष्टस्य करणत्वेऽपि विशेषणमात्रस्यातत्त्वादिति भावः। अन्त्ये तु विवादपर्यवसानमित्याह **तदनुगुणेति**।

ननु वृद्धव्यवहारादन्वित एव पदानां शक्तिरित्याशङ्कयोक्तयुक्त्या निराकरोति **अन्वित एवेति**। नन्वन्वयविशेषे न शक्तिर्येनोक्तदोषः स्यात्, किन्तु क्रियाकारकयोरन्योन्याविनाभावादन्वयसामान्यम् उपस्थितमिति तत्रैव शक्तिग्रह इत्याह **स्मृतेति**। क्रियाकारकान्वयविशेषस्य च वाक्यार्थत्वान्न तदपूर्वत्वभङ्ग इत्यर्थः। नन्वेवं क्रियाकारकपदयोः पर्यायताऽऽपत्तिः, ताभ्यां कारकक्रिययोरप्युपस्था-

प्रकाशिका।

**विशिष्टस्येति**। विशिष्टस्यापीत्यर्थः। तथा चाभ्युपगमवादोऽयमिति ध्येयम्।

मकरन्दः।

**विशिष्टस्येति**। विशिष्टस्यापीत्यर्थः। तथा चाभ्युपगमवादोऽयमिति भावः।

टिप्पणी।

**धानद्वारेति**। अन्वितत्वं विशेषणं तेन तत्र शक्तिस्वीकारेऽपि न क्षतिः। **पदार्थाश्रयत्वेन**

**नोक्तदोषावकाशः । नाऽपि पर्यायतापत्तिः, प्राधान्येन नियमात् । नापि पौनरुक्त्यं, विशेषाऽन्वये तात्पर्यात् । नापीतरेतराश्रयत्वम्, स्वार्थस्मृतावनपेक्षणात् । नापि वाक्यभेदापत्तिः । परस्परपदाऽर्थस्मृतिसन्निधौ तदितरानपेक्षणादिति चेत् । न । अन्विते सङ्गतिग्रह इति कोऽर्थः ? यदि यत्र सङ्गतिस्तद्वस्तुगत्या पदार्थान्वितं, न किञ्चित् प्रकृतोपयोगीति । न हि यत्र चक्षुषः सामर्थ्यमवगतं तद्वस्तुगत्या स्पर्शवदिति तद्वत्ताऽपि तस्य विषयः । अथान्विततयैव तत्र व्युत्पत्तिरित्यर्थः । तदसत् । प्रमाणाभावात् ।**

---

प्रकाशः ।

पनादित्यत आह **नापीति । प्राधान्येनेति ।** क्रियापदं कारकमभिदधदपि कारकविशेष्यां क्रियामाह, कारकपदञ्च क्रियामप्यभिदधत् क्रियाविशेष्यं कारकमाहेति विशेषणविशेष्यभावभेदेनार्थभेदादित्यर्थः । ननु क्रियाकारकविशेषणवाचकं पदं पुनरुक्तं, कारकोपहितक्रियादेरितरपदेनैवोपस्थापनादित्यत आह **नापीति । विशेषेति ।** सामान्यज्ञानेऽपि तद्विशेषज्ञापनाय विशेषपदमित्यर्थः । ननु कारकपदात् कारकोपस्थितिमपेक्ष्य क्रियापदेन तद्विशिष्टा क्रियोपस्थाप्या, कारकपदेन च क्रियापदात् क्रियोपस्थितिमपेक्ष्य तद्विशिष्टं कारकमुपस्थाप्यमित्यन्योन्याश्रय इत्याह **नापीति । स्वार्थेति ।** कारकक्रियोपस्थितिमनपेक्ष्य क्रियाकारकपदाभ्यां विशिष्टास्मरणादित्यर्थः । नन्वेवं घटाऽन्वितमानयनमानयनान्वितो घट इति विशेषणविशेष्यभावभेदादर्थभेदे वाक्यभेदः स्यादित्यत आह **नापि वाक्येति ।** यत्रैकस्मिन् वाक्यार्थे पर्यवसन्ने वाक्यार्थान्तरबोधस्तत्र वाक्यभेदः, अत्र तु न तथा, विशेषणविशेष्यमात्रभेदेऽपि घटानयनात्मकार्यस्याभेदादित्यऽर्थः । **यत्रेति ।** यत्र वाक्यार्थे व्युत्पत्तिः सङ्गतिग्रह इत्यर्थः ॥

**प्रमाणाभावादिति ।** ननु वृद्धव्यवहारेणानुमितेतरान्वितपदार्थज्ञाने पदकरणत्वग्रहादुपस्थितत्वाच्च तत्रैव शक्तिग्रहो न पदार्थज्ञानमात्रे, तस्य व्यवहाराहेतुतया ततोऽनुपस्थितेः । मैवम् । विशिष्टज्ञानस्य विशेष्यविषयत्वनियतत्वेनेतरान्वितपदार्थज्ञानोपस्थितौ विशेष्यस्य पदार्थज्ञानस्याप्युपस्थितेस्तत्रैव शक्तिग्रहाल्लाघवात् । न त्वितरान्वितेऽपि, गौरवात् । न चानन्यलभ्यत्वात्तत्र शक्तिः, पदार्थज्ञानशक्त्वेन ज्ञातपदस्य स्वार्थस्मृतिद्वाराऽऽवश्यकाकाङ्क्षादिसाचिव्यात् समभिव्याहृतपदार्थेन स्वार्थान्वयानुभावकत्वस्वभावकल्पनात् । न चाशक्यान्वयानुभवेऽतिप्रसङ्गः, शक्यान्वयत्वस्य स्वरूपसतो नियामकत्वात् । अन्वयसामान्यशक्तावपि अन्वयविशेषज्ञानार्थमाकाङ्क्षादेरवश्यमपेक्षणात् । तस्मात् पदार्थानामन्वितज्ञानजनकत्वेऽपि यथा जातिवाचकपदानां व्यक्तावेकैव शक्तिर्जात्यंशे ज्ञाता व्यक्त्यंशे तु स्वरूपसती व्याप्रियते, तथा एकैव शक्तिरन्वयांशे स्वरूपसती पदार्थांशे ज्ञाता व्याप्रियत इति नान्वयांशेऽपि शक्तिः । ज्ञातशब्दशक्तिजन्यज्ञानविषयस्यैव शक्यत्वात् ॥

नन्वन्वये पदानां तात्पर्यं तन्निर्वाहिका च वृत्तिः । न च स्वार्थसम्बन्धिनि स्वान्वये तात्पर्याल्लक्षणा, अन्वयविशेषणतया पदार्थोपस्थितेश्च न वृत्तिद्वयविरोध इति वाच्यम् । वाक्यार्थस्यापूर्वतयाऽन्वयस्य स्वार्थसम्बन्धित्वेन पूर्वमज्ञानात् । एवञ्चान्वयः पदशक्यः वृत्त्यन्तरं विना पदबोध्यत्वात्

प्रकाशिका ।

**कारकविशेष्यामिति ।** इदमुपलक्षणम् आनयनत्वादिना विशेषप्रकारेणेत्यपि द्रष्टव्यम् । एवमग्रेऽ-

टिप्पणी ।

**सङ्गतेरिति ।** पदार्थविषयकत्वेनेत्यर्थः । **न च शक्यान्वयानुभावेऽतिप्रसङ्ग इति ।** सति सप्तमीयम्, अशक्यस्यान्वयस्यानुभवे सति शक्यान्वयनियमभङ्गेऽतिप्रसङ्गः गोपदस्य घटानुभावकत्वप्रसङ्ग इत्यर्थः । **शक्यान्वयत्वस्य स्वरूपसत इति ।** अशक्यं यदि पदमनुभावयेच्छक्यान्व-

अन्वितार्थप्रतिपत्त्यन्यथानुपपत्तिरिति चेन्न। अनन्विताभिधानेनाप्युपपत्तेः। आकाङ्क्षाऽनुपपत्तिरस्तु, न हि सामान्यतोऽन्वितानवगमेऽन्वयविशेषे जिज्ञासा स्यात्। न। दृष्टे फलविशेषे रसविशेषजिज्ञासावदाक्षेपतोऽप्युपपत्तेः। शब्दमहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः स्यात्। न चैवम्। ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत्। कुतस्तर्हि कविकाव्यानि विलसन्ति। न हि संसर्गविशेषमप्रतीत्य वाक्यरचना नाम। न च स्वोत्प्रेक्षायां प्रत्यक्षमनुमानं शब्द-

प्रकाशः।

पदार्थवदिति। मैवम्। वृत्तिं विनाऽप्युक्तरीत्या पदानामन्वयबोधकत्वसम्भवेनाप्रयोजकत्वात्। अन्यथा शक्त्या तात्पर्यनिर्वाहदर्शनाद् वृत्त्यन्तरोच्छेदात्। अत एव धूमोऽस्तीत्यत्र शक्त्या धूमोपस्थितावनुमानद्वारा वह्नौ तात्पर्यनिर्वाहान्न लक्षणेत्यस्माकं पैतृकः पन्था इति सङ्क्षेपः॥

उक्तान्यलभ्यत्वमविद्वानाह—

**अन्वितार्थेति।** उक्तमभिप्रेत्याह **अनन्वितेति॥** पदार्थज्ञानशक्तत्वेन ज्ञानादेव पदादावश्यकाकाङ्क्षादिसहकारिवशादेवान्वयज्ञानसम्भवान्नान्वये शक्तिः कल्प्यते इत्यर्थः। **आकाङ्क्षेति।** **प्रमाण**मिति विपरिणतेन सम्बन्धः। ओदनमित्युक्तेऽन्वयविशेषे जिज्ञासाऽस्ति, सा च सामान्यतो ज्ञाते विशेषतश्चाज्ञाते भवतीति तदन्यथानुपपत्त्याऽन्वयसामान्ये शक्तिः कल्प्यते इत्यर्थः। **दृष्ट इति।** यथा दृष्टे रूपविशेषे रससामान्यमनुमाय तद्विशेषे जिज्ञासा, तथा पदार्थमात्रस्य कोष्ठगत्यान्वयमात्रव्याप्तेरन्वयसामान्यज्ञानोपपत्तेरित्यर्थः। **शब्देति।** पचतीत्युक्ते प्रत्यक्षाद्युपस्थितकलायादेरन्वयविशेषो न भवति, किन्तु पदोपस्थापितस्यैवेत्यन्वयविशेषे शब्दोपयोगादन्वयसामान्ये शक्तिः कल्प्येत्यर्थः॥

तदेतदिष्टापादनमित्यन्तरा पदार्थकरणवादी भट्टोऽन्विताभिधानवादिनमास्कन्दति **कुतस्तर्हि**

प्रकाशिका।

पि एतच्चाग्रे स्फुटम्। आकाङ्क्षादीनामावश्यकत्वं युक्तं तत्र हेतुमाह **अन्वयसामान्यस्येति।** अत एव न चेति पूर्वमियं फक्किका युज्यत इत्याहुः। **पदस्यान्वय** इति। घटानयनयोरन्वय इत्यर्थः। तेनान्वयपदशक्यतया न सिद्धसाधनमिति द्रष्टव्यम्। **विपरिणतेनेति।** **प्रमाणभावादिति** मूले षष्ठ्यर्थाविरुद्धस्य श्रवणादिति भावः। **कोष्ठगत्येति।** वस्तुगत्येत्यर्थः। **अन्वयविशेषे शब्दोपयोगादिति।** पदस्य पदार्थमात्रोपस्थितिरेव यदि व्यापारस्तदा प्रत्यक्षोपस्थितकलायेनापि पचतीति पदस्यान्वयबोधापत्तिरतः पदोपस्थितस्यैव न्यायमते शाब्दबोधविषयत्वमित्यन्वये पदशक्तिः कल्पनीयेति नैयायिकं प्रति प्राभाकरस्याक्षेपः। **अन्तरेति।** शब्दोपस्थितपदार्थानामेव परस्परमन्वयः शब्देन बोध्यत इति समाधानमाशयस्थं यावन्नैयायिको न वक्तीत्यर्थः। अत एव नैयायिकेनायं पूर्वपक्षोऽग्रे न समाहितः, तात्पर्यगत्यैव समाधानादिति ध्येयम्। **इष्टापादनमिति।** प्रकारान्तरो-

मकरन्दः।

आवश्यकाकाङ्क्षादिसान्निध्यादिति यदुक्तं; तत्र तदावश्यकत्वे हेतुमाह **अन्वयसामान्येति।** अत एवेयं फक्किका, न चेत्यस्य पूर्वं युज्यते इति प्राहुः। कोष्ठगत्या वस्तुगत्येत्यर्थः।

टिप्पणी।

यमेवेति नियमकरणादित्यर्थः। **अन्वयविशेषे शब्दोपयोगादिति।** पचतीत्यादौ कलायमित्याद्युक्त एव पाककलाययोरन्वयविशेषात्स प्रतीयते, नचैकपदस्याप्यभाव इति सर्वसम्मतो नियमः अन्वयस्य सामान्यतः शक्यत्वे उपपद्यते सामान्योपस्थितेऽन्वये या जिज्ञासात्मिका आकाङ्क्षा तस्याः शाब्दीत्वाच्छब्देनैव प्रपूरणस्य युक्ततरत्वात्, विशेषस्य शब्दज्ञाततत्पेक्षान्वितशक्तपदद्वयार्थस्मृतिपर्यवसन्नो विशेषः शाब्द इति तज्ज्ञानस्य शाब्दजिज्ञासानिवर्तकत्वम्। अन्वयस्याशक्यत्वेऽशाब्दे तस्मिन् जिज्ञासा शाब्दी न स्यात्, येन प्रमाणेनावगम्यते सामान्यमुत्सर्गतस्तत्प्रमाणेन तत्र हि जिज्ञासेति प्रत्यक्षाद्यवगतार्थमानेऽपि जिज्ञासानिवृत्तिः स्यादित्युक्तनियमो न स्यादिति भावः।

बोधनी ।

(१)यदाहि इति । अपौरुषेयत्वनिश्चयेन दोषाभावे निश्चितेऽनुमानसामग्री पूर्णेत्यनुमानादेव संसर्गसिद्धेर्वेदानुवाद एव स्यादिति किमविशेष एव सर्वथा लोकवेदयोरित्यत्राह इयांस्तु इति । वेदे वक्तुरभावात् पदार्थानेव पक्षीकृत्य तत्संसर्गः साध्यः,लोके तु वक्तृज्ञानविशेषणतयेत्येतावान्विशेषः । संसर्गस्यानुमानतः सिद्धिरित्यत्र फले तु न विशेष इति । तथा च इति । वेदेऽपि संसर्गस्यानुमानतः सिद्धावित्यर्थः । किंचैवमनुमानात्संसर्गसिद्धौ न तत्रान्विताभिधाने शब्दस्य प्रमाणमस्ति तत्प्रमाणस्यान्विततत्वेन प्रतीतेरन्यथाप्युपपन्नत्वादित्याह न चैवम् इति । वृथा प्रयासः । अन्विताभिधानकल्पन इति शेषः । तस्माल्लोक एव शब्दस्यानुवादकत्वमिच्छतो वेदस्याप्यनुवादकत्वमनिष्टं प्रसज्यत इति श्लोकार्थमुपसंहरति तस्मात् इति । यद्वा लिङ्गेन निर्णीतेऽर्थे शब्दस्यानुवादकत्वं वदतो विलम्बितप्रवृत्तेर्लिङ्गस्यैवानुवादकत्वं न शब्दस्येति निर्णीतशक्तेर्वाक्याद्धीति, पूर्वश्लोकार्थोपसंहारः इति ।

एवमन्विताभिधानमङ्गीकृत्य लोकवेदयोस्तुल्यत्वमावेदितम्, इदानीं तदपि निराकुर्वन्नाह किं चेदम् इति । अविवादात् इति । अभिहितान्वयवादिनोऽप्यन्वितप्रतिपादनमात्रं संवदन्ति, तदभिधान एव ते विवदन्त इति । विवादादेव इति । अन्वितप्रतिपादनोद्देशेन पदार्थानभिदधति । पदानीत्यत्रापि नास्माकं विवाद इति । तद्यदि व्युत्पत्तिबलेनान्वितप्रतिपादनं तर्हि अनुभूतो वाक्यार्थो नावगम्येतेत्याह नापि संगति इति । न च पदार्थविषययैव संगत्या वाक्यार्थप्रतिपादनं तस्याः पदार्थप्रतीतिमात्रोपक्षीणत्वादित्याह नापि स्वार्थ इति । अर्थसंगतिरेव तत्रानुपक्षीणा वाक्यार्थेऽप्युपयुज्यत इत्युच्येत तर्हि पदार्थवाक्यार्थप्रतीत्योः पूर्वापरभावो न स्यादित्याह नापि सैव इति । अस्तु तर्हि यौगपद्यमित्यत्राह यौगपद्य इति । अवगतपदार्थो हि तेषां योग्यतादिकं प्रतिसंधातुं क्षमत इति । नन्वेकस्या एव संगतेः पदार्थवाक्यार्थप्रतीत्योः क्रमेणैव हेतुत्वं काष्ठस्येव ज्वालापाकयोरित्यत्राह नापि सैव इति । करणानामेव ह्यवान्तरव्यापारापेक्षेति भावः । ननु तदनुवादकत्वं वदतो विलम्बितप्रवृत्तेर्लिङ्गस्यैवानुवादकत्वं संगतिमन्ति पदानि करणं तथापि वाक्यार्थानुगुणसंगतिभाञ्जि तानि तथा न तु केवलानि, ततश्च संगतिरपि करणशरीरानुप्रवेशिन्येवेत्याह तथापि इति । न तावत् इति । पदार्थविषयत्वेन संगतेस्त्वद्दृष्ट्या सामान्यमात्रविषयत्वात् अस्मद्दृष्ट्या तद्विशिष्टव्यक्तिमात्रविषयत्वाद्वा न तत्संसर्गात्मकवाक्यार्थप्रतिपादनानुगुणता संभवतीति पदार्थाश्रयत्वेऽपि संगतेर्वाक्यार्थप्रतिपादनानुगुणव्यापारवत्वेन तदानुगुण्यमस्तीत्यत्राह नापि तदनुगुण इति । उक्तं ह्येतत्संगतेरकरणत्वान्नावान्तरव्यापारयोगित्वमिति । नन्वस्तु पदानामेव करणत्वादवान्तरव्यापारः, स तु संगत्यधीन इति वाक्यार्थप्रत्ययानुगुणत्वं तस्या इत्यत्राह तदनुगुण इति । करणानां पदानां पदार्थप्रतिपादनलक्षणोऽवान्तरव्यापारः संगत्यधीन इत्यत्र नास्माकं विवाद इति ।

प्रकाशः ।

इति । अन्यथा मानाभावात् संसर्गज्ञानानुदयाच्चवक्यरचना न स्यादिति पदार्था एव चिन्तावशोपस्थिता अन्वयबोधकाः । यत्रापि पदात् पदार्थोपस्थितिस्तत्रापि पदार्था एवान्वयबोधकाः, न तु पदान्यपि, पदार्थस्मृत्यैवान्यथासिद्धत्वात्, कथमन्यथा श्वेतरूपदर्शनाद्धेषाशब्दश्रवणात् क्षुरविक्षेपशब्दश्रवणाच्छब्दं विना श्वेतोऽश्वो धावतीति धीः । न चैवं पचतीत्युक्ते प्रत्यक्षोपस्थितकलायेनान्व-

प्रकाशिका ।

पस्थितपदार्थानामपि शाब्दोऽन्वयबोधो भवत्येवेति प्राभाकरोक्तान्वितशक्तियुक्तावसहमानो भट्टः

मकरन्दः ।

अन्विताभिधाननादिनमिति प्रभाकरमित्यर्थः ।

(१) इयं बोधिनी ४०४ पृष्ठं प्रारभ्य ४०८ पृष्ठपर्यन्तमूलव्याख्याऽऽदर्शपुस्तकाशुद्धया संपादकप्रमादाच्चात्रागता तत्र पठितव्या ।

बोधनी।

नन्वाकाङ्क्षादित्रयोपेतपदार्थान्तरान्वित एवार्थे संगतिरिति ब्रूमः, तत्रास्त्येव विवाद इत्याह **अन्वित** इति। विस्मरणमेवात्रापराध्यतीत्याह **उक्तम्** इति। अथ संभावितसकलदोषपरिहारेण प्राभाकरः प्रत्यवतिष्ठते **स्मृतेति चेदि**त्यन्तेन। पदान्तरस्मृतेन प्रतियोगिमात्रेण कारकेण क्रियया वाऽन्विते स्वार्थे क्रियायां कारके वा संगतिर्गृह्यते न तु विशेषान्विते, तथा च सर्वेष्वपि वाक्येषु तथात्वाविशेषात् संगतिर्ग्रहीता स्यादिति, ततश्च न तावद्वाक्यार्थस्यापूर्वत्वदोषः पदार्थस्मृत्युत्तरकालभावित्वात्तदन्वयप्रतीतेः क्रमभावोऽपि संगच्छत इति तर्हि कारकपदस्य क्रियाप्यर्थः क्रियापदस्यापि कारकमिति तयोः पर्यायता स्यादित्यत्राह **नापि** इति। ओदनमिति कारकपदमोदनत्वं निमित्तीकृत्य स्वेन रूपेणौदनमभिधत्ते, ओदनं तु तत्प्रतियोगित्वमात्रेण, ततश्च स्वरूपाभिधानलक्षणस्य प्राधान्यस्य स्वार्थ एव नियतत्वान्न पर्यायतेति। यदि पदार्थस्यैवान्वितोऽर्थः तर्हि पदसंघातात्मनो वाक्यस्यापि स एवेति वाक्यार्थः पुनरुक्तः स्यादित्यत्राह **नापि पौनरुक्त्यम्** इति। पदार्थविशेषविशिष्टेऽन्वये तात्पर्यं वाक्यस्य, न त्वेवं पदस्येति। यद्वा क्रियाकारकपदयोः पौनरुक्त्यमाशङ्क्य स्वार्थविशेषान्वयतात्पर्यभेदात्परिहारः। ननु क्रियाभिधाने सति तदन्वितं कारकमभिधेयं कारकपदेन, तथा कारकाभिधाने सति तदन्विता क्रियाभिधेया क्रियापदेनेतीतरेतराश्रयत्वं स्यादित्याह **नापि** इति। तथा स्यादयं दोषः यद्यभिहितेनार्थान्तरेणान्वितः स्वार्थोऽभिधीयते, न त्वेवं स्मारितेनान्वितस्याभिधानादन्वितस्यैव च स्मरणादिति। नन्वोदनं पचतीत्यत्र क्रियापदं कारकापेक्षं सत्समुच्चारितादन्येन तेमनादिनान्वितं स्वार्थं अभिदध्यात्, एवमोदनमपि क्रियान्तरेणौदनमानयेत्यादिनान्वितमित्यर्थभेदाद्वाक्यभेदः स्यादित्यत्राह **नापि वाक्यभेद** इति। संनिधेरप्यन्वयहेतुत्वात्र संनिहितमतिक्रम्यान्यदपेक्ष्यत इति। यद्वा अन्विताभिधायीनि पदानि प्रत्येकवाक्यानि भवेयुरित्याशङ्क्य यदि परस्परं संस्मृतौ संनिहितानामन्योन्याकाङ्क्षा न भवति तदा वाक्यभेदात् भवेत् यथाऽयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपुरुषयोर्यत्र तु स्मृतिसंनिहितानामन्योन्याकाङ्क्षाऽस्ति यथा राज्ञः पुरुषोऽपसार्यतामित्येतावन्मात्रोच्चारणे राजपुरुषयोस्तत्रैकवाक्यतेति परिहारः। अथ सिद्धान्ती यावत्संभवं विकल्प्य दूषयति **नान्विते** इति। अन्वितमित्यत्रेतिशब्दो द्रष्टव्यः प्रकृतस्यान्विताभिधानस्य यत्र रूपवति तद्वत्ता स्पर्शवत्ता तस्य चक्षुषः अन्विते संगतिग्रह इत्यस्य प्रकृतोपयोगिनमर्थमाशङ्क्य प्रमाणाभावेन दूषयति **अथ** इति।

नन्वस्ति प्रमाणमर्थापत्तिरित्याह **अन्वित** इति। **न** इति। आकाङ्क्षादिमत्पदार्थप्रतिसंधानाद्ध्यन्वितप्रतीत्युपपत्तेरिति। ननु पचतीत्युक्ते किमोदनं तेमनं वेति कारकविशेषजिज्ञासा तावज्जायते, न चासावज्ञाते सामान्येऽवकल्प्यते तेन क्रियापदादेव कारकसामान्यान्वितां क्रियामयमज्ञासीदेवं कारकपदादेव क्रियासामान्यान्वितं कारकमित्यन्विते व्युत्पत्तिः कल्प्यत इत्याह **आकाङ्क्षा** इति। **न** इति। क्रियाकारकयोरविनाभावेनेतरेतरसामान्याक्षेपादपि विशेषजिज्ञासोपपद्यते, न हि चक्षुषा रूपेऽधिगते द्रव्ये रसविशेषजिज्ञासा भवन्ती रससामान्यस्य चाक्षुषत्वं कल्पयतीति। ननु यदि पदार्थमात्रपर्यवसितेषु पदेषु पदार्थेभ्य एवान्वयप्रतीतिः स्यात्तर्हि हेत्वन्तरप्रतीतेभ्योऽपि भवेन्न चैवमस्ति ततः पदान्येव यावदन्वयं गच्छन्तीत्याह **शब्द** इति। अस्त्येव हेत्वन्तरप्रतीतेभ्योऽपि पदार्थेभ्योऽन्वय-

प्रकाश।

यबोधापत्तिः। शब्दोपस्थिते पदार्थे शब्दोपस्थापितपदार्थान्तरेणैवान्वयात्, शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते इति न्यायात्। अत एव श्रुतार्थापत्तिस्थलेऽपि शब्द एव कल्प्यते इत्यर्थः।

प्रकाशिका।

प्राभाकरमास्कन्दतीत्यर्थः, अन्विताभिधानवादिनं प्राभाकरं **शब्दोपस्थित इति।** साकाङ्क्षपदार्थोपस्थितित्वेन कारणता आकाङ्क्षा च स्वभावात्, शब्दोपस्थितयोरेव प्रकारान्तरोपस्थितयोरेव-

स्तदाभासा वा सम्भवन्ति, अन्यत्र चिन्तावशेन पदार्थस्मरणेभ्यः । असंसर्गाग्रहोऽसाविति चेत् । मम तावत् संसर्गग्रह एवासौ । तथाऽपि सैव पदावली क्वचिदन्वये पर्यवस्यति क्वचिदनन्वयाग्रहे इति कुतो विशेषात् । आप्तानाप्तवक्तृकतयेति-चेत् । किं तथाविधेन वक्त्रा तत्र कश्चिद्विशेष आहितः ? आहो वक्त्रैवावच्छेदकतया

बोधनी ।

प्रतीतिरित्याह कुतस्तर्हि इति । न ह्युत्प्रेक्षिते संसर्गे कर्त्तुः प्रत्यक्षादीनि तदाभासा वा संभवन्ति । स्मृता एव पदार्थास्तत्र कारणम् । यथा चाहुः—

पश्यतः श्वेतमारूढं हेषाशब्दं च शृण्वतः । खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ इति ।

असंसर्ग इति । तेन न शब्दव्यभिचार इति । मम इति । तेन यतः कुतश्चिदपि स्मृतैरन्वयप्रतीतेर्नानिष्टप्रसङ्ग इति । न चापि विशेषहेत्वभावेनायं विभागो युज्यत इत्याह तथापि । इति विशेषहेतुमाह आप्त इति । विकल्प्य दूषयति किम् इति । तथाविधेनाप्तेन वक्त्रा तेषु पदेष्वन्वयपर्यवसानानुगुणः कश्चिदतिशय आधीयते किमाप्तवक्तृत्वमेव वा तेषां विशेषः ? प्रथमे यथाभिहितान्वयवादिनां पदार्थप्रतिपादनानुगुणपदगतशक्तिव्यतिरेकेण पदप्रतिपादितानामेव पदार्थानां वाक्यार्थप्रत्यायनदर्शनात्तेष्वपि पदार्थेषु शक्तिरङ्गीकर्तव्येति गौरवमापद्यते तथा भवतोऽपि पदान्तरसाधारणशक्तिव्यतिरेकेणाप्तोक्तेषु पदेष्वन्वयप्रतीत्यनुगुणस्याप्तेनाधीयमानस्यातिशयस्याभ्युपगमाद् गौरवम् । द्वितीये तु यथा तव वक्तुरवच्छेदकत्वेन पदविशेषत्वं तथा ममापि पदानां पदार्थावच्छेदकत्वेनैव विशेषकत्वमस्तु न चातिशयाधानेनेति । यदि प्रतिपादितत्वविशेषेण पदार्था वाक्यार्थं गमयेयुः तर्हि नाभि-

प्रकाशः ।

असंसर्गेति । उत्प्रेक्षादिवशाद्वाक्यार्थासंसर्गाग्रहः काव्यरचनाहेतुरित्यर्थः । ममेति । मया पदैरप्रतिपादितानामपि पदार्थानां संसर्गप्रमोत्पादकत्वाभ्युपगमान्नासंसर्गाग्रहस्तत्र हेतुरित्यर्थः । त्वयाप्येतदभ्युपेयं, गत्यन्तराभावादित्याह तथापीति । गुरोरपीत्यर्थः । उच्चारणमात्रकर्तृत्वे तत्र विशेष इत्यर्थः । यद्याप्तेन तेषु पदेषु कश्चिद्विशेषो नाहितः, तदा नाप्तोक्तान्यन्वयबोधकानि स्युरित्याप्तेन

प्रकाशिका ।

वेति न तत्रान्वयबोध इत्यर्थः । एतदिति । पदानां पदार्थोपस्थापकत्वमात्रमित्यर्थः । तथापीति । संसर्गज्ञानजनताकनियामकत्वं यथा तवाप्तोक्तत्वस्य तथा ममापि पदार्थोपस्थितौ पदजन्यत्वस्येति भवदुक्तातिप्रसङ्गाभावात् नान्वये त्वदुक्तयुक्त्या पदशक्तिरिति मूलग्रन्थतात्पर्यार्थः । नन्वेवं कविकाव्यस्थले शाब्दं ज्ञानं स्यादिति भट्टस्यानसिद्धान्त इत्याशङ्कायामग्रे मूलं तस्मादिति । तुष्यतु दुर्जन इति न्यायेनैव तदुक्तमुद्देश्यपदार्थोपस्थापकत्वमात्रस्य तावतापि सिद्धेः । वस्तुतः साकांक्षपदार्थोपस्थितित्वेनैव कारणतेति तत्रापि शाब्दमेव ज्ञानमिति तस्य मूलस्याशयः । केचित्तु सैव पदावली क्वचिदन्वयग्रहपूर्विका क्वचिदनन्वयाग्रहपूर्विकेति परस्परव्यभिचारात्, कथं तयोश्च कारणतेति तथापीति फक्किकार्यमुक्त्वा तदनुसारेण मूलप्रकाशौ व्याख्यातवन्तः । ते भ्रान्ताः । तथा सत्याप्तानामित्यादिफक्किका कार्यतावच्छेदकविशेषोक्तिपरत्वेन योज्येति "आप्तानामेव सा शक्तिरि"त्याद्यनुयोगस्य प्राभाकरं प्रत्यसङ्गतत्वापातात्, आप्तस्य कारणकोटिनिवेशे हि सा शोभेतेति नचेत्या परिभावनीया प्रकाशोऽपि बहुषु स्थलेषु तथा सति विरुद्ध्यत इति संक्षेपः । तत्रान्वयेऽपि । पदार्थोपस्थिता-

मकरन्द ।

त्वयापीति । अन्यथा क्वचिदन्वयधीपूर्वकत्वं क्वचिदनन्वयाग्रहपूर्वकत्वमिति व्यभिचारापत्तेरिति भावः ।

टिप्पणी ।

संसर्गप्रमोत्पादकत्वाभ्युपगमादिति । प्रमेति सम्पातायातं बोधेति वक्तव्यम् गत्यन्तराभावादित्याह तथापीतीति । तथापीत्यादिसन्दर्भस्य निगूढोऽयमभिप्रायः व्यक्तस्तु पदार्थे पदस्य विशेषणत्वाभ्युपगमात् प्रत्यक्षोपस्थितितान्वयवारणेऽन्वितभिधाननिराकरण एव यातः, नव्यमतनिगर्वप्रतिपा-

विशेषः ? । प्रथमे अभिहितान्वयवादिनामिव तवापि शक्तिकल्पनागौरवम् । द्वितीये तु वक्तुरिव पदानामप्यवच्छेदकतयैव विशेषकत्वमस्तु । एवं तर्हि पदानामप्यन्वयप्रतीतावस्त्युपयोगः । कः सन्देहः । परं पदार्थाभिधानेन, न त्वन्यथा । यथा तवै-

बोधनी ।

मतान्वयसिद्धान्तसिद्धिरित्याशयेन पृच्छति **एवं तर्हि** इति । गूढाभिसंधिराह **कः संदेह** इति । तर्ह्यन्विताभिधानमेवाङ्गीकृतं स्यादित्याशङ्क्याभिसंधिमुद्घाटयन्नाह **परम्** इति । अन्वयोद्देशेन पदार्थाभिधानेन पदानामुपयोगो न त्वन्विताभिधानेनेति । यथाप्तानामन्वयप्रतीतावप्युपयोगः तदा शालिकानाथस्यायं

प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥

इति श्लोकः पदानामिति पदं प्रतिक्षिप्य तस्य स्थाने आप्तानामितिपदं प्रक्षिप्य पठितव्यमित्याह

प्रकाशः ।

पदनिष्ठातिशयाधानकल्पने यथा पदानां स्वार्थाभिधाने शक्तिस्तत्रान्वयधीहेत्वतिशयाधानशक्तिश्चेत्यऽभिहितान्वयपक्षे गौरवं, तद्वत्तवाप्तानां **पदोच्चारणशक्तिः** पदनिष्ठातिशयाधानशक्तिर्वाक्यार्थधीशक्तिश्चेति गौरवमापतितमित्याह **प्रथम** इति । अन्त्ये, ममापि पदैर्न पदार्थे शक्तिराधीयते, किन्तु पदोपस्थापितत्वमेवाप्तोक्तत्वमिव विशेषः स्यादित्याह **द्वितीये त्विति** । नन्वेवं पदानामेव वाक्यार्थवाचकत्वे सिद्धमन्विताभिधानमित्याह **एवं तर्हीति** । त्वन्मते यथाऽऽप्तानां पदोच्चारणमात्रे हेतुत्वं नान्वयबोधे, तथा ममापि पदानां पदार्थोपस्थापनमात्रे हेतुत्वं पदार्था एवाकाङ्क्षाद्युपेता अन्वयबोधका इत्याह **कः सन्देह** इति । तदाहुः—

**न विमुञ्चन्ति** सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
यज्ज्वलन्ति हि काष्ठानि तत् किं पाकं न कुर्वते ॥ इति ॥

न तु वाक्यार्थवाचकत्वेन । तथा सति त्वन्मतेऽप्याप्तानां तद्वाचकत्वापत्तेरित्याह **न त्विति** । एवञ्च प्राथमिकत्वाद् यदि पदानामन्वयबोधे करणत्वमापाद्यते, तदाऽऽप्तानामेव तथात्वात् तेषामेव

प्रकाशिका ।

वित्यर्थः । अभिहितान्वयपक्षे भट्टपक्षे गौरवं प्राभाकरेण त्वयोक्तमिति शेषः । प्रयोजकत्वे वृद्धसम्मतिमाह = **न विमुञ्चतीति** । **सामर्थ्यं** = तादृशस्य **पदार्थो**पस्थितिजननेन प्रयोजकत्वम् ।

मकरन्दः ।

**यथा पदानामिति** । यथा पदानां स्वार्थाभिधानशक्तिस्तत्र पदेष्वन्वयधीहेत्वभिधाऽऽख्यातिशयाधानशक्तिर्वाक्यार्थधीशक्तिश्चेत्यभिहि-तान्वयवादिनो मम भट्टस्य पक्षे गौरवं त्वयोच्यते, तथा तवाप्तानां पदोच्चारशक्तिः पदनिष्ठातिशयाधानशक्तिर्वाक्यार्थधीशक्तिश्चेति शक्तित्रयगौरवमिति भावः । **तथा ममापीति** । तथा च पदानां प्रयोजकत्वमात्रं न तु हेतुत्वमिति भावः । प्रयोजकत्वे प्राचीनसम्मतिमाह **न विमुञ्चतीति** । व्यभिचारजातीयतयेत्युपलक्षणं, निर्व्यापारत्वादित्यपि द्रष्टव्यम् । ननु पदार्थस्मरणवत्

टिप्पणी ।

दने निरुक्तसन्दर्भेण पदस्य विशेषणत्वप्रतीतौ कविकाव्यस्थले कवेस्तच्छ्द्गुशब्दोपपादनासम्भवात् । **तत्रान्वयधीहेत्वतिशयाभिधान इति** । उपस्थिते पदादेव वाक्यार्थान्वयधीहेतुः शक्तिश्च कुतः प्रत्यक्षादित इति पद एव तादृशशक्त्यनुकूला शक्तिर्न तत्रेत्यपि स्वीकरणीयम् इति शक्तित्रयमावश्यकम् । **आप्तानां पदोच्चारणशक्तिरिति** । वाक्यार्थान्वयधीहेतुंपदं कुतो नानाप्त उद्भावयतीत्युच्चारणानुकूलशक्तिराप्ते स्वीकार्या, आप्तोच्चरित एव तत्र पदे कुतोऽन्वयबोधानुकूलोऽतिशयो न त्वना-

वाक्यस्य संसर्गपरतया पदसमभिव्याहारमात्रेण, न त्वन्यथा। अन्यथा तु गुरुमतविदामेव श्लोक आप्तपदप्रक्षेपेण पठनीयः—

प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि।
आप्तानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥ इति॥

तस्मात् प्रकारान्तरेण संसर्गप्रत्ययो भवतु मा वा, पदार्थानामाकाङ्क्षादिमत्त्वे सति अभिहितानामवश्यमन्वय इति कुतोऽतिप्रसङ्गः।

न चैवं सति पदार्था एव करणं, तेषामनागतादिरूपतया कारकत्वाऽनुपपत्तौ तद्विशेषस्य करणत्वस्यायोगात्। तत्संसर्गे प्रमाणान्तरासंकीर्णोदाहरणाभावाच्च।

---

बोधनी।

**अन्यथा तु** इति। तथा पठति प्राथम्यादित्येतदुक्तं भवति। पदार्थेभ्यः पदानां प्राथम्यात्तेषामभिधातृत्वस्य च संप्रतिपन्नत्वादभिहितान्वयवादिभिरपि तेषां वाक्यार्थे तात्पर्यस्य चाभ्युपगमादन्वयं प्रति पदानामेव शक्तिरभ्युपगम्यतां न पदार्थानामिति हि श्लोकेन प्रतिपाद्यते। तत्र यथाप्तानां समभिव्याहारयोग्यपदोच्चारणव्यतिरेकेण पदेषु शक्त्याधानमभ्यङ्गीक्रियते तदा पदेभ्य आप्तानामेव प्राथम्यादित्यादिहेतुभिः अन्वयप्रतिपादने शक्तिरङ्गीक्रियतां न पदानामिति।

तदेवं यतः कुतश्चिदपि प्रतीतेरन्वयप्रतीतिरस्त्येवेत्युक्तं, संप्रति नास्माकमत्र निर्बन्धः पदाभिहितानामन्वयप्रतीतिरित्येतावतैवास्मत्सिद्धान्तसिद्धेस्तत्र चातिप्रसङ्गाभावादित्युपसंहारव्याजेनाह **तस्मात्** इति। नन्वेवं वाक्यार्थबुद्धौ पदार्थानामेव कारणत्वापत्तेः अशाब्दो वाक्यार्थः स्यादित्यत्राह **न चैवम्** इति। पूर्वभावनियमो हि कारणत्वं, तत्कथं संसर्गप्रत्ययपतितानामनागतानां पदार्थानां भवेत्, दूरे च कारणत्वविशेषः करणत्वमिति। न च शब्दादिप्रमाणव्यतिरेकेण पदार्थेभ्य एवान्वयप्रतीतिः क्वचिदपि दृश्यते येन पदार्थानामेव हेतुत्वं भवेदित्याह **प्रमाणान्तरेति**।

प्रकाशः।

तत् किं न स्यादित्याह **अन्यथेति**। पदानामेवेति गुरुमतश्लोके विशेषः। सा शक्तिरन्विताभिधाने शक्तिरित्यर्थः।

**तस्मादिति**। कविकाव्यस्थले मनसोत्प्रेक्षासहितेषु चिन्तावशोपस्थितेषु पदार्थेषु क्वचिद्दोषवशात् क्वचिदनुमानात् संसर्गज्ञानमसंसर्गाग्रहो वा भवतु, यत्र तु शब्दादाकाङ्क्षाद्युपेतपदार्थोपस्थितिस्तत्र पदार्था एव करणम्। शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते इति न्यायाच्च न शब्दं विना प्रकारान्तरोपस्थितपदार्थानां शब्दोपस्थापितपदार्थैरन्वयबोध इत्यर्थः।

**तदेवं** भट्टमतेन प्रभाकरं निराकृत्य पदार्थकरणत्वसिद्धान्तं निराकरोति **न चैवमिति**। **तत्संसर्ग** इति। पदं विना यत्र पदार्थज्ञानात् संसर्गज्ञानं, तत्र यथायथं मानान्तरसत्त्वान्न पदार्थानां

प्रकाशिका।

**दोषवशादिति**। मानसं ज्ञानमिति शेषः। इदं च सर्वमभ्युपगमवादेन मूलकृतोक्तमिति वर्द्धमानोऽपि यथाश्रुतमेव व्याख्यातवान्। तात्पर्यन्तु मूलव्याख्यायामेवोक्तम्। **तदेवमिति**। प्राभाकरोक्तातिप्रसङ्गनिराकरणञ्च नैयायिकेन तात्पर्यगत्यैव कृतम्, यच्च तात्पर्यं मया प्रागेवोक्तं व्यभिचारिज्ञातीयत्वेनोपलक्षणम् निर्व्यापारत्वाच्चेत्यपि द्रष्टव्यम्। ननु पदज्ञानमपि न कारणमुत्प्रेक्षास्थले व्यभिचारात्, न च तत्र मानसमेव ज्ञानं, प्रकृतेऽपि तथासम्भवेन कल्पनीयप्रमाणभावस्य पदज्ञानस्य कारणत्वाकल्प-

मकरन्दः।

पदज्ञानमपि न करणं, औत्प्रेक्षिकान्वयानुभवे व्यभिचारात्। किञ्च क्लृप्तप्रमाणभावेन मनसा पदार्थस्मरण-

टिप्पणी।

तोक इत्यभिप्रायानुक्त्वा शक्तिरात एव स्वीकार्या वाक्यार्थधीश लिङ्ग पदे इति शक्तिमयम्। नन्वै-

**पदानान्तु पूर्वभावनियमेन पदार्थस्मरणाऽवान्तरव्यापारवत्तया तदुपपत्तेः, व्यापारस्याऽव्यवधायकत्वादिति कृतं प्रसक्ताऽनुप्रसक्त्या ॥ १५ ॥**

बोधनी ।

पश्यतः श्वेतमित्यादौ तु व्याप्त्यायनुसंधानेनैव पदार्थैरन्वयप्रतीतिरित्यनुमानादित्वमेवेति भावः । पदानां तु करणत्वे न कश्चिद्दोष इत्याह **पदानां तु** इति । ननु तेषामपि पदार्थप्रतीतिव्यवधानेन न पूर्वभावोऽस्तीत्यत उक्तं **व्यापारस्य** इति । यथाहुः—'पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्' इति ॥ १५ ॥

प्रकाशः ।

संसर्गबोधे करणत्वम् । तथाहि काव्यस्थले पदार्थज्ञानव्यापारकमुत्प्रेक्षादिसहकृतं मन एवान्वयानुभवे करणम् । न चैवमुत्प्रेक्षाया मानान्तरत्वम् । व्यभिचारजातीयतया लिङ्गादाविव प्रमाकरणतावच्छेदकरूपाभावात् । श्वेतोऽश्वो धावतीति धीश्च लिङ्गजेत्यर्थः । ननु पदानामप्यतीतत्वात् कथं संसर्गधीकरणत्वम्, अथ पदस्मरणं करणं, तर्हि पदार्थस्मरणमेव करणमस्त्वाऽऽवश्यकत्वादित्यत आह **पदानां त्विति ।**

पदार्थस्मरणस्य निर्व्यापारत्वेनाकरणत्वात् पदार्थस्मरणस्य पदज्ञानव्यापारतया तेन तदन्यथासिद्ध्यभावादनन्यथासिद्धान्वयव्यतिरेकाभ्यामाकाङ्क्षादिमत्पदस्यान्वयानुभवविशेषे कारणत्वाच्च । अपि च व्युत्पत्तिकाले प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यव्यापारदर्शनादन्वितज्ञानोपपत्त्यर्थमन्वितबोधकत्वं शब्दस्य गृह्यते । तदत्र तन्निर्वाहार्थमर्थोपस्थितिरपि सहकारिणी कल्प्यते इति न तया शब्दस्यान्यथासिद्धिरिति शब्दतदर्थयोरुपस्थितयोरन्वयबोधात् कुत्रान्वयज्ञानशक्तत्वमिति संशये-

प्रकाशिका ।

नादित्यत आह **अनुभवविशेष इति ।** शाब्दजातीय इत्यर्थः । तथा च नोक्तव्यभिचारो गौरवञ्च प्रामाणिकम् । विजातीयज्ञानसिद्धौ विजातीयस्य तत्करणस्य स्वीकारात् । न च वैजात्यसिद्धिरेव कुत इति वाच्यम् । शब्दादमुमर्थं प्रत्येमीत्यनुव्यवसायात् आकाङ्क्षादिज्ञानसहकारितानुपपत्तेश्च । अन्यथानुमानमपि न स्यान्मनसैवान्यथासिद्धरिति जितं ( प्राभाकरैः ) चार्वाकैः । नन्वेवमपि शाब्दस्य विजातीयत्वेऽपि मानसमेव कुतो न जायते समाने विषये प्रत्यक्षसामग्र्या बलवत्वादिति चेन्न । अलौकिकप्रत्यक्षसामग्रीतो मानान्तरसामग्र्या बलवत्वात् । अन्यथानुमित्युच्छेदेऽनुमिनोमीत्यनुव्यव-

मकरन्दः ।

सहकृतेनौत्प्रेक्षिकवदन्वयग्रहोपपत्तौ मानान्तरकल्पने गौरवमित्यत आह **अनुभवविशेष इति ।** औत्प्रेक्षिकव्यावृत्तशब्दप्रयोज्यजातिमतीत्यर्थः, तथा च नोक्तव्यभिचारः, गौरवञ्च प्रामाणिकं, विजातीयप्रमासिद्धौ तत्करणस्यावश्यकत्वादिति भावः । ननु तत्सिद्धिरेव कुत इति चेत् । न । अनुमिनोमीत्यादिवत् शृणोमीत्यनुव्यवसायात् । ननु प्रत्यक्षसामग्रीबलवत्त्वान्मानसप्रत्यक्षसामग्रीसत्त्वे तदवश्यम्भाव इति, चेत् । न । लौकिकप्रत्यक्षसामग्र्यास्तथाप्यलौकिकप्रत्यक्षसामग्र्या दुर्बलत्वात्, अन्यथा अनुमितेरप्युच्छेदः स्यात् । ननु प्रयोज्यव्यापारदर्शनात् प्रयोजकत्वमात्रं गृह्यते

टिप्पणी ।

**चमुत्प्रेक्षाया मानान्तरत्वमिति ।** यदसाधारणं सहकार्यासाद्य मनो वहिर्गोचरां प्रमां जनयति तस्य प्रमाणान्तरत्वादुत्प्रेक्षायास्तथात्वादिति भावः । **व्यभिचारजातीयतयेति ।** बाधितोत्प्रेक्षायाः स्वजन्यज्ञानेन सह यो विषयस्य व्यभिचारस्तद्वत्तयार्थादप्रमाजनकतया तज्जातीयत्वेनाबाधितोत्प्रेक्षाया अपि न प्रमाकरणत्वरूपं प्रमाणत्वम्, लिङ्गस्य लिङ्गाभाससजातीयत्वेऽपि प्रमाणतावच्छेदकव्याप्तिपक्षधर्म्मतावत्त्वेन प्रमाणत्वेऽपि प्रकृते तादृशरूपाभावान्न तद्वत् प्रमाणत्वमित्यर्थः । **श्वेतोऽश्वो धावतीति धीश्चेति ।** हेपाशब्दं पक्षीकृत्य जन्यतयाऽन्यशब्दविशेषत्वेन साध्यस्ततः प्रत्यक्षापस्थितं श्वैत्यं तत्रोपनीततया मनसा गृह्यते, ततः श्वेतमश्वं पक्षीकृत्य धावनक्रिया खुरनिक्षेपशब्देन

अस्तु तर्हि शब्द एव बाधकं सर्वज्ञे कर्त्तरि, तथाहि—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते ॥

इत्यादि पठन्ति । अस्यायमर्थः—न पारमार्थिकं चेतनस्य कर्तृत्वमस्ति, आभिमानिकं तु तत् । न च सर्वज्ञस्याऽभिमानो, न चासर्वज्ञस्य जगत्कर्तृत्वमस्ति । उच्यते—

**न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।**
**अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥**

---

बोधनी ।

अस्तु पृथक् प्रमाणं शब्दः, स एव जगत्कर्तरि बाधकः स्यादित्याह **अस्तु** इति । कथमागमो जगत्कर्त्तारं बाधत इत्यत्राह **अस्यायमर्थ** इति । अस्तु तर्ह्याभिमानिकं कर्तृत्वम् ईश्वरस्येत्यत्राह **न च** इति । अभिमानो नाम भ्रान्तिः, स कथं सर्वज्ञस्य स्याद्विशेषाग्रहणहेतुकत्वात्तस्या इति । अस्तु तर्ह्यसर्वज्ञ इत्यत्राह **न चासर्वज्ञस्य** इति । **न प्रमाणम्** इति । न तावदनाप्तप्रणीतः शब्दो

प्रकाशः ।

प्राथम्याच्छब्दानामेव कारणत्वमवधारयति । किञ्चाग्निः करणम् ओदनः कर्मता पाकः कृतिरिष्टसाधनमिति ज्ञानेऽप्यग्निनौदनं पचेतेत्यत्रैव कुतो नान्वयबोधः ? तावत्पदार्थोपस्थितेरविशेषात् । तत्र परस्परमाकाङ्क्षा नेति चेत् , तर्हि साकाङ्क्षपदार्थोपस्थितौ पदविशेषजन्यत्वं तन्त्रमिति नागृहीतविशेषणान्यायात् पदविशेषोऽप्यन्वयबोधेऽङ्गमिति कथं न तस्य करणत्वम् । पदादमुमर्थं प्रत्येमीत्यनुव्यवसाये बाधकाभावाच्चेति सङ्क्षेपः ।

शब्दप्रामाण्यप्रसङ्गागतमन्विताभिधाननिराकरणं, तदनुप्रसक्तश्चाभिहितान्वयवाद इति विस्तरेण तन्निराकरणे ग्रन्थगौरवं स्यादित्यत आह **कृतमिति** ॥ १५ ॥

**प्रकृतेरिति ।** प्रकृतेरचेतनाया, गुणैः सत्वादिभिः । सर्वाणि कर्माणि क्रियमाणानि अहं कर्त्तेत्यहंकारोत्थव्यामोहवशाच्चेतनो मन्यते इति प्रतिपादनाच्चेतनस्य कर्तृत्वं निषिद्धम् । विशेषविधेः शेषनिषेधे पर्यवसानादित्यर्थः । कर्त्तेति तृन्नन्तम् । अतो, न लोकाव्ययेत्यादिना कृद्योगषष्ठ्या निषेधः । न चाभिमानिकं जगत्कर्तृत्वमीश्वरस्येत्याह **न चेति ।** तन्मूलविशेषादर्शनाभावादित्यर्थः । उपदर्शितागमो यदि नाप्तोक्तस्तर्ह्यप्रमाणत्वान्न बाधकः । आप्तोक्तश्चेत् , तर्ह्यागमप्रणयनहेतुस्तज्ज्ञानमिन्द्रियलिङ्गाद्यभावान्नित्यमुपेयम् । तत्र च विषयस्याहेतुत्वात् **सर्वविषयत्वमर्थसिद्ध**मित्यागमोऽप्यन्यपर इत्याह **न प्रमाणमिति** । न चाप्तोक्तत्वं विना नित्यत्वादागमो मानं,

प्रकाशिका ।

सायविरोधादिति दिक् । नन्वविरोधिपदजन्यपदार्थोपस्थितित्वेनान्वयबोधकत्वम् , अन्यथा तवाप्याकांक्षादिविरहाच्छाब्दान्वयबोधाभावेऽपि मानसान्वयबोधाविप्रत्यूहं व्यवहारः स्यादित्यरुचेराह **पदादिति** ॥ १५ ॥

**सर्वविषयत्वमिति ।** तथा च न्यायसिद्धं जगत्कर्तृत्वं तस्येत्यागमोऽप्यन्यपर इत्यर्थः ।

मकरन्दः ।

न तु हेतुत्वम् , अन्वयव्यतिरेकादेः साधारणतया तत्संशायकत्वादित्यरुचेराह **किञ्चेति ।** नन्वन्वयविरोधिपदाजन्यपदार्थोपस्थितित्वेनान्वयबोधकत्वम् , अन्यथा तवाप्याकाङ्क्षादिवैकल्याच्छाब्दान्वयबोधाविप्रत्यूहो व्यवहारः स्यादित्यरुचेराह **पदादिति** ॥ १५ ॥

टिप्पणी ।

सम्बन्धविशेषेण पक्षसम्बन्धेन लिङ्गेनानुमेयेत्यर्थः । कविकाव्यस्थले च मानसमेकमेव वाक्यार्थज्ञानमिति भावः ॥ १५ ॥

**तज्ज्ञानमिन्द्रियलिङ्गाद्यभावादिति ।** प्रकृतिकर्तृत्वाद्यर्थस्यातीन्द्रियत्वेनेन्द्रियस्य तत्र

यदि हि सर्वज्ञकर्त्रभावावेदकः शब्दो नाप्तोक्तः, न तर्हि प्रमाणम्। अथाप्तोऽस्य वक्ता, कथं न तदर्थदर्शी। अतीन्द्रियार्थदर्शीति चेत्। कथमसर्वज्ञः? कथं वा न कर्त्ता। आगमस्यैव प्रणयनात्। न च नित्यागमसम्भवो विच्छेदादित्यावेदितम् १६

अपि च—

**न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्॥**
**निरञ्जनावबोधार्थो न च सन्नपि तत्परः॥ १७॥**

---

### बोधनी।

बाधकस्तस्याप्रमाणत्वात्। अथाप्तोक्तस्तर्हि तदर्थदर्शिना तेन भवितव्यं, यदि चातीन्द्रियमागमार्थं दृष्ट्वा तं प्रणयेत्स तर्हि सर्वज्ञः कर्त्ता च स्यात्, न च नित्य एवागमो बाधकः सर्गप्रलयसंभवेन तस्यापास्तत्वादिति निगदव्याख्यातं व्याख्यानमिति॥ १६॥

बाधकं शब्दमभ्युपगम्याप्याह **अपि च** इति। न चासावागमो जगत्कर्तुरसत्त्व एव नियतः सत्त्वस्यापि तेन प्रतिपादनोपलम्भात्, ततश्च नानियतत्वात्तेनासत्त्वसिद्धिः, तर्हि तत एव सत्त्वमपि न सिध्येदित्यत उक्तं **निरञ्जनेति**। चेतनस्याकर्तृत्वप्रतिपादक आगमो विशेषगुणलक्षणाञ्जनरहितात्मस्वरूपप्रतिपादनार्थत्वेनान्यपरत्वान्नासत्त्वमावेदयति। तर्हि सत्त्वप्रतिपादकोऽप्यन्यपरः स्यादत

### प्रकाशः।

**सर्गप्रलययोः** साधितत्वादित्याह। **न चेति**॥ १६॥

न केवलं तत्र बाधकाभावः, अपि तु द्यावाभूमी जनयन् देव एक इत्यादिश्रुतयः साधिका अपि सन्तीत्याह—

**न चासाविति**। शब्दयोर्मिथः प्रतिबन्धादपि न बाध इत्याह **निरञ्जनेति**। बाधकत्वाभिमत आगमः, आत्मनो यन्निरञ्जनत्वं विशेषगुणशून्यत्वं तद्ध्येयमित्येवम्परो, न त्वकर्तृत्वबोधनपर इत्यर्थः॥

### प्रकाशिका।

**सर्गप्रलययोरिति**। सर्गेति सम्पातायातम् नित्यत्वं हि वेदस्य न व्योमादिवद् वाच्यम्, वर्णनित्यत्वेऽप्यनित्यानुपूर्वीघटितत्वात्, किन्तु प्रवाहनित्यत्वं तत्र चेदं दूषणमित्यवधेयम्॥ १६॥

**शब्दयोरिति**। यद्यपि मिथः प्रतिबन्धेन बाधो न भवत्येव। तथापि बाधपदेनात्र प्रतिबन्ध एवोक्तः, **विशेषगुणशून्यत्वमिति**। अनित्यविशेषगुणशून्यत्वमीश्वरस्येत्यर्थः॥

### मकरन्दः।

**सर्वविषयत्वमिति**। तथा च तस्य जगत्कर्तृत्वं न्यायप्राप्तमित्यागमोऽन्यपरइत्यर्थः। **सर्गप्रलययोरिति**। अत्र सर्गेति सम्पातायातम्। प्रलयेऽपि व्योमादिवन्नित्यागमसत्त्वे न विरोधः, तथापि वर्णनित्यत्वेऽप्यानुपूर्वीघटितस्यानित्यत्वात् प्रवाहनित्यत्वात् प्रवाहनित्यत्वं वाच्यं, तत्रेदमुत्तरमिति भावः॥ १६॥

**शब्दयोरिति**। यद्यपि मिथः प्रतिबन्धाद् बाधो न भवत्येव, तथापि बाधो न दोष इत्यर्थः। साधकागमस्येति शेषः। बाधकत्वाभिमतागमस्यान्यार्थपरतया विरोधाभावेनाप्रतिरोधकत्वादिति भावः॥

### टिप्पणी।

सामर्थ्याभावात् चेतनस्य कर्तृत्वाभावे लिङ्गस्य व्यभिचारादितोऽभावादुक्तवाक्यार्थज्ञाननित्यमुपेयमित्यर्थः। **सर्वविषयत्वमर्थसिद्धमिति**। सर्वज्ञसिद्धौ तदभावपर उक्तागमः, प्रमाणत्वाय प्रथितव्य इत्यर्थः॥ १७॥

न ह्यसत्त्वपक्ष एवागमो नियतः । ईश्वरसद्भावस्यैव भूयःसु प्रदेशेषु प्रतिपादनात् । तथा चाग्रे दर्शयिष्यामः । तथा च सति क्वचिदसत्त्वप्रतिपादनमनेकान्तं न बाधकम् । सत्त्वप्रतिपादनमपि तर्हि न साधनमिति चेदापाततस्तावदेवमेतत् । यदा तु निःशेषविशेषगुणशून्यात्मस्वरूपप्रतिपादनार्थत्वमकर्तृकत्वागमानामवधारयिष्यते, तदा न तन्निषेधे तात्पर्यममीषामिति सत्त्वप्रतिपादकानामेवागमानां प्रामाण्यं भविष्यतीति । न च तेषामप्यन्यत्र तात्पर्यमिति वक्ष्यामः ॥ १७ ॥

अस्त्वर्थापत्तिस्तर्हि बाधिका, तथाहि—यद्यऽसर्वविषयत्नोपादेत्स्यद्, न ह्यसावनुपदिश्य प्रवर्त्तयितुं न जानाति, अत उपदेश एवान्यथानुपपद्यमानस्तथाविधस्याभावमौदासीन्यं वाऽऽवेदयति । न । अन्यथैवोपपत्तेः—

**हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ॥**
**तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥ १८ ॥**

बोधनी ।

उक्तं **न चासौ** इति । सत्त्वावेदकस्य नान्यत्र तात्पर्यमिति पञ्चमे वक्ष्याम इति । **न ही**त्यादिर्विवरणग्रन्थो गतार्थः ॥ १७ ॥

अथार्थापत्तेर्बाधकत्वं निराचिकीर्षुः शङ्कते **अर्थापत्तिस्तर्हि** इति । असौ सर्वज्ञः सर्वकर्त्ता वेदाननुपदिश्यैव ज्योतिष्टोमादौ पुरुषान् प्रवर्त्तयितुं कलञ्जभक्षणादिभ्यश्च निवर्त्तयितुं शक्नोत्येवेति तदर्थस्तस्योपदेशो व्यर्थ इति । नान्यथेति । जगत्कर्तुः सत्त्व एवोपदेशस्योपपत्तेः नासत्त्व इति । तदेवोपपादयन्नाह **हेत्वभावे** इति । न तावदसति हेतौ फलस्यासंभवादसत्युपदेशात्मके प्रमाणे

प्रकाशः ।

उत्तरार्द्धं व्याचष्टे **यदा त्विति** ॥ १७ ॥

अर्थापत्तिबाधकत्वमुपन्यस्य निराकरोति **अस्त्विति । न ह्यसाविति** । असार्वज्ञ्यापत्तेरिति भावः । **हेत्वभावे** इति । कारणाभावे कार्याभाव इति सामान्यव्याप्तौ कारणविशेषप्रमाणाभावे कार्यविशेषप्रमा न स्यादित्यर्थः । तदभावेऽनिष्टमाह **तदभावादिति** । इच्छाद्वारा प्रमाजन्या प्रवृत्तिरस्मदादीनां नेश्वरेण कारयितुं शक्या, ततः प्रवर्त्तनीयप्रमोत्पादनाऽर्थमवश्यमुपदेश इत्यर्थः । प्रमाया अभावेऽप्यदृष्टादेव प्रवृत्तिः स्यात् किं वेदेनेति मतेऽप्युपदेशानर्थक्यमेवादृष्टादेव प्रवृत्तेरित्याह **कर्मवादेऽपीति** ।

प्रकाशिका ।

**असार्वज्ञ्यत्वापत्तेरिति** । उपदेशं विनापि यः प्रवर्त्तनोपायः, तस्याज्ञानादित्यर्थः । प्रथमपदवैयर्थ्याशङ्कायामाह **सामान्यव्याप्ताविति** । तथा च विशेषव्याप्तिसाधकत्वेनैव सामान्यव्याप्तिरुपन्यस्तेत्याशयः । **शक्या इति** । उपदेशं विनेति शेषः । उपदेशपदं विनापि सामान्यलक्षणादिजन्यप्रमाद्वारा प्रवृत्तिं कारयितुं शक्यते एवेतीच्छाद्वारेति पूरणविशेषणं स्वीकृतम् , इच्छा चेष्टसाधनत्वादिप्रकारकज्ञानसाध्येति नोक्तदोषः । **प्रमोत्पादनार्थमिति** । इष्टसाधनत्वादिप्रकारकप्र-

मकरन्दः ।

**असार्वज्ञ्यापत्तेरिति** । उपदेशं विना प्रवर्त्तकत्वस्याज्ञानादित्यर्थः । प्रमाणपदवैयर्थ्यमाशङ्क्याह **कारणाभाव** इति । तथा च प्रमाणाभावेनेत्यपि मूलं सामान्यव्याप्तिविषयमित्यर्थः । **इच्छाद्वारेति** । उपदेशं विनेति शेषः । इच्छाद्वारेति पूरणं यद्यप्यफलं, तथापि प्रमामात्रं सामान्यलक्षणादिभिरप्युपपद्यते इतीच्छाजनकं यागादेरिष्टसाधनत्वज्ञानमुपदेशं विना नेत्याशयेन तदुक्तम् । **प्रवर्तनीयेति** । इष्टसाधनत्वादिप्रकारकयागादिप्रमोत्पादनार्थमित्यर्थः । नन्वेवमपि वेदान्तरूप

**बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसम्पादना, न च प्रकृते बुद्धिरप्युपदेशमन्तरेण शक्यसिद्धिः, तस्यैव तत्कारणत्वात्। भूतावेशन्यायेन प्रवर्त्तयेदिति चेत्। प्रवर्त्तयेदेव यदि तथा फलसिद्धिः स्यात्। न त्वेवम्। कुत एतदवसितम्?। उपदेशान्यथानुपपत्त्यैव। यस्यापि मते अदृष्टवशादेव भूतानां प्रवृत्तिस्तस्यापि तुल्यमेतत्। यद्यस्ति प्रवृत्तिनिमित्तमदृष्टं, किमुपदेशेन। तत एव प्रवृत्तिसिद्धेः। न चेत्, तथापि किमुपदेशेन। तदभावे तस्मिन् सत्यप्यप्रवृत्तेः। नित्यः स्वतन्त्र उपदेशो न पर्यनुयोज्य इति चेत्। यूयं पर्यनुयोज्याः? ये तमवधानतो धारयन्ति विचारयन्ति चेति ॥ १८ ॥**

---

### बोधनी।

ज्योतिष्टोमादेः स्वर्गादिसाधनत्वविषया प्रमा भवति, तदभावे च तत्रास्मदादीनां प्रवृत्तिः सिध्येदुपदेशश्च नोपदेष्टारं विनेति। ततस्तत्सिद्धिरितरथाऽयमनुयोगप्रकारकर्मवशाद् भूतानां प्रवृत्तिरिति पक्षे सुलभः कर्मण एव प्रवृत्तिसिद्धेः किमुपदेशेनेति॥

**बुद्धिपूर्वा** इति। न हीश्वरोऽपि वस्तुस्वभावातिक्रमेण प्रवर्त्तयतीति प्रकृतज्योतिष्टोमादेः स्वर्गादिसाधनत्व इति। ननु यथा पिशाचादयः प्राणिन आविश्याबुद्धिपूर्वकमेव प्रवर्त्तयन्ति तथैवायं किमिति न प्रवर्त्तयेदित्याह **भूतावेशे**ति। अबुद्धिपूर्वकत्वमनुतिष्ठतां फलाभावान्न तथा प्रवर्त्तयतीत्याह **प्रवर्त्तयेदेव** इति। अबुद्धिपूर्वानुष्ठाने फलाभाव आप्तोपदेशान्यथानुपपत्तेरेवावसेय इति तुरीयं पादं व्याचष्टे **यस्यापि** इति। तुल्यतामेवाह **यद्यस्ति** इति। न हि सत्यपि कारके ज्ञापकाभावेन कार्यं निवर्त्तत इति। **तदभावे** इति। न हि कारकाभावे ज्ञापकसंभवेन कार्यं भवतीति नित्य इति पर्यनुयोज्यस्तु कर्ता नास्तीति भावः। तथापि निरर्थकमिममुपदेशं धारयन्तः तदर्थं च विचारयन्तो यूयं मीमांसकाः पर्यनुयोज्या इत्याह **यूयम्** इति ॥ १८ ॥

### प्रकाशः।

**प्रवर्त्तयेदेवेति**। विधिवाक्येन स्वर्गकामप्रवृत्तिर्हि स्वर्गसाधनमिति बोधनाद् भूतावेशन्यायेन जनिताऽपि प्रवृत्तिर्न स्वर्गसाधनमित्यर्थः। उपदेशान्यथानुपपत्त्या गत्यन्तरेणापि प्रवर्त्तनमशक्यमित्यवधार्यते इत्याह **उपदेशेति**। वेदादात्मश्रवणस्यापि मोक्षहेतुत्वाद्वेदरूप उपदेश आवश्यकः, प्रतिपुरुषं भूतावेशादुपदेश एव लघीयानिति भावः। **यद्यस्तीति**। न चादृष्टमप्युपदेशात् प्रवृत्तौ स्यादिति वाच्यम्। उपदेशं विनाऽपि पूर्वादृष्टवशादेव यागादौ प्रवर्त्तेत, तददृष्टमप्युपदेशमन्तरेण पूर्वप्रवृत्त्यैवेत्याशयात्। **यूयमिति**। न च वेदधारणविचारणयोरदृष्टजनकत्वश्रुतेरदृष्टार्थतया तयोरुपपत्तिः स्यादिति वाच्यम्। प्रवृत्त्यर्थमपि तदुभयकरणादिति भावः ॥ १८ ॥

### प्रकाशिका।

मोत्पादनार्थमित्यर्थः। नन्वेवं आप्तोपदेशकवेदादन्य उपदेशो वेदरूपः किमर्थमत आह **प्रतिपुरुषमिति** ॥ १८ ॥

### मकरन्दः।

उपदेशः कथमित्यत आह **प्रतिपुरुषमिति** ॥ १८ ॥

### टिप्पणी।

**प्रवृत्त्यर्थमपि तदुभयकरणादितीति**। स्वर्गकामो यजेतेत्यादौ कामनाया अपि स्वर्गसाधनत्वश्रुतेः कामना च नेष्टसाधनत्वज्ञानं विना तच्च नोक्तोपदेशं विना तदर्थस्यालौकिकत्वादिति प्रवृत्तावायातमुपदेशापेक्षणमिति भावः ॥ १८ ॥

न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसंकीर्णोदाहरणाभावात्, प्रकारान्तराभावाच्च ।

तथाहि—

**अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ॥**
**न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥**

जीवंश्चैत्रो गृहे नास्तीत्यनुपपद्यमानमसति बहिःसद्भावे तमापादयतीत्युदाहरन्ति । तत्र चिन्त्यते—किमनुपपन्नं जीवतो गृहाभावस्येति, न ह्यनियम्यस्यानियामकं विना किञ्चिदनुपपन्नम् । अतिप्रसङ्गात् । ननु स्वरूपमेव तद् न तावद्बहिःसत्त्वेन कर्त्तव्यं, तदऽकार्यत्वात् तस्य, स्थितिरेवास्य तेन विना न स्यादित्यस्य स्वभाव इति चेत् । एवं तर्हि तन्नियतस्वभाव एवासौ व्याप्तेरेव व्यतिरेकमुखनिरूप्यायास्तथा व्यपदेशात् । कथं वा बहिःसत्त्वमस्योपपादकम् ? । न हि

बोधनी ।

तदेवमर्थापत्तेः पृथक्प्रमाणत्वमङ्गीकृत्य बाधकत्वं निरस्तम्, इदानीमनुमानान्तर्भावात्तन्निरासेनैव निरस्तमित्याह **न च** इति । अनुमानागोचरस्य प्रमेयस्याभावात् सामग्रीभेदाभावाच्च ततो न भिद्यत इति । ननु व्याप्याद्व्यापकज्ञानमनुमानम्, अर्थापत्तिस्त्वनुपपद्यमानादुपपादककल्पनं, ततः सामग्रीतो विषयतश्च भेद इत्याशङ्कयाह **तथा हि** इति । यद्धि येन नियम्यते तस्य तेन विनानुपपत्तिर्नान्यस्य, तथा येन यन्नियम्यते तदेव तस्योपपादकं नान्यत्, नियमश्च व्याप्तिरेव । ततश्चानुपपद्यमानोपपादकत्वाभ्यां व्याप्यव्यापकभाव एवाभिहितः स्यात् । अथ प्रमाणद्वयविरोधे सत्यविरोधापादनमर्थापत्तिरिति चेत्, मैवं व्याहतं भाषिष्ठाः । न हि विरोधिनोर्द्वयोरपि प्रामाण्यं संभवति रज्जुसर्पज्ञानयोरिवान्यतरस्य मिथ्यात्वावश्यंभावात्, प्रमाणयोश्च सतोर्विरोध एव नास्ति स्थूलः शुक्ल इति वद् द्वयोः समावेशसंभवात् । तस्माज्जीवतो गृहाभावात् वहिर्भावकल्पनमनुमानमेव व्याप्तिवलेन जायमानत्वात्, अन्यथानुमानतया असिद्धे धूमादावपि असौ अनुपपत्तिः प्रमाणद्वयविरोधश्च, सम इति तदपि प्रमाणान्तरमापद्येतेति । व्याचष्टे **जीवंश्चैत्रः** इति । किमनुपपन्नं न किञ्चिदिति । तदेवाह **न हि** इति । **ननु** इति । गृहाभावस्वरूपमेव वहिर्भावेन विनानुपपन्नमिति । **तन्न तावत्** इति । तत्स्वरूपमुत्पत्तौ तावन्न तेन विनानुपपन्नमिति । नन्वस्य गृहाभावस्य स्थितिस्तेन वहिर्भावेन विना नोपपद्यत इत्याह **स्थितिरेव** इति । हन्तैवं गृहाभावस्तेन वहिर्भावेन नियतस्वभाव इत्युक्तं स्यादित्याह **एवं तर्हि** इति । कुत इत्यत्राह **व्याप्तेरेव** इति । साध्येन विना नैव भवितव्यं साधनेनेति हि व्यतिरेकव्याप्तेर्व्यपदेश इति । द्वितीयं पादं व्याचष्टे **कथं वा** इति । नन्वयं स्वभावोऽस्य वहिःसत्त्वस्य यदनेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति, सत्येव वहिःसत्त्वे

प्रकाशः ।

**प्रकारान्तरेति** ॥ अनुमानप्रकारापेक्षया फलवैजात्याभावाद् व्यापारभेदाभावाच्च भिन्नप्रकाराभावादित्यर्थः ॥

**अनियम्यस्येति** ॥ अनियम्यस्याव्याप्यस्य न अयुक्तिरयोगोऽनुपपत्तिर्व्यापकमुपपादकं विना, अपि तु व्याप्यस्य व्यापकं विनाऽनुपपत्तिः । अनियन्ता चाव्यापको नोपपादकोऽपि तु व्यापकं तथेत्यनुपपत्तौ व्याप्तिरस्त्येवेति तज्ज्ञानात् कल्पनमनुमानमेवेत्यर्थः । प्रमाणयोर्विरोधे चाविरोधायार्थापत्तिरिति मतान्तरं निरस्यति—**न मानयोरिति** ॥ एवमनङ्गीकारे धूमादग्न्यनुमानमप्यर्थापत्तिरेव स्यादित्याह **प्रसिद्धे वापीति** । **एवं तर्हीति** । जीवतो गृहाभावस्थितिरेव वहिःसत्त्वेन विना नेति

अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव। स्वभावोऽस्य यदनेन वहिःसत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति चेत्। सेयं व्याप्तिरेवान्वयमुखनिरूप्या तथा व्यपदिश्यते इति। न वयमविनाभावमर्थापत्तावपजानीमहे, किन्तु तज्ज्ञानम्, न चाऽसौ सत्तामात्रेण तदनुमानत्वमापादयतीति चेत्। न। अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्यत्वात्। अन्यथा त्वतिप्रसङ्गात्, अर्थापत्त्याभासाऽनवकाशाच्च। यदा ह्यन्यथैवोपपन्नमन्यथाऽनुपपन्नमिति मन्यते तदाऽस्य विपर्ययो, न त्वन्यथेति। तथापि कथमत्र व्याप्तिर्गृह्यतेति चेत्। यदाऽहमिह तदा नान्यत्र, यदान्यत्र तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत्, का तत्रापि

**बोधनी।**

गेहासत्त्वमिति यावत्, तदेतदाह **एवम्** इति(१)। तर्हीयं साध्येन सहैव साधनेन भवितव्यमित्यन्वयव्याप्तिरेवोक्ता भवेदित्याह **सेयम्** इति। **न वयम्** इति। ज्ञातस्यैवाविनाभावस्यानुमानसामग्रीत्वादिति भावः। **न** इति। अनुपपत्तिश्चाविनाभाव एवेत्युक्तमिति भावः। **अर्थापत्त्याभासेति**। ज्ञानस्य हि हेतुत्वे तद्दोषाद्विपर्ययः संभवतीति। गृहाभाववह्निर्भावयोर्व्यधिकरणत्वाद्दुर्ग्रहा व्याप्तिरित्याशयेन पृच्छति **तथापि** इति। क्वचित्सत्त्वस्य ततोऽन्यत्रासत्त्वेन क्वचिच्चासत्त्वस्य ततोऽन्यत्र सत्त्वेन व्याप्तेः सर्वेषां स्वात्मन्येवैकस्मिंश्च धर्मिणि सुग्रहत्वेन न काचिदत्र कथन्तेत्याह **यदाऽहम्** इति। ननु कथमेकत्र स्थितेन ततोऽन्यत्र स्वात्मनोऽभावः शक्यावगमः तेषां देशानामेवाग्र-

**प्रकाशः।**

व्यतिरेकव्याप्तिरेवेत्यर्थः। **सेयमिति**। वह्निनेव धूमं वहिःसत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमतो धूमे सति वह्निर्भवत्येवेतिवत् सति गृहासत्त्वे जीवतो वहिःसत्त्वं भवत्येवेति अन्वयव्याप्तिरेवेत्यर्थः। अर्थापत्तौ कल्प्यकल्पकयोर्व्याप्तिः सत्यपि न ज्ञाता कल्पनाङ्गमिति नेयमनुमानमित्याह **न वयमिति**। एवं सत्यनुपपत्तिज्ञानं विनापि कल्पना स्यादिति तज्ज्ञानमावश्यकमित्याह **अनुपपत्तीति**। व्याप्तिज्ञानं विनानुपपत्तेरज्ञानादित्यर्थः। सत्तावस्थितव्याप्त्यैव कल्पनेऽन्यथोपपन्नेऽप्यनुपपत्तिधिया उपपादककल्पना न स्यादित्याह—**अर्थापत्त्याभासेति**। **विपर्यय** इति। उपपादककल्पनरूपो भ्रम इत्यर्थः। न च दोषादेव भ्रमः भ्रमप्रतिबन्धश्च स्यादिति वाच्यम्। यत्र भ्रमस्तत्र वस्तुतो व्याप्तिरेव नेति क्व दोषः सहकारी स्यादित्याशयात्। **यदाऽहमिहेति**। यथा-ह्यन्वये जीविगृहासत्त्वं व्याप्यं व्यापकं च वहिःसत्त्वं, विपर्यये तु वहिरसत्त्वं व्याप्यं गृहसत्त्वं च

**प्रकाशिका।**

नन्वेवमपि व्याप्तिज्ञानं नायातमित्यत आह **व्याप्तिज्ञानं विनेति**। **उपपादकेति**। उपपादकत्वाभिमतेत्यर्थः। **क्व दोष इति**। त्वया स्वरूपसत्या एव व्याप्तेः कल्पनाङ्गत्वाभ्युपगमाद्दोषस्य च कल्पकनिरपेक्षस्य कल्पनाङ्गत्वाभावादिति भावः। **यद्यपीति**। प्रकृते विवक्षितमिति

**मकरन्दः।**

नन्वेवमपि व्याप्तिज्ञानं नायातमत आह **व्याप्तिज्ञानं विनेति**। **उपपादकेति**। उपपादकत्वाभिमतकल्पनेत्यर्थः। क्वेति त्वया स्वरूपसद्व्याप्तेरेव कल्पनाऽङ्गत्वेनाभ्युपगमादिति भावः। **यद्यपीति**। अत्र, प्रकृते विवक्षितमिति शेषः। वैपरीत्येऽपि व्याप्यव्यापकभावसम्भवादिति ध्येयम्।

---

(१) एतदनुसारेण मूले 'अतिप्रसंगात् एवं स्वभाव' इति पाठो द्रष्टव्यः।

कथन्ता ?। सर्वदेशाप्रत्यक्षत्वे तत्राभावो दुरवधारण इत्यपि नास्ति। तेषामेव संसर्गस्यात्मनि प्रतिषेधात्। अयोग्यानां प्रतिषेधे का वार्त्तेति चेत्। तदवयवानां तत्संसर्गप्रतिषेधादेवानुमानाद् अन्येषां न काचित्, न ह्यकारणीभूतेन परमाणुना नेदं संसृष्टमिति निश्चेतुं शक्यमिति। न चाऽविनाभावनिश्चयेनापि गमयन्नपक्षध-

बोधनी।

र्त्यक्षत्वेन योग्यानुपलम्भाभावादित्याशङ्क्याह **सर्वदेश** इति। न हि तेषु स्वात्मनो निषेधः किन्तु स्वात्मनि तेषां संसर्गस्य निषेधः। स्वात्मा च प्रत्यक्ष एव, प्रतियोगिनश्च ते स्मरणमात्रेणोपयुज्यन्ते न प्रत्यक्षत्वेनेति। स्वात्मनि वा कथमयोग्यानां प्रतिषेध इत्याह **अयोग्यानाम्** इति। तत्रायोग्याः परमाण्वादयो द्विविधाः आरब्धस्थूलकार्यावयवभूताः केवलाश्च। तत्र पूर्वेषां स्वात्मनि निषेधः तदारब्धस्थूलावयविसंसर्गनिषेधादनुमानत एव सुकरस्तदसंसर्गस्य तदवयवासंसर्गेण व्याप्तेः, उत्तरेषां तु संसर्गनिषेधे न काचिद्वार्त्ता प्रमाणाभावेनाशक्यत्वादित्याह **तदवयवानाम्** इति। अस्त्येवाविनाभावनिश्चयोऽप्यङ्गमर्थापत्तेः, तथापि नानुमानत्वं पक्षधर्मत्वाभावादित्यत्राह **नचाविनाभावे**ति। एवं ह्यनुमानेऽपि पक्षधर्मत्वं निमित्तं न स्यात् व्यधिकरणेनापि साधनेन साध्यसिद्ध्युपपत्तेरिति। न च व्यधिकरणेन साध्येनाविनाभावः शक्यनिश्चयः, यत्साधनं यत्र देशे यदा यस्मिन् कालेऽस्ति तत्र तदा वा तत्साध्यमिति देशतः कालतो वा सामानाधिकरण्येनैवाविना-

प्रकाशः।

व्यापकमिति यद्योगप्राथम्याभ्यां यदा नान्यत्र तदाऽहमिह, यदा नेह तदाऽन्यत्रेति वक्तुमर्हति। तथापि यत्तदोर्विभिन्नैव सम्बन्धः कार्यः, तेन यदा जीवतो गृहासत्त्वं तदा बहिःसत्त्वमित्यन्वयव्याप्तिः, यदा तु बहिरसत्त्वं तदा जीवतो गृहसत्त्वमिति व्यतिरेकव्याप्तिरुक्ता। सर्वत्र बहिरभाव एव प्रत्येतुमशक्योऽधिकरणानामयोग्यत्वादित्याह **सर्वदेशेति**। न तेषु तेषु देशेष्वभावनिश्चयः, किन्त्विन्द्रियग्रहणयोग्यानां तावदात्मनि संसर्गाभावो योग्यानुपलब्ध्या निश्चीयते इत्याह—**तेषामेवेति**। सर्वदेशानामित्यर्थः। **अयोग्यानामिति**। तत्र योग्यानुपलब्धेरसामर्थ्यादित्यर्थः। **तदवयवानामिति**। योग्यानामयोग्या येऽवयवाः, तेषामवयविसंसर्गनिषेधादेव संसर्गनिषेधो निश्चेयः। न हि यद् येनावयविना न संसृष्टं तत् तदवयवसंसृष्टम्। अवयवावयविविधुरातीन्द्रियद्रव्यसंसर्गस्य च न विधिनिषेधवार्त्ता, उभयत्र मानाभावादित्यर्थः। ननु जीविगृहाभावबहिःसत्त्वयोर्व्याप्तावपि जीविदेवदत्ताभावो गृहे वर्त्तमानो न बहिःसत्त्वे लिङ्गं, देवदत्तावृत्तित्वादित्यनुमानाद्भेदोऽर्थापत्तेः स्यादित्यत आह—**न चेति**। गृहनिष्ठाभावप्रतियोगित्वस्य लिङ्गत्वात्तस्य च देवदत्तवृत्तितया पक्षधर्मत्वादित्यर्थः। अन्यथा बहिःसत्त्वगृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूपा व्याप्तिरपि न स्यात्। उपरि सविता भूमेरालोकवत्त्वादित्यत्रापि भूमेरुपरि सन्निहितसवितृकत्वेनानु-

प्रकाशिका।

वाक्यशेषः, वैपरीत्येऽपि व्याप्यव्यापकभावसम्भवादिति ध्येयम्, यदा नेति व्याप्य एव नञर्थस्य प्रवेशादिति भावः। **उभयत्रेति**। यद्यप्येवमपि व्याप्तिनिश्चयोऽशक्य एव तथापि प्रत्यक्षाभावेप्यनुमानादिना तन्निश्चयसम्भव इति भावः। व्याप्तावपीत्युपलक्षणम्। तन्निश्चयेपीत्यपि द्रष्टव्यम्। **उपरीति**। तथा च तत्रापि सामानाधिकरण्यमस्त्येवेति भावः। ननु स्थूलमिदमेकमेव ज्ञानमिति द्विती-

मकरन्दः।

**यदा नेति**। व्याप्य एव नञर्थप्रवेशादिति भावः। **उभयत्रेति**। यद्यप्येवं संशय इति न व्याप्तिनिश्चयः स्यात्, तथापि प्रत्यक्षाभावेऽप्यनुमानादपि तत्सम्भव इति भावः। व्याप्तावपीत्युपलक्षणं, तन्निश्चयेऽपीत्यपि बोध्यम्। **उपरीति**। तथा च तत्रापि सामानाधिकरण्यमेव व्याप्तिरित्यर्थः। ननु स्थूलमिदमेकमित्येकत्वज्ञानमिति द्वितीयस्य प्रतियोगिनोऽभावदिव न विरोध इत्याशङ्क्याह

मोऽर्थापत्तिरिति युक्तम् । पक्षधर्मताया अनिमित्तत्वप्रसङ्गात् । अविशेषात्, व्यधिकरणेनाविनाभावनिश्चयायोगाच्च—यद् यत्र यदेति प्रकारानुपपत्तेः ।

प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानमित्यपि नास्ति । विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यान्न तूभयोः प्रामाण्यम् । प्रामाण्ये वा न विरोधः। स्थूलमिदमेकमितिवत् सह संभवात् । चैत्रोऽयमयं तु मैत्र इति वद्वा

---

बोधनी ।

भावस्य निरूपणीयत्वादित्याह व्यधिकरणेनेति । अत्रापि हि देवदत्तं पक्षीकृत्य तस्य बहिःसत्त्वं गृहासत्त्वेन साध्यत इति पक्षधर्मत्वोपपत्तिरिति भावः ।

तृतीयं पादं व्याचष्टे प्रमाणयोरिति । ननु प्रकृतोदाहरणे जीवनग्राहकस्य गणितानुमानस्य क्वाप्यस्तीति सामान्यतः प्रवृत्तत्वेन सामान्यानुप्रवेशिनो गेहस्यापि क्रोडीकरणादभावप्रमाणेन सहै-

प्रकाशः ।

मानादित्याह—व्यधिकरणेनेति ।

ननु गृहनिष्ठाभावप्रतियोगित्वमपि न लिङ्गम् । प्रतियोगित्वस्य देवदत्तधर्मतया तदसन्निकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वात् । कथं वा प्रत्यक्षेण तृतीयलिङ्गपरामर्शः । विशेष्यस्य देवदत्तस्यासन्निकर्षात् । व्यतिरेकव्याप्तिगृहनिष्ठाभावयोर्ज्ञानं सहकार्यासाद्य मनसैव लिङ्गपरामर्श इति चेन्न । अक्षादिवत्तयोर्मानान्तरत्वापातात् । अतीतानागतधूमादग्न्यनुमितिः कथम् ? तत्रापि लिङ्गपरामर्शाभावादिति चेन्न । तत्रापि धूमज्ञानसहकृतादग्निं विना धूमोऽनुपपन्न इति ज्ञानत [ एवाग्निज्ञानात्, उक्तरीत्याऽनुमितिसामग्र्यभावात् । यत्र चानुपपत्तिज्ञानं विना तृतीयलिङ्गपरामर्शः तत्रैवानुमानात् । तस्माद्व्यतिरेकव्याप्तिमुपजीव्य व्यधिकरण एव जीविदेवदत्तगृहाभावो बहिःसत्त्वं कल्पयतीति ॥

मैवम् । देवदत्तासन्निकर्षेऽपि तस्य गृहनिष्ठाभावप्रतियोगित्वज्ञानात् । तथाहि—गृहे देवदत्तस्याभाव इति प्रत्यक्षेण जायमानमभावज्ञानं, स्मृतदेवदत्तस्य प्रतियोगित्वमपि विषयीकरोति । प्रतियोगिना सममभावस्य सम्बन्धान्तराभावात् । गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते स्मृतव्याप्तिवैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम् । न च देवदत्तविशेष्यकं बहिःसत्त्वव्याप्यगृहनिष्ठाभावप्रतियोगित्वज्ञानं नास्तीति कथं तद्विशेष्यिकाऽनुमितिरिति वाच्यम् । पक्षवृत्तिलिङ्गपरामर्शमात्रस्यानुमितिहेतुत्वात्, पक्षविशेष्यकत्वस्य चातन्त्रत्वात् ।

सम्प्रदायविदस्तु—अनतिप्रसक्तव्याप्त्यादिस्मृतिसहकृतान्मनस एव तत्र स्मृतदेवदत्तविशेष्यकस्तृतीयलिङ्गपरामर्शः । न च सहकारिणो मानान्तरताऽऽपत्तिः, निर्व्यापारत्वादित्याहुः ।

जीवी क्वचिदस्तीति क्वचित्त्वेन गेहस्यापि विषयत्वात् पश्चाद् गेहे नास्तीत्यनयोर्गेहेऽस्ति नास्तीत्यत्रेव विरोधज्ञानं करणम् । क्वचिदित्यस्य गेहातिरिक्तविषयत्वकल्पनमविरोधापादकं फलम् । न चानुमानमत्र प्रभवतीति ततोऽर्थापत्तेर्भेद इति मतमुत्थाप्य निराकरोति—

प्रमाणयोरिति । प्रमाणयोर्विरोधो वास्तवो वा, वस्तुतोऽविरोधेऽपि ज्ञायमानो वा ? । तत्र नाद्य इत्याह विरोधे हीति । प्रामाण्ये वा उभयोर्वस्तुनोर्विरुद्धद्वैरूप्यापत्तिरिति भावः । स्थूलमिति । यथा घटे स्थौल्यैकत्वग्राहकमानयोर्न विरोधस्तथाऽत्रापीत्यर्थः । अन्त्यं शङ्कते

प्रकाशिका ।

यस्य प्रतियोगिनोऽभावान्न विरोध इत्यत आह यथेति । ननु विरोधज्ञानस्यैव कारणत्वात् किमनुपपद्य-

मकरन्दः ।

यथेति । ननु प्रमाणद्वयविरोधज्ञानस्य करणत्वात् किमनुपपद्यमानमित्यसङ्गतमित्यत आह

टिप्पणी ।

गेहे अस्ति नास्तीत्यत्रेवेति । आपाततोगृहीतस्य विरोधस्योपशमनीयताग्रहः कारणम्, प्रमाणयोरुक्तज्ञानयोर्विभिन्नविषयत्वं विनाऽविरोधोऽनुपपन्न इति ज्ञानाद्व्यापारः ।

विषयभेदात् । प्रकृते क्वाप्यस्तीति सामान्यतो गेहस्यापि प्रवेशादेकविषयताऽप्यस्तीति चेत् । यद्येवं क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः । अत्रापि विरोध एवेति चेद्, एकं तर्हि भज्येत । न भज्येत, अर्थापत्त्या उभयोरप्युपपादनादिति चेत् । किमनुपपद्यमानम् । विरोध एवान्यथानुपपद्यमानो विभिन्नविषयतया व्यवस्थापयतीति चेत् । अथाभिन्नविषयतयैव किं न व्यवस्थापयेत् ? । व्यवस्थापनमविरोधापादनम्, एकविषयतयैव चानयोर्विरोधः, स कथं तयैव शमयितव्यः, न हि यो यद्विषमूर्च्छितः स तेनैवोत्थाप्यत इति चेत् । एकविषयतया अनयोर्विरोध इत्येतदेव कुतः । विभिन्नदेशस्वभावतयैव सर्वत्रोपलम्भादिति चेत् । नन्वियं व्याप्तिरेव । तथा च घट्टकुट्यां प्रभातमिति । धूमोऽपि वा अनुपपद्यमानतयैव वह्निं

---

बोधनी ।

कविषयताप्यस्तीत्याह **प्रकृते** इति । एवं तर्हि भिन्नसामान्यविशेषविषयतया न विरोध इत्याह **यद्येवम्** इति । नन्वत्राप्यनिर्धारितदेशविषययोरस्तित्वनास्तित्वप्रमाणयोः एकस्य विषयेऽन्यस्यानुप्रवेशादस्त्येव विरोध इत्याह **अत्रापि** इति । यद्यत्रापि विरोध एव तर्ह्यन्यतरद् बाध्येतेत्याह **एकम्** इति । नन्वर्थापत्त्या भिन्नविषयत्वेन व्यवस्थापनान्नैकस्यापि भङ्ग इत्याह **न भज्येत** इति । सिद्धान्ती गूढाशयः पृच्छति **किमनुपपद्यमानम्** इति । एवमर्थापत्तिः प्रवर्त्ततेति पूर्वपक्ष्याह **विरोध एव** इति । व्यवस्थापयति प्रमाणद्वयमित्याशयमुद्घाटयन्नेव पुनः पृच्छति **अथ** इति । अज्ञातपराशय एवेतर आह **व्यवस्थापनम्** इति । ततः किमित्यत आह **एकविषयतया** इति । ततोऽपि किमित्याह **स कथम्** इति । विषान्तरमूर्च्छितो विषान्तरेणैवोत्थाप्य भवति न तु तेनैवेतदुक्तं **यद्विषेति** । आशयमाविःकर्तुं पुनरपि पृच्छति **एकविषयतया** इति । पूर्वपक्ष्याह **विभिन्नेति** । सिद्धान्ती स्वाशयमाविष्करोति **नन्वियम्** इति । अयमस्तित्वनास्तित्वप्रमाणयोर्भिन्नदेशसंबन्धित्वस्वभावो व्याप्तिरेव स्वभावप्रतिबन्धलक्षणाद् व्याप्तेस्तथा चानुमानत्वप्रसङ्गभयाद् व्याप्तिं परिहर्तुं प्रवृत्तेन सैव स्वीकृता स्यात्, तथा च घट्टकुटीप्रभातम् । **घट्टकुटी नाम** शौल्किकशाला । यथा हि शौल्किकेभ्यो बिभ्यतो रात्रावेव शुल्कशालातिक्रमितव्येति गच्छतः पान्थस्य तस्यामेव प्रभाता शर्वरी तथेदमपीति । तुरीयं पादं व्याचष्टे **धूमोऽपि वा** इति । यदि सतोरपि व्याप्तिपक्षधर्मत्वयो-

प्रकाशः ।

**अत्रापीति** । उक्तस्फोरणेन निराकरोति **एकमिति** । **अर्थापत्त्येति** । विषयभेदकल्पनेनेति शेषः । **किमिति** । अनुपपन्नतया ज्ञातस्यैवोपपादनादित्यर्थः । **अथेति** । विरोधज्ञानान्मानयोरविरोधकल्पनमेकविषयत्वेनैव किन्न क्रियते ? कृतकत्वानित्यत्वयोरिव तेनापि विरोधव्यावृत्तेरुपलम्भादित्यर्थः । प्रमाणयोर्वैषयिकविरोधज्ञानं विषयभेदकल्पनया शाम्यति, विरोधप्रतिसन्धानस्य भावाभावग्राहकमानयोरेकविषयतयैवोपलम्भात्, तथा च व्याप्तिज्ञानमावश्यकमित्याह—**नन्विति** । **घट्टकुट्यामिति** । व्याप्तिभिया विरोधे अविरोधापादनाकारणोपनेन पलायमानस्य व्याप्तावेव निपातादित्यर्थः । एवमनङ्गीकुर्वतः प्रसिद्धानुमानमर्थापत्तिरेवेति तद्विलोप इत्याह **धूमोऽपीति** ।

प्रकाशिका ।

मानमित्यसङ्गतमत आह **अनुपपन्नतयेति** । विरोधज्ञानकारणतापक्षेऽपीति भावः । **तेनापीति** । एकविषयत्वेनापीत्यर्थः । **प्रमाणयोरिति** । यत्र यत्र विरोधज्ञानं तयोस्तत्रैकविषयतयैव यत्र वा वैषयि-

मकरन्दः ।

**अनुपपन्नतयेति** । **तेनापीति** । एकविषयत्वेनापीत्यर्थः । **प्रमाणयोरिति** । यत्र यत्र विरोधज्ञानं तयोस्तत्रैकविषयतयैव, यत्र वा वैषयिकविरोधज्ञानशान्तिस्तत्र विषयभेदकल्पनयैवेति व्याप्तिरेवेत्य-

गमयेत् , न हि तेन विना असावुपपद्यते । विरोधोऽपि, धूमाद्वह्निना भवितव्यम् , अनुपलब्धेश्च न भवितव्यमिति । तथा चानुपलब्धेरर्वाग्भागव्यवस्थापनं, धूमस्य च व्यवधानेनानुपलभ्यवह्निविषयत्वस्थितिरर्थापत्तिरिति कुतोऽनुमानम् । वह्निमानयमित्यनुमानं व्याप्तेः । अन्यथाऽनुमानाभावे विरोधासिद्धेः । अर्वाग्भागानुपलब्धिविरोधेन परभागेऽस्य वह्निरित्यर्थापत्तिरेवेति चेन्न । व्याप्तिग्राहकेन प्रमाणेन विरोधस्योक्तत्वात् । नाप्युत्तरार्थापत्तिः । अन्यथा पाण्डरत्वस्यापालालत्वविरोधेन

बोधिनी ।

रनुपपद्यमानतया गृहाभावो वह्निर्भावं गमयेत्ततोऽनुमानस्योच्छेद इति । न केवलमनुपपत्तिः प्रमाणद्वयविरोधोऽपि तत्र वक्तुं शक्यत इत्याह **विरोधोऽपि** इति । सति धूमे वन्हिना भवितव्यमिति वन्हेः सत्तामेकं प्रमाणं गमयति, अनुपलब्धिश्चासत्तां प्रमाणस्य व्यवहितदेशवन्हिविषयत्वव्यवस्थापनमर्थापत्तिरेव स्यादिति । ननु चैवमनुमानोच्छेदः धूमाद्वन्हिना भवितव्यमित्यस्यानुमानत्वात्तस्य त्वनुपलब्धिविरोधपरिहाराय पर्वतापरभागावस्थापनमर्थापत्तिरिष्टैवेत्याह **वन्हिमानयम्** इति । **न** इति । न वयमिदानीं तेन धूमज्ञानजन्मना वन्हिज्ञानेनानुपलब्धिविरोधं ब्रूमः येनानुमानमास्पदं लभेत, किं तर्हि ? पूर्वकालीनेन यत्र यत्र धूमस्तत्र तत्राग्निरस्तीति व्याप्तिग्राहकप्रमाणेनेदानीमनुसन्धीयमानेन, अतो न प्रमाणद्वयविरोधसिध्यर्थमनुमानाङ्गीकार इति, परभागावस्थापनं च नार्थापत्तिरित्याह **नापि** इति । यदि तु विरुद्धयोर्विषयव्यवस्थापनमेवार्थापत्तिः स्यात् ततः पाण्डरधूमस्य पालालाग्निना व्याप्तत्वेनापालालत्वविरोधात् पालालत्वव्यवस्थापनमर्थापत्तिः स्यादित्याह **अन्यथा** इति । ननु पाण्डरत्वविशिष्टस्य पालालत्वेन व्याप्तिर्भवन्ती पालालत्वव्यवस्थितिर्नार्थापत्तिरित्याह

प्रकाशः ।

तदेव स्पष्टयति **न हीति** । धूमाद् वह्निना भाव्यमित्यनेनानुपलब्धेर्विरोधस्तदा, यदि धूमो वह्न्यनुमापकः स्याच्चान्यथा, तथा च सिद्धमनुमानम् , देशभेदेन तयोरविरोधापादनमर्थापत्तिफलमेवेत्याह **वह्निमानयमिति** । नात्रानुमानेन सममनुपलब्धेर्विरोधः, किन्तु वह्निधूमव्याप्तिग्राहकमानेनेत्याह **व्याप्तेति** । यदि च सामान्यग्राहकमानस्य **विशेषतो**ऽनुपलब्धिरबाधिका, तदा क्वचिदस्तीत्यस्यापि गेहे नास्तीत्यनेन सह **न विरोध** इत्यर्थः । **नापीति** । **अर्वाग्भागा**नुपलब्धिविरोधेनेत्याद्युक्तरूपेणेत्यर्थः । यदि च नैवं, तदा पाण्डरधूमस्यापालालवह्निविरोधात् पालालवह्निसिद्धिरप्यर्थापत्तिरेव स्यादित्याह **अन्यथेति** । तेनैव, परभागवह्निनैवेत्यर्थः । ननु केवलव्यतिरेकिणि

प्रकाशिका ।

कविरोधज्ञानशान्तिः तत्र विषयभेदकल्पनयैवेति व्याप्तिरेवेत्यनुमानादेव विषयभेदकल्पनापीति नार्थापत्तिरित्यर्थः । **सामान्येति** । पर्वतसामानाधिकरण्यमात्रेण वह्निग्राहकमानस्येत्यर्थः । **विशेषत इति** । अर्वाग्भागावच्छेदेनेत्यर्थः । **न विरोध** इति । तथा च तत्र ज्ञानं न कारणमिति भावः । वह्निमानित्यनुमानं व्याप्तिरित्यस्यैवार्थान्तरमुत्तरपदेनोक्तमत्रेति भ्रमनिरासायाह **अर्वाग्भागेति** । यद्यपि प्रमाणयोरेव विरोधः परेणार्थापत्तितयाभिमतो न च प्रकृते तथा, तथापि व्याप्तिज्ञानसत्वेपि प्रमाणयोश्चेद्विरोधः अर्थापत्तिः स्यादित्यविरोधान्तरमपि तथा स्यादित्याशयेनेदमुक्तमिति ध्येयम् ।

मकरन्दः ।

नुमानादेव विषयभेदकल्पनाऽपीति नार्थापत्तिरित्यर्थः । **सामान्येति** । पर्वतो वह्निमानिति सामान्यतो ग्राहकस्येत्यर्थः । **विशेषत** इति । अर्वाग्भागावच्छेदेनेत्यर्थः । **न विरोध** इति । तथा च कुतस्तज्ज्ञानं करणमिति भावः । ननु वह्निमानयमित्यादि पूर्वपक्षे प्रथमं नार्थापत्त्यन्तरमुक्तं, तथा च नाप्युत्तरेत्यसङ्गतमत आह **अर्वाग्भागेति** । **यदि चेति** । यद्यपि प्रमाणयोरेव विरोधस्तथात्वेन पराभिप्रेतः प्रकृते च न तथा, तथापि यत्रापि व्याप्तिस्तत्र मानान्तरकल्पने विरोधान्तरस्यापि

पालालत्वस्थितिरिप्यर्थापत्तिरेव स्यात् । तद्विशिष्टस्य तेनैव व्याप्तेर्नैवमिति चेत् । यद्येवमर्वाग्भागानुपलभ्यमानवह्नित्वेन विशिष्टस्य धूमस्य तेनैव व्याप्तेः कथमेवं भविष्यतीति तुल्यम् । केवलव्यतिरेक्यनुमानं पराभिमतमर्थापत्तिरन्वयाभावादिति चेत् । एवं तावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः । तत्रानुमानव्यवहारः कुत इति चेत् । अविनाभूतलिङ्गसमुत्पन्नत्वात् । साध्यधर्मेण विना ह्यभवनमन्वयिन इव व्यतिरेकिणोऽप्यविशिष्टं, तन्निश्चयश्चाऽन्वयव्यतिरेकाभ्यामन्यतरेण

बोधनी ।

**तद्विशिष्टस्य** इति । तर्हि विशिष्टस्य धूमस्य वह्निना परभागवर्तिना व्याप्तिर्भवन्ती परभागव्यवस्थितिर्वा कथमर्थापत्तिः स्यादित्याह **यद्येवम्** इति । ननु यत्केवलव्यतिरेक्यनुमानत्वेन नैयायिकानामभिमतं तदेव नोऽस्माकमर्थापत्तिरन्वयव्याप्त्यभावेन तस्यानुमानत्वायोगात् इत्याह **केवलव्यतिरेकीति** । अस्त्वन्वयो नास्तीत्येतावता विशेषणार्थापत्तिव्यवहारः, न तावताऽनुमानत्वहानिरित्याह **एवम्** इति । तत्र केवलव्यतिरेकिणि असत्येवान्वये किंनिबन्धनमनुमानत्वमित्याशङ्क्याह **अविनाभूतेति** । अविनाभावेन तन्निश्चयेन च मामकं ह्यनुमानं केवलव्यतिरेकिणि चाविनाभावस्तन्निश्चयश्चास्तीत्यनुमानमेव, केवलमेतावान् विशेषः अन्वयव्यतिरेकिणि लिङ्गेऽन्वयव्यतिरेकाभ्यां

प्रकाशः ।

साध्यसाधनाभावयोर्व्याप्तिरन्वयस्य पक्षधर्मत्वमिति न व्याप्तस्य पक्षधर्मतेत्यनुमानाभावेऽर्थापत्तिः स्यादित्याह **केवलेति** । व्यतिरेकव्याप्तावपि पक्षधर्मस्यान्वयस्य गमकत्वम् । न चातिप्रसङ्गः । प्रतियोग्यनुयोगिभावस्य नियामकत्वात् । तथा चानुमितिसामग्र्यस्त्येव, परिभाषा त्वपर्यनुयोज्येत्याह **एवमिति** । वस्तुतो व्यतिरेकयोः सहचारादन्वययोरेव व्याप्तिः, प्रतियोग्यनुयोगिभावस्य नियामकत्वादिति व्याप्तस्य पक्षधर्मत्वमस्त्येवेति भावः । **अन्यतरेण वेति** । केवलान्वयिव्यतिरेकिणोरित्यर्थः ।

ननु ज्योतिःशास्त्राद् देवदत्तस्य शतवर्षजीवित्वे ज्ञाते, अथ शतवर्षजीवी गृह एवेति नियमे प्रत्यक्षेण निश्चिते, पश्चाद् योग्यानुपलब्ध्या निश्चितो गृहाभावो जीवननियमग्राहकमानयोर्बलाबलानिरूपणाद् वहिःसत्त्वकल्पनां विना नियमद्वयविषयं संशयं जनयित्वा, जीवनसंशयमापाद्य, तदपनुत्तये जीवनोपपादकं वहिःसत्त्वं कल्पयति, यथोक्तसामग्र्यनन्तरं वहिरस्तीति प्रतीतिः । तत्रान्वयव्यतिरेकाभ्यां जीवनसंशय एव करणम् । जीवित्वलिङ्गविशेषणसन्देहेऽनुमानाभावात् । यथोक्तसामग्रीप्रभवसंशयस्य च कल्पनाङ्गत्वान्न स्थाणुपुरुषसंशयस्य मृतजनिष्यमाणयोर्गृहाभावनिश्चयस्य च तादृशसंशयाजनकस्य नैककोटिनिर्वाहकवहिःसत्त्वकल्पकत्वम् ॥

अथ जीवननियमग्राहकमानयोस्तुल्यबलत्वज्ञाने विशेषादर्शनान्न वहिःसत्त्वकल्पना, एकस्य बलवत्त्वाज्ञाने च तेनान्यस्य बाध एवेति न संशयः । तस्माज्जीवनगृहाभावयोर्निश्चय एव वहिःसत्त्वं कल्प्यते, न तु जीवनसंशये इत्यनुमानादेव वहिःसत्त्वसिद्धिः ॥

तन्न । योग्यानुपलब्धिजनितो गृहाभावनिश्चयः सुदृढ इति जीवननियमग्राहकयोरेकं बाध्यं, विरुद्धयोरमानत्वात् । तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतामुत वहिःसत्त्वं कल्पयित्वा

मकरन्दः ।

तथात्वं स्यादित्याशयेन तदुक्तमिति ध्येयम् । तथा चार्थापत्तिकल्पितमित्यत एवकारो भिन्नक्रमः । तथा च तस्यां दशायां मानान्तराभावादर्थापत्तिकल्पितं जीवित्वमुपजीव्यैव लिङ्गविशेषणनिश्चयेऽनुमानाद्वहिःसत्त्वज्ञानं त्वयाऽपि वाच्यम्, एवञ्चावश्यकतयाऽर्थापत्त्यैव वहिःसत्त्वनिश्चयोऽस्तु, कृतमन्तरा जीवित्वनिश्चयेनेति तर्कशरीरमेवेदं द्रष्टव्यम् । तेन संशयस्य वहिःसत्त्वकल्पकत्वादिति नोपसंहारविरोधः, न वा जीवित्वस्यार्थापत्तिकल्पनोपवर्णनेऽपसिद्धान्त इति ।

वेति । तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं तद्विशेषवचनं वा पूर्ववदादिवदिति युक्तम् ॥ १९ ॥

बोधनी ।

मविनाभावो निश्चीयते, नत्वन्वयिन्यन्वयेनैव व्यतिरेकिणि व्यतिरेकेणैवेति अर्थापत्तेरनुमानान्तर्भावमुपसंहरति **तस्मात्** इति ॥

प्रकाशः ।

नियमग्राहकम् ? । तत्र वहिःसत्त्वकल्पने गृहनियमग्राहकमात्रबाधा, मरणकल्पने तु शतवर्षजीवी देवदत्तः, शतवर्षजीवी गृहे एवेति नियमद्वयस्य बाधः स्यात् । तथा चार्थापत्तिकल्पितं जीवित्वमुपजीव्यानुमानादेव वहिःसत्त्वज्ञानं भविष्यतीत्येतावत्तर्कसहितस्य यथोक्तसामग्रीप्रभवसंशयस्य वहिःसत्त्वकल्पकत्वात् । न च तस्यां दशायां मानान्तरमस्ति, ततोऽर्थापत्तिसहकारित्वं तर्कस्य । यत्र च मृते गृहस्थिते वा तादृशसंशयाद्बहिःसत्त्वकल्पना, तत्र जीवननियमग्राहकयोरन्यतराभासत्वं, परोक्षज्ञानस्य जनकज्ञानाप्रमात्वेनाप्रमात्वनियमात् ॥

अत्राहुः—देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतोदृष्टमभावरूपमरणापेक्षया जीवनं भावरूपं विषयीकरोति लाघवादिति तत्रैव लाघवं सहकारि । तथाहि—यथोक्तसंशयदशायां जीवनबाधे तन्नियमबाधस्यावश्यकत्वादिति तर्कानन्तरमेव वहिःसत्त्वज्ञानमित्यविवादम् । तत्र क्लृप्तप्रमाणभावे सामान्यतोदृष्ट एव लाघवं सहकारि, न तु कल्पनीयप्रमाणभावे यथोक्तसंशये, गौरवात् ।

यच्चोक्तं—'मरणकल्पने शतवर्षावच्छिन्नजीवी गृह एवेत्यस्यापि बाध' इति । तत्र विशिष्टबाधो विशेष्यबाधात्° मरणेऽपि जीवी गृह एवेत्यस्य विशेष्यस्याबाधात्° किन्तु विशेषणबाधात् । स च शतवर्षजीवित्वबाध एव । विशेषणाभावायत्तो विशिष्टाभावोऽप्यस्तीति चेन्न । विशेष्यवति विशिष्टाभावस्य विशेषणाभावात्मकत्वादिति सङ्क्षेपः ।

**पूर्ववदादिवदिति** । त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टम् ( न्याय० १. १. ५ ) इति सूत्रे पूर्ववदादिरनुमानविशेष उक्तः ॥ १९ ॥

प्रकाशिका ।

**ततोऽर्थापत्तिकल्पितमिति** । एवकारो भिन्नक्रम उपजीव्येत्यत्रान्वेति, तथा च मानान्तराभावेऽर्थापत्त्या जीवित्वलिङ्गविशेषणत्वनिश्चयेऽनुमानाद्बहिःसत्वज्ञानं **त्वया** वाच्यं तद्वरं अर्थापत्त्यैव वहिःसत्वनिश्चय इत्येव स्वीक्रियतां लाघवाय कृतमर्थान्तराजीवित्वज्ञानेनेति तर्कशरीरमेव सर्वमिदं द्रष्टव्यम्, अन्यथा यथाश्रुते संशयस्य वहिःसत्त्वकल्पकत्वादित्युपसंहारविरोधो जीवित्वस्यार्थापत्तिविषयत्वेऽपसिद्धान्तश्चेति दोषापत्तेः । **तत्र जीवनेति** । अत्र नियमग्राहकपदेन गृहाभावग्राहकमेवोक्तम् । क्वचित् पाठः—**जीवनगृहाभावग्राहकयोरिति** । स तु सुगम एव ॥ १९ ॥

मकरन्दः ।

**जीवननियमेति** । गृहे नास्त्येवेति नियमग्राहकमत्रोक्तम् । अत एव जीवनगृहाभावग्राहकयोरित्येव क्वचित् पाठः ॥ १९ ॥

टिप्पणी ।

**तथा चार्थापत्तिकल्पितं जीवित्वमिति** । अत्र एवकारो भिन्नक्रमः । तस्यां दशायां मानान्तराभावादर्थापत्तिकल्पितं जीवित्वमुपजीव्यैव लिङ्गविशेषणनिश्चयेऽनुमानाद् वहिःसत्त्वज्ञानं त्वयापि वाच्यम्, एवञ्चावश्यकतयाऽर्थापत्त्यैव वहिस्सत्वनिश्चयोऽस्तु कृतं तथा जीवित्वनिश्चयेनेति तर्कशरीरमेवेदं द्रष्टव्यम् । तेन संशयस्य वहिस्सत्वकल्पकत्वादिति नोपसंहारविरोधः, न वा जीवित्वस्यार्थापत्तिकल्पनोपवर्णनेऽपसिद्धान्त इति । **यथोक्तसंशये गौरवादिति** । तथाचोक्तानुमानेन जीवित्वनिश्चये तद्विशेषितगृहासत्वेन वहिस्सत्वानुमानसम्भवादर्थापत्तिर्न मानान्तरं कल्प्यमिति भावः ॥ १९ ॥

अनुपलब्धिस्तु न बाधिकेति चिन्तितम् । न च प्रत्यक्षादेरतिरिच्यते । तदुच्यते—

**प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥**

या हि साक्षात्कारिणी प्रतीतिः सेन्द्रियकरणिका, यथा रूपादिप्रतीतिः । तथेह

---

### बोधनी ।

एवमर्थापत्तिर्न बाधिका न भिद्यते चानुमानादित्युक्तम् । अनुपलब्धेस्त्वबाधकत्वस्य चिन्तितपूर्वत्वादन्तर्भाव एव चिन्तनीय इत्याह **अनुपलब्धिस्तु** इति । तत्तावदिह भूतले घटो नास्तीति प्रतीतेरैन्द्रियकत्वे चतुरो हेतूनुपन्यस्यति **प्रतिपत्ते**रिति । विप्रतिपन्ना प्रतीतिरिन्द्रियकरणिक अपरोक्षरूपत्वात् रूपादिबुद्धिवदिति । अनन्यत्रोपक्षीणेन्द्रियान्वयव्यतिरेकानुविधायित्वात् अज्ञातकरणत्वाच्च । तथेयं प्रतीतिर्भावात्मप्रमाणसहकृतेन मनसा जायते बाह्यार्थानुभवत्वात् । भावरूपं च प्रमाणमिन्द्रियमेव परिशिष्यत इति भावः । भावावेशो भावप्रमाणसहकार इति । तत्राद्यं हेतुं विवृणोति **या हि**

### प्रकाशः ।

अनुपलब्धिस्तु स्वरूपसती परमात्मनो योग्यत्वाभावान्न बाधिका, ज्ञाताऽप्यनुमानरूपतया न बाधिका, अनुमानबाधकत्वस्य निरस्तत्वादित्याह—

**अनुपलब्धिस्त्विति** । घटोपलम्भे घटाभावाज्ञानादनुपदलब्धिरवश्यं हेतुरिति सैव करणमावश्यकत्वात् । न च प्रतियोग्यनुपलब्धिमात्रं न करणं, प्रतियोगिज्ञानस्याभावधीहेतुत्वात्, नाऽपि प्रतियोगिसत्त्वप्रमाविरहः, अत्यन्ताभावग्रहे तदप्रसिद्धेरिति वाच्यम् । यादृश्यास्तथेन्द्रियसहकारित्वम्, तादृश्याः करणत्वात्, न तु इन्द्रियमपि तत्करणं, गौरवादिति प्रसङ्गागतं निरस्यति न चेति । अभावस्य यथायथं प्रत्यक्षादिगम्यत्वादित्यर्थः ।

तत्र प्रत्यक्षगम्यत्वे मानमाह **प्रतिपत्तेरिति** । जन्यापरोक्षज्ञानस्येन्द्रियजन्यत्वनियमादित्यर्थः । तत्र चान्वयव्यतिरेकितया योग्यानुपलब्धेः सहकारित्वं न निषिध्यते इति भावः । इन्द्रियस्येत्यादि । इन्द्रियव्यापारस्यानन्यथासिद्धत्वादज्ञातकरणजन्यज्ञानत्वाच्चेत्यर्थः । **भावावेशाच्चेति** । अस्मदादिबाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमादित्यर्थः ।

**इन्द्रियकरणिकेति** । यद्यप्यत्र मनसा सिद्धसाधनम् । न चेन्द्रियत्वेन तज्जन्यत्वं साध्यम् ।

### प्रकाशिका ।

**नापीति** । अधिकरणविशेष्यकप्रतियोगिसत्त्वप्रमाविरहकरणमित्यर्थः, तेन नानाधिकरणान्तरे प्रतियोगिमत्त्वप्रमायामप्यभावधीः । प्रमापदञ्चाहार्यज्ञाननिवारणाय । **अत्यन्तेति** । वायौ रूपाभावप्रतीतिस्थले प्रतियोग्यप्रसिद्धेरित्यर्थः । न चाधिकरणे तादृशप्रमाविशेष्यत्वाभावः करणं समवायाभावस्थले प्रतियोग्यप्रसिद्धेः, न चाधिकरणविशेष्यकानाहार्यतादृशज्ञानाभावः तथा, तथा च तादृशभ्रममादाय सङ्गतिरिति वाच्यम् । यत्राधिकरणे स्वस्य न तादृशो भ्रमस्तदधिकरणे तदभावग्रहापत्तेः, स्वीयत्वस्याज्ञानविशेषणत्वात्, अन्यथा पुरुषान्तरीयभ्रमदशायामभावग्रहापत्तेरिति दिक् । **तादृश्या इति** । तथा च स्वीयतत्तत्कालीनाधिकरणज्ञानेऽनाहार्यप्रतियोगिसत्त्वप्रकारकत्वाभावः करणमिति

### मकरन्दः ।

**नापीति** । अधिकरणे इति शेषः । अत एवाह **अत्यन्तेति** । वायौ रूपात्यन्ताभावग्रहे अधिकरणे प्रतियोगिप्रमाऽसिद्धेत्यर्थः । **गौरवादिति** । उभयकारणकल्पने गौरवादित्यर्थः ।

भूतले घटो नास्तीत्यपि। साक्षात्कारित्वमस्या असिद्धमिति चेन्न। एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः। न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञातमज्ञातञ्चैकदोपयुज्यते, लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गाज्ज्ञानस्याकारणत्वप्रसङ्गाच्च। न हि तदतिपत्यापि भवतस्तत्कारणत्वं, व्याघातात्। तस्माज्ज्ञातानुपलब्धिजन्यस्यासाक्षात्कारित्वात् तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्यम्॥

---

बोधनी।

इति। प्रतिवाद्यसिद्धो हेतुरित्याह—साक्षात्कारित्वम् इति। न इति। नास्तीति बुद्धयः काश्चिदज्ञातकरणिकाः, काश्चिद् ज्ञातकरणिकाः, तत्र यद्युभयेऽप्यसाक्षात्कारजातीयाः तत इदं कारणवैचित्र्यं न स्यादिति। विपर्ययेऽनिष्टमाह लिङ्गे इति। असाक्षात्कारिज्ञानजनकस्यापि लिङ्गस्य सत्तया हेतुत्वं साक्षात्कारहेतोरपीन्द्रियस्य ज्ञायमानतया हेतुत्वं च प्रसज्येतेति। किं च यद्यज्ञातादपि करणाज्जातीयमेव ज्ञानं जायेत तदा तत्र कारणमेव तज्ज्ञानं भवेत् व्यतिरेकाभावादित्याह ज्ञानस्य इति। यत एवं तस्माज्ज्ञातानुपलब्धिजन्यस्यासाक्षात्कारित्वमभ्युपगच्छतामवश्यमज्ञातानुपलब्धिजन्यस्य साक्षात्कारित्वमवर्जनीयमित्याह तस्मात् इति।

प्रकाशः।

साक्षात्प्रतीतिकरणस्यैवेन्द्रियतया तेनैव तदनवच्छेदादात्माश्रयात्। तथापि रूपाभावादिप्रतीतेर्बहिरिन्द्रियान्तराजन्यबहिर्विषयकजन्यसाक्षात्कारित्वाच्चाक्षुषादित्वं साध्यमिति भावः। अनुपलब्धेरपि ज्ञातानुपलब्ध्यन्तरगम्यत्वेनानवस्थानात् क्वचिदज्ञातैव करणमुपेयेत्याशयेनाह एकेति। अज्ञातकरणकानुभवत्वं साक्षात्त्वव्यवस्थापकम्, अतः स्मृतेरज्ञातकरणकत्वेऽपि न तदिति भावः। यदि च नैवं, तदा लिङ्गमपि साक्षात्कारमिन्द्रियमप्यनुमितिं जनयेदित्याह लिङ्गेति। ज्ञातकरणकत्वं ज्ञानकरणकत्वं लिङ्गादेरजनकत्वादिति व्यभिचारादभावज्ञाने तत्करणं न स्यादित्याह ज्ञानस्येति। तद्विपरीतेति। अज्ञातयोग्यानुपलब्धिकरणकं साक्षात्कारजातीयमित्यर्थः। ननु आत्मनास्तितायामिन्द्रियं

प्रकाशिका।

भावः। साक्षादिति। तथा चेन्द्रियत्वं न साक्षात्कारकारणतावच्छेदकमात्माश्रयादिति साध्याप्रसिद्धिरिति भावः। स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वादिना तन्निर्वचने यद्यपि नोक्तदोषः, तथापि समाधिसौलभ्यादाह तथापीति। रासनसाक्षात्कारे व्यभिचार इत्यजन्यान्तम्। अत्रापि अप्रसिद्धिवारणाय बहिःपदम्। सुखादिसाक्षात्कारे व्यभिचार इति बहिर्विषयकेति। ईश्वरज्ञाने व्यभिचार इति जन्यपदम्। तच्च लौकिकपरमन्यथोपनीतघटादिगोचरमानससाक्षात्कारे व्यभिचारात्। यद्वा बहिर्विषयजन्यसाक्षात्कारत्वं हेतुः, स्वार्थे कन्प्रत्ययः। अस्तु सर्वत्र ज्ञातैवानुपलब्धिः कारणमत आह अनुपलब्धेरपीति।

मकरन्दः।

साक्षादिति। तथा चेन्द्रियत्वं न साक्षात्प्रतीतौ कारणतावच्छेदकमात्माश्रयादिति तत्साधने बाध इति भावः। यद्यपि स्मृत्यजनकज्ञानकारणमनोयोगाश्रयत्वादिना तन्निर्वचने नोक्तदोषः, तथापि समाधिसौकर्यादाह तथापीति। अत्र रासनप्रत्यक्षे व्यभिचारवारणायाजन्यान्तम्। एतच्च रूपाभावबुद्धौ चाक्षुषत्वसाधने रसाभावबुद्धौ रासनत्वसाधने चाक्षुषप्रत्यक्ष एव तद्वारणाय तदित्यवधेयम्। अप्रसिद्धिवारणाय प्रथमबहिःपदम्। मनोमात्रकरणके व्यभिचारादाह बहिर्विषयकेति। ऐशे व्यभिचारादाह जन्येति। अनुमित्यादौ व्यभिचारादाह साक्षात्कारित्वादिति। न चोपनीतविषये मानसप्रत्यक्षे व्यभिचारः, जन्यपदेन लौकिकत्वस्य विवक्षितत्वात्। वस्तुतो बहिर्विषयकजन्येत्यत्र स्वार्थिककन्प्रत्ययाद्बहिर्विषयजन्यत्वं विवक्षितम्, तस्य च विषयाजन्यत्वादिति। नन्वस्तु तर्हि सर्वत्र ज्ञातैवानुपलब्धिः करणमित्यत आह अनुपलब्धेरपीति। सामान्याभावेन उपलम्भसामा-

ननु क्व नाम ज्ञातानुपलब्धिरसाक्षात्कारिणीमभावप्रतीतिं जनयति । तद् यथा निपुणतरमनुसृतो मया मन्दिरे चैत्रो न चोपलब्ध इति श्रुत्वा श्रोताऽनुमिनोति, नूनं नासीदेवेति । एतेन प्राङ्गनास्तितताऽपि व्याख्याता । ननु तथाप्यवान्तरजातिभेदोऽस्तु अज्ञातानुपलब्धिजन्ये साक्षात्कारस्तु कुत इति चेत् । कारणविरोधात् ।

बोधनी ।

स्यादेवं यदि ज्ञातानुपलब्धिः क्वचिदसाक्षात्कारं जनयेत्, न चैवमस्तीत्याशयेनाह **ननु क्व नाम** इति । तत्रोदाहरणेनोत्तरयति **तद्यथा** इति । न हि तदा देशान्तरस्थस्य श्रोतुर्योग्यानुपलब्धिरस्ति किं त्वाप्तवाक्यावगतयानुमिनोतीति । एवं प्रातः कारणेऽनुपलब्धस्य मैत्रस्य मध्यन्दिनसमयभाविप्रातस्तनाभावज्ञानमप्यनुमानफलमेव मध्यन्दिनानुसंधीयमानप्रातस्तनानुपलब्धिलभ्यत्वादित्याह **एतेन** इति । नन्वस्तु ज्ञातानुपलब्धिजन्यादज्ञातानुपलब्धिजन्यस्य जातिभेदः स तु साक्षात्काररूप इति कुत इत्याह **ननु** इति । न हि विधाद्वयव्यतिरेकेण ज्ञानावान्तरजातिभेद इत्यभिप्रायेणाह **कारणविरोधा-**

प्रकाशः ।

विनाप्यभावधीरिति व्यभिचारादिन्द्रियमकरणमित्यत आह एतेनेति । यथा शब्दावगतानुपलब्ध्या लिङ्गेनाभावानुमानं, तथा प्राङ्गनाऽस्तितास्थलेऽप्यभावधीर्लिङ्गजेत्यर्थः । ननु तत्रास्मरणं न लिङ्गं, न हि यावदनुभूतं तावदेव ग्रहणयोग्यमपि स्मर्यत एवेति नियम इति, मैत्रस्य तद्गेहसत्त्वेऽप्यननुभवात् संस्कारानुत्पादात्तदनुद्बोधाद् वा तदस्मरणस्योपपत्तेः । न । कश्चिद्विषयविशेष एव हि तादृशो यो गेहादिनिष्ठतया अनुभूयत एव, तदनुभवेन च संस्कारो जन्यत एव, स च न नश्यति । नाऽपि तदुद्बोधकान्तरापेक्षा । विलक्षणविषयविशेषमाहात्म्यात् । यथा श्रीविश्वनाथायतने भगवन्तं श्रीविश्वनाथमनुभवतः, तथा मैत्रमपि प्रेष्ठम् । प्रयोगश्च—तद्गेहं तदा मैत्राभाववत् तत्तुल्यपरिमाणपटादिस्मरणेऽपि तद्वत्तया अस्मर्यमाणत्वात्, यदेवं तदेवं, यथा पटाभाववद् भूतलमिति । स्मरणाभावश्च संयुक्तविशेषणतया मनोवेद्य एवेति भावः । **केचित्तु** यत्र सामान्याभावेन लिङ्गेन विशेषाभावानुमानं, तत्र ज्ञातानुपलब्धिरनुमानाङ्गमिति **तत्परोऽयं ग्रन्थ** इत्याहुः ।

ननु ज्ञातानुपलब्धेरसाक्षात्कारजनकत्वेऽप्यज्ञातानुपलब्धिजन्ये अवश्यं साक्षात्कारित्वमिति न नियमो वैजात्यान्तरेणाप्युपपत्तेरित्याह **नन्विति** । सर्वत्र असाक्षात्कारित्वस्य ज्ञायमानकरणजन्यत्वव्याप्तेस्तन्निवृत्तावसाक्षात्कारित्वव्यावृत्तेरवान्तरजातिः साक्षात्कारित्वमेवेत्याह कारणेति । न च साक्षात्कारित्वमिन्द्रियजन्यत्वप्रयुक्तमेवेति वाच्यम् । ज्ञातेन्द्रियसन्निकर्षजेन्द्रियगतिज्ञानस्य साक्षा-

प्रकाशिका ।

**केचित्त्विति** । उपलम्भसामान्याभावेन यत्रोपालम्भविशेषाभावानुमानं तत्रैव ज्ञातानुपलब्धेः कारणत्वमिति इत्यपि दूषणान्तरमाहेत्यर्थः ।

मकरन्दः ।

न्याभावेन विशेषाभावानुमानमित्यर्थः । **इन्द्रियजन्यत्वेति** । इन्द्रियसन्निकर्षजन्यत्वेत्यर्थः । तेन नोत्तरविरोधः । इन्द्रियविशिष्टसन्निकर्षहेतुत्वे इन्द्रियहेतुत्वमपीति न विरोध इत्यन्ये । ज्ञायमानकरणत्वमाश्रित्याह **ज्ञातेन्द्रियेति** । चक्षुर्गतिमत् गतिशून्यसंयोगित्वादित्यनुमितेरित्यर्थः । नन्वेवमसाक्षात्कारित्वमपि तत्र न स्यादिन्द्रियसन्निकर्षान्यकरणस्य तत्र प्रयोजकत्वादित्यत आह

टिप्पणी ।

**तत्परोऽयं ग्रन्थ इत्याहुरिति । एतेनेत्यादिग्रन्थः** प्राङ्गनास्तितता च, गृहविशेषे चैत्रोपलब्धेः अहं गृहविशेषे तदा चैत्रोपलब्ध्यभाववान्, चैत्रोपलब्धेरभावात् मया चैत्र एव कदापि नोपलब्धः गृहे तदुपलब्धेः का कथा इत्यभिसन्धिः ।

कार्यविरोधेन भवितव्यमित्युक्तमेव । अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च । अधिकरणग्रहणे तदुपक्षीणमिति चेन्न । अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात् । अस्ति हि तस्याधिकरणग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावोऽनुपलब्धिश्च । अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न । प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात् । ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न । वायौ त्वगिन्द्रियोप-

---

बोधनी ।

दिति । द्वितीयं हेतुं विवृणोति **अनन्यत्र** इति । विशेषणासिद्धिमाशङ्कते **अधिकरणे**ति । यथाहि धूमज्ञानोपक्षीणेन्द्रियव्यापारानन्तरभाविनो वह्निज्ञानेन्द्रियहेतुकत्वं तथाधिकरणग्रहणोपक्षीणेन्द्रियव्यापारानन्तरभाविनो भावज्ञानस्यातद्धेतुकत्वमिति, तर्ह्यन्धस्यापि सामग्रीसाकल्याद्रूपाभावप्रतीतिः स्यादित्याह **न** इति । योग्यस्य स्थूलद्रव्यसमवेतत्वादिति । ननु भवन्तोऽप्यधिकरणग्राहकेणेन्द्रियेण ग्राह्योऽभाव इति मन्यन्ते, तत्र चान्धस्य त्वगिन्द्रियेण रूपविशेषाभावप्रतीतिः प्रसज्येतेत्याह **अधिकरणे**ति । **न** इति । ततश्च चाक्षुषरूपप्रतीतिर्नान्धस्य स्यादिति । **ममापि** इति । ततश्च चाक्षुषाधिकरणग्रहणाभावान्नान्धस्य रूपविशेषाभावप्रतीतिरिति । **न**

प्रकाशः ।

त्कारित्वप्रसङ्गात् । असाक्षात्कारित्वस्य च साक्षात्कारिभिन्नज्ञानरूपत्वात् । अनुभवत्वेन साङ्कर्यापत्त्या जातित्वाभावादिति भावः । **न** चेन्द्रियजत्वं साक्षात्कारित्वप्रयोजकं, प्रकृतेऽपि तत्त्वादित्याह अनन्यत्रेति । ननु प्रतियोगिज्ञानस्येवाश्रयज्ञानस्याप्यभावधीहेतुत्वमिति तत्रैवेन्द्रियमन्यथासिद्धमिति विशेषणासिद्धो हेतुरित्याह अधिकरणेति । अधिकरणधीरिन्द्रियव्यापारो न तया तदन्यथासिद्धम्, अन्यथा सन्निकर्षोपक्षीणमिन्द्रियं घटग्राहकमपि न स्यादित्याह अन्धस्येति । ममापीति । प्रतियोगिग्राहकेन्द्रियेणाश्रयाग्रहे योग्यानुपलब्ध्या नाभावो गृह्यते । न चान्धस्य रूपग्राहकेन्द्रियेण पटादिग्रहः । अत एव चक्षुःसंयुक्ते पृथिवीपरमाणौ न जलत्वाद्यभावधीप्रसङ्ग इत्यर्थः । वायाविति । वायोः प्रतियोगिग्राहकचक्षुरग्राह्यत्वादित्यर्थः ।

ननु यथा तव नीरूपो वायुरिति वायुविशेष्यिका धीरानुमानिकी विशेष्ययोग्यतामाश्रित्येन्द्रियाणां प्रवृत्तेः; तथा वायौ रूपाभावविशेष्यिकाऽपि धीर्ज्ञातानुपलब्धिलिङ्गजन्याऽनुमितिरेव, तथा च या धीः साक्षात्कारित्वेन त्वदभिमता, तस्यामुक्ता सामग्रीति नोक्तदोषः । न चाभावज्ञानस्य साक्षात्का-

मकरन्दः ।

**असाक्षात्कारित्वस्ये**ति । तथा च साक्षात्कारित्वप्रयोजकस्याज्ञातकरणत्वस्याभावादेव तत्र तदुपपद्यते इति भावः । ननु परोक्षत्वमसाक्षात्कारित्वमित्येकं, तच्च जातिरूपं, न तूक्तोपाधिरूपमित्यत आह **अनुभवत्वेने**ति । स्मृतेरपि परोक्षत्वादिति भावः । एतच्चोपलक्षणम्—तज्जातित्वेऽपि ज्ञायमानकरणप्रयोज्यत्वाभ्युपगमे गत्यनुमितौ तदुपपद्यत एवेत्यपि बोध्यम् । **न चे**ति । इन्द्रियजत्वेनेन्द्रियजन्यत्वमित्यर्थः । तथा चेन्द्रियाजन्यतया असाक्षात्कारित्वमिति भावः । अत्रासिद्धिमाह **प्रकृतेऽपी**ति । तत्त्वादिन्द्रियजन्यत्वादित्यर्थः, अन्यथा यथाश्रुते विरोधापत्तेः । ननु वायोरतीन्द्रियतया त्वगिन्द्रियोपनीत इत्ययुक्तमत आह **वायो**रिति । **तथा** चेति । यद्यपि वायौ रूपाभावविशेष्यिका धीः साक्षात्कारित्वेन त्वदभिमतैव तत्र च नोक्ता सामग्री, तथापि साक्षात्कारित्वेन त्वदभिमतेत्यस्या-

टिप्पणी ।

**तथा च या धीः साक्षात्कारित्वेन त्वदभिमतेति** । यद्यपि वायौ रूपाभावविशेष्यिका

**नीते रूपाभावप्रतीत्यनुदयप्रसङ्गात् । तथापि तत्तत्र सन्निकृष्टमिति चेत् । हन्तैवमनन्यत्र चरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन ॥**

**स्यादेतत्, तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न । तस्य तं प्रत्य-**

---

बोधिनी ।

इति । प्रतियोगिग्राहकेण चक्षुषा वायोरग्रहणात्तत्र रूपाभावप्रतीतिः कदाचिदपि न स्यादिति । नन्वगृह्णदपि चक्षुर्वायौ यावत्संनिकृष्टं तावता रूपविशेषस्यानुपलब्धिरभावं गमयतीत्याह **तथापि** इति । **हन्तैवम्** इति । वायोर्ग्रहणाभावादनन्यत्र चरितार्थता त्वगन्धस्य च रूपाभावप्रतीत्यभावाद्वश्यापेक्षणीयत्वं चक्षुष इति ।

ननु मा भूदविकरणग्रहणोपक्षयस्तथापि तत्र संनिहितस्य यस्य कस्यचिद्वस्तुनो ग्रहण एवोपक्षीयत इत्याह **स्यादेतत्** इति । **न** इति । अत्र ह्यन्वयव्यतिरेकानुविधाने सत्येवाभावबुद्धेरनिन्द्रि-

प्रकाशः ।

रित्वेनेन्द्रियजन्यत्वं, स्मृतिवत्तस्य परोक्षत्वात् । मैवम् । घटाभावबुद्धेरपि साक्षात्कारित्वेनाभिमताया योग्यानुपलब्धिलिङ्गजन्यत्वापत्तेः । यदि च लिङ्गज्ञानेऽपि तदनुभवादज्ञातकरणिका सा, तदा वायौ रूपाभाव इति धीरपि तथा । किञ्च वस्तुतो घटवत्युपलब्धिप्राक्कालेऽनुपलब्ध्या घटस्मृतिमतः कुतो नाभावधीः ? घटाभावाभावादिति चेत् । हन्तैवमभावबुद्धेरर्थजन्यत्वात् प्रत्यक्षत्वसिद्धाविन्द्रियजत्वमेव । अपि च प्रतियोगिसत्त्वविरोधिनी याऽनुपलब्धिः, सैव योग्यानुपलब्धिः, अतो जलपरमाणौ गन्धाभावो न प्रत्यक्षः, प्रत्यक्षश्च वायौ रूपाभावः, रूपानुपलब्धिज्ञापकस्याभावात् । तल्लिङ्गत्वाभावं च स्वयमेवाचार्यो वक्ष्यति । **तथापीति** । चक्षुषा वायोरग्रहेऽपि चक्षुर्वायुसन्निकृष्टमेवेति नाश्रयग्रहे तदुपक्षीणमित्यर्थः ।

नन्वाश्रयेत्यन्यमात्रोपलक्षणम्, अस्ति च वायुसन्निकृष्टस्येन्द्रियस्य तद्देशवृक्षादिप्रकाशकत्वमित्यन्यथासिद्धिरेवेत्याह—

**स्यादेतदिति** । अन्धस्यापि रूपाभावप्रतीत्यापत्त्या न तावदिन्द्रियमभावज्ञाने अकारणमेव, किन्तु कारणव्यापकत्वेन परम्पराकारणं मन्तव्यम् । तथा सत्याह **तस्येति** । तस्य वस्त्वन्तर-

मकरन्दः ।

ज्ञातानुपलब्धिजन्यत्वेनोभयसिद्धेत्यर्थ इति वयम् । अन्यथा तु चिन्त्यम् । साक्षात्कारित्वेनेति स्वमते । **यदि चेति** । तथा च तत्र त्वदुक्तानुपलब्धिवैकल्यादनन्यगत्या इन्द्रियग्राह्य एवाभाव इति भावः । युक्त्यन्तरमाह **किञ्चेति** । **प्रत्यक्षश्चेति** । यद्यप्येवं स्वरूपसदनुपलब्धिग्राह्यत्वमात्रं सिध्यति, तथापि पूर्वोक्तयुक्त्यवष्टम्भेन प्रत्यक्षत्वमुक्तमिति ध्येयम् । **चक्षुषेति** । तथा च प्रतियोगिग्राहकेन्द्रियेणा-

टिप्पणी ।

धीः साक्षात्कारित्वेन नैयायिकाभिमतैव तत्र च न प्रतियोगिग्राहकेत्याद्यनुपलब्धिकरणकज्ञानसामग्री, तथापि साक्षात्कारित्वेन त्वदभिमतेत्यस्याज्ञातानुपलब्धिजन्यत्वेनोभयसिद्धेत्यर्थ इति । अन्यथा तु चिन्त्यम् । **स्मृतिवत्तस्य परोक्षत्वादिति** । अज्ञातकारणजत्वेऽप्यपरोक्षत्वाभावात् । **साक्षात्कारित्वेनाभिमताया इति** । अनुपलब्धिकरणकत्वेन । **योग्यानुपलब्धिलिङ्गजत्वापत्तेरिति** । अनुपलब्धिज्ञानं कल्पयित्वा लिङ्गजन्यत्वेनानुमितित्वस्य वक्तुं शक्यतयाऽनुपलब्धेः कारणत्वभङ्गापत्तेः । **यदि च लिङ्गज्ञानेपीति** । सर्वत्र ज्ञानकल्पने मानाभावात् । **तदा वायौ रूपाभाव इति धीरपीति** । तत्रापि सर्वत्रानुपलब्धिज्ञानकल्पने मानाभावात् । **इति धीरपि तथेति** । अनुमितिरेवेत्यर्थः ॥ २०-२१-२२-२३ ॥

इति श्रीधर्मदत्तोपाध्याय ( प्रसिद्ध बच्चामा ) कृता कुसुमाञ्जलितृतीयस्तवकटीप्पणी समाप्ता ।

कारणत्वात्, कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात्। प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याऽश्यामत्वम्। आर्जवावस्थानमध्यधिकरणस्योपयुज्यते इति चेत्, तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते, तदेकसहकारिप्रभासन्निकर्षापेक्षणात्। अन्यथा वातायनविवरविसारिकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च॥

तथापि योग्यताऽऽपादनोपक्षीणश्चक्षुः। यदितरसामग्रीसाकल्ये ह्यनुपलभ्यमानस्याभावो निश्चीयते। तच्च चक्षुष्यधिकरणसन्निकृष्टे सति स्यादिति चेत्। ननु परिपूर्णानि कारणान्येव साकल्यम्। तथा च किं कुत्रोपक्षीणम्। अथान्यो-

बोधनी।

यहेतुकत्वमन्यत्र तदुपक्षयादुच्यते, स चाभावबुद्धिहेतौ कस्मिंश्चिद्वक्तव्यः, अन्यथा तदनुविधानानुपपत्तेः, न चात्र तस्य वस्त्वन्तरग्रहणस्य तदभावानुभवं प्रति कारणत्वमस्तीति, यदि स्यात्तत्राह **कारणत्वे वा** इति। अन्धकारे वस्त्वन्तरग्रहणाभावात्स्पर्शवद्विशेषाभावप्रतीतिर्न स्यात् इति प्रतियाच्चेति। प्रतियोगिग्राहकेण तदा तदालोके विस्फारिताक्षस्य वस्त्वन्तरग्रहणसंभवाच्चेति। उत्तरत्र शङ्कते **आर्जवे**ति। आर्जवावस्थानादधिकरणस्य नयनसंनिकर्षोऽपि तद्गताभावग्रहणएवोपयुज्यते न तु तद्ग्रहण इत्यङ्गीकर्तव्यमित्याह **नयने**ति। कुत इत्यत्राह **तदेक** इति। आलोकसंनिकर्षस्तावदपेक्षणीयो रूपाभावज्ञानेन तमन्तरेण तदनुपपत्तेः, स च तस्य नयनसंनिकर्षस्यैव सहकारी नानुपलब्ध्यादेः, तस्मान्नयनसंनिकर्षोऽप्यपेक्षणीय एव, न हि संभवति यस्य यत्सहकारितयैव कार्योपयोगस्तस्य तदनपेक्षायामप्यपेक्षेति। चक्षुःसंनिकर्षानुपयोगेऽनिष्टमप्याह **वातायने**ति। तत्र हि सत्येवाधिकरणस्यार्जवावस्थाने तद्ग्रहे चक्षुःसंनिकर्षाभावादेव तस्य श्यामत्वाभावस्यानुपलम्भो भवति।

नन्वस्त्वपेक्षणीयश्चक्षुः संनिकर्षस्तथाप्यन्यत्रोपक्षयस्तस्येत्याह **अथापि** इति। योग्यानुपलब्धिर्ह्यभावज्ञानहेतुः, योग्यता च प्रतियोगिव्यतिरिक्ताभावज्ञानकारणसाकल्यं, तच्च साकल्यं चक्षुः संनिकर्षे सति भवति तस्यापि तत्कारणत्वात्। ततश्च सामग्रीसाकल्यापादनोपक्षीणं चक्षुर्नाभावज्ञानं यावत् गच्छतीति। **न तु परिपूर्णानि** इति। न खलु साकल्यं नाम कारणेभ्यस्तत्त्वान्तरं

प्रकाशः।

ग्रहणस्य, तं प्रत्यभावानुभवं प्रतीत्यर्थः। न प्रतीयादिति। त्वगिन्द्रियेण वस्त्वन्तराऽग्रहादित्यर्थः। ननु प्रतीयत एवाकाशमत्रापि, तस्य तन्मते प्रत्यक्षत्वादित्यत आह प्रतीयाच्चेति। आर्जवावस्थितेऽप्यन्धकारे ज्ञानाभावादालोकसन्निकर्षोऽपि हेतुरेष्टव्यः, स च चक्षुषः सहकारी नान्यस्येति सिद्धं चक्षुः करणमित्यभिप्रेत्याह नयनेति। अथार्जवावस्थानेऽपि नालोकसन्निकर्षापेक्षा, तत्राह वातायनेति। तदुपलम्भप्रसङ्गाद्रूपाभावोपलम्भप्रसङ्गादित्यर्थः। चक्षुषा यत्किञ्चिदुपलम्भस्य तत्रापि सम्भवादिति भावः। **नन्विति**। तथात्वे वा सहकार्युच्छेदापत्तिः। वस्तुतः प्रतियोगिसत्त्वविरो-

प्रकाशिका।

**तथात्वे वेति**। कारणचक्रसाकल्योपक्षयाय दण्डादेरपि तत्रोपक्षये घटाद्यहेतुतापत्तिरित्यर्थः। तथा च योग्यताघटकतया अवश्यापेक्षणीयस्यात्रानुपक्षीणस्येन्द्रियस्य सिद्धमभावधीहेतुत्वमिति भावः।

मकरन्दः।

धिकरणसन्निकरणसन्निकर्ष एवानुपलब्धिसहकारी स च तत्रास्त्येवेति भावः। अकारणमेव अप्रयोजकमेवेत्यर्थः। परम्पराकारणं कारणकारणम्। **तथात्वे वेति**। कारणचक्रस्य साकल्योपक्षयाभ्युपगमे दण्डचक्रादेरपि तथात्वे घटाद्यहेतुत्वपात्तिरित्यर्थः। तथा च योग्यताघटकतयाऽवश्यापेक्ष-

न्यमेलकं मिथः प्रत्यासत्त्यादिशब्दवाच्यं तदुपक्षयः, न तर्हि कचिच्चक्षुः कारणं स्यादिति । न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति । अथाधिकरणसमवेतकिञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः, ततस्तत्रेदं चरितार्थम्, वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी । तथा हि अनुपलब्ध्या ह्यनुमीयते—अयं नीरूपो वायुरिति । न असिद्धेः । न ह्युपलम्भाभावो भवतामभावोपलम्भः, उपलम्भस्यातान्द्रियत्वाभ्युपगमात् । प्राकट्याभावेनानुमेय इति चेन्न । वायौ रूपवत्ताप्राकट्याभावस्याप्यसिद्धेः, रूपाभावेन समानत्वात् । व्यवहा-

बोधनी ।

न्तरसाध्यमस्ति यत्रोपक्षयः तस्य स्यात् किं तु परिपूर्णानां कारणानामेव तथात्वादिति । नन्वस्ति मेलनं नाम तत्त्वान्तरं क्षयविषय इत्याह **अथ** इति । एवं हि रूपादिज्ञानेष्वर्थसंनिकर्षसंपादनोपक्षीणं चक्षुर्न कारणं स्यादित्याह **तदुपक्षय** इति । नन्वभावाधिकरणसमवेतस्य कस्यचिद्वस्तुनः प्रतियोगिग्राहकेणेन्द्रियेणोपलम्भोऽभावग्रहणे सहकारित्वेनानुपलब्धेरपेक्षणीयस्तत्रेदमिन्द्रियमुपक्षीयत इत्याह **अथाधिकरणसमवेतकिञ्चि**दिति । तर्हि वायौ रूपाभावप्रतीतिर्न स्यात् तत्र वस्त्वन्तरस्य चक्षुषानुपलम्भादित्याशङ्क्य स एवाह **वाय्वादिषु** इति । **न** इति । न तत्राभावप्रमाणगम्योऽभावः अनुपलब्धिलिङ्गानुमेयत्वादिति । **न** इति । असिद्धेरनुपलब्धेरज्ञातासिद्धत्वादिति। न तावदभावप्रमाणात्सिध्यतीत्याह **नहि** इति। ऐन्द्रियकस्याभावो हि भवतामभावगम्य इति । ननु रूपोपलम्भजन्यस्य प्राकट्यस्याभावेन वायौ रूपानुपलम्भोऽनुमीयत इत्याह **प्राकट्याभावेन** इति। वायौ रूपाभावस्येव प्राकट्याभावस्यापि नाभावप्रमाणात्सिद्धिरित्याह **न वायौ** इति। नन्वस्तु वायौ रूपव्यवहाराभावेन प्राकट्याभावोऽनुमेय इत्याह **व्यवहाराभावेन** इति । व्यवहाराभावस्यानैकान्तिकत्वान्न प्राकट्या-

प्रकाशः ।

धित्वमनुपलब्धेर्योग्यत्वं, तत्र न चक्षुरुपक्षय इति भावः । **न हीति** । विषयप्रत्यासत्ताविन्द्रियान्यथासिद्धा क्वचिदपि इन्द्रियं करणं न स्यात्, अप्रत्यासन्नस्याऽजनकत्वादित्यर्थः । **तद्विषयेति** । अधिकरणनिष्ठाभावग्रहे इत्यर्थः । **वाय्वादिष्विति** । चक्षुःसन्निकृष्टे वायौ चक्षुषा तद्धर्मग्रहे वायौ रूपाभावधीर्नाध्यक्षा, किन्त्वनुमितिरिति नेयं तत्र सामग्रीत्यर्थः । असिद्धिमेवोपपादयति **न हीति** । वायौ रूपाभावधीर्नानुपलब्धिलिङ्गजन्या, अनुपलब्धेरज्ञानात्, आप्तवाक्यस्यापि तद्बोधकस्याभावात् । न चोपलब्धेरनुपलब्धिरज्ञातैव तद्बाधिका । उपलब्धेरतीन्द्रियत्वेन योग्यानुपलम्भेनानुपलब्ध्यभावस्य ज्ञातुमशक्यत्वात्, अनुपलब्धिमात्रस्य चाभावाग्राहकत्वादित्यर्थः । उपलम्भकार्यज्ञातताया अभावेनोपलम्भाभावोऽनुमीयत इत्याह **प्राकट्येति** । वायौ रूपाभावतद्रूपप्राकट्याभावस्यापि दुर्ग्रहत्वं, यदि च स योग्यानुपलब्धिगम्यस्तर्हि रूपाभावोऽपि तथाऽभ्युपेयस्तुल्ययोगक्षेमत्वादित्याह **वायाविति** । रूपज्ञानाभावे लिङ्गान्तरमाह **व्यवहारेति** । दृश्यमानो व्यवहाराभावो लिङ्गं,

प्रकाशिका ।

**उपलम्भेति** । उपलम्भस्य ज्ञातताचरमकारणतया ज्ञातताव्याप्यत्वादिति भावः । प्राकट्याभावलिङ्गत्वभ्रमं निवारयति **रूपज्ञानाभाव इति** । **न चेति** । अग्रिमग्रन्थेन कार्येत्यादिगतार्थमिति शङ्क्या विकल्पयति **दृश्यमान इति** । व्यवहारसामान्याभावस्य नानैकान्तिकत्वमिति विकल्पयति

मकरन्दः ।

णीयस्यान्यत्रानुपक्षीणस्येन्द्रियस्याभावग्राहकत्वं सिद्धमिति भावः । **उपलम्भेति** । उपलम्भस्य ज्ञाततायां चरमकारणत्वात्तदभावेन तदभावोऽनुमीयते इत्यर्थः । प्राकट्याभावलिङ्गत्वभ्रमं वारयति **रूपज्ञानाभाव** इति । न चेत्यग्रिमग्रन्थेन गतार्थत्वात् कार्येऽत्यादि व्यर्थमिति विकल्पयति **दृश्यमान इति** । ननु व्यवहारसामान्याभावस्य काप्यसिद्धेरनैकान्तिकत्वमसिद्धमिति विकल्प्य योजयति

राभावेनानुमेय इति चेन्न। कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानाभावाभ्युपगमात्, मूकस्वप्नोपपत्तेश्च। न च व्यवहाराभावमात्रेणानुमातुमपि शक्यते। अनैकान्तिकत्वादसिद्धेश्च ॥

तद्विषयस्तु व्यवहारस्तद्विषयज्ञानजन्यो वा? तद्विषयज्ञानजनको वा? तदाश्रयधर्मजनको वा?। तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनि-

बोधनी।

भावे ज्ञानाभावे लिङ्गतेत्याह **न** इति। इतश्चानैकान्तिकतेत्याह **मूकस्वप्न** इति। मूकतया वाचिकस्य व्यवहारस्याभावः, स्वप्नतया कायिकस्येति। ननु मा नाम हानोपादानलक्षणयोः कायवाग्व्यवहारयोः ज्ञानविशेषकार्यत्वात्तदभावात् ज्ञानमात्राभावः प्राकट्यमात्राभावो वानुमीयतां, ज्ञानमात्रस्य प्राकट्यमात्रस्य च व्यवहारमात्रं कार्यं, ततस्तदभावात् तयोरन्यतरस्याभावोऽनुमास्यत इत्याशङ्क्याह **न च** इति। यदि तावद्व्यवहाराभावमात्रमित्यत्र यः कश्चिद्व्यवहारो विवक्षितस्तदानैकान्तिकता यस्य कस्यचिद्व्यवहाराभावस्य येन केनापि ज्ञानाभावेन व्याप्तेः, तथापि कस्यापि व्यवहारस्य सर्वत्रासत्त्वादसिद्धश्च तन्मात्राभाव इति।

अथ यद्विषयस्य ज्ञानस्य प्राकट्यस्य वा भावोऽनुमिमित्सितः तद्विषयव्यवहाराभाव एव लिङ्गमुच्यते तत्राह **तद्विषयस्तु** इति। कायिकवाचिकव्यवहारयोरपेक्षाज्ञानव्याप्यत्वाद् व्यापिनश्च व्यवहारान्तरस्यानवगमात् तद्विषयो व्यवहारस्तद्विषयं ज्ञानं तदाश्रितं वा प्राकट्यलक्षणं धर्मं पुरस्कृत्य तज्जन्य इति वा तज्जनक इति वा निरूपणीयः। ततो व्यवहाराभावश्चात्र तज्ज्ञानतदाश्रितधर्माभावपुरस्कारेणैव निरूप्येत। तच्चाशक्यमात्माश्रयादिदोषप्रसङ्गात्। तथाहि यदा तद्विषयज्ञानव्यवहाराभावः तद्विषयज्ञानाभावे लिङ्गं तदापेक्षज्ञानादिव्यापिनो व्यवहारान्तरस्याभावात्तद्विषयज्ञानमेव तज्जन्यव्यवहारोऽभ्युपगन्तव्यः, तथाचात्माश्रयत्वं-तद्विषयज्ञानाभावादेव तद्विषयज्ञानाभावानुमानमिति। यदा तु तद्विषयज्ञानजनकस्य व्यवहारस्याभावो लिङ्गं तदा चक्षुरादिव्यापारस्य तज्जनकत्वात्तस्य च ज्ञानस्य कार्यैकगम्यत्वात्तदभावोऽपि ज्ञानाभावावगम्यः, तथा चेतरेतराश्रयता-तज्ज्ञानाभावज्ञानात्तज्जनकव्यवहाराभावज्ञानं ज्ञानजनकचक्षुरादिव्यापाररूपव्यवहाराभावज्ञानाच्च तदभावज्ञानमिति। यदा च तदाश्रितधर्मजनकस्य व्यवहारस्याभावो लिङ्गं तदा प्राकट्याख्यधर्मस्य ज्ञानहेतुकत्वादात्माश्रयत्वमेव। अथ तु ज्ञानद्वारा चक्षुरादिव्यापार एव जनकः तदा चक्रकं भवति ज्ञानाभावाच्चक्षुरादिव्यापारलक्षणस्य व्यवहारस्याभावः ज्ञानाभावश्च प्राकट्याभावात् स च तज्जनकव्यापाराभावात् स च

प्रकाशः।

व्यवहारसामान्याभावो वा?। नाद्यः अनैकान्तिकत्वादित्याह **कायेति**। अन्त्येऽपि यदि स्वकीयव्यवहारमात्राभावस्तदाऽनैकान्तिकं, सर्वस्य तु तदभावो ग्रहीतुमशक्य इत्याह **न चेति**।

ननु अनुपेक्षणीयविषयकः स्वकीयरूपवत्ताज्ञानाभावस्तद्विषयकस्वकीयरूपवद्व्यवहाराभावेनानुमेय इत्यत आह—

**तद्विषयस्त्विति। तदभावश्चेति।** आद्ययोर्ज्ञानाभावान्तर्भूतः, अन्त्ये तदाश्रयधर्माभावान्तर्भूत

प्रकाशिका।

**अन्त्येऽपीति। आद्ययोरिति।** यद्यपि व्यवहाराभावो ज्ञानभावादन्यस्तथापि ज्ञानाभावेनैव सोऽनुमेय इत्यन्तर्भावार्थः। तथाचात्माश्रयादिरिति भावः। तदाश्रयधर्म्माभावान्तर्भूत इति। ज्ञानाभावानुमानद्वारा प्राकट्याभावात्मकतदाश्रयधर्म्माभावोऽनुमेय इत्यर्थः। **केचित्तु** घटज्ञानप्रतियोगिकतया ज्ञानाभाववद्-

मकरन्दः।

**अन्त्येऽपीति। आद्ययोरिति।** यद्यपि व्यवहाराभावो न ज्ञानाभावान्तर्भूतस्तस्य ततोऽन्यत्वात्, तथापि ज्ञानाभावेनैव सोऽप्यनुमेयस्तज्ज्ञानञ्चात्माश्रयादिनाऽसम्भवीति व्यवहाराभावोऽशक्य-

अथ एव । आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात् । न चाज्ञातस्योपलम्भाद्यभावस्य लिङ्गता । न च प्राकट्याभावः सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम् । लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात् । अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः । न ह्यविनाभावः सत्तामात्रेण ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप्रसङ्गादिति । ज्ञानप्रत्यक्षत्वेन त्वद्दिशा भविष्यतीति चेन्न ।

बोधनी ।

ज्ञानाभावादिति । न च व्यवहाराभावमात्रेणेत्यादेरपरा व्याख्या—न केवलमनैकान्तिकः असिद्धश्च व्यवहाराभाव इत्याह **न च** इति । उक्तस्यैवानैकान्तिकत्वस्यानुभाषणं दृष्टान्तार्थमिति व्यवहारस्वरूपनिरूपणपुरःसरं व्यवहाराभावं निरूपयंस्तस्यासिद्धिमेवाह **तद्विषयस्तु** इति । ननु विज्ञायमान एवानुपलम्भो यदि रूपाभावं गमयेत् अविनाभावेन तत एते दोषाः प्रादुष्युः, न त्वेवमित्याशङ्क्याह **न चाज्ञातस्य** इति । तथा सति लिङ्गत्वं न स्यादिति भावः । ननूपलम्भलिङ्गस्य प्राकट्यस्याभावो लिङ्गिन उपम्भस्याभावं गमयिष्यतीत्यत्राह **न च** इति । स हि लिङ्गाभाव इत्येव लिङ्गिनोऽभावं गमयेदविनाभावेन वा ! प्रथमे धूमाभावोऽप्यग्न्यभावं गमयेत्, द्वितीये त्वविनाभावः स्वस्य हेतुस्वरूपस्य च प्रतिसंधानमपेक्ष्येत, अन्यथाऽतिप्रसङ्गादिति । ननु नैयायिकमतावलम्बेन प्रत्यक्षत्वमभ्युपगच्छामः, ततो भावप्रमाणावगतेनैव ज्ञानाभावेन वायौ रूपाभावमनुमीमह इत्याह **ज्ञानप्रत्यक्षत्वेन** इति । तर्हि प्रामाणिकं पन्थानमागतो यथा-

प्रकाशः ।

एवेत्यर्थः । **आत्माश्रयेति ।** यदि तद्विषयकज्ञानाभावेनैव तद्विषयकज्ञानाभावोऽनुमेयस्तदाऽऽत्माश्रयः । अथ तद्विषयकज्ञानाभावात् तद्विषयकव्यवहाराभावज्ञानं, तद्विषयकव्यवहाराभावेन च तद्विषयकज्ञानाभावज्ञानं, तदाऽन्योन्याश्रयः । अथ तद्विषयकज्ञानाभावात् तद्विषयकव्यवहाराभावज्ञानं, तद्विषयकज्ञानाभावश्च तद्विषयकप्राकट्याभावात्, स च तद्विषयकज्ञानाभावात्, तर्हि चक्रकमित्यर्थः ।

नन्वन्येषामज्ञातानामलिङ्गत्वेऽपि प्राकट्याभावः सत्तयैव ज्ञानाभावं गमयिष्यति । न चायोग्यप्रतियोगिकत्वेनायोग्योऽस्याभाव इति वाच्यम् । अनुपलब्धेरेव तद्विशेषणवत्त्वादित्यत आह **न चेति ।** स हि व्याप्तिबलेन वा प्रतिपादयेल्लिङ्गाभावत्वमात्रेण वा, कार्याभावमात्रतया वा ? तत्र न मध्यमान्तिमावित्याह **लिङ्गाभावस्येति ।** धूमाभावस्यापि सत्तया गमकत्वापातादित्यर्थः । आद्यमाशङ्क्य निराकरोति **अविनाभावेति ।** न ह्युपलम्भाभावो भवतामभावोपलम्भ इत्यत्र शङ्कते **ज्ञानेति ।** प्रत्यक्षेण ज्ञानाभावं ज्ञात्वा तस्माल्लिङ्गाद्वायौ रूपाभावानुमानं स्यादित्यर्थः । सन्मते प्रति-

प्रकाशिका ।

शक्यनिश्चय इति **आद्ययो**रिति फक्किकार्थः । तदाश्रयधर्म्मघटितप्रतियोगिकतया प्राकट्याभावादनिश्चय इति **तदाश्रयेत्या**द्युक्तफक्किकार्थ इत्याहुः । न चायोग्यप्रतियोगिकत्वेनेति स्वरूपसदभावो योग्यप्रतियोगिकमेवाभावं गमयतीत्यर्थः । **अनुपलब्धेरे**वेति । अनुपलम्भस्य ग्राहकत्वे स नियम इत्यर्थः । **न ह्युपलम्भाभाव इति ।** नैयायिकोक्तौ शंकत इत्यर्थः । प्रत्यक्षेण स्वरूपसदनुपलब्ध्या । **सन्मत** इति । सन्मताश्रयणे रूपाभावो वायौ प्रत्यक्ष एव तदनाश्रयणे तु ज्ञानाभावोऽयोग्य एवेति

मकरन्दः ।

निश्चयः । एवञ्च तदाश्रयधर्म्माभावस्तद्विषयप्राकट्याभावः, तस्यापि तदनुमापकत्वे चक्रकादिना सोऽशक्यनिश्चय इत्यत्र तात्पर्यम् । ज्ञानाभावान्तर्भूतौ ज्ञानघटितप्रतियोगिकतया ज्ञानाभाववदतीन्द्रिय इत्यर्थः । **ज्ञानाभावश्चेति ।** तज्ज्ञानमित्यर्थः । यद्वा अनुमेय इति पूर्वोक्तमनुषञ्जनीयम् । **अनुपलब्धेरेवेति ।** प्राकट्याभावस्त्वयोग्यमपि गमयिष्यतीत्यर्थः ।

शब्दध्वं सादिनोक्तोत्तरत्वात्। अपि च प्रतियोगिग्राहकेन्द्रियेणाधिकरणधर्मप्रतीतिर-नुपलब्धेरङ्गमिति, तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा?। न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते। नापि व्याप्तेः। तथासति वायौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा, न तत्कारणको भवेद् न वा भवेत्। ततो न भवत्येव, लिङ्गात्तदुत्पत्तिरिति चेत्। ननु लिङ्गमपि सैव, न तत्त्वान्तरम्। यथा योनिसंबन्धोऽलिङ्गदशायामिन्द्रियस-

---

बोधनी।

प्रमाणं वायौ रूपाभावश्चाक्षुष इत्यभ्युपगच्छ। न च कथं नामाचाक्षुषो वायौ रूपाभावश्चाक्षुषः स्या-दिति शङ्कावकाशः शब्दप्रध्वंसप्रत्यक्षत्वसाधनेनाधिकरणप्रत्यक्षत्वस्यानङ्गत्वप्रतिपादनेन दत्तोत्तरत्वा-दित्याह **न शब्देति**। तदेवं यदि प्रतियोगिग्राहिणेन्द्रियेणाधिकरणसमवेतधर्मोपलम्भः तद्वि-षयाभावग्रहे हेतुः ततो वायौ रूपाभावप्रतीतिर्न स्यात् अनुमानतस्तदसिद्धेरित्युक्तम्, इदानीं तत्रैव दूषणान्तरमाह **अपि च** इति। तद्रहिताया वस्त्वन्तरप्रतीतिरहितायास्तस्या अनुपलब्धेः कार्य-व्यभिचारात्सत्यामप्यनुपलब्धौ कदाचित्कार्यस्याभावग्रहणस्यानुत्पत्तेः तत्प्रतीतिरप्यङ्गमिति व्यवस्था-प्येत व्यतिरेकाभावेऽप्यन्वयव्याप्तिबलाद्वेति। तत्र प्रथमे दूषणं न तावत् इति। + प्रति + + प्रतियोगिग्राहकेन्द्रियसंनिकर्षैः सहितानां प्रतीतिद्वये दूषणं—**नापि व्याप्तेः** इति। सत्यां हि व्याप्तौ भवन् रूपाभावप्रत्ययः तां वस्त्वन्तरप्रतीतिमाक्षिपेदेवंभूतत्वादभावप्रत्ययस्य वस्त्वन्तरप्र-तीतिव्याप्तत्वात्। यदि नाक्षिपेत् तर्ह्यभावप्रत्ययो वस्त्वन्तरप्रतीतिहेतुको न स्यात्स्वयं वा न भवेत् तत्कारणकस्य वस्त्वन्तरग्रहणस्याभावात्। अस्ति चायं वायाविति प्रतिक्षिप्तमपि पक्षं दूषणान्तर-विवक्षयोपक्षिपति **तत** इति। ततः प्रमाणान्तरभूताया अनुपलब्धेर्वायौ रूपाभावप्रतीतिर्न भवती-त्येव किंतु लिङ्गभूताया तदा च वस्त्वन्तरप्रतीतिर्नापेक्षणीयेति। **लिङ्गमपि** इति। न हि तस्या एव कदाचिद्वस्त्वन्तरप्रतीतिरपेक्षणीयाऽन्यदापि युक्तमिति। ननु यथा ह्यलिङ्गदशायां मातापितृसं-बन्धश्चक्षुःसंनिकर्षमपेक्षते ब्राह्मण्यज्ञानेन तु लिङ्गावस्थायां तथेहापि स्यादित्याह **यथा** इति। **न**

प्रकाशः।

*योगिमत्तयाऽनुपलम्भाद्वायौ रूपाभावः प्रत्यक्षत्वान्नानुमेयः, शब्दाभावप्रत्यक्षत्वव्यवस्थापनेन चाश्र-ययोग्यतायास्तद्धर्मग्रहस्य चाभावप्रत्यक्षताऽङ्गत्वनिरासादिति परिहरति* **शब्देति। व्याप्तिबलाद्वेति।** कार्यकारणभावस्य व्याप्तिविशेषत्वेन गोवृषन्यायात् तां विना थाः व्याप्तिस्तद्बलादित्यर्थः। **तां विनेति।** अधिकरणवृत्तिधर्मप्रतीतिं विनेत्यर्थः। एवम्भूतत्वाद् व्याप्यत्वादित्यर्थः। **अनाक्षेपे वेति।** अधिकरणवृत्तिधर्मप्रतीत्यनाक्षेपे वा नाभावधीस्तद्धेतुका तद्व्याप्या वा। तथात्वे वा हेतुं विना व्यापकं विना वा न भवेदित्यर्थः। ततः—अधिकरणधर्मप्रतीतित इत्यर्थः। **सैव**—अनुपलब्धिरेवेत्यर्थः। **यथेति।** यथा विशुद्धमातापितृयोनिजत्वं लिङ्गालिङ्गदशायामिन्द्रियसम्बन्धनिरपेक्षसापेक्षं, तथानुप-

प्रकाशिका।

न अनुपलब्धिलिङ्गानुमेयो वायौ रूपाभाव इति समुदायार्थः। न च ज्ञानप्रत्यक्षत्वमङ्गीकृत्य ममैक-देशिनः प्रत्यवस्थानमुचितमिति वाच्यम्। अनुपलब्धेः कारणत्वेऽपि निर्व्यापारत्वेनाकरणत्वादिति भावः। तद्रहिताया इत्यादेः कार्यकारणभावपरत्वादाह **कार्यकारणेति। सैवेति।** तच्च दूषित-मिति भावः। **तथेति।** अधिकरणधर्म्मप्रतीतिनिरपेक्षा तत्सापेक्षा चेत्यर्थः। सा अधिकरणधर्म्म-

मकरन्दः।

**सैवेति।** तच्च दूषितमिति भावः। **तथेति।** अनुपलब्धिरप्यधिकरणधर्म्मज्ञाननिरपेक्षसापेक्षा स्यादित्यर्थः।

**न्निकर्षमपेक्षते, लिङ्गदशायान्तु तदनपेक्ष एव ब्राह्मण्यज्ञाने, तथैतत् स्यादिति चेन्न। कार्यजातिभेदात्तदुपपत्तेः। प्रकृते च तदनभ्युपगमात्। पारोक्ष्यापारोक्ष्ये विहायान्यथाऽप्यसौ भविष्यतीति चेन्न। अनुपलम्भात्। सम्भाव्यते तावदिति चेत्, सम्भाव्यतां, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः।**

**अज्ञातकरणत्वाच्च। यद्ज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजं, यथा रूप-**

---

बोधनी।

इति। तत्र हि ज्ञानात्मनः कार्यस्य पारोक्ष्यापारोक्ष्यलक्षणजातिभेदात् योनिसंबन्धस्येन्द्रियापेक्षानपेक्षयोरुपपत्तिरिह चोभयोरिति। वस्त्वन्तरग्रहापेक्षतदनपेक्षानुपलब्धिकार्ययोरभावज्ञानयोः पारोक्ष्याभ्युपगमेन जातिभेदाभावात् सहकारिवैचित्र्यानुपपत्तिरिति। ननु परोक्षत्वेऽपि वस्त्वन्तरग्रहणापेक्षानुपलब्धिजन्यस्य प्रकारान्तरेणासौ जातिभेदो भविष्यतीत्याह **पारोक्ष्य** इति। **न** इति। परोक्षापरोक्षव्यतिरेकिणो ज्ञानावान्तरजातिभेदस्याप्रामाणिकत्वादिति। **संभाव्यते** इति। यद्यपि न प्रमाणोपलम्भ इति शेषः। संभाव्यताम् इति। न हि संभावनामात्रसिद्धं जातिभेदमाश्रित्यास्मिन् जातिभेदे वस्त्वन्तरग्रहापेक्षानुपलब्धिः कारणमस्मिंस्तु तन्निरपेक्षेति कारणनियमः शक्यनिश्चय इति।

तृतीयं हेतुमनूद्य व्याचष्टे **अज्ञातकरणत्वात्** इति। साक्षादनन्यत्रचरितार्थेनेन्द्रियेण जन्य-

प्रकाशः।

लब्धिरपि स्यादित्यर्थः। **कार्येति**। दृष्टान्तस्य तत्सापेक्षस्याऽपरोक्षज्ञानजनकत्वं तन्निरपेक्षस्य च परोक्षज्ञानजनकत्वम्। अत्र तु लिङ्गानुपलब्धिजन्याभावज्ञाने जातिभेदाभावाल्लिङ्गजानुमितौ व्यभिचारात्सा कारणं न स्यात्। तद्वदपरोक्षजात्यङ्गीकारे च तत्रेन्द्रियजन्यत्वमावश्यकमित्यर्थः। न च जातिं विनाऽपि व्याप्त्यादिज्ञानविनाकृतानुपलब्धिजन्याभावज्ञाने सा कारणमिति वाच्यम्। **अनुपलब्धिजन्यज्ञानत्वेनैव** तल्लिङ्गकानुमितिवद्विवादपदेऽपि तदकारणत्वानुमानात्। **इन्द्रियान्यथा-**सिद्धेर्निरासादिति भावः। सम्भाव्यतामिति। कार्यजातिसम्भावनया तज्जातीयनियतस्य कारणत्वसम्भावनायामपि तत्रानिश्चयादित्यर्थः।

**यद्ज्ञायमानेति। नन्विदमनुमित्यादावनैकान्तिकं** तस्याज्ञायमानमनःकरणकत्वात्। न च ज्ञायमानकरणजन्यत्वं लिङ्गं, लिङ्गादेरजनकतया तज्ज्ञानस्याज्ञायमानस्यैव करणत्वात्। नापि ज्ञानासाधारणकारणकत्वाभावो लिङ्गम्, अभावज्ञाने प्रतियोग्यादिज्ञानजन्यतया तदसिद्धेः। सविकल्पकमात्रस्यैव विशेषणज्ञानजन्यत्वाच्च। मैवम्। **लिङ्गादिज्ञा**नाजन्यानुभवत्वस्य लिङ्गत्वात्। साक्षा-

प्रकाशिका।

प्रतीतिः। **अनुलब्धिजन्यज्ञानत्वेनैवेति।**

मकरन्दः।

**लिङ्गादीति**। अत्रानुभवपदं व्यर्थं स्मरणस्यापि दृष्टान्तत्वेन साध्यवत्त्वाभ्युपगमात् अत एव परिमले ज्ञानत्वस्येति पाठ इति वदन्ति। वस्तुतो यथाश्रुतसाध्ये मनसैव सिद्धसाधनप्रसङ्गान्मनोभिन्नेन्द्रियजत्वमिन्द्रियत्वेनेन्द्रियजत्वं वा तदर्थः। तथा च स्मरणे व्यभिचारादनुभवपदमिति। द्वितीयदृष्टान्तेऽनुशयप्रकाश एवायं प्रकाशकृत इति प्रतिभाति। अत एवाह **साक्षादिति**। यद्यप्यात्ममनोयोगलक्षणतद्व्यापारस्य न व्यवधानमन्यथा चक्षुरादावपि तथात्वेन बाधापत्तेः, तथापि निरुक्त एव तात्पर्यम्। यथाश्रुतमभिप्रेत्याह **साक्षादिति**। विपक्ष इति। तथा चाप्रयोजकत्वपरोऽयं ग्रन्थ इत्यर्थः। भावविषयत्वोपाधिपरस्तु नेत्याह।

प्रत्यक्षम्, तथा चेह भूतले घटो नास्तीति ज्ञानमिति । यथा वा स्मरणमज्ञायमानकरणजं साक्षान्मनोजन्म । कुतस्तर्हि न साक्षात्कार्यनुभवरूपम्? । संस्कारातिरिक्तसन्निकर्षाभावादिति वक्ष्यामः ।

बोधनी ।

मिति तत्रैवोदाहरणान्तरमाह **यथा वा** इति । यदि स्मरणं साक्षान्मनइन्द्रियजं तर्हि सुखादिज्ञानवदस्य साक्षात्कारित्वानुभवत्वे न किमिति स्त इत्याह **कुत** इति ।

प्रकाशः ।

दिति, **मनसा** व्यवहितव्यापारेण सिद्धसाधननिरासार्थम्, **उपनीत**भाननिरासार्थं वा। **कुत इति।** **साक्षा**दिन्द्रियसन्निकर्षजन्यस्य प्रत्यक्षत्वव्याप्तत्वादित्यर्थः । **संस्कारेति** । संस्कारान्यः सन्निकर्षः

प्रकाशिका ।

(१) तत्पर एतेन प्राङ्नास्तीत्यादिग्रन्थ इत्यर्थः । अरुचिबीजन्तु **सन्मुखार्थत्याग एवेति** । **इन्द्रियजन्यत्वेति** । इन्द्रियसन्निकर्षजन्यत्वेत्यर्थः । तेन नोत्तरविरोधः । तथा च ज्ञानाकरणकत्वं साक्षात्त्वप्रयोजकमिति भावः । **इन्द्रियसन्निकर्षजेति** । चक्षुष्कृतिर्गतिमत्संयोगजन्या चलघटसंयोगाश्रयत्वादित्यनुमितेर्ज्ञायमानकारणतापत्ते. इन्द्रियसन्निकर्षजन्यत्वादित्यर्थः । ननूदाहृतानुमितौ साक्षात्कारित्वं कुतः? इन्द्रियसन्निकर्षात्मककरणजत्वप्रयोज्यत्वात् साक्षात्कारित्वस्य, तथा च कथं साक्षात्कारित्वप्रसङ्ग इत्यत आह **असाक्षात्कारित्वस्येति** । तथा च साक्षात्कारित्वप्रयोजकाज्ञातकरणकत्वाभावादेव तत्रासाक्षात्कारित्वमिति भावः । ननु असाक्षात्कारित्वं परोक्षत्वम् तच्च जातिरेव कुतो नेत्यत आह **अनुभवत्वेनेति** । स्मृतेरपि परोक्षत्वादिति भावः । इदञ्च वस्तुगतिमनुरुद्ध्य, वस्तुतस्तु जातित्वेऽपि ज्ञायमानकरणकत्वप्रयोज्यत्वमेव तदिति नोक्तानुमितौ तदभावो नापि स्मृतिवृत्ति तदिति अनुभवत्वेन संकर इत्यवधेयम् । **न चेति** । इन्द्रियत्वेनेन्द्रियजन्यत्वं साक्षात्त्वप्रयोजकं, तथाचेन्द्रियाजन्यतया नाभावधीः साक्षात्कारिणीति भावः । तत्रासिद्धिमाह **प्रकृतेपी**ति । तत्त्वात् = इन्द्रियजन्यत्वादित्यर्थः । वायोरतीन्द्रियतया त्वद्वदुपनीतत्वमसम्भवीति तदर्थमाह **वायोरि**ति । तथा च धीरिति । यद्यपि रूपाभावधीः साक्षात्कारित्वेनैव नैयायिकाभिमतेति तस्या उक्तसामग्र्यव्यभिचार एव, तथापि या धीः स्वरूपसदनुपलब्धिजन्यत्वेनोभयसिद्धेत्यत्र तात्पर्य्यम् । **साक्षात्कारित्वेनाभिमताया** इति । स्वरूपसदनुपलब्धिजन्यत्वेनोभयसिद्धाया इत्यर्थः । **यदि चेति** । तथाचानुपलब्धेःप्रतियोगिग्राहकेन्द्रियजन्याधिकरणज्ञानसहकारिकारणविरहादिन्द्रियजन्यैव वायौ रूपाभावधीरिति भावः । **प्रत्यक्षश्चेति** । एतावता स्वरूपसदनुपलब्धेर्ग्राहकत्वमात्रसिद्धावपि पूर्वोक्तयुक्त्यवष्टम्भेन प्रत्यक्षत्वसिद्धिरिति ध्येयम् । **चक्षुषेति** । तथा च नाश्रयग्रहे किन्तु तत्सन्निकर्ष एवेन्द्रियमन्यथासिद्धमिति भावः । सन्निकर्षेण यदीन्द्रियमन्यथासिद्धं तदा घटोऽपि नेन्द्रियग्राह्यः स्यादिति न तेन तदन्यथासिद्धिरित्याशयेन मूलं **हन्तैवमिति** । क्वचिदेतदाशयनिवेदिका सन्निकर्षो हीत्यादि फक्किका प्रकाश एव पठितेति । अकारणमेवेति । अप्रयोजकमेवेत्यर्थः । परम्पराकारणं कारणकारणमित्यर्थः । **महान्धकार** इति मूलं स्पर्शनेन्द्रिययोग्यालोकाभावप्रतिपादनाय । ननु प्रतीयत एवेति आकाशं, त्वचापि गृह्यत इति मतमाश्रित्येदमुक्तम् । **नालोकसन्निकर्षेति** । तत्र यद्यपि महान्धकारे ज्ञानाभावादित्यपि दूषणम्, तथापि तस्मिन्स ?—त्रुटिः ) ।

इदञ्च ज्ञायमानकारणत्वपक्षे न चाप्रयोजकत्वं निर्व्यापारत्वस्य विपक्षबाधकत्वात्, न च तथासत्यकरणत्वप्रसङ्ग एवेत्यस्ति बाधकोऽपि तर्क एवेत्यत आह **इन्द्रियेति** । तथा

(१) इयं व्याख्या सिंहावलोकनन्यायेन ४२७ पृष्ठतो द्रष्टव्या ।

तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि न साक्षादिन्द्रियजं भविष्यतीति चेन्न । उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्तेः। अन्यथा सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गोऽविशेषात् । तथापि विपक्षे किं बाधकमिति

बोधनी ।

**संस्कार** इति । न तावदनुभवत्वं संस्कारातिरिक्तासाधारणकारणाभावात्, नापि साक्षात्कारित्वमिन्द्रियार्थसंनिकर्षासमुत्थत्वादिति वक्ष्यामश्चतुर्थे परिच्छेद इति ।

अज्ञायमानकरणकेन ज्ञानेनेन्द्रियजेन भवितव्यमिति व्याप्तिर्भावज्ञानेषु नाभावज्ञानेष्वपीत्याह **तथापि** इति । **न** इति । सामान्यतः प्रवृत्ताया व्याप्तेर्बाधकमन्तरेणाभावविषयत्वेन संकोचानुपपत्तेस्तथापि वा संकोचेऽतिप्रसङ्ग इति । मा भूत्संकोचः तथाप्यज्ञायमानकरणकस्यैव कस्यचिद् ज्ञानस्यानिन्द्रियजत्वे किं बाधकमित्याह **तथापि** इति। बाधकंवि + (ना?) + त्सर्गापवादेऽतिप्रसङ्ग इत्येत-

प्रकाशः ।

प्रत्यक्षत्वप्रयोजकः, स्मरणे तु स एव सन्निकर्षः । प्रत्यभिज्ञाने तु तत्ता स्मृत्युपनीता भासते, न तु संस्कारस्तत्सन्निकर्षः । तज्जन्यत्वे **स्मृतित्वापत्ते**रित्यर्थः ।

तथापीति । **विपक्षे** बाधकाभावादित्यर्थः । **न च** भावविषयत्वमुपाधिः, अभावज्ञानेऽपि प्रतियोग्यादिभावविषयतया साधनव्यापकत्वात् । नाप्यभावाविषयत्वं, **अभावस्मरणे** साध्याव्यापकत्वात् । **उत्सर्गस्येति** । सामान्यत एव व्याप्तिर्भावविषयत्वस्य गुरुत्वादित्यर्थः । **तथाप्युत्सर्गस्य** बाध्यत्वशङ्कानिवारकं किमित्याह, **तथापीति** । निर्बीजतादृशशङ्कायां सर्वत्र सामान्य-

प्रकाशिका ।

चेन्द्रियमेव करणमिति भावः । **नन्विदमिति** । न च तत्रापि मनोजन्यतया साध्यमस्त्येवेति वाच्यम् । यथाश्रुते सिद्धिसाधनापत्त्या विषयप्रत्यासन्नेन्द्रियजन्यत्वस्य साध्यत्वात् । **लिङ्गादीति** । सिद्धान्तेऽप्यनुभवपदं ज्ञानपरम् । अत एव मूलोक्तद्वितीयदृष्टान्तासङ्गतिः साध्यस्यापि निरुक्तस्य संस्कारलक्षणां प्रत्यासत्तिमादाय स्मरणे सत्वात् । **केचित्तु** सिद्धिसाधनापत्तुत्तये मनोभिन्नेन्द्रियजन्यत्वमिन्द्रियत्वेनेन्द्रियजन्यत्वं वा साध्यमित्याशयेन व्यभिचारदर्शनेयं द्वितीयदृष्टान्ते चारुचिरेव प्रकाशकृतः अत एव सिद्धान्तेऽनुभवपदोपादानं करिष्यति स्मरणे निरुक्तसाध्याभावादिति वदन्ति । मास्तु प्रतियोगिज्ञानत्वेनाभावज्ञानं प्रति जनकत्वं तथाप्यसिद्धिरेवेत्याह **सविकल्पके**ति । मननेतिव्यवहितव्यापारत्वञ्च विषयाप्रत्यासन्नत्वादिकमेव बोध्यम् । उपनीतेति । तथा चोपनीताभावज्ञानेंऽशतः सिद्धसाधनवारणाय साक्षात्पदं ज्ञानादिप्रत्यासत्तिरहितपरमिति भावः । **साक्षादि**ति । यदपि चेन्द्रियत्वेनेन्द्रियजन्यत्वस्य साक्षात् प्रयोजकत्वेनेयं शङ्का तथापीन्द्रियसन्निकर्षासाधारणकारणत्वमेव साक्षात्त्वप्रयोजकमित्यभिप्रायेण शङ्क्यमिति भावः । **स्मृतित्वापत्ते**रिति। इदमुपलक्षणम् । वस्तुतो विशिष्टानुभवं प्रत्यव्यवहितविशेषणज्ञानं कारणमन्यथा स्मरणसमयेऽनुभव एव स्यादिति तत्राऽपि स्मृतिरेव प्रत्यभिज्ञाकारणमित्यपि द्रष्टव्यम् । **विपक्ष इति** । तथा चाप्रयोजकत्वपरोऽयं ग्रन्थ इति भावः । ननूपाधिपरत्वेनैव किमिति न व्याख्यात इत्यत आह **नचे**ति। नत्वित्यर्थः। उपाधिरित्यनन्तरमित्यर्थ इति शेषः । **भावाभावविषय**तेति क्वाचित्कः पाठः । तत्राभावपदं दृष्टान्तार्थम् **अभावस्मरण इति** । एतच्च यथाश्रुतसाध्यं विषयप्रत्यासन्नेन्द्रियजन्यत्वं वा विवक्षितम्। साध्यमभिप्रेत्य पौनरुक्त्यमाशंक्याह **तथापीति** । आत्मादिना सिद्धसाधनवारणायाह ।

मकरन्दः ।

**नचेति** । न त्वित्यर्थः। इत्यर्थ इति शेषः, भावाभावविषयतयेति यदि पाठः क्व चित्तदाऽभावपदं सम्पातायातम्। **अभावस्मरण** इति । एतच्च यथाश्रुते। वस्तुत उपनीताभावप्रत्यक्षे तथात्वम्। अदृष्टादिना अर्थान्तरादाह लिङ्गादिति ।

चेत्। नन्विदमेव तावत्। अन्यदप्युच्यमानमाकर्णय। तद् यथा अकारणककार्यप्रसङ्गो, रूपाद्युपलब्धीनामपि वाऽनिन्द्रियकरणत्वप्रसङ्गः। न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपि त्वनुपलभ्यमानकरणिकाभी रूपाद्युपलब्धिभिरेव। यद्यपि साक्षात्कारिताऽपि तत्रैव पर्यवस्यति, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादिकल्पने। न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुराद्यनुपलभ्यमानं कश्चिदकल्पयिष्यत्। अत एव साक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः। संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात्।

भावावेशाच्च चेतसः। सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणा-

---

बोधनी।

देव तावद् बाधकं किमन्यन्मृग्यत इत्याह **नन्विदम्** इति। नन्वन्यतः सिद्धायां व्याप्तावेव तद्वक्तुं युक्तं तत्सिद्धिश्च विपक्षे बाधकादित्याशङ्क्याह **अन्यदपि** इति। इह घटो नास्तीति बुद्धिरतीन्द्रियजा निर्हेतुकैव स्यात् हेत्वन्तरासंभवादिति बाधकान्तरमाह **रूपादी**ति। तासामपीन्द्रियजत्वमज्ञातकरणत्वाधीनसिद्धीति भावः। तमेव स्फोरयति **न हि** इति। उपलभ्यमानकरणिकास्वनुमित्यादिषु इन्द्रियस्य कारणत्वेनाव्यवस्थापनादनुपलभ्यमानकरणिकासु रूपादिबुद्धिषु तद्व्यवस्थापनादज्ञातकरणत्वमेवेन्द्रियत्वे प्रयोजकमिति निश्चीयत इति। ननु रूपादिबुद्धीनां चक्षुरादिकारणत्वकल्पने तासां साक्षात्कारित्वमेव प्रयोजकं न त्वज्ञातकरणत्वमित्यत्राह **यद्यपि**इ ति। रूपादिबुद्धीनां सत्यपि साक्षात्कारित्वे प्रथमतः कार्यदर्शनसमय एव कारणमपेक्षमाणः कारणान्तराज्ञानेनैव चक्षुरादि कल्पयति, न तु तासां साक्षात्कारित्वमप्यनुसंधाय, ततश्च प्रथमभाविनो ज्ञातकारणत्वस्यैव प्रयोजकत्वमिति तदेव व्यतिरेकमुखेन स्फोरयति **नहि** इति। **अत एव** इति। यत एवाज्ञातकारणत्वमेव प्रयोजकमैन्द्रियकत्वे न तु साक्षात्कारित्वमत एवेति। संस्कारकरण एव स्मृतेः नतु मनं इति चेत् तत्राह **संस्कारस्तु** इति। करणस्य मनइन्द्रियस्य विषयप्राप्तिरूपतया संस्कार उपयुज्यते, न तु कारणत्वेनेति।

तुरीयं हेतुमनूद्य व्याचष्टे **भावावेशाच्च** इति। बहिः स्मरणादन्तःसुखाद्यनुभवाच्चान्यत्र सर्वत्रेन्द्रियलिङ्गादिभावात्मककरणसहायमेव मनः प्रवर्त्तमानं दृष्टमतो व्याप्तिबलादभावानुभवेऽपि किमपि भावरूपं कारणमाविश्य मनः प्रवर्त्तत इत्यनुमीयते, तच्च कारणमिन्द्रियमेवावशिष्यत इत्यर्थः। ननु

प्रकाशः।

व्याप्त्युच्छेद इत्याह। **नन्विदमिति**। उत्सर्गस्य बाधकं विनेत्याशयेत्यर्थः। **अकारणकेति**। अज्ञातकरणकत्वावच्छिन्नज्ञानं प्रतीन्द्रियस्य करणत्वादिन्द्रियं विना तन्न स्यादित्यर्थः। **न हीति**। ज्ञातकरणकज्ञानेन करणतया नेन्द्रियं कल्प्यते, किन्त्वज्ञातकरणकज्ञानेनेत्यर्थः। ननु नाज्ञायमानकरणकज्ञानत्वेन चक्षुरादिकल्पनम्, अपि तु साक्षात्कारिज्ञानत्वेनेत्यत आह **यद्यपीति**। तत्रैवं इन्द्रियकरणकत्व एवेत्यर्थः। यदि च साक्षात्कारिज्ञानमेवेन्द्रियसिद्धौ मानं स्यात्; तदा स्मृतेस्तद्भावान्मनःकरणत्वं नानुमीयेतेत्याह **अत एवेति**। न चैवं स्मृतेः साक्षात्कारित्वापत्तिः। संस्कारातिरिक्तसन्निकर्षाभावादित्युक्तत्वात्। ननु स्मृतौ संस्कार एव कुतो न करणमित्यत आह **संस्कारस्त्विति**। इन्द्रियाणामप्राप्तानां ज्ञानाजनकत्वात्, संस्कारस्य च निर्व्यापारत्वेनाकरणत्वादित्यर्थः।

**भावावेशादिति**। भावरूपासाधारणकारणसाहित्यनियमादित्यर्थः। तथा चाभावप्रमायां मनो भावभूतासाधारणकारणसहकृतमेव करणमिति भावः। प्रयोगश्च लिङ्गाद्यजन्या अभावप्रमा

विघ्नमेव चेत् उपयुज्यते नातोऽन्यथेति व्याप्तिः । तथैव शक्तेरवधारणात् । न ह्यनुपलब्धिमात्रसहायं तदभावेऽप्यनुभवमाधातुमुत्सहते । शब्दलिङ्गादेरपेक्षादर्शनात् । न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धं, तदेव तस्यैव तदनपेक्षं जनकमिति न्यायसहम् । आर्द्रेन्धनसंबन्धमन्तरेणापि दहनाद् धूमसम्भावनापत्तेः । तथाच गतं कार्यकारणभावपरिग्रहव्यसनेन ॥ २० ॥

अपि च

**प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ॥**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥**

---

**बोधनी ।**

भावानामुपलम्भ एवायं नियमः, अभावानुभवे तु बहिरस्वतन्त्रमनुपलब्धिमात्रसहायं भविष्यतीत्यत्राह **नहि** इति । अभावानुभवेऽपि शाब्दलैङ्गिकादौ मनसः शब्दादिभावरूपकारणापेक्षादर्शनादिति । अन्यत्र तथादर्शनेऽपीह घटो नास्तीत्यत्रानुपलब्धिमात्रसहायं भविष्यतीत्याह **न च** इति । यद्वा भावानुभवे भावकारणापेक्षमप्यभावानुभवे तन्निरपेक्षमेव मनो भविष्यतीत्यत्र दोषान्तरमाह **न च** इति । **तथा च** इति । अपेक्षणीयत्वेनावधृतस्याभावेऽपि कार्योत्पत्त्यभ्युपगमे न किञ्चित्कस्यचित्कार्यं कारणमिति वा परिगृह्येताविशेषादिति ॥ २० ॥

अपरानपि चतुरो हेतूनुपन्यस्यति **अपि च प्रतियोगिनि** इति । इन्द्रियाणि पक्षः, अभाव-

**प्रकाशः ।**

भावभूताऽसाधारणकरणसहकृतमनोजन्या अस्मदाद्यभावप्रमात्वात् लिङ्गादिजन्याभावप्रमावदिति । अत एव—भावप्रमायां तथात्वेऽप्यभावप्रमायां योग्यानुपलब्धिमात्रापेक्षं मनः करणं स्याद् विपक्षे बाधकाभावा-दित्यपि निरस्तमित्याह **न हीति** । न च भावत्वमतन्त्रं गौरवात्, अन्यथा लिङ्गाद्यपि तत्र मानं न स्यादिन्द्रियसहकृतस्यैव मनसो बाह्यानुभावकत्वादिति वाच्यम् । वायौ रूपाभावबुद्धेरनुपलब्धिकरणत्वाभावव्यवस्थापनेन गौरवस्यापि न्याय्यत्वादिति भावः ॥२०॥

**प्रतियोगिनीति** । इन्द्रियाणीति धर्मिनिर्देशः, करणमिति साध्यं, प्रकरणात् । प्रतियोगि-

**प्रकाशिका ।**

**असाधारणेति । लिङ्गादीति** । अनुमित्याद्यंशे सिद्धसाधनवारणाय **प्रथमं** विशेषणम् । घटादिप्रमायां तद्वारणाय**भावेति** । अभावस्मरणे बाधवारणाय **प्रमापदम्** । असाधारणकारणपदेन कारणाभिधानादन्यथा प्रतियोगिज्ञानमादाय सिद्धसाधनापत्तेः । न चैवमपि दुःखसुखाभावप्रमायां बाधः अभावपदेन बाह्याभावस्योक्तत्वात् । साध्ये च भावपदमनुपलब्ध्या सिद्धसाधनवारणाय । शरीरादिना सिद्धसाधनवारणाय **साधारणेति** । प्रतियोगिज्ञानादिना सिद्धसाधनवारणाय **कारणपदं** करणपरं बोध्यम् । क्वचित् पाठ एव तथा । हेतावीश्वरज्ञानवारणाया**स्मदादी**ति । तच्च लौकिकं परमन्यथा मानसे घटाभावज्ञाने व्यभिचारात् । सुखाभावप्रमायां व्यभिचार इत्य**भावे**ति बाह्येत्यर्थः । अत एव नाभावपदवैयर्थ्याशङ्कापि । स्मरणे व्यभिचार इति **प्रमापदं** तच्चानुभवमात्रपरम् भ्रमेऽपि साध्यम् ॥ २० ॥

**मकरन्दः ।**

एतच्चानुमित्याद्यंशे सिद्धसाधनवारणाय । घटादिप्रमांऽशे तद्वारणाय**भावेति** । स्मृत्यंशे बाधवारणायाह **प्रमेति** । अनुपलब्ध्या अर्थान्तरादाह **भावेति** । शरीरादिनाऽर्थान्तरादाह **असाधारणेति** । प्रतियोगिज्ञादिनाऽर्थान्तरादाह **करणे**ति । अनुभवकरणेत्यर्थः । अन्यथा पक्षे हेतौ च प्रमात्वपर्य्यन्तस्य वैयर्थ्यापत्तेः । यदि च कारणेति पाठः, तदाऽपि तत्रैव तात्पर्य्यम् । ईश्वरप्रमायां व्यभिचारादाह **अस्मदादी**ति । सुखाद्यभावप्रमायां व्यभिचारादाह **अभावेति** । बाह्याभावेत्यर्थः । प्रमापदं स्मृतौ व्यभिचारवारणाय अनुभवपरं, भ्रमेऽपि साध्यसत्त्वात् ॥ २० ॥

यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावावगाहि यथा लिङ्गं शब्दो वा। घटाद्यवगाहि चेन्द्रियमिति। अन्यथा हि शब्दादिकमपि नाऽभावमावेदयेद्, भाव एव सामर्थ्यावधारणात्। न चैवमेव न्याय्यम्। देवदत्तो गेहे नास्तीति शब्दाद्, मया तत्र जिज्ञासमानेनापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्यानुमानादप्यवगतेः। ग्राह्यतु वाश्रयमिन्द्रियं, तथापि न तेनेदं व्यवधीयते व्यापारत्वात्, अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्जलिः स्यात्।

नन्वेवं सति धूमोपलम्भोऽप्यस्य व्यापारः स्यात्, तथा च गतमनुमानेनापीति

---

बोधनी।

ज्ञानकारणमिति साध्यमध्याहार्यमभावप्रतियोगिनि घटादौ समर्थत्वात् शब्दलिङ्गादिन्द्रियस्यावान्तरव्यापारत्वादधिकरणग्रहणेन व्यवधानाभावात्। इदं चाभावग्रहणेऽधिकरणग्रहणस्योपयोगमङ्गीकृत्योक्तम्, अभावविषयविपर्ययज्ञानहेतूनां दोषाणामिन्द्रियाश्रयत्वात् अघटं भूतलमिति विशिष्टबुद्धेरिन्द्रियहेतुत्वाच्चेति। तत्रार्थं व्याचष्टे **यद्धि** इति। भावग्राहिणः प्रमाणस्य तदभावेऽपि सामर्थ्यानङ्गीकारेऽनिष्टमाह **अन्यथा** इति। शब्दादेरप्यभावानापादकत्वमस्त्वित्यत्राह **न चैवमेव** इति। मैत्रो नास्तीत्याप्तवाक्यान्न दृष्ट इत्याप्तवाक्यावगतानुपलब्धिलिङ्गादपि तदभावावगतेरिति। द्वितीयं विवृणोति **ग्राह्यत्विति**। आश्रयग्रहणव्यापृतमपीन्द्रियमभावबुद्धेः कारणं तस्येन्द्रियावान्तरव्यापारत्वेनतदव्यवधायकत्वादिति। यद्यवान्तरव्यापारोऽपि व्यवदध्यात् ततः सविकल्पकज्ञानानां प्रत्यक्षत्वं न स्यात् निर्विकल्पकज्ञानव्यवहितत्वादिन्द्रियस्येत्याह **अन्यथा** इति।

यदि व्यवधानेनेन्द्रियमेवाभावज्ञाने कारणं स्यात् तर्ह्यवान्तरव्यापारीकृतधूमज्ञानमिन्द्रियमेवाग्निं ग्राहयेत्, तत्र चाभावप्रमाणवदनुमानमपि दत्तजलाञ्जलि स्यादित्याह **ननु** इति। तदवान्तरव्या-

प्रकाशः।

ग्राहकं मानं तदभावग्राहकमपि, यथा लिङ्गाद्यतीन्द्रियभावग्राहकमभावधीकरणमित्यर्थः। ननु प्रतियोगिग्राहकत्वमतन्त्रम्, अनन्यथासिद्धत्वस्योपाधित्वात्। इन्द्रियं त्वाश्रयग्रहे अन्यथासिद्धमित्यत आह **व्यापारे**ति। अभावभ्रमस्य दुष्टकरणजन्यत्वादनुपलब्धेश्च स्वरूपतो दुष्टत्वाभावात् पित्तादिना दुष्टमिन्द्रियं तत्करणमित्याह **अ**त्रेति। किञ्चाधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजन्या अभावबुद्धित्वात्, नानुपलब्धिजन्या भावबुद्धित्वात्, नोभयजन्या जातिसङ्करप्रसङ्गादित्युभयग्राहकमिन्द्रियं मन्तव्यमित्याह **विकल्पनादि**ति॥

**यद्धीति**। ननु न व्यक्तिगर्भोऽयं नियमः। भावग्राहकलिङ्गादिव्यक्तेरेवाभावाग्राहकत्वात्। नाऽपि तज्जातीयं तथा, उपमाने व्यभिचारात्, सुरभि चन्दनमितिवदुपनीताभावभानेन सिद्धसाधनञ्च। मैवम्। चक्षुष्ट्वादिकमभावग्राहकवृत्ति भावग्राहकवृत्तिजातित्वात् शब्दत्ववत्। उपमानत्वञ्च न जातिः, योगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्य-सामान्यलक्षणप्रत्यासत्त्यजन्य-जन्याभावप्रमित्यऽसाधारणकारणतावच्छेदकं चात्र साध्यं विवक्षितमिति नोपनीताऽभावभानेन सिद्धसाधनमित्याशयात्। **अन्यथे**ति। इन्द्रियस्य निर्विकल्पकेनान्यथासिद्धेरित्यर्थः॥

**नन्वेवमिति**। वह्न्यनुमितावपि धूमज्ञानं चक्षुषो व्यापार एवेति नानुमानसम्भव इत्यर्थः।

प्रकाशिका।

**चक्षुष्ट्वादिकमिति**। लिङ्गविधया चक्षुषोऽप्यभावकारणतया सिद्धसाधनं माभूदिति कारणतावच्छेदकत्वपर्यन्तं साध्यम्। न च गत्वे व्यभिचारः, गकारस्यापि क्वापि गत्कत्वादिति वाच्यम्। न पदसाहित्येन तस्यापि भावग्राहकतया साध्यसत्त्वात्। **योगजेति**। हेतावपि जातिपदं कारणतावच्छेदक-

मकरन्दः।

**चक्षुष्ट्वादिक**मित्यनुमानमन्यच्च सर्वं प्रत्यक्षप्रकाशे विपञ्चितम्॥ २१॥

चेन्न। यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्। न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वह्निज्ञानकारणत्वं न निर्वहति, संयोगवदिति।

अस्ति च भावाभावविपर्ययः। सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम्। न चानुपलब्धिः स्वभावतो दुष्टा, नाप्यधिकग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम्। अनुत्पत्तिदशायामनुत्पत्तेरुत्पत्तिदशायाञ्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः। असंसृष्टयोरधिकरणप्रतियोगिनोः संसृष्टतया प्रतिभानं दुष्टम्, संसृष्टयोश्चासंसृष्टतयेति चेत्। नन्वयमेव विपर्ययः। तथा च आत्माश्रयो दोषः। तस्माद् दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि। तथा च प्रयोगः—इन्द्रियमभावप्रमाकरणं, तद्विपर्ययकरणत्वात्, यद् यद्विपर्ययकरणं तत् तत्प्रमाकरणं यथा रूपप्रमाकरणं चक्षुरिति।

---

बोधनी।

पारलक्षणमपि दृष्टोपवलिगतमित्याह न इति। न हि यद्येन जन्यते तत्सर्वं तस्य व्यापारः, किन्तु येन विना यस्य यदुत्पादनं न संभवति स एव तस्य कारणस्य तस्मिन् कार्ये जनयितव्येऽवान्तरव्यापारः। न च वन्हिसंयोगमन्तरेणैव धूमोपलम्भमन्तरेण चक्षुर्न वन्हिज्ञानमुत्पादयति पुरोवर्त्तिनि वह्नौ तमन्तरेणैव तदुत्पादनदर्शनादिति।

तृतीयं विवृणोति अस्ति च इति। अस्ति तावद्विद्यमान एव वस्तुनि नास्तीति विपर्ययात्मकोऽभावप्रत्ययः यस्मिन् दुष्टे सति भवति तदेवादुष्टं समीचीनाभावज्ञानकारणं भवितुं युक्तमिति। ततः किमायातमिन्द्रियकरणत्वस्येत्यत्राह न च इति। न तावदनुपलब्धेरभावात्मिकाया दोषाश्रयत्वं संभवति। न चाधिकरणग्रहणस्य प्रतियोगिस्मरणस्य वा स्वगतो दोषः संभवति। कार्यप्रतिबन्धको हि दोषः, तयोस्तावदुत्पन्नयोरर्थप्रकाशात्मनः कार्यस्य केनापि प्रतिबन्धायोगात् अनुत्पन्नयोश्च कार्याभावस्य स्वभावनिबन्धनत्वेन दोषानधीनत्वात्तस्मादिन्द्रियदोषादेवाभावविपर्यय इति शिष्यत इति भावः। दुष्टं हेत्वन्तरमाशङ्कते असंसृष्टयोरिति। अभावे भावविपर्ययो दृष्टान्तार्थं इति। नन्वयम् इति। तथा प्रतिभानमेव विपर्ययो न त्वन्यस्तावत्साध्यः, तथा च ततो विपर्ययोत्पत्तौ विपर्ययादेव विपर्यय इति स्यादिति परिशेषसिद्धमुपसंहरति तस्मात् इति। उक्तमर्थं प्रयोगमारोपयति तथा च इति।

प्रकाशः।

क्रियया व्यापारेणेत्यर्थः। संयोगवदिति, व्यतिरेकदृष्टान्तः। यथा संयोगं व्यापारं विना चक्षुषो वह्निसाक्षात्कारकरणत्वं न निर्वहति, न तथा धूमपरामर्शं विनेत्यर्थः। न च वह्निज्ञानमात्रे तस्य व्यापारत्वाभावेऽपि वह्न्यनुमितौ व्यापारत्वं स्यादिति वाच्यम्। शाब्दलिङ्गपरामर्शादपि वह्न्यनुमानादिति भावः। न चेति। न चानुपलब्धेर्लिङ्गाभासादिवद् दोषस्वभावत्वाभावेऽपि पित्तादिदोषसाहित्यमेवेन्द्रियस्येव दुष्टत्वं स्यादिति वाच्यम्। लिङ्गाभासाद्यजन्यभ्रमत्वेन इन्द्रियकरणकत्वानुमानादित्यर्थात्। अनुत्पत्तीति। अधिकरणादिज्ञानाभावकाले स्वाभावादेव दुष्टत्वाभावात्, तदुत्पत्तिकाले तु स्वार्थविषयत्वमबाधितमेवेत्यर्थः। आत्माश्रय इति। दोषाद् भ्रमो भ्रमस्यैव दोषत्वमिति तस्मादेव स स्यादित्यात्माश्रय इत्यर्थः॥ तद्विपर्ययेति। न च यद् यद्विपर्ययजनकं तत्तत्प्रमाजनकमिति पित्तादिदोषेऽनैकान्तिकम्। इन्द्रियत्वेन दोषान्यत्वेन वा हेतुविशेषणात्। किं

प्रकाशिका।

जातिपरमित्यवधेयम्। इन्द्रियत्वेनेति। अत्र प्रमास्वरूपयोग्यत्वं साध्यमतो न फलानुपहितव्यक्तौ

विकल्पनात् खल्वपि। अघटं भूतलमिति हि विशिष्टधीरवश्यमिन्द्रियकरणिका स्वीकर्त्तव्या प्रमाणान्तरं वा सप्तममास्थेयम्। यथा हि विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणा अनुपलब्धिरपि न करणं स्यात्। स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयोः समाहारः कारणमिति चेन्न। विषयभेदे फलवैजात्ये च तदनुपपत्तेः। न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारः स्यात्। नापि घटपटादिकारिणां चक्रवेमादीनां समाहारः क्वचिदुपयुज्यते। तत्र कर्बुरकार्याभावान्न तथा, प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न। विरुद्धजातिसमावेशाभावात्। भावे वा कर्म्बित एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या दर्शनबलात्, न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः। अन्यत्रापि तथा प्रसङ्गात्। ननूभयोरप्युभयत्र सामर्थ्ये कोऽर्थो मिथःसन्निधानेनेति चेन्न। तत्सहितस्यैव तस्य तत्र सामर्थ्यादिति। एतेन सुरभि

बोधनी।

चतुर्थं हेतुं व्याचष्टे विकल्पनात् इति। नन्विन्द्रियस्य विशेष्यभूतभूतलोपक्षीणेऽप्यभावप्रमाणेन विशिष्टधीः सेत्स्यति किं सप्तमेनेत्यत्राह यथा हि इति। अत्र इति। अघटं भूतलमिति विशिष्टबुद्धावित्यर्थः। ननु प्रत्येकसामर्थ्ये तयोः समाहारः कारणमस्तु न तु सप्तमस्यावकाश इत्याह स्वस्वविषय इति। न इति। भावाभावरूपविषयभेदे परोक्षापरोक्षलक्षणफलवैजात्ये च सति येनेन्द्रियानुपलब्ध्योः समाहारः संभवतीति विषयभेदे फलवैजात्ये च समाहाराभावमेवोदाहरणेन दर्शयति न हि इति। ननु तत्रोदाहरणे कर्बुरस्य घटपटात्मकस्य कार्यस्याभावात्समाहाराभावः न तु विषयभेदात्फलवैजात्याद्वा, इह त्वभावविशिष्टभावविषयस्यानुपलब्धीन्द्रिययोरनुगुणपरोक्षापरोक्षात्मनः प्रत्ययस्य दर्शनाद्युक्तः समाहार इत्याह तत्र इति। न इति। न हि मिथोविरुद्धे परोक्षापरोक्षत्वे एकत्र ज्ञाने समाविशत इति दर्शनबलात्समावेशाङ्गीकारे तत्र विशिष्टकार्येऽनुपलब्धेरिन्द्रियत्वद्वयोरपि शक्तिरङ्गीकार्या, तदा च प्रत्यभिज्ञानवत् प्रत्यक्षफलमेव ज्ञानं भवेदिति भावः। ननु स्वस्वविषयमात्रपर्यवसितयोरेव समाहारः कारणमस्तु किं शक्त्यन्तरकल्पनयेत्यत्राह न हि इति। प्रत्यभिज्ञादावपि नियतविषययोरेव संस्कारेन्द्रिययोः समाहारादेव सिद्धेरिन्द्रियशक्तिकल्पनं न स्यादिति। नन्वनुपलब्धीन्द्रिययोः प्रत्येकं भावाभावविषयशक्त्यभ्युपगमेऽन्यतरेणैव विशिष्टधीसिद्धेः किं परस्परसाहित्येनेत्याह ननु इति। न इति। अनुपलब्धिसहितस्यैवेन्द्रियस्य तत्र शक्तिर्न केवलस्य, न चान्यसाहित्येनैन्द्रियकत्वविरोधः प्रत्यभिज्ञानादिवदिति। सुरभि चन्दनमित्यादिप्रत्ययेष्विवात्रापि समाहारः कारणं स्यादित्याशङ्क्याह एतेन इति। अन्यसहितस्येन्द्रियस्य विशिष्टधीहेतुत्वप्रतिपा

प्रकाशः।

प्रमाणयोः समाहारः, समाहृतयोर्वा प्रामाण्यम्? तत्र नाद्य इत्याह विषयभेदे इति। भिन्नभिन्नप्रमाजनकत्वेन तयोः पर्यवसितयोः प्रमान्तरजनकत्वानुपपत्तेरित्यर्थः। विषयभेदफलभेदयोः क्रमेण समाहाराभावमुदाहरति न हीति। तत्रेति। इन्द्रियजन्यत्वेन साक्षात्कारित्वे सत्यनुपलब्धिकरणकत्वेन परोक्षत्वे कर्बुरत्वमित्यर्थः। अन्त्ये त्वभावज्ञानेऽपीन्द्रियस्य सामर्थ्यं सिद्धमित्याह भावे वेति। अन्यत्रापीति। घटपटसामग्रीतोऽपि कर्म्बितकार्यं स्यादित्यर्थः॥

एतेनेति। घ्राणजसौरभज्ञानसहकृतेन चक्षुषा सुरभि चन्दनमिति ज्ञानं सौरभविशेषणकं

प्रकाशिका।

व्यभिचारः। भिन्नभिन्नेति। अन्यथा जातिसङ्करापत्तेरिति भावः। घ्राणजेति। तथा च न

चन्दनमित्यादयो व्याख्याताः । तथाचाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपह्नवत्वादलमसद्ग्रहेणेति ॥ २१ ॥

स्यादेतत्, नागृहीते विशेषणे विशिष्टबुद्धिरुदेति, तत्कार्यत्वात् । न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यं, केवलसौरभेऽपि चक्षुषो वृत्तिप्रसङ्गात् । अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः ।

अपि च कथमनालोचितोऽर्थ इन्द्रियेण विकल्प्येत ? । न च मानान्तरस्याप्येषा रीतिः । अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात् । अप्राप्तेश्च । न ह्यभावेनेन्द्रियस्य संयोगादिः सम्भवति । न च विशेषणत्वं, सम्बन्धान्तरपूर्वक-

---

बोधिनी ।

दनेन तेऽपि प्रत्यया गन्धज्ञानसहकृतया त्वचा वा चक्षुषा वा जायन्ते न त्विन्द्रियसमाहारेणेति व्याख्यात इति । एवमुक्तप्रकारेण विशिष्टज्ञान इवेन्द्रियस्याभावेऽपि सामर्थ्यमवर्जनीयमित्युपसंहरति **तथा च** इति ॥ २१ ॥

अथानुपपत्तिचतुष्टयेनाभावप्रत्यक्षत्वं पूर्वपक्षी प्रतिक्षिपति **स्यादेतत्** इति । अघटं भूतलमिति विशिष्टबुद्धेः पूर्वमेव विशेषणस्याभावस्य ग्रहणं वक्तव्यं विशेषणग्रहणकार्यत्वात् विशिष्टबुद्धेर्न च विशिष्टे सामर्थ्यमस्तीति विशेषणेऽपीन्द्रियस्य सामर्थ्यमतिप्रसङ्गात्, तस्मादभावात्मनो विशेषणस्य ग्रहणाय षष्ठं प्रमाणमास्थेयम् । यदि वा भाव ऐन्द्रियकः सविकल्पको ग्राह्यः, ततो निर्विकल्पकेनासौ पूर्वं ग्रहीतव्यः निर्विकल्पपूर्वत्वात् विकल्पस्य । न चाभावे निर्विकल्पकसंभवः प्रतियोग्यवच्छेदेनैव तस्य स्फुरणात् । न च षष्ठप्रमाणवादिनोऽप्ययं प्रसङ्गः ऐन्द्रियकविकल्पस्यैव तत्पूर्वकत्वनियमात् । न चाभावस्येन्द्रियेण प्राप्तिः संभवति संयोगादीनां भावधर्मत्वात्, विशेषणविशेष्यभावलक्षणस्य च संबन्धस्य संयोगसमवायादिसम्बन्धान्तरपूर्वकत्वेनैव दण्डिनीलोत्पलादिषु दृष्टत्वात् । किंच अभावप्रत्यक्षत्ववादिनापि प्रतियोगिनोऽनुपलब्धिरवश्यमिन्द्रियसहकारित्वेनाप्यङ्गीकर्त्तव्या, तथा चोभयसिद्धा सैवाभावज्ञानहेतुरस्त्विति ।

प्रकाशः ।

चन्दनविशेष्यकं जन्यते, चन्दनसौरभमिति ज्ञानं चक्षुरुपनीतचन्दनविशेषणकं सौरभविशेष्यकं घ्राणेन जन्यते, **यदिन्द्रिय**जन्यं यज्ज्ञानं तत्तदिन्द्रिययोग्यविशेष्यकमिति व्याप्तेरित्यर्थः ॥ २१ ॥

ननु घटाभाववद्भूतलमित्यपि धीरनुपलब्ध्युपनीताभावविशिष्टबुद्धिरिन्द्रियेण जन्यते, तथाच विशिष्टज्ञानस्यैन्द्रियकत्वेऽपि विशेषणज्ञानायानुपलब्धिर्मानान्तरं सौरभज्ञानाय घ्राणमिवेत्याह—

**नागृहीते**ति । प्रत्यक्षविशिष्टज्ञानस्य निर्विकल्पकजन्यत्वेन व्याप्तेर्नाभावे सविकल्पकैकवेद्ये तदस्तीति नाभावज्ञानं प्रत्यक्षमित्याह **अपि चे**ति । अनुपलब्धिजन्याभावज्ञाने तु न तज्जन्यत्वमसाक्षात्कारित्वाच्छब्दादाविवेत्याह **न चे**ति । **अप्राप्तेश्चे**ति । इन्द्रियाणां प्राप्तार्थग्राहकत्वादित्यर्थः । न च तत एव संयोगादिबाधेनैव विशेषणताप्राप्तिः कल्प्येत्याह **न चेति** । विशेषणतायाः **समवाया**दिसम्बन्धान्तरव्याप्तत्वात्तद्बाधे विशेषणत्वस्यापि बाधादित्यर्थः । सम्बन्धस्य सम्बन्धिभिन्नत्वनियमेय ग्राह्यस्वरूपस्यासम्बन्धत्वनिश्चयात् समवायानभ्युपगमेनान्यत्र तदकल्पनाच्च । न चाभावस्येन्द्रियग्राह्यत्वसिद्धाविहैव तत्कल्पनम् । विशेषणताकल्पने सत्यभावः प्रत्यक्षः, तत्सिद्धौ च तत्कल्पनमित्यन्योन्याश्रयादिति भावः । एवमभावबुद्धौ इन्द्रियाणां करणत्वं निरस्या-

प्रकाशिका ।

तत्रापि प्रमाणसमाहार इति भावः । **यदिन्द्रियेति** । बहिरिन्द्रियजन्ये चायं नियम इत्यवधेयम् ॥

ननु समवायस्थल एव विशेषणता क्लृप्तेत्यत आह **समवायेति** । समवायस्य तत्प्रत्य-

त्वात् तस्य। अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः, न हि तदुपलब्धौ तस्याभावोपलम्भ इति चेत्। उच्यते—

**अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्॥**
**प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः॥ २२॥**

**स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विस्फुरेद् यस्यावच्छेदकज्ञानं न व्यञ्ज-**

बोधनी।

समाधत्ते **उच्यते** इति। अवच्छिद्यतेऽनेनेति अवच्छेदः प्रतियोगी, तद्ग्रहणस्याभावनिरूपणेऽवश्यंभावः। प्रतियोगिनिरूपणाधीननिरूपणोऽभाव इति यावत्। तस्माद्विशेषणत्वेऽपि न केवलस्याभावस्य पूर्वग्रहणं, नापि विकल्पवेद्यत्वेऽपि पूर्वमालोचनमास्थेयम्। एतदुक्तं भवति—न हि पूर्वग्रहणे विशेषणत्वं प्रयोजकं, नाप्यालोचनीयत्वेन विकल्पवेद्यत्वं किन्तु प्रतियोगिनिरपेक्षनिरूपणीयत्वं ज्ञानसमवायादौ तथावसायात्। अथाभावज्ञानस्यावच्छेदग्रहो ध्रुवो नाङ्गीक्रियेत तर्हि केवलस्याभावस्य पूर्वग्रहणमालोचनं च को नाम नाङ्गीकुर्यात्। विशेषणविशेष्यरूपस्य संबन्धस्य संबन्धान्तरपूर्वकत्वनियमाभ्युपगमे च संबन्धान्तरस्यापि सम्बन्धपूर्वकत्वप्रसङ्गेऽनवस्थाप्रसङ्गः। न चेदयमस्मदुक्तप्रकारोऽङ्गीक्रियेत ततः प्रमाणान्तरपक्षोऽपि दुर्घटः स्यादिति। तत्राद्यचोद्योत्तरतयाद्यं पदं व्याचष्टे **स हि** इति। एषां हि दण्डकुण्डलादीनामर्थानाम् अर्थान्तरज्ञाननिरपेक्षैः स्वविषयैरेव ज्ञानैरितरेतरव्यवच्छेदः सिद्ध्यति, त एव विशेषणीभवन्तः केवला अपि स्फुरेयुः। येषां तु ज्ञानसमवायाभावादीनां स्वस्वगोचरं ज्ञानव्यञ्जकमात्रं न तु व्यवच्छेदकं, न हि ते प्रतियोगिज्ञाननिरपेक्षैरेव स्वविषयज्ञानैः स्वेतरव्यवच्छिन्नाः प्रतीयन्ते तेषां केवलस्फुरणमन्तरेणैव

प्रकाशः।

नुपलब्धेः करणत्वमनन्यगतिकतयोपपादयति **अवश्येति**। शुक्तौ रजतानुलब्धेरभावादिन्द्रियसंबद्धस्यापि रजताभावस्याग्रहेणावश्यकत्वादित्यर्थः॥

**विशिष्टज्ञानमात्रस्य न** विशेषणज्ञानजन्यत्वनियमः, **अवच्छेदग्रहा**नियतज्ञानविषयत्वस्योपाधित्वादित्याह **अवच्छेदे**ति। ध्रौव्यं नियमः। **अभावत्वेन** अभावज्ञानस्य प्रतियोग्यादिज्ञानजन्यतया विशिष्टज्ञानसामग्र्यस्त्येवेति न केवलमभावो भासते, अतो न निर्विकल्पकविषय इत्यर्थः। अथाभावज्ञानं प्रतियोग्यादिज्ञानानपेक्षं, तर्ह्यभावोऽपि निर्विकल्पकविषय एवेति सिद्धसाधनमित्याह **अध्रौव्ये** इति। अभावश्च सम्बन्धान्तरं विनाऽपि स्वरूपेणैव विशेषणं, सम्बन्धान्तरसत्त्वे तत्रापि तत्कल्पनादनवस्थापत्तेः। यदि च नैवं, तदा त्वन्मतेऽपि वक्ष्यमाणो दोष इत्याह **प्राप्त्यन्तरे** इति॥

**स हीति**। अवच्छेदकस्य प्रतियोग्यादेर्विशेषणस्य जन्यज्ञानं विना यत्र विशिष्टज्ञानसामग्री प्रथमतो न भवति, स एवार्थोऽग्रे विशिष्टज्ञानविषयः पूर्वं निर्विकल्पकविषय इति विषयमुखी व्याप्ति-

प्रकाशिका।

क्षत्वस्य चानभ्युपगमेनेत्यर्थः। **विशिष्टज्ञानमात्रस्येति।** विशिष्टप्रत्यक्षमात्रस्य न विशेषणनिर्विकल्पजन्यत्वनियम इत्यर्थः। **अवच्छेदग्रहेति**। अवच्छेदग्रहनियतं ज्ञानं यस्य तन्मात्रविषयकत्वस्येत्यर्थः। **अभावत्वेनेति।** सामान्याप्रकारकाभावज्ञानस्येत्यर्थः। तेन प्रकृतसंगतत्वम्। **अवच्छेदकस्येति।** विशेषणज्ञानाभावेन विशिष्टज्ञानसामग्रीविरहेऽपि यत्र ज्ञानसामान्यसामग्री तत्रैव निर्विकल्पकमित्यर्थः। पौनरुक्त्यं परिहरति **विषयमुखीति**। **विशेषेणेति।** यथोक्त-

मकरन्दः।

**विशिष्टज्ञानमात्रस्येति**। विशिष्टप्रत्यक्षमात्रस्य न विशेषणनिर्विकल्पकजन्यत्वनियम इत्यर्थः।

क्रम् । स च विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते । यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः । स्वभावप्राप्तौ सत्यामत्यधिका प्राप्तिः प्रतिपत्तिवलेन रूपादावभ्युपगता, इह त्वनवस्थादुस्थतया न तदभ्युपगमो, न तु स्वभावप्रत्यासत्तिरेतावतैव विफलायते। न चेदेवं, प्रमाणान्तरेऽपि सर्वमेतद् दुर्घटं स्यात्। तथाहि—

बोधनी ।

विशिष्टज्ञानगोचरत्वमिति द्वितीयस्यापि चोद्यस्य तमेवोत्तरतया व्याचष्टे **स च विकल्पयितव्य** इति । तैरेव विकल्पवेद्यैः भवद्भिः पूर्वमालोचनविषयैर्भवितव्यं ये प्रतियोगिनिरपेक्षैरेवेन्द्रियैः ज्ञाप्यन्ते यथा घटादयः, ये तु प्रतियोगिज्ञानपुरःसरमेव जायन्ते यथा ज्ञानादयः तेषां निर्विकल्पकवेद्यत्वासंभवात् न तत्पूर्वकत्वमिति ।

अथ पाठक्रममनादृत्यार्थक्रमेण द्वितीयं पादमवसरे व्याख्यास्यंस्तृतीयचोद्योत्तरतया तृतीयं व्याचष्टे **स्वभावेति** ॥ स्वाभाविके हि विशेषणविशेष्ये सम्बन्धे सत्यपि रूपादिष्वधिकः समवायादिसम्बन्धो दृष्टत्वादेव स्वीक्रियते, तद्धेतुकत्वेनाभावे तु स्वभावतः प्राप्तिरस्ति न च सम्बन्धान्तरं दृश्यत इति भावः । **तथापि** तदभ्युपगमोऽनवस्थादुस्थ इत्याह **इह तु** इति ॥ एतावता संबन्धान्तराभावमात्रेणेति तुरीयं पादं व्याचष्टे **न चेदेवम्** इति । दौर्घट्यमेवाह **तथाहि** इति । प्रत्यक्षं साक्षादनुमानादीनि तु परम्परया निर्विकल्पकपूर्वकाणि

प्रकाशः ।

रित्यर्थः । **स चेति** । जन्यविशेषणज्ञानासहकृतेन्द्रियजन्यज्ञानगोचरत्वं निर्विकल्पकप्रयोजकमिति प्रमाणमुखी व्याप्तिरित्यर्थः । अभावस्तु प्रतियोग्यादिविशेषणज्ञाननियतज्ञानविषयत्वेन विशिष्टज्ञानैकविषयत्वान्न तथेत्याह **यस्त्विति** । प्राप्त्यन्तरे इति व्याचष्टे **स्वभावेति** । यद्यपि घटे रूपसमवाय इति नानुभवः, तथापि रूपादेः प्रत्यक्षत्वेनेन्द्रियसन्निकर्षाश्रयत्वात् संयोगबाधेनेन्द्रियसम्बन्धघटकतया संयुक्तसमवायादिकल्पनादित्यर्थः । ननु ज्ञानघटयोरिव द्रव्येण रूपादिभिः स्वरूपसम्बन्धे नार्थान्तरम्, इन्द्रियसंयुक्तविशेषणतयैव रूपादिभानोपपत्तेः । मैवम् । सम्बन्धानुमितौ हि न स्वरूपसम्बन्धो विषयः, तत्स्वरूपाणामनन्तत्वेन गौरवात्, किन्तु पक्षधर्मताबलादेक एव सम्बन्धस्तद्विषयो लाघवादिति भावः । **इह त्विति** । यद्यपि सम्बन्धद्वयसिद्धौ नानवस्था, तथात्वे वा समवायोऽपि न स्यादनवस्थाऽऽपादकत्वात्, तथाप्यभावो यद्यतिरिक्तसम्बन्धवान् स्यात् सत्तावान् स्यादित्यव्यवस्थैवानवस्थेत्यर्थः । इन्द्रियञ्च नाप्राप्तग्राहकमिति संयोगादिबाधेनेहैव तत्प्राप्तिर्विशेषणता कल्प्येति भावः ॥ **प्रमाणान्तरेऽपीति** । अनुपलब्ध्याख्यमानान्तरस्वीकारेऽपीत्यर्थः । **निर्वि-**

प्रकाशिका ।

ज्ञानगोचरमात्रगोचरत्वनिर्विकल्पकजन्यत्वं प्रयोजकमित्यर्थः । **घटे रूपसमवाय** इति । सर्वसिद्ध इति शेषः । **सम्बन्धघटकतयेति** । सम्बन्धरूपतयेत्यर्थः । **तथात्व इति** । अनवस्थामूलत्वेन द्वितीयसमवायत्याग इत्यर्थः । सत्तावानिति भावः स्यादित्यर्थः । तेन न सामान्यविशेषाभ्यां व्यभिचारः, तदुभयभिन्नत्वेनापादकविशेषणाद्वा संयोगादिबाधेनेति । अद्रव्यत्वेन संयोगबाधात् ध्वंसस्य समवायिकारणनाशान्नाशप्रसङ्गेन च समवायबाधादित्यर्थः । निर्विकल्पकविश्रान्तत्वं यदि साक्षात्कारप-

मकरन्दः ।

**सम्बन्धघटकतयेति** । सम्बन्धरूपतयेत्यर्थः । **सत्तावानिति** । न च सामान्यविशेषाभ्यां व्यभिचारः, तद्भिन्नत्वे सतीत्यापादकविशेषणात् । वस्तुतो भावः स्यादित्यर्थः, तेन नोक्तदोषः । ननु साक्षात्कारस्य [illegible]साधारणमालोचनपूर्वकत्वमनुमानादिवदभावज्ञानेऽप्यस्त्येव, तद्धेतुप्रतियोग्यादिज्ञानस्य

सर्वमेव मानं साक्षात्परम्परया वा निर्विकल्पकविश्रान्तम् । न ह्यनुमानादिकमप्य-नालोचनपूर्वकम् । ततोऽनालोचितोऽभावः कथमनुपलब्ध्याऽपि विकल्प्येत । न च तया तदालोचनमेव जन्यते, प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात्, शक्यत्वे वा किमपराद्धमिन्द्रियेण । तथा सम्बन्धान्तरगर्भत्वनियमेन विशेषण-त्वस्य, मानान्तरेऽपि कः प्रतीकारः ? तदभावस्य तदानीमपि समानत्वात् । परस्य तादात्म्यमस्तीति चेत् । ननु यद्यसावस्ति, अस्त्येव, न चेन्नच । न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्त्तन्ते इति । अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येद्, न तु मानान्तरत्वम् । अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्याद्, नेन्द्रियम् । अभावोपलम्भे भावानुपलम्भवद् भावोपलम्भे अभावानुपलम्भ-स्यापि वज्रलेपायमानत्वादिति ॥ २२ ॥

**बोधनी ।**

तेषां प्रत्यक्षपूर्वकत्वात् तस्य च निर्विकल्पकपूर्वकत्वादिति ॥ यतः सर्वस्यापि प्रमाणस्यायं स्वभावः तस्मादनुपलब्ध्या प्रमाणान्तरभूतयाप्यालोचितपूर्व एवाभावो विकल्पनीय इत्याह **तत** इति । अस्तु तर्ह्यनुपलब्ध्यैवालोचनमित्यत्राह **न च** इति । आलोचनविषयत्वसंभवे वाभावस्यास्माकमपीन्द्रियेण तदालोचनं भविष्यतीत्याह **शक्यत्वे वा** इति । एतेन द्वितीयः पादो व्याख्यातः । षष्ठेनापि प्रमाणेनाभावः कस्यचिद्विशेषणत्वेन वा ग्राह्यः, ततश्च सम्बन्धान्तरपूर्वकत्वनियमे विशेषणविशेष्यभा-वस्यानवस्थाप्रसङ्गस्तत्रापि तुल्य इत्याह **तदभावस्य** इति । ननु संयोगाद्यभावेऽपि तादात्म्यात्मक-सम्बन्धान्तरमभ्युपगम्यते भाट्टैस्ततो न तुल्यत्वमित्याह **परस्य** इति । यदि हि तादात्म्यं प्रमाण-तोऽस्ति ततोऽस्तीति स्यात् न चैवं प्रमाणाभावादित्याशयेनाह **ननु** इति । नन्वस्माभिस्तावदेतद-भ्युपगम्यत इत्यत्राह **न हि** इति । न ह्यभ्युपगमतदभावमात्राभ्यां वस्तुनः सदसत्त्वसिद्धिरिति । यत्त्ववश्याभ्युपगन्तव्यत्वादनुपलब्धेः सैव प्रमाणमस्त्विति तत्राह **अवश्येति** । यदावश्याभ्युप-गम्यत्वमात्रेणानुपलब्धेः प्रमाणान्तरत्वमपि सिद्ध्येत् तर्हि भावोपलम्भेऽपि तदभावानुपलब्धिरेव प्रमाणं भवेत् भावोपलम्भसमयेऽभावानुपलब्धेरवर्जनीयत्वादित्याह **अन्यथा** इति ॥ २२ ॥

**प्रकाशः ।**

**कल्पकेति** । प्रमाणविषयत्वं निकल्पकविषयत्वव्याप्यमित्यर्थः । तदभावस्य सम्बन्धान्तराभावस्य । तदानीमपि मानान्तरस्वीकारेऽपि । **परस्येति** । भट्टानामधिकरणे विशेषणत्वं नाभावस्य, किन्तु तादात्म्यमित्यर्थः । भावाभावयोर्विरोधान्न तादात्म्यं, तथात्वे वा संयोगादिनैवाभावग्रहः स्यादित्या-शयेनाह **नन्विति** । यद्यभावोऽस्ति तदा विशेषणत्वमस्त्येवेत्यर्थः । अवश्याभ्युपगन्तव्यत्वादि-त्यत्राह **अवश्येति** । **अन्यथेति** । अभावज्ञाने यथा भावोपलम्भः प्रतिबन्धकस्तथा भावज्ञानेऽप्य-

**प्रकाशिका ।**

रम्परासाधारणनिर्विकल्पकप्रयोज्यत्वमुच्यते तदाभावज्ञाने(१)ऽस्त्येवेति प्रत्यक्षविषय इत्यपीति भावः । लिङ्गासङ्गतेराह **यद्यभावोस्तीति**। अभावत्वे च संयोगादिनैव ग्रहापत्तेरुक्तत्वादिति भावः । **अभावोपलम्भः** प्रतिबन्धक इत्यनन्तरमिति तदभाव एव प्रमाणमिति शेषः । इयञ्च युक्तिरसमी-

**मकरन्दः ।**

तत्पूर्वकत्वनियमादिति परस्य नानिष्टमित्यत आह **प्रमाणविषयत्व**मिति। तथा चाप्रयोजकत्वादिना यथा नेयं व्याप्तिस्तथा प्रत्यक्षविशिष्टज्ञानस्य निर्विकल्पकजन्यत्वव्याप्तिरपीति भावः । लिङ्गासङ्गतेराह **यद्यभावोऽस्तीति** । भावरूपत्वे च तस्य संयोगादिनैव ग्रहापत्तेरित्युक्तत्वादिति भावः । **तथेति** ।

(१) प्रतियोग्यादिनिर्विकल्पाप्रयोज्यत्वादिति प्रकृतेऽनिष्टमत आह प्रमाणविषयत्वमिति । तथा-चेयं व्याप्तिरप्रयोजिका तथा निर्विकल्पकविषय एव ।

**प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः**
**प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ॥**
**तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं**
**देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥**

इति तृतीयः स्तवकः ॥ ३ ॥

---

बोधनी ।

अथ परमेश्वरप्रतिपत्तिव्याजेन परिच्छेदार्थमुपसंहरति **प्रत्यक्षेति** । बाधकत्वेन शङ्कितानामपि सर्वेषां प्रमाणानां कार्यत्वेनेश्वरायत्तात्मलाभत्वादनुमानस्याश्रयासिद्धेरपि तदधीनत्वादागमस्य च प्रामाण्येऽपि तत्परतन्त्रत्वादुक्तं **यन्मुखवीक्षणेति** । प्रत्यक्षस्योत्पत्तौ तदपेक्षायामपि प्रामाण्ये तदनपेक्षत्वादुक्तं **प्राय** इति । तदयमर्थः—एवमीश्वरस्याधरैरर्वाक्प्रवर्त्तमानैस्तमपि विषयीकर्त्तुमशक्नुवद्भिरिति यावत् । यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते तैः प्रत्यक्षादिभिस्तस्य विरोधो बाधश्च दूरे, तमेवंभूतं सर्वेषां परमपुरुषार्थप्राप्तिहेतुत्वादनुविधेयमेकं समेनाधिकेन वा द्वितीयेन रहितं असमायां स्वच्छन्दतः प्रवणलक्षणायां लीलायामवद्धरतिं परमेश्वरमुद्भवदतिश्रद्धावन्तो वयं प्रपद्यामह इति ॥ २३ ॥

इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ कुसुमाञ्जलिटीकायां तृतीयः परिच्छेदः ॥

---

प्रकाशः ।

भावोपलम्भः प्रतिबन्धकः स्यादित्यर्थः । एतच्च भावोपलब्धावभावानुपलब्धिः पृष्ठलग्नैवेति व्याचक्षाणैरस्माभिः परिशिष्टप्रकाशे विपञ्चितमिति तत्रैवानुसन्धेयम् ॥ २२ ॥

स्तवकार्थमुपसंहरन्नेवेश्वरनतिं निबध्नाति **प्रत्यक्षादिभिरिति** । यस्येश्वरस्य मुखवीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः प्रत्यक्षादिभिर्विरोधोदयोऽधरः । अत एव, दूरे । सर्वमनुविधेयं वश्यं यस्य । असमा चासौ स्वच्छन्दा चेतनान्तराप्रयोज्या या लीला, सैवोत्सवो यस्य, स तथा । दुःखाभावैकनिदानत्वात् । अत एवोद्भवदतिश्रद्धा वयं, तं देवानामपि देवं स्तुत्यं प्रपद्यामहे इत्यर्थः ॥२३॥

इति श्रीमहामहोपाध्यायश्रीवर्धमानविरचिते न्यायकुसुमाञ्जलिप्रकाशे तृतीयः स्तवकः ॥३॥

---

प्रकाशिका ।

चीनेत्यत्र प्रतिपादितं मयेत्याह **एतच्चेति** । तदधिकरणीयाभावोपलम्भाभावस्य तदधिकरणीयभावग्राहकत्वं वाच्यमन्यथातिप्रसङ्गात् एवं तत्सम्बन्धावच्छिन्नत्वाभावोपलम्भाभावस्य तत्सम्बन्धावच्छिन्नभावग्राहकत्वमन्यथातिप्रसङ्गादेव । तथा च निरधिकरणाभावग्रहे निर्विकल्परूपभावग्रहेऽचेन्द्रियमेव करणं वाच्यमित्यावश्यकत्वादन्यत्रापि तथा, अभावधीस्तु निरधिकरणा निर्विकल्पकरूपा च न सम्भवतीति वैषम्यमिति तस्य तात्पर्यम् ॥ २२-२३ ॥

इति महामहोपाध्याय परनामकमेघ ठक्कुरश्रीभगीरथविरचितायां कुसुमांजलिप्रकाशिकायां तृतीयस्तवकः ॥

---

मकरन्द ।

तथा च भावज्ञानेऽप्यभावानुपलब्धिरेव प्रमाणं स्यादिति भावः ॥ २२-२३ ॥

इति महामहोपाध्यायश्रीरुचिदत्तविरचिते कुसुमाञ्जलिमकरन्दे तृतीयः स्तवकः ॥

---

श्रीगणेशाय नमः ॥

# न्यायकुसुमाञ्जलौ

## चतुर्थः स्तबकः ।

---

ननु सदपीश्वरज्ञानं न प्रमाणं, तल्लक्षणायोगात्, अनधिगतार्थगन्तुस्तथाभावात्, अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। न च नित्यस्य सर्वविषयस्य चानधिगतार्थता, व्याघातात्। अत्रोच्यते—

**अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्॥**
**यथार्थानुभवो मानमनपेक्षतयेष्यते॥ १॥**

---

प्रकाशः।

सत्त्वेपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमुत्थापयति **नन्विति**। गन्तुर्बोधकस्य। अनधिगतार्थगन्तृत्वञ्च फलप्राक्कालिकसमानाधिकरणज्ञानाविषयविषयकत्वम्। वेदो न प्रमाणमप्रमाऽनुभवमूलकत्वादिति भावः। तदेतल्लक्षणं यथार्थत्वेन विशेषितं, न वा? आद्ये प्रमाभूतधारावहनबुद्धावव्यापकम्, अन्त्ये च भ्रमेऽतिव्याप्तिरित्याह **अव्याप्तेरिति**। दृग् दर्शनं, भावपरतया। अनधिगतार्थविषयकत्वं न लक्षणमित्यर्थः। स्वमते प्रमाणलक्षणमाह **यथार्थेति**। अत्रोक्तदोषाभावादित्यर्थः। ननु यथार्थानुभववद् यथार्थस्मृतिरपि प्रमा किं न स्यात्? यथार्थत्वस्यैव तन्त्रत्वादनुभवत्वस्य व्यर्थत्वादित्यत आह **अनपेक्षतयेति**। स्मृतेर्या-

प्रकाशिका:।

कर्तृभ्रमनिरासाय भावपरतामाह **गन्तुरिति**। ननु पराधिगतेऽपि परस्य ज्ञानमेव प्रमा स्यादत आह **फलेति**। उत्तरकालीनं तु ज्ञानमादायाव्याप्तिरिति **प्राक्कालिकान्तम्**। अन्यदीयज्ञानमादायाव्याप्तिरिति **समानाधिकरणेति**। ईश्वरज्ञानाप्रमात्वे का क्षतिरत आह **वेद इति**। यद्यपि भट्टस्येश्वरानङ्गीकारेण हेतोरसिद्धिस्तथापीश्वराङ्गीकारे वेदोऽप्रमानुभवमूलकः स्यात्तथाचाप्रमाणं स्यादिति तर्करीत्यैतद् द्रष्टव्यम्। **भ्रमेऽतिव्याप्तिरिति**। अतिव्याप्तिरपीत्यर्थः। भावपरत्वेन धर्म्मिलाभेऽपि न लक्षणलाभ इति दृग्पदस्य ज्ञानत्वपरतामाह **अनधिगतार्थविषयकत्वमिति**। न लक्षणं प्रमाणलक्षणम्। प्रमाणेति। प्रमाणलक्षणमित्यर्थः। जन्यानुभवमात्रस्यैव सापेक्षत्वादप्रमात्वापत्तिरत

मकरन्दः।

ननु पराधिगतेऽर्थे परस्य प्रमोत्पत्तेरनधिगतार्थगन्तृत्वं तत्राव्याप्तमत आह **फलेति**। उत्तरकालीनस्वज्ञानमादायाव्याप्तेराह कालिकान्तम्। एतावता किमित्यत आह **वेद इति**। यद्यप्येवं भट्टस्य स्वतोऽसिद्धिः, तथाप्येवमप्रमाऽनुभवमूलको वेदः स्यात्, तथा चाप्रमाणं स्यादिति तर्कविधयैतद् द्रष्टव्यम्।

**प्रमाणेति**। प्रमालक्षणमित्यर्थः॥

टिप्पणी।

**गन्तुर्बोधकस्येति**। अर्थविषयकत्वेन बोधजनकस्येत्यर्थः। अनुव्यवसायं प्रति व्यवसायस्य हेतुत्वात्। **अनधिगतार्थगन्तृत्वञ्चेति**। अनधिगतार्थे या गतिः प्राप्तिः विषयतात्मकसम्बन्धस्तत्कर्तृत्वं निरूपकत्वम्। **फलप्राक्कालिकेति**। अव्यवहितेत्यादिः।

न ह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात्। न चोत्पद्यमानाऽपि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात्। नापि पूर्वाविविशिष्टतामात्रेणाप्रामाण्यम्। उत्तराविशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव स्यादविशेषात्। छिन्ने कुठारादीनामिव परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात्। तत्फलं प्रमैव न भवति, गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेत्। न। यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात्। अनधिगतार्थत्वे

प्रकाशः।

थार्थ्येऽपि स्वकारणीभूतान्यूनानतिरिक्तविषयकानुभवयाथार्थ्यापेक्षा, न त्वनुभवस्येत्यर्थः। **अतदधीनत्वात्**—प्रमात्रपेक्षानधीनत्वादित्यर्थः। **पूर्वाविशिष्टता** पूर्वज्ञानान्यूनानतिरिक्तविषयतेत्यर्थः। यदि चोत्तरज्ञानानपेक्षं पूर्वज्ञानमिति स्वविषये तत् प्रमाणं, तदा पूर्वज्ञानानपेक्षमुत्तरमपि तथेत्याह **तदनपेक्षत्वेनेति**। यद्यप्युत्तरज्ञानं विशिष्टज्ञानत्वेन विशेषणज्ञानाऽऽत्मकपूर्वज्ञानापेक्षम्, अन्यथा सामग्रीतौल्ये धारावाहिधियां क्रमो न स्यात्। तथापि विशेषणमात्रविषयतया तथा, न विशिष्टविषयतयेति भावः। **फलोत्पादेति**। छिन्ने छिदा न सम्भवति, ज्ञाते तु ज्ञानान्तरं सम्भवत्येवेत्यर्थः।

प्रकाशिका।

आहान्यूनेति। धारावहिकबुद्धेरनपेक्षत्वाभावो मा भूदिति **स्वकारणीभूतेति**। अन्यूनविषयकत्वेन च कारणत्वं विवक्षितमिति नोक्तदोषः, अनतिरिक्तपदं यद्यस्ति तदप्यविवक्षितार्थम्। न च पूर्वज्ञानप्रामाण्यापेक्षा धारावहनस्थले नोत्तरज्ञान इत्येवानातिप्रसङ्गे किमिति तथा कारणता विवक्षितेति वाच्यम्। तदपेक्षितत्वं हि तन्नियतत्वम्, तच्च तत्राप्यस्त्येव स्मृतावपि तदेव तत्, अनुमितौ लिङ्गपरामर्शप्रामाण्याधीनप्रामाण्यापातादतिव्याप्तिरित्यतोऽप्यनूनपदं समानाधिकरणपदमधिकं प्रवेशनीयम्। अन्यथा वक्तृयथार्थवाक्यार्थज्ञानाधीनप्रामाण्याधीनप्रामाण्ये शाब्दे ज्ञानेऽतिव्याप्तेरिति। **तदा पूर्वज्ञानानपेक्षमिति**। अन्यूनविषयकत्वेन पूर्वज्ञानस्याकारणतया निरुक्तापेक्षा नास्तीत्यर्थः। इदमेवाग्रे व्यक्तीकरिष्यति। **न विशिष्टविषयतयेति**। **क्रमो न स्यादिति**। यद्यपि विशेषण-

मकरन्दः।

नन्वेवमनुभवोऽपि प्रमा न स्यात्, तस्यापि विशेषणज्ञानादिसापेक्षत्वादित्यत आह **स्वकारणीभूतेति**। एतच्च धारावाहिके तादृशपूर्वज्ञानयाथार्थ्यापेक्षयाथार्थ्यतया उत्तरकालेऽतिव्याप्तिवारणायान्यूनानतिरिक्तविषयकत्वेन कारणत्वं विवक्षितम्। तस्य च विशेषणमात्रविषयतया तथात्वमिति नोक्तदोषः। न च तत्सापेक्षमेव याथार्थ्यं तस्येति वाच्यम्। तत्सापेक्षत्वं हि तन्नियतत्वम्, तच्च तत्रापि। स्मृतावपि तदेव तत्। लिङ्गज्ञानयाथार्थ्यापेक्षित्वमादायातिव्याप्तिवारणायान्यूनेति। वस्तुतः पूर्वोक्तातिव्याप्तिवारणार्थमपि तत्। अनतिरिक्तपदं चिन्त्यम्, अतएव परिमले नास्तीति। किञ्च स्मृतावपि पूर्वानुभवस्यान्यूनविषयतयैव जनकत्वम्। अतिरिक्तविषयानुभवादपि तदंशे संस्कारानुद्बोधे स्मृतिदर्शनात्। एवञ्च वक्तृवाक्यार्थज्ञानयाथार्थ्यापेक्षित्वमादाय शाब्दानुभवेऽतिव्याप्तिरित्यपि चिन्त्यम्।

**अन्यथेति**। यद्यपि विशेषणज्ञानत्वेनैव हेतुत्वम् तथापि क्रमासम्भवः, तथापि फलबलेन तत्तद्विशेषणज्ञानत्वेन विशेषसामग्रीत्वमिति क्रम इति भावः। न च स्वरूपसत्क्रमिकक्षणोत्पत्तिकत्वेन क्रमः, सामग्रीतौल्ये तदेव नेत्याशयात्॥

टिप्पणी।

**तथापि विशेषणमात्रविषयतयेति**। अनधिगतार्थविषयकत्वप्रामाण्यवादिनां विशेषणविषयत्वेनापि प्रामाण्याङ्गीकारात् तद्वति तत्प्रकारकत्वप्रामाण्यवादिनामेव विशिष्टविषयकत्वे प्रामाण्या-

**सिद्धसाधनात्, साध्यसमत्वच्च। व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च। न चानधिगताऽर्थत्वमेव तन्निमित्तं, विपर्ययेऽपि प्रमाव्यवहारप्रसङ्गात्। नापि यथार्थत्वविशिष्टमेतदेव, धारावहनबुद्ध्यव्याप्तेः। न च तत्तत्काल-**

प्रकाशः।

**साध्यसमत्वादिति।** प्रमात्वाभावस्य गृहीतमात्रग्राहित्वरूपतया साध्याविशेषादित्यर्थः। **व्यवहारेति।** प्रमाशब्दवाच्यत्वव्यतिरेके साध्ये तत्प्रवृत्तिनिमित्तरहितत्वमुपाधिरित्यर्थः। न चायमुपाधिः साधनाव्यापक इत्याह **न चेति। धारावहनेति।** इन्द्रियार्थसन्निकर्षाधारस्तृतीयक्षणस्तदिन्द्रियार्थसन्निकर्षजज्ञानोत्पत्त्याधारः, अव्यासक्तमनसो यावत्सहकारिसाकल्ये सत्यनाद्येन्द्रियसन्निकर्षाधारक्षणत्वाद् द्वितीयक्षणवदिति धारावहनबुद्धौ मानमाहुः।

ननु सूर्यगत्यादिरूपकालावच्छेदकोपाधिविशिष्टतत्तदर्थविषयत्वेन तासामप्यधिकविषयकत्वम्, एकस्मिन् क्षणे यौगपद्यनिषेधेन तस्यावश्यकत्वादित्यत आह **न चेति।** घटोऽयं घटोऽयमित्यादि-

प्रकाशिका।

ज्ञानत्वेनैव हेतुत्वात् क्रमासम्भव एव, तथापि फलबलेन तत्तद्व्यक्तित्वेनैव उत्तरोत्तरं तत्तज्ज्ञानं प्रति विशेषसामग्रीत्वमिति भावः। यद्यपि स्वरूपसत **एव** क्रमिकक्षणोत्पत्तिकत्वेनैव क्रमोपपत्तिः, तथापि प्रथमज्ञानोत्पत्तिकाले विनिगमकाभावेन द्वितीयज्ञानस्यैवोत्पत्तिः स्यादिति भावः। **इन्द्रियार्थेति।** सन्निकर्षोत्पत्त्यधिकरणक्षणतृतीयक्षण इत्यर्थः। इतरसामग्रीसहकृतत्वं च प्रथमक्षणपदार्थविशेषणम्। तेन प्रतिबन्धाकरणेनोत्पत्त्यव्यवधानेन यत्र सन्निकर्षेण ज्ञानं जनितं तत्र तृतीयक्षणे ज्ञानोत्पत्तेरपि नाभिमतसिद्धिरित्यर्थान्तरमिति प्रत्युक्तम्, साध्ये च पुरुषान्तरीयज्ञानमादायार्थान्तरमिति **तदिति** सन्निकर्षविशेषणम्। द्वितीयक्षणोत्पन्नज्ञानस्य तृतीयक्षणसत्वेनार्थान्तरमित्यु**त्पत्तीति।** व्यासङ्गदशायां व्यभिचार इत्य**व्यासक्तेति।** व्यासङ्गदशायां ज्ञानोत्पादेऽपि तदिन्द्रियार्थसन्निकर्षजज्ञानाभावाद्भवति व्यभिचारः। यद्यपि व्यासङ्गदशायां तदिन्द्रियमनःसंयोगाभावाद्यावदित्यादि विशेषणादेव न व्यभिचार इत्यव्यासक्तेत्यादि व्यर्थम्। तथापि तदितरयावत्सहकारिसाकल्यमेव विशेषणं यावदित्यादिना विवक्षितम्। आलोकादिकिञ्चित्कारणसमवधानदशायां व्यभिचार इति **यावदिति** विशेषणम्। साकल्ये समवधान इत्यर्थः। सन्निकर्षोत्पत्तिक्षणे व्यभिचार इत्य**नाद्येति** क्षणविशेषम्। इन्द्रियपदं तदिन्द्रियपरमतो न पुरुषान्तरीयसन्निकर्षमादाय व्यभिचारः। इन्द्रिये व्यभिचार इति क्षणपदम्। नन्वेकक्षणोत्पन्नज्ञानद्वयस्थले द्वितीयज्ञाने तथाप्यव्याप्तिरत आह **एकस्मिन्निति।** ननु ज्ञानस्य क्षणविषयत्वे विषयीभूतनियामकाभावादेकक्षणेपि ज्ञानद्वयापत्तिरत

मकरन्दः।

**तृतीयक्षण** इति सन्निकर्षापेक्षया। एतच्च विनश्यदवस्थप्रथमज्ञानाधारत्वेनार्थान्तरप्रसङ्गनिरासाय [illegible] **उत्पत्तीति।** व्यासङ्गाधारक्षणे व्यभिचारवारणाय **अव्यासक्तेति।** यद्यपि तदा ज्ञानमुत्पद्यत एव, तथापि तदिन्द्रियार्थसन्निकर्षजज्ञानाभावाद् व्यभिचारः।

यद्यप्येवं व्यासङ्गाभावस्यापि हेतुत्वाद् यावत्सहकारीत्यादिविशेषणाभावादेव न व्यभिचार इति तद्वैयर्थ्यम्, अन्यथा तदा ज्ञानोत्पत्त्यवश्यम्भावापत्तेः। तथापि तदतिरिक्तयावत्सहकारिविवक्षापक्षे तद् द्रष्टव्यम्, प्रतिबन्धकाभावकारणतावच्छेदकत्ववादिमतेनेदमित्यन्ये। आलोकादिकिञ्चित्सहकारिविरहदशायां व्यभिचारादाह **यावदिति।** साकल्यसमवधान इत्यर्थः। सन्निकर्षोत्पत्त्याधारक्षणे व्यभिचारादाह **अनाद्येति** क्षणविशेषणम्। इन्द्रियपदं तदिन्द्रियपरम्, अतो नेन्द्रियान्तरसन्निकर्षमादाय व्यभिचारः। ज्ञानोत्पत्त्यनाधारेन्द्रिये व्यभिचारादाह **क्षणेति।**

टिप्पणी।

मीकारादतो नासङ्गतिः। **अनाद्येन्द्रियसन्निकर्षेति।** इन्द्रियसन्निकर्षोत्पत्तिक्षणे व्यभिचार-

**कलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनीयम् । क्षणोपाधीनामनाकलनात् । न चाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टता प्रकाशते इति कल्पनीयम्, स्वरूपेण तज्जननेऽनागतादिविशिष्टतानुभवविरोधात् । तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने तद्विशिष्टतानुत्पादात् । न चैतस्यां प्रमाणमस्ति । नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? । व्यवच्छित्तिप्रत्यायनेन व्यवच्छित्तौ स्वभावेन, अन्यथा तवाप्यनवस्थानादिति ।**

प्रकाशः ।

बुद्धिधारायां विषयभेदानुपलम्भाज्ज्ञानायौगपद्यं स्वरूपसत्क्रमिकक्षणभेदमादायेति भावः । उपाधयो यदि स्वसत्तया विशिष्टतां जनयेयुः, तदाऽनधिगतधर्माणामविद्यमानतया तद्विष्टितयाऽनुभवो न स्यादित्याह **स्वरूपेणेति** ।

अथ स्वासत्त्वेऽपि ज्ञानसत्तया ते तां जनयन्ति, तत्राह **तज्ज्ञानेनेति** । नन्वसन्तस्ते सत्तामात्रेण, नासन्तश्च स्वज्ञानसत्तया तां जनयन्तीति नोक्तदोष इत्यत आह **न चैतस्यामिति** । एतस्यां विशिष्टतायाम् । विशेषणविशेष्यभावानुपपत्तिं तत्र मानमाह **नन्विति** । विशेषणेन विशेष्ये विशिष्टताख्यधर्मोत्पादनं विनैव स्वसम्बन्धादेव व्यावृत्तिबुद्धिजननेन तदुपपत्तिरित्याह **व्यवच्छित्तीति** । न च विशिष्टज्ञाने सा भासते, विशेषणविशेष्यसम्बन्धातिरिक्तायास्तस्या अननुभवात् ।

ननु चाभावविशिष्टबुद्धेर्विशिष्टज्ञानत्वात् संयोगादिबाधेन वैशिष्ट्यमेव सम्बन्धो विषयोऽस्तु । मैवम् । तद्धि प्रत्यभावव्यक्ति भिन्नमभिन्नं वा ? आद्ये तत्तत्स्वरूपरूपा विशेषणतैवास्तु, किमनन्तवैशिष्ट्येन । अन्त्ये घटाभाववति पटवति घटाभावधीप्रसङ्गः । घटाभावपटाभाववैशिष्ट्ययोरभेदात् । तद्वैशिष्ट्यसत्त्वेऽपि तत्र पटाभावो नास्तीति चेन्न । पटाभावाभावस्य भावत्वे पटस्य प्रतिबन्धकतया तदभावस्य हेतुत्वात् । तस्य च वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात् । अभावत्वे च तस्यापि वैशिष्ट्य-

प्रकाशिका ।

आह **ज्ञानायौगपद्यमिति । ननु चेति ।** यद्यप्यभावे वैशिष्ट्यसम्बन्धसिद्धावपि घटोऽयमित्यादिधारावहनबुद्धावव्याप्तिर्न परिहृता, तथापि तद्दृष्टान्तेन ज्ञानकालानामपि वैशिष्ट्यं स्वीकरणीयं, तदेव चादायागृहीतग्राहित्वं धारावहनबुद्धेरुपपादनीयमित्यत्र तात्पर्यम् । **घटाभाववतीति** । इदञ्च वैशिष्ट्यनिराकरणाभिप्रायेण, प्रकृते त्वनुगतवैशिष्ट्यसिद्धावपि सङ्गतिः तदादायाप्यगृहीतग्राहित्वाभावादित्यवधेयम् । **अभावत्वे चेति** । पूर्वं घटाभावानुरोधेन पटाभाववैशिष्ट्यमस्वीकरणीयमित्युक्तमिदानीन्तु पटाभावाभावानुरोधेनापि तदङ्गीकरणीयमित्यत्र तात्पर्यम् । केचित्तु प्रतियोगिभावा-

मकरन्दः ।

**अभावत्वे चेति ।** अभावात्मनः पटाभावाभावस्य वैशिष्ट्यसम्बन्धेन सत्त्वं स्यात्, वैशिष्ट्यस्यैकत्वाभ्युपगमादित्यर्थः । अधिकं प्रत्यक्षप्रकाशे ।

टिप्पणी ।

वारणायानायेति, ज्ञानयौगपद्यनिषेधेन तस्यावश्यकत्वादिति ज्ञानानामयौगपद्यन्तरसिद्धान्तश्च ।

तृतीयज्ञानस्य द्वितीयज्ञानोत्पत्तिक्षणे दुर्वारसामग्रीसाम्राज्यात् अतोऽकामेन प्रमाणफलीभूतं सर्वमेव ज्ञानमतिरिक्तविषयकं वाच्यमित्यधिकभानार्थं सामग्रीभेदोऽपि वाच्यस्तथा च प्रथमक्षणे तृतीयसामग्र्यभावान्न यौगपद्यमतिरिक्तश्च विषयः कालोपाधिरेव तदन्यस्य सर्वस्यैव ग्राह्यस्य प्रथममपि विद्यमानतया सम्पन्नग्रहणसामग्रीकत्वादित्याशयः । **तत्र पटाभावो नास्तीति चेदिति** । पटात्मकप्रतिबन्धकसत्त्वादिति शेषः । **प्रतिबन्धकतया तदभावस्य हेतुत्वादिति** । प्रतिबन्धकाभावरूपकारणविघटकतयैव प्रतिबन्धकस्य प्रतिबध्यवारकत्वम् । तद् यदि प्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकाभावस्य सत्त्वङ्कुर्यात्, प्रतिबन्धकसत्ता हि सम्बन्धसत्ताधीना वस्तुनः सम्बन्धश्चास्ति वैशिष्ट्यमिति स्यादेव प्रतिबन्धकाभावसत्त्वमिति भावः । **अभावत्वे च तस्यापि वैशिष्ट्य-**

ज्ञाततैवोपाधिरिति चेत् । न निराकरिष्यमाणत्वात् । तत्सद्भावेऽपि वा स्मृते-

प्रकाशः ।

संबन्धेन तत्र सत्त्वात् । न चाभावेऽपि समवाय एव सम्बन्धः, तत्साधकविशिष्टबुद्धेरविशेषादिति वाच्यम् । समवेतकार्यत्वाद् ध्वंसनाशे पटाद्युन्मज्जनप्रसङ्गात् । न च तत्र भावत्वं तन्त्रं, गौरवाद्वैपरीत्यापत्तेश्चेति सङ्क्षेपः ।

**ज्ञाततैवेति** । पूर्वपूर्वज्ञानाहितज्ञातताविशिष्टमुत्तरोत्तरज्ञानविषय इत्यनधिगतार्थतैव धारावहनबुद्धीनामित्यर्थः । **तत्सद्भावेऽपीति** । स्मृतिव्यावृत्त्यर्थमनधिगतेति व्यर्थविशेषणम् । तेनापि च न तद्व्यवच्छेदः । तत्रापि कारणीभूतानुभवजनितज्ञाततासत्त्वेनानधिगतार्थताऽनपायादित्यर्थः ।

अथ स्मृतेर्जनकज्ञानविषयमात्रविषयत्वात् सा स्मृतौ न भासते, तथापि पूर्वपूर्वस्मृतिजनितज्ञा·

प्रकाशिका ।

भावयोरेकत्रैकेन सम्बन्धेन सत्त्वं विरुद्धमिति पटाभावतदभावयोर्नैकः सम्बन्धः इत्यत्र तात्पर्यमित्याहुः । **वैपरीत्यापत्तेश्चेति** । अभावत्वमेव नाश्यतावच्छेदकमस्तु कार्यत्वविशेषणस्योभयपक्षसमानत्वादित्यर्थः । न च तथासति घटनाशो न स्यादिति वाच्यम् । अप्रामाणिकभावत्वविशेषणप्रवेशे तस्याप्यापादनीयत्वादिति भावः । **तत्रापीति** । कारणज्ञानाहितज्ञाततायाः एव त्वया कार्यज्ञानविषयत्वाङ्गीकारादिति भावः । **अथेति** । स्वाव्यवहितप्राक्कालवृत्तिजनकज्ञानाहिततज्ज्ञानतयैव ज्ञानविषय इति नानुभवाहितज्ञातता स्मृतिविषय इत्यर्थः । **तथापीति** । पूर्वस्मृतेरुत्तरस्मृतिं प्रति विशे-

मकरन्दः ।

**तथापीति** । यद्यपि जनकागोचरत्वमत्रापि तुल्यं, तथाप्यनुपदमेवाशङ्क्य परिहरिष्यतीति ध्येयम् ।

टिप्पणी

**सम्बन्धेनेति** । पटाभावाभावसत्त्वानुरोधेनापि वैशिष्ट्यस्य स्वीकरणीयत्वात्तस्याभावत्वे सम्बन्धान्तराभावात्, तस्य च स्वीकृतस्यैकत्वेन तेन पटाभावस्यापि तत्र सत्त्वं स्यादभावत्वाविशेषात्, तथा च विरोध एव दुर्घट इति भावः । **वैपरीत्यापत्तेश्चेति** । **संक्षेप इति** । गौरवेणावच्छेदकत्वे बाधिते भावत्वे तत्स्वीकरणमप्रामाणिकम् । न च ध्वंसनाशकारणस्य फलस्य सत्त्वेन गौरवस्य फलमुखत्वान्न बाधकत्वमिति वाच्यम् । विशिष्टबुद्धेः सम्बन्धान्तरेणानुपपत्तेः, समवायविषयकत्वे नाश्यतावच्छेदककोटौ भावत्वस्याधिकस्य प्रवेशे गौरवात्, कार्य्यनाशत्वावच्छिन्नं प्रति समवायेन कार्य्यत्वेनैव कारणत्वाद् ध्वंसस्यासमवेतत्वादिति ध्वंसनाशवारणस्य फलस्यान्यथासिद्धत्वेन गौरवस्य फलमुखत्वाभावेन बाधकत्वानपायात् । एवञ्च प्रामाणिके भावत्वस्य नाश्यतावच्छेदकत्वे स्वीक्रियमाणेऽभावत्वस्यैव तथाविधं तत् किन्न स्याद्, विनिगमकाभावात् । न चाभावत्वस्य तथात्वे घटादीनामनाशप्रसङ्ग इति वाच्यम् । तेन च प्रसङ्गेन तस्याप्रामाणिकत्वमेव प्रसञ्जनीयम्; तत्स्वीकृत्यैव हि तत्स्वीक्रियत इत्युक्तप्रसङ्गस्यादोषत्वात् । न चेष्टापत्तिर्घटादीनां नित्यत्वप्रसङ्गाद्, भवतामपि हि तन्नेष्टमिति भावः । **अथ स्मृतेर्जनकज्ञानविषयमात्रेति** । यतो ज्ञातता स्वाव्यवहितपूर्ववर्त्तिज्ञानाहितैव स्वेन गोचरीक्रियते, न च स्मृतेरव्यवहितपूर्वोऽनुभव इति स्मृतेर्जनकज्ञानविषयमात्रविषयकत्वव्यवस्थितेर्ज्ञातता स्मृतौ न भासत इत्यर्थः, एवञ्च न तथापीत्यादिग्रन्थासङ्गतिः, अन्यथा जनकज्ञानाविषयज्ञाततया उत्तरस्मृत्या ग्रहणप्रतिपादनादसङ्गतिः स्यात्, धारावाहिकस्मृतिपक्षे समानविषयकज्ञानत्वमात्रेण स्मृत्यनुभवकार्य्यकारणभावाभ्युपगमात्, पूर्वस्मृतेरुत्तरस्मृतिजनकत्वादव्यवहितपूर्वत्वात्तज्जनितज्ञातताग्रहणस्योत्तरेण सम्भवादित्यभिप्रेत्याह **तथापि पूर्वपूर्वस्मृतीति** । स्मृतेः स्वजनकगृहीतग्राहि·

रपि तथैव प्रामाण्यप्रसङ्गात् । जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात् । अस्तु वा प्रत्यक्षे यथा तथा, गृहीतविस्मृतार्थश्रुतौ का वार्त्ता । अप्रमैवासाविति चेत् । गतमिदानीं वेदप्रामाण्यप्रत्याशया, न ह्यनादौ संसारे स्वर्गकामो यजेतेति वाक्यार्थः केनचिन्नावगतः, सन्देहेऽपि प्रामाण्यसन्देहात् । न च तत्रापि कालकलाविशेषाः परिस्फुरन्ति । न चैकजन्मावच्छेदपरिभाषयेदं लक्षणं, तत्राप्यनुभूतविस्मृतवेदार्थं प्रति अप्रामाण्यप्रसङ्गात् । कथन्तर्हि स्मृतेर्व्यवच्छेदः ? अननुभवत्वेनैव । यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति । 'तत्त्वज्ञानाद्' इति सूत्रणात्, 'अव्यभिचारि ज्ञानमिति' च । ननु स्मृतिः प्रमैव किं न स्याद्, यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवदिति चेत् । न । सिद्धे व्यवहारे निमित्तानुसरणात्, न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात् । न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशात् । उक्तेष्वन्तर्भावादनुपदेश इति चेत् । न । प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः, लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्य साधनत्वादिति ।

---

प्रकाशः ।

ततविशिष्टस्योत्तरोत्तरस्मृतौ भानादनधिगतार्थत्वसत्त्वादित्याह **जनकेति** । न च स्मृतता नोत्तरोत्तरस्मृतिविषयोऽनुभवाविषयत्वादिति वाच्यम् । धारावहनबुद्धावप्युत्तरोत्तरबुद्धेः पूर्वपूर्वज्ञानाहितज्ञाततासमानकालोत्पत्तिकत्वेन तत्राऽपि तद्विषयत्वाभावापातादिति भावः ।

अन्यत्र तत्सन्देहेऽप्युभयसिद्धप्रामाण्ये वेदे अधिगतार्थगोचरे प्रामाण्यासम्भव इति दुरुत्तरं समाधानमित्याह **अस्तु वेति** । **तत्रापीति** । एकजन्मनीत्यर्थः । **अननुभवत्वेनैवेति** । इममर्थमनुभवामीममर्थं स्मरामीत्यनुभवसाक्षिकावेवानुभवत्वस्मृतित्वे जातिविशेषावित्यर्थः । **तत्त्वज्ञानादिति** । ज्ञानपदमनुभवपरम् । एवमग्रेऽपि । **नन्विति** । यथार्थज्ञानत्वमेव प्रमापदप्रवृत्तिनिमित्तं लाघवाद्, न तु तद्विशेषोऽनुभवत्वमपीत्यर्थः । **सिद्ध इति** । स्मृतेः प्रमात्वं यदि यथार्थज्ञानत्वमेव साध्यं, तदा सिद्धसाधनं साध्याविशेषश्च स्यादिति प्रमापदवाच्यत्वं साध्यम्, तत्र च तन्निमित्तत्वमुपाधिरित्यर्थः ।

ननु यथार्थज्ञानत्वमेव तन्निमित्तमित्युक्तमित्यत आह **न चेति** । **न च स्मृतीति** । यदि स्मृतौ प्रमापदस्येश्वरसङ्केतः स्यात्, तदा प्रमाणाभियुक्तानां संस्कारे प्रमाकरणत्वव्यवहारः स्यात्, न चैवमित्यर्थः । उक्तेषु प्रत्यक्षादिष्वित्यर्थः ।

प्रकाशिका ।

पणज्ञानत्वेन जनकत्वसम्भवादिति भावः । **न चेति** । संस्कारोपनीतस्यैव स्मृतिविषयत्वादिति भावः । **धारेति** । जनकीभूतेन्द्रियसन्निकर्षाश्रयस्यैव साक्षात्कारविषयत्वादिति भावः । **ज्ञानपदमिति** । सूत्रे तत्वज्ञानपदस्य करणव्युत्पत्या शास्त्रपरस्य विशेषकतया फलीभूतानुभव एव तात्पर्यात्, न हि स्मृतिकरणत्वं शास्त्रस्य । एवमव्यभिचारिपदस्यापि प्रत्यक्षफलीभूतानुभव एव तात्पर्यं सूत्रे । तत्रापि

टिप्पणी

त्वनियमादुक्तनियमोपपत्तावपि न ज्ञातताग्रहणसम्भव इत्याह **न च स्मृतता नोत्तरोत्तरेति** । **अनुभवाविषयत्वादिति** । ज्ञानजनकज्ञानाविषयत्वादित्यर्थः । **समानकालोत्पत्तिकत्वेनेति** । प्रत्यक्षस्यापि स्वप्राक्कालसन्निकृष्टग्राहित्वात् स्वोत्पत्तिक्षणोत्पन्नज्ञातताग्राहकत्वासम्भव इत्याशयः ।

एवं व्यवस्थिते तर्क्यतेऽपि—यदियमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्यवस्थाप्य न यथार्थतया व्यवहर्त्तुं शक्यते इति। व्यवहारेऽपि पूर्वानुभव एव प्रमितिरनपेक्षत्वात्। न तु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव।

नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न, विषयभेदात्।

---

प्रकाशः।

अनपेक्षतयेति विवृणोति—**तर्क्यतेऽपीति**। अनुभवैकविषया, अनुभवमात्रविषयेत्यर्थः। तेनास्या विषयान्तरेऽपि न प्रमात्वमिति भावः। **तद्यथार्थत्वेति**। स्वजनकानुभवयथार्थत्वायथार्थत्वव्याप्तयथार्थत्वायथार्थत्वेत्यर्थः। **तत्प्रामाण्यमिति**। स्वजनकानुभवप्रामाण्यमित्यर्थः। अव्यवस्थाप्य अनवधार्य। यद्यपि स्वजनकानुभवप्रामाण्यमनिश्चित्यापि प्रवृत्तिसंवादादिना अनुभवस्येव स्मृतेरपि प्रामाण्यग्रहः सम्भवत्येव, तथाऽपि यदि स्मृतिः प्रमा स्यात्, तदा स्वान्यूनानतिरिक्तविषयकस्वजनकानुभवप्रामाण्यव्याप्तप्रामाण्या न स्यात्। व्यतिरेके इच्छादिर्दृष्टान्तः। धारावहनबुद्धिषु पूर्वपूर्वबुद्धेर्विशेषणमात्रविषयतयोत्तरोत्तरबुद्धिष्वपेक्षा, स्मृतौ त्वन्यूनानतिरिक्तविषयतयेति न तत्र व्यभिचारः। धारावहनबुद्ध्यन्यत्वेन वा विशेषणम्।

शक्यते इतीत्यस्यानन्तरं, न स्मृतिः प्रमेति शेषः। तदपेक्षणमेवाह **असमीचीने हीति**। **मूलेति**। कारणव्याप्त्यादिप्रत्यक्षप्रामाण्यव्याप्यप्रामाण्यादित्यर्थः। **विषयेति**। व्याप्त्यादिप्रत्यक्षस्य लिङ्गलिङ्गिविषयत्वादनुमितौ च पक्षतावच्छेदकधर्मभाननैयत्येन तस्याऽधिकस्य भानादित्यर्थः।

प्रकाशिका।

यत इत्याध्याहारेण प्रत्यक्षरूपकरणलक्षणाभिधानादिति भावः। **यदि स्मृतिरिति**। इदञ्चाव्यवधानेनैव विवृतप्रायम्। अत्रापादके प्रमापदं यथार्थानुभवपरम्, अत इच्छादौ तद्व्यतिरेकः। आपाद्ये चोभयत्र यथार्थत्वपरं प्रामाण्यपदं तेनापाद्यव्यतिरेकस्तत्र अत एवाह **व्यतिरेक इति**। **धारावहनेति**। तथा चापाद्येऽनुभवस्य तथा जनकत्वं प्रविष्टमिति विशिष्टाभावोऽस्त्येव धारावहनबुद्धाविति भावः। तथा च जनकत्वाविवक्षायामाह **धारेति**। यद्यपि अनुमित्यनन्तरोत्पन्नेन्द्रियसन्निकर्षेण जनितेऽनुमितिसमानविषयप्रत्यक्षे विशेषणज्ञानात्मकतदनुमितिजन्य एवमपि व्यभिचार एव, तथापि स्वान्यूनविषयकज्ञानजन्यानुभवत्वमेव धारावहनत्वमिति भावः। **विशेष्यस्येति**। अतीतादिविशेष्यकपू-

मकरन्दः।

तदास्वाऽन्यूनानतिरिक्तेति। एतच्च प्रागेव विवृतप्रायम्। नन्वापादकस्य प्रामाण्यस्य वैकल्यादिच्छादिकं नान्वयदृष्टान्तः, व्यतिरेकदृष्टान्तोऽपि न स्यात्, तादृशानुभवव्याप्तप्रामाण्यवत्त्वस्यापाद्यव्यतिरेकस्य व्याप्यत्वाभिमतवैकल्यादिति चेत्। मैवम्। आपाद्ये प्रामाण्यपदद्वयस्य यथार्थत्वमात्रपरत्वात्, आपादके च यथार्थानुभवपरत्वात्। एवञ्चेच्छादेरापाद्यव्यतिरेकस्य व्याप्यस्यापाद्यव्यतिरेकस्य व्यापकस्य च सत्त्वाद्व्यतिरेकदृष्टान्तत्वमिति।

**विशेष्यस्येति**। अतीतादिविशेष्यकस्यानुभवस्येत्यर्थः।

टिप्पणी

**अनुभवप्रामाण्यव्याप्तेति**। आपाद्ये प्रामाण्यं यथार्थत्वमात्रम्, आपादके च यथार्थानुभवत्वं तथाचेच्छादेर्व्यतिरेकदृष्टान्तत्वसम्भवः। **विषयतयोत्तरोत्तरबुद्धिष्विति**। स्वान्यूनानतिरिक्तविषयकत्वावच्छिन्नजनकत्वस्य प्रवेशान्नोक्तापाद्यापादकव्याप्तौ व्यभिचारः, पूर्वज्ञानस्य विशेषणमात्रविषयकत्वेन जनकत्वादिति भावः। **तस्य तदुपादानज्ञानेति**। तस्य ज्ञाततालक्षणस्योपका-

आगमस्तर्हि न प्रमाणं, तद्विषयमानान्तरानुविधानात् । न । प्रमातृभेदात् । धारावाहिकबुद्धयस्तर्हि न प्रमाणम्, आद्यप्रमाणानुविधानात् । न । कारणविशुद्धि-मात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणभावात्, कारणबलायातं काक-तालीयं पौर्वापर्यमिति ।

यदि हि स्मृतिर्न प्रमितिः पूर्वानुभवे किं प्रमाणम् । स्मृत्यन्यथानुपपत्तिरिति चेत् । न । तया कारणमात्रसिद्धेः, न तु तेनानुभवेनैव भवितव्यमिति नियामक-मस्ति । अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्, किं न स्यात् । न ह्यत्र प्रमा-णमस्ति । पूर्वानुभवाकारोल्लेखः स्मृतेर्दृश्यते, सोऽन्यथा न स्यादिति चेत् । तत् किं बौद्धवद्विषयाकारान्यथानुपपत्त्या विषयसिद्धिस्त्वयापीष्यते, तथाभूतं ज्ञानमेव वा तत्सिद्धिः ? । आद्ये तद्वदेवानैकान्तिकत्वम् । न हि यदाकारं ज्ञानं, तत्पूर्वकत्वं तस्येति नियमः, अनागतज्ञाने विभ्रमे च व्यभिचारात् । द्वितीये तु स्मृतिप्रामा-ण्यमवर्ज्जनीयम् । मा भूत् पूर्वानुभवसिद्धिः, किं नश्छिन्नमिति चेत् । न तर्हि

---

प्रकाशः ।

तथापि श्रोतुर्वाक्यार्थप्रमाया वाक्यप्रयोगमूलतदर्थविषयकज्ञानप्रामाण्यापेक्षित्वान्न प्रमात्वं स्यादि-त्याह **आगम इति** । तथात्वेऽपि वक्तृश्रोतृरूपप्रमातृभेदोऽस्ति, स्मृतौ त्वेकस्यैव तथात्वमित्याह **प्रमात्रिति** ।

तर्हि विषयप्रमात्रोरभेदाद्धारावहनबुद्धयः पूर्वबुद्ध्यपेक्षाः प्रमा न स्युरित्याह **धारेति** । यद्यपि बुद्धिक्रमान्यथाऽनुपपत्त्या पूर्वबुद्धेर्विशेषणज्ञानत्वेनोत्तरबुद्धिकारणत्वं, तथापि स्मृतिवदन्यूनविषयतया न कारणत्वं किन्तु विशेषणमात्रविषयत्वेनेत्युक्तम् । अन्यूनानतिरिक्तविषयत्वन्तु काकतालीयमित्याह **कारणेति** ।

नन्वतीतानुभववैशिष्ट्यरूपा तत्ता न मानसप्रत्यक्षवेद्या, अनुभवसत्त्वकाले तदतीतत्वाभावात्, तदत्ययकाले च विशेष्यासत्त्वादिति स्मृतिरेव तत्र मानमित्यगृहीतविषयतया सा प्रमा स्यादित्याह—

**यदीत्यादिना**, न तर्हीत्यन्तेन । **तत्किमिति** । सौत्रान्तिकानां घटाद्याकारज्ञानकादाचित्कत्वा-न्यथाऽनुपपत्त्या घटादिकल्पनवत् तत्ताऽऽकारान्यथाऽनुपपत्त्या पूर्वानुभवकल्पनमित्यर्थः । **तथा-भूतमिति** । सौत्रान्तिकमते यथाऽनैकान्तिकत्वं, तथा त्वन्मतेऽपीत्यर्थः । तदेवाह **न हीति** । आकारेण ज्ञानस्यार्थजन्यत्वमनुमेयमर्थसत्त्वमात्रं वा ? आद्ये अनागतार्थस्य वर्त्तमानज्ञानाकारणत्वा-दनैकान्तिकम् । अन्त्ये अनागतस्य कादाचित्कत्वेऽपि शुक्तौ सर्वदा रजतत्वाकारत्वाऽसत्त्वाद्रजत-त्वाकारभ्रमेऽनैकान्तिकमित्यर्थः । **द्वितीये त्विति** । तत्ताविषया स्मृतिरेव तत्तासिद्धिरिति सा प्रमा स्यादेवेत्यर्थः । तथा च स्मृत्यनुभवयोः कार्यकारणभावान्यथाऽनुपपत्तेः स्मृतिः प्रमेति भावः ।

प्रकाशिका ।

र्वानुभवस्येत्यर्थः । **अतीतानुभववैशिष्ट्येति** । यद्यप्येतावता पूर्वापरीभावसिद्धावपि न कार्य-कारणभावसिद्धिरन्यथा योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीत्यत्रापि तत्सिद्ध्यापत्तेः, तथाप्येवमुभ-योपस्थितौ ( स्मरणे ) अननुभूते स्मरणाभावादन्वयव्यतिरेकादिसहकृतमनसा तद्ग्रह इति भावः ।

मकरन्दः ।

**अतीतानुभववैशिष्ट्येति** । यद्यप्येवं पौर्वापर्य्यमात्रं सिध्यति, न तु कार्य्यकारणभावः, अन्यथा योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यादावपि तथा स्यात् । तथाप्यननुभूते स्मरणाभावादन्व-यव्यतिरेकादिसहकृतमनसा तद्ग्रह इति भावः ।

**स्मृत्यनुभवयोः कार्यकारणभावसिद्धिरिति । न । तदप्रामाण्येऽपि पूर्वाऽपरावस्थावदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः । योऽहमन्वभवममुमर्थं, सोऽहं स्मरामीति मानसप्रत्यक्षमस्तीति ।**

**न च गृहीतग्राहित्वमीश्वरज्ञानस्य, तदीयज्ञानान्तरागोचरत्वाद् विश्वस्य ।**

---

प्रकाशः ।

अतीतानुभवविशिष्टे स्मृतिवैशिष्ट्यप्रत्यभिज्ञानं स्मृत्यनुभवयोः कार्यकारणभावग्राहकमित्यन्यथोपपत्त्या न स्मृतिः प्रमेत्याह **तदप्रामाण्येऽपीति** । प्रत्यभिज्ञानस्वरूपमाह **योऽहमिति** ।

ननु केयं तत्ता ? न तावदतीतानुभवविषयत्वम् । अतीतानुभवविषयत्वस्यानुभवाविषयतया स्मृत्या तदनुल्लेखापत्तेः । न च तस्याऽनुभवाविषयत्वेऽपि यदा ज्ञानान्तरेण ग्रहणं तदा स घट इति स्मृतिः, अन्यथा प्रमुष्टतत्तांशा घट इतीति वाच्यम् । अतीतानुभवविषयत्वस्यानुमितौ भानेऽपि स इति बुद्धेरभावात् । नाप्यतीतधर्मवैशिष्ट्यम् । यदि हि यो वस्तुतोऽतीतो धर्मस्तद्वैशिष्ट्यं तत्ता, तदाऽनुभवेऽपि तद्विषयत्वात्तत्तोल्लेखापत्तिः, अतीतधर्मविशिष्टः स इति सहप्रयोगानुपपत्तिश्च । नाप्यतीतत्वेन भासते यो धर्मस्तद्वैशिष्ट्यम् । भासमानधर्मस्यातीतत्वेनानुभवाविषयत्वात्, प्रत्युत वर्त्तमानत्वेनाऽनुभवात्, स्मृतौ तत्तोल्लेखानापत्तेः । नाऽप्यतीतसमयसम्बन्धः । अनागतगोचरस्मृतिप्रत्यभिज्ञयोस्तत्तोल्लेखानापत्तेः । इदन्ताऽपि न तद्वृत्तिगुणादि । गुणादावभावात् । नापि प्रत्यक्षज्ञानगोचरत्वम् । अचाक्षुषत्वापत्तेः ।

उच्यते । अनुभवे य एव धर्मः कालो वा वर्त्तमानत्वेन भासते स एव स्मृतावपि । तयोरेकविषयत्वेऽपि स्मृतावेव तच्छब्दोल्लेखः, संस्कारजज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात्, प्रत्यभिज्ञाने तथा कल्पनात् । तत्रैव च प्रत्यक्षानुभवेनेदंशब्दप्रयोगः । विषयकृतश्च स्मृत्यऽनुभवयोर्विशेषो नास्त्येव । अत एवायं घट इत्यनुभवादयं घट इति न स्मृतिः । स घट इति स्मृतेश्च स घट इति नानुभवः । सह प्रयोगस्तु धर्मविशेषमादायेत्यस्मत्पितृचरणाः ।

परलक्षणमभ्युपगम्य अनधिगतार्थगन्तृत्वमीश्वरज्ञानेऽप्यस्तीत्याह—

**न चेति ।** ईश्वरस्य ज्ञानान्तराभावान्न तज्ज्ञानं गृहीतग्राहीत्यर्थः । पुरुषान्तरज्ञानान्तरगोचरत्वेन गृहीतग्राहित्वे अभिमताऽपि प्रमा न स्यात् ।

अथ तद्विषयज्ञानोत्तरकालवर्त्तिसमानाश्रयतद्विषयकज्ञानत्वमेव गृहीतग्राहित्वम् । तन्न । बुद्धिमात्रस्य प्रमात्वाभावापत्तेः । यद्विषया बुद्धिरुत्पन्ना तद्विषयाया एव तस्याः स्वोत्पत्त्युत्तरक्षणेऽपि सत्त्वा-

प्रकाशिका ।

प्रसङ्गादाह **इदन्तापीति । संस्कारजेति ।** एतच्च प्रत्यभिज्ञायाः संस्कारजन्यत्वपक्षे यदा स्मृतिजन्यत्वं तस्यास्तदाप्यनुभवावृत्त्यात्मविशेषगुणमात्रवृत्तिधर्मावच्छिन्नकारणताकत्वं तत्त्वोल्लेखप्रयोजकं प्रत्यभिज्ञाने च तत्त्वोल्लेखानुरोधादेव स्मृतित्वेन कारणत्वं वाच्यमिति भावः । **यद्विषया बुद्धिरिति ।** नचोत्तरकालपदेनाव्यवहितोत्तरकालो विवक्षित इति वाच्यम् । प्रहराद्यनन्तरतद्विषयकज्ञानेऽपि प्रमात्वव्यवहारेणाव्याप्तितादवस्थ्यात् । **बुद्धिमात्रस्ये**त्यादिना निराकृतमप्यर्थं मूल-

मकरन्द ।

**तद्विषयेति ।** न चोत्तरकालत्वं व्यवहितकालत्वं विवक्षितमिति वाच्यम् । मासाद्यनन्तरतद्विषयज्ञानस्याप्यप्रमात्वव्यवहारादिति भावः । यद्यपि बुद्धिमात्रस्येत्यादिना निरासान्नेयं शङ्का, तथापि मूले तदनिरासात्तत्र तदविरोध इति भावः ।

न च तदेव ज्ञानं कालभेदेनाप्रमाणम्, अनपेक्षत्वस्यापरावृत्तेः। तथापि वा अप्रामाण्येऽतिप्रसङ्गादिति ॥ १ ॥

स्यादेतत्। अनुपकारकं विषयस्य, तदीयमेतदीयं वा न भवितुमर्हत्यविशेषात्। न च तस्येत्यनियतं तत्र प्रमाणमतिप्रसङ्गात्। न च तदभिज्ञमन्तरेण तदुपकारस्योत्पत्तिः, तथानभ्युपगमात्। अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात्।

अत्रोच्यते—

**स्वभावनियमाभावादुपकारोऽपि दुर्घटः ।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥**

प्रकाशः।

दिति भावः। नन्वीश्वरस्य ज्ञानान्तराभावेऽपि प्रथमक्षणे गृहीतस्यैव द्वितीयादिक्षणे ज्ञानाद् गृहीतग्राहित्वमस्त्येवेत्यत आह **न चेति**। **अनपेक्षत्वस्येति**। न हि स्मृतिवदुत्तरकालबुद्धिविषयत्वे पूर्वकालीनतद्विषयज्ञानापेक्षा ईश्वरज्ञानेऽस्तीत्यर्थः। **अतिप्रसङ्गादिति**। सर्वज्ञानानां द्वितीयादिक्षणे ग्रहणरूपत्वेनाप्रमात्वापातादित्यर्थः। वस्तुतो गृहीतेत्यत्र निष्ठार्थस्य ध्वंसस्यासम्भव एवेति भावः॥ १॥

ननु विषयनियमान्यथाऽनुपपत्त्या तदुपपादको विषयनिष्ठो ज्ञानजन्यो धर्मः स्वीकार्यः, तस्य च तदुपादानज्ञानजन्यत्वे तदुत्पत्तेः प्राक् तद्विषयत्वाभावात् कथं तदुत्पत्तिः, तदुपादानज्ञानाजन्यत्वे च क्षित्यादिसकर्तृकत्वग्राहकं कार्यत्वं तत्रैवानैकान्तिकमित्याह—

**स्यादेतदिति**। **न चेति**। तदीयोऽयं विषय इति नानियतं, किन्तु नियतमेव। तन्नियामकस्तज्जन्यधर्म एव वाच्यः। तेन तज्जन्यज्ञातताऽऽश्रयत्वमेव तद्विषयत्वमित्यर्थः।

ज्ञानस्य ज्ञेयनिष्ठोपकाराधानेऽपि नियामकः स्वभाव एव वाच्यः, तथा च तत एव विषयनियमोपपत्तौ किमुपकाराधानेनेत्याह **स्वभावेति**। विद्यमानेऽर्थे ज्ञानजन्योपकारसम्भवेऽप्यतीताद्यर्थे तदऽसम्भवाद् यथा तत्र स्वभाव एव विषयत्वनियामकः, तथा विद्यमानेऽप्यर्थेऽस्त्वित्याह **सुघटत्वेऽपीति**।

प्रकाशिका।

व्याख्यानाय पुनराशङ्कते **नन्वीश्वरस्येति**। **ननु विषयेति**। इयञ्च यथार्था तटस्थाशङ्का यथार्थानुभवत्वरूपं हि प्रामाण्यं स्वविषये वाच्यम्, विषयता चानुपपन्ना ज्ञातताऽस्वीकारे नियामकाभावात्, तत्स्वीकारे च तदुत्पत्तेः प्राक् तद्विषयकज्ञानाभावेन तदनुत्पत्तेः, उत्पत्तौ वा कार्यत्वस्य तत्रैवानैकान्तिकत्वादिति मूलप्रकाशयोः सङ्गतिः। एतेन—कार्यत्वानैकान्तिकोद्भावनमत्रार्थान्तरम्। न च ज्ञाततामादायागृहीतग्राहित्वमुपपादयितुमेव तद्ग्रन्थावतार इति वाच्यम्। न तु **तदभिज्ञमन्तरेणेत्यादिना** तदुत्पत्त्यसम्भवोपन्यासस्य विरुद्धत्वापातादिति—दूषणमपास्तम्। ननु देव-

मकरन्दः।

**नन्विति**। ननु कार्यत्वानैकान्तिकोद्भावनस्य नायमवसरः। न च ज्ञाततामादायागृहीतग्राहित्वमुपपादयितुं तत्साधनमेवेदमिति वाच्यम्। पूर्वनिरस्तत्वात्, न च तदभिज्ञानमित्यादिना तदुत्पत्त्यसम्भवोपन्यासस्य विरुद्धत्वापाताच्च इति चेत्। मैवम्। यथार्थानुभवत्वादिकं प्रामाण्यं ज्ञानस्य स्वविषये स्यात्, विषयता च नियामकं विनाऽनुपपन्ना, ज्ञाततायास्तथात्वे कार्यत्वानैकान्तिकत्वापत्त्या तदुपादानज्ञानजन्यत्वमवश्यं वाच्यम्, तच्च तदुत्पत्तेः प्राक् तद्विषयत्वाभावादसम्भवीति न प्रामाण्यव्यवस्थितिरिति तटस्थशङ्कापरत्वेनास्य सङ्गतत्वात्।

टिप्पणी

रस्य यदुपादानमाश्रयो विषयस्तज्ज्ञानस्येत्यर्थः। **तद्विषयत्वाभावादिति**। तस्य विषयत्वेना-

विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चैतदनुमन्तव्यम्, अतीतादिविषयत्वानुरोधात्। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्। असत्त्वात्। न च तद्धर्मसामान्याधारं किञ्चित् क्रियते इति युक्तम्। तेन तस्यैव विषयत्वप्राप्तेः। तादात्म्याद्विशेषस्यापि सैव ज्ञाततेति चेत्, तत् किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्। घटाकारेण ज्ञायत एवासौ रस इति चेत्। अथ रसाकारेण किं न ज्ञायते। तेन रूपेण ज्ञाततानाधारत्वादिति चेत्। न तर्हि वर्त्तमानसामान्यज्ञानेऽप्यतीतानागतादिज्ञानम्, तेनाकारेण प्राकट्यानाधारत्वादिति ॥ २ ॥

ननु क्रियया कर्मणि किञ्चित् कर्त्तव्यमितिव्याप्तेरस्त्वनुमानम्। न।

**अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।**
**तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥**

---

प्रकाशः।

अतीतादिघटादौ भासमाने घटत्वादेरपि भासनात्तत्रैव ज्ञाततोत्पत्तिः स्यादित्यपि नास्तीत्याह **न चेति**। तथा सति ज्ञातताऽनाश्रयत्वाद् घटादिर्विषयो न स्यात्, घटत्वादौ ज्ञातताऽऽधानात्तस्यैव तद्विषयत्वादित्यर्थः। ननु धर्मधर्मिणोस्तादात्म्यात्तद्धर्मज्ञातता तस्यैवेत्याह **तादात्म्यादिति**। **तत्किमिति**। ननु धर्मिणो धर्माभेदेऽपि धर्मस्य न धर्म्यभेदः। भेदाभेदाङ्गीकारात्। तथा च धर्मे ज्ञायमाने तदभिन्नो धर्मी ज्ञायतां, धर्मिणि ज्ञायमाने तद्भिन्नो धर्मः कथं ज्ञायेत। मैवम्। भेदाभेदस्य विरोधेनासम्भवात् ॥ २ ॥

ननु धात्वर्थावच्छेदकपरसमवेतक्रियाफलशालित्वं कर्मत्वमिति ज्ञानक्रियायाः स्वकर्मनिष्ठफलजनकत्वाज्ज्ञातता स्यादित्याह—

**नन्विति**। क्रिया न धात्वर्थमात्रं, शरसंयोगादिना धात्वर्थेन कर्मणि गगनादौ तदजननादनैकान्तिकत्वात्। नापि स्पन्दः, ज्ञाने स्पन्दत्वाभावात्। नापि करणव्यापारत्वं, शब्दादिव्यापारपदार्थस्मृत्यादिभिरनैकान्तिकत्वादित्याह **अनैकान्त्यादिति**। इह ज्ञाततायाम्। ननु प्रत्यक्षैव ज्ञातता, संयुक्त इतिवज्ज्ञात इत्यनुभवादित्यत आह **तद्वैशिष्ट्येति**। ज्ञातताऽनुभवो ज्ञानवैशिष्ट्यमात्रविषयको नातिरिक्तविषयतायां मानमित्यर्थः।

प्रकाशिका।

दत्तो गच्छतीत्यत्र गमनक्रियाफलं विभागोपीति तदाश्रयपूर्वदेशस्य कर्मत्वापत्तिरित्याशयेनाह **धात्वर्थेति**। विभागश्च न तथा उत्तरसंयोगावच्छिन्नस्पन्दस्य गमिधात्वर्थत्वादिति भावः। गमनकर्तर्यपि संयोगाश्रयत्वादतिव्याप्तिरिति **परेति**। **अतिरिक्तेति**। ज्ञाततायामित्यर्थः। न चैवं

मकरन्दः।

ननु चैत्रो गच्छतीत्यत्र परसमवेतगमनक्रियायाः फलमुत्तरदेशसंयोगवत् पूर्वदेशविभागोऽपीति पूर्वदेशेऽतिव्याप्तिरित्यत उक्तं—**धात्वर्थतावच्छेदकेति** फलविशेषणम्। उत्तरसंयोगावच्छिन्नस्पन्दस्य धात्वर्थत्वाद्विभागो न तथेत्याहुः। घटं जानाति चैत्र इत्यत्र ज्ञानक्रियाफलमिच्छादि, तच्छालितयाऽऽत्मन्यतिव्याप्तिरित्यत उक्तं **परेति**। न चाभावो घटमाश्रयते इत्यादावव्याप्तिः, आश्रयणक्रियाया अभावे समवेतत्वाभावादिति वाच्यम्। परसमवेतपदस्य सम्बन्धपरत्वात्।

**अतिरिक्तेति**। ज्ञाततायामित्यर्थः।

टिप्पणी।

भिमतस्य विषयत्वाभावात् विषयत्वस्य ज्ञातताधीनतया ज्ञाततानुत्पत्तेर्ज्ञानविषयत्वस्यासम्भवादित्यर्थः। **अतिरिक्तविषयतायामिति**। ज्ञाततारूपायामित्यर्थः।

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनेकान्तात्, न हि शरसंयोगेन गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा, स्पन्दाभिप्रायेणासिद्धेः। व्यापाराभिप्रायेण शब्दलिङ्गेन्द्रियव्यापारैर्व्यभिचारात्, न हि तैः प्रमेये किञ्चित् क्रियते, अपि तु प्रमातर्येव। फलाभिप्रायेणापि तथा। अन्ततस्तेनैवानेकान्ताद्, अनवस्थानाच्च। आशुविनाशिधर्माभिप्रायेण द्वित्वादिभिरनियमात्। आशुकारकाभिप्रायेण कर्मण्यसिद्धेः, कर्मण्याशुकारकं ज्ञानमित्येव हि साध्यम्। कर्त्तर्याशुकारकत्वस्य कर्मोपकारत्वेनाव्याप्तेः। शब्दादिव्यापारैरेवानेकान्तात्॥ ३॥

स्यादेतत्, अनुभवसिद्धमेव प्राकट्यम्। तथा हि—ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमर्थइति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत्। तदसत्। यथा हि—

**अर्थे नैव विशेषो हि निराकारतया धियाम्।**

---

प्रकाशः।

**अन्त्यशब्देति।** न चान्त्यशब्दाभिव्यक्त्या तत्र ज्ञाततैवोत्पद्यते इति वाच्यम्। तस्याव्यवहितोत्तरक्षण एव नाशात्। समवायिकारणस्य च कार्यसमानकालतानियमात्। शब्दनित्यत्वस्य च निषेधादिति भावः। **असिद्धेरिति।** ज्ञानक्रिया न स्पन्द इत्यर्थः। ननु क्रिया फलमत्र, यद्धि फलं तत्प्रमेयनिष्ठकिञ्चिज्जनकं, प्रयत्नवदात्मसंयोगवदित्यत आह **फलेति। अन्तत इति।** फलेनापि फलजननेऽनवस्थेति क्वचिद्विश्रान्तौ तेनैव व्यभिचार इत्यर्थः। आशुविनाशित्वं क्षणचतुष्टयानवस्थायित्वम्। अनियमाद्, व्यभिचारादित्यर्थः। कर्मण्याशुकारकत्वं हेतुः, कर्त्तर्याशुकारकत्वं वा, आशुकारकत्वमात्रं वा ?। नाद्यः। साध्याविशिष्टतया हेतोरसिद्धत्वादित्याह **कर्मणीति।** न द्वितीयतृतीयावनेकान्तादित्याह **कर्त्तरीति।** शब्दादिव्यापारैः पदार्थस्मृतिलिङ्गपरामर्शादिभिर्वाक्यार्थज्ञानानुमित्यादिकं कर्त्तर्याशुक्रियते। न च कर्मणि वाक्यार्थे अनुमेयादौ वा किञ्चित् क्रियते इत्यनैकान्तिकमित्यर्थः॥ ३॥

कारिकोत्तरार्द्धं व्याख्यातुं शङ्कते **अनुभवेति।** निराकारमपि ज्ञानं यथा विषयेण नीलत्वादिना नीलज्ञानाद्युच्यते, तथा ज्ञानरूपक्रिययैव ज्ञातो घट इति धीव्यपदेशौ, इत्थमनभ्युपगमे च कृतो घट इत्यादावपि कृत्यादिजनितधर्माधारो घटः स्यात्। न चैतत् त्वयेष्यते, इति परिहरति **यथा हीति।** घटक्रियेत्यत्र क्रियायामर्थो विशेषकः, कृतो घट इत्यत्रार्थे क्रिया विशेषिकेति भेदः। एवं घटज्ञानमित्यत्रार्थो ज्ञाने विशेषणं, ज्ञातो घट इत्यत्रार्थे ज्ञानं विशेषणम्।

ननु घटोऽयमिति ज्ञानं घटधर्मिककिञ्चिद्धर्मजनकं घटज्ञानत्वाद् अपेक्षाबुद्धिवत्। न चापेक्षा-

प्रकाशिका।

प्रत्यक्षत्वमपि तस्य कथमिति वाच्यम्। प्रत्यक्षविषयस्य पूर्ववर्त्तितामात्रेणैव हेतुत्वात्। आशुविना-

मकरन्दः।

**तस्येति।** नचैवं प्रत्यक्षमपि कथं स्यादिति वाच्यम्। पूर्ववर्त्तितामात्रेणैव तस्य तद्धेतुत्वात्। समवायिकारणमात्रस्यैव कार्यसमानकालत्वनियमादिति भावः।

टिप्पणी

**तत्प्रमेयनिष्ठेति।** प्रमेयेति प्रकृतभिप्रायम् फलं किञ्चिज्जनयतीत्येव व्याप्तिः। **आत्मशरीरसंयोगवदिति।** स च शरीरे चेष्टाजनकः।

**तथा,**

**क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥**

किं न पश्यसि, घटक्रिया पटक्रियेतिवत् कृतो घटः करिष्यते घट इत्यादि, तथैव गृहाण, घटज्ञानं पटज्ञानमितिवज्ज्ञातो घटो ज्ञायते इति। कथमसंबद्धयोर्धर्मधर्मिभाव इति चेद्, ध्वस्तो घट इति यथा। एतदपि कथमिति चेद्, नूनं ध्वंसेनापि घटे किञ्चित् क्रियते इति वक्तुमध्यवसितोऽसि। तन्निरूपणाधीननिरूपणो ध्वंसः स्वभावादेव तदीय इति किमत्र संबन्धान्तरेणेति चेत्। प्रकृतेऽप्येवमेव।

एतेन फलानाधारत्वादर्थः कथं कर्मेति निरस्तम्। विनाश्यवत् करणव्यापार-

---

प्रकाशः।

बुद्धित्वमुपाधिः। घटसंयोगादिजनकाऽवयवसंयोगादौ साध्याव्यापकत्वात्। मैवम्। अप्रयोजकत्वात्। अन्ययेच्छा स्वविषयनिष्ठकिञ्चिद्धर्मजनिका सविषयकत्वात् बुद्धिवदित्यादेरापत्तेः। तथापि ज्ञातो घट इति ज्ञानं विशेषणविशेष्ययोः सम्बन्धविषयकं विशिष्टज्ञानत्वात्, गौरिति ज्ञानवत्। वर्त्तमानेऽर्थे बाधकाभावात्। अन्यथा समवायोऽपि न सिद्ध्येदिति चेन्न। अतीतानागतयोर्ज्ञातताया अभावेन ज्ञातव्यवहाराभावापत्तेः। तस्य ज्ञाततासाध्यत्वात्। तत्र ज्ञानविषयावेव तद्विषयाविति चेन्न। वर्त्तमानेऽपि तयोरेव तद्विषयत्वापत्तेः। अतीतादिवर्त्तमानतत्प्रतीत्योर्वैलक्षण्याऽननुभवात्। अथ घटपटयोरेकज्ञानविषयत्वेऽपि घटत्वेन घटो ज्ञातः, पटत्वेन पटो ज्ञात इति ज्ञातताभेदभानाज्ज्ञानभिन्ना ज्ञाततेति चेन्न। तस्यैव ज्ञानस्य सम्बन्धस्तत्र तत्र तेन तेन धर्मेण निरूप्यते इति ज्ञानस्वभावादेव नियमादिति भावः। प्रतिबन्धिमुक्त्वा मूलयुक्तिमाह **तन्निरूपणेति**।

ननु ज्ञानजन्यफलानाश्रयत्वादर्थः कर्म न स्यादित्यत आह—

**एतेनेति**। परसमवेतक्रियाफलशालित्वं न कर्मत्वम्। आत्मानं जानातीत्यत्राव्याप्तेः, किन्तु करणव्यापारविषयत्वम्, तच्चात्राऽस्त्येवेत्याह **विनाश्यवदिति**। अर्थो ज्ञानस्य कर्मैव न भवति,

प्रकाशिका।

शित्वं क्षणिकत्वरूपमसिद्धमित्यत आह **क्षणचतुष्टयेति**। **अप्रयोजकत्वादि**त्युपलक्षणम्, पक्षधर्मावच्छिन्नसाध्यव्यापकस्यापेक्षाबुद्धित्वस्योपाधित्वाच्चेत्यपि द्रष्टव्यम्। सम्बन्धत्वेन ज्ञाततासिद्धिमाशङ्कते **तथापीति**। **अन्यथेति**। सम्बन्धं विनापि विशिष्टधीस्वीकार इत्यर्थः। प्रतिबन्दीमुक्त्वा मूलयुक्तिमाह **अर्थ इत्यादि**। **ऐन्द्रियकोपलम्भाभावमिति** मूलं अतीन्द्रियत्वं ज्ञानस्य तद्विषयकसाक्षात्काराभावः। स च ज्ञानातीन्द्रियतया न स्वरूपसदनुपलब्धिग्राह्य इत्यर्थः। मम इन्द्रियग्राह्यत्वेनाभिमतो य उपलम्भाभाव इति योजना। अनुपलब्धेस्तत्रैव त्वन्मते सामर्थ्यादिति भावः। अस्तु वा स्मरणम् तथापि तदनुपपत्त्या नानुभवसिद्धिः, तत्कारणैवान्यथासिद्धिरित्यत

मकरन्दः।

अप्रयोजकत्वादित्युपलक्षणम्—पक्षधर्मावच्छिन्नसाध्यव्यापकमपेक्षाबुद्धित्वमुपाधिरित्यपि द्रष्टव्यम्।
**अन्यथेति**। यदि सम्बन्धं विना विशिष्टधीः, तदेत्यर्थः।

विषयत्वेन तदुपपत्तेः । स्वाभाविकफलनिरूपकत्वञ्च तुल्यम् ।

ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयं तदभावे कथमनुमीयेत, अप्रतीतञ्च कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथानुपपत्त्या ज्ञातताकल्पनम् । तदप्यसत् । परस्पराश्रयप्रसङ्गात् । ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथानुपपत्तिस्तां ज्ञापयेत् । कुतश्च ज्ञानमतीन्द्रियम् ? इन्द्रियेणानुपलभ्यमानत्वादिति चेत् । न । अनुमानोपन्यासे साध्याविशिष्टत्वात्, अनुपलब्धिमात्रोपन्यासे तु योग्यताऽविशेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्, तद्विशेषणे तु कथमतीन्द्रियं ज्ञानमिति । तथाविधज्ञातताऽनाश्रयत्वादिति चेन्न । आश्रयासिद्धेः । व्यवहारान्यथानुपपत्त्यैव सिद्ध आश्रय इति चेन्न । ज्ञानहेतुनैव तदुपपत्तेः । तस्यात्ममनःसंयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेन्न । तावन्मात्रस्य व्यवहाराहेतुत्वात् । अन्यथा ज्ञानस्वीकारेऽपि तुल्यत्वात् । स्मरणान्यथानुपपत्त्येति चेन्न । तस्याप्यसिद्धेः । अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत् । किमतः ? । न ह्येतावता ज्ञानं तदिति सिद्ध्यति,

---

प्रकाशः ।

अतीतादेरप्यर्थत्वात्, कारकविशेषस्य च कर्मत्वात् । अतीतानागतं जानामीति द्वितीयाप्रयोगः साधुरिति तु तत्त्वम् । **स्वाभाविकेति** । यथा कर्तृव्यापारफलं विनाशः प्रतियोगिनिरूप्यः, तथा ज्ञानमपि विषयनिरूप्यमित्यर्थः ।

**तद्विशेषणे त्विति** । यदि योग्यानुपलब्ध्या योग्यस्य ज्ञानस्याऽभावो गृह्यते, तदा सिद्धमैन्द्रियकत्वं ज्ञानस्येत्यर्थः । **तथाविधेति** । साक्षात्कृतताऽनाश्रयत्वादित्यर्थः । **आश्रयेति** । ज्ञानस्याप्रत्यक्षत्वे मानान्तरासम्भवेनाश्रयस्य ज्ञानस्यासिद्धेरित्यर्थः । ज्ञानस्य प्रत्यक्षतया स्वरूपासिद्धेश्चेति भावः । अज्ञाते घटादिव्यवहारो न स्यात्, तस्य व्यवहर्त्तव्यज्ञानसाध्यत्वादिति कार्येण कारणानुमानात् सिद्ध आश्रय इत्याह **व्यवहारेति** । ज्ञानहेतुत्वेनाभिमतादेवावश्यकाद्व्यवहारोपपत्तौ न तेन ज्ञानानुमानमित्याह **ज्ञानेति** । ज्ञानहेतुसद्भावेऽपि व्यवहाराभावान्न तेनान्यथासिद्धिरित्याह **तस्येति** । ज्ञानहेतुसद्भावे सुषुप्तौ कुतो ज्ञानमेव न जायते ? तावन्मात्रस्याहेतुत्वादिति यदि, तदा या ज्ञानसामग्री सा व्यवहारसामग्र्यस्तु किमान्तरालिकेन ज्ञानेनेत्याह **तावन्मात्रस्येति** । **अन्यथेति** । ज्ञानमेव तदा किं न स्यादित्यर्थः । **तस्यापीति** । स्मरणस्यापि ज्ञानत्वेनातीन्द्रियत्वादसिद्धिरित्यर्थः । अत्राप्यनुभ-

प्रकाशिका ।

आह **अत्रापीति** ।

मकरन्दः ।

अस्तु वा स्मरणं, तथापि तदन्यथाऽनुपपत्त्या नानुभवसिद्धिः, तत्कारणेनान्यथासिद्धेरित्याह **अत्रापीति** ।

टिप्पणी ।

**योग्यानुपलब्ध्या योग्यस्य ज्ञानस्येति** । ज्ञानोपलम्भस्येत्यर्थः । अन्यथा ज्ञानाभावसाधनस्यानुपक्रान्तत्वात् तथात्वे ज्ञाततायाः अप्यभावप्रसङ्गात्, अग्रे ज्ञानसाधनेन विरोधप्रसङ्गाच्च । **अतीतानागतं जानामीति द्वितीयाप्रयोगः साधुरिति** । यथान्वादियोगे कर्मसंज्ञायामपि न तस्य कर्मता, यथा च क्रियाविशेषणस्य कल्पितकर्मसंज्ञकत्वेऽपि न कर्मता, संज्ञाफलन्तु द्वितीयाप्रयोगसाधुत्वैव, तथा प्रकृतेऽपि सविषयकार्थकधात्वर्थयोगे कर्मसंज्ञां प्रयोगबलात् परिकल्प्य द्वितीयोपपादनीया इति । द्वितीयाप्रयोगेन सार्वजनीनेन साधुः न कर्मार्थकतया तस्याद्विवन्द्वितीया प्रयोगकल्पितसंज्ञामात्रफलीभूततया साधुरित्यर्थः ॥ **अत्राप्यनुभवकारणादेवेति** । अस्तु स्मरणं

तस्यैवासिद्धेः। तथापि नियतस्य कर्तुः प्रवृत्तेः कर्तृधर्मेणैव केनचित् प्रवृत्तिहेतुना भवितव्यमिति चेत्। अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम्। सैव कथं नियताधिकरणे उत्पद्यतामिति चेन्न। ज्ञानाभ्युपगमेऽपि तुल्यत्वात्। स्वहेतोः कुतश्चिदिति चेत्। तत एव इच्छा अस्तु, किं ज्ञानकल्पनयेति।

स्यादेतत्। प्रकाशमाने खल्वर्थे तदुपादित्सादिरुपजायते, न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम्। तत इच्छायाः कारणं विलक्षणमेव किञ्चित् परिकल्पनीयं, यस्मिन् सति सुष्वापलक्षणमौदासीन्यमर्थविषयमात्मनो निवर्त्तते इति चेत्। हन्तैवं सुष्वापनिवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते। अचेतयन्नेव हि सुप्त इत्युच्यते, अचैतन्यनिवृत्तिरेव हि चैतन्यं ज्ञानमिति। तथाच कालात्ययापदिष्टो हेतुः।

एतेन क्षणिकत्वादिति निरस्तम्। अपि च किमिदं क्षणिकत्वं नाम? यद्याशुतरविनाशित्वं, तदाऽनैकान्तिकम्। अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात्।

ननु स्थायिविज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते, द्वितीयेऽपि क्षणे किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति। न प्रथमः। तस्य क्षणस्यातीत-

---

प्रकाशः।

वकारणादेव स्मरणोत्पत्तिरित्यन्यथासिद्धिरिति भावः। **तदिति**। व्यवहारनिमित्तमित्यर्थः। **तस्यैवेति**। ज्ञानासिद्ध्या व्यवहारे तज्जन्यत्वानिश्चयादित्यर्थः। कर्तृधर्मप्रवृत्तेः कर्तृधर्मकार्यत्वात् कर्तृधर्मतया ज्ञानं सिद्ध्येदित्याह **तथा पीति**। इच्छा स्वविषयविषयकात्मधर्मजन्या नियतविषयकधर्मत्वात् प्रयत्नवदित्यभिप्रेत्याह **सैवेति**। अनुमानं ज्ञान एवानैकान्तिकमित्यभिप्रेत्याह **ज्ञानेति**। न च ज्ञानहेतोरननुगमाद् व्यभिचारेण कारणत्वासम्भवः, परेषामेकशक्तिमत्त्वेनापि कारणत्वग्रहसम्भवादिति भावः। **अनुभवसिद्धमिति**। यद्यप्येकत्रात्मन्येकदा आशुतरविनाशिगुणत्रयानवस्थानादिच्छाज्ञानयोः पौर्वापर्याऽनुभवो न सम्भवति, तथापि ज्ञानव्यतिरेकाऽव्यवहितोत्तरकाले इच्छाव्यतिरेकनियमात् कार्यकारणभावग्रह इति भावः।

**एतेनेति**। कालात्ययापदेशेनेत्यर्थः। **तदानैकान्तिकमिति**। इच्छादावित्यर्थः। यादृशं, वर्त्तमानक्षणावच्छिन्नम्। अन्यादृशं द्वितीयक्षणावच्छिन्नम्। **तस्येति**। द्वितीये क्षणे इत्यनुषज्यते। **वर्त्त-**

प्रकाशिका।

**परेषामिति** तथा च तद्रीत्या ज्ञानहेतुनान्यथासिद्धिः स्यादेवेति भावः। **यद्यपीति**। कार्यकारणभावग्रहमादाय एकत्रेत्युक्तं प्रत्यक्षे विषयस्य समसमयतया हेतुत्वमित्यभिमानेन चैतदुपपादनीयम्। **तथापीति**। व्यतिरेकपदं प्रागभावपरम्, अन्यथा ज्ञाननाशेऽपीच्छासत्त्वान्नियमभङ्गापत्तेः। **वर्त्तमानेति**।

मकरन्दः।

**परेषामिति**। तथा च तन्मते ज्ञानहेतुना तदन्यथासिद्धिः स्यादेवेति भावः।

**तथापीति**। अत्र व्यतिरेकपदं प्रागभावपरम्। अन्यथा ज्ञाननाशेऽपीच्छासत्त्वान्नियमभङ्गापत्तेः।

टिप्पणी।

तथापि तदनुपपत्त्या नानुभवकल्पनं युज्यते, अनुभवं विनाप्यनुभवकारणत्वेनाभिमतादेव संस्कारा-

त्वात् । प्रत्यक्षज्ञानस्य च वर्त्तमानाभत्वात् । न चातीतमेव वर्त्तमानाभतयोल्लिखति, भ्रान्तत्वप्रसङ्गात् । न द्वितीयः, विरम्य व्यापारायोगात् । प्रथमतोऽपि तथाभ्युपगमेऽनागतावेक्षणप्रसङ्गात् । न तृतीयः । ज्ञानत्वहानेरिति महाव्रतीयाः ।

तदसत् । ज्ञानं गृह्णातीत्यस्यैवार्थस्यानभ्युपगमात् । अपि तु तदेव ग्रहणमित्यभ्युपगमः । तथा च ज्ञानं प्रथमे क्षणे यमर्थमालम्ब्य जातं, द्वितीयेऽपि क्षणे तदालम्बनमेव तत्र वेति प्रश्नार्थः । तत्र तदालम्बनमेव तदिति परमार्थः । न चैवं भ्रान्तत्वम् । विपरीतानवगाहनात् । तथापि ज्ञेयनिवृत्तौ कथं ज्ञानानुवृत्तिः, तदनुवृत्तौ वा कथं ज्ञेयनिवृत्तिरिति चेत् । किमस्मिन्ननुपपन्नम् । न हि ज्ञानमर्थश्चेत्येकं तत्त्वमेकायुष्कं वेति । सत्यपि वा क्षणिकत्वे कथमप्रत्यक्षम् ? इत्थं यथोच्यते—न स्वप्रकाशं, वस्तुत्वादितरवस्तुवत् । न च ज्ञानान्तरग्राह्यं, ज्ञानयौगपद्यनिषेधेन समानकालस्य तस्याभावात् । ग्राहककाले ग्राह्यस्यातीतत्वेन वर्त्तमानाभत्वानुपपत्तेः । ग्राह्यकाले च ग्राहकस्यानागतत्वात्—इति चेत् । नन्वेवं ज्ञाततापि न प्रत्यक्षा स्यात्, क्षणिकत्वात् । कथम् ? इत्थम्—न स्वप्रकाशा वस्तुत्वात् । न जनकग्राह्या, अनागतत्वात्, विरम्य व्यापारायोगाच्च । न समसमयज्ञानग्राह्या, ज्ञानजनकेन्द्रियसम्बन्धाननुभवात् । न च तदुत्तरज्ञानग्राह्या, तदानीमतीतत्वादिति । क्षणिकत्वमेव तस्याः कुत इति चेत् । त्वदुक्तयुक्तेरेव ।

तथाहि—यं क्षणमाश्रित्य जाता ततः परमपि तमेवाश्रयतेऽन्यं वा, न वा कमपीति । तत्र न प्रथमः । तस्य तदानीमसत्त्वात् । न द्वितीयः । अप्रतिसंक्र-

---

प्रकाशः ।

**मानाभत्वादिति** । वर्त्तमानविषयत्वादित्यर्थः । **विरम्येति** । ज्ञानं हि यं विषयीकृत्य उत्पन्नं, न तं जहाति, नान्यं वा विषयीकरोतीति ज्ञानस्वभावादित्यर्थः । न च प्रथमत एव तद्विषयीकरणे हेतुरस्ति, भावित्वेनार्थस्य तदानीमवर्त्तमानत्वादित्याह **प्रथमतोऽपीति** । द्वितीयक्षणे पूर्वक्षणविषयीभूतस्यार्थस्य वर्त्तमानता भासते, तथाच तत्क्षणनाशेऽपि तथाविधमर्थं विषयीकुर्वज्ज्ञानमभ्रान्तमेवोत्तरक्षणेऽवतिष्ठते इति नोक्तदोष इत्याह **तत्रेति** । **किमस्मिन्निति** । ज्ञानार्थयोर्यौगपद्ये इत्यर्थः । **स्वप्रकाश**मिति । स्वप्रकाशत्वाप्रसिद्धावपि इदं घटज्ञानं नैतस्य विषयो ज्ञानत्वादित्यर्थः । **ग्राहकेति** । ग्राहकज्ञानकाले ग्राह्यं ज्ञानं नास्ति, ग्राह्यज्ञानकाले च तद्ग्राहकं ज्ञानमनागतमित्यर्थः । ज्ञातताजनकं यज्ज्ञानं तदेव न तद्ग्राहकं, तत्काले ज्ञाततायाः अनागतत्वेन वर्त्तमानत्वाभावादित्याह **न जनकेति** । ननु ज्ञातताजनकमेव ज्ञानं ज्ञाततां जनयित्वा तां ग्रहीष्यतीत्यत आह **ज्ञानजनकेति** । ज्ञाततासमकालोत्पन्नज्ञानेन न तद्ग्रहः, ज्ञातताजननोत्तरकाले तदिन्द्रियसम्बन्धस्य प्राप्त्या तत्समकालं तदभावादित्यर्थः । **अनुभवेति** । भू प्राप्तावित्येतस्य रूपम् । अप्रतिसंक्रमादाश्रयान्तरागम-

प्रकाशिका ।

प्रथमक्षणावच्छिन्नतेत्यर्थः । **तत्क्षणेति** । प्रथमक्षणेत्यर्थः । **तथाविधमिति** । प्रथमक्षणावच्छिन्नमित्यर्थः । तथा च पाकरक्ते श्यामप्रतीतिवत् प्रमात्वमिति भावः । **स्वप्रकाशत्वाप्रसिद्धाविति** ।

मकरन्द ।

**वर्त्तमानतेति** । प्रथमक्षणावच्छिन्नता भासते इत्यर्थः ।

**तत्क्षणेति** । प्रथमक्षणनाशेऽपीत्यर्थः । तथाविधं प्रथमक्षणावच्छिन्नमित्यर्थः । पाकरक्ते श्यामोऽयमितिवदिति भावः ।

**स्वप्रकाशत्वाप्रसिद्धाविति** । सिद्धौ वा तत्रैवानैकान्तिकमिति भावः ।

मात्। एकक्षणावगाहिनि च ज्ञाने तदन्यक्षणाऽऽश्रयज्ञातताफलत्वेन भ्रान्तत्वप्र-

प्रकाशः।

नादित्यर्थः। **एकक्षणेति**। अन्यविषयकज्ञानेनान्यत्र ज्ञातताजनने जनकज्ञानं भ्रमः स्यादित्यर्थः।

प्रकाशिका।

तत्सिद्धौ च तत्रैवानैकान्तिकत्वमिति भावः। **अन्यविषयकेति**। ज्ञातता चाव्यवहितपूर्वक्षण-मेवावच्छेदकतयावलम्बत इति प्रमायामप्येवंसति भ्रमत्वप्रसङ्ग इत्यवधेयम्। न च रजतज्ञा-नस्यापि शुक्तिविषयकत्वान्नान्यविषयकत्वमिति मूलस्थदृष्टान्तासङ्गतिरिति वाच्यम्। अन्यथा-ख्यात्यनभ्युपगन्तृमतेन मूलस्थदृष्टान्तोपपत्तेः, तथा च तन्मते यथा शुक्त्यविषयकरजतज्ञानस्य शुक्तिनिष्ठज्ञातताजनकतया भ्रमव्यवहारास्पदत्वं तथात्रापि स्यादित्यर्थः। न च तदविषयकत्वे कथं

मकरन्दः।

**अन्यविषयकेति**। न च रजतज्ञानस्यापि शुक्तिविषयत्वान्नान्यविषयकत्वमिति वाच्यम्। परमतेऽन्यथाख्यात्यनभ्युपगमेनातथात्वात्। तथा च शुक्त्यविषयकरजतस्मरणस्य शुक्तिनिष्ठज्ञातता-जनकतया यथा भ्रान्तत्वं, तथा प्रकृतेऽपि स्यादिति भावः। न च ज्ञानस्य स्वविषयज्ञातताजननेऽ-तिप्रसङ्ग इति वाच्यम्। भेदाग्रहादेर्नियामकत्वादन्यथा व्यवहारजननेऽपि तदापत्तेरित्याशयः।

टिप्पणी

धानेन स्मरणोपपत्तेरिति भावः। **अन्यविषयकज्ञानेनान्यत्र ज्ञातताजनन इति**। अन्यधर्मा-वच्छिन्नविषयताकज्ञानेन अन्यधर्मावच्छिन्ने ज्ञातताजनन इत्यर्थः, तेन न रजतादीत्यादिमूलस्थ-दृष्टान्तासङ्गतिः, यथाश्रुते रजतज्ञानस्यापि शुक्तिविषयकत्वेनान्यत्र ज्ञाततेत्यादेरभावात्। केचित्तु अन्यथाख्यात्यनभ्युपगमपक्षे स्वाविषयनिष्ठज्ञातताजनकत्वमेव भ्रमत्वम्। इदं रजतमिति भ्रमाभिषिक्त-स्थले रजतप्रमया शुक्तौ ज्ञातताजननात्तत्र यथा भ्रमत्वं तथा प्रकृते वर्त्तमानक्षणावच्छिन्नविषयज्ञाने-नान्यत्रानागतक्षणावच्छिन्ने ज्ञाततापेक्षया वर्त्तमानावच्छिन्ने ज्ञातताजननाद् भ्रमत्वमित्याहुः। तच्चि-न्त्यम्। ज्ञाततावादिभट्टमते उत्तरकर्तृन्यायमते चान्यथाख्यात्यभ्युपगमात्; तदन्यतरमतावलम्बेनैव कस्यचिदित्यर्थस्य वक्तुं युक्तत्वात्। किञ्चान्यथाख्यात्यनभ्युपगन्तृमते ज्ञातताया एवानभ्युपगमात् तस्या ज्ञानज्ञानार्थमभ्युपगमेन स्वप्रकाशतामतेऽन्यथैव तत्सिद्धेः, स्वविषयकेनेदंज्ञानेनैव च ज्ञाततोत्पत्तेः सम्भवे रजतज्ञानस्य तदुत्पादकत्वे मानाभावादतिप्रसङ्गाच्च। न च रजतज्ञानेदंज्ञानयोर्भेदग्रहाद् रजतार्थिनः पुरोवर्त्तिनि प्रवृत्त्यादिवत् पुरोवर्त्तिनि ज्ञाततामपि रजतज्ञानं जनयिष्यतीति वाच्यम्। शुक्तिज्ञानमात्रस्य रजतार्थिप्रवृत्तिजनकत्वादर्शनाद्, रजतज्ञानभेदाग्रहापेक्षायामस्तु हि रजतज्ञानस्य प्रवृत्तावुपयोगः, शुक्तिज्ञानमात्रस्य तत्र ज्ञातताजनकत्वस्य क्लृप्ततया तत्र भेदाग्रहस्यापेक्षाकल्प-नस्यासम्भवात्। न च बाधोत्तरं रजतत्वेन शुक्तिर्ज्ञातेत्यनुभवाद्रजतत्वेन ज्ञाततोत्पत्तौ रजतज्ञाना-पेक्षा स्यादिति वाच्यम्। विषयत्वातिरिक्तस्य ज्ञातत्वस्य रजतत्वाद्यवच्छिन्नत्वे मानाभावात्। भावे वा किमपराद्धं हि रजतत्वेन शुक्तिविषयतया तथासत्यन्यथाख्यात्यापत्तिः; प्रभाकरैश्च रजतत्वेन ज्ञातत्वस्य रजतत्वज्ञानभेदेनागृहीतशुक्तिज्ञानविषयत्वरूपत्वस्यैव स्वीकरणीयत्वात्। एव-न्दार्ष्टान्तिके घटस्यैव विषयत्वाज् ज्ञातताधारत्वाच्चान्यत्वभावाद् विशिष्टताम्पुरस्कृत्य भेदेऽन्यथापि सङ्गतेरुक्तत्वात्। न चान्यथाख्यातिपक्षे कथं सङ्गतिः, यस्य ज्ञातता तस्यैव विषयत्वे पूर्वक्षणादीनाम-विषयत्वेनान्यथाख्यात्यभावप्रसङ्गात्, विषयत्वस्य ज्ञाततानियतत्वे ज्ञातताधारस्याविषयत्वेन ज्ञान-स्यान्यथाख्यातित्वासम्भवादिति वाच्यम्। प्रकारविशेष्ययोरुभयोरेव ज्ञातताया विनिगमनाविरहे-णानुभवानुरोधेन च स्वीकरणीयत्वात्। प्रकारीभूतक्षणज्ञाततामादाय तस्यापि विषयत्वात् विशेष्ये ज्ञाततायाः क्षणान्तरसम्बन्धे स्वीकारे तस्य विषयत्वापत्त्याऽन्यथाख्यातेरापादनीयत्वात्। वस्तुतो

**सङ्गात्, रजतावगाहिनि पुरोवर्त्तिवृत्तिज्ञाततफल इव। न चान्यमपि क्षणं ज्ञानमवगाहते, तदानीं तस्यासत्त्वात्। न तृतीयः। निःस्वभावताप्रसङ्गात्। न ह्यसौ तदानीं तदीयान्यदीया वेति। अतीतेनापि तेनैव क्षणेनोपलक्षितानुवर्त्तते इति चेत्। एवं तर्हि वर्त्तमानार्थता प्रकाशस्य न स्यात्। अन्यथा ज्ञानस्यापि तथाऽनुवृत्तेः को**

---

प्रकाशः।

ननु क्षणान्तरमपि ज्ञातताजनकज्ञानस्य स्वतन्त्रो विषय इति न तद्भ्रम इत्यत आह **न चेति। पूर्वक्षणे** तदुत्तरक्षणस्यावर्त्तमानत्वादित्यर्थः॥ **एवं तर्हीति॥ विषयवर्त्तमानतया ज्ञानस्य** वर्त्तमानाऽर्थता, **सा च ज्ञानस्या**तीतक्षणोपलक्षितविषयतायां **न स्यादि**त्यर्थः॥ तथेति॥ अतीतेनापि क्षणेनोपलक्षितस्य वर्त्तमानार्थतयाऽनुवृत्तेरित्यऽर्थः। ननु ज्ञाततापक्षे अर्थनिरपेक्षवर्त्तमान-

प्रकाशिका।

तन्निष्ठज्ञातताजनकत्वमिति वाच्यम्। भेदाग्रहसाहित्येन व्यवहारजनकत्ववदुपपत्तेः। **विषय इति।** तथा च विषयतानिष्ठैव ज्ञाततेति न तज्जनकज्ञानं भ्रम इति भावः। **पूर्वक्षण इति।** तथा चोत्तरक्षणस्य ज्ञानविषयत्वान्न ज्ञातताश्रयत्वमिति भावः। **विषयवर्तमानतये**ति। ज्ञानविषयीभूतक्षणविशिष्टज्ञातता-सम्बन्धेनेत्यर्थः। विषयतायां ज्ञाततायामित्यर्थः। **न स्यादिति।** उत्तरक्षणे विशेषणीभूतक्षणविवक्षणादित्यर्थः। एतेनातीतक्षणोपलक्षितज्ञातताऽनुवृत्तौ पूर्वपक्षितायां यथाश्रुतविषयेत्यादिप्रकाशानुसारेणोत्तरमसङ्गतमिति परास्तम्। **एवन्तर्हीत्यादि** फक्किकायां प्रकाशपदं ज्ञानपरमेव तेन न प्रकाशविरोधः। मूले एव च नहीत्यादौ अर्थनिरपेक्षेत्यादौ अथ मा भूदित्यादौ च प्रकाशपदं ज्ञाततापरमित्यवधेयम्।

मकरन्दः।

**सा च ज्ञानस्येति।** यद्यपि ज्ञानस्यातीतक्षणोपलक्षितविषयता न पूर्वपक्षिता, किन्तु ज्ञाततायाः अतीतज्ञानोपलक्षितायाः क्षणान्तरेऽनुवृत्तिः, तत्र च ज्ञानस्य वर्त्तमानार्थता न स्यादित्युत्तरमसङ्गतम्, तथापि ज्ञानस्य ज्ञाततागोचरस्यातीतक्षणोपलक्षितज्ञातताविषयतायां वर्त्तमानार्थता न स्यादित्यर्थो बोध्यः। न चातीतक्षणस्योपलक्षणत्वमेव ज्ञाततायाश्च वर्त्तमानत्वमेवेति कथं वर्त्तमानार्थता, तज्ज्ञानस्य स्यादिति वाच्यम्। निराश्रयज्ञातताया ज्ञानगोचरत्वे ज्ञाततायामुपलक्षणस्यापि क्षणस्य ज्ञाने विशेषणत्वाभ्युपगमात्। वस्तुतो वर्त्तमानार्थता वर्त्तमानाश्रयता प्रकाशस्य ज्ञातताया न स्यादिति मूलार्थः प्रतिभाति। अत एवान्यथा ज्ञानस्यापीति फक्किका सङ्गच्छते। न हीत्यादि-फक्किकायामपि प्रकाशपदं ज्ञाततापरमेव, अन्यथा तद्वैयर्थ्यापत्तेः। प्रकाशे 'नाश्रीयत' इत्यग्रिम-फक्किकायामपि तथैवेति तदनुसारेण सर्वं योज्यमिति युक्तमुत्पश्यामः।

टिप्पणी।

विषयत्वानुपपत्तावेव तात्पर्यम् अविषये ज्ञाततोत्पत्तावतिप्रसङ्गात्। विषये च ज्ञाततोत्पत्तेरसम्भवान्निःस्वभावं ज्ञानं स्यादिति। भ्रमत्वापादनस्य चायमाशयः—प्रत्यक्षज्ञानस्य वर्त्तमानावभासकत्वानुरोधेन वर्त्तमानक्षणस्य विषयत्वं त्वयाभ्युपेयम्, ज्ञाततामभ्युपगच्छताऽविषये ज्ञातत्वोत्पत्तौ ज्ञातताश्रयक्षणान्तरावच्छिन्नस्यापि विषयत्वमभ्युपेयमिति भ्रान्तत्वापत्तिस्तवेति। एतेनातीतप्रकारीभूतवर्तमानक्षणे ज्ञाततोत्पत्त्यसम्भवेऽपि न क्षतिः। न हि विषयता ज्ञाततानियता विषयत्वस्य स्वरूपसम्बन्धात्मकस्यैव तेनाभ्युपगमात्, ज्ञातता हि विषयतानियता अन्यथातिप्रसङ्गादभ्युपेयेति सर्वमवदातम्। **एवन्तर्हीतीति। विषयवर्त्तमानतया ज्ञानस्येति।** यद्यपि पूर्वापरमूलपर्यालोचनया प्रकाशपदम्मूलस्थं ज्ञाततार्थकमेव प्रतीयते, तथापि ज्ञातताया वर्त्तमानार्थत्वाभावे ज्ञानस्य वर्त्तमानार्थावभासत्वानुपपत्तिरेव दोषः पर्यवस्यतीति पर्यवसितार्थकथनमेवेदं बोध्यं न तु व्याख्यानम्। यद्वा ज्ञानस्य ज्ञाततागोचरस्यातीतक्षणोपलक्षितज्ञातताविषयतया वर्त्तमान-

दोषः। न हि वर्त्तमानार्थप्रकाशसम्बन्धमन्तरेण ज्ञानस्यान्या वर्त्तमानावभासता

---

प्रकाशः।

**ज्ञाततासम्बन्धमात्रेणैव तज्जनकज्ञानस्य वर्त्तमानाभताऽर्थात्ययेऽप्युपपद्यते** । त्वन्नयेऽर्थस्यातीतत्वाज्ज्ञाततायाश्चाभावात् **सा नोपपद्येतेत्यत** आह **न हीति** ॥ **विषयवर्त्तमानतया** वर्त्तमानाभताज्ञानस्य न स्ववर्त्तमानतया । **ज्ञाततायाश्च क्षणिकत्वेन तज्ज्ञानकाले** नाशा-

प्रकाशिका।

**अन्यथेतिमूलम्** । प्रथमे क्षणे तद्विशिष्टज्ञाततासम्बन्धमात्रेणैवोत्तरक्षणेऽपि ज्ञानस्य वर्त्तमानार्थत्व इत्यर्थः । **विषयवर्त्तमानतयेति** । ज्ञानविषयीभूतक्षणविशिष्टज्ञाततासम्बन्धेनेत्यर्थः । **नस्ववर्त्तमानतयेति** । ज्ञाततामात्रवर्त्तमानतयेत्यर्थः । **ज्ञाततायाश्चेति** पूर्वक्षणविशिष्टाया विशेषणविरहादुत्तरक्षणेऽसत्त्वमेव क्षणिकत्वम् । **तदुत्तरज्ञानकाल इति** वस्तुगतिमनुरुध्योक्तम्, तदुत्तरकाल इत्येव विवक्षितम् । न **विषयवर्त्तमानतेति** । न पूर्वक्षणात्मकविषयविशिष्टज्ञाततावर्त्तमानत्वमित्यर्थः।

मकरन्दः।

**तज्जनकेति** । तद्विषयज्ञानस्येत्यर्थः, तेन नोत्तरविरोधः । ननूक्तं वर्त्तमानज्ञाततासम्बन्धमात्रेणैव वर्त्तमानाभत्वमित्यत आह **ज्ञाततायाश्चेति** । यदि च स्थूलकालाश्रयत्वान्न तस्याः क्षणि-

टिप्पणी।

कालस्याविषयतया वर्त्तमानावभाषता न स्यादित्यर्थः । यतः प्रकाशस्य ज्ञाततया न वर्त्तमानार्थता न वर्त्तमानार्थस्वरूपताऽतीतकालघटितत्वात् स्वज्ञानक्षणे स्वस्यावर्त्तमानत्वाच्चेति मूलार्थः । **वर्त्तमानज्ञाततासम्बन्धमात्रेणेति** । जन्यजनकभावरूपसम्बन्ध इत्यर्थः । **वर्त्तमानाभतार्थात्ययेऽपीति** । वर्त्तमानक्षणावच्छिन्नस्य द्वितीयक्षणेऽत्ययेऽपि । **उपपद्यत इति** । तत्रैव द्वितीयक्षणेऽपि यदि ज्ञानं स्वीक्रियते तदाभ्युपपद्यते इत्यर्थः, तेनेदानीमप्रत्यक्षत्वाय ज्ञाने क्षणिकत्वस्य स्वीकृतत्वेऽपि न विरोधः । **त्वन्नये**=न्यायनये । **सा नोपपद्यत** इति । द्वितीयक्षण इति शेषः । **विषयवर्त्तमानतयेति** । ज्ञानविषयीभूतक्षणोपलक्षितज्ञाततासम्बन्धेन ज्ञानस्य द्वितीयक्षणे वर्त्तमानतयेत्यर्थः । वस्तुतो विषयस्य या वर्त्तमानता ज्ञानक्षणरूपा तेनैव ज्ञाततोपलक्षकेन वर्त्तमानक्षणोपलक्षितज्ञाततयेत्यर्थः । **वर्त्तमानाभताज्ञानस्य न स्ववर्त्तमानतया** इति । ज्ञाततामभ्युपगम्यापि त्वया ज्ञाततायाः उपलक्षिकया विषयस्य वर्त्तमानतया ज्ञानविषयवर्त्तमानक्षणरूपया अर्थात्तादृशक्षणोपलक्षितज्ञाततयैव वर्त्तमानाभता वाच्या, तथासति मयापि ज्ञानस्य वर्त्तमानावभासता तादृशक्षणोपलक्षितविषयकत्वेनैव द्वितीयक्षणेऽप्युपपादयितुं शक्येति क्षणिकत्वस्य ज्ञाने ज्ञाततायाश्च स्वीकारो नावश्यक इत्याशयः । न ज्ञानस्य वर्त्तमानाभासता स्वस्य ज्ञानस्य वर्त्तमानतया त्वया वाच्या। तथात्वे वेत्यस्य तथात्वे चेत्यर्थः। तथात्वे ज्ञानवर्त्तमानतया वर्त्तमानावभासरूपत्वे। इदञ्च प्रकाशव्याख्यानम् । अतीते ज्ञानत्वासम्भवात् मूलस्थप्रकाशानुवृत्तीत्यत्रापि प्रकाशपदस्य ज्ञानार्थत्वमभ्युपेत्य। ननु मया न वर्त्तमानक्षणोपलक्षितज्ञाततया न वा ज्ञानवर्त्तमानतया किन्तु वर्त्तमानक्षणावच्छिन्नार्थनिष्ठज्ञाततया सोच्यत इति यद्यापत्तितो ब्रूयात्तत्राह **ज्ञाततायाश्चेति** । घटादिज्ञानस्थलेऽपि यद्यपि ज्ञाततायाः तथात्वासम्भवस्तथापि ज्ञातताज्ञानस्थले तादृशज्ञाततायाः ज्ञानविषयस्य ज्ञातत्वस्यैवासम्भवेन सर्वथाऽसम्भव इति तथोक्तम् । यद्वा स्ववर्त्तमानतया इत्यर्थस्य ज्ञाततामात्रवर्त्तमानतयेत्यर्थः । मूलस्थप्रकाशपदमपि ज्ञाततापरमेव भवति तदेव युक्तन्नहीत्यादिपूर्वग्रन्थे प्रकाशपदस्य तदर्थकत्वात् ज्ञानरूपप्रकाशस्य ज्ञानेनासम्बन्धादिति तस्यैव क्षणिकस्य ज्ञातत्वस्य ज्ञानसत्त्वकाले [ज्ञातंतानिष्ठज्ञाततोत्पत्त्या आधारत्वेनाभिमत अभावात्तत्र ज्ञाततोत्पत्तेरसम्भवेन ज्ञाततावर्त्तमानत्वेन वर्त्तमाना-

नाम । अर्थनिरपेक्षप्रकाशनानुवृत्तिमात्रेण तथात्वे भूतभाविविषयस्यापि ज्ञानस्य तथाभावप्रसङ्गात् । अथ मा भूदयं दोष इति स्थूल एव वर्त्तमानः प्रकाशेनाश्रीयते इत्यभ्युपगमः, तदा तज्ज्ञानस्यापि स एव विषय इति तस्यापि न क्षणिकत्वमिति ।

ननु ज्ञानमैन्द्रियकं चेद् विषयसञ्चारो न स्यात् । संजातसम्बन्धत्वात् । न च जिज्ञासानियमान्नियमः । तस्याः संशयपूर्वकत्वात् । तस्य च धर्मिज्ञानपूर्वकत्वात् । धर्मिणश्च सन्निधिमात्रेण ज्ञाने जिज्ञासापेक्षणे वा उभयथाऽप्यनवस्थानादिति । तन्न । ज्ञाततापक्षेऽपि तुल्यत्वात्, तस्या अपि हि ज्ञेयत्वे तत्परम्पराज्ञानापाताज्जिज्ञासानियमस्य च तद्वदनुपपत्तेः । न च इन्द्रियसम्बन्धविच्छेदाद्विराम इति युक्तम् । आत्मप्रकाश्याव्यापनात् । स्वभावत एव काचिदसावजिज्ञासितापि ज्ञायते, न

---

प्रकाशः ।

ऽर्थविषयवर्त्तमानता तथात्वे वा अतीतादिविषयकमपि ज्ञानं वर्त्तमानाभं स्यात् । एवञ्चाग्रिम क्षणे अतीतज्ञाततविषयकं ज्ञानं न वर्त्तमानाभं स्यादित्यर्थः ॥

ननु यदि ज्ञानं मानसं स्यात्तदा विषयान्तरग्रहो न स्यात्, संयुक्तसमवायरूपाया मनःप्रत्यासत्तेः सदा सत्त्वेन ज्ञानपरम्पराया एव ज्ञेयत्वादित्याह—

नन्विति ॥ ननु ज्ञानं योग्यं मनःप्रत्यासन्नमपि जिज्ञासाज्ञेयमिति तन्नियमान्नोक्तदोष इत्यत आह न चेति ॥ सामान्यतो ज्ञाते विशेषतश्चाज्ञाते जिज्ञासा जायते इति सामान्यतो ज्ञानानुभवो वाच्यः, तस्यापि यदि जिज्ञासानैरपेक्ष्येण सन्निकर्षमात्राद् ग्रहः, तदाऽस्य सदातनत्वाद् ग्रहणपरम्पराया अविच्छेदादनवस्था । अथ तद्ग्रहेऽपि सा नियामिका, तदा तस्या अपि सामान्यतो ज्ञानार्थं जिज्ञासा वाच्या । साऽपि सामान्यज्ञानपूर्विका, तदपि जिज्ञासाऽधीनजन्मेति पूर्वपूर्वज्ञानापेक्षायामनवस्थेत्युभयथानवस्थार्थः । अत्र किञ्चिज्ज्ञानमजिज्ञासितं ज्ञायते, किञ्चिज्जिज्ञासितं, किञ्चिन्न ज्ञायत एवेत्यनियमान्नोक्तदोष इत्यभिप्रेत्य समाधातुं प्रतिबन्दिमुखेनाह ज्ञाततापक्षेऽपीति ॥ ननु चक्षुरादिना सम्बन्धविच्छेदाज्ज्ञातताग्रहविच्छेदः स्यादित्यत आह न चेति ॥ बाह्ये तथा

प्रकाशिका ।

तथात्वे वेति । ज्ञाततावर्त्तमानत्वमात्रेणैव ज्ञानस्य वर्त्तमानाभावत्व इत्यर्थः । अतीतेति । क्षणरूपविशेषणात्ययादेवातीतत्वम्, एवञ्चैतत्प्रवट्टकस्य कुटिलिकाव्याख्यां विना मूलप्रकाशयोर्न परस्परं

मकरन्दः ।

कत्वं, तदा ज्ञानस्यापि न स्यादित्याकर एव स्फुटम् । तथात्वे वेति । यदि स्ववर्त्तमानतया वर्त्तमा-

टिप्पणी ।

वभासत्वासम्भव इत्यर्थः । अतीतादावपि यदि ज्ञाततोत्पत्तिरभ्युपेयते तदाह तथात्वे वेति । अथवा स्वाविषयनिष्ठयापि यदि वर्त्तमानज्ञाततया ज्ञातताज्ञानस्य स्वविषयघटादिनिष्ठवर्त्तमानज्ञाततया वर्त्तमानावभासत्वं स्यात्तत्राह तथात्वे वेति । अतीतादिज्ञानस्थलेऽपि कदाचित् स्वाव्यवहितपूर्वक्षणोत्पन्नवर्त्तमानविषयज्ञानजन्यज्ञाततायाः स्वोत्पत्तिक्षण उत्पत्तिसम्भवेन तया वर्त्तमानया तस्यापि वर्तमानाभासत्वं स्यादित्यर्थः । एवञ्चेति । विषयवर्त्तमानतयैव वर्त्तमानाभत्वे चेत्यर्थः । ज्ञातताज्ञानस्थले ज्ञाततया कथमपि वर्त्तमानावभासत्वं नोपपादयितुं शक्यते इति ज्ञानविषयक्षणोपलक्षितविषयकत्वेन ज्ञानस्य वर्त्तमानावभासता द्वितीयक्षणेऽप्युपपादयितुं शक्येति न ज्ञानस्य क्षणिकत्वं न वाऽप्रत्यक्षत्वम्, नापि च ज्ञानज्ञानोपपादनाय ज्ञातत्वञ्च स्वीकरणीयमिति तात्पर्य्यार्थः । ज्ञाततायाश्च क्षणिकत्वेन तज्ज्ञानकाल इति । इदमुपलक्षणम्—ज्ञातताऽवर्त्तमानतया वर्त्तमानावभासत्वे विनश्यदवस्थविषयक्षणोत्पन्नप्रत्यक्षस्य तथात्वं न स्यात स्वोत्तरक्षणे विषयाभावेन ज्ञाततोत्पत्तेर-

तु सर्वेति चेत्, तुल्यम्। प्रागुत्पन्नज्ञाततास्मरणजनितजिज्ञासः समुन्मीलितनयनः सञ्जातज्ञानसमुत्पादितप्राकट्यं जिज्ञासुरेव प्रतिपद्यते इत्यतो नानवस्थेति चेत्। तुल्यमेतत्॥

ननु ज्ञानं न सविकल्पकग्राह्यं, तस्य निर्विकल्पकपूर्वकत्वाद् निर्विकल्पकगृहीतस्य तावत्कालानवस्थानात् तस्य तेनैव विनाशात्। नापि केवलनिर्विकल्पकवेद्यम्। तस्य सविकल्पकोन्नेयत्वेन तदभावे प्रमाणाभावात्। न च समवायाभाववन्निर्विकल्पकनिरपेक्षसविकल्पकगोचरत्वं ज्ञानस्येति साम्प्रतम्। तयोर्विशेषणांशस्य प्राग्ग्रहणादनुमानादिवत्तदुपपत्तेः। प्रकृते तु ज्ञानत्वादेरनुपलब्धेरगृहीत-

प्रकाशः।

सम्भवेऽप्यात्मज्ञाततायां मनःसम्बन्धविच्छेदो न सम्भवतीत्यर्थः॥ **तुल्यमिति**॥ ज्ञानमपि किञ्चिदुद्भवत्वाभावात्तद्ग्राहकात्ममनःसंयोगविशेषाभावाद्वा न ज्ञायते इत्यर्थः। पूर्वोत्पन्नज्ञाततायाः सामान्यतोग्रहादिदानीन्तन्यपि ज्ञातता ज्ञातैवेति तत्संस्काराधीनज्ञाततासामान्यजिज्ञासायामिन्द्रियसन्निकर्षादिदानीन्तनी ज्ञातता ज्ञायते इत्येवमनवस्थापरीहारो ज्ञानप्रत्यक्षत्वेऽपि तुल्य इति शङ्कोत्तराभ्यामाह **प्रागिति**॥ **तावत्कालेति**॥ घटज्ञानस्य तन्निर्विकल्पकाज्ज्ञानत्वविशिष्टज्ञानकाल एव नाशाद् विशेष्यनाशे सति तद्विशेष्यकज्ञानत्वविशिष्टज्ञानानुत्पादः स्यात्। प्रत्यक्षविशिष्टज्ञानस्य स्वसमानकालीनविशेष्यकत्वनियमादित्यर्थः॥ **तस्येति**॥ निर्विकल्पकस्यातीन्द्रियत्वाभ्युपगमेन सविकल्पकैकोन्नेयतया तदभावे तत्र मानान्तराभावादित्यर्थः॥ **समवायेति**॥ समवायवदभाववच्चेत्यर्थः॥ **तयोरिति**॥ समवायाभावयोर्विशेषणयोः सम्बन्धिप्रतियोगिनोर्ज्ञानानन्तरमेव ज्ञानाद्विविशिष्टज्ञानसामग्रीनियमेन तथात्वेऽपि ज्ञाने ज्ञानत्वरूपविशेषणस्य पूर्वमज्ञानात् कथं तद्विशिष्टज्ञानमित्यर्थः। **तथाच जानामीति वर्त्तमान**ज्ञानवैशिष्ट्यज्ञानमात्मनि न जायेतेति भावः। अत्र **किञ्चिज्ज्ञानं निर्विकल्पकैक**वेद्यं किञ्चित्सविकल्पकैकवेद्यं **किञ्चिचावेद्य**मेवेत्यऽनियम

प्रकाशिका।

सङ्गतिरिति निपुणेन निरूपणीयम्। **उद्भवत्वाभावादिति**। योग्यविशेषगुणत्वेन ज्ञानेऽप्युद्भवत्वस्वीकार इत्ति भावः। **मनःसंयोगे**ति। अन्यतरकर्म्मजत्वव्याप्यजातिविशेषविशिष्टसंयोगाभावादित्यर्थः। इदं च समाधिद्वयमापाततो वस्तुतः फलबलेन विषयान्तरज्ञानसामग्री सुखादिसामग्री च प्रतिबन्धिकेति कल्पनीयमिति सिद्धान्तो द्रष्टव्यः। ननु विषयस्य पूर्ववर्त्तितामाणैव साक्षात्कारहेतुत्वमिति ज्ञाननाशक्षणे अनुव्यवसायोत्पत्तौ न विरोध इत्यत आह **तथाचेति**। तथा स्वीकारेऽपि जानामीति वर्त्तमानतत्प्रतीतिरनुपपन्नैवेत्यर्थः। **निर्विकल्पकैकेति**। निर्विकल्पकत्वं च ज्ञानत्वांशे विषयस्य पूर्वज्ञातत्वेन तदंशे विशिष्टज्ञानसामग्रीसत्त्वादित्यवधेयम्। इदञ्चाग्रे वस्तुतो

मकरन्दः।

नाभत्वमित्यर्थः। **एवञ्चेति**। वर्त्तमानज्ञाततासम्बन्धस्यापि तदानीमभावादिति भावः। **उद्भवत्वाभावादिति**, प्राचीनमते। **निर्विकल्पकैके**ति। तज्जन्याग्रिमविशिष्टज्ञानस्यैव तत्र मानत्वान्न पूर्व-

टिप्पणी

सम्भवात्। एतेन ज्ञाततायाः क्षणिकत्वस्य तदभिमतत्वेऽपि न क्षतिः। **संयोगविशेषाभावाद्वा न ज्ञायत इत्यर्थ इति**। इदमापाततः, वस्तुतः फलबलेन बहिरर्थज्ञानसामग्र्याः सुखादिसामग्र्याश्च प्रतिबन्धकत्वकल्पनाद् विषयान्तरसञ्चरसम्भवः। **तथा च जानामीति वर्त्तमानज्ञानेति**। विषयस्य पूर्ववर्त्तितयैव हेतुत्वे निर्विकल्पकोत्तरं ज्ञानप्रत्यक्षसम्भव इत्यत आह **वर्त्तमानेति**। तथा च विषयस्यावर्त्तमानत्वेन वर्त्तमानाभासो न स्यादिति भावः। **किञ्चिद्ज्ञानं निर्विकल्पकैकेति**। प्रथमज्ञानं तस्य सविकल्पकासम्भवात्। **किञ्चित् सविकल्पकैकवेद्य-**

विशेषणायाश्च बुद्धेर्विशेष्यानुपसंक्रमात् कथमेवं स्यात् । न । उत्पन्नमात्रस्यैव वाह्यविषयज्ञानस्यालोचनात् । ततस्तत्पुरःसरं प्रथमत एव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनात् । इन्द्रियसन्निकर्षस्य तदैव विशेषणग्रहणलक्षणसहकारिसम्पत्तेः। व्यक्त्यन्तरसमवेतमपि हि सामान्यं गृहीतं तदेवेत्युपयुज्यते, अन्यथा अनुमानादि-

प्रकाशः ।

इति नोक्तदोष इत्यभिप्रेत्याह **उत्पन्नेति** ॥ व्यवसायनाशक्षणोत्पन्नज्ञानान्तरे ज्ञानत्वविशिष्टज्ञानं **प्रथमत एव जायते,** व्यवसायनिष्ठविशेषणस्य ज्ञानत्वस्य निर्विकल्पकेन विषयीकृततया सम्भूतसामग्रीकत्वात्, तन्निष्ठतया विशेषणज्ञानस्य गौरवेणाप्रयोजकत्वात् । नन्वन्यव्यक्तिसमवेतत्वेन विशेषणज्ञानं न विशिष्टज्ञानजनकं, घटान्तरवृत्तित्वेन गुणक्रियादीनां विशेषणानां ज्ञानेऽपि घटान्तरे तद्विशिष्टज्ञानानुत्पादात् । ग्राह्यव्यक्तिवृत्तितया च तस्य प्रकृतेऽसम्भवात् । तदुत्पादानन्तरं ग्राह्यज्ञानव्यक्तिनाशात् प्रत्यक्षानुपपत्तेरित्यत आह **व्यक्त्यन्तरेति** ॥ व्यक्त्यन्तरवृत्तित्वेनापि ज्ञानत्वस्य ज्ञानं तज्जातीयव्यक्त्यन्तरेषु विशिष्टज्ञानं जनयति, **विशेषणस्य ज्ञानत्वस्याभेदात् ।** यथा पर्वतोऽग्निमानित्यनुमितिमन्यव्यक्तिनिष्ठतया वह्निमत्त्वस्य विशेषणस्य ज्ञानं जनयति, वह्नेर्भेदेऽपि वह्निमत्त्वस्य उपाधेर्**विशेषणस्याभेदात्, अन्यथा अनुमित्युच्छेद** इत्यर्थः ॥

ननु ज्ञानान्तरस्य निर्विकल्पकाविषयस्य सविकल्पकवेद्य**स्योत्पत्तौ हेत्वभावः, अनुमिनोमीत्यनुव्यवसाये** तदसम्भवश्च, सामग्र्यभावात् । उच्यते । आत्ममनःसंयोगस्य ज्ञानात्म-

प्रकाशिका ।

ज्ञानस्येत्यादिग्रन्थेन प्रकाशकृदेव व्यक्तीकरिष्यति । अत एव तत्र मानान्तराभावादिति पूर्वदूषणमपास्तम्, तादृशनिर्विकल्पके प्रत्यक्षस्यैव मानत्वात् । तज्जन्यविशिष्टज्ञानस्य वा मानत्वात् । ननु इन्द्रियसन्निकर्षादिसामग्रीवलादेव तादृशं प्रत्यक्षं स्यादत आह **अनुमिनोमीति** । तत्रानुमित्यनन्तरस्य सिद्धयप्रतिवन्धकत्वादिति भावः । व्यवसायनाशक्षणे तद्विशेष्यकं न ज्ञानं किन्त्वात्मविशेष्यकमिति

मकरन्दः ।

दोष इति भावः । ननु सामग्रीवलात्प्रत्यक्षं सम्भवत्येवेत्यत आह **अनुमिनोमीति** । क्वचित् प्रत्यक्षस्य सम्भवेऽपि तत्रानुमितित्वस्य वाधादनुमित्यन्तरस्य सिद्धसाधनेनानुत्पादात्तत्रासम्भव एवे-

टिप्पणी ।

**मिति ।** प्रथमज्ञाननाशक्षणोत्पन्नस्व स्थितिक्षणोत्पन्नसविकल्पकविषयीभूतं तदानीं तस्य निर्विकल्पकासम्भवात् सविकल्पकारणस्य विशेषणनिर्विकल्पककस्य प्राग्भूतत्वात् । **किञ्चिच्चावेद्यमिति ।** प्रतिवन्धकीभूतवहिरर्थप्रत्यक्षसामग्रीक्षणोत्पन्नतदुत्तरक्षणे वहिरर्थप्रत्यक्षस्यैवोत्पादात् । **प्रथमत एव जायत इति ।** एतेन तन्निर्विकल्पककापेक्षाव्यवच्छेदः, विशेष्यज्ञानस्याकारणत्वात् । **ग्राह्यव्यक्तिवृत्तितयेति ।** तथाचान्यवृत्तित्वज्ञानस्य प्रतिवन्धकत्वं वाच्यं स्यात् तदभावस्य च कारणत्वं तदपेक्षया लाघवात्तद्वृत्तितया विशेषणज्ञानस्य कारणत्वमेव वाच्यमिति भावः । एतेन ग्राह्यव्यक्तिवृत्तितयेत्यस्य नासङ्गतिः । **विशेषणज्ञानत्वस्याभेदादिति ।** तथाचैतादृशस्थले नोक्तप्रतिवन्धकत्वस्य कारणत्वस्य चावश्यकत्वमिति भावः । **विशेषणस्याभेदादिति ।** इदञ्च सामान्यलक्षणानभ्युपगमेन तदभ्युपगमे क्वचित् पर्वते कस्यचिद् वह्निज्ञाने तत्पर्वतवृत्तितयापि तद्वह्नेर्ज्ञानात् । यद्वा यत्रानुमितिपूर्वं महानसादावेव वह्निमत्त्वं गृहीतं तदभिप्रायेण योजनेयम् । **अन्यथानुमित्युच्छेद इति ।** उक्तप्रतिवन्धकत्वे कारणत्वे च । **उत्पत्तौ हेत्वभाव** इति । वहिरर्थविषयकप्रथमज्ञानसामग्र्यास्तदुत्पत्तिक्षणे सत्वे तस्याः प्रतिवन्धकत्वाज्ज्ञानत्वनिर्विकल्पकमेव न स्यात् । ज्ञानोत्प-

विकल्पानामनुत्पादप्रसङ्गः। तद्गतस्य विशेषणस्याऽग्रहणाद्, अन्यगतस्य चानुप-

### प्रकाशः ।

समवायस्य च पूर्वसिद्धत्वेनोत्पन्नं ज्ञानं मनसा सम्बद्धञ्चेत्येकः कालः। ततो ज्ञानत्वनिर्विकल्पकस्योत्पादो ग्राह्यज्ञानस्य विनश्यत्ता सविकल्पकस्योत्पद्यमानतेत्येकः कालः। ततः सविकल्पकस्योत्पादो ग्राह्यज्ञानस्य विनाशो निर्विकल्पकस्य विनश्यत्तेत्येकः काल इत्येवमसमानकालत्वेन विशेष्यस्य ज्ञानस्य नाशक्षण एव ज्ञाने **ज्ञानत्वविशिष्टज्ञानम्।** विशेष्यस्य ज्ञानस्य विशिष्टज्ञानाव्यवहितपूर्ववर्त्तितया कारणत्वाविरोधात्। प्रत्यक्षस्य सम्बद्धवर्त्तमानार्थजन्यत्वेऽपि स्वसमानकालतया विशेष्यस्याऽहेतुत्वात्, गौरवात्, यथा द्वे द्रव्ये इत्यत्र यथार्थविशिष्टज्ञानं **द्वित्वनाशकालेऽपि,** अव्यवहितपूर्वकालवर्त्तितया द्वित्वस्य विशेषणस्य विशिष्टज्ञानहेतोर्ज्ञानात्। विशिष्टज्ञानं जानामीति च वर्त्तमानत्वेन **स्थूलकालोपाधिर्भासते,** न तु क्षणः, तस्यातीन्द्रियत्वात्। **यद्वा ज्ञानं ज्ञानत्वञ्च निर्विकल्पके** भासते, ततो ज्ञानत्ववैशिष्ट्यं ज्ञाने, ज्ञानवैशिष्ट्यञ्चात्मनि भासते, विशेष्ये विशेषणं विशेषणे विशेषणान्तरं भासते इत्येव **विशिष्टवैशिष्ट्यार्थः। वस्तुतो** ज्ञानस्य विषयनिरूप्यतया समवायाभावयोरिव विशिष्टज्ञानसामग्रीसत्त्वाद् निर्विकल्पकं नास्त्येव, ज्ञाने विषयस्य विशेषणत्वात् तज्ज्ञाननैयत्येन सविकल्पकस्यैव सम्भूतसामग्रीकत्वात्। तथाच तदेव ज्ञानं ज्ञानत्वांशे

### प्रकाशिका ।

विशेष्यस्य समानकालत्वेन साक्षात्कारजनकत्वेऽपि विशेषणस्य च यथार्थविशिष्टज्ञानं प्रति स्वरूपतो जनकत्वेऽपि च न विरोध इत्याशयेनाह **यद्वेति। तदेवेति।** नरसिंहाकारकज्ञान इत्यर्थः। एवं प्रत्यक्षे विशेष्यसमसमयत्वं जानामीत्यत्र तमेव क्षणमादाय वर्त्तमानत्वञ्चोपपन्नम्। विशेष्ये विशेषण-

### मकरन्दः ।

त्यर्थः। व्यवसायनाशक्षणे तद्विशेष्यकं न ज्ञानं, किन्त्वर्थविशेष्यकमेव, तथा च विशेष्यस्य स्वसमयवर्त्तितया प्रत्यक्षहेतुत्वेऽपि न दोष इत्याशयेनाह **यद्वेति। विषयांशे** इति। तथा च सविकल्पकतया तस्य योग्यत्वात्तत्रैव ज्ञानत्वविशिष्टधीस्तदात्मकस्यैव ज्ञानत्वरूपविशेषणज्ञानस्य पूर्व

### टिप्पणी

त्तिक्षणे विनष्टाया निर्विकल्पकक्षणे पुनः सम्पत्तेर्दुष्करत्वात्। प्रथमज्ञानाविषयार्थस्य तृतीयक्षणे विशिष्टबुद्धेः सर्वथैवासम्भवः तद्धेतोर्निर्विकल्पकस्य प्रागनुत्पत्तेरुत्पत्तौ ज्ञानत्वनिर्विकल्पकासम्भवादिति भावः। **अनुमिनोमीत्यनुव्यवसाय इति।** उत्पन्नानुमित्यनन्तरनिर्विकल्पकेनानुमितित्वग्रहे तदनन्तरमनुमितिव्यक्त्यन्तरोत्पादासम्भवात् सिद्धेः प्रतिबन्धकत्वात् क्षणविलम्बोत्पादेऽपि तदन्यस्य तत्क्षणे तत्प्रत्यक्षस्यासम्भवादयौगपद्यात्, तदात्मकस्य जातिसाङ्कर्येणासम्भवादुत्तरकालं विशेषणज्ञानविरहेणासम्भवादिति भावः। **ज्ञानत्वविशिष्टज्ञानमिति।** अत्र पक्षे आत्मनोऽपि ज्ञाने विशेषणत्वमेव मयि ज्ञानमित्यनुव्यवसायाकारः। **विशिष्टज्ञाने** = विशिष्टज्ञानस्थले। **द्वित्वनाशकालेऽपीति।** इदञ्चापेक्षाबुद्धेर्द्विक्षणव्यवस्थायित्वमेव स्वीकरणीयम्, अन्यथा विभुविशेषगुणनाशत्वावच्छिन्नं प्रति स्वोत्तरोत्पन्नविभुविशेषगुणत्वेन कारणतायां नावश्यताच्छेदकेऽपेक्षाबुद्ध्यन्यत्वप्रवेशेन गौरवं स्यात्, तच्च निष्प्रामाणिकं द्वित्वप्रत्यक्षस्य विषयस्य पूर्ववर्त्तित्वमात्रेण कारणतयाप्युपपत्तेः समकालत्वस्य तत्र गौरवेणाप्रवेश्यत्वादित्यभिप्रायेण। **स्थूलोपाधिर्भासते** तेन ज्ञाननाशकालेऽपि तादृशप्रत्यक्षस्य नार्थापत्तिः। **यद्वा ज्ञानं ज्ञानत्वञ्च निर्विकल्पक इति।** अत्र पक्षे ज्ञानस्यापि विशेषणतया तज्ज्ञानार्थनिर्विकल्पे ज्ञानस्यापि विषयत्वकथनम्। **विशिष्टवैशिष्ट्यार्थ इति।** अत्र पक्षे आत्ममनोविशेष्यत्वेन प्रत्यक्षज्ञाने विषयस्य समानकालत्वेऽपि न क्षतिः। ज्ञानं ज्ञानत्वञ्च

योगात्, किं लिङ्गग्रहणसहकारि स्यादिति । एतेन शब्दादिप्रत्यक्षं व्याख्यातमिति ।

स्यादेतत् । विषयनिरूप्यं हि ज्ञानमिष्यते । न चातीन्द्रियस्य परमाण्वादेर्मनसा वेदनमस्ति । न चागृहीतस्य विशेषणत्वम् । न च नित्यपरोक्षस्यापरोक्षविशिष्टबुद्धिविषयत्वं व्याघातादिति । न । बाह्येन्द्रियग्राह्यस्याग्राह्यस्य वा पूर्वज्ञानोपनीतस्यैव मनसा वेदनात् । अन्यथाऽतीन्द्रियस्मरणस्याप्यनुत्पत्तिप्रसङ्गात् । इयांस्तु विशेषः—तस्मिन् सति तद्बलादेव, असति तु तज्जनितवासनाबलात् । न चैवंसति स्मरणमेतत् । अगृहीतज्ञानगोचरत्वात् । न च विषयांशे तत्तथा

---

प्रकाशः ।

निर्विकल्पकं, विषयांशे सविकल्पकमित्युभयरूपमेव, अंशभेदेनाविरोधात् । अनुमिनोमीत्यादौ तु न तथा, अनुव्यवसाये अनुमितित्वाभावात् । ग्रन्थस्तु ज्ञानान्तरस्य सामग्रीसत्त्वाद् यत्र सम्भवस्तत्परतया नेयः ॥

एतेनेति ॥ एकगकारादिनिष्ठतया गत्वादिनिर्विकल्पकेन गत्वादिविशिष्टज्ञानकाले एकगादिव्यक्तेर्नाशेऽपि गादिव्यक्त्यन्तरे गत्वादिविशिष्टज्ञानमित्यर्थः । ननु ज्ञानस्य विषयावच्छिन्नस्यैव मानसप्रत्यक्षत्वादतीन्द्रियार्थविषयज्ञानस्य न मानसत्वं, परमाण्वादेरतीन्द्रियत्वात्, अतस्तद्दृष्टान्तेनेतरज्ञानस्याप्यमानसत्वमनुमेयम् , न चाप्रयोजकत्वम् , बाह्येन सह मनसः सन्निकर्षाभावलक्षणप्रतिकूलतर्कस्य विपक्षबाधकत्वादिति शङ्कते स्यादेतदिति ॥ ज्ञानोपनीतविषयेण संयुक्तसमवेतविशेषणताऽऽत्मकज्ञानरूपमनःप्रत्यासत्त्या मनसैव प्रत्यक्षाऽप्रत्यक्षविषयग्रहः, न चाऽतीन्द्रियत्वव्याघातः, योगजधर्माजन्य–जन्यस्वविषयकसविकल्पकाजन्यजन्यप्रत्यक्षाऽविषयस्यातीन्द्रियत्वादिति परिहरति बाह्येति ॥ यदि च ज्ञानसंस्काराद्यपेक्षमपि मनो नातीन्द्रियार्थग्राहकं ततस्तत्करणिका स्मृतिरतीन्द्रिये न स्यादित्याह अन्यथेति ॥ ननु यदि ज्ञानादनुव्यवसायः स्मरणञ्च स्यात्, तदाऽनुव्यवसायः साक्षात्कारी, न तु स्मरणमिति कुतो नियम इत्यत आह इयांस्त्विति ॥ तस्मिन्निति ॥ ज्ञाने विद्यमाने तद्रूपप्रत्यासत्तेस्तदनुव्यवसायः साक्षात्कारी, ज्ञाने त्वऽसति संस्काररूपप्रत्यासत्तेस्तदन्यप्रत्यासत्त्यभावाच्च स्मरणं परोक्षमेवेत्यर्थः । तथाप्यनुव्यवसायो व्यवसायगृहीतगोचरत्वेन गृहीतग्राहित्वात् स्मृतिः स्यादित्यत आह न चैवमिति ॥ अगृहीतेति ॥ ज्ञानस्य व्यवसायाविषयस्यैवानुव्यवसायविषयत्वादित्यर्थः । अर्थांशे गृहीतग्राहित्वेऽपि न घटस्य विशेष्यता,

प्रकाशिका ।

मिति न्यायेन नरसिंहाकारकज्ञानोत्पत्त्यनन्तरमेव जानामीति प्रत्ययोत्पत्तेरिति भावः । अनुमिनोमीति । आदिपदादुपमिनोमीत्यादिसंग्रहः । इदमुपलक्षणम्—पश्यामीत्यादावपि नेयं गतिरिति द्रष्टव्यम् । योगजेति । सामान्यलक्षणाप्रत्यासत्त्यजन्येत्यपि विशेषणमत्र द्रष्टव्यम् । संयुक्तविशेषणताया इति । इदमुपलक्षणम्—संस्कारातिरिक्तविशेष्यसन्निकर्षसत्त्वादित्यत्र तात्पर्यम् ।

मकरन्दः ।

सत्त्वादिति भावः । अत एवाह अनुमिनोमीत्यादाविति ।

योगजधर्माजन्येति । अत्र सामान्यलक्षणप्रत्यासत्त्यजन्येत्यपि विशेषणं बोध्यम् ।

टिप्पणी

निर्विकल्पके भासते इति यदुक्तं तत्राह वस्तुत इत्यादि । अनुमिनोमीत्यादाविति । तथा च व्यवसायोत्तरक्षणे व्यवसायगृहीतविषयविशिष्टत्वेन ज्ञानविषयकतया सविकल्पकस्य ज्ञानत्वविष-

स्यादिति युक्तम् । अवच्छेदकतया प्रागवस्थावदवभासनात् । न च प्रत्यभिज्ञान-मपि ग्रहणस्मरणाकारम् । विरोधात् । अथ ग्रहणस्मरणयोः कियती सामग्री ? अधिकोऽर्थसन्निकर्षो ग्रहणस्य, संस्कारमात्रं सन्निकर्षः स्मरणस्य ।

अथ ग्रहणत्वेऽपि कुत एतदपरोक्षाकारम् ? कारणान्तरनिरपेक्षेण संस्कारा-धिकसन्निकर्षवतेन्द्रियेण जनितत्वात् । अथ कः सन्निकर्षः ? ज्ञानेन संयुक्त-समवायः, तदर्थेन संयुक्तसमवेतविशेषणत्वमिति । मनसो निरपेक्षस्य वहि-र्विषये ऽन्धवधिराद्यभावप्रसङ्ग इति चेत् । ज्ञानावच्छेदकं प्रति नायं दोषः । न च ज्ञानापेक्षया वहिरित्यस्ति । नापि तद्विषयापेक्षया निरपेक्षत्वं, तस्यैव ज्ञानस्या-पेक्षणात् । अथापि ज्ञानं प्रत्यक्षमित्यत्र किं प्रमाणम् ? प्रत्यक्षमेव । यदसूत्रयत्-'ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्' ( न्याय० ५. १. ३१ ) इति ॥ ४ ॥

---

प्रकाशः ।

किन्तु ज्ञाने विशेषणता तत्तावदित्याह **अवच्छेदकतयेति** ॥ यथा प्रागवस्थास्मरणसहकारिणा चक्षुषा जनिते प्रत्यभिज्ञाने प्रागवस्थायाः संयुक्तविशेषणतया स्फुरणं, न स्मरणं, तथा व्यवसाय-सहकारिणा मनसा जनितेऽनुव्यवसाये संयुक्तसमवेतविशेषणतया विषयस्फुरणेऽपि न तस्य स्मरण-त्वमित्यर्थः । ननु प्रत्यभिज्ञानमपि तत्तांशे स्मरणमेव, इदन्त्वांशे त्वनुभव इत्यत आह **न चेति** ॥ स्मृतित्वानुभूतित्वजात्योर्न्योन्यव्यावृत्तत्वेनांशावृत्तेरित्यर्थः ॥ **अथेति** ॥ संस्कारजत्वाविशेषात् प्रत्य-भिज्ञानमनुभवो, न स्मृतिरिति कुतो नियम इत्यर्थः । **अधिक इति** ॥ संस्कारातिरिक्तायाः संयुक्त-**विशेषणतायाः प्रत्यासत्तेः प्रत्यभिज्ञाने सत्त्वादित्यर्थः** ॥

अथ संस्कारजन्यत्वेन स्मृतिवत्प्रत्यभिज्ञानं परोक्षमेव कुतो नेत्याशयेन पृच्छति **अथेति** ॥ उत्तरं-**कारणान्तरेति** ॥ लिङ्गाद्यनपेक्षेणेत्यर्थः । न च विनिगमकाभावः । प्रत्यऽभिज्ञाने अनुभवामीत्य-नुव्यवसायसाक्षिकत्वादनुभवत्वस्येति भावः । वस्तुतस्तत्तास्मृतिजन्यमेव प्रत्यभिज्ञानं, न संस्कार-जन्यम्, अन्यथा संस्कारद्वारा पूर्वानुभवस्य तत्करणतया ज्ञानकरणतया तस्य परोक्षत्वापत्तिः, तत्तास्मृतेश्च निर्व्यापारत्वेनाऽकरणत्वादिति तत्त्वम् ॥

**ज्ञानेति** ॥ इन्द्रियादिजनितव्यवसायापेक्षस्य मनसो वहिःप्रवृत्तेर्न स्वातन्त्र्येणेति नोक्तदोष इत्यर्थः । समाधानान्तरमाह **न चेति** ॥ साधकवाधकाभावात् संशयः स्यादित्याशयेन पृच्छति **अथेति** ॥ उत्तरं-**प्रत्यक्षमेवेति** ॥ जानामीति मानसप्रत्यक्षमेव ज्ञानप्रत्यक्षत्वे मानमित्यर्थः । तत्र सूत्रकारसम्मतिमाह **यदिति** ॥ ज्ञानविकल्पानां ज्ञानभेदानां प्रत्यक्षादीनां भावाभावौ, अस्ति

प्रकाशिका ।

न तु तत्तयैव समं संयुक्तविशेषणतेत्यस्यार्थोऽतीतेन विषयेण सह लौकिकसन्निकर्षस्याजनकत्वात् । न च स्मृतिघटिता संयुक्तसमवेतविशेषणतेति तत्परोऽयं ग्रन्थ इति वाच्यम् । संस्कारजन्यत्वं प्रत्यभिज्ञानस्येति मतेनैतद्ग्रन्थावतार इति, अन्यथा स्वसंस्कारजन्यत्वेनेत्यग्रिमग्रन्थानुत्थानात् । न च **विनिगमकेति** । इन्द्रियजन्यतया तत्प्रत्यक्षत्वे संस्कारजन्यतया च स्मृतित्व इत्यर्थः । **ज्ञानावच्छेदकतयेत्यादिना समं नापि तद्विषयत्यादि**नैतदुक्त्यनिरासायाह **समाधानान्तर-**

मकरन्दः ।

**न च विनिगमकेति** । इन्द्रियजन्यतया प्रत्यक्षत्वं संस्कारजन्यतया स्मृतित्वं वेत्यत्र विनिगमकाभाव

टिप्पणी

यकत्वेन निर्विकल्पकस्यैव ज्ञानस्य जायमानस्योत्तरं विशेष्ये विशेपमिति रीत्या ज्ञानांशे ज्ञानत्वाव-

ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात् । नापि प्रमाणम् । अकारकत्वात् । अत एव च न तदाश्रयः प्रमातेति । उच्यते—

**मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ॥**
**तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥**

समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम् । तथा च अनित्यत्वेन विशेषणमनर्थकम् । नित्यानुभवसिद्धौ तद्व्यवच्छेदस्यानिष्टत्वादसिद्धौ च व्यवच्छेद्याभावात् । नचेदमनुमानम्, आश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात् । न तत्प्रमा-

---

प्रकाशः ।

मे प्रत्यक्षं ज्ञानं, नास्ति मे प्रत्यक्षं ज्ञानमित्याकारेणात्मना मनसा संवेद्यते इत्यर्थः । न्यायरुचिं प्रति **आशुविना**श्यात्मविशेषगुणत्वेन सुखवत् प्रत्यक्षत्वमनुमेयमिति भावः ॥

**नित्यत्वेनेति** ॥ नित्यत्वेन फलानात्मकत्वादित्यर्थः । प्रमायाश्च क्रियात्वेन जन्यत्वादिति भावः ॥ **नापीति** ॥ **निर्व्यापार**त्वेनाकारकतया तद्विशेषकरणत्वस्याभाव इत्यर्थः ॥ **अत एवेति** ॥ समवायिकारणस्य प्रमातृत्वादित्यर्थः ॥ **अनित्यत्वेनेति** ॥ यथार्थानुभवत्वमेव प्रमात्वं नित्यानित्यसाधारणम् । **न च क्रियात्व**विरोधः, धात्वर्थमात्रस्यैव नित्यानित्यसाधारणस्य सत्तादेरिव क्रियात्वात् । अनित्यत्वेन तद्विशेषणस्य गौरवेण व्यर्थत्वादित्यर्थः । दूषणान्तरमाह **नित्येति** ॥ न चेश्वरज्ञानं न प्रमा फलानात्मकत्वाद् गगनवदित्यनुमानमपि सम्भवतीत्याह **न चेदमिति** ॥ नापि प्रमाणमित्यत्र सिद्धसाधनत्वमेवेत्याह **न तत्प्रमाकरणमिति** ॥ **स्वप्रमां** प्रति तस्या-

प्रकाशिका ।

मिति । **आशुविनाशीति** धर्मादौ व्यभिचारवारणाय विशेषणमिदम् । द्वित्वादौ व्यभिचार इति **विशेषेति** । रूपादौ व्यभिचार इत्यात्**मेति** । न चोभयत्र साध्यमेव स्वरूपयोग्यताया एव साध्यत्वात्, अन्यथा प्रत्यक्षविषयज्ञानव्यक्तौ व्यभिचारादिति वाच्यम् । मानसप्रत्यक्षविषयगुणत्वव्याप्यजातिमत्त्वस्य साध्यत्वात् । चतुर्थक्षणवर्त्तिध्वंसप्रतियोगिताव्याप्यजातिमदात्मविशेषगुणत्वञ्च हेतुरतो नाशुविनाशिसंस्कारव्यक्तौ व्यभिचारः । **निर्व्यापारत्वेनेति** । प्रमानुकूलव्यापारशून्यतया प्रमां प्रत्यकारकतयेत्यर्थः । **न च क्रियात्वे**ति । तथा च न क्रियासम्बन्धनिमित्तकस्य कारणपदस्य प्रयोग इति न प्रमातृपदप्रयोगः स्यादिति भावः । **स्वप्रमामिति** । स्वसमानाधिकरण-

मकरन्दः ।

इत्यर्थः । **आशुविनाशी**ति धर्मादौ व्यभिचारवारणार्थमिदम् । अन्त्यशब्दस्याप्रत्यक्षत्वप्रसक्तेः तत्र व्यभिचारादाह **आत्मेति** । आत्ममनोद्वित्वे व्यभिचारादाह **विशेषेति** । न च निर्विकल्पकजीवनयोनियत्नयोर्व्यभिचारः, मानसप्रत्यक्षजातीयत्वस्य साध्यत्वात् । वस्तुतस्तु तदन्यत्वेन विशेषणान्न व्यभिचार इति ।

**निर्व्यापारत्वेने**ति । प्रमाऽनुकूलव्यापारशून्यतया तदाकारकतया इत्यर्थः । यद्यपि कूटलिङ्गादिस्थलेऽनुमितिप्रमाकरणत्वं तस्येष्यत एव, तथापि स्वप्रमां प्रति न तथात्वमिति भावः ।

**न च क्रियात्वेति** । क्रियासम्बन्धं विना कारकत्वाभावात्तद्विशेषप्रमातृत्वाद्यसम्भव इत्यर्थः । **स्वप्रमामि**ति । स्वसमानाधिकरणप्रमामित्यर्थः ।

टिप्पणी ।

गादिज्ञानं जायते ज्ञानत्वविशिष्टवैशिष्ट्यावगाहिज्ञानस्य सम्भवात् पूर्वं ज्ञानत्वप्रकारकज्ञानस्य तत्का-

करणमिति त्विष्यत एव, प्रमया सम्बन्धाभावात्। तदाश्रयस्य तु प्रमातृत्वमेतदेव, यत् तत्समवायः। कारकत्वे सतीति तु विशेषणं पूर्ववन्निरर्थकमनुसन्धेयम्। यद्येवम् 'आप्तप्रामाण्यात्' ( न्याय० २. १. ६७ ) इति सूत्रविरोधः। तेन हीश्वरस्य प्रामाण्यं प्रतिपाद्यते, न तु प्रमातृत्वमिति चेन्न। निमित्तसमावेशेन व्यवहारसमावेशाविरोधात्। प्रमासमवायो हि प्रमातृव्यवहारनिमित्तं, प्रमया त्वयोगव्यवच्छेदेन सम्बन्धः प्रमाणव्यवहारनिमित्तं, तदुभयञ्चेश्वरे। अत्रापि कार्ययेति विशेषणं पूर्ववदनर्थकमूहनीयम्।

स्यादेतत्—प्रमीयतेऽनेनेति प्रमाणं, प्रमिणोतीति प्रमातेति कारकशब्दत्वमनयोः, तथा च कथमकारकमर्थ इति चेत्। न। एतस्य व्युत्पत्तिमात्रनिमित्तत्वात्। प्रवृत्तिनिमित्तन्तु यथोपदर्शितमेव व्यवस्थापनात्। अन्यथा अस्मदादिषु न प्रमातृव्यवहारः स्यात्, सर्वत्र स्वातन्त्र्याभावात्। करणव्यवहारस्त्वन्यत्र यद्यप्यन्यनिमित्तकोऽपि, तथापीहोक्तनिमित्तविवक्षयैवेति। एवन्तर्हि पञ्चमप्रमाणाभ्युपगमेऽपसिद्धान्तः। न हि तत् प्रत्यक्षमनुमानमागमो वा, अनिन्द्रियलिङ्ग-

---

प्रकाशः।

करणत्वमिष्यत एवेत्यर्थः। अस्मदादिप्रमां प्रति तु तत्करणत्वं वर्तत एव, तस्य सव्यापारत्वादिति भावः॥ **तदाश्रयस्येति**॥ प्रमासमवायित्वस्यैव प्रमातृत्वात् तत्र तत्कारणान्तर्भावस्य व्यर्थत्वादित्यऽर्थः॥ **पूर्ववदिति**॥ सिद्ध्यसिद्ध्योरुभयोरपि व्यावर्त्याभावादित्यर्थः। **यदीश्वरस्य** न प्रमाणत्वमिष्यते, तदा न्यायसूत्रप्रतिपादिततत्प्रमाणत्वविरोध इत्याह **यद्येवमिति**॥ **प्रमया त्विति**॥ चक्षुरादीनामपि चरमसहकारिक्षणे प्रमया अयोगव्यवच्छेदेन सम्बन्धस्य विद्यमानत्वादित्यर्थः॥ **पूर्ववदिति**॥ सिद्ध्यसिद्ध्योरुभयोरपि व्यावर्त्याप्रसिद्धेरित्यर्थः॥ **सर्वत्रेति**॥ यदि प्रमाकर्तृत्वेन प्रमातृत्वं, तदा अस्मदादीनामपि तदभावात् प्रमातृव्यवहारो न भवेत्-**तदनुकूल**प्रयत्नवत्त्वं हि स्वातन्त्र्यम्, तत्कर्तृत्वं सर्वप्रमायाम**स्मदादीना**मपि नास्ति, अस्मदादिप्रयत्नं विनाऽप्यस्मदादिप्रमोत्पत्तेरित्यर्थः॥ **अन्यत्रेति**॥ लोक इत्यर्थः॥ **अन्यनिमित्तकोऽ-**

प्रकाशिका।

प्रमामित्यर्थः। **तदनुकूलेति**। तदुपादानगोचरतदनुकूलज्ञानेच्छाकृतिमत्त्वलक्षणमित्यर्थः। **अस्मदादीनामपीति**। जन्यात्मविशेषगुणमात्रस्यैवेश्वरमात्रकर्तृकत्वाभ्युपगमादिति भावः॥ ५॥

मकरन्दः।

**यदीश्वरस्येति**। यद्यपि पूर्वं तज्ज्ञानस्य न प्रामाण्यमित्युक्तं न तु तस्य, तथापि तुल्यन्यायतया तदप्युक्तप्रायमेवेति भावः।

**तदनुकूलेति**। तदुपादानगोचरतदनुकूलज्ञानेच्छाकृतिमत्त्वलक्षणमित्यर्थः। **अस्मदादीनामिति**। जन्यात्मविशेषगुणमात्रस्यैवेश्वरकर्तृकत्वेनाभ्युपगमादिति भावः॥ ५॥

टिप्पणी।

रणस्याभावात्। तदुत्पत्त्यनन्तरञ्च विशिष्टवैशिष्ट्यावगाहिघटमहञ्जानामीत्याकारकं प्रत्यक्षं जायते प्रथमस्यानुव्यवसायस्य व्यवसायमादायोपलक्षितवैशिष्ट्यावगाहिज्ञानस्यानुव्यवसायरूपमेव वर्तमानज्ञानमादाय

शब्दकरणत्वात् । न, साक्षात्कारिप्रमावत्तया प्रत्यक्षान्तर्भावाद् इन्द्रियार्थसन्निकर्षोत्पन्नत्वस्य च लौकिकमात्रविषयत्वात् ।

स्यादेतत्—तथापीश्वरज्ञानं न प्रमा, विपर्ययत्वात् । यदा खल्वेतदस्मदादिविभ्रमानालम्बते, तदैतस्य विषयमस्पृशतो न ज्ञानावगाहनसम्भव इति तदर्थोऽप्यालम्बनमभ्युपेयम्, तथा च तदपि विपर्ययः, विपरीतार्थालम्बनत्वात् । तदनवगाहने वा अस्मदादेर्विभ्रमानविदुषस्तदुपशमायोपदेशानामसर्वज्ञपूर्वकत्वमिति । न । विभ्रमस्याप्रामाण्येऽपि तद्विषयस्य तत्त्वमुल्लिखतोऽभ्रान्तत्वात् । अन्यथा भ्रान्तिसमुच्छेदप्रसङ्गः । प्रमाणाभावात् । तथाप्यारोपितार्थावच्छिन्नज्ञानालम्बनत्वेन कथं न भ्रान्तत्वमिति चेत् । न यद् यत्र नास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थत्वात् एतदालम्बनस्य चैवमुल्लिखतः सर्वत्र यथार्थत्वात् । न हि न तद्रजतं, नापि तत्रासत्, नापि तन्नावगतमिति ॥ ५ ॥

---

प्रकाशः ।

**पीति** ॥ अयोगव्यवच्छेदेन जनकत्वनिमित्तकोऽपीत्यर्थः । कारकविशेषवाचकः प्रमाणशब्द ईश्वरे वर्त्तते, किन्त्वन्यथेति भावः ॥ **साक्षात्कारीति** ॥ साक्षात्कारिप्रमया त्वयोगव्यवच्छेदेन सम्बन्धस्य सम्भवेन प्रत्यक्षप्रमाणान्तर्भावान्नोक्तदोष इत्यर्थः । साक्षात्कारित्वं त्वीश्वरप्रमाया धर्मिग्राहकमानसिद्धमित्यऽर्थः । यथाश्रुतं सूत्रन्तु लौकिकप्रत्यक्षविषयमित्याह **इन्द्रियार्थेति** ॥

नन्वीश्वरस्य सर्वज्ञत्वेन सविषयभ्रमज्ञत्वावीश्वरोऽपि भ्रान्तः स्यात्, भ्रमस्येव तस्या अपि भ्रमविषयविषयकत्वादित्याह—**तथापीति** । शुक्तौ रजतत्वप्रकाशकज्ञानवानिति ज्ञानं न भ्रमः, भ्रान्तस्य तथा त्वात् । शुक्ताविदं रजतमिति ज्ञाने रजतत्वं प्रकारः तेन तद्भ्रमः, ईश्वर ज्ञाने तु रजतत्वप्रकारकत्वं प्रकार इति न भ्रमत्वम् ।

अत एवास्मदादिरपि भ्रान्तिज्ञो न भ्रान्त इत्याह **विभ्रमस्येति** ॥ **प्रमाणाभावादिति** ॥ भ्रमत्वग्राहकज्ञानस्य भ्रमविषयमुल्लिखतो भ्रमस्येवायथार्थत्वादित्यर्थः । भ्रमविषयविषयकत्वेन न भ्रमत्वं, किन्तु यद्यत्र नास्ति तत्र तज्ज्ञानत्वेन, तथाच शुक्ताविदं रजतमिति ज्ञानं रजतत्वाभाववति रजतत्वविषयमिति भ्रमः, तदनुव्यवसायश्च यत्र रजतज्ञाने रजतत्वप्रकारकत्वमस्ति, तत्र तदुल्लिखन् न भ्रमो विषयाबाधादित्याह **यद् यत्रेति** ॥ तदेव स्पष्टयति **न हीति** ॥ एतेन यद् यत्रास्ति, तत्र तज्ज्ञानं प्रमेत्यपि निरुक्तम् ॥ ५ ॥

टिप्पणी ।

सूक्ष्मकालगोचरत्वेनापि वर्त्तमानावभासता उत्पद्यते विशिष्टवैशिष्ट्यावगाहिनश्चोपलक्षितवैशिष्ट्यावगाह्यनुव्यवसायात्मकमेव वर्त्तमानं स्वकाले ज्ञानमादाय वर्त्तमानावभास इति । नन्वनुमिनोमीति विशिष्टवैशिष्ट्यावगाह्यनुव्यवसाये कथं वर्त्तमानावभासता तत्क्षणेऽनुमितित्वाश्रयस्य व्यवसायस्य चिरातीतत्वात् तदनन्तरजायमानस्यानुव्यवसायद्वयस्य प्रत्यक्षत्वेनानुमितित्वाभावादित्यत आह **अनुमिनोमीत्यादाविति** । स्वगत्या दृष्टान्त एव तस्य तथात्वं सूक्ष्मकालमादायैव च तथात्वम्, तदेव चेष्टं क्षणस्यातीन्द्रियत्वात् जानामीत्यत्र तथोपपादनं प्रौढिप्रकटनमेवेति भावः । आदिपदेन पश्याम्युपमि-

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ॥
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

इति चतुर्थः स्तवकः ॥ ४ ॥

---

प्रकाशः ।

स्तवकार्थं शिवस्तुतिव्याजेन सङ्कलयति **साक्षात्कारिणीति** ॥ **भूतार्थानुभवे** यथार्थानुभवे ॥ **साक्षात्कारिणि**-प्रत्यक्षे ॥ **निविष्टो** विषयीभूतो निखिलः समस्तः **प्रस्ताविवस्तूनां** नानापदार्थानां क्रमो यस्य, स तथा । अनुभवविषयसकलविश्व इत्यर्थः ॥ **नित्ययोगिनि** सदा सम्बद्धे । अत एव इन्द्रियादीनां द्वाराणामनपेक्षा स्थितिर्यस्य । लेशा अल्पा या अदृष्टिर्विशेषादर्शनं, तन्निमित्ता या दुष्टिः रागद्वेषाऽऽत्मिका, तद्विगमेन प्रभ्रष्टः शङ्कातुषो वेदप्रामाण्यशङ्कालेशो यस्मादित्यर्थः । यद्वा भूतार्थोऽनुभवो यस्य, तादृशि **साक्षात्कारवति** शिवे । निविष्टेत्यादि पूर्ववत् । स शिवः प्रमाणं, नाप्रमाणमिति कण्ठतः परमतनिरासः । प्रमाणं साक्षी शरण्यमिति ध्वनितम् । दुष्टमिति क्वचित् पाठः । तत्र भावे क्तः ॥ ६ ॥

इति श्रीमहामहोपाध्यायश्रीवर्द्धमानविरचिते कुसुमाञ्जलिप्रकाशे चतुर्थः स्तवकः ॥ ४ ॥

---

प्रकाशिका ।

साक्षात्कारवति शिवे प्रत्यक्षज्ञानवति स्वस्मिन्नित्यर्थः । अत्र च **नित्ययोगिनीति** मूलस्य सदास्थितज्ञान इत्यर्थः । **परेति** मूलस्य इन्द्रियाद्यनपेक्षा स्थितिर्ज्ञानं यस्य तस्मिन्नित्यर्थः ॥ ६ ॥

इति महामहोपाध्याय ठक्कुर श्री भगीरथविरचितायां कुसुमाञ्जलिप्रकाशिकायां चतुर्थस्तवकः ।

---

मकरन्दः ।

**साक्षात्कारवति** शिवे प्रत्यक्षज्ञानवति स्वस्मिन् इत्यर्थः ॥ ६ ॥

इति महामहोपाध्यायदेवदत्तात्मज-श्रीरुचिदत्तोपाध्याय-विरचिते कुसुमाञ्जलिमकरन्दे चतुर्थः स्तवकः ।

---

टिप्पणी ।

नौमि शाब्दयामीत्यादेः परिग्रहः । **ग्रन्थस्तु ज्ञानान्तरस्येति** । प्रथमत एव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनादिति ग्रन्थः ।

इति श्रीधर्मदत्तोपाध्याय (प्रसिद्धवच्चामा) कृतकुसुमाञ्जलिचतुर्थस्तवकटिप्पणी समाप्ता ।

श्रीगणेशाय नमः ॥

# न्यायकुसुमाञ्जलौ

## पञ्चमः स्तबकः ।

तत्साधकप्रमाणाभावादिति पञ्चमीं विप्रतिपत्तिं निराकर्त्तुमुपन्यस्यति—

नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमेतदेवं स्यात् तदेव तु न पश्याम इति चेत्। न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति । तथाहि—

**कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ॥**
**वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥**

क्षित्यादि कर्त्तृपूर्वकं कार्यत्वादिति ॥ १ ॥

---

प्रकाशः ।

**नन्विति ॥ सर्वमिति ॥** प्रागुक्तान्यथासिद्ध्यादिनिरासरूपमित्यऽर्थः ॥ स्थाणोरीश्वरस्य, अर्थ च दारुविशेषस्य ॥ अन्धस्तत्र प्रमाणाऽदर्शी, चक्षुर्हीनश्च । कारिकायां संगृहीतं कार्यत्वं हेतुं विवृणोति । **क्षित्यादीति ॥**

नन्वत्र प्रत्येकं क्षित्यादि न पक्षः, तस्य स्वशब्देनाभिधातुमशक्यत्वात् । नापि मिलितम्, एकरूपाभावात् । न च शरीराजन्यं जन्यं पक्षः । वेदाद्यव्याप्तेः, अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात् । नाप्यदृष्टजनककृत्यजन्यं जन्यम्, ईश्वरकृतेरदृष्टजनकत्वेन क्षितौ तदभावात् । नापि

प्रकाशिका ।

**कार्येत्यादिमूलं** तदर्थश्च कार्यपदम् भावपरं तेन क्षितिः सकर्त्तृका कार्यत्वादित्यनुमानमुक्तम् । आयुज्यते संयुज्यते ऽनेनेत्या**योजनं**=परमाणुकर्म । अत्रापि भावपरतया परमाणुकर्म प्रयत्नजन्यं कर्मत्वादित्यनुमानमुक्तम् । **धृति**पदमपि भावपरं, तेन ब्रह्माण्डधृतिः प्रयन्तवत्संयोगसाध्या धृतित्वादित्यनुमानमुक्तम् । आदिपदेन च संहरणं विवक्षितम्, तथा च ब्रह्माण्डादि प्रयन्तविनाश्यं संहारात्=संहारप्रतियोगित्वादित्यनुमानमुक्तम् । **पदं**—वृद्धव्यवहारः, पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्त्यैतदपि भावपरम्, तथा च घटादिव्यवहारो स्वतन्त्रपुरुषविश्रान्तो व्यवहारत्वादित्यनुमानमुक्तम् । प्रत्ययशब्देन प्रामाण्यं विवक्षितम्, तथा च प्रमा गुणजन्या प्रामाण्यादिनुमानमुक्तम् । **श्रुते**रिति भावपरं, तथा च वेदाः सर्वज्ञप्रणीताः श्रुतित्वादित्यनुमानमुक्तम् । **वाक्य**पदमपि भावपरं, तेन वेदः पौरुषेयो वाक्यत्वाद् भारतवदित्यनुमानमुक्तम् । **संख्या**पदमपि परमाणुद्व्यणुकवृत्तिद्वित्वत्रित्वपरं भावपरमेव, तेन परमाणुद्वित्वं द्व्यणुकत्रित्वं वा अपेक्षाबुद्धिजम् अनेकवृत्तिसंख्यात्वादित्यनुमानमुक्तमिति ।

यद्वा कार्यपदं तात्पर्यपरम्, तथा च वेदप्रामाण्यसम्पादकतात्पर्याधारतया परमेश्वरसिद्धिः । **आयोजनं**=व्याख्यानम्, तथा च वेदव्याख्यातृतया भगवतः सिद्धिः । धृतिरवधारणम्, तथा चार्थावधारकोऽपि वेदस्य परमेश्वर एव । आदिपदग्राह्यमध्ययनम्, तथा चाध्येतापि वेदस्य प्रथममीश्वर एव । **पद**मीश्वरप्रणवादिपदम्, तद्वाच्यतयापि परमेश्वरसिद्धिः । प्रत्ययपदं लिङ्प्रत्ययपरम्, तथा च लिङभिधेयाप्ताभिप्रायाधिकरणतया परमेश्वरसिद्धिः । **श्रुते**र्वेदादेव शब्दविधया परमेश्वर-

टिप्पणी ।

**वेदाद्यव्याप्तेरिति** । पक्षतावच्छेदकेन तस्यासङ्ग्रहात् । **क्षित्यादिकर्तृत्वाच्चेति** । ईश्वर-

प्रकाशः।

जन्यकृतिसाक्षादजन्यं जन्यम्, घटादेरपि पक्षतापत्तेः। नापि सकर्तृकत्वविवादविषयः, तत्सन्देहविषयो वा(१) पक्षः, एकरूपाभावे क्षित्यादिसकलविषयविवादसंशययोरभावात्। किञ्च न वादिनोः संशयः, तयोर्निश्चितत्वात्। वाद्यनुमानयोस्तुल्यत्वेन मध्यस्थसंशय इति चेत्। तर्ह्यनुमानाभ्यां तत्संशयो, मध्यस्थसंशयानन्तरञ्च वाद्यनुमानमित्यन्योन्याश्रयः। न च क्षितिरेव पक्षः, अङ्कुरेण सन्दिग्धानैकान्तिकत्वात्। हेतौ साध्याभाववद्गामित्वसंशयस्य दूषकत्वात्। तस्य च साध्याभाववति हेतुसन्देहादिव हेतुमति साध्याभावसन्देहादपि दूषकत्वात्। पक्षे तत्सद्भावेऽप्यनुमानमात्रोच्छेदकत्वेन तस्यादूषकत्वात्। न चाङ्कुरेऽपि तत एव साध्यानुमितिः। तस्या**पक्षत्वेन** स्थापनानुमानाविषयत्वात्। **अनुमानान्तरस्य** च क्षित्या सन्दिग्धानैकान्तिकत्वात्। तथा चाऽन्योन्याश्रयादेकस्याप्यनुमानस्याप्रवृत्तिः। एकैकमात्राभिज्ञसिद्धावपि सकलविषयज्ञानवदसिद्धिश्च॥

साध्यमपि न कृतिमत्सहभावः, तज्जन्यत्वं वा, अस्मदादिना सिद्धसाधनात्। नाप्युपादानगोचरापरोक्षज्ञानादिमज्जन्यत्वं, यत्किञ्चिदुपादानविवक्षायां घटोपादानगोचरज्ञानादिमताऽस्मदादिनाऽर्थान्तरात्। न च ज्ञानादीनामपि जनकत्वं विवक्षितम्। न च घटोपादानगोचरज्ञानादेः क्षित्यादिजनकत्वसम्भव इति वाच्यम्। तथापि क्षितिजनकादृष्टजनकज्ञानादीनामुपादानविषयत्वनियमेनादृष्टद्वारा तैरेव सिद्धसाधनात्। न च साक्षात्तज्जन्यत्वं विवक्षितम्। घटादेर्दृष्टान्तस्य साध्यवैकल्यापत्तेः। न च शरीरक्रिया दृष्टान्तः। घटे व्यभिचारात्, तत्क्रियात्वस्यैवोपाधित्वाच्च। क्षित्युपादानविवक्षायामप्रसिद्धिः। न चोपादानशब्दस्य सम्बन्धिशब्दतया तत्तत्समभिव्याहारात्तत्तदुपादानबोधकत्वम्। शाब्द एव बोधे तथा व्युत्पत्तेः। अनुमितौ च येन रूपेण व्यापकत्वं, तेनैव रूपेण तस्य विषयत्वात्। तच्चोपादानत्वमेवेत्युक्तदोषापरीहारात्। किञ्च घटे चिकीर्षाद्वारा कृतिसाध्येष्टसाधनताज्ञानमनुमितिरूपं जनकमिति साध्यविकलो दृष्टान्तः, साध्याप्रसिद्धिर्वा। प्रत्युत घटेऽनुमिति-

प्रकाशिका।

सिद्धिः। **वाक्यपदं** संसर्गविशेषप्रतिपादकशब्दपरम्, तादृशशब्दकारणसंसर्गज्ञानाधिकरणतया परमेश्वरसिद्धिः। **संख्यापदं** उत्तमपुरुषाभिधेयसंख्यापरम् कठकलापकादिसंज्ञाविशेषपरं वा, तथा च वेदस्योत्तमपुरुषाभिधेयसंख्याधिकरणत्वेन समाख्यानिबन्धनतत्तज्जातीयशरीरावच्छिन्नोच्चारणकर्तृत्वाश्रयतया वा परमेश्वरसिद्धिरिति।

सन्देहविषयत्वं वा पक्ष इति पाठे पक्षपदं पक्षतावच्छेदकपरम्। **अपक्षत्वेनेति** प्रतिज्ञाविषयस्यैव पक्षत्वमित्यभिमानेनेदम्। नन्वङ्कुरे सकर्तृकत्वमनुमाय क्षितौ तदनुमेयमत आह **अनुमानान्तरस्येति**।

मकरन्दः।

**सन्देहविषयत्वं वा पक्ष** इति पाठे पक्षपदं पक्षतावच्छेदकपरम्। **अपक्षत्वेनेति** प्रतिज्ञाविषयस्यैव पक्षत्वमित्यभिमानः। ननु प्रथममङ्कुरे तदनुमाय क्षितौ तदनुमेयमित्यत आह **अनुमानान्तरस्येति**।

टिप्पणी।

भिन्नशरीरिणमादायार्थान्तरात् सिद्धसाधनाद्वा पक्षासिद्धेर्वेत्यर्थः। **पक्षतागतेरिति**। अर्थान्तरतादवस्थ्यञ्च सन्देहविषयत्वम्। वापक्षः पक्षबोध्यः। **पक्षतावच्छेदकमिति। यावत् सिद्धसाधनादिति।** अदृष्टद्वाराऽस्मदादेरपि जनकत्वात् विवक्षायामप्रसिद्धिः दृष्टान्तेऽसत्त्वम् तच्चोपादानत्वमिति। व्यापकतावच्छेदकञ्चेत्यर्थः। उक्तदोषपरिहारात् सिद्धसाधनम्॥ साध्यप्रसिध्यानुरोधेनापरोक्षप्रवेशे त्वाह **प्रत्युतेति**।

(१) सन्देहविषयत्वं वा पक्ष इति प्रकाशिकाभिमतोऽत्र पाठो द्रष्टव्यः।

प्रकाशः।

जन्यत्वदर्शनादीश्वरेऽनुमितिः सिद्धयेत्। यथा च प्रत्यक्षस्येन्द्रियजन्यत्वेऽपि नित्यं तदीश्वरे, तथाऽनुमितेर्लिङ्गजन्यत्वेऽपि नित्यैव सा तत्र स्यात्। द्वेषयोनिकृतिसाध्ये चिकीर्षाविरहाद्व्यभिचारश्च। तद्दृष्टान्तेन क्षित्यादौ द्वेषसाध्यत्वानुमानादीश्वरे द्वेषोऽपि सिद्धयेत्। द्वेषवतश्च संसारित्वे भगवतोऽपि(२) तथा स्यात्। कथं वा उपादानगोचरा चिकीर्षा, असिद्धत्वात्।

किञ्च कार्यत्वं न योगोपस्थितकृत्यर्हत्वम्, असिद्धेः। नापि कादाचित्कत्वं, प्रागभावे व्यभिचारात्। नापि प्रागभावप्रतियोगित्वं, ध्वंसे व्यभिचारात्। न च सत्त्वेन हेतुविशेषणम्। सत्ताजातेः परं प्रत्यसिद्धेः, स्वरूपसत्त्वस्य ध्वंसेऽपि सत्त्वात्। नापि पूर्वकालासम्बन्धित्वे सत्युत्तरकालसम्बन्धः, सकलपूर्वकालस्याप्रसिद्धेः, तत्तत्पूर्वकालस्य चाननुगमात्॥

घटादिरपि दृष्टान्तः साध्यविकलः, अन्वयव्यतिरेकाभ्यां ज्ञानादेरेव जनकतया तदाश्रयस्याजनकत्वात्, धर्मिग्राहकस्यान्वयव्यतिरेकस्य वा तद्ग्राहकस्याभावात्। न च ज्ञानवत्कार्यत्वेनात्मजन्यत्वमनुमेयम्, **आत्मसमवेतत्वस्यैवोपाधित्वात्**, अन्यथा शब्दवदाकाशजन्यत्वानुमानापत्तेः। एतेन-सर्गाद्यकालीनद्व्यणुकं ज्ञानेच्छाकृतिसमानकालीनसामग्रीजन्यं, कार्यत्वात्, **अदृष्टसामग्री-**

प्रकाशिका।

**रागवत** इति। चिकीर्षावत इत्यर्थः। क्वचित्तु भगवत इति पाठः। तत्र **च** द्वेषवत्वे इष्टापत्तौ संसारित्वं मिथ्याज्ञानलक्षणं प्रसज्येत भगवत इत्यर्थः। यद्वा द्वेषवत्त्वे संसारित्वं नोपाधिः, तस्याप्यापाद्यत्वादित्यर्थः। **आत्मसमवेतत्वस्येति।** आत्मवृत्तित्वस्येत्यर्थः। तेन न सुखादिध्वंसे साध्याव्यापकत्वम्। नन्वदृष्टद्वारा प्राग्भवीयज्ञानादिसमानकालीनादृष्टसामग्रीजन्यत्वेनार्थान्तरमत आह **अदृष्टेति।** नचाधिकस्यादृष्टस्यैव कारणतया न तदापत्तिरिति वाच्यम्, तथा सत्यदृष्टसामग्र्यामधिकानुप्रवेशेन जायमानस्य द्व्यणुकस्यादृष्टविशेषत्वापत्तेः, वृक्षसामग्र्यामधिकानुप्रवेशेन जायमानायाः शिंशपाया वृक्षविशेषत्ववत्, लाघवेनादृष्टसामग्रीजन्यत्वस्यैवादृष्टत्वनियामकत्वाच्च, तथा चादृष्ट-

मकरन्दः।

रागवत इति चिकीर्षावत इत्यर्थः।

ननु ज्ञानेच्छाकृतिसमानकालीनसर्गान्तरीयादृष्टजनकसामग्र्यैवादृष्टद्वारा द्व्यणुकजनकतयाऽर्थान्तरमत आह **अदृष्टसामग्रीजन्यत्वे चेति।** न चादृष्टमधिकं कारणमिति न तदापत्तिरिति वाच्यम्। तथात्वे क्षित्यादेरदृष्टविशेषत्वापत्तेः, यथा शिंशपावृक्षविशेष इत्याशयात्, लाघवाददृष्टसामग्रीजन्यत्वस्यैवादृष्टत्वप्रयोजकत्वाच्च, तथा चादृष्टसामग्री अदृष्टप्रागभावादिघटिता नान्यत्र जनिकेति भावः।

टिप्पणी।

**न योगोपस्थितेति।** अन्वयगृहीतेत्यर्थः। अवयववृत्त्युपस्थितस्य वा। **असिद्धेरिति।** पक्ष इति शेषः। **कालस्याप्रसिद्धेरिति।** असम्बन्धित्वस्येत्यादि। **न च ज्ञानवत्कार्यत्वेनेति।** ज्ञानवत्कृतिसाधनत्वेन। ननु दृष्टान्तद्वारा प्राग्भवीयज्ञानादिसमानकालीनादृष्टोत्पादकसामग्रीजन्यत्वमादायार्थान्तरमाह **अदृष्टेति। अदृष्टद्वारकेति।** वीणादिगोचरकृतिजन्ये शब्दे संग्राह्ये वीणाया अपि स्वीयरूपाद्युपादानतया तद्गोचरकृतिजन्यत्वात् पक्षतावच्छेदकसत्त्वं स्यादिति स्वोपादानेति वाच्यम्, तथा सति पृथिव्याद्युपादानगोचरकृतौ जन्यत्वाभावादप्रसिद्धिरिति स्वोपादानगोचरकृतिजन्यं यत्तद्भिन्नत्वं विवक्षणीयम्, तत्र चैहिकपुष्टशरीरकामनाकृतप्रयागस्नानजन्यपुष्टशरीरस्येश्वरकर्तृकस्य प्रयागस्नानानुकूलशरीरावयवगोचरकृतिजन्यत्वात् तत्संग्रहो न स्यादित्यदृष्टा-

(२) रागवत इति प्रकाशिकाभिमतोऽत्र पाठो द्रष्टव्यः।

प्रकाशः।

**जन्यत्वे** चादृष्टत्वापत्तिः । **द्व्यणुका**समवायिकारणसमानकालीनकृतिजन्यमिति वा साध्य-मित्यापास्तम्। आद्ये, ज्ञानादिसिद्धावपि द्व्यणुकाजनकत्वादुदासीनसिद्धावप्रयोजकत्वात् । अन्त्ये, गौरवाद् द्व्यणुकासमानकालीनकृतित्वेनाजनकत्वात् । अपि च सामान्यज्ञानादिप्रत्यासत्तिजन्योपादान-ज्ञानादिमतार्थान्तरम् । न चानागतगोचर-प्रत्यक्षजनकप्रत्यासत्त्यजन्यं ज्ञानविशेषणम् । तादृशप्रत्या-सत्तेस्तज्जन्यत्वस्य च परं प्रत्यसिद्धेः ॥

अत्रोच्यते—**अदृष्टाद्वार**कोपादानगोचरजन्यकृत्यजन्यं समवेतं जन्यम्, अदृष्टप्रागभावव्याप्य-प्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम् समवेतत्वे सति प्रागभावप्रति-योगित्वात्, यदेवं तदेवं, यथा घटः, तथा चैतत्, तस्मात्तथा। एवञ्च शब्दफूत्कारादीनां पक्षत्वान्न

प्रकाशिका।

प्रागभावादिघटिता सामग्री नान्यत्र जनिकेति भावः। अदृष्टसामग्र्यार्थान्तरवारणाय प्रकारान्तरेण साध्यमाह **द्व्यणुके**ति। स्वासमवायिकारणे समानकालीनकृतिजन्यत्वं साध्यम्, अतो नोक्तार्था-न्तरतादवस्थ्यम्। **तज्जन्यत्वस्येति**। तथा च तदजन्यत्वस्याप्यप्रसिद्धिरिति भावः। पक्ष-समेऽपि सन्दिग्धानैकान्तिकमिति सम्प्रदायमतानुसारेण अनुगतं पक्षतावच्छेदकमाह **अदृष्टाद्वार-केति**। मृदङ्गादिगोचरकृतिजन्यशब्दादिसंग्रहायोपादानपदम्, तच्च स्वोपादानपरम्, अन्यथा तद-संग्रहात्। स्वोपादानगोचरजन्यकृतिजन्यान्यत्वं पक्षतावच्छेदकमतो न क्षित्याद्युपादानगोचरजन्य-कृत्यप्रसिद्ध्या तदप्रसिद्धिः। ऐहिकशरीरपुष्टिकामनया तीर्थस्नानाद्यव्यभिचारेण पुष्टशरीरं जायते तन्नास्मदादिकर्तृकं शरीरान्तरवत्। तथा च प्रयागज्ञानानुकूलशरीरावयवगोचरकृत्यादृष्टद्वारा जनिते पुष्टशरीरेऽव्याप्तिवारणायाद**ष्टाद्वारकेति**। साध्ये चोपादानगोचरत्वे न जनकता विवक्षितेति न मृदङ्गगोचरकृत्यादिजन्यत्वमादाय शब्दांशतः सिद्धसाधनम् । स्वविषयसमवेतकार्यं प्रत्येव तथा जनकत्वात्, निरुक्ते पुष्टशरीरेंऽशतःसिद्धसाधनवारणायादृष्टप्रागभावेत्यादिविशेषणमित्यन्यत्र

मकरन्दः।

सम्प्रदायमते उक्तसन्दिग्धानैकान्तिकभियाऽनुगतं पक्षतावच्छेदकमाह **अदृष्टाद्वारकेति**। तत्रोपादानपदं स्वोपादानपरम्। तथा च स्वोपादानगोचरजन्यकृतिजन्या घटादयः प्रसिद्धाः, तदन्यत्वं पक्षतावच्छेदकम्। एतेन उपादानपदं यदि यत्किञ्चिदुपादानपरं तदा अदृष्टद्वारकरूपा-द्युपादानमृदङ्गादिगोचरास्मदादिकृतिजन्यानां शब्दादीनां पक्षता न स्यात्, क्षित्याद्युपादानपरत्वेऽ-प्रसिद्धिरित्यपास्तम्। नन्वेवमदृष्टाद्वारकेति व्यर्थं अदृष्टद्वारककृतिमादाय प्रकृते दोषास्पर्शनादिति चेत्। अत्राहुः। कालीशरीरे यद् गौरं रूपमुत्पन्नं, तत् कालीशरीरगोचरतपश्चरणादिकृत्या जन्यते सा च कृतिरदृष्टद्वारिका तद्रूपोपादानकालीशरीरगोचरा चेति तद्रूपेऽव्याप्तिवारणाय तद्विशेषणमिति। केचित्तु ऐहिकपुष्टशरीरकामनया कामनातीर्थस्नानानन्तरं चिराद् यदिहैव पुष्टं शरीरमुत्पद्यते, तच्च शरीरान्तरवदस्मदादिकर्तृकम्। तथा च प्रयागस्नानानुकूल—शरीरावयवगोचरकृत्याऽदृष्ट-द्वारा जनिते पुष्टशरीरेऽव्याप्तिवारणाय तदित्याहुः। साध्येऽप्युपादानगोचरत्वेन जनकता विवक्षिता, तेन मृदङ्गगोचरकृतिजन्यत्वमादाय न शब्दांशे सिद्धसाधनम्। एवञ्च कालीरूपांशे सिद्धसाधन-वारणाय तत्रादृष्टेत्यादिविशेषणमित्यवधेयम्। शेषं प्रपञ्चितमनुमानप्रकाशेऽनुसन्धेयम्।

टिप्पणी।

द्वारककृतिजन्यत्वं विवक्षणीयमिति भावः। **प्रतियोग्युपादानगोचरेति**। वीणादिगोचरकृति-जन्ये शब्दे त्वंशतः सिद्धसाधनवारणायो**पादानेति**। उपादानगोचरत्वेन जनकता विवक्षिता सा च स्वविषयसमवेतम्प्रत्येवेति शब्दे न तज्जन्यत्वप्रसङ्गः। पुष्टशरीरेंऽशतः सिद्धसाधनवारणाया-

प्रकाशः ।

तैः सन्दिग्धानैकान्तिकत्वम् । **यदि च** कस्यचित् पक्षे नान्तर्भावः, तदा तमादाय निरुक्तस्य पक्षत्वे समूहालम्बनानुमितावविरोधः । *जन्यकृत्यजन्यत्वञ्च जन्यकृतिजन्यान्यत्वमित्यन्यत्वेन रूपेण* सामान्यलक्षणप्रत्यासत्त्या तावतामुपस्थितिः । जन्यत्वञ्च कृतौ स्वपक्षे विशेषणं, परं प्रत्युपरञ्जक-मात्रं प्रमेयो घट इतिवत् तत्प्रकारकज्ञानोपयोगि । उभयसिद्धसप्रयोजनत्वमात्रं तन्त्रं, न तु प्रयो-जनस्योभयसिद्धत्वम् । **क्षितिरेव** वा पक्षः । पक्षपक्षसमनैरपेक्ष्येण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्राऽनुमित्यविरोधान्न सन्दिग्धानैकान्तिकम् । **अनुमित्योर**न्योन्यानपेक्षणान्नान्यो-न्याश्रयः । न चाङ्कुरे पक्षधर्मताज्ञानाभावः, सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववत एव पक्षत्वात् । तच्च क्षितौ पञ्चावयववाक्येनाङ्कुरेऽन्यत इति न विशेषः ॥

यदि च क्षितौ लिङ्गनिश्चयदशायां तद्वृत्तयाऽङ्कुरस्य न निश्चयः तदा क्व सन्दिग्धानैकान्तिकम् । पक्षसमे साध्याभावसामानाधिकरण्यसन्देहाल्लिङ्गे व्याप्तिग्रह एव नोत्पद्यते इति चेत् । तर्हि धूमेऽपि व्याप्तिग्रहो न स्यात् । सन्दिग्धवह्निपर्वतधूमवत्तामेकधर्माभावेन अपक्षत्वात् । तस्मादनुमानोच्छेद-प्रसङ्गात् सन्दिग्धसाध्ये लिङ्गनिश्चयो न दोषः । लाघवादेकज्ञानसिद्धावुत्पत्तिमतोऽनादिकार्यप्रवाहाऽ-जनकत्वे नित्यत्वसिद्धौ, कारणं ततो निवर्त्तमानं नियतविषयतामादायैव निवर्त्तते, तस्याः कारणा-धीनत्वात् । अनित्यासर्वविषयकज्ञानाजन्यत्वेन पक्षविशेषणाद्वा ज्ञानस्य सर्वविषयकत्वसिद्धिः ॥

साध्ये च ज्ञानादीनां विशेषणतया विशिष्टस्य साधनत्वेन विवक्षितत्वान्न तदुपलक्षितक्षेत्रज्ञेनार्था-न्तरम् । अदृष्टप्रागभावेति विशेषणाच्चादृष्टद्वारा नास्मदादिभिः सिद्धसाधनम् । नापि साध्याप्रसिद्धिः ।

प्रकाशिका ।

विस्तरः । निश्चितसाध्याभाववद्वामित्वज्ञानमेव प्रतिबन्धकमिति मनसि कृत्याह **यदि चेति** । पक्षसमे व्यभिचारसन्देहस्यादोषत्वे किमिति गुरु पक्षतावच्छेदकमुपादेयमित्याशयेनाह **क्षितिरेवेति** । **अनुमित्योरिति** । एतच्च समाधिसौकार्येण । वस्तुतः समूहालम्बनरूपैकैवानुमितिरिति ध्येयम् । **पक्षविशेषणादिति** । यद्यपि तादृशज्ञानजन्यत्वबाधावतारं विनापि पक्षविशेषणमभिमतसिद्धिः बाधा-नवतारे तु पक्षविशेषणासिद्धावाश्रयासिद्धिः, तथापि बाधावतारदशायामेवोक्तपक्षकानुमित्याभिमत-सिद्धिरित्येतावन्मात्रतात्पर्य्यम् । ननूपादानप्रत्यक्षं न प्रवृत्तिकरणम् तद्विनापि शोकार्थिप्रवृत्ते-

मकरन्द ।

पक्षसमे सन्दिग्धानैकान्तिकं न दोष इत्यनुपदवक्ष्यमाणावष्टम्भादभ्युपगमवादेनाह **यदि चेति** । तमादाय समूहालम्बनानुमितावित्यर्थः ।

**अनुमित्योरिति** एतच्च पराभ्युपगमरीत्योक्तं, पक्षभेदमाश्रित्य भेदारोपाद्वा । वस्तुत एकैव समूहालम्बनाऽनुमितिरिति ध्येयम् ।

ननूपादानप्रत्यक्षं विनाऽपि शब्दार्थप्रवृत्तेर्व्यभिचार इत्यत आह **प्रवृत्तिविषयेति** । न ह्युपादानप्रत्यक्षत्वेन हेतुत्वं ब्रूमः, किन्तु प्रवृत्तिविधेयप्रत्यक्षत्वेनेति न व्यभिचार इत्यर्थः ।

यः स्पन्द इत्याद्यनुमानप्रकाशे द्रष्टव्यम् ।

**असमवायीति** असमवायिपदं प्रकृताभिप्रायेण स्वरूपनिर्वचनम् । यद्यप्यङ्गुलीतरुसंयोगा-समवायिकारणके शरीरतरुसंयोगेऽङ्गुली न कारणमिति व्यभिचारः, तथापि क्रियायामेवेत्याशय इत्यन्ये । तत्राप्यङ्गुली कारणमित्येके ।

सन्दिग्धव्यतिरेकित्वमप्रयोजकत्वम् ।

टिप्पणी ।

दृष्टप्रागभावेत्याद्यप्रतियोगित्वान्तं बोध्यम् । **अदृष्टप्रागभावव्याप्येति** । प्रागभावविशेषणं तेन साध्यवैकल्यम् । **पक्षधर्मताज्ञानाभाव इति** । अनुमित्युद्देश्यतया निर्दिश्यमानत्वमेव पक्षत्वम् ।

प्रकाशः।

सिद्धवृत्त्यसिद्धविषया हि कृतिः सिद्धविषयप्रत्यक्षे सति भवति, न हि मृदवयवानां संस्थानविशेषे कृतिसाध्येष्टसाधनत्वानुमितावपि अवयवानां प्रत्यक्षेणोपस्थितिं विना प्रवृत्तिः। न चोपादानप्रत्यक्षं प्रवर्त्तकज्ञानोपक्षीणम्, अप्रत्यक्षे परमाणौ तत्क्रियायामिष्टसाधनताज्ञानेऽप्यप्रवृत्तेः। **प्रवृत्तिविषय-** मृदङ्गादेः प्रत्यक्षत्वाद् न शब्दादिना व्यभिचारः। न चेश्वरेऽनुमित्यापत्तिः, **स्वसुखादि**साधनतानुमितेर्हेतुतायाः गृहीतायाः ईश्वरे धर्म्यभावेन बाधाद्, अनुमितिमात्रस्य च हेतुत्वाग्रहात्। उपादानस्य सिद्धत्वेऽप्युपादेयत्वेन चिकीर्षाविषयत्वात्। न च द्वेषसिद्धिः, तस्य कृतिद्वारा कार्यहेतुत्वात्। प्रयोजनं विना द्वेषमात्राच्छत्रुनाशानुकूलकृतेरनुत्पत्तेः। किन्तु दुःखसाधनध्वंसं तत्साध्यदुःखानुत्पादं वा फलमुद्दिश्य तत्साधनताज्ञानात् कृतिः। तथा चेष्टसाधनताज्ञानात्तत्रेच्छाऽस्त्येवेति सैव कृतिकारणम्, क्लृप्तत्वात्। द्वेषस्तु परम्परया तदुपक्षीणः। शत्रुं द्वेष्मीत्यऽबाधितमानसप्रत्यक्षाच्च तत्सिद्धिः॥

नापि साध्यविकलो दृष्टान्तः, प्रयत्नवदात्मसंयोगस्य चेष्टाद्वारा घटहेतुतया प्रयत्नस्येवात्मनोऽपि हेतुत्वात्। न चात्मसंयोगे सत्यपि प्रयत्नं विना न चेष्टेति प्रयत्न एव तत्कारणं संयोगपरिचायकमात्रमात्मेति वाच्यम्। संयोगमात्रस्याकारणत्वेन संयोगिविशेषितस्य तस्य हेतुत्वात्। नात्मसंयोगः क्रियाहेतुः, संयोगाभावेन तदभावादर्शनादिति चेत्। न। यः स्पन्दो व्यधिकरणयद्गुणजन्यः स तत्संयोगाऽसमवायिकारणकः, यथा स्पर्शवद्वेगवत्संयोगजा क्रियेति तत्सिद्धेः। **असमवायि**कारणसंयोगाश्रयस्य तत्कार्यजनकत्वनियमाच्च।

केचित्तु अनुकूलकृतिसमवायित्वमेव कर्तृत्वं, न तु जनकत्वविशेषितं, गौरवात्, तथा च ज्ञानेच्छाकृतिजन्यत्वस्यैव साध्यत्वात् तदाश्रयत्वमेवेश्वरस्य कर्तृत्वमित्याहुः। सामान्यादिगोचरप्रत्यासत्त्या कपालगोचरप्रत्यक्षेऽपि घटादावकर्तृत्वात् कर्तृत्वेन ज्ञानं सिद्ध्यत्तद्विलक्षणमेव सिद्ध्यतीति संक्षेपः॥१॥

यद्यपि बाधस्तृतीयस्तवक एव निरस्तः, तथापि प्राधान्येन तत्र योग्यानुपलब्धिबाधो निरस्त इह त्वनुमानबाधो निरस्यः। तत्र व्यापकानुलब्धिविरोधेन बाधो विवक्षितः, प्रतिरोधो वा? आद्ये, न बाधोऽस्य कार्यत्वस्य धर्मिसिद्ध्यर्थमन्यैर्हेतुभिः कर्तृत्वादिभिरुपजीव्यत्वात्। अन्त्ये, प्रतिबन्धः प्रतिरोधो न। हीनोत्तमबलयोस्तदभावादित्यर्थः। ननु परव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युपदर्शनेन

प्रकाशिका।

रित्यत आह **प्रवृत्तिविषयेति**। नोपादानप्रत्यक्षं प्रवृत्तिकारणं ब्रूमः, किन्तु प्रवृत्तिविषयप्रत्यक्षमतो न व्यभिचार इत्यर्थः। **स्वसुखादीति**। यद्यपि स्वसुखसाधनतानुमित्यादिना हेतुत्वेऽननुगमात् इष्टसाधनतानुमितित्वेन हेतुत्वं वाच्यम्, इष्टञ्चास्मदादिसुखादिकमेवेश्वरस्येति न तादृशानुमितौ बाधः, तथापीष्टसाधनताज्ञानत्वेनैव हेतुत्वं लाघवादित्युपादनप्रत्यक्षानुरोधेनैकमेव ज्ञानं प्रत्यक्षात्मकं सिद्ध्यति लाघवादित्यत्र तात्पर्यम्। **सैवेति**। समानविषयत्वादित्यपि द्रष्टव्यम्। संयोगमात्रस्यैवेत्यादिहेतौ हेत्वन्तरं समुच्चिनोति **असमवायीति**। असमवायीति प्रकृताभिप्रायेण स्वरूपनिर्वचनपरम्। नचाङ्गुलीतरुसंयोगजशरीरतरुसंयोगे नाङ्गुली कारणमिति व्यभिचार इति वाच्यम्। तत्राप्यङ्गुल्याः कारणत्वात्, क्रियारूपकार्येऽयं नियम इत्याशयाद्वा। सन्दिग्धव्यतिरेकित्वमप्रयोजकत्वम्॥

क्रमेण हेतूनाह **विपक्षेति**।

टिप्पणी

यदा च क्षितिः सकर्तृकेत्यादि न्यायस्तदाङ्कुरस्य पक्षत्वमेव नास्तीति क्व तत्र पक्षधर्मताज्ञानमिति भावः। **कर्त्तृत्वादिभिरुपजीव्यत्वादिति**। शरीरित्वसाधकैः क्षितिरकर्तृका शरीरजन्यत्वादित्यनुमानोत्थापकैरित्यादिः। **तत्र प्रतियोगिविशेषणतायामित्यादि**। तत्रार्थस्य अत् प्रतियोगिजन्यत्वं शरीरस्य तद्विशेषणतायामित्यर्थः।

**न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ॥**
**सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना ॥ २ ॥**

तथाहि—अत्र ये शरीरप्रसङ्गमुद्भावयन्ति, कस्तेषामाशयः ? । किमीश्वरं पक्षयित्वा कर्तृत्वाच्छरीरित्वं; ततः शरीरव्यावृत्तेरकर्तृत्वम् । अथ क्षित्यादिकमेव पक्षयित्वा कार्यत्वाच्छरीरिकर्तृकत्वम् । यद्वा शरीराऽजन्यत्वादकार्यत्वम्, परव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युपदर्शनमात्रं वेति । तत्र प्रथमद्वितीययोराश्रयासिद्धिबाधापसिद्धान्तप्रतिज्ञाविरोधाः । तृतीये तु व्याप्तौ सत्यां चेदमनिष्टम्, असत्यान्तु न प्रसङ्गः । चतुर्थे बाधानैकान्तिकौ । पञ्चमे त्वसमर्थविशेषणत्वम् । षष्ठेऽपि नागृह्यमाणविशेषया व्याप्त्या बाधः । न चागृह्यमाणविशेषव्याप्त्या गृह्यमाणविशेषायाः सत्प्रतिपक्षत्वम् । अस्ति च कार्यत्वव्याप्तेः पक्षधर्मतापरिग्रहो विशेषः । कर्त्ता शरीरी, विपरीतो न कर्त्तेति चानयोस्तद्विरहः ॥

---

प्रकाशः ।

तद्विरोधमात्रं स्यात्, यद्वा—व्याप्तिपक्षधर्मतोपस्थाप्यविशेषयोर्विरोधेन विशेषविरोधः स्यादित्यत आह **सिद्ध्यसिद्ध्योरिति** ॥ आद्ये कार्यत्वस्य पक्षधर्मत्वसिद्धौ कर्तृत्वादेश्च तदसिद्धौ सत्यां तुल्यबलत्वाभावेन विरोधाभावादित्यर्थः । अन्त्ये अभिमतविशेषप्रसिद्ध्यसिद्ध्योः सहोपलम्भविरोधिविशेषानुपलम्भाभ्यां विरोधस्य प्रत्येतुमशक्यत्वादित्यर्थः । **सन्दिग्धव्यतिरेकित्वा**प्रतीतव्याप्तिकत्वोपाधिभिरसिद्धिरपि नेत्याह **नासिद्धिरिति** ॥ **विपक्ष**बाधकोपदर्शनव्याप्तिज्ञानोपाध्यभावविरहप्रतिपादनैरसिद्धिनिबन्धनस्याभावादित्यर्थः ॥

कारिकार्थं सङ्कलयितुं पराभिप्रायं विकल्पयति **तथाहीति** ॥ सत्तयानुपलब्धेः प्रागेव निरासाज्ज्ञातायास्तथात्वं वाच्यम्, तत्र पक्षादिविभागं पृच्छति **किमीश्वरमिति** ॥ **कर्तृत्वादिति** ॥ तथा चाशरीरस्य कायनिर्माणशक्त्यभावापत्तिरिति भावः ॥ तत एव—शरीराजन्यत्वादित्यर्थः ॥ परव्याप्तिः—कार्यत्वसकर्तृकत्वव्याप्तिः ॥ **तत्रेति** ॥ ईश्वरस्य धर्मिणः प्रमाणेन ज्ञानाज्ञानयोर्धर्मिग्राहकमानबाधाश्रयासिद्धी । ईश्वरद्वेषिणः परस्य कर्तृत्वात् तच्छरीरित्वस्वीकारेऽपसिद्धान्तः । ईश्वरः शरीरी कर्त्ता चेत्यत्र माता वन्ध्येतिवत् प्रतिज्ञापदयोर्व्याघातः । ईश्वरपदस्याशरीरकर्तृवाचकत्वादित्यर्थः । कार्यत्वशरीरिकर्तृत्वयोर्व्याप्तिबलात् क्षित्यादौ शरीरिकर्तृसाधनेऽपि नाऽशरीरिकर्तृनिरास इत्याह **तृतीय इति** ॥ क्षित्यादौ शरीरिणः कर्तुर्योग्याऽनुपलम्भेन बाध इति भावः । वस्तुतः शरीरकर्त्रभावेऽप्यङ्कुरादौ कार्यत्वाव्यभिचारेण न व्याप्तिरित्याह **असत्यान्त्विति** ॥ क्षित्यादेः सर्वस्य पक्षत्वे बाधः, कस्यचिदपक्षत्वे तत्रानेकान्तः, प्रमितसाध्याऽभाववद्धर्मिकस्यैव बाधत्वादित्याह **चतुर्थ इति** । जन्यत्वमात्रस्यैव गमकत्वे शरीरं व्यर्थं व्याप्यतानवच्छेदकत्वरूपम् । शरीरजन्यत्वाभावादिति नञः प्रतियोगिविशेषणतायामखण्डस्यैव हेतुतायामजन्यत्वमेवोपाधिरिति न साधनं साध्यव्याप्यमित्याह **पञ्चमे त्विति** । स्तम्भनं बाधः प्रतिरोधो वा न सम्भवतीति क्रमेणाह **षष्ठेऽपीति** । विशेषः पक्षधर्मता । **अस्ति चेति**, चो हेतौ । यस्मादस्मद्व्याप्तौ पक्षधर्मतास्ति, त्वदीयव्याप्तौ च सा नास्ति धर्म्यज्ञानात् । ज्ञाने वा धर्मिग्राहकमानबाधः । केवलव्याप्तेश्चासाधकत्वमित्यर्थः ।

ननु क्षित्यादिकं न बुद्धिमद्धेतुकं शरीराजन्यत्वादित्यत्र यद् बुद्धिमद्धेतुकं तच्छरीरजन्यमिति व्यतिरेकव्याप्तौ पक्षधर्मतालाभः स्यादित्याह—

ननु यद् बुद्धिमद्धेतुकं तच्छरीरहेतुकमिति नियमे यच्छरीरहेतुकं न भवति तद्बुद्धिमद्धेतुकमपि न भवति इति विपर्ययनियमोऽपि स्यात्, तथाच पक्षधर्मताऽपि लभ्यते इति चेत्। न गगनादेः सपक्षभागस्यापि सम्भवात् केवलव्यतिरेकित्वानुपपत्तेः। अन्वये तु विशेषणासामर्थ्यात्। हेतुव्यावृत्तिमात्रमेव हि तत्र कर्तृव्यावृत्तिव्याप्तं, न तु शरीररूपहेतुव्यावृत्तिरित्युक्तम्। व्याप्तश्च पक्षधर्म उपयुज्यते, न त्वन्योऽतिप्रसङ्गात्॥

एतेन तद्व्यापकरहितत्वादिति सामान्योपसंहारस्याऽसिद्धत्वं वेदितव्यम्। न हि यद्व्यावृत्तिर्यदभावेऽन्वयव्यतिरेकाभ्यामुपसंहर्त्तुमशक्या, तत् तस्य व्यापकं

प्रकाशः।

**नन्विति।** इदं केवलव्यतिरेकितया साधनम् अन्वयव्याप्तिसत्त्वेऽपि व्यतिरेकिव्याप्तिबलेन, अन्वयव्यतिरेकितया वा ?। तत्र नाद्य इत्याह **गगनादेरिति।** असत्सपक्षस्यैव केवलव्यतिरेकित्वादित्यर्थः। शरीररूपविशेषणवैयर्थ्येनान्वयव्याप्त्यभावाद्व्यतिरेकेऽपि तदभावान्नान्त्य इत्याह **अन्वये त्विति।** व्याप्यत्वासिद्धिं परिहरतश्च स्वरूपासिद्धिप्रसङ्ग इति भावः। केवलायाश्च पक्षधर्मताया असाधकत्वाद्व्याप्त्यभावे साऽप्यनुपयोगिनीत्याह **व्याप्तश्चेति।**

ननु ज्ञानमनित्यमेवेत्यादिप्राथमिकव्याप्तिप्रत्यक्षविरोधाद् नाऽशरीरनित्यज्ञानादिकर्तृसिद्धिः, अतएव शरीरमनित्यमेवेति नियमान्न कर्तृत्वेन नित्यातीन्द्रियतत्सिद्धिरीश्वरे। न चाप्रयोजकत्वम्। निरुपाधित्वात्। कार्यत्वसकर्तृकत्वयोरपि यदि निरुपाधित्वमस्ति, तदा तुल्यबलत्वेन ज्ञातात् सत्प्रतिपक्षवत् प्रतिबन्धोऽस्तु। मैवम्। पक्षधर्मताबलाद् नित्यज्ञानादिसिद्धौ ज्ञानमनित्यमेवेत्यादिव्याप्तिग्रहस्याऽप्रतिबन्धकत्वात्। अस्मदादिज्ञानमात्रविषयत्वेन तत्प्राथमिकव्याप्तिप्रत्यक्षस्य तस्य भिन्नविषयत्वात्। एकविषयकविरोधिज्ञानस्यैव प्रतिबन्धकत्वात्। नित्यत्वानित्यत्वयोरेकजातीये द्रव्येऽविरोधात्। न च ज्ञानत्वं नित्यावृत्त्येवेति ज्ञातमतस्तत्र न नित्यवृत्तित्वज्ञानमिति वाच्यम्। उभयसिद्धनित्यावृत्तित्वज्ञानेऽप्यतिरिक्तनित्यवृत्तित्वज्ञप्तावविरोधात्। अत एव कर्ता शरीर्येवेत्याद्यपि ज्ञानं प्रतिबन्धकमपास्तम्।

ननु क्षित्याद्यकर्तृकं कर्तृव्यापकरहितत्वादित्यत्र नोक्तदोष इत्यऽत आह **एतेनेति।** दृष्टान्ते विशेषणासामर्थ्यप्रदर्शनेन सामान्यतः कर्तृव्यापकरहितत्वमसिद्धम्। शरीरजन्यत्वादेश्च रहितत्व**मसमर्थविशेषणतयेत्यर्थः।** तदेव स्पष्टयति **न हीति।** यद्व्यावृत्तिः, शरीरव्यावृत्तिः। यदभावे कर्त्रभावे। तच्छरीरं तस्य कर्तुर्व्यापकमित्यर्थः। स एव तस्य व्यापको यस्याभावे साध्ये दृष्टान्ते अन्वयव्यतिरेकाभ्यां पक्षे उपसंहर्तुं शक्यते, यथा वह्नेरभावो धूमाभावे। प्रकृते चान्वयिनि दृष्टान्ते विशेषणासामर्थ्ये तदप्रयोजकत्वस्योक्तत्वाद्व्यतिरेकोऽप्यप्रयोजक इति भावः।

ननु किं विशेषणस्यासामर्थ्यं ? न तावन्निष्प्रयोजनकत्वं, व्याप्तिग्रहोपयुक्तविशेषणस्यैव पक्षध-

प्रकाशिका।

ननु कर्तृव्यापकरहितत्वादित्येवं प्रयोगे व्यर्थविशेषणतेत्यत आह **सामान्यत इति।** असिद्धमप्रसिद्धं तादृशप्रमेयत्वस्य सत्त्वात्। न च यत्किञ्चित्कर्तृव्यापकरहितत्वं हेतुः तथा सति स्वरूपासिद्धिरित्यर्थः। **असमर्थविशेषणतयेति** असिद्धमित्यनुपज्यते, तदर्थश्च व्याप्यत्वासिद्धत्वम्। विशिष्टे व्याप्तिरित्यस्य विशेषणविशेष्ययोरेकैव व्याप्तिर्व्यासज्यवृत्तिरिति वार्थः।

मकरन्दः।

ननु कर्तृव्यापकरहितत्वादित्यत्र कुतो विशेषणासामर्थ्यमित्यत आह **सामान्यत** इति। **असमर्थविशेषणतयेति** असिद्धमित्यनुपज्यते। शरीरजन्यत्वाश्रयमात्रप्रतियोगिकयावदन्योन्याभावहेतुत्वे वैयर्थ्येऽपि शरीरजन्यत्वात्यन्ताभावेऽखण्डे न वैयर्थ्यं, शरीरं विना तस्याज्ञानेन तत्र व्याप्ते-

प्रकाशः ।

र्मतौपयिकस्यापि तस्य सप्रयोजनकत्वात् । व्यभिचारवारकस्यापि सार्थकत्वेऽनुमितिप्रयोजकत्वस्यैव तन्त्रत्वात् । नापि व्यभिचारवारकविशेषणवत्येव व्याप्तिरिति तच्छून्यत्वं, निर्विशेषणेऽपि गोत्वादौ व्याप्तिः । तत्र व्यक्तेरेव विशेषणत्वेऽन्योन्याश्रयात् । नाऽपि व्यभिचारवारकं विशेषणं विशिष्टे व्याप्तिग्राहकं, सहचारदर्शनादिसत्त्वे तदभावे व्याप्तिग्रहाविलम्बात् । नच व्यभिचारावारकविशेषणशून्य एव व्याप्तिग्रहः । प्रमेयत्वेन ज्ञायमाने धूमे व्याप्तिग्रहात्तत्रोपात्तव्यभिचारावारकविशेषणशून्यत्वस्य च विवक्षितत्वे विरोधः । तत्रोपात्तं तेन शून्यश्चेत्यस्यासम्भवात् ।

अथ शरीरजन्यत्वाभावे न व्याप्तिः, **एकवृत्तित्व**बाधे सत्येव व्यासज्यवृत्तित्वात्, **विशेष्यताव**च्छेदकस्य व्याप्त्यनवच्छेदकत्वे सत्येव विशेषणस्य तदवच्छेदकत्वाच्च, किन्तु जन्यत्वाभावे व्याप्तिः तत्र स्वरूपासिद्धिः, तन्निरासार्थं विशेषणाभिधाने व्याप्यत्वासिद्धिः । न, अव्यभिचारानौपाधिकत्वयोर्विशिष्टे सत्त्वेन तदभावसाधने बाधात् । किञ्चैवं निर्धूमोऽयम् आर्द्रेन्धनप्रभववह्निरहितत्वादित्याद्यप्यनुमानं न स्यात् । **यद्वा** शरीरजन्यत्वाभावोऽखण्ड एव हेतुरस्तु, तत्र व्यर्थविशेषणत्वाभावात् ।

अत्राहुः । शरीराजन्यत्वस्य व्याप्यत्वेऽपि शरीरं न व्याप्यतावच्छेदकं, गौरवात् । **येन विशेषणेन विना** व्याप्तिर्न गृह्यते, तस्यैव व्याप्यतावच्छेदकत्वनियमात् । अत एव गन्धस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धत्वेन गन्धादिषु मध्ये इति विशेषणं विना व्याप्तिर्ग्रहीतुं न शक्यते इत्यसिद्धिवारकमपि विशेषणं सार्थकम् । व्याप्यतावच्छेदकस्यैव हेतुतावच्छेदकत्वात् । धूमे च वह्निविशेषस्य कारणत्वात् कारणाभावस्य च कार्याभावव्याप्यत्वाच्च तत्रोक्तदोषः ।

शरीरजन्यत्वाभावोऽप्यखण्डो न हेतुः । यदि शरीरजन्यत्वप्रयुक्तं सकर्तृकत्वं स्यात्, तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्यव्याप्यता स्यात् । न चैवम्, किन्तु जन्यत्वप्रयुक्तं,

प्रकाशिका ।

विशेषणं व्याप्यतावच्छेदकं विशेष्यञ्च व्याप्तेराश्रय इति वा । आद्ये **एकवृत्तित्वेति ।** अन्त्ये **विशेष्यतेति ।** ननु शरीरजन्यत्वाश्रयप्रतियोगिकयावदन्योन्याभावरूपे हेतौ वैयर्थ्येऽपि शरीरजन्यत्वाभावेऽखण्डहेतौ न व्यर्थता शरीरं विना तस्याज्ञानेन शरीररूपविशेषणस्य व्याप्तिग्रहौपयिकत्वादित्याशयेनाह **यद्वेति । येन विशेषणेनेति ।** यद्यपि नीलधूमत्वादौ व्याप्तिरस्त्येव, तथापि नीलधूमत्वावच्छिन्ने व्याप्तिविरहोऽस्त्येव, गौरवेण नीलधूमत्वस्य व्याप्त्यनवच्छेदकत्वात् । न च नीलधूमत्वावच्छिन्ने व्याप्तेरप्रसिद्धिः, वह्निविशेषं प्रति नीलधूमत्वस्यैव व्याप्यतावच्छेदकत्वात् । न च वह्निविशेषप्रतियोगिकनीलधूमत्वावच्छिन्नव्याप्तेस्सत्वात्तद्विरहोऽसिद्ध इति वाच्यम् । नीलधूमत्वावच्छिन्नव्याप्तिप्रतियोगित्वाभावस्य वह्नित्वावच्छिन्नेऽसिद्धिरूपत्वात् । केचित्तु गौरवेण नीलधूमत्वस्यावच्छेदकत्वाग्रहात् तदवच्छिन्नव्याप्त्यज्ञानरूपैवासिद्धिरत्रेत्याहुः । **यन्निष्ठेति ।** यद्विशेष्यतावच्छेदकाश्रयनिष्ठेत्यर्थः । **अभावनिष्ठेति ।** अभावत्वविशेष्यतावच्छेदकाश्रयनिष्ठव्याप्तावित्यर्थः । **न शरीरजन्यत्वमिति ।** अभावत्वाश्रये जन्यत्वाभावे शरीरं विनैवाकर्तृत्वनिरूपितव्याप्तिग्रहाच्च विशिष्टे व्याप्तिरित्यर्थः।

नन्वेवं जन्यत्वमपि न व्याप्यतावच्छेदकं सकारणकत्वाभावेऽभावत्वाश्रये तेन विनैवाकर्तृकत्वव्या-

मकरन्दः ।

ग्रहादित्याह **यद्वेति । येन विशेषणेन विनेति ।** यद्यप्येवमपि नीलधूमादौ व्यभिचाराभावविशिष्टसहचारादिरूपव्याप्तेः सत्त्वात् कथं व्याप्यत्वासिद्धिः, तथाप्यनुमानप्रकाशोक्तमनुसन्धेयम् । **यन्निष्ठेति ।** यद्विशेष्यतावच्छेदकविशिष्टनिष्ठेत्यर्थः । **अभावनिष्ठव्याप्तौ** = अभावत्वरूपविशेष्य-

**नामेति । विशेषविरोधस्तु विशेषसिद्धौ सहोपलम्भेन तदसिद्धौ मिथोधर्मिपरिहारानुपलम्भेन निरस्तो नाशङ्कामप्यधिरोहतीति ॥**

---

प्रकाशः ।

लाघवात्, तथा चाजन्यत्वमेवोपाधिः । न च सत्प्रतिपक्षोच्छेदात् पूर्वसाधनव्यतिरेको नोपाधिः, आभासस्थापनायां पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वेन तत्र सत्प्रतिपक्षावकाशात् ॥

यद्वा यन्निरूपिता **यन्निष्ठा** व्याप्तिर्येन विशेषणेन विना न गृह्यते, तत्र विशिष्टं व्याप्यतावच्छेदकम् । अकर्तृत्वनिरूपिता**भावनिष्ठव्याप्तौ** च शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं क्लृप्तमिति **न शरीर**जन्यत्वमवच्छेदकम् । अतो गौरवेण शरीरजन्यत्वमप्रतियोगितया च जन्यत्वं नावच्छेदकमिति व्याप्यतावच्छेदकाभावान्न शरीरजन्यत्वाभावोऽकर्तृत्वव्याप्यः, अन्यथाऽदृष्टाजन्यत्वस्यापि क्षित्यादावनुमित्यापत्तेः ।

**अस्मत्पितृचरणास्तु**—प्रतिपक्षानुमानस्य प्रसिद्धकर्तृजन्यत्वाभावविषयत्वात्, अप्रतीतप्रतियोगिकाभावस्य निरूपयितुमशक्यत्वात् । स्थापनानुमानस्य च पक्षधर्मताबलात् प्रसिद्धकर्तृसाधकत्वाद् भिन्नविषयतया न प्रतिबध्यप्रतिबन्धकभावः । न च कर्तृजन्यत्वस्योपाधेः स्थापनाविषयतया तदभावः साध्यः, **तस्याप्य**प्रसिद्धकर्तृव्यक्तिमादाय पर्यवसानात् । न चैवं सत्प्रतिपक्षोच्छेदः । **तस्य गोत्वा**द्येकभावाभावसाधकविषयत्वादित्याहुः ।

अर्थान्तरेण सिद्ध्यसिद्ध्योरिति व्याचष्टे **विशेषेति** । व्याप्तिपक्षधर्मताभ्यामानीयमानशरीरित्वाशरीरित्वसिद्धौ **रूपरसवत् कर्त्तरि** सहोपलम्भेन, तदसिद्धौ कर्तरि तदुभयासिद्धौ

प्रकाशिका ।

प्तिग्रहादित्यनुशयेनाह **अस्मत्पितृचरणा इति** । सामान्यलक्षणानङ्गीकारेण, तन्मते विभिन्नविषयत्वमिति केचित् । वस्तुतो नित्यज्ञानादिमतः कर्तुरप्रामाणिकतया न सामान्यलक्षणयापि तन्मते उपस्थितिः, अन्यथा शशशृङ्गादेरपि शृङ्गत्वेनोपस्थित्यापत्तिरिति परं प्रति विरोधोद्भावनं द्रष्टव्यम् । इदञ्चापाततः; वस्तुतः स्थापनानुमानेऽस्य तर्कसहायत्वात् प्रत्यनुमानस्य चातथात्वाद् व्यर्थविशेषणत्वाच्च न तुल्यबलत्वेति न सत्प्रतिपक्ष इति तात्पर्यम् । **तस्य गोत्वेति** । गोत्वाद्येकभावाभावविषयत्वेन त्वया वाच्यत्वादित्यर्थः । **रूपरसवदिति** । यद्यपि शरीरित्वाशरीरि-

मकरन्दः ।

तावच्छेदकविशिष्टनिष्ठव्याप्तावित्यर्थः । **न शरीरेति** । अभावत्वावच्छिन्ने जन्यत्वाभावे शरीरं विनैवाकर्तृकत्वनिरूपितव्याप्तिग्रहान्न तद्विशिष्टे व्याप्तिरित्यर्थः ।

नन्वेवं जन्यत्वाभावोऽपि तद्व्याप्यो न स्यात् सकारणकत्वाभावादौ जन्यत्वविशेषणं विनाऽपि अभावत्वावच्छिन्ननिष्ठव्याप्तेर्ग्रहादित्यनुशयादाह **अस्मत्पितृचरणास्त्विति** । सामान्यलक्षणाऽनङ्गीकारेण तन्मते भिन्नविषयत्वं बोध्यम् । वस्तुतस्तु स्थापनानुमानस्य तर्कसचिवत्वादस्य च तदभावाद् व्यर्थविशेषणत्वादिदोषाच्च न्यूनबलत्वमिति न सत्प्रतिपक्ष इति भावः ।

**तस्येति** । गोत्वाद्येकभावाभावसाधकत्वविषयत्वेन त्वया समाधेयत्वादित्यर्थः । **रूपरसवत् कर्त्तरीति** । यद्यपि शरीरित्वाशरीरित्वयोस्तथा न सहोपलम्भः, तथापि कर्तृजातीये तथोपलम्भ

टिप्पणी ।

**शरीरित्वाशरीरित्वसिद्धाविति** । अथ घटादिकर्त्तर्येव शरीरित्वं प्रमाणेन प्रत्यक्षेण सिद्धं तत्र न व्याप्त्याद्युपयोग इति न व्याप्त्याद्यानीयमानत्वमिति चेन्न । आनीयमाने क्षितिः सकर्तृका कार्यत्वादित्याद्यनुमानोपस्थिते क्षित्यादिकर्त्तरि शरीरित्वाशरीरित्वयोः सिद्धावित्यत्र तात्पर्यात् ।

स्यादेतत् । अस्ति तावत् कार्यस्यावान्तरविशेषो यतः शरीरिकर्तृकत्वमनुमीयते, तथाच तत्प्रयुक्तामेव व्याप्तिमुपजीवेत् कार्यत्वसामान्यमिति स्यात् ।

प्रकाशः ।

**यो मिथो धर्मि**परीहारोऽन्योन्यधर्मिप्रतिक्षेपः, तस्यानुपलम्भेन निरस्तो विशेषविरोधो न शङ्कामप्यधिरोहतीत्यर्थः ।

असिद्धिनिबन्धनमुपाधिमाह **अस्तीति** । शरीरजन्यकार्ये यदवच्छेदेन शरीरस्य कारणत्वं गृह्यते, तत् सामान्यात्मकमेकमङ्गीकार्यम् , अतस्तत्सामान्यवत्त्वमेवोपाधिरिति न कार्यत्वसामान्यं कर्तृजन्य-

प्रकाशिका ।

त्वयोः कदापि न सहोपलम्भः, तथापि कर्त्तृत्वाशरीरित्वयोः सहोपलम्भ इत्यर्थः । कर्त्तृजातीये शरीरित्वाशरीरित्वयोरविरोध इति वा फक्किकार्थः । **यो मिथ इति** । शरीरिकर्त्तृत्वाशरीरिकर्त्तृत्वयोरिति शेषः । कर्त्तृत्वाशरीरित्वयोश्च मिथो धर्म्मिपरिहारोपलम्भेऽपि तद्विरोधस्य प्रसिद्धमात्रविषयकत्वे पक्षधर्म्मताबललभ्याप्रसिद्धकर्त्तृबाधकत्वादप्रसिद्धविषयत्वे च तत्साधकमानेन तयोस्सहोपलम्भेन विरोधस्यैवासिद्धेरत एवावयवो महानेवेत्यादिव्याप्तिविरोधाच्च परमाण्वाद्यसिद्धिरित्यत्र तात्पर्यम् । ननु घटत्वादिकमेव शरीरजन्यतावच्छेदकमिति न शरीरजन्यता-

मकरन्दः ।

एव सहोपलम्भो बोध्यः । यद्वा कर्त्तृत्वाशरीरित्वयोः सहोपलम्भो बोध्यः । **यो मिथो धर्मीति** । शरीरिकर्तृत्वाशरीरिकर्तृत्वयोरिति शेषः । न च कर्तृत्वाशरीरित्वयोः प्रत्यक्षविरोधात्तथापि कथं समावेश इति वाच्यम् । तस्य प्रसिद्धमात्रविषयकत्वेन पक्षधर्म्मताबललभ्यकर्त्तरि तदुभयसिद्धौ विरोधाभावात्, अन्यथा अवयवो महानेवेत्यादिधीविरोधात् परमाण्वादेरसिद्धिप्रसङ्गादिति भावः ।

टिप्पणी ।

न चैकत्र धर्म्मिणि विरुद्धयोः शरीरित्वाशरीरित्वयोः कथं सिद्धिः किञ्च साधकमिति वाच्यम् । 'स वै शरीरी प्रथम' इत्यादि 'अपाणिपादो जवनो गृहीते'त्यादिश्रुतयो हि मानम् , तत्प्रामाण्याभ्युपगमेऽनाहार्य्यशरीराभिमानस्य शरीरित्वप्रयोजकस्य मुख्यस्य विरहेणाशरीरित्वस्याहार्य्याभिमानस्य शरीरप्रयुक्तकार्य्यप्रयोजकस्य मुख्यस्य शरीरित्वप्रयोजकस्य सत्त्वेन शरीरित्वस्य चोपपन्नतया तत्सिद्धौ बाधकाभावात् । एवञ्च शरीर्य्यकर्त्तृत्वस्य मुख्यशरीरित्वघटितस्य प्रत्यक्षोपलब्धस्य न सकर्त्तृकत्वप्रतिक्षेपकत्वम् । यद्वा शरीरित्ववदशरीरित्वस्य सिद्धावित्यर्थः । अभ्युपगम्यमान इति शेषः । कर्त्तरीत्यनन्तरं कर्त्तृत्वाशरीरित्वयोरिति शेषः । तथा च यथाकथञ्चित् कर्त्ता शरीरी प्रमाणेन प्रत्यक्षादिना सिद्धस्तथा कश्चित् कर्त्तानुमानादिना ह्यशरीरी सिद्धोऽस्तीति त्वया यद्युपेयते तदा रूपरसवत् कर्त्तृत्वाशरीरित्वयोः सह गृहीतत्वेन क्षित्यादेः शरीर्य्यकर्त्तृकत्वेऽप्यशरीरिकर्त्तृकत्वमादाय सकर्त्तृकत्वस्य सम्भवेन तत्प्रतिक्षेपकत्वलक्षणविरोधासम्भवेन तदग्रहणविशेषविरोधो निरस्त इति पर्य्यवसितार्थः । **तदसिद्धाविति** । श्रुतेः प्रामाण्यानभ्युपगमे क्षित्यादिकर्त्तरि शरीरित्वाशरीरित्वयोरसिद्धावित्यर्थः । यद्वा प्रत्यक्षप्रमाणसिद्धशरीरकर्त्तृत्वसिद्धावभ्युपगममवे(?)प्यनभ्युपगमेनाशरीरिकर्त्तृसिद्धावित्यर्थः । **तदुभयासिद्धाविति** । शरीरित्वाशरीरित्वोभयासिद्धावित्यर्थः । कर्त्तृत्वाशरीरित्वोभयासिद्धावित्यर्थः । **मिथ इति** । सकर्त्तृकत्वशरीर्य्यकर्त्तृकत्वयोरन्योन्यमित्यर्थः । **तस्यानुपलम्भेनेति** । अशरीरिणः कर्त्तुरप्रसिद्धौ तदभावस्य प्रमाणेन क्षित्यादौ गृहीतुमशक्यतयाऽशरीरिकर्त्तृनिर्वाह्यस्य सामान्यरूपस्य सकर्त्तृकस्य तत्राभावनिश्चयासम्भवे तत्प्रतिक्षेपस्य विरोधस्याग्रहणेनेत्यर्थः । **तत्सामान्यात्मकमेकमङ्गीकार्यमिति** । शरीरकर्त्रुभयजन्यतावच्छेदकमेकमेवादरणीयं लाघवात् न तु भिन्नमिति भावः ॥ **सामान्यवत्त्वमेवोपाधिरिति** ।

न स्यात्। न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्। तथा सति सौरभकटुत्व-नीलिमाऽऽदिविशेषे सति न धूमसामान्यमग्निङ्गमयेत्। किं नाम साधकसामान्ये साध्यसामान्यमाश्रित्य प्रवर्त्तमाने तद्विशेषः साध्यविशेषव्याप्तिमाश्रयेद्, न तु विशेषे सति सामान्यमकिञ्चित्करम्। तस्यापि विशेषान्तरापेक्षयाऽकिञ्चित्करत्व-प्रसङ्गात्। सौरभादिविशेषं विहायाऽपि धूमे वह्निर्दृष्टो, न तु विशेषं विहाय कार्यं कर्त्रेति चेत्। न। कार्यविशेषः कारणविशेषे व्यवतिष्ठते, न तु कार्यकारणसामान्ययोः प्रतिबन्धमन्यथाकुर्यादिति। किं न दृष्टं कार्यं कारणमात्रे अङ्कुरो बीजे

---

प्रकाशः।

त्वव्याप्यमित्यर्थः। **तत्सामान्याऽनङ्गीकारेऽपि** घटत्वादिकमेव कर्तृजन्यत्वे प्रयोजकम्, अग्नि-जन्यतायां धूमत्वादेरिवाननुगतस्यापि जन्यत्वावच्छेदकत्वादिति भावः। तथापि कार्यत्वसामान्यस्य कर्तृसामान्येन व्याप्तौ विशेषो नोपाधिः, न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्, तथात्वे वाऽ-ग्निजन्यत्वे धूमविशेषस्य प्रयोजकत्वान्न धूमसामान्यमग्निं गमयेत्, तस्माद् यद्विशेषयोः कार्यकारण-भावः, तत्सामान्ययोरपि बाधकं विना तथात्वनियम इत्याह **न हीति**॥ नन्वग्निधूमसामान्ययो-र्व्याप्तौ धूमविशेषो नोपाधिः, प्रत्येकं साध्याव्याप्तेः। कर्तृकार्यसामान्ययोर्व्याप्तौ शरीरप्रयोज्यजा-तिर्न साध्याव्यापिकेत्याशयमविद्वान् शङ्कते **सौरभादीति**॥ सा जातिर्न कर्तृमात्रप्रयोज्यतया कल्पिता, किन्तु शरीरप्रयोज्यतयेति तदभावाच्छरीरमेव कारणं निवर्त्तते, न कर्तृसामान्यम्, तस्यैव कार्यकारणभावप्रवृत्तौ कर्तृमात्रनिवृत्तावप्रयोजकत्वादिति परिहरति **कार्यविशेष इति**॥ शरीरकर्तृत्वानुमानञ्च घटत्वादिभिरेवोपपन्नमिति तज्जातौ मानाभावः। **तेषाञ्च** नोपाधित्वं, प्रत्येकं साध्याव्यापकत्वादिति भावः। नन्वत्र बाधकाभावादस्तु तथा, प्रकृते तु ज्ञानमनित्यमेवेत्यादिप्राथमिक-

प्रकाशिका।

वच्छेदकैकजातिसिद्धिरित्यत आह **तत्सामान्येति**। तथा सति कर्तृजन्यत्वावच्छेदकमपि तदेवेति कर्तृजन्यत्वमप्रयोजकमित्यर्थः। केचित्तु अस्तु तथा, तथापि तदेव शरीरजन्य-तावच्छेदकत्वेनानुगतीकृतं कर्तृजन्यत्वे उपाधिरित्यर्थः। कर्तृजन्यत्वे शरीरिकर्तृजन्यत्वे इति व्याचक्षते। **आशयमविद्वानिति** शङ्कत इति योजना। **अप्रयोजकत्वा**दित्यनन्तर-माशयेनेति शेषः। **तेषाञ्चेति**। शरीरजन्यतावच्छेदकरूपवत्त्वञ्च नोपाधिः, शरीरविशे-षणान्तर्भावेण व्यर्थतया व्यापकत्वाग्रहात् लाघवेन जन्यत्वस्योभयसिद्धस्य कर्तृजन्यतावच्छेदक-

मकरन्दः।

**तत्सामान्यानङ्गीकारे** इति। न च घटत्वादीनां प्रत्येकं साध्यव्यापकत्वं, शरीरजन्यतावच्छेदक-रूपवत्त्वस्य विवक्षितत्वात्। तावदन्यतमत्वं तथेत्यप्याहुः। केचित्तु तदनङ्गीकारात्तस्यानुपाधित्वेऽपि घटत्वादिकमेव कर्तृजन्यतावच्छेदकमस्तु न तु जन्यत्वमित्यप्रयोजकमेवास्त्विति तात्पर्यमित्याहुः।

इत्याशयमविद्वानिति इति शङ्कते इत्यन्वयः।

**तेषाञ्चेति**। घटत्वादीनामित्यर्थः। यद्यपि विवक्षितोपाधौ नाऽयं दोषः, तथापि यथाश्रुताभि-

टिप्पणी।

कार्यस्य कर्तृजन्यतायामवच्छेदकं साध्यव्यापकत्वे सति साधनव्यापकत्वं च, तथा च शरीरजन्यता-वच्छेदककार्यनिष्ठधर्मविशेष एव कर्तृजन्यतव्याप्यो न कार्यमिति भावः॥ **तत्सामान्यानङ्गीका-रेऽपीति**। क्लृप्तस्यावच्छेदकत्वसम्भव उक्तलाघवं कल्प्यविषयमकिञ्चित्करमित्याशयेनाह **तदिति**। तथा हि क्षित्यादिनिष्ठस्यैकस्य कार्यत्वाभावात् क्षितित्वस्य कर्तृजन्यतावच्छेदकत्वे ग्राहकाभावात् क्षितित्वावच्छिन्नकार्यत्वस्यापि कर्तृजन्यताव्याप्यत्वासम्भव इति भावः॥ **वह्निव्यतिकप्रत्यक्ष-**

**तद्विशेषो धान्ये तद्विशेषः शालौ तद्विशेषः कलमे इत्यादि बहुलं लोके । क्व वा दृष्टमणुद्रव्यारभ्यं द्रव्यं नित्यरूपाद्यारब्धं रूपादि । तथापि सामान्यव्याप्तेरविरो-**

---

प्रकाशः ।

बहुव्याप्तिकप्रत्यक्षबाधः, तुल्यत्वेऽपि व्याप्तिसंशयाबाधकत्वात् । न च कार्यकारणभावमूलकत्वेन कार्यत्वसकर्तृकत्वव्याप्तिर्विलीयसीति वाच्यम् । विरोधिप्रत्यक्षेण कार्यकारणभावस्यैवासिद्धेरित्यत आह **क्व वेति** ॥ एवं सति अवयवो महानेव रूपारम्भकं रूपमनित्यमेव, तेज उद्भूतरूपमेवेत्यादि-व्याप्तिग्रहात् परमाणुतद्रूपचक्षुरादेरप्यसिद्धिः स्यात् ॥

अथ द्रव्यचाक्षुषत्वेऽनेकद्रव्यवत्त्वस्य रूपे स्वाश्रयसमानाधिकरणरूपस्य साक्षात्कारे विषयेन्द्रियसन्निकर्षस्य कारणत्वात् तन्मूलविपक्षबाधकेन परमाण्वादिसाधकस्य बलवत्त्वात् परमाण्वादिसिद्धौ विरोधिव्याप्तेर्बाधो, न तु वैपरीत्यम्, विपक्षबाधकाभावेन तस्या बलवत्त्वात् । तर्हि ज्ञानादिकार्ययोः कार्यकारणभावावधारणात् तन्मूलविपक्षबाधकेन व्याप्तिग्रहात् पक्षधर्मतासचिवान्नित्यज्ञानादिसिद्धौ व्यभिचारान्न व्याप्तिः । न च कार्यकारणभावे बाधः, साध्यं पक्षातिरिक्त एव, सुखं दुःखसम्भिन्नमेवेत्यादिव्याप्तिग्रहात् कार्यात् कारणानुमानोच्छेदे निरीहं जगज्जायेतेत्यर्थः ॥

ननु शरीरजन्यत्वमुपाधिः, पक्षेतरत्ववत् पक्षमात्रव्यावर्त्तकविशेषणत्वात् साधनविशेषितत्वात् साधनतुल्ययोगक्षेमत्वेन साध्यव्यापकत्वानिश्चयाच्च न तदुपाधिरिति चेन्न । तेषामनुपाधित्वे साध्यग्राहकमानाभावस्य तन्त्रत्वात् । प्रकृते तु चेष्टेतरकार्ये शरीरव्यापारद्वारैव कर्तुः कारणत्वाच्छरीरसहकृतस्यैव स्वकार्यजनकत्वाच्च विपक्षबाधकात्तन्निश्चयात् । अत एव बाधोन्नीतं पक्षेतरत्वमग्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभवाग्निमत्त्वं रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवीत्वमुपाधिः, विपक्षबाधकैस्तेषां साध्यव्यापकत्वनिश्चयात् ॥

मैवम् । कर्तुर्हि शरीरसहकारिता यदि घटादौ कर्त्तव्ये तदा शरीरं विना तस्य घटाद्यकरणेऽपि किमायातं कर्तुः कार्यमात्रकरणे । न च कार्यमात्रकरणे सा, तस्य त्वया कर्तृजन्यत्वानभ्युपगमात् । तथात्वे वा शरीराजन्यमपि कार्यं कर्तृजन्यमिति तस्य साध्याव्यापकत्वम् । नापि स्वकार्ये, तत्रैव तस्यानवच्छेदकत्वादात्माश्रयात् ॥

तथापि सन्दिग्धोपाधिः स्यात्तुल्ययोगक्षेमतया साध्याव्यापकतासंशयाधायकत्वादिति चेन्न । लाघवेन बाधकं विना कर्तृजन्यत्वे जन्यत्वस्यैवावच्छेदकत्वात् । न तु शरीरजन्यत्वस्य, गौरवात् । तथा च न शरीरजन्यत्वं सकर्तृकत्वव्यापकम् । घटादौ त्वार्थः समाजः, घटत्वेन शरीरजन्यत्वनियमाद्, न तु व्यापकत्वप्रयुक्तः ॥

प्रकाशिका ।

त्वमिति विपक्षबाधकेन हेतोः साध्यव्याप्यतया तदव्यापकतया साध्याव्यापकत्वाच्चेति भावः ।

मकरन्दः ।

प्रायेणेदम् । विपक्षबाधकेन च हेतौ साध्यव्यापकतया नायमुपाधिरित्यत्र तात्पर्य्यम् । रूपारम्भक-

टिप्पणी

**बाध इति** । उक्तप्रत्यक्षस्य प्रबलत्वात् तद्बाधो दोष इति भावः । **तुल्यत्वेपीति** । उक्तप्रत्यक्षस्य समत्वेपीत्यर्थः । **व्यभिचारान्न व्याप्तिरिति** । ज्ञानमनित्यमेवेत्यादिव्याप्तिः । **साध्यव्यापकत्वानिश्चयाच्चेति** । यथा हि साध्यं साधनप्रयोजकमिति साधनव्यापकतानिर्णायकविपक्षबाधकतर्कसद्भावात् साध्यसाधनव्यापकतानिर्णयः तथा साधनं साध्यप्रयोजकमिति साध्यव्यापकतानिर्णायकतर्काभावात् साध्यव्यापकतानिर्णयो न सम्भवति, साधने एवमेव हि साधनघटितत्वेन साधनतुल्ययोगक्षेमे साधनस्य यत्प्रयोजकता तद्व्यापकतानिर्णायकतर्कसहितत्वं न यत्प्रयोजकता तद्व्यापकतानि-

धात् सिद्ध्यत्येव । अवश्यञ्चैतदेवमङ्गीकर्त्तव्यम् । अन्यथा कार्यत्वस्याकस्मिकत्व-प्रसङ्गात् ॥

स्यादेतत् । अन्वयव्यतिरेकि तावदिदं कार्यत्वमिति परमार्थः । तत्राकाशादेर्विपक्षात् किं कर्तृव्यावृत्तेः कार्यत्वव्यावृत्तिराहोस्वित् कारणमात्रव्यावृत्तेरिति सन्दिह्यते । तदसत् । कर्तुरपि कारणत्वात् । कारणेषु चान्यतमव्यतिरेकस्यापि कार्यानुत्पत्तिं प्रति प्रयोजकत्वादन्यथा कारणत्वव्याघातात् । करणादिविशेष-

---

प्रकाशः ।

अपि च शरीरजन्यत्वं हस्तादिजन्ये साध्याव्यापकम् । न च साक्षात्प्रयत्नाधिष्ठेयजन्यत्वं तदर्थः, **साधनव्यापकत्वात्**, परमाण्वादेस्तत्साक्षात्प्रयत्नाधिष्ठेयत्वात् । शरीरिकर्तृकत्वमपि नोपाधिः । कार्यमात्रे कर्तुः शरीरसहकारित्वाभावात्, तस्य साध्यव्यापकत्वाऽनिश्चयात् ॥

ननु घटादौ कृतिसाध्यता शरीरव्यापारद्वारैव, न साक्षात् । न चाऽशरीरस्य तत्सम्भव इति तद्बाधात् कर्तुरपि बाध एव । शरीरव्यापारजन्यत्वं चोपाधिः । मैवम् । कार्यमात्रे हि तथा न कृतिसाध्यता, क्षित्यादौ व्यभिचारात् । घटादौ च तथात्वेऽपि कार्यमात्रे कृतिमात्रस्य जनकत्वाविरोधात्। विशेषयोर्हेतुहेतुमद्भावे बाधकं विना सामान्ययोरपि तथात्वात् । न च चेष्टेतरकार्ये शरीरव्यापारद्वारैव कृतेर्जनकत्वम्, क्षित्यादौ व्यभिचारात् किन्तु घटादावित्युक्तम् ॥

अत एव सहभावनिरूपकत्वे सति नियतपूर्ववर्तित्वं कारणत्वम् । न च कृतेः कार्यसहभावनिरूपकत्वं, स्वतः कार्यकाले तदभावात्, तथा च तत्परिचायितव्यापारद्वारा तस्याः सहभावनिरूपकत्वम् । अतः शरीरव्यापारद्वारैव कृतेर्जनकत्वं न तु केवलाया इत्यऽपास्तम् । कार्यमात्रे तथात्वाभावात् ॥

कार्यत्वसकर्तृकत्वव्याप्तौ विपक्षबाधकमाह **अन्यथेति** ॥ **कारणान्तरस्येव** कर्तुरप्यभावेन कार्याभावात् कर्त्रभावे कारणान्तरस्याऽप्यनुत्पादकत्वे कार्यमाकस्मिकं स्यादित्यर्थः ।

यदि व्यतिरेकसन्देहात् प्रकृते नानुमानं, तदा तादृशव्यतिरेकसन्देहश्च कार्यात् **कारणविशेषानु**मानेष्वपि कर्तुं शक्यते इति तेषामप्यनुमानाभासत्वं स्यादिति शङ्कोत्तराभ्यामाह–**स्यादेतदिति**॥

प्रकाशिका ।

**साधनव्यापकत्वा**दिति । नचादृष्टाद्वारकचेष्टाश्रयजन्यत्वमुपाधिश्चेष्टात्वञ्च जातिरिति वाच्यम् । विपक्षबाधकेनेत्यादिसमाधेरनुपदमेवोक्तत्वादिति भावः । ननु कारणान्तरसत्त्वे कथमाकस्मिकत्वमित्यत आह **कारणान्तरस्ये**ति । **कारणविशेषे**ति । उपादानाद्यनुमानेष्वपीत्यर्थः । संयोग-

मकरन्दः ।

मनतिप्रयोजकं बोध्यम् । **साधनव्यापकत्वादिति** । ननु चेष्टाश्रयजन्यत्वमुपाधिरस्तु, तथा च नोक्तदोषः । न चादृष्टद्वारा क्षित्यादौ शरीरजन्यत्वादिदमपि साधनव्यापकमेवेति वाच्यम् । अदृष्टाद्वारकत्वस्यापि तद्विशेषणत्वादिति चेत् । न, विपक्षबाधकेन हेतोः साध्यव्याप्यतया तदव्यापकत्वेनानुपाधित्वात् । ननु कारणान्तरसत्त्वे कथमाकस्मिकत्वमित्यत आह **कारणान्तरस्येति । कारणविशेष** उपादानादिः । शरीरव्यापारे शरीरानपेक्षत्वमसम्भवीत्यत आह **स्वक्रियायामिति।**

टिप्पणी

र्णायकतर्करहितत्वं साधन इव तदुभयवति न साध्यव्यापकतानिश्चयसम्भव इति भावः ॥ **कारणान्तरस्येवेति** । यथा हि कारणान्तराभावात् कार्याभावो घटादिस्थले दृष्टः, तथा कर्त्रभावोऽपि स इति तुल्यत्वेऽपि क्षित्यादिस्थले तदुत्पत्तौ च ?···॥

कार्यहेतौ संदिग्धव्यतिरेकित्वात्संदिग्धानैकान्तिकत्वमाशंकते **स्यादेतदिति । संदिह्यत** इति ।

व्यतिरेकसन्देहप्रसङ्गाच्च । कथं हि निश्चीयते किमाकाशात् कारणव्यावृत्त्या कार्यत्वव्यावृत्तिः, उत करणव्यावृत्त्या । एवं किमुपादानव्यावृत्त्या, किमसमवायिव्यावृत्त्या, किं निमित्तव्यावृत्त्येति । कार्यत्वात् करणमुपादानमसमवायि निमित्तं वा बुद्ध्यादिषु न सिद्ध्येत् । कर्तुः कारणत्वे सिद्धे सर्वमेतदुचितं, तदेव त्वसिद्धमिति चेत् । किं पटादौ कुविन्दादिरकारणमेव कर्त्ता, प्रस्तुते वोदासीन एव साधयितुमुपक्रान्तः । तस्माद् यत्किञ्चिदेतदपीति ॥

ननु कर्त्ता कारणानामधिष्ठाता साक्षाद्वा शरीरवत्, साध्यपरम्परया वा दण्डादिवत् ? । तत्र न पूर्वः, परमाण्वादीनां शरीरत्वप्रसङ्गात् । न द्वितीयः, द्वाराभावात् । न हि कस्यचित् साक्षादधिष्ठेयस्याऽभावे परम्परया अधिष्ठानं सम्भवति ॥

तदयं प्रमाणार्थः—परमाण्वादयो न साक्षाच्चेतनाऽधिष्ठेयाः, शरीरेतरत्वात् । यत्पुनः साक्षादधिष्ठेयं न तदेवं, यथास्मच्छरीरमिति । नापि परम्परया अधिष्ठेयाः, स्वव्यापारे शरीरानपेक्षत्वात्, स्वचेष्टायामस्मच्छरीरवत् । व्यतिरेकेण वा दण्डा-

---

प्रकाशः ।

अन्यथा सत्प्रतिपक्षाभिधानाय भूमिकामारचयति **नन्विति** ॥ यत्र प्रयत्नवदात्मसंयोगासमवायिकरणकक्रियोत्पादको यः, स तत्र साक्षादधिष्ठाता, यथा स्वशरीरे अस्मदादिः । शरीरक्रियया यो यत्क्रियाजनकः, स तत्र परम्पराऽधिष्ठाता, यथा दण्डादौ कुलालादिः । आद्ये परमाण्वादिः शरीरं स्यात् तादृशक्रियाश्रयत्वादित्याह **परमाण्वादीनामिति** ॥ **स्वव्यापार इति** ॥ **स्वक्रियायां** शरीरव्यापारानपेक्षत्वादित्यर्थः ॥ **स्वचेष्टायामिति** ॥ शरीरक्रियायास्तत्क्रियानपेक्षत्वादित्यर्थः ॥ **व्यतिरेकेणेति** ॥ यत् परम्पराऽधिष्ठेयं तत्र स्वव्यापारे शरीरक्रियान-

प्रकाशिका ।

लक्षणस्वव्यापारापेक्षतया स्वशरीरं दृष्टान्तः साधनविकलमित्यत आह **स्वक्रियायामिति** । **यदवच्छिन्न इति** । यदवच्छिन्ने आत्मन्यैन्द्रियकार्थज्ञानेन प्रयत्नो भोगश्च जनयितव्यः, तस्यैवेन्द्रियाश्रयत्वमित्यर्थः । यद्यपि मूले न भोगान्तर्भावः, तथापि तात्पर्यार्थोऽयमिति भावः ।

टिप्पणी ।

तस्माद्व्यतिरेकव्याप्तिसंदेह इत्यर्थः । तथा च कर्त्रभावोऽपि कार्याभावप्रयोजकः सामान्यतः कारणाभावोऽपीत्युभयोरेव प्रयोजकत्वम् । **किं निमित्तव्यावृत्त्येति** । तस्मात् कारणेष्वन्यतमव्यतिरेकस्यापि कार्यानुत्पादप्रयोजकत्वं सिध्यति, अन्यथा धूमादावपि तार्णवह्न्यभावप्रयुक्तोऽतार्णवह्न्यभावप्रयुक्तो वा धूमाभाव इत्यादेर्वक्तुं शक्यत्वात् क्वचिदपि व्यतिरेकव्याप्तिर्न सिध्येदित्यन्वयव्यतिरेकानुमानमात्रमुच्छिद्येतेत्यर्थः । दूषणान्तरमप्याह **कार्यत्वादिति** । **न सिध्येदिति** । तत्रापि हि कारणाभावप्रयुक्त उपादानाद्यभावो वा कार्यत्वाभाव इति संदिहानो न व्यतिरेकव्याप्तिं परिच्छेत्तुमर्हतीत्यर्थः । **अकारणमेव कर्तेति** । तथाच कुविन्दादिव्यतिरेकेऽपि पटादिः प्रादुर्भवेत् नचैवम् तस्मात् कुविन्दादेरपि कारणत्वमिष्टमेव, कारणेषु चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमतो भवति कर्तृत्वं नाकारणस्येत्यर्थः । **प्रस्तुते** सकर्तृकत्वानुमाने, यदि कर्ता कारणं न स्यात् तदा कथं कार्यत्वेन हेतुना स सिध्येत्, न चेष्टापत्तिः प्रकरणपराहतत्वादिति । प्रकारान्तरेण सत्प्रतिपक्षत्वमाशंकते **ननु कर्तेत्यादिना** । **तदर्थमेव**—अधिष्ठानार्थमेव । **तथासति**—अधिष्ठितस्याप्यधिष्ठानापेक्षितत्वे सति । ईश्वराधिष्ठितस्यापि कारणस्य कुविन्दादिरूपाधिष्ठानापेक्षायामविशेषात् कुविन्दाधिष्ठितस्याप्यधिष्ठानापेक्षा स्यात्, एवं क्रमेणानवस्था स्यादित्यर्थः । कार्यत्वेन हेतुना बुद्धिमत्पूर्वकत्वे साध्ये जन्यप्रयत्न-

ष्युदाहरणम् । एवं क्षित्यादि न चेतनाधिष्ठितहेतुकं शरीरेतरहेतुकत्वादित्यति-पीडया सत्प्रतिपक्षत्वम् ॥

अपि च पटादौ कुविन्दादेः किं कारकाधिष्ठानाऽर्थमपेक्षा, तेषामचेतनानां स्वतोऽप्रवृत्तेः, आहो कारकत्वेन ? । न पूर्वः । तेषां परमेश्वरेणैवाधिष्ठानात् । न ह्यस्य ज्ञानमिच्छा प्रयत्नो वा वेमादीन् न व्याप्नोतीति सम्भवति । न चाधिष्ठितानामधिष्ठात्रन्तरापेक्षा तदर्थमेव । तथा सत्यनवस्थानादेवाऽविशेषात् । न द्वितीयः । अधिष्ठातृत्वस्यानङ्गत्वप्रसङ्गे दृष्टान्तस्य साध्यविकलत्वापत्तेः । न च हेतुत्वेनैव तस्यापेक्षाऽस्त्विति वाच्यम् । एवन्तर्हि यत्कार्यं तत्सहेतुकमिति व्याप्तिः, न तु सकर्तृकमिति । तथा च तथैव प्रयोगे सिद्धसाधनात् ॥

किञ्चानित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत् कार्यत्वं न बुद्धिमत्पूर्वकत्वेन स्वभावप्रतिबद्धम् । न ह्यनित्यप्रयत्नोऽपि बुद्ध्या शरीरवत् कारणत्वेनाऽपेक्ष्यते, येन तन्निवृत्तावश्यकार्यबुद्धिर्न निवर्त्तते इति ॥

तदेतत् प्रागेव निरस्तप्रायं नोत्तरान्तरमपेक्षते । तथाहि—साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वं, यत् प्रसज्यते ? यदि साक्षात्प्रयत्नवदधिष्ठेयत्वं तदिष्यत एव । न च ततोऽन्यत् प्रसञ्जकमपि । अथेन्द्रि-

प्रकाशः ।

पेक्षमपि तु तदपेक्षमेव, यथा दण्डादीति व्यतिरेकीत्यर्थः । एवं कारणपक्षकानुमानमुक्त्वा कार्यपक्षकमाह **एवमिति** । सिद्धसाधनमभिधातुं भूमिकामारचयति **अपि चेति** । **अधिष्ठातृत्वस्येति** । क्षित्यादेश्चेतनाधिष्ठितहेतुजन्यत्वे साध्ये पटादिर्दृष्टान्तः साध्यविकलः, कुविन्दादेः कारकत्वेनैवापेक्षणीयतया कारणाधिष्ठातृत्वेन तदभावादित्यर्थः । **तथा चेति** । कर्त्रजन्यत्वेऽप्यचेतनसमवायादिहेतुकत्वस्य मयाऽप्युपगमादित्यर्थः ।

उपाधिमाह **किञ्चेति** । **न हीति** । यथा शरीरनिवृत्तावप्यकार्या बुद्धिर्न निवर्त्तते, तद्वदनित्यप्रयत्ननिवृत्तावप्यकार्यबुद्धिर्न निवर्त्तते इति न । शरीरं हि बुद्ध्या कारणत्वेनापेक्ष्यते इति शरीरनिवृत्तौ कार्या बुद्धिर्निवर्त्तते इति युक्तं, न पुनरनित्यप्रयत्नो बुद्ध्या कारणत्वेनापेक्ष्यते, येनानित्यप्रयत्ननिवृत्तौ कार्या बुद्धिर्निवर्त्तते न नित्येति स्यात्, अपि तु व्यापकत्वमात्रेणेत्यर्थः । शरीरवदिति प्रथमासमर्थाद्वतिः । बुद्ध्या शरीरं यथा कारणतयाऽपेक्ष्यते, न तद्वदनित्यः प्रयत्नः कारणतयेत्यर्थः । **तन्निवृत्तावपीति** । अनित्यप्रयत्ननिवृत्तावपीत्यर्थः ।

**तदेतदिति** । विशेषस्य विशेषं प्रति प्रयोजकत्वादित्यादिना । अत्र प्रसङ्गदशायां तावद् दूषणमाह **यदीति** । इष्टापादनमित्यर्थः । **न चेति** । आपाद्यादापादकस्याविशेष इत्यर्थः ।

टिप्पणी

पूर्वकत्वस्योपाधित्वं तस्य द्व्यणुकादौ साधनाव्यापकत्वात्, उपाध्यभावेन च बुद्धिमत्पूर्वकत्वमात्रं निवर्तते नतु जन्यबुद्धिपूर्वकत्वमित्याह **किंचेति** । **व्याप्तिम्**—बुद्धिमत्पूर्वकत्वनिरूपिताम् । यथाऽस्मिन्ननुमाने शरीरपूर्वकत्वं नोपाधिरुद्भावनार्हः यतो बुद्धिं प्रति शरीरस्य कारणतया उपाध्यभावेन (शरीराभावेन) कार्यबुद्ध्यभावस्यैव सिद्धिः स्यान्न तु नित्यबुद्ध्यभावस्यापीति नित्यबुद्धिसिद्धौ बाधकाभावात्, एवमनित्यप्रयत्नोऽपि यदि बुद्धिम्प्रति शरीरमिव कारणं स्यात्तदाऽयमपि नोद्भावनीयः स्यान्न त्वेवं बुद्धिम्प्रत्यनित्यप्रयत्नस्याकारणत्वादिति प्रघट्टकार्थः । शरीरत्वसाक्षाच्चेतनाधिष्ठितत्वयोरापाद्यापादकयोरैक्यमप्याह **नचेति** । **अर्थाश्रयत्वमिति** । अर्थः प्रयोजनं स्वीयसुखसाक्षात्कारात्मको भोगः तदाश्रयत्वमवच्छेदकतासम्बन्धेन, नित्यसुखसाक्षात्कारात्मकमीश्वरज्ञानं यद्युपेयेत यदि वा भोगभिन्नमेव

**याश्रयत्वम् ? । तन्न । तदवच्छिन्नप्रयत्नोत्पत्तौ तदवच्छिन्नज्ञानजननद्वारेणेन्द्रियाणामुपयोगात् । अनवच्छिन्ने प्रयत्ने नायं विधिः । नित्यत्वात् । अत एव नाऽर्थाश्रयत्वम् । न हि नित्यज्ञानं भोगरूपमभोगरूपं वा यत्नमपेक्षते तस्य कारणविशेषत्वात् । न च नित्यसर्वज्ञस्य भोगसम्भावनाऽपि । विशेषादर्शनाभावे मिथ्याज्ञानानवकाशे दोषानुत्पत्तौ धर्माधर्मयोरसत्त्वात् ॥**

**तस्मात् साक्षात्प्रयत्नानधिष्ठेयत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति द्वयं साध्याविशिष्टम् । अनिन्द्रियाश्रयत्वादभोगायतनत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति त्रयमप्यन्यथासिद्धम् । अभोगायतनत्वादनिन्द्रियाश्रयोऽपि, भोक्तृकर्मानुपग्रहादभोगायतनमपि, स्पर्शवद्वेगवद्द्रव्यानुद्यत्वात्तदनपेक्षमपि स्यात् । अचेतनत्वाच्चेतनाधिष्ठितमपि स्यादिति को विरोधः ॥**

---

प्रकाशः ।

**अथेति** । तथा च आपाद्यापादकयोर्भेद इत्यर्थः । तत्राप्रयोजकत्वमाह **तदवच्छिन्नेति** । साक्षात्प्रयत्नाधिष्ठितत्वेऽपि तस्यैवेन्द्रियाश्रयत्वम् । यदवच्छिन्न आत्मनि प्रयत्नस्तदवच्छिन्नात्मनिष्ठज्ञानेनेन्द्रियकार्येण भोगो जनयितव्यः । अकार्यौ तु ज्ञानप्रयत्नाविन्द्रियाश्रयत्वं विनाऽपि स्यातामिति न विरोध इति मूलशैथिल्यमित्यर्थः । **प्रयत्नोत्पत्ताविति,** निमित्तसप्तमी । **अत एवेति** । सोपाधित्वेन मूलशैथिल्यादेवेत्यर्थः । उपाधिमाह **न हीति** । ज्ञानानित्यत्वमुपाधिरित्यर्थः । **न च नित्येति** । यदवच्छिन्नात्मन्यर्था भोगं जनयन्ति तस्यार्थाश्रयत्वम्, नित्यज्ञानाश्रयस्य त्वीश्वरस्य भोगाभावान्न तदर्थं तदपेक्षेत्यर्थः ।

प्रसङ्गदूषणेनैव तदनुग्राह्यो हेतुरपि दूषित इत्याह **तस्मादिति** । शरीरत्वं यदि साक्षात्प्रयत्नाधिष्ठेयत्वं, तदा शरीरेतरत्वं साक्षात्प्रयत्नानधिष्ठितत्वम् । **तथा स्वव्यापारे** शरीरानपेक्षत्वं साक्षात्प्रयत्नाऽधिष्ठेयानपेक्षत्वमेव, तथाच साध्याविशेष इत्यर्थः । यदि चेन्द्रियाऽऽश्रयत्वं भोगाश्रयत्वं वा शरीरत्वं, तदा शरीरेतरत्वादित्यस्यानिन्द्रियाश्रयत्वादभोगायतनत्वाद्वेत्यर्थः । **स्वव्यापारे** इन्द्रियाश्रयानपेक्षत्वाद्भोगायतनापेक्षत्वादिति वा द्वितीयहेत्वर्थः । तदेतत् सर्वमन्यथासिद्धमित्याह **अनिन्द्रियाश्रयत्वादिति** । **अन्यथासिद्धिमेवाह अभोगायतनत्वादिति** । ईश्वरे ह्यदृष्टाभावेन भोगाभावात् परमाण्वादिर्भोगानवच्छेदकत्वेनानिन्द्रियाश्रयोऽपि स्यात्, स्पर्शवद्वेगवद्द्रव्या-

प्रकाशिका ।

**ज्ञानानित्यत्वमिति** । अनित्यज्ञानवत्त्वमित्यर्थः । अर्थाश्रयत्वमर्थप्रयोज्यभोगाश्रयत्वमित्यर्थः । **तथेति** । स्वव्यापारे साक्षात्प्रयत्नाधिष्ठेयानपेक्षत्वमेव परम्परानधिष्ठेयत्वमिति साध्याविशेष इत्यर्थः । तदनपेक्षत्वादित्यत्र तच्छब्देनोभयपरामर्शाद्धेतुद्वयलाभ इत्याह **स्वव्यापार इति** । एवं च त्रयमिति मूलमग्रिमसाध्यहेत्वोस्तत्साध्यकत्वेनैकत्वं विवक्षित्वा समाधेयम् । वस्तुतश्चतुष्टयमिति बोध्यम् ।

मकरन्दः ।

**ज्ञानानित्यत्वमिति** । अनित्यज्ञानवत्त्वमित्यर्थः । अर्थाश्रयत्वं = अर्थप्रयोज्यभोगाश्रयत्वमित्यर्थः । **तथेति** । स्वव्यापारे साक्षात्प्रयत्नाधिष्ठेयापेक्षत्वमेव परम्पराधिष्ठेयत्वमिति साध्याविशेष इत्यर्थः । यदवच्छिन्ने आत्मनि ऐन्द्रियकार्यज्ञानेन प्रयत्नो भोगश्च जनयितव्यस्तस्यैवेन्द्रियाश्रयत्वमित्यर्थः । यद्यपि भोगान्तर्भावेन न मूलार्थस्तथापि तात्पर्यार्थोऽयमिति भावः ।

टिप्पणी ।

तज्ज्ञानमुपेयेत उभयथापि नित्यत्वान्न प्रयत्नमपेक्षते इत्यर्थः । **कारणविशेष(रूप)त्वात्**–तथा च तत्तत्कार्यनिरूपितमेव कारणं यत्नः स्यादित्यर्थः । **अनुद्यत्वात्**–प्रदर्शितद्रव्येण नोदनाख्यसंयोगाभा-

तथा च साक्षात्प्रयत्नाऽधिष्ठितेतरजन्यत्वादिति साध्यसमः। इन्द्रियाश्रयेतर-जन्यत्वाद् भोगायतनेतरजन्यत्वादिति द्वयमप्यन्यथासिद्धम्। कार्यज्ञानाद्यनपेक्ष-त्वाच्छरीरेतरजन्यमपि स्यात्। अचेतनहेतुकत्वाच्चेतनाधिष्ठितमपीति को विरोधः॥

अप्रसिद्धविशेषणश्च पक्षः। नहि चेतनानधिष्ठितहेतुकत्वं क्वचित् प्रमाण-सिद्धम्। न च चेतनाधिष्ठितहेतुकत्वनिषेधः साध्यः, हेतोरसाधारण्यप्रसङ्गात्। गगनादेरपि सपक्षाद्व्यावृत्तेः॥

यत् पुनरुक्तं–कुविन्दादेः पटादौ कथमपेक्षेति। तत्र कारकतयेति कः सन्देहः। किन्तु कारकत्वमेव तस्य ज्ञानचिकीर्षाप्रयत्नवतो न स्वरूपतः। तदेव चाऽधि-ष्ठातृत्वम्॥

यत्त्वधिष्ठिते किमधिष्ठानेनेति। तत् किं कुविन्द उद्वार्यते, ईश्वरो वा, अनवस्था वाऽऽपाद्यते। न प्रथमः। अन्वयव्यतिरेकसिद्धत्वात्। न द्वितीयः।

---

प्रकाशः।

न्तराप्रेर्यमाणत्वाच्छरीरानपेक्षक्रियोऽपि स्याद्, न विरोध इत्यर्थः। **क्षित्यादिकं** न चेतनाधिष्ठितहे-तुकं शरीरेतरजन्यत्वादित्यत्रापि शरीरपदार्थस्य विकल्पत्रये दोषमाह–**तथा चेति**।

दूषणान्तरमाह **अप्रसिद्धेति**। ननु चेतनाऽधिष्ठितहेतुकत्वं तावदन्यत्रावगतमतः प्रतीतप्रति-योगिकत्वे तन्निषेधः शक्यसाधनः स्यादित्यत आह **न चेति**। **कुविन्द इति**। ईश्वरेणैव तन्त्वादेरधिष्ठानात् किं तदर्थं कुविन्देनेत्यर्थः। **ईश्वरो वेति**। कुविन्देनैव च तन्त्वादेरधिष्ठानात् किं तदर्थमीश्वरेणेत्यर्थः। **अनवस्था वेति**। घटादेर्द्विकर्तृकतया तद्दृष्टान्तेन कार्यत्वात् क्षित्यादे-रपि द्विकर्तृकत्वापत्तौ तस्यापि पक्षधर्मताबलात् सर्वज्ञेन सर्वज्ञाधिष्ठातृसिद्धौ पुनर्घटादिदृष्टान्तेन क्षित्यादौ कर्तृत्रयं स्यादिति पुनर्घटवत् क्षितिः क्षितिवद् घट इतीश्वरानन्त्यं स्यादित्यर्थः। **अन्व-येति**। कुविन्दव्यापारस्यान्वयव्यतिरेकादित्यर्थः। ईश्वरज्ञानादीनां नित्यत्वेन सर्वविषयत्वात् पटा-

प्रकाशिका।

**क्षित्यादिकमिति**। यद्यपि यथाश्रुते न साध्याविशेषः, उपाधिभेदात्। तथापि चेतनाधिष्ठानमपि प्रयत्नाधिष्ठानद्वारैवेति प्रयत्नाधिष्ठितहेतुकत्वमेव फलतः साध्यमिति साध्याविशेषो द्रष्टव्यः। वस्तुतः साध्यवदसिद्धो हेतुरित्येव साध्य**सम** इति द्रष्टव्यम्। मास्तु सर्वविषयत्वं तथापि प्रकारान्त-

मकरन्दः।

तदनपेक्षत्वादित्यत्र तत्पदेनोभयपरामर्शाद्धेतुद्वये तात्पर्यमित्याह **स्वव्यापार** इति। एवञ्च त्रयमिति मूलस्य चतुष्टयमिति तात्पर्यम्। **क्षित्यादिकमिति**। यद्यपि यथाश्रुते न साध्याविशेष उपाधिभेदात्, तथापि चेतनाधिष्ठानप्रयत्नद्वारैवेति प्रयत्नानधिष्ठितहेतुकत्वमेव साध्यमभिप्रेतम्। यद्वा साध्याविशेष उक्तः। यद्वा साध्यवद्धेतुरप्यसिद्ध इति साध्यसमः। ननु सर्वविषयत्वमेव तस्या-

टिप्पणी।

वात्। **हेतोः**–शरीरेतरजन्यत्वस्य। **व्यावृत्तेः**–विपक्षात्तु घटादेर्व्यावृत्तिः स्फुटैव। **अनवस्था वेति**। अयमाशयः घ्यणुकादिकं द्विकर्तृकं कार्यत्वात् घटवत् इत्यनुमानेन शरीरिकर्तृकत्वबाधात् पक्षधर्मता-बलात् सर्वाधिष्ठातैव द्वितीयोऽपि कर्ता (ईश्वरः) सिध्येत् घटादेरपि कर्ता स्यात् तथा च घटादेस्त्रि-कर्तृकत्वमायातम्। एवं घ्यणुकादिस्त्रिकर्तृकः कार्यत्वात् घटादिवत् इत्यनुमानेन सिध्यत् तृतीयोऽपि कर्ता पक्षधर्मताबलात् सर्वाधिष्ठाता ईश्वर एवानुमितिगोचरः स्यात् एवं क्रमेणानवस्था प्रसज्यते इति।

परमाण्वदृष्टाद्यधिष्ठातृत्वसिद्धौ ज्ञानाऽऽदीनां सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात्। न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः ॥

न तृतीयः। तस्मिन् प्रमाणाभावात्। तथाप्येकाऽधिष्ठितमपरः किमर्थमधितिष्ठतीति प्रश्ने किमुत्तरमिति चेत्। हेतुप्रश्नोऽयं, प्रयोजनप्रश्नो वा? । नाद्यः। ईश्वराधिष्ठानस्य नित्यत्वात्। कुविन्दाद्यधिष्ठानस्य स्वहेत्वधीनत्वात्। न द्वितीयः। कार्यनिष्पादनेन भोगसिद्धेः स्पष्टत्वात् ॥

एकाधिष्ठानेनैव कार्यं स्यादिति चेत्। स्यादेव। तथापि न सम्भेदेऽन्यतरवैयर्थ्यम्। परिमाणं प्रति सङ्ख्यापरिमाणप्रचयवत् प्रत्येकं सामर्थ्योपलब्धौ सम्भूयकारित्वोपपत्तेः ॥

अस्ति तत्र वैजात्यमिति चेत्। इहापि किञ्चिद्भविष्यतीति। न चाकुर्वतः कुलालादेः कायसङ्क्षोभादिसाध्यो भोगः सिद्ध्येदिति तदर्थमस्य कर्तृत्वमीश्वरोऽनुमन्यते, तदर्थमात्रत्वादैश्वर्यस्येति ॥

यत्त्वनित्यप्रयत्नेत्यादि। भवेदप्येवं यद्यनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्त्तेत, न त्वेतदस्ति, उदासीनस्य प्रयत्नाभावेऽपि बुद्धिसद्भावात्। हेतुभूता बुद्धिर्निवर्त्तते इति चेन्न। उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात्। कारकविषया बुद्धिर्निवर्त्तते इति चेन्न। उदासीनस्यापि कारकबोद्धृत्वात्। न हि घटादिकम-

---

प्रकाशः।

द्युपादानविषयत्वमपीति कथं न तेषां पटादिकारणत्वं, कुविन्दज्ञानादितुल्यत्वादित्याह **परमाण्विति**। **पटाकाश**संयोगादिकं प्रति ईश्वरस्य कर्तृत्वात् पटादिगोचरमपि ज्ञानं सिद्धमिति भावः। **न त्विति**। न त्वधिष्ठिताधिष्ठानार्थमेवेत्यर्थः। यथा कुविन्दाधिष्ठानमन्वयव्यतिरेकाभ्यां तथेश्वरस्याधिष्ठानं, ज्ञानादीनां **नित्यत**या सर्वविषयत्वात्। तद्वदधिष्ठात्रन्तरकल्पनायां न मानमस्ति, येनानवस्था स्यात्। कार्ये हि कर्तृत्वेन कारणता, न द्विकर्तृत्वादिनेति न तत्सिद्धिरित्याह **प्रमाणाभावादिति**। **वैजात्यमिति**। प्रत्येकजन्यव्यावृत्तं कारणमेलकव्यङ्ग्यमित्यर्थः। **इहापीति**। द्विकर्तृके घटादावेककर्तृकक्षित्यादेर्वैजात्यमित्यर्थः। **उदासीनस्येति**। **कारणानि** अव्यापारयत

प्रकाशिका।

रेणापि घटादिगोचरत्वं तस्य सिद्धमित्याह **पटाकाशेति**। ननूदासीनो निःप्रयत्न एवोच्यते तथा च प्रयत्नाभावेपीति व्यर्थमत आह **कारणानीति**। उदासीनशब्दस्य कारकाव्यापारयितृत्वमर्थपूर्व-

मकरन्दः।

सिद्धमिति पटादिविषयत्वासिद्धेस्तदुपादानाधिष्ठानं न स्यादित्यत आह **पटाकाशेति**। वस्तुतो नियतविषयता कारणाधीनेति नित्यतयैव सर्वविषयत्वमिति भावः। तदिदमाह **नित्यत**येति।

टिप्पणी।

**प्रमाणाभावादिति**। कार्यं प्रति कर्तृत्वेन कारणता नतु द्विकर्तृत्वेन तथा च द्विकर्तृकत्वानुमानमनुकूलतर्कशून्यमित्यर्थः। **संभेदे-द्वयोः** प्राप्तौ सत्याम्। **सम्भूयेति**। प्रचयजन्यतूलकपरिमाणोत्पत्तिस्थले प्रत्येकं स्वस्वकार्यं प्रति कारणयोरपि संख्यापरिमायोरवर्जनीयतयाऽऽगतत्वात् यथा त्रयाणां सन्निपातस्तथेत्यर्थः। त्रयाणां सन्निपातस्थलेवैजात्यमाशंकते **अस्तीति**। स्वीकरोति **इहापीति**। कायसंक्षोभादिः-कायव्यापारादिः। किंचित्कार्यमकुर्वतः कुलालादेः कायव्यापारसाध्यो भोगश्च न सिध्येदतः कुलालादेरपि कर्तृत्वमित्याह **नचेति**। अनित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत्कार्यत्वमित्यादिनाऽभिहितमुपाधिं निरस्यति **यत्त्विति**। अनित्यप्रयत्नस्य बुद्धिव्यापकत्वे तन्निवृत्तौ बुद्धिर्निवर्तेतातस्तस्य व्यापकत्वं विघटयति **उदासीनस्येति**। अव्यवहितपूर्वत्वसम्बन्धेन कृतिविशिष्टा या

कुर्वन्तश्चक्रादिकं नेत्तामहे। हेतुभूता कारकबुद्धिर्निवर्त्तते इति चेन्न। अयतमानस्यापि दुःखहेतुभूताया अपि तद्धेतुकण्टकस्पर्शबुद्धेरभावात्। चिकीर्षाहेतुभूतोऽनुभवो निवर्त्तते इति चेन्न। केनचिन्निमित्तेनाऽकुर्वतोऽपि चिकीर्षातद्धेतुबुद्धिसम्भवात्। अनपेक्षकृतिहेतुचिकीर्षाकारणं बुद्धिर्निवर्त्तते इति चेद्, न तर्हि बुद्धिमात्रम्। तथाचानित्यप्रयत्नहेतुकत्वप्रयुक्तं विशिष्टप्रयत्नचिकीर्षाहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्त्तताम्, न तु बुद्धिमत्पूर्वकत्वमात्रम्, तत्र तस्याप्रयोजकत्वादिति बुद्धिमत्पूर्वकत्वसाध्यपक्षे परीहारः। सकर्तृकमिति प्रयत्नप्रधानपक्षे शङ्कैव नास्ति, तस्यैव तत्रानुपाधित्वात्॥

एतेन शरीरसम्बन्धे बुद्धिगतकार्यत्ववद् बुद्धिसम्बन्धे प्रयत्नगतकार्यत्वमुपा-

---

प्रकाशः।

इत्यर्थः। **उदासीनबुद्धेरिति** कर्मधारयः। **दुःखहेत्विति**। **दुःखहेतुश्चासौ** कण्टकस्पर्शश्चेति विग्रहः। तस्य बुद्धेरित्यर्थः।

**तत्रेति**। बुद्धिमत्पूर्वकत्वे साध्ये। तस्य–अनित्यप्रयत्नस्य। प्रयोजकत्वे चोदासीनबुद्धेर्निवृत्तिप्रसङ्ग इति भावः। तदनेन प्रबन्धेन यो बुद्धिमत्पूर्वकमिति साध्यं प्रतिजानीते, तदनुकूलतया परिहृतम्। **यदा तु** सकर्तृकमिति प्रधानीभूतकृतिविषयाप्रधानीभूतबुद्धिमत्पूर्वकत्वं प्रतिज्ञायते, **तदानीमनित्य**प्रत्नस्योपाधित्वशङ्काऽपि नास्तीत्याह **बुद्धिमदिति**।

ननु प्रधानीभूतकृतिपूर्वकत्वसाध्यपक्षे बुद्धिरप्रधानीभूता कुतः सिद्ध्येत्? न हि यत्नात्तत्सिद्धिः, शरीरसम्बन्धे ज्ञानगतकार्यत्ववद् बुद्धिसम्बन्धेऽपि प्रयत्नगत**कार्यत्वस्यो**पाधेः सुवचत्वात्, तथा च कृतिमात्रशाली कर्त्ता प्राप्त इत्यत आह—

**एतेनेति**। **प्रयत्नानित्यत्वस्या**नुपाधित्वेनेत्यर्थः। **कार्यत्वादेके**कजन्यत्वं सिद्ध्येत् त्रितयजन्यत्वमपि सिद्ध्यति। आर्थस्तु समाजः। अत एव—ज्ञानादित्रयव्यतिरेकान्न कार्यव्यतिरेकः, किन्त्वेकैकव्यतिरेकादिति व्यर्थविशेषणत्वेन विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतो-

प्रकाशिका।

मुक्तमिति तदर्थत्वे प्रयत्नाभावतो न स्यादिति प्रयत्नजनकपरेण उदासीनपदेन कर्मधारयसमासात्तदर्थलाभः स्यादित्यभिप्रेत्याह **कर्मधारय इति**। कर्मधारये बुद्धेर्हेतुत्वं पृथगेवोक्तमिति विपयस्य कारकत्वलाभायाह **दुःखहेतुश्चासाविति**। **तदानीमनित्येति**। यद्यपि विशिष्टाविशिष्टभेदाद्युपाध्युपाधिमद्भावः संभवत्येव, तथापि व्याप्यव्यापककोटौ निवेशयत एव प्रमाणस्य व्याप्तिग्राहकत्वमिति मते विशिष्टस्य व्यापकताग्रहानुपपत्तेरुपाधित्वाभाव इति भावः। वस्तुतो हेतौ विपक्षबाधकादेव नायमुपाधिरिति स्मर्त्तव्यम्। **प्रयत्नानित्यत्वस्येति**। तथा च प्रयत्नादेव बुद्धिसिद्धिरिति भावः।

मकरन्दः।

ननूदासीनो निष्प्रयत्न इत्यनर्थान्तरम्, तथा च प्रयत्नाभावेऽपीति व्यर्थमत आह **कारणानीति**। प्रयत्नाभावलाभार्थमाह **उदासीनबुद्धेरिति**। पूर्वोक्तव्याख्यानेन तदलाभेऽपि प्रयत्नाजनकबुद्धेरिति कर्मधारयात्तदर्थपर्य्यवसाने तल्लाभ इत्यर्थः। पौनरुक्त्यभ्रमं निवारयति **दुःखहेतुश्चेति**। एतच्च कारकत्वद्योतनार्थम्। **यदा त्विति**। यदि कृतिजन्यत्वमेव साध्यमित्यर्थः। एवञ्च बुद्धिमत्पूर्वकत्वस्याप्राधान्यमनुपादानमेवेति बोध्यम्। यद्यपि विशिष्टाविशिष्टभेदादुपाधित्वं सम्भवति, तथापि व्याप्यं व्यापककोटावनिवेशयत एव व्याप्तिग्राहकत्वमिति मते साध्यव्यापकत्वाग्रहादुपाधित्वमिति भावः। वस्तुतो हेतौ विपक्षबाधकसम्भवादत्र च तदभावान्न तथात्वमिति।

**प्रयत्नानित्यत्वस्येति**। तथा च प्रयत्नादेव बुद्धिसिद्धिरिति भावः। वस्तुतस्तु समूहालम्ब-

विरिति निरस्तम्। यो हि बुद्धया शरीरवच्छरीरनिवृत्त्या बुद्धिनिवृत्तिवद्वा प्रयत्नेन बुद्धिं बुद्धिनिवृत्त्या प्रयत्ननिवृत्तिं साधयेत्, स एवं कदाचिदुपालभ्यः। वयं त्ववगतहेतुभावं कलितसकलशक्तिकारकप्रयोक्तारं कार्यादेवानुमिमाना नैवमास्कन्दनीयाः, तत्र तस्यानुपाधित्वात्। न च प्रयत्न आत्मलाभार्थमेव मतिमपेक्षते। विषयलाभाऽर्थमप्यपेक्षणात्। ततः प्रयत्नाद् बुद्धिः, तन्निवृत्तेश्च प्रयत्ननिवृत्तिः सिद्धयत्येवेति विस्तृतमन्यत्र। कार्यबुद्धिनिवृत्त्या तु कार्य एव प्रयत्नो निवर्त्तते, न नित्यः। नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्त्तते, नानित्या। न हि तया तस्य विषयलाभसम्भवः। शरीरादेः प्राक् तदसम्भवे देहानुपपत्तौ सर्वानुपपत्तेः। शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वमिति संक्षेपः।

---

प्रकाशः।

विशिष्टसिद्धिः, साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वात्—इत्यपास्तम्, ज्ञानाद्येकैकजन्यत्वस्यैव साध्यत्वात्, तथैव व्याप्तेरिति भावः।

तत्रेति। ज्ञानाद्येकैकजन्यत्वे साध्ये इत्यर्थः। तस्य प्रयत्नगतकार्यत्वस्येत्यर्थः। किञ्च यदि प्रयत्नेन बुद्धिः स्वोत्पत्त्यर्थमेवापेक्ष्यते, तदा प्रयत्नगतकार्यत्वमेवोपाधिः स्यात्, न चैवम्, प्रयत्नस्य निर्विषयकत्वेन ज्ञानविषयेषु कार्यजनकमिति तदर्थं बुद्धयपेक्षा स्यादेवेत्याह, न च प्रयत्न इति। तथापि नित्या बुद्धिः कुतः सिद्धयतीत्याह नित्ये च प्रयत्न इति। न हीति। बुद्धयनित्यत्वे तद्धेतुशरीरात् प्राक् तदभावे शरीरोत्पत्तिरेव न स्यादिति कदाऽपि सा बुद्धिर्न जायेतेत्यर्थः। अनित्यप्रयत्नाजन्यत्वात् क्षित्यादेरकर्तृकत्वे साध्ये शरीराजन्यत्ववद्व्यर्थविशेषणत्वमित्याह शरीराजन्यत्ववदिति।

प्रकाशिका।

वस्तुतो न प्रयत्नात्तत्सिद्धिरपि तु तत्समूहालम्बनरूपैवानुमितिस्त्रितयगोचरेत्याह कार्यत्वस्येति। ज्ञानाद्येकैकेति। प्रत्येकव्याप्तिरिति भावः। प्रयत्नगतेति। बुद्धिजत्वे साध्येऽनित्यप्रयत्नजत्वं नोपाधिः, प्रयत्न एव साध्याव्यापकत्वात् प्रयत्नजत्वे च तन्नोपाधिः, सामान्ये विशेषस्यानुपाधित्वादिति भावः। प्रयत्नस्य निर्विषयकत्वेनेति। ज्ञानवत् स्वाभाविकसविषयकत्वाभावेनेत्यर्थः। तथा च समानाधिकरणस्वाधिकरणक्षणाव्यवहितपूर्ववर्त्तिताज्ञानमेवेच्छाप्रयत्नविषयतेति।

मकरन्दः।

नरूपैवानुमितिर्न तु प्रयत्नात्तत्सिद्धिरित्येकदैव त्रितयजन्यत्वं सिद्धयतीत्याह कार्यत्वादिति। ज्ञानाद्येकैकेति। प्रत्येकव्याप्तिभिरिति शेषः।

टिप्पणी।

चिकीर्षा तत्कारणं या बुद्धिस्तद्व्यापकत्वमनित्यप्रयत्नस्येति शंकते अनपेक्षेत्यादि। ननु क्षित्यादौ बुद्धिपूर्वकत्वेन हेतुना शरीरपूर्वकत्वानुमाने यथा कार्यबुद्धिपूर्वकत्वमुपाधिर्मां प्रत्यभिधीयते, एवं भवत्पक्षेऽपि प्रयत्नेन बुद्धयनुमाने कार्यप्रयत्नस्योपाधित्वं स्यादित्याशंकामपाकरोति एतेनेति। तत्र हेतुमाह यो हीति। बुद्धिनिवृत्त्येति। तत्र व्यतिरेकव्याप्तौ प्रयत्नेन बुद्धिः साध्या तत्र जन्यप्रयत्नस्योपाधित्वमिति भावः। वयं त्विति। तथा च क्षितिः सकर्तृका कार्यत्वादित्यनुमाने यदि जन्यप्रयत्नादिरुपाधिः स्यात् तदा उपाधेस्तस्याभावेन सकर्तृकत्वाभावोऽनुमीयेत, तत्र यदि क्षित्यादिकं सकर्तृकं न स्यात् कार्यमेव न स्यादिति प्रतिकूलतर्कस्य जागरूकत्वान्नोपाधिरिति भावः। आत्मलाभः—उत्पत्तिः। विषयलाभार्थमिति। मतिविषयविषयक एव भवति प्रयत्नोऽतस्तां विना प्रयत्नस्वरूपमेव न निष्पद्येतातोऽपि प्रयत्नस्य निरुपाधिकी बुद्धिव्याप्तिरित्यर्थः। बुद्धिरिति सिध्यत्येवेत्यन्वयः।

**तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम् ।**
**अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥**

कारकव्यापारविरामे हि कार्यानुत्पत्तिप्रसङ्गः । चेतनाचेतनव्यापारयोर्हेतुफलभावावधारणात्कारणान्तराभावे इव कर्त्रभावे कार्यानुत्पत्तिप्रसङ्गः, कर्त्तुरपि कारणत्वात् ।

यस्त्वाह—प्रत्यक्षानुपलम्भाभ्यां तदुत्पत्तिनिश्चयो दृश्ययोरेव, न त्वदृश्ययोः । प्रत्यक्षस्यानुपलम्भस्य च तावन्मात्रविधिनिषेधसमर्थत्वात्, धूमाग्निवत्, कम्पमारुतवच्च । न हि धूमः कार्योऽनलस्येति उदर्यस्यापि, न हि शाखाकम्पो मातरिश्वन इति स्तिमितस्यापि स्यात्, किन्तु भौमस्पृश्ययोरेव । तथेहापि शरीरवत एव कारणत्वमवगन्तुमुचितं, नान्यस्येति ।

---

प्रकाश ।

तर्कापरिशुद्धिश्च यदि प्रतिकूलतर्काप्रतीघातस्तदा तेषां यदि ईश्वरः कर्त्ता स्याच्छरीरी स्यादित्यादीनां तर्काणामीश्वरसिद्ध्यसिद्धिभ्यां व्याघातेनाभासत्वान्न दूषणत्वमित्याह—**तर्काभासतयेति** । अथानुकूलतर्काभावरूपा सा ? तत्राह **अनुकूलस्त्विति** । कर्त्तुः कारणस्याभावे कार्यं न स्यादित्येवानुकूलस्तर्क इत्यर्थः ॥

ननु कर्त्रभावेऽपि कारणान्तरव्यापारात् कार्यं स्यादित्यत आह—**कारकव्यापारेति** । कारकान्तरव्यापारं प्रति चेतनव्यापारस्य हेतुत्वात् कर्त्रभावे सोऽपि न स्यादित्यर्थः । कारणान्तरव्यापारसत्त्वेऽपि कर्त्रभावे कार्यं न स्यात् यत्किञ्चित्कारणाभावस्य कार्यानुत्पत्तिव्याप्यत्वादित्याह–**कारणान्तरेति** ।

सौगतमाह **यस्त्विति** । कृतिमात्रकार्यमात्रयोर्नान्वयव्यतिरेकाभ्यां व्याप्तिग्रहः, त्वन्मते व्यापककृतेः सत्त्वेनायोग्यकृतेर्व्यतिरेकाऽनिरूपणात् । यदि च कृतिमात्रेण व्याप्तिग्रहाददृश्यकर्तृसिद्धिः, तदा वह्निमात्रव्याप्यधूमाददृश्यजाठर्यादिवह्निरपि सिद्ध्येत् । शाखाकम्पे **चायोग्यस्यापि** स्तिमितवायोः कारणताग्रहश्च स्यादित्यर्थः ।

प्रकाशिका ।

तदर्थतो तत्सिद्धिरिति भावः । न चैवं घटपटगोचरज्ञानेन पटेष्टसाधनतानवगाहिना जनितायां घटमात्रगोचरेच्छायां पटगोचरतापत्तिरिति वाच्यम् । तज्ज्ञानस्य घटांश एवेच्छाविषयतात्मकत्वात् ज्ञानरूपसम्बन्धस्य फलबलकल्पनीयत्वादिति । **अयोग्यस्यापीति** । **अयोग्यत्वम्** = उद्भूतस्पर्शशून्य-

मकरन्दः ।

**अयोग्यस्यापीति** । उद्भूतस्पर्शवेगशून्यवायोरित्यर्थः । **आलोकात्मकस्येति** । आलोक-

टिप्पणी ।

प्रयत्नपूर्वकत्वसाधने कार्यबुद्धेरुपाधित्वं प्रतिक्षिपति कार्यबुद्धीति । **तर्काभासतयेति** । अन्येषाम् क्षित्यादिकं यदि सकर्तृकं स्यात् शरीरजन्यं स्यात्, यदि बुद्धिमत्पूर्वकं स्यात् अनित्ययत्नजन्यं स्यात्, यदि नित्यप्रयत्नजन्यं स्यात् बुद्धीच्छाजन्यं न स्यात् ईश्वरो यदि कर्ता स्यात् शरीरी स्यादिति तर्काणामाभासत्वात् प्रतिकूलतर्केण या क्षितिः सकर्तृका कार्यत्वादित्यनुमानेऽशुद्धिरीश्वरास्तित्वनिराकरणरूपोद्भाव्यते सा न दूषणम् तत्र हेतुमाह । मदीये त्वनुमाने क्षित्यादिकं सकर्तृकं न स्यात् कार्यमेव न स्यात् कार्यलोपः स्यात् इत्यनुकूलस्तर्को भूषणमस्तीत्यर्थः ।

'दृश्ययोरेव कार्यकारणभावो नादृश्ययोः यतोऽयं प्रत्यक्षानुपलम्भाभ्याम् 'तत्सत्त्वे तत्सत्त्वं तदभावे तदभाव' इत्यन्वयव्यतिरेकाभ्याम् अवधार्यते न चादृश्ययोरेतौ सम्भवत इति सौगतमतमाह **यस्त्वि-**

तदसत् । प्रत्यक्षाऽनुपलम्भौ हि दृश्यविषयावुपायस्तदुत्पत्तिनिश्चये, न तु दृश्यतैव तत्रोपेया । किन्नाम दृश्याश्रितं सामान्यद्वयम् । तदालीढस्य हि तदुत्पत्तिनिश्चये दृश्यमदृश्यं वा सर्वमेव तज्जातीयं तदुत्पत्तिमत्तया निश्चितं भवति । यथा स्पर्शरूपरसगन्धानामुत्तरोत्तरनिमित्ततायां तव, अस्माकञ्चातीन्द्रियसमवायादिसिद्धौ । न चेदेवमुदाहृतयोरेव दहनपवनयोरालोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोकनिरस्तरूपयोः सिद्धिर्यदुदर्यस्तिमितसाधारणी सिद्धिः स्यादिति । तद्भवेदप्येवं यदि शरीरादिकं विना कार्यमिव भौमं स्पर्शवद्वेगवन्तञ्च विनाऽ-

---

प्रकाशः ।

कृतिविशेषकार्यविशेषयोरन्वयव्यतिरेकग्रहो बाधकं विना कृतिमात्रकार्यमात्रयोर्व्याप्तिग्रहोपायः, न तु पक्षधर्मतालभ्यविशेषयोरन्वयादिग्रहः, यथा वह्निधूमविशेषयोरन्वयादिना तत्सामान्ययोरपि व्याप्तिग्रहः, अन्यथाऽनुमानमात्रोच्छेदादित्याह—**प्रत्यक्षानुपलम्भाविति** । अन्यथा पाकं प्रत्या**लोकात्मकस्यैव** वह्नेः कम्पं प्रति रूपवत एव दण्डादेः प्रत्यक्षानुपलम्भाभ्यां कारणत्वनिश्चयादनालोकात्मकजाठर्यदहनस्य निरस्तरूपस्य पवनस्य च कथं सिद्धिः स्यादित्याह **न चेदेवमिति** । उदाहृतयोः **पूर्वोक्तयो**रित्यर्थः । दहनपवनयोरनालोकनिरस्तरूपयोः कुतः सिद्धिरालोकरूपवतोरेव तदुत्पत्तिनिश्चये सतीति योजना । आलोकवत एव वह्नेर्धूमोत्पत्तिनिश्चये रूपवत एव हस्तादेर्लोष्टादौ कम्पनिश्चये सतीत्यर्थः । अदृश्यवह्नेर्धूमानुत्पत्तेः पवनमात्राच्च कम्पानुत्पत्तेस्तत्र

प्रकाशिका ।

त्वम् । **स्तिमितत्वं**=वेगशून्यत्वम् । **कृतिविशेषेति** । अतिप्रसक्तत्वेनाज्ञातस्यान्वयव्यतिरेकविषयवृत्तितया ज्ञायमानस्य व्यवच्छेदकत्वग्रह इति भावः । **आलोकात्मकस्येति** । आलोकवत इत्यर्थः । तथा च पाकेन जठर्यवन्हिसिद्धिः कम्पेन च पवनो नानुमीयेतेत्यर्थः । **पूर्वोक्तयोरिति** । **यद्यपि** पवनस्तिमित एव पूर्वमुक्तम् , स च न कम्पानुमेयः, तथापि च **कम्पमारुतवच्चे**त्यनेन कम्पजनकवायोरपि पूर्वोक्तत्वमिति भावः । दहनस्तु जठर्य एव बोध्यो न तु धूमाग्निवदित्यनेनोदाहृतः, अत एवोदाहृतयोरित्यस्य पूर्वोक्तयोरिति व्याख्या कृता, अन्यथा दृष्टान्तकृतयोरित्यर्थे धूमजनकाग्निलाभे प्रकृतासङ्गतेः । **पाकोत्पत्तिनिश्चय इति** प्रामाणिकः पाठः । क्वचिद् **धूमोत्पत्तिनिश्चय** इति पाठः, तत्र धूमपदं पाकपरम् । एवमूष्ममात्रादित्यत्राप्यूष्मपदं वाष्पमात्रपरम् । क्वचित् पाठ एव तथा ।

मकरन्दः ।

वत इत्यर्थः । तथा च पाकेन जाठर्य्यवह्निः कम्पेन पवनो नानुमीयेतेत्यर्थः । **पूर्वोक्तयोरिति** । यद्यपि पवनः स्तिमित एव पूर्वोक्तः स च न कम्पानुमेयस्तथापि कम्पमारुतवच्चेत्यनेन कम्पजनकवायोरपि पूर्वोक्तत्वमिति भावः । दहनस्तु धूमाग्निवदित्यनेनोक्तो न बोध्यः, किन्तु जाठर्य्य एव । उदाहृतस्थल एवेति जाठर्यलाभात् पूर्वोक्तयोरित्यर्थ इति व्याख्यातमिति ध्येयम् । धूमोत्पत्तिनिश्चय इति पाठे धूमपदेनैव पाक उपलक्षितः । तस्यैव जाठर्य्यवह्निसाधकत्वादुपक्रान्तत्वाच्चेति । तेनापि जाठर्य्यवह्निसिद्धिर्न स्यादित्यर्थः ।

उष्ममात्राच्चेति यदि पाठस्तदा उष्मपदं वायुपरमेवेति बोध्यम् । दोषान्तरमाह **प्रकृतादिति** ।

टिप्पणी ।

**ति** । कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ च दृश्यत्वमप्रवेश्यैव तेन तेन सामान्यरूपेण कार्यकारणभाव इत्याह **नतु दृश्यतैवेत्यादि** । **तदालीढस्य**—उक्तसामान्यधर्मावच्छिन्नस्य ॥ ३ ॥

ग्निमात्रात् पवनमात्राद्वा धूमकम्पौ स्याताम् ; न त्वेवम्। नचैवं चेतनव्यभिचारोऽपि शक्याऽभिधान इत्यलं वालप्रलापानां समाधानैः।

तदुत्पत्तेरसिद्धावपि तत्तदुपाधिविधूननेन स्वाभाविकत्वस्थितौ यदि कर्त्तारमतिपत्य कार्यं स्यात् स्वभावमेवातिपतेदिति कार्यविलोपप्रसङ्ग इति । एतच्च सर्वमात्मतत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते। एवञ्च सिद्धे प्रतिवन्धे न प्रतिवन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः । प्रतिवन्धसिद्धाविष्टापादनात्। तदसिद्धौ तत एव तत्सिद्धेरप्रसङ्गादिति ।

ननु तस्य सर्वदा सर्वत्राविशेषे कार्यस्य सर्वदोत्पत्तिप्रसङ्ग इति निरपेक्षेश्वरपक्षे दोषः, सापेक्षे उपेक्षणीय एवास्त्विति वालस्य प्रदीपकलिकाक्रीडयैव नगरदाहः। तन्न। स्थेमभाजो जगत एवाकारणत्वप्रसङ्गात्। ओमिति ब्रुवतः सौगतस्य दत्तमुत्तरं प्राक्।

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

---

प्रकाशः।

दृश्यत्वमेव तन्त्रमिति न धूमाददृश्यवह्निसिद्धिर्न वा कम्पात् पवनमात्रस्यानुद्भूतस्पर्शस्य सिद्धिरित्याह **न त्विति**।

कारणत्वसिद्धावपि प्रकारान्तरेण कार्यलोपप्रसङ्गं वक्तुमाह **तदुत्पत्तेरिति**। ननूपाधिविधूननमेव कथमित्याह **एतच्चेति**। **प्रतिवन्ध्यादेरिति**। शशे पशुत्वाद् दृश्यशृङ्गवाधेऽप्यदृश्यशृङ्गसिद्धिरित्यादेरित्यर्थः। **प्रतिवन्धसिद्धाविति**। वस्तुतो विपक्षावाधकाभावाद्व्याप्त्यभाव इत्यर्थः। **प्रकृतादर्थादर्थान्तरं शृङ्गत्वस्य** योग्यसंस्थानव्यङ्ग्यत्वेनायोग्यं शृङ्गं विरोधाच्छङ्कितुमप्यशक्यं शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषामवाधितप्रत्यक्षवाधश्चेति भावः। तत एवं प्रतिवन्धासिद्धेरेवेत्यर्थः। अप्रसङ्ग इति शेषः शशशृङ्गादेरित्यर्थः। **दत्तमिति**। कार्यस्याहेतुकत्वे कादाचित्कत्वानुपपत्तिरित्यादिनेत्यर्थः।

नन्वागमादेवेश्वरसिद्धौ तत्र न्यायप्रदर्शनं व्यर्थमित्यत आह **आर्षमिति**। तर्कानुसन्धानं विनाऽऽर्षधर्मोपदेशे तात्पर्यमेव निश्चेतुमशक्यमित्यर्थः। **यद्वा** आगमाविरोधं न्यायमाह

प्रकाशिका।

**शृङ्गत्वस्येति**। यद्यपि शृङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यत्ववदात्मत्वस्यापि योग्योपाधिव्यङ्ग्यत्वनियमः, यदि तत् संसारिमात्रविश्रान्तं तदेदमपि योग्यशृङ्गनियतमिति नायोग्यप्रत्यक्षवाधः, तथापि विपक्षवाधकाभाव एव दूषणम्, शृङ्गस्य व्यतिरेकानिश्चये पशुत्वस्य केवलान्वयित्वस्वीकारे मीमांसकस्यापसिद्धान्तश्चेति भावः। **शेष इति**। तदसिद्धौ तत एवाप्रसङ्ग इति मूलपाठपक्षे पूरणमिदम्। क्वचित्तु तदसिद्धौ तत एव तत्सिद्धेरप्रसङ्गादिति पाठः, तत्र च न पूरणापेक्षा। न त्वेतावतापि तर्कप्रदर्शनमुचितम्, न तु न्यायप्रदर्शनमित्यत आह **यद्वेति**। अनेन समानविषयताप्रतिपाद-

मकरन्दः।

**शृङ्गत्वस्येति**। यद्यपि शृङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यत्ववदात्मनोऽपि योग्योपाधिमत्त्वनियमः। यदि च तत्संसारिमात्रविश्रान्तं तदा तदपि योग्यशृङ्गविश्रान्तमिति अयोग्यस्य न वाधः प्रत्यक्षेणापि, तथापि विपक्षवाधकाभाव एव मूलम्, अन्यथा पशुत्वस्य केवलान्वयित्वापत्तेः, तस्य च त्वयाऽनभ्युपगमादिति भावः। नन्वेवमपि तर्कोपदर्शनमात्रमर्हं न तु न्यायोपदर्शनमित्यत आह **यद्वेति**। अनेनोभयोः समानविषयत्वप्रतिपादनात् विरोधमाह इत्यर्थः॥३॥ मूलोक्तस्य तस्य व्योमादौ

तमिममर्थमागमः संवदति, विसंवदति तु परेषां विचारम्—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात् । तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात् । चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात् । पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं, तौ हि लोकयात्रावहनाद् बाहू । षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं, ते हि गतिशीलत्वात् पतत्त्रव्यपदेशाः-पतन्तीति । सन्धमति, सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः । तेन संयोजयति समुत्पादयन्नित्यर्थः । द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणं, भूमीत्यधस्तात् , एक इत्यनादितेति । स्मृतिरपि—अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते-इत्यादि । एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः ॥ ३ ॥

आयोजनात् खल्वपि—

**स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम् ।**
**हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥ ४ ॥**

परमाण्वादयो हि चेतनायोजिताः प्रवर्त्तन्ते अचेतनत्वाद् वास्यादिवत् । अन्यथा कारणं विना कार्यानुत्पत्तिप्रसङ्गः । अचेतनक्रियायाश्चेतनाधिष्ठानकार्य-

---

प्रकाशः ।

**आर्षमिति** । अस्मन्न्याये नागमविरोधोऽपि तु तत्संवादः, परोक्तन्याये तु नैवमित्याह **तमिममिति** । **व्यवहितेति** । व्यवहिताश्चेत्यनेन उपसर्गसंज्ञाविधानादिति भावः । **एतेन ब्रह्मादीति** । ब्रह्मादिशरीरमधिष्ठाय ईश्वर एव जगत् सृजतीत्यर्थः ॥ ३ ॥

**खल्वपीति** निपातसमुदायः, उदाहियते-इत्यर्थे वर्त्तते, न समुच्चयार्थः । स, साध्यो विश्वविद्व्यय इत्यनेनान्वीयते इत्येके । साध्यते इत्यनुवर्त्तते इत्यन्ये । एवमग्रेऽपि ।

आ युज्यते संयुज्यतेऽन्योन्यं द्रव्यमनेनेत्यायोजनं द्व्यणुकारम्भकसंयोगजनकं **सर्गाद्यकालीन**परमाणुकर्मात्र विवक्षितम् । तद् यदि स्वप्रयत्नादेव तेषां स्यात् , तदा परमाणूनामचैतन्यानुपपत्तिरित्याह **स्वातन्त्र्ये इति** । यदि च प्रयत्ननिरपेक्षाददृष्टादेव तत् स्यात्, तदा द्व्यणुकादीनामपि तत एवोत्पादः स्यादिति हेत्वन्तरोच्छेद इत्याह **नादृष्टमिति** । चेतनव्यापारसहितात्तस्मादिति भावः । तथाच **सर्गाद्यकालीन**द्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वाच्चेष्टावदिति मानार्थः । विपक्षे किं बाधकमित्याह **हेत्वभाव इति** । हेतोश्चेतनव्यापारस्यान्यत्रोपलब्धस्याभावे क्रियारूपफलाभाव इत्यर्थः । ननु चेष्टारूपः क्रियाविशेषस्तथा, न तु क्रियामात्रमित्यत आह **विशेषस्त्विति** । चेष्टा हि भोक्तृगतप्रयत्नस्य प्रयोज्या, न तु प्रयत्नमात्रस्येत्यर्थः ।

तर्कोपकार्यं मानमाह **परमाण्वादयो हीति** । आयोजिता उत्पादितकर्माणः प्रवर्त्तन्ते कार्यमारभन्ते इत्यर्थः । **विशेषणीभूत**कर्मपक्षत्वे पूर्वदर्शितानुमाने तात्पर्यम् । विशेषस्त्वित्यि-

प्रकाशिका ।

नादुभयोरागमानुरोधमाहेत्यर्थः ॥ ३ ॥ मूलोक्तानुमानस्य व्याप्यमादौ व्यभिचारादाह **सर्गाद्यका-**

मकरन्दः ।

व्यभिचारात्तत्रापरितुष्यन् स्वयं तर्कोपकार्य्यमानमाह **सर्गाद्यकालीनेति** । अत एवाह **विशेष-**

टिप्पणि ।

**स्वातन्त्र्ये जडताहानिरित्यादि** । आयोजनं (कर्मविशेषः) प्रयत्नजन्यं कर्मत्वात् मदीय-

त्वावधारणात्। क्रियाविशेषविश्रान्तोऽयमर्थो, न तु तन्मात्रगोचरः। चेष्टा हि चेतनाधिष्ठानमपेक्षते इति चेत्। अथ केयं चेष्टा नाम?। यदि प्रयत्नवदात्मसंयोगाऽसमवायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितम्। तन्न। तस्यैव तत्रानुपाधित्वात्। अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वम्। तन्न। विषभक्षणोद्बन्धनाद्यव्यापनाद् इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत्। कर्त्तारं प्रत्यन्यं वा?। उभयथाऽपि परमाण्वादिक्रियासाधारण्यादविशेषः। भ्रान्तसमीहाया अतथाभूताया अपि चेतनव्यापारापेक्षणाच्च। शरीरसमवायिक्रियात्वं तदिति चेन्न। मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः। जीवत इति चेन्न। नेत्रस्पन्दादेश्चेतनाधिष्ठा-

---

प्रकाशः।

निराकार्यं चेष्टात्वमुपाधिमाह **क्रियाविशेषेति**। **तस्यैवेति**। प्रयत्नवदात्मसंयोगाऽसमवायिकारणकत्वे हि परमाणुक्रियायां चेतनायोजितत्वमिति साध्यम्, तच्च नोपाधिः, **साधनव्यापकत्वादित्यर्थः**। **विषेति**। विषभक्षणादिक्रियाया अहितमरणादिप्रापकत्वादित्यर्थः। **इष्टेति**। विषभक्षणाद्यनुकूलक्रियाया अपि इच्छाविषयविषभक्षणादिप्रापकत्वमस्त्येव, इच्छां विना तत्र प्रवृत्त्यभावादित्यर्थः। **उभयथाऽपीति**। परमाण्वादिक्रियायास्तत्कर्तुरीश्वरस्याऽस्मदादेश्चेच्छाविषयार्थहेतुत्वादित्यर्थः। तथाच साधनव्यापकत्वादनुपाधित्वमिति भावः।

साध्याव्यापकत्वमप्याह **भ्रान्तेति**। भ्रमप्रवृत्तस्पन्दस्येष्टरजताप्रापकत्वादनिष्टशुक्त्यपरीहारकत्वाच्च तत्र साध्याव्यापकत्वादित्यर्थः। न च रजतत्वेनेच्छाविषयस्य शुक्तेः प्रापकत्वमस्त्येवेति वाच्यम्। येन रूपेणेष्टं ताद्रूप्येण प्राप्तेर्विवक्षितत्वादिति भावः। **मृतेति**। **वाय्वाऽऽदिना**।

प्रकाशिका।

**लीनेति**। अत एवाह **विशेषणीभूतेति**। अत एव चेष्टात्वस्योपाधित्वशङ्कापीति भावः। **साधनव्यापकत्वादीति**। प्रयत्न जन्यत्वञ्चेत्, तत् कर्ममात्रे तदा तदाश्रयसंयोगासमवायिकारणकत्वमपि तत्र यः स्पन्द इत्यादिव्याप्तेरिति भावः। **साध्याव्याप्तेरिति**। तन्मत इति शेषः। इदमपीत्युपलक्षणम् त्वन्मतेनेत्यपि द्रष्टव्यम् मन्मते तत्र साध्यसत्वात्। **त्वन्मत इति**। स्पर्शवद्द्रव्यान्तराप्रयुक्तक्रियार्थवत्त्वमेवोपाधिरित्यत्र दूषणमिदम्। यदि तु शरीरसमवायित्वस्य विशेषणमिदं तदा मूलोक्तान्योन्याश्रय एव दूषणम्। **ननु साक्षात्परम्परया वेति**। न समुच्चयः एकत्रोभयाधिष्ठानाभावात्। प्रत्येकगर्भसाध्ये च व्यभिचार इत्यत आह **प्रयत्नप्रतिबद्धपतनमिति**।

मकरन्दः।

**णीभूतेति**। अत एव चेष्टात्वस्योपाधित्वशङ्काऽपीति भावः। **साधनव्यापकत्वादिति**। न च कर्ममात्रस्य तत्प्रयत्नजन्यत्वेऽपि तत्संयोगसमवायिकारणत्वे मानाभाव इति वाच्यम्। यः स्पन्द इत्यादिप्रागुक्तव्याप्तेस्तथात्वादिति भावः। मृतशरीरे क्रियैव कथमित्यत आह **वाय्वादिनेति**। तन्नोदनादिनेति भावः। इदमपीत्युपलक्षणं, त्वन्मतेनेत्यपि द्रष्टव्यम्। मन्मते तत एव साध्यापत्तेरिष्टत्वात् त्वन्मत इति। यद्यपि सत्यन्तं शरीरगर्भोपाधिविशेषणमिति ज्वलनक्रियायां तदभावादत्रोक्तिसम्भवाभावस्तथापि तद्गर्भतायामिदं, तद्गर्भत्वेऽन्योन्याश्रय इति विकल्प्य दूषणे तात्पर्य्यम्।

ननु साक्षात् परम्परया वेति न समुच्चयः, एकत्रोभयथाऽधिष्ठानाभावात्, प्रत्येकगर्भसाध्ये च व्यभिचार इत्यत आह **प्रयत्नप्रतिबद्धपतन**मिति। एतेन मूले व्यर्थविशेषणमपि सूचितम्।

टिप्पणी।

व्यवहारवदित्यनेनाप्यनुमानेनेश्वरः सिध्यति, अत्रापि कार्यत्वादेव निरुपाधित्वम्।

नाभ्युपगमप्रसङ्गात् । स्पर्शवद्द्रव्यान्तराप्रयोगे सतीतिचेन्न । ज्वलनपवनादौ तथा भावाभ्युपगमापत्तेः । शरीरस्य स्पर्शवद्द्रव्यान्तराप्रयुक्तस्यैति चेन्न । चेष्टयैव शरीरस्य लक्ष्यमाणत्वात् । सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्विकेयं क्रियेति चेन्न । क्रियामात्रेणैव तदुन्नयनात् । भोक्तृबुद्धिमत्पूर्वकत्वं यत इति चेत्, तर्हि तद्विश्रान्तत्वमेव तस्य । न चैतावतैव क्रियामात्रं प्रत्यचेतनमात्रस्य चेतनाधिष्ठानेन व्याप्तिरपसार्यते । विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्ति प्रत्यविरोधकत्वात् । अन्यथा सर्वसामान्यव्याप्तेरुच्छेदादित्युक्तम् ॥

एतेनाऽशरीरत्वादिना सत्प्रतिपक्षत्वमपास्तम् ।

अत्राप्यागमसंवादः—

यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥ इत्यादि ॥

अत्र जागरस्वापौ सहकारिलाभालाभौ । ईश्वरप्रेरणायामज्ञत्वमप्रयतमानत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ । स्वर्गश्वभ्रे चेष्टानिष्ठोपलक्षणे । एतदेव सर्वाधिष्ठानमुत्तरत्र विभाव्यते—मयेत्यादिना । न केवलं प्रेरणायामहमधिष्ठाता, अपितु प्रतिरोधेऽपि । यो हि यत्र प्रभवति, स तस्य प्रेरणावद्धारणेऽपि समर्थः । यथाऽर्वाचीनः शरीरप्राणप्रेरणधारणयोरिति दर्शितं तपामीत्यादिना ॥ ४ ॥

---

प्रकाशः ।

मृतशरीरक्रियायां **साध्याव्याप्तेरित्यर्थः** । एतच्च समव्याप्तोपाध्यभिप्रायेण । मृतेस्तूपलक्षणं, जीवशरीरस्याऽपि वायुवशात् क्रियायां तथात्वमिति भावः । विषमव्याप्तोपाधिपक्षे तु शरीरावयवक्रियायां साध्याव्यापकत्वं मन्तव्यम् । **नेत्रेति** । इदमपि दूषणं समव्याप्तोपाधिपक्षे । विषमव्याप्ते तु करादिक्रियायां साध्याव्यापकम् । **स्पर्शवदिति** । नेत्रादिस्पन्दनन्तु स्पर्शवद्वायुनोदनजन्यमिति नोक्तदोष इत्यर्थः । **ज्वलनेति** । **त्वन्मते** ज्वलनादिक्रिया न प्रयत्नजन्या, किन्त्वदृष्टवदात्मसंयोगजन्येत्यतस्तत्रापि समव्याप्तोपाधिपक्षे साध्यापत्तिरित्यर्थः । **चेष्टयवेति** । चेष्टाश्रयः शरीरमिति लक्षणपक्षेऽन्योन्याऽऽश्रय इत्यर्थः । लक्षणान्तरे तु करादिक्रियायां साध्याव्याप्तिरिति भावः । **सामान्येति** । अतो नोक्तदोष इति भावः । तत्र मानमाह यत इति । **क्रियामात्रेणेति** । क्रियामात्रस्यैव मया प्रयत्नजन्यत्वानुमापकत्वाङ्गीकारादिति न तेनैषा जातिः सिद्ध्यतीत्यर्थः । **विशेषस्येति** । क्रियाप्रयत्नयोः सामान्यतः कार्यकारणभावनिश्चये साध्याऽव्यापकत्वमावश्यकमिति भावः । यद्वा प्रयत्नवदात्मसंयोगजसंयोग एव साध्याव्यापकत्वमिति भावः ।

ननु परमाणवो न चेतनाधिष्ठिताः प्रवर्त्तन्ते शरीरेतरत्वादिति सत्प्रतिपक्षता स्यादित्यत आह—**एतेनेति** । शरीरेतरक्रियायाश्चेष्टात्वाभावाद्भोक्तृप्रयत्नजन्यत्वं निवर्त्तते, क्रियामात्रे तु प्रयत्नजन्यत्वं स्यादेवेत्यर्थः । 'यदा स देव' इत्यादिपरकीयविचारे आगमविरोधप्रदर्शनम् । अध्यक्षेण

प्रकाशिका ।

तत्साध्येऽन्तर्भावयतीति सामान्योपादानेनायमपि विशेषः संगृहीत इति द्योतयतीत्यर्थः ।

धृतेः खल्वपि । क्षित्यादिब्रह्माऽण्डपर्यन्तं हि जगत् साक्षात् परम्परया वा विधारकप्रयत्नाधिष्ठितं गुरुत्वे सत्यऽपतनधर्मकत्वाद्वियति विहङ्गमशरीरवत् तत्संयुक्तद्रव्यवच्च । एतेनेन्द्राग्नियमादिलोकपालप्रतिपादका अप्यागमा व्याख्याताः । सर्वावेशनिबन्धनश्च सर्वतादात्म्यव्यवहारः–आत्मैवेदं सर्वमिति । यथैक एव मायावी अश्वो वराहो व्याघ्रो वानरः किन्नरो भिक्षुस्तापसो विप्र इत्यादि ।

अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत् । तद्भावेऽपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात् । कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात्, उपाधित्वे वा सर्वेषामकारणत्वप्रसङ्गात् । शरीरस्थितिरेवं नत्वन्यस्थितिरितिचेत् । न । प्राणेन्द्रिययोः स्थितेरव्यापनात्, प्राङ्न्यायेनापास्तत्वाच्च । अत्राप्यागमः–'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' इति । प्रशासनं–दण्डभूतः प्रयत्नः ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ इति स्मृतिः । अत्रोत्तमत्वमसंसारित्वं सर्वज्ञत्वादि च । परमत्वं सर्वोपास्यता । लोकत्रयमिति सर्वोपलक्षणम् । आवेशो ज्ञानचिकीर्षाप्रयत्नवतः संयोगः । भरणं धारणम् । अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम् । ऐश्वर्यं संकल्पाप्रतिघातः इति । एतेन कूर्मादिविषया अप्यागमा व्याख्याताः ।

---

प्रकाशः ।

अधिष्ठात्रा प्रकृतिः परमाणुः । क्षित्यादीति । क्षित्यादिकं प्रयत्नप्रतिबद्धपतनं(१) गुरुत्वे सत्यपातित्वादित्यर्थः । विहगादिसंयुक्तद्रव्यान्तरेण व्यभिचारनिरासाय तत् साध्येऽन्तर्भावयति साक्षात् परम्परया वेति । तत्र दृष्टान्तमाह तत्संयुक्तेति । एतेन धारकप्रयत्नधृतत्वव्युत्पादनेन । व्याख्याताः, मुख्यार्थतयेति शेषः । नन्विन्द्रादिदेवताभेदप्रतिपादकागमस्य मुख्यार्थतायामभेदप्रतिपादकागमविरोध इत्यत आह सर्वावेशेति । आवेशो ज्ञानादिमत्संयोग इति वक्ष्यते । तद्भावेऽपीति । पतनप्रतिबन्धकसंयोगभेदः स्थितिः । अत एव वायुसंयोगादा-

प्रकाशिका ।

तत्र दृष्टान्तमिति । तद्विशेषपुरस्कारेण सामान्यदृष्टान्तमित्यर्थः । शेष इति । तल्लोकधारकप्रयत्नाश्रयतया तेषां परस्परमन्त्राच्च भेदसिद्धावद्वैतनिरासे मुख्यार्था एवेन्द्रादिदेवताभेदप्रतिपादकागमा इत्यर्थः । आवेश इति । ज्ञानादिमता ईश्वरेण संयोगः सम्बन्धः साक्षात्परम्परासाधारणः यथाश्रुते व्यापकेऽव्याप्तेः । अत एवेति । अन्वयव्यतिरेकाभ्यां स्थितिं प्रति प्रयत्नस्य हेतुत्वादेवेत्यर्थः । अदृष्टद्वाराऽस्मदादिनाश्यत्वेनार्थान्तरमित्यनुशयादाह स्वजनकेति । स्वजनकप्रयत्नेन समानका-

मकरन्दः ।

मुख्यार्थतयेति शेष इति । धारकप्रयत्नात्तदाश्रयाच्च भेदसिद्धावद्वैतनिरासे इन्द्रादिदेवतानां परस्परभेदप्रतिपादकागमा मुख्यार्था एवेत्यर्थः । आवेश इति । ज्ञानादिमता ईश्वरेण संयोगः सम्बन्धः साक्षात्परम्परासाधारण इत्यर्थः । वक्ष्यते इति । यो लोकत्रयमाविश्येत्यत्रावेशपदव्याख्यानावसरे मूल एव । अत एवेति । प्रयत्नान्वयव्यतिरेकानुविधानेन स्थितिं प्रति तद्धेतुत्वादेवेत्यर्थः । नन्वदृष्टद्वारा अस्मदादिनाश्यत्वेनार्थान्तरमित्यनुशयादाह स्वजनकेति । स्वजनकप्रयत्नेन समानकालीनं

---

(१) प्रयत्नप्रतिरुद्धेति प्रकाशिकाभिमतः पाठः ।

संहरणात् खल्वपि । ब्रह्माण्डादिद्व्यणुकपर्यन्तं जगत् प्रयत्नवद्विनाश्यं विनाश्यत्वात् पाट्यमानपटवत् । अत्राप्यागमः—

एष सर्वाणि भूतानि समभिव्याप्य मूर्त्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं सम्भ्रामयति चक्रवत् ॥
सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकीम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ इत्यादि ।

एतेन रौद्रमंशं प्रतिपादयन्तोऽप्यागमा व्याख्याताः ।

पदात् खल्वपि—

**कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।**
**विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥**

---

प्रकाशः ।

काशपत्रस्थितिवत् सा स्यादित्यपास्तम् । **अनुपाधित्वादिति ।** साधनव्यापकत्वादित्यर्थः । प्राङ्न्यायेन, विशेषश्च विशेषवानिति न्यायेनेत्यर्थः । किमिदं शरीरत्वं यत्साक्षात् प्रयत्नाधिष्ठितत्वे परमाणूनां प्रसज्ज्यते इत्यादिना वेत्यर्थः । धृत्यादेरित्यादिपदसंग्राह्यमाह **संहरणादिति । ब्रह्माण्डादीति ।** ब्रह्माण्डादिकं स्वजनक**प्रयत्नसमानकालीनचरम**कारणनाशप्रतियोगीति साध्यार्थः । **सर्वभूतानीति ।** परमाणुमात्रावशिष्टानीत्यर्थः ।

ननु नाशविशेष एव प्रयत्नपूर्वकोऽन्यस्त्वन्यथाऽपि भविष्यतीत्याशङ्क्य वृत्तसमाधानं कुर्वाण एव ग्रन्थलाघवाय वर्त्तिष्यमाणेऽप्यऽतिदिशति—

**कार्यत्वादिति ।** यथा धृतिविनाशयोः कार्यकारणभावो विपक्षे बाधको निरुपाधित्वग्राहकः । तथा पदस्याऽपि स एव तद्ग्राहक इत्यर्थः । न चादिमत्त्वमुपाधिः । प्रलये विच्छेदादनादित्वाभावेन साधनव्यापकत्वादित्याह **विच्छेदेनेति ।** प्रत्ययादिहेतुष्वपि पूर्ववत् कार्यकारणभाव एव विपक्षबाधक इत्यर्थः ।

प्रकाशिका ।

लीनं चरमकारणं यस्यैवंभूतो योः नाशः तत्प्रतीयोगीत्यर्थः । स्वपदं ध्वंसपरं, साध्यप्रसिद्धिश्चास्मदादिप्रयत्ने, तन्नाशचरमकारणस्य तद्गोचरसाक्षात्कारस्य विषयीभूतप्रयत्नसमानकालत्वात् तस्य च प्रयत्नस्य प्रतियोगितया नाशकारणत्वात् संसारिप्रयत्नसमानकालीनं कालादिकमादायार्थान्तरं तत्प्रयत्नस्यापि अदृष्टद्वारा नाशकत्वादिति । **चरमेति ।** कालादिसमानकालीनं चरमकारणमादायार्थान्तरमिति **प्रयत्नेति ।** उदासीनप्रयत्नसिद्धावप्रयोजकत्वमिति **जनकेति ।** पाठादिश्च पक्षसम एवेति

मकरन्दः ।

चरमकारणं यस्य नाशस्य तत्प्रतियोगीत्यर्थः । अदृष्टद्वारकप्रयत्नस्यापि कालादिकारणसमानकालीनतयाऽर्थान्तरतादवस्थ्यमत उक्तं **चरमेति ।** कालीनादिसमानकालीनत्वमादायार्थान्तरत्वमत आह **प्रयत्नेति ।** उदासीनप्रयत्नसिद्ध्याऽर्थान्तरमत उक्तं **स्वजनकेति ।** केचित्तु उदासीनसिद्धावप्रयोजकत्वमिति विपक्षबाधकसूचनाय तदित्याहुः । स्वपदं चरमकारणपरं ध्वंसपरं वा । न चैवं

टिप्पणी

ननु व्यवहारस्यानादित्वात्पूर्वपूर्वकुलालादिप्रयुक्त एव सर्वो व्यवहारः सेत्स्यतीति किमीश्वरेणेत्यत आह **विच्छेदेनेति ।** प्रलये विच्छेदेन व्यवहारस्य नानादित्वम् । एवं वक्ष्यमाणवेदजन्यधीप्रामाण्यरूपप्रत्ययादिहेतोः आदिपदग्राह्यवक्ष्यमाणश्रुतिसंख्याविशेषयोरपि पूर्ववत् कार्यत्वादेव निरुपाधित्वम्, अनुकूलतर्कवत्त्वं बोध्यम् ।

प्रदशब्देनात्र पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एवोच्यते। अतोऽपीश्वरसिद्धिः। तथाहि–यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दाऽऽदीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्वः स्वतन्त्रपुरुषविश्रान्तो व्यवहारत्वात् निपुणतरशिल्पिनिर्मितापूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति।

आदिमान् व्यवहार एवम्, अयन्त्वनादिरन्यथाऽपि भविष्यतीति चेन्न। तदसिद्धेः। आदिमत्तामेव साधयितुमयमारम्भः। न चैवं संसारस्यानादित्वभङ्गप्रसङ्गः। तथापि तस्याविरोधात्। न हि चैत्रादिव्यवहारोऽयमादिमानिति भवस्याप्यनादिता नास्ति, तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति। अस्त्वर्वाग्दर्शी कश्चिदेवात्र मूलमिति चेन्न। तेनाऽशक्यत्वात्, कल्पादावादर्शाभासस्याप्यऽसिद्धेः। साधितौ च सर्गप्रलयौ।

ननु व्यवहारयितृवृद्धः शरीरी समधिगतो, न च ईश्वरस्तथा, तत्कथमेवं स्यात्। न। शरीरान्वयव्यतिरेकाऽनुविधायिनि कार्ये तस्यापि तद्वत्त्वात्। गृह्णाति हि ईश्वरोऽपि कार्यवशाच्छरीरमन्तरान्तरा, दर्शयति च विभूतिमिति। अत्राप्यागमः–

पिताऽहमस्य जगतो माता धाता पितामहः।

तथा,

यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्॥ इति॥

एतेन 'नमः कुलालेभ्य कर्मारेभ्य' इत्यादि यजूंषि बोद्धव्यानि।

---

प्रकाशः।

व्यक्तवाचो मनुष्याः। **स्वतन्त्रेति**। तज्जातीयव्यवहारानुपजीवित्वं पुरुषस्य स्वातन्त्र्यम्। साध्येषु क्रमेण दृष्टान्ताः–**निपुणेत्यादि**। **आदिमानिति**। सादिव्यवहारत्वमुपाधिरित्यर्थः। **अन्यथाऽपीति**। स्वतन्त्रपुरुषं विनाऽपीत्यर्थः। **तथापीति**। पूर्वपूर्वसर्गेऽपि तज्जातीयव्यवहारस्येश्वरपूर्वकत्वादित्यनादित्वं न विरुद्ध्यते इत्यर्थः। इदानीन्तनापूर्वव्यवहारस्य सादित्वेऽपि न भवस्यानादित्वं हीयते इत्याह **न हीति**। तदनादित्वे इत्यत्रापि न हीत्यनुपज्ज्यते। **आदर्शेति**। यद्व्यवहारं दृष्ट्वा व्यवह्रियते, सोऽपि नास्तीत्यर्थः। **शरीरान्वयेति**। ईश्वरस्यादृष्टाभावेऽपि तच्छरीरसाध्यहेतुकास्मदादिभोगसम्पादकाऽदृष्टादेवेश्वरस्य शरीरोत्पत्तिरिति भावः। **पिताऽहमस्येति**। अस्य जगतोऽहमेव **पित्रादिरित्यर्थः**। **यदि ह्यहमिति**। यदि ह्यहं न वर्त्तेयं तदा लोक्यन्ते इति लोकाः प्रामाणिकव्यवहारा उत्सीदेयुरिति व्यवहितेनान्वयः। अत्र हेतुः–**मम वर्त्मेति**। एतेन–घटादिव्यवहारस्य स्वतन्त्रपुरुषपूर्वकत्वव्युत्पादनेन। कुलालादिदेहवत् ईश्वरस्य तथाभावादित्यर्थः।

प्रकाशिका।

न तेन व्यभिचारः। पित्रादिरिति। व्यवहारपितृत्वादिति भावः। मूले कारणपदं व्यर्थं अदृष्टादिजत्व-

मकरन्दः।

साध्याप्रसिद्धिः, अस्मदादिप्रयत्नस्यैव दृष्टान्तत्वात्। तन्नाशचरमकारणस्य स्वविषयकसाक्षात्कारस्य स्वजनकप्रयत्नेन विषयीभूतेन समानकालत्वात्। यत्नध्वंसकारणयत्नसमानकालीनस्वसाक्षात्कारहेतुकनाशप्रतियोगित्वाच्च। पटादिश्च पक्षसम इति न तेषु व्यभिचारः।

पित्रादिरिति। व्यवहारयितृत्वादिति भावः। ननु मूले कारणपदवैयर्थ्यं, अदृष्टादिजन्यत्वमा-

प्रत्ययोऽपि । प्रत्ययशब्देनात्र समाश्वासविषयप्रामाण्यमुच्यते । तथाच प्रयोगः–आगमसंप्रदायोऽयं कारणगुणपूर्वकः प्रमाणत्वात्, प्रत्यक्षादिवत् । न हि प्रामाण्यप्रत्ययं विना क्वचित् समाश्वासः । न चाऽसिद्धस्य प्रामाण्यस्य प्रतीतिः । न च स्वतः प्रामाण्यमित्यावेदितम् । न च नेदं प्रमाणं, महाजनपरिग्रहादित्युक्तम् । न चासर्वज्ञो धर्माधर्मयोः स्वातन्त्र्येण प्रभवति । न चासर्वज्ञस्य गुणवत्तेति निःशङ्कमेतत् ।

श्रुतेः खल्वपि । तथाहि–सर्वज्ञप्रणीता वेदाः, वेदत्वात् । यत् पुनर्न सर्वज्ञप्रणीतं, नाऽसौ वेदो यथेतरवाक्यम् ।

---

प्रकाशः ।

प्रत्ययपदं समाश्वासशक्तं तत्सम्बन्धि तद्विषयं प्रामाण्यं लक्षयतीत्याह—

**प्रत्ययशब्देनेति । तथा चेति ।** आगमस्य सम्प्रदायः प्रवाहः **प्रमात्वप्रयोजक**वाक्यार्थप्रमाणरूपगुणजन्यो **यथार्थ**विख्यापयिषादिवक्तृगुणजन्यो वा प्रमाणशब्दत्वात् लौकिकप्रमाणशब्दवदित्यऽर्थः । लक्षणाबीजं सम्बन्धमाह **न हीति ।** न च प्रमाणत्वमसिद्धं, प्रामाण्याज्ञाने पारलौकिके कर्मणि वेदबोधिते प्रेक्षावतां प्रवृत्त्यनुपपत्तेरित्याह **न चेति ।** तथापि तेन वक्तृगुणपूर्वकेणैव भाव्यमित्यसिद्धमित्यत आह **न च स्वत** इति । तथापि वक्तुः सार्वज्ञ्यं कुतः सिद्ध्यतीत्याह **न चेति । तथाहीति ।** यद्यपि परैः सर्वज्ञानङ्गीकारात्तत्प्रणीतत्वं परं प्रत्यसिद्धं, **तथाप्यात्म**त्वमसंसारिवृत्ति जातित्वात् पटत्ववत् । स चासंसारी किञ्चिद्वाक्यप्रणेता पुरुषत्वादिति साध्यप्रसिद्धौ, वेदा असंसारिपुरुषप्रणीता इति साध्यम् । **न चास्मदाद्यु**च्चरिते वेदे व्यभिचारः ।

प्रकाशिका ।

मादायार्थान्तरं मनसि अभिचारश्चेत्यन्यथा माचष्टे **प्रमात्वप्रयोजकेति ।** एतच्च विपक्षबाधकसूचनाय न साध्यप्रविष्टमत एवाग्रिमसाध्ये तन्नोपात्तम् । अध्यापकादिप्रमामादायार्थान्तरमिति साध्यान्तरमाह **यथार्थेति ।** न चात्रापि तद्दोषतादवस्थ्यं वक्तृपदस्य स्वतन्त्रवक्तृपरत्वात् । तथाप्यात्मत्वमिति । न च सुखसमवायिकारणतावच्छेदकजातौ व्यभिचारः । नित्यस्येत्यादिव्याप्तेरनभ्युपगमेन तस्यात्रैव पक्षत्वात् । न चाप्रयोजकत्वमन्यथा सुखित्वमसंसारिवृत्तिसुखित्वव्यापकत्वादित्यपि स्यादिति वाच्यम् । ईश्वरप्रतिपादकागमस्यात्र विपक्षबाधकत्वात् तत्र च तदभावादिति भावः । **न चास्मदादीति ।** तत्प्रणीतत्वं तत्कण्ठताल्वाद्यभिघातजन्यत्वमित्याशयेन व्यभिचारोद्भावनमिदम्, अन्यथास्म-

मकरन्दः ।

दायार्थान्तरं, मनसि व्यभिचारश्चेत्यन्यथा व्याचष्टे **प्रमात्वप्रयोजके**ति । एतच्च विपक्षबाधकसूचनाय, न तु साध्ये प्रविष्टम्, अत एवाग्रिमसाध्ये नोपात्तम् । अध्यापकत्वमादायार्थान्तरमित्यरुचेराह **यथार्थे**ति । न चात्रापि दोषतादवस्थ्यम्, अस्मदादेरनुवक्तृतया वक्तृत्वाभावात्, स्वतन्त्रवक्तृपरत्वाद्वा ।

न चाप्रयोजकत्वम्, अन्यथा दुःखित्वमसंसारिवृत्ति धर्म्मत्वादित्यादिकमपि स्यादिति वाच्यम् । ईश्वरप्रतिपादकागमादेर्विपक्षबाधकस्य सत्त्वात्तत्र च तदभावात् । **न चास्मदादी**ति । ननु तस्य पक्षत्वात् पक्षसमत्वाद्वा कथं तत्र व्यभिचारः, अन्यथा वेदज्ञानाजन्येत्यादिसिद्धान्ते का गतिः, यदि चाजन्यज्ञानमादाय तत्र साध्यसत्त्वमिति व्यतिरेकित्वमविकलं, तदाश्रयपुरुषमादाय प्रकृतेऽपि तथेति तुल्यमिति चेत् । न । असंसारिपुरुषप्रणीतत्वं तत्कण्ठताल्वाद्युच्चरितत्वमभिप्रेत्य व्यभिचारदर्शनात् । एतदभिप्रायेणैव मूले मन्वादिवाक्ये व्यभिचारोद्भावनम्, अन्यथा

ननु किमिदं वेदत्वं नाम ? वाक्यत्वस्यादृष्टविषयवाक्यत्वस्य च विरुद्धत्वात्, अदृष्टविषयप्रमाणवाक्यत्वस्य चासिद्धेः, मन्वादिवाक्ये गतत्वेन विरोधाच्चेति चेन्न। अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वस्य तत्त्वात्। न ह्यस्मदादीनां प्रत्यक्षादि मूलम्। भ्रमविप्रलिप्से, महाजनपरिग्रहादित्युक्तम्। नापि परम्परैव मूलं, महाप्रलये विच्छेदादित्युक्तम्।

---

प्रकाशः।

**वेदज्ञानाजन्य**ज्ञानजन्यत्वस्य साध्यत्वादिति भावः। **विरुद्धत्वादिति**। प्रतारकवाक्यस्याप्यदृष्टविषयत्वादित्यर्थः। **मन्वदीति**। मन्वादिवाक्यस्याप्यदृष्टविषयप्रमाणत्वादित्यर्थः। **अनुपलभ्यमानेति**। मन्वादिवाक्ये च वेदस्यैव मूलान्तरस्योपलभ्यमानत्वादित्यर्थः॥

**ननु वाक्य**त्वमसिद्धम्, **समुदायस्या**प्रतिपादिकत्वात्। **न च शाखासमुदायो** वेदः।

प्रकाशिका।

दुश्चरितवेदस्य पक्षसमत्वेन तदनुपपत्तेः एतदभिप्रायेणैव मूले मन्वादिवाक्ये व्यभिचारोद्भावनं **वेदज्ञानाजन्येति**। वेदज्ञानेतिविशेषणमप्रसिद्धिवारणाय अन्यथा अस्मदाद्युच्चरितवेदस्यापि पक्षसमत्वान्न तेन व्यभिचार इति भावः। न चैवं वेदत्वघटकीभूतशब्दत्वस्यैव हेतुत्वमिति व्यर्थविशेषणतेति वाच्यम्। व्यतिरेकव्याप्तावखण्डाभावतया तदभावात्। न चैवं व्यतिरेकव्याप्तौ नीलधूमादित्यपि हेतुः स्यादिति वाच्यम्। इष्टत्वात् अन्वयव्याप्तावेव तस्य हेत्वाभासत्वात्। विशिष्टैकार्थप्रतिपादकत्वं वाक्यत्वं पदधर्म्मः समुदाये नास्तीत्याशङ्कते **ननु वाक्यत्वमिति**। ननु समुदितानि पदान्येव समुदायः तत्र च प्रतिपादकत्वमस्त्येव, अन्यथा वाक्यत्वमप्रसिद्धमेव स्यात्, प्रत्येकपदस्य वाक्यत्वाभावात्, समुदायस्य चाप्रतिपादकत्वात्। किञ्चैवं प्रमाणत्वस्य प्रतिपादकत्वविशेषतया तद्गर्भसिद्धान्तलक्षणमपि वेदस्यायुक्तं स्यादित्यरुचेः पक्षतावच्छेदकविकल्पमाह

मकरन्दः।

तस्यापि सर्वज्ञप्रणीतत्वेन तदभावात्। अन्यथा तु चिन्त्यम्। **वेदज्ञानाजन्येति**। अप्रसिद्धिवारणाय वेदज्ञानेति विशेषणम्। अस्मदाद्युच्चरितवेदस्यापि पक्षत्वादजन्यज्ञानमादाय साध्यसत्त्वात्तत्र न व्यभिचारः। न चैवं वेदत्वहेतुविवेचने व्यर्थविशेषणत्वम्। अखण्डाभावतया व्याप्तिग्रहे तदभावात्। वस्तुतस्तथा सति व्यतिरेकिणि व्यर्थविशेषणत्वं नोद्भाव्येत। न चेष्टापत्तिः, कथकसम्प्रदायविरोधात्। नीलधूमस्यापि व्यतिरेकितया गमकत्वापत्तेः। यदि च व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति मतं, तदा प्रकृतेऽपि तुल्यमिति पूर्वास्वरसादेवान्वयतो वेति **कल्पान्तर**मिति। **समुदायस्येति**। पदवाक्यसमुदायविशेषो वेदः पक्षः, तत्र विशिष्टैकार्थप्रतिपादकत्वरूपस्य वाक्यत्वस्य समुदाये विरहादसिद्धिरित्यर्थः। ननु समुदितानि पदान्येव समुदायः, अतिरिक्तस्यानभ्युपगमात्। तत्र च प्रतिपादकत्वसत्त्वाद्वाक्यत्वमप्रत्यूहमेव। अन्यथा वाक्यत्वमप्रसिद्धमेव स्यात्। प्रत्येकपदे वाक्यत्वाभावात्। समुदायस्याप्रतिपादकत्वात्। यदि च नैवं, तदा प्रमाणत्वस्यापि प्रतिपादकगर्भतया तद्गर्भसिद्धान्तलक्षणमपि भज्येतेति चिन्त्यम्। **शब्दतदुपजीवीति** शब्दप्रकाशे विपञ्चितम्। स्मृत्यादाविति। आद्यस्मृत्यादावित्यर्थः। एतदपि तज्जातीयत्वस्याभेद-

टिप्पणी।

**महाप्रलय** इति। अत्राखिलकार्यद्रव्यध्वंसाधारः कालो महाप्रलयो बोध्यः, अयमपि तत्तत्खण्डप्रलयापेक्षया महाप्रलय उच्यते, निखिलभावकार्यध्वंसाधारः कालो मुख्यो महाप्रलयस्तु नात्राभिप्रेतः तदनन्तरं सृष्टेरेवाभावात्, स हि क्रमशः सर्वेषु जीवेषु मुक्तेषु भवति तदनन्तरं कस्यचिदप्यदृष्टादिरूपकारणाभावान्न भवति सृष्टिरित्यवगन्तव्यम्।

**अन्वयतो वा । वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद्, अस्मदादिवाक्यवत् । अस्मर्यमाणकर्तृकत्वान्नैवमिति चेन्न । असिद्धेः ।**

**अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।**
**प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते ॥**

**वेदान्तकृद्वेदविदेव चाहम्, इति स्मृतेः । तस्माद्, 'यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादिश्रुतिपाठकस्मृतेश्च ।**

---

प्रकाशः ।

तस्य वेदनिरूप्यत्वात् । नापि महाजनानां वेदाकारानुगतव्यवहाराद्वेदत्वं जातिः । देवदत्तीयत्वानुमापकशब्दवृत्तिजातिभिः सङ्करप्रसङ्गात् । नापि स्वर्गकामादिशब्दः । **स्मृत्यादौ** तथात्वात् ।

उच्यते । **शब्दतदुपजीवि**प्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयाऽर्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वम् । ईश्वरप्रमाया अजन्यत्वात् । वेदार्थस्यानुमानादिविषयत्वेऽप्यनुमानादेर्वेदोपजीवकत्वात् । स्मृत्यादीनां वेदसमानार्थत्वेऽपि शब्दजन्यधीजन्यत्वात् । वेदादर्थं प्रतीत्य तत्प्रणयनात् ।

वाक्यादिति सङ्गृहीतं हेतुं व्याचष्टे । **अन्वयतो वेति** । ननु किं पौरुषेयत्वम् ? । न तदर्थधीजन्यत्वं, तदुच्चारणधीजन्यत्वं वा । अध्यापकतदुभयजन्यत्वेन सिद्धसाधनात् । नापि स्वतन्त्रपुरुषप्रणीतत्वम् । इदानीं पठ्यमाने वेदे तदभावात् । न च स्वतन्त्रपुरुषप्रणीतजातीयत्वं साध्यम् । आद्यस्मृत्यादौ व्यभिचारात् । तज्जातीयस्य स्वतन्त्रपुरुषप्रणीतत्वाभावात् । नाप्यर्थं प्रतीत्य तदर्थपरतया प्रतिसन्धीयमानपदत्वं पौरुषेयत्वम् । अर्थज्ञानवताऽध्यापकेन सिद्धसाधनात् ।

अत्राहुः—सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं पौरुषेयत्वम् । आद्यस्मृतावपि तज्जातीयत्वान्न व्यभिचारः । यद्वा वेदत्वं सजातीयोच्चारणनपेक्षोच्चरितवृत्ति **प्रमाणत्वावच्छेदक**वाक्यधर्मत्वात् । स्मृतित्ववत् ।

**यज्ञादिति** । यज्ञो विष्णुः । ननु वेदे कर्तृस्मरणमर्थवादतया न मानम्, कार्यान्वितज्ञानज-

प्रकाशिका ।

**न च शाखासमुदाय** इति । **स्मृत्यादाविति** । आद्यस्मृत्यादावित्यर्थः । एतदपि तज्जातीयत्वस्य भेदगर्भत्वविवक्षायामन्यथा सिद्धान्तेऽप्यसङ्गतेः । वस्तुत उच्चारणानपेक्षोच्चारणकर्तृत्वमेव स्वातन्त्र्यमिति पूर्वपक्षिणः तात्पर्यमिति स्मृतिमात्र एतदभाव इति यथाश्रुत एव ग्रन्थः । अत एव सजातीयपदप्रक्षेपेण सिद्धान्त इति बोध्यम् । **प्रमाणतावच्छेदकेति** । न चावच्छेदकत्वं यदनतिरिक्तवृत्तित्वं तदेदादीन्तनवेदत्वे व्यभिचारः, यदि चान्यूनानतिरिक्तवृत्तित्वं तदासिद्धिरिति वाच्यम् ।

मकरन्दः ।

गर्भत्वविवक्षायामन्यथा सिद्धान्तेऽप्यगतेरिति ध्येयम् । **प्रमाणतावच्छेदकेति** । न चावच्छेदकत्वं यद्यन्यूनानतिरिक्तवृत्तित्वं तदाऽसिद्धिः, अनतिरिक्तवृत्तित्वमात्रञ्चेत्तदा पठ्यमानवेदत्वादौ व्यभिचार इति वाच्यम् । स्वसमानानुपूर्वीकसकलवाक्यवृत्तिधर्मत्वादित्यत्र तात्पर्यात् । न च विशेष्यभागस्यैव व्याप्यत्वं तावन्मात्रञ्च स्वरूपासिद्धमिति वाच्यम् । अखण्डाभाववदखण्डोपाधौ न व्यर्थत्वमिति मतेनोक्तत्वात् । यन्निष्ठा यन्निरूपितेति न्यायात् । अत एव प्रमेयत्वादेः शास्त्रे हेतुत्वेनाभिधानं प्रयोजनाभावान्नान्यत्र विशेषणप्रक्षेपः । अन्यथा अखण्डाभावे का गतिः । तत्रापि प्रतियोगिकोटावनेकविशेषणप्रक्षेपसंभवात् । अत एव भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वादित्यत्र भोगाधिकरणपदं सार्थकम् । यत्तु व्याप्त्याश्रयसंकोचकविशेषणस्य व्यर्थत्वं यथा नीलधूमे, न तु विकाशकस्य, यन्निष्ठा यन्निरूपिता इति न्यायेन तद्विशेषणं विना

**अर्थवादमात्रमिदमिति चेन्न। कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात्। तथा चास्मरणे कालिदासादेरस्मरणात्। एवञ्च कुमारसम्भवादेरकर्तृकत्वप्रसङ्गः। अनैकान्तिकत्वं वा हेतोः।**

**प्रमाणान्तरागोचरार्थत्वात् सत्प्रतिपक्षत्वमिति चेन्न। प्रणेतारं प्रत्यसिद्धेः।**

---

प्रकाशः।

नकस्यैव पदस्य शक्तिग्रहादित्याह **अर्थवादेति**। 'आदित्यो वै यूप' इत्यादेरर्थवादस्य मुख्यार्थत्वे बाधकादप्रमाणत्वात्, स्तुतिपरत्वेऽपि प्रकृते बाधकानां निरासादविध्यर्थस्याऽपि मुख्यार्थत्वमेव। अन्यथा यन्न दुःखेन सम्भिन्नमित्यादेरपि स्वाऽर्थपरित्यागप्रसङ्गात्। कालिदासस्मरणेऽपि विध्यभावात् तत्काव्यस्याप्यकर्तृकत्वप्रसङ्गात्।

सकर्तृकत्वे वा तत्रैवायं हेतुरनैकान्त इत्याह **कर्तृस्मरणस्येति**।

**प्रमाणान्तरेति**। वेदा न पौरुषेयाः प्रमाणान्तरागोचरार्थत्वात्, यन्नैवं तन्नैवम्, यथा मन्वादिवाक्यमित्यर्थः। यदि वेदप्रणेतृप्रमाणान्तरागोचरार्थत्वं हेतुः, तदा तत्प्रणेतुरीश्वरस्य प्रत्यक्षगोचरत्वादसिद्धिः। अथ यस्य कस्यापि प्रमाणान्तरागोचरार्थत्वं, तदाऽनैकान्तिकमित्याह

प्रकाशिका।

समानानुपूर्वीकसकलवाक्यवृत्तिधर्म्मत्वस्य हेतुत्वात्। न च विशेषमात्रमेव व्याप्यमिति वाच्यम्। स्वसमानाधिकरणानुपूर्वीसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्याखण्डाभावस्य हेतुत्वात्। अत एव भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्तिसकलभोगाधिकरणवृत्तित्वादित्यत्रापि भोगसमानाधिकरणात्यन्ताभावाप्रतियोगित्वहेतुरित्यन्यत्र विस्तरः। आकस्मिकमहेतुकं न च तत्र बीजसम्भव

मकरन्दः।

तन्निष्ठव्याप्तेरग्रहात्। प्रकृते च विशेष्यभागस्य न्यूनवृत्तित्वविशिष्टस्याधिकवृत्तित्वमिति तस्य विकाशकत्वमिति। तत् प्रमादविजृम्भितम्। व्याप्याश्रयस्यैवंविकाशेऽपि व्याप्त्याश्रयविकाशाभावात् तद्घटितोपाधेरेकत्वात्।

न च व्याप्याश्रयविकाशस्यापि न व्यर्थत्वं, तत्र यन्निष्ठेत्यादिन्यायस्याप्यसम्भवेन मानाभावादिति। अन्यथा धूमालोकान्यतरत्वादावपि व्यर्थविशेषणत्वं न स्यात्। आलोकादिपदस्यायोगोलकादिव्याप्याश्रयविकाशत्वात्।

आकस्मिकञ्च तत्र बीजञ्चेति व्याहतमत आह **दृष्टेति**।

टिप्पणी।

**अर्थवादमात्रमिति**। अर्थवादस्त्रिधा भवति गुणवादोऽनुवादो भूतार्थवादश्च, तदुक्तम्—विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ इति। तत्र प्रमाणान्तरविरोधे गुणवादः, यथाऽऽदित्यो यूप इत्यादिः, प्रमाणान्तरावगतार्थबोधकोऽनुवादः, यथाऽग्निर्हिमस्य भेषजमित्यादिः, प्रमाणान्तरेण प्राप्तिविरोधयोरभावे भूतार्थवादः, यथा इन्द्रो वृत्राय वज्रमुदयच्छदित्यादि।

**प्रणेतारमिति**। प्रणेतृप्रमाणान्तरागोचरार्थकत्वस्य हेतुत्वं न संभवति अपौरुषेयत्वं साधयतां भवतां मीमांसकानां मते वेदे पक्षे प्रणेतृघटितहेतोरभावादित्यर्थः। यत्किंचित्पुरुषीयप्रमाणान्तरगोचरार्थकत्वस्य हेतुत्वं दूषयति **अन्यं प्रतीति**।

अन्यं प्रत्यनैकान्तिकत्वात् । आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात् ।

वक्तैव प्रकृते न सम्भवति । हेत्वभावे फलाभावात् । चक्षुरादीनां तत्रासामर्थ्यात् । अस्मदादीन्द्रियवत् । मनसो बहिरस्वातन्त्र्यात् । न । चेतनस्य ज्ञानस्येन्द्रियस्य मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात् । नित्यनिराकरणे चासामर्थ्यात् ।

परमाण्वादयो न कस्यचित् प्रत्यक्षाः तत्सामग्रीरहितत्वादिति चेन्न । क्वचिदर्थं प्रत्यसिद्धेः । अन्यं प्रति सिद्धसाधनात् ।

तथापि वाक्यत्वं न प्रमाणम् । अप्रयोजकत्वात् । प्रमाणान्तरगोचरार्थत्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम् । न । सुगताद्यागमानामपौरुषेयत्वप्रसङ्गात् । प्रमाणवाक्यस्य सत इति चेन्न । प्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशात् । स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम् । अर्थप्रतीत्येकविषयौ हि विवक्षाप्रयत्नौ स्वातन्त्र्यम् । मन्वादिवाक्यस्याऽपौरुषेयत्वप्र-

प्रकाशः ।

प्रणेतारमिति । अनैकान्तिकत्वं स्पष्टयति आकस्मिकेति । दृष्टकारणोपहारं विना जातस्मितस्य यद्बीजं सुखानुस्मृतिरूपं कारणं तस्येत्यर्थः । सर्वज्ञो वेदवक्ता न सम्भावनाऽऽस्पदम्, वाक्यार्थज्ञानसामग्रीरहितत्वादित्याह वक्तैवेति । ईश्वरो नातीन्द्रियार्थदर्शी पुरुषत्वात्, तज्ज्ञानं वा नातीन्द्रियविषयं ज्ञानत्वात्, तदिन्द्रियं वा नातीन्द्रियार्थग्राहि इन्द्रियत्वात्, तन्मनो वा नातीन्द्रिये प्रवर्त्तते मनस्त्वादित्यादयः प्रयोगाः प्रागेव निरस्ता इत्याह चेतनस्येति । अपि च सामर्थ्याभावात् कार्यज्ञानाभावेऽपि अकार्यं ज्ञानं न निवर्त्तते इत्याह नित्येति । उपाधिं शङ्कते प्रमाणान्तरेति । अत्र साध्याव्यापकत्वमाह सुगतेति । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वादुपाधित्वं स्यादित्याह प्रमाणेति । प्रणेत्रिति । साध्यादभिन्नत्वे साध्याव्यापकत्वाद् भेदनिबन्धनत्वाच्च व्याप्यव्यापकभावस्येत्यर्थः । प्रमाणान्तरगोचरार्थत्वेन शब्देतरप्रमाणगोचरार्थत्वं विवक्षितं, मानान्तरगोचरार्थत्वं वा, मूलभूतमानान्तरगोचरार्थत्वं वा ? । आद्ये मन्वादीति । द्वितीय-

प्रकाशिका ।

इत्यत आह दृष्टकारणेति । साध्यादभिन्नत्व इति । यद्यपि नात्राभेद उपाधिभेदात् किञ्चापौरुषेयत्वस्य सुगतागमवृत्तित्वादुक्तोपाधेश्च तदवृत्तित्वात् सर्वथाभेद एव, तथापि साध्यसिद्धिपर्यवसितसिद्धिकत्वाद् वह्न्यादिसामग्रीवदुत्सर्गतोऽस्यानुपाधित्वमित्यत्र तात्पर्यम् । शब्देतरेति । शब्दतदुप-

मकरन्दः ।

साध्यादभिन्नत्वे इति । यद्यप्यत्र नाभेदः, उपाधिभेदस्य स्फुटत्वात्, किञ्च पौरुषेयत्वस्य सुगतागमादावपि सत्त्वादन्यथा, वाक्यत्वस्य तत्र व्यभिचारापत्तेरिदञ्च तद्व्याप्तमिति सर्वथा भेद एव, तथाप्येतदस्वरसादेव दोषान्तरदानमिति ब्रूमः । अन्यथा तु चिन्त्यम् ।

शब्देतरेति । शब्दतदुपजीविप्रमाणेतरप्रमाणगोचरार्थत्वमित्यर्थः ।

टिप्पणी

परमाण्वादय इत्यादि । अत्रास्मत्सिद्धान्ते परमाण्वादीनामपीश्वरादिप्रत्यक्षविषयतया सामान्यतः प्रत्यक्षविषयत्वाभावस्याप्रसिद्ध्या तेन रूपेण साध्यत्वे साध्याप्रसिद्धिः स्यादतो यत्किंचित्प्रत्यक्षविषयत्वाभावः साधनीयः, तथाच यत्किञ्चित्पदेनेश्वरग्रहणे परमाण्वादावीश्वरप्रत्यक्षविषयत्वाभावो मास्तु प्रत्यक्षसामग्रीरहितत्वमस्त्विति व्यभिचारशंकानिवर्तकानुकूलतर्कशून्यत्वाद्व्याप्यत्वासिद्धिः, यदि च यत्किंत्पदेन जीवो गृह्येत तदा सिद्धसाधनमित्यर्थः ।

सङ्गाच्च। तदर्थस्य शब्देतरप्रमाणागोचरत्वात्। प्रयुज्यमानवाक्येतरगोचरार्थत्वमात्रमिति चेन्न। तस्य वेदेऽपि सत्त्वात्, एकस्याप्यर्थस्य शाखाभेदेन बहुभिर्वाक्यैः प्रतिपादनात्। अस्त्वेवं, न तु तेषां मिथो मूलमूलीभाव इति चेन्न। उक्तोत्तरत्वात्।

संख्याविशेषात् खल्वपि। द्व्यणुकत्र्यणुके तावत् परिमाणवती द्रव्यत्वात्। तच्च परिमाणं कार्यं कार्यगुणत्वात्। न च तस्य परमाणुपरिमाणं द्व्यणुकपरिमाणं वा कारणम्। नित्यपरिमाणत्वात्, अणुपरिमाणत्वाच्च, अन्यथा अनाश्रयकार्योत्पत्तिप्रसङ्गात्। द्व्यणुकस्य महत्त्वप्रसङ्गाच्च त्र्यणुकवदण्वारभ्यत्वाविशेषात्। तत्र

---

प्रकाशः।

माशङ्क्य निराकरोति **प्रयुज्यमाने**ति। तृतीयं शङ्कते **अस्त्वेवमि**ति। **मूलमूलीभावः** उपजीव्योपजीवकभावः। **उक्ते**ति। प्रणेतृमूलभूतप्रमाणान्तरागोचरार्थत्वस्यासिद्धेरन्यं प्रत्यनैकान्तिकत्वादित्यादिनेत्यर्थः।

द्व्यणुकादिपरिमाणमनेकवृत्तिसङ्ख्याजन्यं, तस्याश्च द्वित्वादेरपेक्षाबुद्धित उत्पत्तिः, तदाश्रय ईश्वर इति साधयितुमाह—

**द्व्यणुके**ति। **कार्यगुणत्वा**दिति। कार्यवृत्तिगुणत्वादित्यर्थः। ननु द्व्यणुके परमाणुपरिमाणात् त्र्यणुके च द्व्यणुकपरिमाणादेव परिमाणोत्पादोपपत्तेः किं द्वित्वादिसङ्ख्ययेत्यत आह **न चे**ति। आकाशपरिमाणवदिति शेषः। **यदि च** परः परममहत्परिमाणमेव न स्वीकुर्यात्, तदा **हेत्वन्तरमाह अणुपरिमाणत्वा**दिति।

यद्यपि नात्र मनःपरिमाणं दृष्टान्तः, परमते मनसो विभुत्वात्, न चानारम्भकद्व्यणुकपरमाणुपरिमाणं दृष्टान्तः, **तयोरपि** कदाचिदारम्भकत्वात्, **अवयवा**ऽणुपरिमाणस्य जनकत्वा-

प्रकाशिका।

जीविप्रमाणेतरप्रमाणगोचारार्थत्वमित्यर्थः। **साध्यसाधने**ति। यद्यपि सुगतागमादाविव साधनव्यापकत्वं तथापि तत्र साध्याव्यापकत्वमपीति प्रमाणत्वावच्छिन्नसाध्यव्यापकत्वं वाच्यं तथा सति तदवच्छिन्नसाधनाव्यापकत्वमपीत्याशयेनेदमुक्तम्। **हेत्वन्तरमाहे**ति। मनःपरिमाणदृष्टान्तावष्टम्भेनेति भावः। तथा च पूर्वहेतावपि तदेव दृष्टान्त इति तात्पर्यम्। वस्तुतो द्व्यणुकपरिमाणपक्षतायां प्रथमहेतोरसिद्धिरित्याशयेनोभयसाधारणो हेतुरणुपरिमाणत्वादित्युक्त इति मूलस्य तात्पर्यम्। **तयोरि**ति। अनारम्भके तत्र मानाभावेन तयोरपि कदाचिदारम्भकत्वादित्यर्थः। द्व्यणुकादीनामारम्भकत्वे च तत्परिमाणस्याप्यवयवपरिमाणतया जनकत्वमिति न दृष्टान्तत्वमित्याह **अवयवे**ति। यदि च

मकरन्दः।

**यदि चे**ति। अत्रेदं चिन्त्यम्। तदस्वीकारे दृष्टान्तान्तरं कर्तुमर्हति, न तु हेत्वन्तरम्। मनःपरिमाणदृष्टान्तत्वेन प्रथमहेतावप्युपपत्तेः। तस्मात् द्व्यणुकपरिमाणपक्षके प्रथमस्यासिद्धत्वमाशङ्क्य तदभिप्रायेण हेत्वन्तरम्। तत्र च प्रथमहेत्ववष्टम्भात् परमाणुपरिमाणमेव दृष्टान्तो मनःपरिमाणं वेति मूलतात्पर्यं प्रतिभातीति।

**तयोरपी**ति। स्वरूपयोग्यत्वादित्यर्थः। यद्वा अनारम्भके तत्र मानाभावात् तयोरपि कदाचिदारम्भकत्वादित्यर्थः।

द्व्यणुकादीनामारम्भकत्वनियमे चावयवपरिमाणतया तत्परिमाणस्यापि जनकत्वमेवेति न दृष्टान्तत्वमित्याह **अवयवे**ति।

कारणबहुत्वेन महत्त्वे अणुपरिमाणस्यानारम्भकत्वस्थितेः । अणुत्वमेव महदारम्भे विशेष इत्यपि न युक्तम् । महतो महदनारम्भप्रसङ्गात् । अणुत्वमहत्त्वयोर्विरुद्धतया एकजातीयकार्यानारम्भकत्वप्रसङ्गात् । बहुभिरपि परमाणुभिर्द्वाभ्यामपि द्व्यणुकाभ्यामारम्भप्रसङ्गाच्च ।

एवं सति को दोष इति चेत् । परमाणुकार्यस्य महत्त्वप्रसङ्गः । कारणबहु-

प्रकाशः ।

ऽभ्युपगमाच्च, **अन्यथा** नित्यवृत्तिसङ्ख्याया अप्यजनकत्वापत्तेः । तथापि प्रमाणबलेन मनसोऽणुत्वं साधयिष्यामीति तत्परिमाणमेव दृष्टान्त इति भावः ।

**अन्यथेति** । कालादिमनसां परिमाणस्य परिमाणजनकत्वे तैर्द्रव्यैर्द्रव्यानारम्भादनाश्रयं परिमाणं जायेतेत्यर्थः । बाधकान्तरमाह **द्व्यणुकस्येति** । अणुपरिमाणं यदि त्र्यणुके महत्त्वारम्भकं, द्व्यणुकेऽपि स्यादविशेषादित्यर्थः । त्र्यणुकेऽपि वा द्व्यणुकवदणुत्वापत्तिरिति भावः । यदि च त्र्यणुकमहत्त्वारम्भकं बहुत्वं, तदा तत्रैवाणुत्वमनादृत्य बहुत्वसङ्ख्याया आरम्भकत्वसिद्धेर्द्व्यणुकपरिमाणस्यानारम्भकत्वं सिद्धमित्याह **तत्रेति** । ननु द्व्यणुकपरिमाणे काचिज्जातिरस्ति तद्विशिष्टाणुत्वं महत्त्वजनकमिति नोक्तदोष इत्यत आह **अणुत्वमेवेति** । एवं हि महत्त्वं महत्त्वारम्भकं न स्याद्व्यभिचारेण कारणत्वाभावादित्यर्थः । यद्वा **किमणुत्वं** महत्त्वमेव जनयति, **क्वचिदणुत्वमपि वा?** तत्राद्यमाशङ्क्य दूषयति **अणुत्वमेवेति** । अन्त्यं दूषयति **अणुत्वमहत्त्वयोरिति** । अणुत्वमहत्त्वयोर्विरुद्धजातीयतयाऽन्योन्यपरिहारेण स्थितेर्व्यभिचारान्नैकमप्यारम्भकं स्यादित्यर्थः । ननु कारणभेदात् कार्यभेदः स्यादित्यत आह **बहुभिरपीति** । **यदि न** संख्या कारणं, किन्त्वणुपरिमाणमिति शेषः । **परमाणुकार्यस्येति** । **कारणबहुत्वस्या**प्यन्यत्र महत्त्वहेतुत्वकल्पनाद्

प्रकाशिका ।

तादृशस्यापि अणुपरिमाणत्वेनाजनकतया न दृष्टान्तत्वं तत्राह **अन्यथेति । किमणुत्वमिति** एवकारोऽत्र भिन्नक्रमः तथा च किमणुत्वमेवेत्यर्थः । तेन **महतो महदनारम्भप्र**सङ्गादिति मूलसङ्गतिः । **क्वचिदणुत्वमपि वेति** । क्वचिदणुत्वं क्वचिच्च महत्वं महत्वजनकत्वमिति विकल्पार्थः । ननु तृणारणिमणिवत् कार्यवैजात्यान्न व्यभिचारः, अन्यथा संख्याहेतुत्वेऽपि का गतिरित्याह **नन्विति । यदि नेति** । यद्यपि संख्याकारणत्वेऽप्ययं प्रसङ्गः सम्भवी, तथापि परमाणुभिर्द्व्यणुकस्य द्व्यणुकाभ्यां त्र्यणुकस्यारम्भप्रसङ्गो बोध्यः । न चाणुपरिमाणद्वयत्वेन द्व्यणुकाणुत्वजनकत्वमणुपरिमाणत्रयत्वेन च त्र्यणुकमहत्वजनकत्वं स्यादिति वाच्यम् । तथासत्यावश्यकतया द्वित्वत्रित्वयोरेव जनकत्वात् परमाणुभिस्त्र्यणुकारम्भे बाधकं वक्ष्यतीति । ननु परमाणुपरिमाणं महत्वाजनकमेव संख्या तु तन्मते परिमाणाजनिकैवेति कथं परमाणुत्रयारब्धत्र्यणुके महत्वापत्तिरित्यत आह **कारणबहुत्वस्यापीति** ।

मकरन्दः ।

यदि च तादृशस्यापि नित्यपरिमाणत्वेनैवाजनकत्वमिति दृष्टान्तत्वं तत्राह **अन्यथेति** । यद्यप्येतद्दूषणं मनःपरिमाणदृष्टान्तत्वपक्षेऽपि, तथापि तदग्रे परिहरिष्यतीति ध्येयम् ।

**किमणुत्वमिति** । एवकारोऽत्र भिन्नक्रमः । तेन किमणुत्वमेव महत्त्वं जनयतीत्यर्थः । तथा च महता महदनारम्भप्रसङ्गादिति घटते । मूलस्वरसोऽप्येवमेवेति केचित् । तृणारणिमणिवत् कार्य्यभेदान्न व्यभिचारः, अन्यथा सङ्ख्याहेतुत्वपक्षे का गतिरित्याह **नन्विति** ।

**यदि नेति** । यद्यपि सङ्ख्याकारणत्वपक्षेऽपि तत्र प्रसङ्गस्तुल्यः, तथापि परमाणुभिन्नार्थकस्य द्व्यणुकाभ्यां त्र्यणुकस्यारम्भप्रसङ्गो बोध्यः । परिमाणद्वयत्वादिना कारणत्वे द्वित्वादेरेवावश्यकस्य कारणत्वात् । परमाणुभिस्तु महदारम्भे बाधकं वक्ष्यतीति । ननु यथा नित्यपरिमाणत्वादिना

ध्वस्य तद्धेतुत्वात्। अन्यथा द्वाभ्यां त्रिभिश्चतुर्भिरित्यनियमेनाप्यण्वारम्भे तद्वैयर्थ्यप्रसङ्गात्। अणुन एव तारतम्याभ्युपगमस्तु संख्यामवधीर्य न स्यात्। अस्तु महदारम्भ एव त्रिभिरिति चेन्न। न, महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमात्। तथापि वा तारतम्ये संख्यैव प्रयोजिकेति। न च प्रचयोऽपेक्षणीयोऽवयवसंयोगस्याभावात्।

तस्मात् परिमाणप्रचयौ महत एवारम्भकाविति स्थितिः। अतोऽनेकसंख्या

---

प्रकाशः।

द्व्यणुककार्यवत् परमाणुत्रयारब्धस्यापि बहुत्वहेतुकमहत्त्वोत्पादापत्तिरित्यर्थः। **ननु परमाणुद्वयारब्धस्येवाणुत्रयारब्धस्याणुत्वमेव स्यादित्यत आह अन्यथेति।** तथा सति त्रित्वादिसंख्यावैयर्थ्यापत्तिरणुद्वयारब्धापेक्षया तद्विशिष्टारब्धे विशेषाभावादित्यर्थः। **प्रत्येकं** व्यभिचारादकारणत्वञ्च स्यादिति भावः। नन्वणूनां संख्यावैचित्र्यमणुपरिमाणतारतम्यमेदसम्पादनोपयोगि, परिमाणेऽवान्तरकारणभेदव्यङ्ग्यजातिभेदाच्च न व्यभिचार इत्यत आह **अणुन एवेति।** तथापि तारतम्ये **संख्यैव प्रयोजिका,** संख्याभेदं विना समुदाये भेदकान्तराभावादित्यर्थः। परमाणुकार्यस्य महत्त्वप्रसङ्ग इत्यत्रेष्टापत्तिमाह **अस्त्विति।** त्रिभिः परमाणुभिरित्यर्थः। **महत इति।** अनन्यथासिद्धान्वयव्यतिरेकाभ्यां तथैव कारणत्वनिर्णयादित्यर्थः। ननु त्र्यणुकादिपरिमाणस्य परिमाणाजन्यत्वेऽपि प्रचयजन्यत्वं स्यात्, तस्यापि महत्त्वे कारणत्वादित्यत आह **न चेति।**

**अतोऽनेकेति। अत्रेदं तत्त्वम्।** त्र्यणुकमहत्त्वं न परिमाणजन्यं संख्याप्रचयाजन्यमहत्त्वं प्रत्यवयवमहत्त्वेन कारणत्वात्। न त्ववयवपरिमाणत्वेन, परमाणुपरिमाणाद् द्व्यणुके महत्त्वापत्तेः। नापि जन्याऽवयवपरिमाणत्वेन, **गौरवात्।** नापि जन्याणुत्वेन, तथाऽदर्शनात्। **महत्त्वविशेषे-**

प्रकाशिका।

समानपरिमाणकपालद्वयारब्धघटापेक्षया समानपरिमाणकपालत्रयारब्धघटे महत्त्वप्रकर्षदर्शनात् संख्यापि कारणमित्यर्थः। न च तर्हीत एव बाधकात्त्रिभिः परमाणुभिर्द्व्यणुकारम्भ इति वाच्यम्। परिमाणस्य स्वापेक्षयोत्कृष्टपरिमाणजनकतया द्व्यणुकत्र्यणुकयोरणुतमत्वापत्त्या नाणुपरिमाणं परिमाणजनकमित्यग्रे वक्ष्यमाणत्वात्। **ननु परिमाणद्वयेति।** महत्त्वसमानाधिकरणाया एव बहुत्वसंख्याया महत्त्वजनकत्वमिति भावः। ननु न वैयर्थ्यं द्वित्वत्रित्वादीनां कारणतावच्छेदकत्वादित्यत आह **प्रत्येकमिति। संख्यैव प्रयोजिकेति।** तथा च संख्यायां अणुपरिमाणजनकत्वे सिद्ध ईश्वर इति भावः। **परमाणुकार्यस्येति।** यद्यपि पूर्वं द्व्यणुके महत्त्वप्रसङ्गः कृतः, तथापि द्व्यणुकेऽपि परमाण्वारभ्यत्वं नियम्यमिति तत्रैव इष्टापादनाशङ्केति भावः। ननु यथा नित्यवृत्तिपरिमाणस्याणुपरिमाणस्य वाऽजनकत्वम् तथा नित्यवृत्तिरीश्वरवृत्तिसंख्ययोरपि न जनकत्वमित्याशयेनाह **अत्रेदन्तत्त्वमिति। नन्विति।** न च महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमादेव न द्व्यणुके महत्त्वमिति वाच्यम्। नित्यस्य स्वरूपयोग्यत्वात्फलावश्यम्भाव**नियमात्। गौरवादिति।** जन्यत्वविशेषणप्रवेशेनेति भावः। **महत्त्वविशेष इति।** प्रचयशून्यावयवद्वयारब्धघटादिपरिमाणे

मकरन्दः।

तत्र जनकं, तथा नित्यवृत्तिसंख्यात्वादिना बहुत्वसंख्याऽपि जनिका न स्यात्, न च द्व्यणुकस्य महत्त्वप्रसङ्गः, कार्यस्य महतः कार्यद्रव्यारभ्यत्वनियमादित्याशयेनाह **अत्रेदं तत्त्वमिति।**

**न त्विति।** यद्यपि महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमादेव न द्व्यणुके महत्त्वापत्तिः, तथापि नित्यस्य तस्य स्वरूपयोग्यत्वे फलावश्यम्भावापत्तिरित्यत्र तात्पर्यम्।

**महत्त्वविशेषे इति।** प्रचयशून्यावयवद्वयारब्धघटादिमहत्त्वे व्यभिचारादित्यर्थः।

**परिशिष्यते । सा अपेक्षाबुद्धिजन्या, अनेकसंख्यात्वात् । न चास्मदादीनामपेक्षा-**

प्रकाशः ।

ऽनियतहेतुकताऽऽपत्तेश्च । महत्त्वावान्तरजातिकल्पने गौरवम् । बहुत्वकल्पनञ्च प्रामाणिकम् । एवं त्र्यणुकपरिमाणं न महत्त्वजनकम् अणुपरिमाणत्वात् परमाणुपरिमाणवत्, अन्यथा तस्य महत्त्वजनकत्वे त्र्यणुकस्यापि महत्त्वप्रसङ्गः, किन्त्ववयवबहुत्वं, परिमाणप्रचयाजन्यमहत्त्वे अवयवबहुत्वेन कारणत्वकल्पनात् । एवं **द्व्यणुकपरिमाणं** नाणुपरिमाणजन्यं परिमाणत्वाद्, अणुपरिमाणत्वाद्वा । परमाणुपरिमाणं न परिमाणजनकम् अणुपरिमाणत्वाद् द्व्यणुकपरिमाणवत् ।

यत्तु नित्यपरिमाणत्वान्न तज्जनकं व्योममहत्त्ववदिति । तन्न, अवयवनित्यपरिमाणस्य जनकत्वाभ्युपगमात् । अन्यथा नित्यवृत्तिसंख्याया अप्यजनकत्वापत्तेः । **अतो द्व्यणुकपरिमाणं** संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वादित्यवयवबहुत्वाभावाद् द्वित्वमेव तज्जनकम् । **यदि च** द्व्यणुकत्र्यणुकपरिमाणं परिमाणजन्यं स्यात्, तदा कारणपरिमाणापेक्षया उत्कृष्टं स्यान्महज्जन्यमहत्तरमहत्तमवदित्यणुपरिमाणतरतमत्वापत्तिः । उत्कर्षश्च न कारणपरिमाणाऽपेक्षयाऽधिकदेशत्वं, येनेष्टापत्तिः स्यात्, किन्तु तरबन्तकारणपरिमाणवाचकवाच्यत्वं, तत्प्रवृत्तिनिमित्तजातिमत्त्वं वा ।

ननु परमाणुद्वित्वं न परिमाणजनकं नित्यवृत्तिसंख्यात्वाद्, **अणुवृत्तिद्वित्वत्वाद्वा,** व्योमद्व्यणुकवृत्तिद्वित्ववत् । एवं द्व्यणुकवृत्तिबहुत्वं न परिमाणजनकम्, **अवयववृत्तिबहुत्वात्,** परमाणुबहुत्ववत् । यथा त्र्यणुकमहत्त्वस्याणुजन्यत्वे द्व्यणुकस्यापि महत्त्वप्रसङ्गः, तथाऽणुवृत्तिसंख्याजन्यत्वेऽपि द्व्यणुकस्य महत्त्वप्रसङ्गः । यथा च परिमाणस्य स्वोत्कृष्टपरिमाणजनकत्वादणुतरत्वप्रसङ्गः तथा संख्याया अपि समानाधिकरणपरिमाणोत्कृष्टपरिमाणारम्भकत्वप्रसङ्गः ।

मैवम् । सर्गादौ परमाणुवृत्तिद्वित्वबहुत्वयोरसिद्धावाश्रयासिद्धेः, सिद्धौ वा धर्मिग्राहकमानबाधात् । **अथ** द्व्यणुकपरिमाणं न द्वित्वजन्यं परिमाणत्वात्, त्र्यणुकमहत्त्वं नाणुवृत्तिबहुत्वजन्यं

प्रकाशिका ।

व्यभिचारादित्यर्थः । **परिमाणप्रचयजन्यमहत्त्वेति** । परिमाणप्रचयाजन्यमहत्त्व इत्यर्थे यथाश्रुते कल्पनास्थलाभावात् । एवं **द्व्यणुकपरिमाणमिति** । विपक्षबाधकन्तु अणुतमत्वापत्तिः पूर्वमुक्तैवेति द्रष्टव्यम् । **अतो द्व्यणुकपरिमाणमिति** । अत्र हेतौ प्रचयपदानन्तरं मात्रपदं पूरणीयम्, तेन कपालत्रयारब्धघटपरिमाणं दृष्टान्तः, अन्यथा दृष्टान्तालाभात् । यद्वा त्र्यणुकपरिमाणस्य परिमाणाजन्यत्वे सिद्धे प्रयोगोयमिति तदेव दृष्टान्तमुपादाय यथाश्रुत एव तत्र हेतुः । विपक्षबाधकमाह **यदि चेति । अणुवृत्तिद्वित्वत्वादिति ।** अत्राणुवृत्तिपदं स्पष्टार्थम् । **अवयववृत्तीति ।** अवयवपदमणुपरं तेन कपालादिबहुत्वस्य घटादिपरिमाणारम्भकतया न व्यभिचारः । यदि च बहुत्वस्य क्वचिदपि न परिमाणजनकत्वमिति पूर्वपक्षितुराशय इति नोक्तव्यभिचारः, तदावयवपदं स्पष्टार्थमेवेति मन्तव्यम् । उक्ताश्रयासिद्धिभिया परिमाणं पक्षयति **अथेति ।**

मकरन्दः ।

**अणुवृत्तिद्वित्वत्वाद्वेति** । अत्राणुवृत्तिपदं स्फुटार्थम् ।

अवयववृत्तिबहुत्वादिति । अत्रापि वृत्त्यन्तं स्फुटार्थम् । अन्यत्रापि बहुत्वस्य तज्जनकत्वानभ्युपगमादित्येके । अवयवपदमणुपरं तुल्यपरिमाणाधिकसंख्यारब्धे महत्त्वोत्कर्षेण तस्य तज्जनकत्वे व्यभिचारादित्यन्ये । आश्रयासिद्ध्यादिपरिहारार्थं परिमाणं पक्षयति अथेति ।

**बुद्धिः परमाणुषु सम्भवति। तद् यस्यासौ सर्वज्ञः। अन्यथा अपेक्षाबुद्धेरभावात् संख्याऽनुत्पत्तौ तद्गतपरिमाणानुत्पादेऽपरिमितस्य द्रव्यस्यानारम्भकत्वात् द्व्यणुकानुत्पत्तौ विश्वानुत्पत्तिप्रसङ्गः। अस्मदादीनामेवाऽनुमानिकयपेक्षाबुद्धिरस्त्विति**

---

### प्रकाशः।

महत्त्ववत्वात् परिमाणत्वाद्वेति चेत्। न। **प्रसिद्ध**द्वित्वबहुत्वजन्यत्वे साध्ये सिद्धसाधनात्, अप्रसिद्धतन्निषेधे साध्याप्रसिद्धेरिति संख्यैव तज्जनिकेति वयम्।

**साम्प्रदायिकास्तु**—द्व्यणुकपरिमाणासमवायिकारणताग्राहकं मानं यद्यणुपरिमाणं विषयीकुर्यात् तदा परिमाणद्वयासमवायिकारणत्वे गौरवमिति द्वित्वमेकं विषयीकरोति। **यद्वा** एकत्वस्य परिमाणानारम्भकत्वे सजातीयनिरूपितोत्कर्षानाश्रयत्वं प्रयोजकम्, तच्च परमाणुपरिमाणेऽपि तुल्य**मित्याहुः**।

**ऋजवस्तु**—कारणपरिमाणवत् कारणानेकवृत्तिसंख्याऽप्यन्वयाद्यनुविधानात् परिमाणहेतुः। ग्रन्थस्तु संख्यानिरपेक्षपरिमाणकारणत्वनिषेधपर इति समादधुः॥

**तद् यस्यासाविति**॥ ईश्वरापेक्षाबुद्धेर्नित्यत्वेनाविनाशेऽपि तदुत्पादितद्वित्वादे**र्निमित्तान्त**-

### प्रकाशिका।

**प्रसिद्धेति**। एतच्च सामान्यलक्षणानभ्युपगन्तृपरमतेन दूषणं स्वमतेत्वप्रयोजकत्वे तात्पर्य्यमिति। केचित्तु वस्तुतः सामान्यलक्षणानभ्युपगमेपि न तयालीकस्यापि सिद्धिरिति यथाश्रुतमेव सम्यगिति प्रतिभाति। **साम्प्रदायिकास्त्विति**। अत्रेदमरुचिबीजम्—ईश्वरासिद्धिदशायां परमाणुवृत्तिद्वित्वमसिद्धं परिमाणञ्च सिद्धमिति क्लृप्तकल्पनालाघवेन परिमाणमेव कारणमुचितमिति मन्तव्यम्। **यद्वेति**। अत्रापि परमाणोरणुतमत्वात्तत्**परिमाणेपि** सजातीयनिरूपितोत्कर्षाश्रयत्वमस्त्येवेत्यरुचिबीजमिति केचित्। तदयुक्तम्, उत्कर्षो ह्यत्राधिकदेशव्यापकत्वं न तु तारतम्यं द्वित्वादावभावात्, तदभावस्य च सजातीयापेक्षया परमाणुपरिमाणे एकत्वे च समानत्वादिति। इदन्त्वरुचिबीजं परिमाणजनकतावच्छेदकरूपाभाव एव एकत्वस्य परिमाणानारम्भप्रयोजकः, अन्यथा विभागादेरपि तदारम्भकतापत्तेः जनकतावच्छेदकञ्चावयववृत्त्यनेकवृत्तिसंख्यात्वमेवेति। **ऋजवस्त्विति**। अत्रोभयहेतुकल्पनेमानाभावः। न चावयवानेकवृत्तिसंख्यात्वमवयवपरिमाणत्वञ्च परिमाणजनकतावच्छेदकमित्येव मानमिति वाच्यम्। तथा सत्यणुत्तमत्वापत्तेरुक्तादित्यरुचिबीजम्। त्वनिमित्तान्तरमदृष्टं वेदसमानविषयकेत्यादितात्पर्यविषयकत्वं तात्पर्यविषयविषयकत्वं तावन्मात्रे च साध्ये अध्यापकतात्पर्येणार्थान्तरमिति तात्पर्यापूर्वकत्वं तात्पर्यविशेषणम् तथाप्यस्मदादेरेव स्वतन्त्र

### मकरन्दः।

**प्रसिद्धेति**। एतच्च सामान्यलक्षणाभ्युपगन्तृमते दूषणम्। स्वमते त्वप्रयोजकत्वमित्यत्र तात्पर्यम्।

**साम्प्रदायिकास्त्विति**। न चेश्वरासिद्धिदशायां द्वित्वस्य कल्पनीयतया धर्मिकल्पनात इति न्यायेन परिमाणमेव विषयीकरोतीति वाच्यम्। मानान्तरेणेश्वरस्य साधितत्वात् तदवष्टम्भेनेदमित्येके। अत्र कल्पेऽस्वरस एवायमित्यन्ये।

परमाणोरणुतरत्वात् तत्परिमाणेऽपि सजातीयनिरूपितोत्कर्षाश्रयत्वमस्त्येवेत्यस्वरसादाह **इत्याहुरिति**।

उभयहेतुत्वे गौरवमित्यस्वरसमाविष्करोति **ऋजवस्त्विति**।

**निमित्तान्तरम्**—अदृष्टादि।

**वेदसमानविषयकेत्यादि**। अत्र वेदपदं स्वपरं, तेन लौकिकप्रशंसावाक्ये न व्यभिचारः।

चेन्न । इतरेतराश्रयप्रसङ्गात् । जाते हि स्थूलकार्ये तेन परमाण्वाद्यनुमानं, तस्मिन् सति द्व्यणुकादिक्रमेण स्थूलोत्पत्तिः । अस्त्वदृष्टादेव परिमाणं कृतमपेक्षाबुद्ध्येति चेत् । न । अस्तु तत एव सर्वं, किं दण्डकारणेनेत्यादेरसमाधेयत्वप्रसङ्गादिति ॥ ५ ॥

अथवा, कार्येत्यादिकमन्यथा व्याख्यायते—

**उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती ।**

---

प्रकाशः ।

रनाशेन नाश इति भावः ॥ **जाते हीति** ॥ महत्त्वोत्पत्तेः पूर्वं द्व्यणुकस्याप्रत्यक्षत्वेन लिङ्गाभावादित्यर्थः ॥

अत्र कार्यमुद्देश्यत्वम्, उद्देशश्च तात्पर्यम् । तद्विषय एव वेदस्य प्रामाण्यम् । तच्च परिशेषाद्वक्तुरिच्छा । सा च वेदार्थे नास्मदादीनामिति तदाश्रयेश्वरसिद्धिरित्याह—

**उद्देश एवेति** ॥ वेदस्यायोजनमासमन्ताद्भावेन योजनं व्याख्यानम् । तच्चास्मदादीनां सर्ववेदादर्शिनां न निष्कम्पप्रवृत्तिहेतुरिति तद्व्याख्यातृतयेश्वरसिद्धिरित्याह । **व्याख्येति** ॥ ईश्वरादि-

प्रकाशिका ।

पदार्थगोचरतात्पर्यमादायार्थान्तरमिति वेदसमानविषयकत्वं द्वितीयतात्पर्यविशेषणं, तच्च वैदिकवाक्यार्थगोचरत्वम् । न चैवं लौकिकवाक्ये व्यभिचारः, समभिव्याहृतवाक्यपरत्वाद्वेदपदस्य हेतौ च सतात्पर्यकपदं बाधितार्थकशुकवाक्ये व्यभिचारवारणाय प्रमाणवाक्यस्य सर्वस्य पक्षसमत्वाच्चेति ध्येयम् । **तादृशेति** । तथा च धृत्यादेरित्यत्र धृतिपदेन वेदधारकत्वं युक्तमिति, तदाश्रयेश्वरसिद्धिरिति भावः ।

मकरन्दः ।

अध्यापकतात्पर्यविषयत्वेनार्थान्तरमत उक्तं तात्पर्यापूर्वकेति तात्पर्यविशेषणम् । तात्पर्यविषयकाणीत्यत्र तात्पर्यविषयो विषयो यस्येति मध्यपदलोपी समास इत्याहुः । न च हेतौ सतात्पर्यकपदं व्यर्थम्, ईश्वरतात्पर्यमादाय वाक्यमात्रस्य पक्षसमत्वेन व्यभिचाराभावादिति वाच्यम् । बाधितार्थके तत्तात्पर्याभावेन व्यभिचारसम्भवात् ।

**सा चेतीति** । तथा च धृत्यादेरित्यनेन वेदधारकत्वादिकमुक्तमिति तदाश्रयेश्वरसिद्धिरिति भावः ।

टिप्पणी ।

मीमांसकमुद्दिश्य प्रकारान्तरमाह **अथवेति** । उद्देश एवेत्यादि । तथाच वेदे यस्य तात्पर्यं स एवेश्वरः सिध्यति । इदं तु तात्पर्यवतीश्रुतिः प्रत्यक्षाद्बलीयसी न श्रुतिमात्रम्, अन्यथाऽर्थवादस्थले प्रमाणान्तरविरुद्धोऽप्यर्थः सिध्येदिति यजमानः प्रस्तर इत्यादिश्रुतिबलात् यजमानादेः प्रस्तरादिरूपताऽपि स्यात्, तात्पर्यवत्या एव श्रुतेः प्राबल्योपगमे तु यजमानादौ प्रस्तराद्यभेदबोधने श्रुतेस्तात्पर्याभावान्न प्राबल्यं किंतु प्रत्यक्षस्यैवेति न काचिदापत्तिरनुपपत्तिर्वेत्याचार्यवाचस्पतिमिश्राणाम्मतमनुसरति ।

आयोजनपदं व्याख्याति **व्याख्येति** । ननु एवं सर्वज्ञानाकारस्य प्रदीपवत्सर्वार्थत्वद्योतिनः ऋग्वेदादेरल्पज्ञाज्जीवात् व्याख्या **सती** समीचीना भवितुमर्हतीत्यतस्तद्व्याख्यातृतया **विश्वदृशः** सर्वज्ञस्य ईश्वरस्य सिद्धिः । एवं तत्कारिकाघटकधृत्यादेरित्यत्र **धृतिर्धारणम्** अध्ययनम् वेदाध्ययनम् स्वतन्त्रपुरुषप्रयोज्यम् शिष्टैरनुष्ठीयमानत्वात् इत्यनुमानेन साध्यघटकतयेश्वरः सिध्यति । धृत्यादेरित्यादिपदेनोपासनं संगृह्यते, तथाच ईश्वरोपासनं सद्विषयकं शिष्टैरनुष्ठीयमानत्वादित्यनुमानेनेश्वरसिद्धिः । पदादीश्वरं

ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥ ६ ॥

आम्नायस्य हि भाव्यार्थस्य कार्ये पुरुषप्रवृत्तिनिवृत्ती। भूतार्थस्य तु यद्यपि नाहत्य प्रवर्त्तकत्वं निवर्त्तकत्वं वा, तथापि तात्पर्यतस्तत्रैव प्रामाण्यम्। तथाहि विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यते। प्रशस्ते हि सर्वः प्रवर्त्तते, निन्दिताच्च निवर्त्तते इति स्थितिः।

तत्र पदशक्तिस्तावदभिधा, तद्बलायातः पदाऽर्थः। आकाङ्क्षादिमत्त्वे सति चाऽन्वयशक्तिः पदानां पदार्थानां वा वाक्यं, तद्बलायातो वाक्यार्थः।

तात्पर्यार्थस्तु चिन्त्यते—तदेव परं साध्यं प्रतिपाद्यं प्रयोजनमुद्देश्यं वा यस्य, तदिदं तत्परम्, तस्य भावस्तत्त्वम्, तद् यद्विषयं, स तात्पर्यार्थ इति स्यात्। तत्र न प्रथमः, प्रमाणेनार्थस्य कर्मणोऽसाध्यत्वात्। फलस्य च तत्प्रतिपत्तितोऽन्यस्याभावात्। प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारेण प्रवृत्तिनिवृत्तिरूपं साध्यं परमुच्यते इति चेन्न। गङ्गायां घोष इत्यत्र तीरस्याऽप्रवृत्तिनिवृत्तिरूपस्यासाध्यस्यापि परत्वात्। तीरविषये प्रवृत्तिनिवृत्ती साध्ये इति तीरस्यापि परत्वमिति चेन्न। स्वरूपाख्यानमात्रेणापि पर्यवसानात्।

न द्वितीयः। पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभावात्। 'पदशक्तिसंसर्गशक्ती विना स्वार्थाविनाभावेन प्रतिपाद्यं परमुच्यते' इत्यपि न साम्प्रतम्। न हि यद् यच्छब्दार्थाविनाभूतं तत्र तत्र तात्पर्यं शब्दस्य, अतिप्रसङ्गात्। तदा हि गङ्गायां जलमित्याद्यपि तीरपरं स्यात्, अविनाभावस्य तादवस्थ्यात्। मुख्ये बाधके सति तत्तथा स्यादिति चेत्। न तस्मिन्नसत्यपि भावात्। तद् यथा—

---

प्रकाशः।

पदानां सर्वज्ञे नित्यज्ञाने वेदादेव शक्तिग्रहात् ततोऽपि तत्सिद्धिरित्याह **ईश्वरादीति** ॥ **लोकवृत्तेति** ॥ लौकिकदृष्टान्ते व्याप्तिग्रहादित्यर्थः ॥

वृद्धव्यवहारेण कार्यान्विते पदार्थे पदानां शक्तिः कार्यान्वयश्च विधिसमभिव्याहृतस्य साक्षात्, तदसमभिव्याहृतस्य च परम्परयेति मतमाश्रित्याह **आम्नायस्येति** ॥ भाव्यार्थस्य—साध्यार्थस्य ॥ यथा पथ्यं भुङ्क्ष्व अपथ्यं न भुङ्क्ष्व इत्यस्य साक्षात् कार्यान्वयज्ञानात् प्रवर्त्तकत्वनिवर्त्तकत्वे ॥ भूतार्थस्य—सिद्धार्थस्य ॥ यथा परिणतिसुरसमाम्रफलं परिणतिविरसं पनसमिति वाक्यस्य तदभावाद् भक्षणाऽभक्षणकार्यत्वे तात्पर्यग्रहात् परम्परया तथात्वमित्यर्थः। तदुपपादयति **विधिशक्तिरिति** ॥ कार्यत्वज्ञानजननेऽपि प्रवृत्त्यौपयिकं प्रवृत्तिविषयस्यान्यापेक्षया प्राशस्त्यज्ञानं, तद्रूपसहकार्यलाभो विधिशक्तेरवसादः, तल्लाभश्चोत्तम्भनम्। तत्सहकारित्वे मानमाह **प्रशस्ते हीति** ॥ पदार्थवाक्यार्थाभ्यां तात्पर्यं भेदयितुं प्रस्तौति **तत्रेति** ॥ तदेव परं यस्य स्तुत्यादिवाक्यस्येत्यत्र परपदार्थं विकल्पयति **साध्यमिति** ॥ **तदिदमिति** ॥ वाक्यमित्यर्थः ॥

ननु वाक्यार्थस्य वाक्यरूपप्रमाणासाध्यत्वेऽपि तन्निष्ठफलसाध्यतयैव तत्साध्यता स्यादित्यत आह **फलस्य चेति** ॥ तस्य च द्वितीयविकल्प एव प्रवेशादिति भावः ॥ **तीरस्यापीति** ॥ साध्यफलभागितया तीरस्यापि साध्यत्वमित्यर्थः ॥ **स्वरूपेति** ॥ प्रवृत्त्यादौ तात्पर्याभावेऽपि तीरस्य तात्पर्यविषयत्वादित्यर्थः ॥ **पदवाक्ययोरिति** ॥ स्तुत्यादिवाक्यस्य पदार्थवाक्यार्थभिन्ने

टिप्पणी।

साधयति **ईश्वरादीति**। आहत्य साक्षात्। सा च प्रवृत्तिश्च, इच्छातः—चिकीर्षातः।

'गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥'

इति, मुख्यार्थावाधनेऽपि वारणे तात्पर्यम् । न च परं व्यापकमेव, अव्यापकेऽपि तात्पर्यदर्शनात् । तद् यथा—मञ्चाः क्रोशन्तीति पुरुषे तात्पर्यम् । न च मञ्चपुरुषयोरविनाभावः, नापि पुरुषक्रोशनयोः ।

नापि तृतीयः । तद्धि प्रतिपाद्यापेक्षितं, प्रतिपादकापेक्षितं वा स्यात् । नाद्यः शब्दप्रामाण्यस्यातदधीनत्वात्, तथात्वे वाऽतिप्रसङ्गात् । यस्य यदपेक्षितं, तं प्रति तस्य परत्वप्रङ्गात् । तदर्थसाध्यत्वेनाऽपेक्षानियम इति चेत् । न, कार्यज्ञाप्यभेदेन साध्यस्य बहुविधत्वे भिन्नतात्पर्यतया वाक्यभेदप्रसङ्गात् । धूमस्य हि प्रदेशश्यामलतामशकनिवृत्त्याद्यनेकं कार्यम् । आर्द्रेन्धनदहनाद्यनेकं ज्ञाप्यम् । तथा चेह प्रदेशे धूमोद्गम इत्यभिहिते तात्पर्यतः को वाक्यार्थो भवेत्, चेतनापेक्षाया नियन्तुमशक्यत्वात् । नाऽपि प्रतिपादकापेक्षितं, वेदे तदभावात् ।

चतुर्थस्तु स्यात् । यदुद्देशेन यः शब्दः प्रवृत्तः स तत्परः, तथैव लोकव्युत्पत्तेः । तथाहि—प्रशंसावाक्यमुपादानमुद्दिश्य लोके प्रयुज्यते, तदुपादानपरम् । निन्दावाक्यं हानमुद्दिश्य प्रयुज्यते, तद्धानपरम्, एवमन्यत्रापि स्वयमूहनीयम् ।

तस्माल्लोकानुसारेण वेदेऽप्येवं स्वीकरणीयम्, अन्यथा अर्थवादानां सर्वथैवानर्थक्यप्रसङ्गात् । स चोद्देशो व्यवसायोऽधिकारोऽभिप्रायो भाव आशय इत्यनर्थान्तरमिति तदाधारप्रणेतृपुरुषपौरुषेयसिद्धिः ।

तथा च प्रयोगः—वैदिकानि प्रशंसावाक्यानि उपादानाभिप्रायपूर्वकाणि प्रशं-

---

प्रकाशः ।

प्रवृत्त्यादावपि तात्पर्यात्तदव्यापकत्वादित्यर्थः । न च यदर्थज्ञानजनकत्वं यस्य, तस्य तत्र तात्पर्यमिति वाच्यम् । धूमोऽस्तीति वाक्यस्याग्निज्ञानाजनकत्वेऽप्यग्नौ तात्पर्यात्तदव्यापकत्वादिति भावः ॥ **तद्धीति** । प्रयोजनं न वक्तुः श्रोतुर्वेत्यर्थः । यत्र वक्तुस्तात्पर्यं तत्र शब्दस्य प्रामाण्यमिति स्थितेराह **शब्देति** । अतिप्रसङ्गमेवाह **यस्येति** । तथाच तात्पर्यभेदेन वाक्यभेदः स्यादिति भावः । **तदर्थेति** । शब्दस्य योऽर्थस्तस्य यत्साध्यं प्रतिपाद्यस्य चापेक्षितं तत्परं, न तु तदसाध्यमपीत्यर्थः । **कार्येति** । साध्यं जन्यं ज्ञाप्यं वा ? उभयस्याप्यनेकत्वात् । तथापि तात्पर्यभेदाद्वाक्यभेद एव स्यादित्यर्थः । न च प्रकरणादिना तात्पर्यनियमान्न वाक्यभेदापत्तिः । प्रकरणं हि न साध्यं नियमयति, अशक्यत्वात् । न हि धूमं जिज्ञासमानस्य प्रतीयमानधूमाद्धूमकेतुप्रतीतिवन्मशकादिनिवृत्तिर्न भवति, प्रतिपादकाभिप्रायनियमने च सिद्धं वेदस्य सकर्तृकत्वमिति भावः । **चेतनेति** । एक एवार्थः सर्वेषां चेतनानामपेक्षित इत्यत्र नियामकाभावाद्भिन्नभिन्नार्थापेक्षायां तात्पर्यभेदाद्वाक्यभेदः स्यादिति भावः । **वेद इति** । तव दर्शने इति शेषः । **अर्थवेति** । लोके हि पदानां स्वतन्त्राभिप्रायपूर्वकतया स्वार्थप्रतिपादकत्वदर्शनाद्वेदेऽपि तथात्वं तत्पूर्वकतयैव युज्यते । न च लौकिकशब्देभ्यो वैदिकाः शब्दा अन्ये एवेति लोकमर्यादाऽतिक्रमः स्यात् । यतोऽनेनैव न्यायेन लौकिकानामेव शब्दानामर्थविशेषे शक्तिग्रहाद् वैदिकानां तद्भिन्नत्वादगृहीतशक्तिकत्वादर्थाप्रतिपादकत्वप्रसङ्गः । अत एव य एव लौकिकास्त एव वैदिकास्त एव चामीषामर्था इत्याहुरित्यर्थः । ननूद्देश्यत्वं नेच्छाविषयत्वं, किन्तु वस्त्वन्तरमेवेत्यत आह **स चेति** । लोके तथैव निश्चयादित्यर्थः ।

**वैदिकानीति** । ननु सर्गाद्यकालीनवैदिकवाक्यपक्षतायामाश्रयासिद्धिः, इदानीन्तनस्य तस्य

सावाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिलोकवाक्यवदिति । एवं निन्दा-वाक्यानि हानाभिप्रायपूर्वकाणि निन्दावाक्यत्वात् परिणतिविरसं पनसफलमित्या-दिवाक्यवत्, अन्यथा निरर्थकत्वप्रसङ्गश्च विपक्षे बाधकमुक्तम् ।

अपि च नो चेदेवं, श्रुतार्थापत्तिरपि हीयेत । सिद्धो ह्यर्थः प्रमाणविषयो, न तु तेनैव कर्त्तव्यः । न च पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषोऽस्ति, अनुपलम्भबाधितत्वात्–उत्पत्त्यभिव्यक्तिसामग्रीताल्वा-दिव्यापारविरहात्, अयोग्यस्याशङ्कितुमप्यशक्यत्वात् । तस्मादभिप्रायस्थ एव परिशिष्यते, गत्यन्तराभावात् । स चेद्वेदे नास्ति, नास्ति श्रुतार्थापत्तिरिति तद्-व्युत्पादनानर्थक्यप्रसङ्गः । तस्मात् कार्यात्तात्पर्यादप्युन्नीयते, अस्ति प्रणेतेति ।

आयोजनात् खल्वपि । न हि वेदादव्याख्यातात् कश्चिदर्थमधिगच्छति । न चैकदेशदर्शिनो व्याख्यानमादरणीयम् ।

पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम् ।

इति न्यायेनानाश्वासात् । त्रिचतुरपदकादपि वाक्यादेकदेशश्राविणोऽन्यथा-र्थप्रत्ययः स्यात्, किमुतातीन्द्रियादन्तरवाक्यसम्भेददुरधिगमात् ।

ततः सकलवेदवेदार्थदर्शी कश्चिदेवाऽभ्युपेयोऽन्यथाऽन्धपरम्पराप्रसङ्गात् । स च श्रुताऽधीतावधृतस्मृतसाङ्गोपाङ्गवेदवेदार्थस्तद्विपरीतो वा न सर्वज्ञादन्यः सम्भवति । को ह्यप्रत्यक्षीकृतविश्वतदनुष्ठान एतावानेवायमाम्नाय इति निश्चिनु-यात् । कश्चाऽर्वाग्दृग् निःशेषाः श्रुतीर्ग्रन्थतोऽर्थतो वाऽधीयीत, अध्यापयेद्वा ।

अत्रापि प्रयोगः—वेदाः कदाचित् सर्ववेदार्थविद्व्याख्याताः अनुष्ठातृमति-

प्रकाशः ।

पक्षत्वेऽप्यत्राऽस्मदादिनाऽर्थान्तरत्वं, स्वरूपाख्यानपरपुत्रस्तुतिवाक्ये चानैकान्तिकम् । अत्राहुः—वैदिकप्रशंसावाक्यानि वेदसमानविषयकतात्पर्यार्थपूर्वकतात्पर्यविषयकाणि सतात्पर्यवाक्यत्वात् लौकि-कप्रशंसावाक्यवत् ।

यदि च वेदे न स्वतन्त्रपुरुषाऽभिप्रायपूर्वकता, तदा भट्टानां श्रुतार्थापत्त्या शब्दः कल्प्यते इति राद्धान्तव्याघात इत्याह—**अपि चेति** । ननु मा भूच्छ्रुतार्थापत्त्या शब्दकल्पनं, योग्यार्थकल्पनयैवो-पपत्तेः । मैवम् । क्रियाकारकपदानामन्योन्योपस्थापिताऽर्थान्वयबोधकत्वनियमव्युत्पत्तेः । अन्यथा गौः कर्मत्वमानयनं कृतिरित्यतोऽपि गामानयेत्यस्मादिवान्वयबोधापत्तेः, पुष्पेभ्य इत्यादौ स्पृहय-तीत्यादिशब्दसमभिव्याहारं विना चतुर्थ्यनुपपत्तेश्च । न च स्पृहयतिशब्दार्थयोग एव चतुर्थी साधुः । पुष्पमिच्छतीत्यत्रापि चतुर्थ्यापत्तेः ।

तथापि स्वयं स्मृतानामेव योग्यासन्नसाकाङ्क्षपदानां श्रुतपदैः सहैकार्थप्रतिपादने तात्पर्यकल्पनं श्रुतार्थापत्तिविषयः स्यादिति चेन्न । वेदे परस्परसमभिव्याहृतपदानामेकार्थप्रतिपादने तात्पर्योप-लब्धेः । तस्य चोच्चारणाभिप्रायान्यतरनियतविषयत्वेनोभयथाऽपि ईश्वरसिद्धिरित्याशयेनाह **गत्यन्तराभावादिति** ।

कार्येत्यादिकारिकायां धृत्यादेरित्यपि व्याचष्टे **स चेति** । श्रुतः—श्रोत्रेण साक्षात्कृतः । अधीतो–ज्ञानविषयार्थः । धृतः–सतताभ्यासेन दृढसंस्कारः । तद्विपरीतो विनैवाध्ययनं ज्ञातसकलाङ्गो-पाङ्गवेदार्थः, अध्यापितधारितादिवेदार्थो वा । **कदाचिदिति** बाधनिरासाय । **एकदेशदर्शि-**

प्रकाशिका ।

**एकदेशदर्शीति** । पक्षसमेऽपि व्यभिचार इति मतेनेदम् । वस्तुत इदं विशेषणं त्याज्यमेव

मकरन्दः ।

**एकदेशदर्शीति** । नन्वीश्वरव्याख्यानमादाय तस्यापि पक्षसमतया कथमनैकान्तिकम्,

चलनेऽपि निश्चलार्थानुष्ठानत्वात्, यदेवं तत्सर्वं तदर्थविद्व्याख्यातं, यथा मन्वादिसंहितेति । अन्यथा त्वनाश्वासेनाव्यवस्थानादननुष्ठानमव्यवस्था वा भवेदनादेशिकत्वात् । अनुष्ठातार एवादेष्टार इति चेत् । न तेषामनियतबोधत्वात् । वेदवद्वेदानुष्ठानमप्यनादीति चेत् । न । तद्धि स्वतन्त्रं वा, वेदार्थबोधतन्त्रं वा ? । आद्ये निर्मूलत्वप्रसङ्गः । द्वितीये त्वनियमापत्तिः । न ह्यसर्वज्ञाविशेषे पूर्वेषां तदवबोधः प्रमाणं, न त्विदानीन्तनानामिति नियामकमस्ति ।

पदात् खल्वपि । श्रूयते हि प्रणवेश्वरेशानादिपदम्, तच्च सार्थकम्, अविगानेन श्रुतिस्मृतीतिहासेषु प्रयुज्यमानत्वात् घटादिपदवदिति सामान्यतः सिद्धे कोऽस्यार्थः ? इति व्युत्पित्सोर्विमर्शे सति निर्णयः, स्वर्गादिपदवत् ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इत्यर्थवादात्, यववराहादिवद्वाक्यशेषाद्वा । तद् यथा ईश्वरप्रणिधानमुपक्रम्य श्रूयते—

---

प्रकाशः ।

व्याख्यातवेदात्, शिष्याणां श्रद्धया प्रवर्त्तमानानां निश्चलानुष्ठानमस्तीत्यनैकान्तिकमित्यत उक्तम् **अनुष्ठात्रिति** । तत्राऽनुष्ठातॄणामव्यवस्थितमतित्वाभावादित्यर्थः ॥ अननुष्ठानहेतुमाह **अव्यवस्थानादिति** । अर्थनिश्चयस्येति शेषः । अन्यथा त्वनियतमनुष्ठानं स्यादित्याह **अव्यवस्था वेति** । अर्थनिश्चयाव्यवस्थानादित्यर्थः । अनादेशिकत्वात्–अनौपदेशिकत्वादित्यर्थः । ननु पूर्वेषामेव स्वतन्त्रवेदार्थज्ञानं प्रमाणमाधुनिकानान्त्वप्रमाणं स्यादित्यत आह **न हीति** । न च कश्चित् वेदार्थोऽस्तीत्यनेन रूपेणास्मदादिभिरेव व्याख्यानादनुमाने सिद्धसाधनं, येन रूपेण वेदार्थो व्याख्यात इति लोके व्यवहारः, तद्रूप्येण व्याख्यानस्य विवक्षितत्वात् । यद्वा **वेदा** व्याख्यानानुकूलतद्विषयानित्यज्ञानभिन्नज्ञानसमानविषया वाक्यत्वाद्, **वेदा एतद्विषया**ऽनित्यज्ञानान्यज्ञानविधृता धृतवाक्यत्वादिति भावः । **अविगानेनेति** । निरर्थकतया प्रसिद्ध्यभावेनेत्यर्थः । अत एव स्तोभैर्न व्यभिचारः, निरर्थकत्वेनैव तेषां प्रसिद्धेरिति भावः । यथा स्वर्गपदे विधिशेषीभूतार्थवादाच्छक्तिग्रहस्तथा प्रकृतेऽपीत्याह **निर्णय इति** । अर्थवादमाह **उत्तम इति** ।

**यववराहादिवदिति** । 'यवमयश्चरुर्भवति' 'वाराही चोपानद्' 'वैतसे कटे प्राजापत्यं धिनोती'त्यत्र यववराहवेतसशब्दाः किं कङ्गुवायसजम्बूनां वाचकाः, उत दीर्घशूकशूकरवञ्जुलानामिति म्लेच्छार्यव्यवहारदर्शनाद्विप्रतिपत्तौ मुख्यार्थानध्यवसायेऽननुष्ठानापत्त्या तत्पदवद्वेदप्रामाण्यसंशये, पूर्वपक्षः— व्युत्पत्तिग्राहकव्यवहाराविशेषात् कङ्ग्वादावपि शक्तिरेव, पिकनेमतामरसपदेषु म्लेच्छप्रसिद्धेरादरणाच्चेति । राद्धान्तस्तु–वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः

प्रकाशिका ।

पक्षसमे च न व्यभिचार इति मतेनैवायं हेतुः, तद्विशेषणपि व्यभिचारापत्तेरिति ध्येयम् । **धृत्यादे**रित्यभिप्रायेणाह **वेदा एतद्विषयेति** । **सर्वज्ञतेत्यादि**मूलस्थकारिकायां स्वतन्त्रता–नित्येच्छा, अनन्तशक्तिः,–कार्यमात्रकारणत्वम् । ननूपदेशादिरेव विधिरस्तीत्यतो मूलं विधिः प्रेरणेत्यादि ।

मकरन्दः ।

अन्यथा तादृशस्थले कदाचिदनुष्ठातृमतिचलनस्यापि सम्भवेन तत्पदोपादानेऽपि व्यभिचारापत्तेरिति चिन्त्यम् ।

धृत्यादेरित्यभिप्रायेणाह **वेदा** इति ।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ इति ॥

एवम्भूतोऽर्थः प्रमाणबाधित इति चेन्न । प्रागेव प्रतिषेधात् । तथापि न तत्र प्रमाणमस्तीति चेत् । स्वर्गं अस्तीति का श्रद्धा । न ह्युक्तविशेषणे सुखे किञ्चित् प्रमाणमस्त्यस्मदादीनाम् ।

याज्ञिकप्रवृत्त्यन्यथाऽनुपपत्त्या तथैव तदित्यवधार्यते इतिचेद् । न । इतरेतराश्रयप्रसङ्गात्—अवधृते हि स्वर्गरूपे तत्र प्रवृत्तिः, प्रवृत्त्यन्यथाऽनुपपत्त्या च तदवधारणमिति । पूर्ववृद्धप्रवृत्त्या तदवधारणेऽयमदोष इति चेन्न । अन्धपरम्पराप्रसङ्गात् । विशिष्टादृष्टवशात् कदाचित् कस्यचिदेवंविधमपि सुखं स्यादिति नास्ति विरोधः, तन्निषेधे प्रमाणाभावादिति चेत् । तुल्यमितरत्रापि ।

अत्रापि प्रयोगः—यः शब्दो यत्र वृद्धैरसति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः, यथा स्वर्गशब्दः सुखविशेषे प्रयुज्यमानस्तस्य वाचकः, प्रयुज्यते चायं जगत्कर्त्तरीति । अन्यथा निरर्थकत्वप्रसङ्गे सार्थकपदकदम्बसमभिव्याहारानुपपत्तिरिति । एतेन-रुद्रोपेन्द्रमहेन्द्रादिदेवताविशेषवाचका व्याख्याताः ।

अपिच अस्मत्पदं लोकवद्वेदेऽपि प्रयुज्यते, तस्य च लोके नाचेतनेष्वन्यतमदर्थः, तत्र सर्वथैवाप्रयोगात् । नाप्यात्ममात्रमर्थः, परात्मन्यपि प्रयोगप्रसङ्गात् । अपि तु यस्तं स्वातन्त्र्येणोच्चारयति, तमेवाह तथैवान्वयव्यतिरेकाभ्यामवसायात् । ततो लोकव्युत्पत्तिमनतिक्रम्य वेदेऽध्यनेन स्वप्रयोक्तैव वक्तव्यः, अन्यथाऽप्रयोगप्रसङ्गात् । न च यो यदोच्चारयति वैदिकमहंशब्दं, स एव तदा तस्यार्थ इति युक्तम् । तथा सति मामुपासीतेत्यादौ स एवोपास्यः स्यात् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते, इत्युपाध्यायशिष्यपरम्परैवात्मन्यैश्वर्यं समधिगच्छेत्, तथा च उपासनं प्रत्युन्मत्तकेलिः स्यात् । लोकव्यवहारश्चोच्छिद्येत । तस्मान्नानुवक्ताऽस्य वाच्योऽपि तु वक्तैवेति स्थिते प्रयुज्यते-त्रेदे अस्मच्छब्दः स्वप्रयोक्तृवचनः अस्मच्छब्दत्वाल्लोकवदिति ।

---

प्रकाशः ।

कणिशशालिनः॥ 'वराहं गावोऽनुधावन्ति' 'अप्सुजो वेतसः' इत्यादिवाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रसिद्धिर्हेयेति म्लेच्छप्रसिद्धौ निरस्तायां निष्प्रतिपक्षार्थव्यवहाराच्छक्तिग्रहः । यत्र तु वेदविरोधो नास्ति, तत्र पिकादिपदेष्वभियोगवत्त्वान्म्लेच्छानां तत्प्रसिद्धिरेवादरणीयेत्यर्थः ।

प्रकृते विधिशेषीभूतं वाक्यशेषमाह **सर्वज्ञतेति** । तृप्तिः-स्वभोगेच्छाविरहः । अङ्गानि-धर्माः । उक्तविशेषणे-दुःखादिसम्भिन्नत्वाभावादिविशिष्टे । **याज्ञिकेति** । लौकिकसुखाऽतिशयसुखं विना बहुवित्तव्ययायाससाध्ये कर्मणि प्रवृत्तिर्न स्यादित्यऽर्थः । **एतेनेति** । रुद्रादिपदेष्वपि रुद्रस्त्र्यम्बक इत्यादिवाक्यशेषान्निर्णय इत्यर्थः ।

यदि अस्मच्छब्दस्योच्चारयितरि शक्तिस्तदा 'वाच्यस्त्वया मद्वचनात् स राजे'त्यत्र कविरेवास्मच्छब्देनोच्यतेत्यत उक्तं स्वातन्त्र्येणेति । अन्यकर्तृकत्वेनोच्चारणाभावः स्वातन्त्र्यम् । अत एव 'गृभ्णामि ते सौभगत्वाये'त्यादावपि नेश्वरवाचकत्वम्, अस्यान्यपरतयैव ईश्वरेणोच्चारितत्वात् । **अस्मच्छब्दत्वादिति** । अनन्यपरास्मच्छब्दत्वादित्यर्थः । तेषामिति क्रमेण यच्छब्दादीनामर्थ-

एवमन्येऽपि यः कः स इत्यादिशब्दा द्रष्टव्याः। तेषां बुद्ध्युपक्रमप्रश्नपरामर्शाद्युपहितमर्यादत्वात्, तस्य च वक्तृधर्मत्वात्। बुद्ध्युपक्रमो हि प्रक्रान्तत्वं, जिज्ञासाऽऽविष्करणञ्च प्रश्नः, प्रतिसन्धानञ्च परामर्श इति। एवञ्च संशयादिवाचका अप्युन्नेयाः।

न च जिज्ञासासंशयादयः सर्वज्ञे प्रतिषिद्धा इति युक्तम्। शिष्यप्रतिबोधनायाहार्यत्वेनाविरोधात्। को धर्मः कथंलक्षणक इत्यादिभाष्यवदिति। एतेन धिगहो बत हंतेत्यादयो निपाता व्याख्याताः॥ ६॥

प्रत्ययादपि। लिङादिप्रत्यया हि पुरुषधौरेयनियोगार्था भवन्तस्तं प्रतिपादयन्ति। तथाहि—

**प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा।**
**तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा॥ ७॥**

प्रवृत्तिः खलु विधिकार्या सती न तावत्कायपरिस्पन्दमात्रम्, आत्मा ज्ञातव्य इत्याद्यव्यापनात्। नापीच्छामात्रम्, तत एव फलसिद्धौ कर्मानारम्भप्रसङ्गात्। ततः प्रयत्नः परिशिष्यते। आत्मज्ञानभूतदयादावपि तस्याभावात्। तदुक्तं—'प्रवृत्तिरारम्भः' इति।

सेयं प्रवृत्तिर्यतः सत्तामात्रावस्थिताद्, नासौ विधिः, तत्र शास्त्रवैयर्थ्यात्। अप्रतीतादेव कुतश्चित् प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात्। न च प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात्। न च प्रवृत्तिहेतुजननार्थं तदुपयोगः, प्रवृत्तिहेतोरिच्छाया ज्ञानयोनित्वात्। ज्ञानमनुत्पाद्य तदुत्पादनस्याशक्यत्वात्, तस्य च निरालम्बनस्यानुत्पत्तेरप्रवर्त्तकत्वाच्च, नियामकाभावात्।

---

प्रकाशः।

कथनम्। धर्म इति। 'अथातो धर्मजिज्ञासा' इत्यनेन शास्त्रप्रयोजनमभिधाय विशेषेण धर्मजिज्ञासोः शास्त्रारम्भे शिष्यजिज्ञासामुपादाय मीमांसाभाष्यम्—'को धर्मः कथं लक्षणकः कान्यस्य साधनानीति' यथेत्यर्थः। **एतेन**—बुद्ध्युपक्रमादीनां वक्तृधर्मत्वकथनेन। गर्हाविस्मयखेदानुशयानां वक्तृधर्मत्वादित्यर्थः॥ ६॥

लोके लिङादीनामाप्तेच्छायां शक्तिग्रहाद्वेदेऽपि स एवार्थः। न च वेदार्थे अस्मदादीनामिच्छा सम्भवतीति तदाश्रयेश्वरसिद्धिरित्याह—**लिङादीति**। नियोगोऽभिप्रायः। अन्येषां लिङर्थत्वे बाधकस्य वक्तव्यत्वादित्यर्थः। **प्रवृत्तिरिति**। अन्यत्र ज्ञानादेरपि प्रवृत्तिपदवाच्यत्वेऽत्र कृतिरेव सा विवक्षितेत्यर्थः। तथाच कृतिकारणेच्छाज्ञानविषयो विधिरित्यन्येषां मतम्। स्वमतमाह **तज्ज्ञापक** इति।

यथा चाप्तेच्छाविषयत्वेन प्रवर्त्तकज्ञानविषय इष्टसाधनत्वमनुमीयते, तथा वक्ष्यति। तच्च परमतनिरासं विना न भवतीति तन्निराकर्तुमाह **प्रवृत्तिः खल्विति**। विधिकार्या—विधिज्ञानकार्येत्यर्थः। **आत्मेति**। चेष्टां विनाऽपि विध्यर्थसत्त्वादित्यर्थः। **तत एवेति**। इच्छामात्रेण विध्यर्थनिर्वाहे बहुवित्तव्ययायाससाध्ययागाद्यकरणप्रसङ्गादित्यर्थः। **तत इति**। कृतौ नायम्, क्रियमाणयागस्योपयोगादित्यर्थः। **आत्मज्ञानेति**। मोक्षकामस्य ज्ञानविधाने भूतेषु दयाविधाने च चेष्टाया

टिप्पणी।

**विषयस्तस्येति**। तस्य ज्ञानस्य विषयः कृतिसाध्यत्वमिष्टसाधनत्वं च। **विधिः** विधिप्रत्ययस्यार्थः।

तस्माद् यस्य ज्ञानं प्रयत्नजननीमिच्छां प्रसूते, सोऽर्थविशेषस्तज्ज्ञापको वाऽर्थविशेषो विधिः प्रेरणा प्रवर्त्तना नियुक्तिर्नियोग उपदेश इत्यनर्थान्तरमिति स्थिते विचार्यते। स हि कर्तृधर्मो वा स्यात्, कर्मधर्मो वा, करणधर्मो वा, नियोक्तृधर्मो वेति। न प्रथमः।

**इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः।**
**असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥८॥**

---

प्रकाशः।

अभावेऽपि यत्नस्य सत्त्वादित्यर्थः। **आरम्भो**—यत्नः। **तत्प्रत्यायनार्थमिति**। शास्त्रस्य ज्ञापकतया स्वरूपसद्धेतौ शास्त्रानुपयोगादित्यर्थः। तदिदं परमतनिराकरणं विना न सिद्ध्यति, तदर्थमुपन्यस्यति **स हीति**। कर्तृधर्मः-प्रवर्त्यपुरुषधर्मः। **स्पन्द** इच्छा प्रयत्नो वा। कर्मधर्मोऽपूर्वस्य क्रियाया वा धर्मः कार्यत्वादिः। करणधर्म इष्टसाधनत्वं शब्दव्यापारो भावना वा। नियोक्तृधर्म आप्ताभिप्रायः।

तत्र स्पन्दस्य विधित्वं दूषयति **इष्टहानेरिति**।

अव्याप्त्यतिव्याप्तिभ्यामित्यर्थः। यत्नस्य विधित्वं दूषयति **अप्रवृत्तेरिति**। यत्नमात्रस्यानिष्टसाधनसाधारण्यादित्यर्थः। इच्छाया विधित्वे बाधकमाह **विरोधत** इति। इच्छाया विधित्वे तयैव तज्जननाद्विरोध इत्यर्थः। न चेच्छा ज्ञाता प्रयत्नजननी, किन्तु सत्तया। न च लिङ्श्रवणकाले सा सतीत्याह **असत्त्वादिति**। न च लिङेव तां जनयति। तत्र ज्ञानकारणत्वत्यागापत्तेः, लिङ्

प्रकाशिका।

**कर्तृधर्म** इति मूलम्। स्पन्दो वा प्रयत्नो वा इच्छैवेत्यर्थः, स्पन्दश्च परम्परासम्बन्धेन कर्तृधर्म्म इत्यवधेयम्। **कर्म्मधर्मो** विति मूलम्। फलधर्म्मो वा अपूर्वधर्म्मो वा क्रियाधर्म्मो वेत्यर्थः। **करणधर्मो वेति** मूलम्। शब्दधर्म्मोऽभिधा वा शब्दार्थीभूतप्रयत्नधर्म्मेष्टसाधनत्वं वेत्यर्थः। **नियोक्तृ-**

मकरन्दः।

**स्पन्द इति**। यद्यपि स्पन्दो न पुरुषधर्मस्तथापि तदवच्छिन्नशरीरे स्पन्द इति तथोक्तम्।

टिप्पणी।

**तज्ज्ञापक** इति। याग इष्टसाधनम् आप्ताभिप्रायविषयत्वात् इति रीत्येष्टसाधनत्वानुमापकः केवलोऽनन्यलभ्य आप्ताभिप्राय एव विधिप्रत्ययार्थः, नत्विष्टसाधनत्वं तथा तस्यानुमानलभ्यत्वात्, अनन्यलभ्यस्यैव शब्दार्थत्वात्, तथाच यजेदित्यादौ विध्यर्थानुमापकतया विध्यर्थतया वाऽपेक्षणीयस्याभिप्रयस्याश्रय ईश्वरः सिध्यति।

शब्दप्रमाणातिरिक्तस्थलसाधारणप्रवृत्तिकारणचिकीर्षाजनकज्ञानविषयमिष्टसाधनत्वमेवेति परिशेषात्साधयति **इष्टहानेरिति**। चिकीर्षारूपेच्छाविशेषस्य विधित्वं दूषयति **विरोधत** इति। विध्यर्थज्ञानादिच्छा जायते ततः प्रवृत्तिरिति निर्विवादम्, इत्थं च यदीच्छा विध्यर्थः स्यात्तदा विध्यर्थज्ञानात् इच्छाज्ञानात् प्रवृत्त्यनुकूलेच्छा जायेत तदिदमिच्छाज्ञानं मानसप्रत्यक्षरूपमेव, प्रत्यक्षे च विषयस्य कारणत्वादिच्छया जायेतेत्यन्योऽन्याश्रय इति भावः। ननु लौकिकप्रत्यक्षे एव विषयस्य कारणत्वं न तु शाब्दे ज्ञानेऽतो लिङा इच्छाज्ञानं जायेत ततः प्रवृत्तिरिति क्वान्योऽन्याश्रयोऽत आह **असत्त्वादिति**। इच्छाया ज्ञानं लिङा जायतां नाम इच्छा तु क्लृप्तकारणेनेष्टसाधनताज्ञानादिनैव जायते नतु लिङाऽतस्तदानीमिच्छाया अनुत्पत्त्या प्रवृत्तिं प्रति स्वरूपसत्कारणीभूताया इच्छाया अभावात् प्रवृत्तिर्न स्यादित्यर्थः। नन्वस्तु लिङपीच्छाकारणमत आह **प्रत्ययत्यागादिति**। इष्टसाधनताज्ञानस्येच्छां प्रति कारणत्वं सर्ववादिसिद्धमेव, तत्र यदि लिङादिरपि कारणं

स हि न स्पन्द एव, आत्मानमनुपश्येदित्याद्यव्याप्तेः । ग्रामं गच्छतीत्यादावतिव्याप्तेश्च । नाऽपि तत्कारणं प्रयत्नः । तस्य सर्वाख्यातसाधारणत्वात् ।

ननु न सर्वत्र प्रयत्न एव प्रत्ययार्थः । करोतीत्यादौ प्रकृत्यर्थातिरेकिणस्तस्याभावात् । संख्यामात्राभिधानेन प्रत्ययस्य चरितार्थत्वात् । ततो लिङादिवाच्य एव प्रयत्न इति । न, कुर्यादित्यत्रापि तुल्यत्वात् । प्रयत्नमात्रस्य प्रकृत्यर्थत्वेऽपि तस्य पराङ्गताऽऽपन्नस्य प्रत्ययार्थत्वान्न तुल्यत्वमिति चेत् । न, तथापि तुल्यत्वात् । न चैकस्य तद्वाचकत्वेऽन्यस्य तद्विपर्यय आपद्येत । एको द्वौ बहव एषिपतीत्यादौ व्यभिचारात् । तत्र द्वितीयसंख्येच्छादिकल्पने करोति प्रयतते

---

प्रकाशः ।

विनाऽपीच्छोत्पत्तेश्चेत्याह प्रत्ययेति । उपायगोचरप्रवृत्ताविष्टसाधनत्वज्ञानस्य हेतुत्वनिश्चयात् तत्सङ्कीर्णेच्छायाः प्रवर्त्तकत्वे लाघवादिष्टसाधनतैव विधिरित्याह सङ्करादिति ।

करोतीत्यत्र यत्नस्य कृधातुनैवोक्तत्वादाख्यातमात्रस्य यत्नार्थत्वे पौनरुक्त्यं स्यादिति नाख्यातमात्रं यत्नमभिधत्ते, किन्तु लिङेवेत्याह नन्विति । ननु यदि प्रकृत्यर्थातिरिक्तो नाख्यातार्थः, तदा तत्प्रयोगो व्यर्थ इत्यत आह संख्येति । एकत्वादिसंख्यामात्रमाख्याताऽर्थः, तत्प्रत्यायनार्थमेव तत्प्रयोग इत्यर्थः । तर्हि लिङपि न यत्नार्थः, कुर्यादित्यत्र पौनरुक्त्यापत्तेः । अथाख्यातात् कृतेरुपस्थितावपि तात्पर्याभावात् सा नान्वीयते, किन्तु संख्यामात्रम्, तर्हि करोतीत्यादावपि तुल्यमित्याह कुर्यादित्यत्रेति । यदि कुर्यादित्यत्र यत्नमात्रं कृधात्वर्थः, तस्य चचैत्रादिसम्बन्धित्वमनुकूलत्वं वा प्रत्ययार्थ इति विशेषः, तदा करोतीत्यादावपि तुल्यमिति शङ्कोत्तराभ्यामाह प्रयत्नमात्रस्येति ।

अपि च कृतेर्धात्वर्थत्वेऽपि प्रत्ययस्य तदर्थत्वं न दोषाय, प्रकृतिप्रत्यययोरन्यत्र समानार्थत्वदर्शनादित्याह न चेति । एकस्य प्रकृतिरूपस्य, अन्यस्य प्रत्ययरूपस्य, तद्विपर्ययस्तदवाचकत्वमित्यऽर्थः । अथैक इत्यादौ प्रकृत्यर्थातिरिक्तं द्वितीयमेकत्वादिकम् , एषिपतीत्यत्रापरेच्छा प्रत्ययार्थः, तदा करोतीत्यत्र यत्नान्तरमेवाख्यातार्थ इत्यस्त्वित्याह तत्रेति । ननु द्वितीयसंख्येच्छा य-

प्रकाशिका ।

धर्मो वेति मूलम् । वक्तुरभिप्राय इत्यर्थः । तत्र न प्रथम इति मूलं कर्तृधर्मो वेत्यनेनैव कारिकाभागेन यद्यपि गतार्थं तथाप्यस्य प्रतिज्ञात्वं कारिकाभागस्य चोपसंहारत्वमिति मन्तव्यम् । यद्वा स्पन्दादौ कर्तृधर्मो न प्रथम इत्येवंपरत्वेन कारिकोत्तरं योजनीयम् । इष्टहानेरित्यादिमूलम् । स्पन्दस्य विधित्वेऽव्याप्तिरात्मानं पश्येदित्यत्रातिव्याप्तिश्च, ग्रामंगच्छतीत्यत्र यत्नस्य विधित्वे ग्रामं गच्छेदित्यत्र यत्नप्रतीत्यावप्यप्रवृत्तिः, इच्छाया विधित्वे इच्छाया इवेच्छाजनकत्वे विरोधो, लिङ्श्रुतिकाले तस्या असत्वञ्च लिङ्वेच्छाजनने प्रत्ययत्यागोऽन्यत्र प्रतीतकारणत्यागः, इच्छादिज्ञानस्य चेच्छादिजनकत्वे यागचिकीर्षावानित्यतोऽपि प्रवृत्यापत्तिरित्यप्रवृत्तिरेव दूषणम् । इष्टसाधनतासहितेच्छाया विधित्वे

मकरन्दः ।

तत्र न प्रथम इति मूलं कर्तृधर्मो नेति कारिकया गतार्थमिति यद्यपि, तथापि स्पन्दादित्रिके प्रथमः स्पन्दो नेत्यर्थः । उपसंहारश्च कर्तृधर्मो नेत्येके ।

टिप्पणी

मन्येत तदा तद्व्यतिरेकेऽपि लिङादिरिच्छां जनयेदतो व्यतिरेकव्यभिचारः स्यात् , ततश्च प्रत्ययस्य इष्टसाधनताज्ञानस्य कारणत्वं परित्यज्येतातो नेच्छापि विध्यर्थः किंतु संकरात् इष्टसाधनाज्ञानसंकीर्णेच्छाया उपायगोचरप्रवृत्तौ कारणत्वात् इष्टसाधनतैव विध्यर्थ इत्यर्थः ॥

इत्यादावपि तथा स्यात्। प्रत्येकमन्यत्र सामर्थ्यावधृतौ सम्भेदे तथा कल्पनायास्तुल्यत्वात्।

रथो गच्छतीत्यादौ तदसम्भवे का गतिरिति चेत्, तन्तवः पटं कुर्वन्तीत्यत्र या। लोकोपचारोऽयमपर्यनुयोज्य इति चेत्तुल्यम्। लिङः कार्यत्वे वृद्धव्यवहाराद्व्युत्पत्तौ सर्वं समञ्जसम्। आख्यातमात्रस्य तु न तथेति चेत्। न विवरणादेरपि व्युत्पत्तेः। अस्ति च तदिह—किं करोति? पचति, पाकं करोतीत्यर्थः इत्यादिदर्शनात्।

तथापि फलानुकूलताऽऽपन्नधात्वर्थमात्राभिधाने तदतिरिक्तप्रयत्नाभिधानक-

प्रकाशः।

त्नाननुभवान्न तथा, प्रकृतिप्रत्यययोः साम्येनान्वयानुपपत्तेरित्यत आह **प्रत्येक**मिति। तथा चोभयोपस्थितेरावश्यकत्वेनैकस्यानन्वयेऽप्यदोषादित्यर्थः।

रथो गच्छतीत्यादावित्यादिपदाज्जानाति यतते निद्रातीत्यादेर्ग्रहणम्। तत्र धात्वर्थानुकूलयत्नाभावेऽप्याख्यातप्रयोगात्। यदि चाऽचेतने व्यापारमात्रमाख्यातार्थः, तदा चेतनेऽपि तथेत्यर्थः। कृधातोर्यत्नार्थत्वस्योभयसिद्धत्वादचेतने यथा करोतेः प्रयोगो लाक्षणिकः, तथा रथो गच्छतीत्यादावाख्यातस्येत्याह **तुल्यमिति**। लिङः स्वाऽऽत्मनि प्रवर्त्तकत्वेन ज्ञाते कार्यताज्ञाने वृद्धव्यवहारेण शक्तिग्रहात्तस्य प्रयत्नार्थत्वे मानमस्ति, न त्वाख्यातमात्रस्येत्याह **लिङ** इति। पचति पाकं करोतीत्यादौ यत्नार्थककरोतिना सर्वाख्यातविवरणाद् वृद्धव्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः। किं करोतीति यत्नविशेषप्रश्ने, पचतीत्युत्तरस्य यत्नार्थत्वं विनानुपपत्तेश्च प्रकृतेऽपि मानमस्तीत्याह **विवरणादे**रिति।

ननु धातुः स्वरूपेण स्वार्थं भावमाह, आख्यातन्तु यावता कर्मक्षणनिश्चयेन फलं सिद्ध्यति तावति वर्त्तते, ओदनं पचतीति दर्शनात्, न ह्येकेन कर्मक्षणेनोदनः सिद्ध्यति, अतः फलार्थो व्यापारसमूहो भाव्यत्वाद्भावनेत्युच्यते, भाव्यमानस्तु तस्य फलसाधनत्वात्, फलानुकूलताविशिष्टयत्नवाच्यत्वे तु कल्पनागौरवमिति शङ्कते **तथापीति**। पचेस्तावत्तण्डुलप्रक्षेपणादिव्यापारकलाप एवार्थः। तस्यैव रूपपरावृत्तिलक्षणफलं प्रत्यनुकूलता आख्यातवाच्या। अधिकयत्नस्यापि वाच्यत्वे गौरवमिति शङ्कार्थः। तावन्मात्रपरं—धात्वर्थस्य फलानुकूलतामात्रपरं, न तु यत्नपरमित्यर्थः।

ओदनं पचतीत्यत्र धात्वर्थः पाक ओदनानुकूल इत्यर्थे **काष्ठेनौदनं पचतीति**वदोदनं पाकेन करोतीति प्रयोगप्रसङ्गात्। न चेष्टापत्तिः। किं करोति! पचति, पाकं करोतीत्यनुभवस्य सार्वलौकि-

प्रकाशिका।

चावश्यकल्पनीयेष्टसाधनतासङ्कर इति लाघवादिष्टसाधनतैव विधिरस्त्वित्यर्थः। **काष्ठेनौदनं पचतीतिवदिति**। यद्यपि तत्र काष्ठकरणकः पाकः ओदनानुकूल इत्यन्वयसम्भवेऽपि न तादृशप्रयोगेऽपि पाके पाककरणकत्वानन्वयात् पाकेन च पचतीति न प्रयोगः, तथापि पाकं करोतीति विवरणेन स्यादित्यत्रैव तात्पर्यम्। वस्तुत ओदनं पचतीत्यत्र ओदनानुकूलः पाक इत्यर्थे ओदनं पाकेनेति विवरणं स्यात् तृतीययानुकूलत्वलाभादिति मूलार्थः, एवञ्चौदनं पचतीति वक्तव्ये ओदनं पाकेनेति प्रयोगः स्यादिति प्रकाशस्यापि तदनुसारिणी व्याख्येति न कदाचिन्मूलप्रकाशयोरसङ्गतिरित्यवधेयम्।

मकरन्दः।

**काष्ठेनौदनं पचतीतिवदिति**। यद्यपि काष्ठकरणकः पाक ओदनानुकूल इत्यन्वयसम्भवात् प्रयोगेऽपि पाकेन पचतीति न प्रयोगप्रसङ्गः, पाके पाककरणत्वानन्वयात्, तथापि पाकं करोतीति

ल्पनायां कल्पनागौरवं स्यात्, अतो विवरणमपि तावन्मात्रपरमिति चेत् । भवेदप्येवं, यदि पाकेनेति विवृणुयात्, न त्वेतदस्ति । धात्वर्थस्यैव पाकमिति साध्यत्वेन निर्देशात् । ततस्तं प्रत्येव किञ्चिदनुकूलताऽऽपन्नं प्रत्ययेनाभिधानीयमिति युक्तम् ।

तथापि तेन प्रयत्नेनैव भवितव्यं, न त्वन्येनेति कुत इति चेत् । नियमेन तथा विवरणात् । बाधकं विना तस्यान्यथाकर्त्तुमशक्यत्वात् । अन्यथाऽतिप्रसङ्गात् ॥८॥

स्यादेतत्, यस्य कस्यचित् फलं प्रत्यनुकूलताऽऽपत्तिमात्रमेव करोत्यर्थः, न तु प्रयत्न एव, सोऽपि ह्यनेनैवोपाधिना प्रत्ययेन वक्तव्यो, न तु यत्नत्वमात्रेण, प्रयत्नपदेनाविशेषप्रसङ्गात्, तद्वरं तावन्मात्रमेवास्तु लाघवाय, अन्यथा त्वनुकूलत्वप्रयत्नत्वे द्वावुपाधी कल्पनीयौ, अचेतनेषु सर्वत्र गौणार्थास्तिङोऽसति बाधके कल्पनीया इति चेत् । अत्रोच्यते—

---

प्रकाशः ।

कत्वात्, **कर्त्रन्वयानुपपत्तेश्चेति** परिहरति **भवेदप्येव**मिति । एवमप्यनुकूलव्यापारमात्रमाख्यातार्थोऽस्तु, न त्वनुकूलयत्नः, तथात्वे बाधकं विनैवाख्यातमचेतनेषु गौणं कल्प्यमिति गौरवमित्याह **तथापी**ति । यत्नार्थकरोतिनाऽऽख्यातार्थस्य विवरणात् तस्य चाबाधितत्वात् प्रमाणवतो गौरवस्यापि न्याय्यत्वादित्याह **नियमेने**ति ॥ ८ ॥

ननु करोतिर्न यत्नार्थः, किन्त्वनुकूलव्यापारमात्रार्थः, यत्नोऽप्यनुकूलत्वेनैवाख्यातार्थः । अन्यथा आख्यातार्थस्य यत्नपदपर्यायतापत्तेः । **अत एव**—यत्न एवाख्यातार्थः, आनुकूल्यन्त्वन्वयलभ्यम्—इत्यपास्तम् । एवञ्च धात्वर्थस्य पाकादेः साध्यताऽप्युपपद्यते । न च धातुनैव स्वार्थः साध्यत्वेनोच्यते इति वाच्यम् । पाक इत्यत्रापि तत्प्रतीत्यापत्तेः । यत्नस्य वाच्यत्वेन **गौरवापत्तेः** । मुख्ये बाधकं विनैव रथो गच्छतीत्यादावाख्यातस्य गौणत्वापाताच्चेत्याह—**यस्य कस्यचिदि**ति । क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वप्रतिसन्धानेन घटाङ्कुरयोः कृताकृतव्यवहारात् तृजन्तकृधातुव्युत्पन्नकर्तृपदस्य कृत्याश्रयवाचकत्वाच्च कृञो यत्नार्थत्वम् । क्रियामात्रार्थत्वे तु क्रियाऽऽश्रयः कर्तृपदार्थः स्यादिति कारकमात्रेऽतिप्रसङ्गः । एवञ्च कृञो यत्नार्थत्वात् तेन चाख्यातविवरणात्तस्यापि

प्रकाशिका ।

**कर्त्रन्वयानुपपत्तेश्चेति** । चैत्र ओदनं पचतीत्यत्रेति शेषः ॥ ८ ॥

परिमलस्तु तथापि पाकसिद्धता प्रतीयेत, न तु साध्यतेति सिद्धताज्ञापकप्रयोगोपलक्षणपरं पाकेनेत्युक्तमिति । **अत एवे**ति । यत्नपदपर्यायतापत्तेरेवेत्यर्थः । नन्वत्रेष्टापत्तिरित्यत आह **गौरवापत्तेरि**ति । यत्नत्वापेक्षया व्यापारत्वस्य सामान्यत्वादिति भावः ।

मकरन्दः ।

विवरणं न स्यादित्यत्रैव तात्पर्यम्, यद्वा एतदस्वरसादेव स्वयं हेत्वन्तरमाह **कर्त्रन्वयानुपपत्तेश्चेति**, चैत्र ओदनं पचतीति शेषः । **परिमलस्तु** एवं पाकस्य साध्यता न प्रतीयेत, किन्तु सिद्धता, ततः पाकसिद्धताज्ञापकप्रयोगोपलक्षणपरं पाकेनेत्युक्तमिति ॥ ८ ॥

**अत एवेति** । यत्नपदपर्यायतापत्तेरित्यर्थः ।

नन्वत्रेष्टापत्तावपि न क्षतिरित्याशङ्क्याह **गौरवापत्तेरि**ति । व्यापारस्य सामान्यतया लघुत्वमित्यभिमानेनेदम् ।

**कृताकृतविभागेन कर्तृरूपव्यवस्थया ।**
**यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ९ ॥**

यत्नपूर्वकत्वं हि प्रतिसन्धाय घटादौ कृत इति व्यवहारात् । हेतुसत्त्वप्रतिसन्धानेऽपि यत्नपूर्वकत्वप्रतिसन्धानविधुराणामङ्कुरादौ तदव्यवहारात् करोत्यर्थो यत्न एव तावदवसीयते । अन्यथा हि यत्किञ्चिदनुकूलपूर्वकत्वाविशेषाद् घटादयः कृताः, न कृतास्त्वङ्कुरादय इति कुतो व्यवहारनियमः । तेन च सर्वमाख्यातपदं विव्रियते इति सर्वत्र स एवार्थ इति निर्णयः । तथा च समुदिते प्रवृत्तं पदं तदेकदेशेऽपि प्रयुज्यते, विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत् ।

प्रकाशः ।

यत्नार्थकत्वमित्याह **कृताकृतेति** । कृतिश्च करोत्यर्थः । एवमाख्यातस्य यत्नपदपर्यायताऽऽपत्तिं निरस्यति **पूर्वेति** । परस्मिन्नुत्तरकालवर्तिनि धात्वर्थे सति सैव कृतिरेव पूर्वा साधनीभूता भावनेत्युच्यते । तेन फलसाधनीभूतः प्रयत्नो भावना, सैव चाख्यातवाच्या ।

**यद्वा फलानुकूल**धात्वर्थपूर्वापरव्यापारप्रचयजनिका **पूर्वापरस्मिन्** पूर्वापरीभूतत्वे सति कृतिराख्यातार्थो भावना । भाव्यते फलमनयेति व्युत्पत्त्येत्यर्थः ।

**नन्वेवं** पूर्वापरीभूतत्वं यत्नत्वमनुकूलत्वञ्चेति त्रितयमाख्यातवाच्यमिति तदभावे कथमाख्यातपदमचेतनेषु प्रयुज्यते इत्यत आह **तथा चेति** । यत्नस्य पूर्वापरीभूतत्वानुकूलत्वे प्रवृत्तमाख्यातं, धात्वऽर्थस्य फलानुकूलतामात्रे रथो गच्छतीत्यादौ प्रयुज्यते इति लाक्षणिकमित्यर्थः । समुदितप्रवृत्तस्य पदस्यैकदेशे प्रयोगे निदर्शनमाह **विशुद्धिमात्रमिति** । श्रोत्रियंश्छन्दोऽधीते इत्यनुशासनाच्छन्दोऽध्येतृब्राह्मणव्यक्तिः, जन्मना ब्राह्मणो ज्ञेय इति स्मृतेर्जन्मसंस्कारविद्यासमुदायवद्ब्राह्मणव्यक्तिर्वा श्रोत्रियपदशक्या अतो विशुद्धब्राह्मणमात्रे यथा लक्षणया प्रयोगः, विशिष्टशक्तपदस्य विशेषणे शक्यसम्बन्धिनि तात्पर्यादित्यर्थः । ननु शक्यैकदेशे प्रयोगो न लाक्षणिकः, उपस्थित्यर्थं हि लक्षणा, विशिष्टशक्तपदाद्विशिष्टोपस्थितौ विशेषणस्याप्युपस्थितमेवेत्ययोग्यतया विशेष्यांशमपहाय विशेषणान्वयस्य मुख्यवृत्त्यैवोपपत्तेः । मैवम् । तस्य धर्म्यन्तरान्वितत्वेनोपस्थितस्येतरधर्म्यनाकाङ्क्षिततया स्वतन्त्रतदुपस्थित्यर्थं लक्षणाया न्याय्यत्वात् ।

अत एव 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र पुरोडाशप्रयोजनकत्वेनोपस्थितस्य कपालस्य प्रयोजनान्तरानाकाङ्क्षितत्वात् स्वतन्त्रकपालोपस्थितयेऽधिष्ठानलक्षणा । पङ्कजं कुमुदमित्यत्र

प्रकाशिका ।

योजनामात्रभेदायाह **यद्वा फलानुकूलेति** । अर्थप्रदर्शनपूर्वकं योजयति **पूर्वापरस्मिन्निति** । **नन्वेवमिति** । यद्यपि **कृताकृते**त्यादिना यत्नत्वस्य यत्नपदपर्यायतापत्त्यानुकूलत्वस्य वाच्यतापरं प्रतीयते न तु पूर्वापरीभूतत्वस्यापि वाच्यत्वे काचन युक्तिरुक्ता, तथापि तत्प्रकारकप्रतीत्यनुरोधेन पूर्वापरीभूतत्वमपि वाच्यमिति त्रितयमपि वाच्यमित्युक्तम् ।

मकरन्दः ।

**नन्वेवमिति** । यद्यपि द्वयवाच्यतयैव यत्नपदपर्यायतानिरासस्तथापि पूर्वापरीभूतत्वप्रकारकप्रतीतिमभ्युपेत्य तदप्याख्यातपदवाच्यमित्युक्तमिति ध्येयम् ।

टिप्पणी ।

**करोत्यर्थो यत्न एवेति** । यत्तु शाब्दिकाः कृञो यत्नार्थत्वे यतधातोरिवाकर्मकत्वापत्तिरिति, तन्न, द्वितीयार्थप्रकारकान्वयबोधं प्रति यतधातुजन्ययत्नविषयकोपस्थितित्वेनैव प्रतिबन्धकत्वं कल्प्यते न तु कृञ्धातुजन्योपस्थितित्वेनेति नापत्त्यनुपपत्ती ।

अन्यथाऽपि मध्यमोत्तमपुरुषगामिनः प्रत्ययाः, प्रथमे पुरुषे जानाति इच्छति प्रयतते अध्यवस्यति शेते संशेते इत्यादयश्च गौणार्था एवाचेतनेषु । न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता । अन्यायश्चानेकार्थत्वमिति स्थितेः । अत एवानुभवोऽपि-यावदुक्तं भवति पाकानुकूलवर्त्तमानप्रयत्नवांस्तावदुक्तं भवति पचतीति । एवं तथाभूतातिवृत्तप्रयत्नोऽपाक्षीदिति । एवं तथाभूतभाविप्रयत्नः पक्ष्यतीति । न तु पचतीति पाकानुकूलयत्किञ्चिद्वानिति । अन्यथाऽतिथावपि परिश्रमशयाने पचतीति प्रत्ययप्रसङ्गात् ।

अपि च कर्त्तृव्यापार एव कृञर्थश्चेतनश्च कर्त्ता, अन्यथा तद्व्यवस्थाऽनुपपत्तेः । न ह्यभिधीयमानव्यापारवत्त्वं कर्तृत्वम्, अनभिधानदशायां कुर्वतोऽप्यकर्त्तृत्वप्रसङ्गात् । नाप्याख्यातप्रत्ययाभिधानयोग्यव्यापारशालित्वं कर्तृत्वं, योग्यताया एवानिरूपणात् । फलानुगुणमात्रस्य सर्वकारकव्यापारसाधारणत्वात् । नापि विवक्षातो नियमः अविवक्षादशायामनियमप्रसङ्गात् । स्वव्यापारे नेदमनिष्टमिति चेत् । एवं तर्हि 'स्वव्यापारे च कर्त्तृत्वं सर्वत्रैवास्ति कारके' इति न्यायेन करणादिविलोपप्रसङ्गः । न स्वव्यापारापेक्षया करणादिव्यवहारः, किन्तु प्रधानक्रियापेक्षया । अस्ति हि काञ्चित् क्रियामुद्दिश्य प्रवर्त्तमानानां कारकाणामवान्तरव्यापारयोगो,

---

प्रकाशः ।

पद्मगतत्वेन उपस्थितस्य पङ्कजनिकर्तृत्वस्य धर्म्यन्तरनिराकाङ्क्षितत्वात् कुमुदपरत्वे पङ्कजपदस्य लक्षणेति विपञ्चितं द्वितीयाध्याये ।

अपिच अचेतनेषु सर्वत्राख्यातस्य गौणत्वं मा भूदिति मानिनस्तव यत्नस्याख्यातवाच्यत्वानभ्युपगमः, तच्च तवाप्यापतितमित्याह **अन्यथाऽपीति** । मध्यमोत्तमपुरुषलिङ्गैः सम्बोध्यत्ववक्तृविषयत्वाच्चित्रस्यादौ तत्प्रयोगः । प्रथमपुरुषेऽपि जानातीत्यादिप्रयोगश्चाऽचेतने त्वन्मते यथा गौणस्तथाऽस्मन्मते रथो गच्छतीत्यादावपि प्रयोग इत्यर्थः । न चाक्षादिपदवदनेकार्थत्वम् । **अक्षादिपदवैधर्म्येण** एकत्रैव वाचकता, अन्यत्र वृत्त्यन्तरेणापि प्रयोगोपपत्तेरित्याह **न चेति** । अत्रैवानुभवं प्रमाणयति **अत एवेति** ।

**अतिथावपीति** । श्रमाच्छयानस्य श्रमशान्तेः पाकानुकूलत्वादित्यर्थः । कर्तृरूपव्यवस्थयेति व्याचष्टे **अपि चेति** । यस्य व्यापारं **धातुराख्यातं वा** प्राधान्येनाभिधत्ते, स्वतन्त्रश्चेतनोऽचेतनश्च स कर्त्तेत्यत्राभिधानं यदि विशेषणं, तत्राह **न हीति** । कर्तृत्वमज्ञात्वा तत्र कर्तृपदप्रयोगाभावादवगते कर्तृत्वे शब्देन तदभिधानम्, तेन कर्तृत्वावगम इत्यन्योन्याश्रयश्चेति भावः । अथाभिधानमुपलक्षणमुपलक्ष्या च तद्योग्यता, तत्राह **नापीति** । योग्यत्वावच्छेदकरूपाज्ञाने अस्या ज्ञानादित्यर्थः । न च प्रधानक्रियानुकूलव्यापारत्वमेव तदवच्छेदकमतिव्याप्तेरित्याह **फलेति** । फलानुकूलव्यापारवत्तया यत्कारकं विवक्ष्यते, स कर्त्तेति नोक्तदोष इति मतं निरस्यति **नापीति** । ननु स्वव्यापारे सर्वेषां कर्तृत्वमिष्टमेवान्यत्र करणत्वादित्याह **स्वव्यापार इति** । **तर्हीति** । प्रधानक्रियापेक्षयैव

प्रकाशिका ।

**अक्षादिपदवैधर्म्येणेति** । तत्रैवात्र तुल्यवत्प्रयोगाभावेनेत्यर्थः । **धातुराख्यातं वेति** । धातोर्व्यापारफलवाचकत्वविकल्पेनायं विकल्पः ।

मकरन्दः ।

**अक्षादिपदवैधर्म्येणेति** । विनिगमकाभावात्तत्रोभयत्र शक्त्या नानार्थत्वमत्र चैकत्रैव निरुपाधिप्रयोग इत्यत्र लक्षणा, अन्यथा गङ्गादिपदस्यापि तीरादौ लक्षणा न स्यादित्यर्थः ।

न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरिति चेत्। तर्हि तदपेक्षयैव कर्तृकर्मादि-व्यवहारविशेषनियमे किं कारणमिति चिन्त्यताम्। स्वातन्त्र्यादीति चेत्। ननु तदेव किमन्यत् प्रयत्नादिसमवायादिति विविच्याभिधीयतामिति। तस्मात् सर्वत्र समानव्यापार एवाख्यातार्थः ॥ ९ ॥

तथापि फलानुगुणतैवास्तु प्रत्ययस्य प्रवृत्तिनिमित्तं, प्रयत्नस्त्वाक्षेपतो लप्स्यते इति चेत्, न–

**भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः।**
**तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ १० ॥**

केन हि तदाक्षिप्येत। न तावदनुकूलत्वमात्रेण, तस्य प्रयत्नत्वेनाव्यापनात्। न हि यत्नत्वैकार्थसमवाय्येवानुकूलत्वम्। अत एव न संख्यया, तस्याः संख्येय-मात्रपर्यवसायित्वात्। कर्त्रेति चेत्। न। द्रव्यमात्रस्याकर्तृत्वात्। व्यापारवतश्चा-भिधाने व्यापाराभिधानस्यावश्याभ्युपगमनीयत्वात्। नापि धात्वर्थेन तदाक्षेपः। विद्यते इत्यादौ तदसम्भवात्। न ह्यत्र धात्वर्थो भावनाऽपेक्षी, सत्ताया नित्यत्वात्। तत्र न भविष्यतीति चेत्। न। पूर्वापरीभूतभावनाऽनुभवस्याविशेषात्। भावनो-परागेण ह्यतथाभूतोऽप्यर्थस्तथा भासते इति। न च पदान्तरलभ्यया भावनयाऽ-

प्रकाशः।

तत्कर्तृत्वं करणादिव्यावृत्तं तस्यैव किं लक्षणमित्यर्थः। **स्वातन्त्र्यादीति**। 'स्वतन्त्रः कर्त्ता' पाणिनिलक्षणादित्यर्थः। तस्यान्यस्य व्यवस्थाबीजस्याभावाज्ज्ञानचिकीर्षाकृतिसमवायित्वमेव तद्वाच्य-मित्याह **नन्विति** ॥ ९ ॥ **आक्षेपेति**। पाकादीनां यत्नं विनाऽनुपपत्तेरित्यर्थः। पादत्रयस्य प्रागेव विवृतत्वादन्तिमं पादं व्याचष्टे **केन हीति**। तत्प्रयत्नत्वमित्यर्थः। **न हीति**। प्रयत्नस्याप्यनुकूल-त्वात्, तथात्वे वा रथो गच्छतीत्यादि तत्रापि गौणं स्यादित्यर्थः। **तस्या इति**। सङ्ख्यया सङ्ख्येय-मात्राक्षेपेऽपि न प्रयत्नाक्षेपः, प्रयत्ने सङ्ख्याया अभावादित्यर्थः।

**कर्त्रेति**। **आख्यातवाच्येनेत्यर्थः**। परमते तस्याऽऽख्यातवाच्यत्वात्। कर्त्ता न द्रव्य-मात्रं, द्रव्यमात्रस्यायत्नवत्त्वात् तेन यत्नस्यानाक्षेपादित्याह **द्रव्यमात्रस्येति**। नापि व्यापारव-न्मात्रं, यत्नरहितस्याप्यचेतनस्य व्यापारवत्त्वात्, यत्नरूपव्यापारवदभिधाने तु प्रयत्नोऽपि वाच्य एवं स्यादित्याह **व्यापारवतश्चेति**। **तत्रेति**। आक्षेप इति शेषः। **पूर्वेति**। **पचतीत्यादाविव** धात्वर्थानुकूलयत्नानुभवादित्यर्थः। ननु सत्ताया नित्यत्वे पूर्वापरीभावो विरुद्ध इत्यत आह **भाव-**

प्रकाशिका।

अनुपस्थितेन कर्त्रा कथमाक्षेप इत्यत आह **आख्यातवाच्येनेत्यर्थ** इति।

**पचतीत्यादाविवेति**। तथा च तत्रापि तदाक्षेप आवश्यक इति भावः। ननु यत्न-

मकरन्दः।

ननु कर्त्ताऽप्यनुपस्थितः कथमाक्षेपहेतुः स्यादत आह **आख्यातवाच्येनेति**।

**पचतीत्यादाविवेति**। तथा च तत्रापि तदाक्षेप आवश्यक इति भावः।

टिप्पणी

व्याप्येन व्यापकमाक्षिप्यते अनुकूलत्वन्तु क्रियान्तरसाधारणं न यत्नत्वव्याप्यमित्याह **तस्येति**। **यत्नत्वैकार्थसमवायीति**। यत्नत्वाश्रयमात्रवृत्तीत्यर्थः। **तत्र नेत्यादि**। अन्यत्र तु स्यादिति शेषः। नित्याया अपि सत्तायाः तिङन्तधात्वर्थतया साध्यत्वेन प्रतीयमानतया पचतीत्यादाविव भावनान्वयाविशेषेऽपि भावनाक्षेपकत्वाभावादित्यर्थः।

नुकूलतायाः प्रत्ययार्थस्यान्वयः। तदसम्भवात्। न खलु प्रकृत्यैव साऽभिधीयते। धातूनां क्रियाफलमात्राभिधायित्वात्। अन्यथा पाक इत्यादावपि भावनाऽनुभवप्रसङ्गात्। नापि चैत्र इत्यादिना पदान्तरेण। प्रकृतिप्रत्यययोरुभयोरप्यकारकार्थत्वात्॥

ओदनमित्यादेः कारकपदत्वात् तस्य च क्रियोपहितत्वात् तेनाभिधानमाक्षेपो वा, कथमन्यथौदनमित्युक्ते, किं भुङ्क्ते पचति वेति विशेषाकाङ्क्षेति चेन्न। पचतीत्युक्ते किमोदनं तेमनं वेति विशेषाकाङ्क्षादर्शनात्। सा चाक्षेपाभिधानयोरन्यतरमन्तरेण न स्यात्। तस्यां दशायां न चेदाक्षेपो नूनमभिधानमेवेति॥

---

प्रकाशः।

नेति। तदसम्भवादिति। ओदनं पचति चैत्र इत्यत्र पदान्तरेण भावनाऽनुपस्थानादित्यर्थः। अस्माकन्तु अनुकूलयत्नोपस्थितावपि अयोग्यतया स नान्वीयते इति भावः। न हि धातुनैव भावनोपरक्तार्थोऽभिधीयते इत्यत आह न खल्विति। प्रकृत्या धातुनेत्यर्थः।

फलस्य धात्वर्थतया पच्यर्थो विक्लित्तिर्लाघवाद्, न तु तत्फलको व्यापारोऽधःसन्तापनादिः। न चैवं व्यापारविगमे फलसत्त्वकाले पचतीति प्रयोगापत्तिः। धात्वर्थानुकूलव्यापारवत्त्वस्याख्यातार्थतया व्यापारकाल एव पचतीति प्रयोगात्। अथैवं धात्वर्थतया फलं क्रियेति तण्डुलादेः कर्मता न स्याद्, विक्लित्यादिजन्यफलभागित्वाभावादिति चेन्न। परसमवेतव्यापारफलशालिनः कर्मत्वात्। स च व्यापारो धात्वर्थ आख्यातार्थो वा, उभयथाऽपि समवेतव्यापारफलशालिनस्तण्डुलादेः कर्मत्वात्। विक्लित्त्यनुत्पादे व्यापाराविगमदशायां पाको वर्त्तते इत्यत्र पाकपदे व्यापारलक्षणेति मतमाश्रित्योक्तं दूषणमिदम्।

अन्यथेति। यदि धातूनामेव भावनाऽभिधायकत्वमित्यर्थः। प्रकृतीति। प्रकृतिश्चैत्रपदं, प्रत्ययः प्रथमा, तयोरुभयोरपि शुद्धप्रातिपदिकार्थतया न कारकार्थत्वं, व्यापारवतः कारकत्वेन कारकाऽर्थस्य भावनार्थत्वं सम्भाव्येतापीत्यर्थः। कथमिति। ओदनमित्युक्ते भावनाविशेषजिज्ञासा तत्सामान्यज्ञानं विना न स्यादित्यर्थः। कर्मपदादाक्षेपतोऽभिधानतो वाऽऽवश्यकी तदुपस्थितिरिति भावः। पचतीत्युक्त इति। कर्मपदानुच्चारणेऽपि तदभिधानाक्षेपयोरभावे पचतीत्यत्र भावनाधीर्न स्यादिति भावनाऽभिधायकमाख्यातपदं कल्प्यमित्यर्थः।

ननु बीजेनाङ्कुरः कृतो बीजमङ्कुरं करोतीति यत्नं विनाऽपि कृञः प्रयोगाद् न यत्नो वाच्यः। नापि कर्तृपदं यौगिकं, तथा सति कृञो यत्नार्थत्वे तृचश्च कर्त्रर्थत्वे धातुप्रत्ययार्थयोः कृतिकर्त्रोः परस्परमनन्वयापत्तेः, कृतिविशिष्टस्य कृतिनिराकाङ्क्षत्वात्। एवं कृञः क्रियार्थत्वे तृचश्च तदाश्रयवाचकत्वे तयोः परस्परमनन्वय एवेत्युभयदर्शने कर्मपदवत् कर्तृपदं रूढमेव। तथाच कृताकृतविभागेन कर्तृरूपव्यवस्थया च कृञो यत्नोऽर्थ इति न तेन विवरणादाख्यातस्य यत्नार्थत्वं, किन्त्वनुकूलत्वेन व्यापार एव तद्वाच्यः। तेन चेतनाचेतनयोर्वर्त्त्यर्थानुकूलव्यापारवत्त्वादाख्यातप्रयोगो मुख्यः। न चैवं पथि श्रमशयानेऽपि पचतीति प्रयोगापत्तिः, यत्नवाचकत्वेऽपि तण्डुलक्रियानुकूलयत्नवति पचतीति प्रयोगापत्तेः। यदि तु तस्य प्रयत्नविशेषो वाच्यः,

प्रकाशिका।

स्याख्यातवाच्यत्वे विद्यते व्योम इत्यादौ सर्वत्र भावनान्वयः स्यादित्यत आह अस्माकन्त्विति।

न च तत्रापि भावनानुभवो भवत्येवेति पूर्वोक्तेन विरोध इति वाच्यम्। वर्त्तमानत्वादिविशिष्टभावनानुभवेऽपि सत्त्वादौ धात्वर्थे भावनानन्वयात् इत्याशयात्। ननु कारकत्वेऽपि न यत्नवाचकत्वे व्यापारमात्रगर्भत्वात्कारकत्वस्येत्यत आह व्यापारतः कारकत्वेनेत्यादि।

प्रकाशः ।

तदा ममापि व्यापारविशेषो वाच्य इत्यस्तु, यत्नधीस्त्वाक्षेपात् **धात्वर्थविशेषस्य** पाकादेस्तेन विनाऽनुपपत्तेः । न चाख्यातस्य यत्नो वाच्यः, पचतीत्यस्य पाकानुकूलयत्नवानिति विवरणादिति वाच्यम् । तथा सति कर्त्तुरपि तद्वाच्यताऽऽपत्तेः । न हि पाकयत्न इत्येव विवरणम् । अथ तात्पर्यविवरणस्याऽऽक्षेपादिनाऽपि निर्वाहः, तुल्यं यत्नेऽपि । अत एव रथो गच्छति विद्यते व्योमेत्यत्र न भावनाऽनुभवः । भावनाया धात्वर्थान्वयायोग्यतया त्वयाऽपि तत्र गौणत्वाङ्गीकारादिति ।

अत्र वदन्ति–चैत्रः पचतीत्यत्र पाकानुकूलयत्नानुभवात् स एवाख्यातवाच्यः, लाघवात् । न त्वनुकूलव्यापारः, यत्नत्वजात्यपेक्षया व्यापारत्वस्योपाधित्वेन गुरुत्वात् । न चाचेतनेऽप्याख्यातस्य मुख्यत्वार्थमनुगतो व्यापार एव शक्य इति वाच्यम् । शक्तिग्राहकेण लघुनि शक्तिग्रहात् । मुख्यत्वार्थं शक्तिकल्पने वृत्त्यन्तरोच्छेदापत्तेः । न च पाकस्य यत्नसाध्यत्वानुमित्या यत्नस्यापि लाभादन्यलभ्यत्वेन स नाख्यातवाच्यः । चैत्रः पचतीत्यत्र चैत्रः पाकानुकूलवर्त्तमानयत्नवान् प्रतीयते । न च पाकस्य वर्त्तमानयत्नेन प्राप्तिरस्ति, अतीतादौ व्यभिचारात् । नापि धात्वर्थेनानुमिते यत्ने आख्यातेन वर्त्तमानत्वान्वयबोधः सम्भवी, यत्नस्यापदार्थत्वात्, स्वार्थव्यापारवर्त्तमानत्वबोधनेनाख्यातस्य पर्यवसितत्वाच्च । न चाचेतने आख्यातस्य व्यापारावाचकत्वावधारणादेवं कल्पनेति युक्तम् । गौणतया शक्तिभ्रमेण वा तत्राख्याताद्व्यापारावगमोपपत्तेः । यत्नविगमदशायां तज्जन्यव्यापारकाले पचतीत्यत्र वर्त्तमानव्यापाराभिधानमाख्यातेन लक्षणया, रथो गच्छतीत्यत्र यथा, अतोऽन्यलभ्यत्वान्न तदनुरोधेन व्यापारे शक्तिः, **अन्यथा तवापि यत्नकाले पचतीति न स्यादिति ।**

ननु धात्वर्थानुकूलयत्नस्याख्यातशक्यत्वे एककृतिकाले पचतीतिवत् कृतेर्ध्वंसे अग्रिमकृतेरनुत्पाददशायां मध्येऽप्यपाक्षीत् पक्ष्यतीति स्यात् । यत्नप्रचयस्य च शक्यत्वे पचतीति न स्यादेव, एकदा तस्याभावात् । अथ भूतभविष्यतोर्यत्नाभावनिरूप्यत्वात् यत्नकाले तदभावान्नोक्तदोष इति चेन्न । ध्वंसानुत्पादयोर्यत्नविशेषप्रतियोगिकतया यत्नकालेऽपि तत्सत्त्वात्, तयोः सकलकृतिप्रतियोगिकत्वाभावात् ।

मैवम् । यत्राख्यातवाच्ये प्रचये एकैकस्य वर्त्तमानव्यवहारनिमित्तत्वं, तत्र तावतां ध्वंसैः प्रागभावैश्च भूतभविष्यद्व्यवहारः, न तु वर्त्तमानव्यवहारनिमित्तकिञ्चिदभावात्, चेतनाचेतनभोजनगमनादौ तथैव प्रयोगात्, प्रयोगे सति निमित्तानुसरणात् । धातोराख्यातस्य चानुकूलव्यापारवाचकत्ववादिभिरनन्यगतिकतया तथैव स्वाकाराच्चेति ।

चैत्र ओदनं पचति चैत्रेण पच्यते ओदन इत्यत्र कर्त्तरि कर्मणि आख्यातार्थसङ्ख्याऽन्वयात् कर्तृकर्मणी लकारवाच्ये, तेन वाच्यगामिनी सङ्ख्येति नियमो भवति, अन्यथाऽऽक्षिप्तसङ्ख्यान्वये

प्रकाशिका ।

**धात्वर्थविशेषस्येति** । विद्यते व्योमेत्यत्र; भावनानुभवो न भवत्येवेत्यग्रे वाच्यमेवेति भावः । अन्यथा तत्रापि यत्नकाल इत्यादि, इदञ्च यत्नातिरिक्तस्यैव व्यापारस्य शक्यत्वमिति मतेन दूषणम्, अन्यथा यत्नस्यापि व्यापारतया शक्यत्वेनासङ्गतेः, पच्यते इत्यत्र तु कर्मवाचकत्व इष्टापत्तिरत आह–

मकरन्दः ।

**अन्यथा तवापि यत्नकाले पचतीत्यादि न स्यादिति ।** यद्यपि व्यापारत्वेन यत्नस्यापि शक्यत्वात्तत्काले पचतीति स्यादेव, तथापि तेनापि रूपेण यदि यत्नो न शक्यस्तदेदं दूषणं बोध्यम् । अपरं शब्दप्रकाशे प्रपञ्चितम् ।

स्यादेतत्, अभिधीयतां तर्हि कर्त्ताऽपि । तदनभिधाने हि सङ्ख्येयमात्रमाक्षिप्य सङ्ख्या कथं कर्त्तारमन्वियात्, न तु कर्मादिकमपि । शाकसूपौ पचति शाकसूपौदनान् पचतीत्यादौ विरोधनिरस्ता सङ्ख्या चैत्र इति कर्त्तारमविरुद्धमनुगच्छतीति चेत् । चैत्र ओदनं पचतीत्यत्र का गतिः ।

एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथा, यववराहादिवदिति चेत् । न, पच्यते इत्यादावपि तथाभावप्रसङ्गात् । चैत्राभ्यां चैत्रैरिति विरोधनिरस्ता सूप इत्यविरुद्धं कर्म्म समनुक्रामतीति चेत् । चैत्रमैत्राभ्यां शाकसूपौ पच्येते इत्यत्र का गतिः ।

अन्यत्र निर्णीतेनार्थेन व्यवहार इति चेत् । न, पचतीत्यादावपि तथाभावप्रसङ्गात् । तत्र पूर्व्वक एव निर्णयः, पच्यते इत्यत्र त्वपर इति चेत् । न, विशेषाभावात् । आत्मनेपदपरस्मैपदाभ्यां विशेष इति चेत् । न, पच्यते पचते पच्यत्ते इत्यादौ विप्लवप्रसङ्गादिति ।

---

प्रकाशः ।

नियमो न स्यादिति वैयाकरणमतमाह—**अभिधीयतामिति । का गतिरिति ।** ओदनमित्येकत्वेनोपस्थितेनैकत्वसङ्ख्याऽन्वयविरोध इति पचतीत्येकत्वमोदनान्वितं किन्न स्यादित्यर्थः ।

**यववराहादीति** । यवमयश्चरुर्भवतीत्यत्र दीर्घशूकस्य यवपदार्थतया निर्णीतस्य यवैर्यजेतेत्यादौ न यत्र वाक्यशेषस्तत्रापि तस्यैव यवपदवाच्यता यथेत्यर्थः । **तथाभावेति** । आख्याताभिहितभावनायाः कर्त्रन्वयप्रसङ्गादित्यर्थः । तथा चौदनः पच्यते देवदत्त इति प्रयुज्येतेति भावः ।

**अन्यत्रेति** । चैत्राभ्यां चैत्रैः सूपः पच्यते इत्यत्र कर्मणि सङ्ख्याऽन्वयस्य निर्णीतत्वादत्रापि तथेत्यर्थः । **पचतीत्यादाविति** । देवदत्त ओदनं पचतीत्यादावपि कर्मगतैकत्वान्वयप्रसङ्ग इत्यर्थः । **तत्रेति** । पचतीत्यत्र सङ्ख्याऽन्वयः कर्त्रा, पच्यते इत्यत्र कर्मणेत्यर्थः । **विशेषेति** । क्वचित् कर्त्तरि क्वचित् कर्मणि सङ्ख्याऽन्वयस्य दृष्टत्वादन्यतरत्र नियामकाभावादित्यर्थः । **पच्यत** इति । पच्यत इति **दृष्टान्तार्थम्** । अतो यथात्मनेपदात् पच्यते इत्यत्र कर्मणा सङ्ख्यान्वयः, तथा पचते इत्यत्रापि स्यादित्यर्थः ।

नन्वाख्यातवाच्यत्वे कर्त्तुस्तद्वाच्यया सङ्ख्ययाऽन्वयबोधो न स्यात्, एकपदोपस्थापितपदार्थयोर्मिथोऽन्वयबोधस्याव्युत्पन्नत्वात्, अन्यत्र भिन्नपदोपस्थापितानामेवान्वयबोधादित्यत आह—

प्रकाशिका ।

**पच्यत इति । दृष्टान्तार्थमिति । तत्र प्रथम पृष्टेनैवेति** । इदञ्च द्वयोस्तुल्यबलवत्तायामित्यवधेयम् ।

टिप्पणी ।

वैयाकरणः शंकते **स्यादेतदिति** । इत आरभ्य एवं प्राप्ते इत्यतःप्राक्तनेन सन्दर्भेण, तन्मते चैत्रः पचतीत्यादावाख्यातेन कर्ता संख्या चाभिधीयते, तथाचैकत्ववच्चैत्राभिन्नकर्तृको वर्तमानकालिकः पाक इत्यन्वयबोधः । यदि तत्राख्याताभिहितायाः संख्यायाः संख्येयाविनाभूततयाऽऽक्षिप्तेन कर्त्रा सहान्वयो भवतीति ब्रूयात्, तदा कर्मणोऽपि संख्येयतया तत्रैव कुतो नान्वय इति शंकाऽनिवार्या स्यात् । कर्तुराख्यातवाच्यत्वे तु समानपदोपात्तत्वेन तत्रैव संख्याऽन्वय उपपद्यत इत्यर्थः । **न तु कर्मादिकमिति** । अन्वियादिति पूर्वेणान्वयः । **का गतिरिति** । कथं नोदने आख्यातार्थसंख्यान्वयः ॥

दृश्यते च समानप्रत्ययाभिहितेनान्वयः सङ्ख्यायाः । तद् यथा—भूयते सुप्यते इत्यादौ । न हि तत्र कर्त्रा कर्मणा वा अन्येनैव वा केनचिदन्वयः, किन्तु भावेनैव । अनन्वये तदभिधायिनोऽनकर्थत्वप्रसङ्गात् । आक्षिप्तेन चान्वये तत्रापि कर्त्रैवान्वयापत्तेः । को हि सुप्यते स्वपितीत्यनयोः कर्त्राक्षेपं प्रति विशेषः ।

स्यादेतत्, भावकर्मणोरित्याद्यनुशासनबलात्तावत् भावकर्मणी प्रत्ययवाच्ये, ततस्तदभिहिता सङ्ख्या ताभ्यामन्वीयते । यस्तु प्रत्ययो न तत्रोत्पन्नः, तदभिहिता सङ्ख्या, 'मुख्यं वा पूर्वचोदनाल्लोकवद्' ( मी० १२, २, २३, ) इति न्यायेन कर्त्तारमेवाश्रयते इति नियमः । न । विपर्ययप्रसङ्गात् । 'शेषात् कर्त्तरि परस्मैपदं' 'कर्त्तरिशबि'त्यनुशासनबलाद्भावकर्त्तारौ प्रत्ययवाच्यौ, ततस्तदभिहिता सङ्ख्याऽपि ताभ्यामन्वीयते । यस्तु प्रत्ययो न तत्रोत्पन्नस्तदभिहिता संख्या तेनैव न्यायेन कर्म्म समाश्रयेदिति नियमोपपत्तेः । तस्मान्मतिकर्दममपहाय यथाऽनुशासनमेव गृह्यते इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—

---

प्रकाशः ।

**दृश्यते चेति** । यथा भाववाचकाख्याताभिधेयसङ्ख्या तेनैवान्वीयते नत्वाक्षिप्तेन कर्त्रा, साकाङ्क्षयोग्यासन्नपदार्थमात्रस्यैवान्वयप्रतियोगित्वात् , भिन्नपदोपस्थापितत्वस्य गौरवेणाप्रयोजकत्वात् , तथाऽऽख्यातवाच्ययोः कर्तृसङ्ख्ययोरप्यन्वय इत्यर्थः । **न हीति** । अन्वये वा कर्तुरनेकत्वे द्विबहुवचनयोः प्रयोगः स्यादिति भावः ।

यदि च भावसङ्ख्ययोरन्योन्यमनन्वयः तदा निश्चितान्वयपदत्वेनाख्यातमपार्थकं स्यादित्याह **अनन्वय** इति । यद्याक्षिप्तेन कर्त्रान्वयः सङ्ख्यायाः स्यात् , तदा स्वपितीत्यत्रेव सुप्यत इत्यत्रापि तेनैव तदन्वयः स्यादित्याह **आक्षिप्तेन** चेति । **को हीति** । आक्षेपहेतोर्भावनाऽभिधानस्योभयत्राविशेषादित्यर्थः ।

**मुख्यं वेति** । 'आग्नावैष्णवमेकादशकपालं चरुं निर्वपेत्, संग्रामे सरस्वतीमप्याज्यस्य यजेते'-त्यत्राग्नावैष्णवधर्मा अग्रतो भवन्त्याहो सारस्वतधर्माः ? इत्यनियमे आग्नावैष्णवधर्मा एव प्रथमं भवन्ति । अत्र हेतुः-पूर्वचोदनात्-प्रथममुपस्थितत्वात् अस्योदाहरणं-**लोकवदिति** । यथा लोके यत्र विवादपदे साक्षिद्वयसत्त्वान्मुख्यः साक्षी पृष्टस्तमनुजानाति, द्वितीयश्च पृष्टस्तमपलपति । **तत्र प्रथमपृष्टेनैव** व्यवहारः तस्य मुख्यत्वात् , तथा कारकाणां प्रथमं कर्त्तैव देशित इति बाधकं विना तेनैव सङ्ख्याऽन्वीयते इत्यर्थः ।

भावकर्त्ताराविति द्वन्द्वः तेनैव, **मुख्यं वेत्यादिनैवेत्यर्थः । कर्मैवेति** । तथा च पच्यते ओदनं देवदत्त इति न स्यात् , किन्तु पच्यते ओदन देवदत्तेन इत्येव स्यादित्यर्थः । यथाऽनुशासनं, व्याकरणानतिक्रमेणेत्यर्थः । तथा च कर्त्तरि विहितस्याख्यातस्य सङ्ख्या कर्त्रा कर्मणि च विहितस्य सा कर्मणाऽन्वेतीति नियम उपपद्यते इति भावः ।

प्रकाशिका ।

**मुख्यं वेत्यादिनैवेत्यर्थ इति** । ननु कारकेषु कर्तुः प्रथमं दर्शनादस्तु तथा कर्म्मणस्तु न प्रथमोपस्थितिरिति न तत्रास्य न्यायस्यावतार इति चेत् । न कर्त्तृविशेषविध्यवरुद्धतया तदतिरिक्तविशेषानाकाङ्क्षत्वात् विशेषविध्यनवरुद्धेषु च कर्म्मण एव प्रथमोपस्थितत्वादित्याशयात् ।

सकरन्दः ।

**मुख्यं वेत्यादिनैवेत्यर्थ** इति । ननु तत्र कारके कर्त्तुः प्रथमं देशनादस्तु तथा, प्रकृते तु न तस्य न्यायस्यावतारः कर्मणः प्रथममदेशनादिति चेन्न । यथा कारकेषु प्रथमं देशनात् कर्त्तुर्मुख्यत्वं तथोद्देश्यतया कर्मणो मुख्यत्वमित्याशयादित्याहुः ।

**आक्षेपलभ्ये सङ्ख्येये नाभिधानस्य कल्पना।**
**सङ्ख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः॥ ११॥**

सङ्ख्याऽपि तावदियं भावनाऽनुगामिनी; यं यं भावनान्वेऽति, तं तं सङ्ख्याऽपीति स्थितेः एकप्रत्ययवाच्यत्वनियमात्। भावना च शुद्धं प्रातिपदिकार्थमात्रमा-

प्रकाशः।

समानप्रत्ययोपात्तत्वे प्रत्यासत्त्यान्तरङ्गत्वात् सङ्ख्येयमात्रसाकाङ्क्षाऽपि सङ्ख्या भावनाऽन्वयिनैवान्वेति। अग्निना चैत्र ओदनं पचतीत्यत्र चैत्रपदार्थस्य निर्व्यापारत्वेनोपस्थितस्य भावनाऽऽत्मकव्यापारसाकाङ्क्षत्वाद् भावनायाश्चाश्रयाकाङ्क्षत्वात् तेनैव भावनाऽन्वेति, न कर्मकरणादिना। द्वितीयादिना तस्य व्यापारवत्तयोपस्थितेर्व्यापारान्तरनिराकाङ्क्षत्वात्, भावनायाः साकाङ्क्षत्वेऽप्यन्यतराकाङ्क्षाया अन्वयानङ्गत्वात्। ओदनः पच्यते चैत्रेणेत्यत्र तु कर्त्तुर्व्यापारवत्त्वेनोपस्थिते न तत्र भावनाऽन्वयः किन्तु प्रथमानिर्दिष्टेन कर्मणा, तस्य व्यापारवत्त्वेनानुपस्थितेस्तत्साकाङ्क्षत्वात्। चैत्रेण सुप्यते इत्यत्र तु कर्तुर्निराकाङ्क्षत्वात् कर्मणश्चाभावाद् धात्वर्थेनैव सङ्ख्याया अन्वय इति आक्षेपादेव कर्तृकर्मणोर्लाभे सङ्ख्याऽन्वयो, नियमस्य चान्यथोपपत्तौ न ते लकारवाच्ये इत्याह **सङ्ख्याऽपि तावदिति।**

शुद्धं-निर्व्यापारत्वेनोपस्थितम्। इदश्च कर्तृकर्मणोराक्षेपलभ्यत्वं **यद्भावना**विशेष्यत्वे सति प्रथमान्तपदोपस्थाप्यत्वं, न तु सङ्ख्यालिङ्गकानुमितिविषयत्वम्, अनुमित्या सङ्ख्येयमात्रगतत्वेन सङ्ख्याप्रतीतेः। शब्दोपस्थापितसङ्ख्यायास्तदुपस्थापितेनैवान्वयनियमाच्चेति तत्त्वम्। किं तद्व्यापारविशिष्टे तद्व्यापाराश्रयणम्, उत व्यापारान्तरविशिष्टे? तत्र नाद्य इत्याह **आत्माश्रयत्वादिति।** अन्त्ये, त्वनवस्थितेरिति भावः।

प्रकाशिका।

केचित्तु यथा कर्त्तुः प्रथमोपस्थितत्वं प्राधान्यं तथा च कर्म्मण उद्देश्यत्वं प्राधान्यमित्याशय इति वदन्ति। तत्तुच्छम्-तेनैवेति ग्रन्थविरोधात् एवमपि विनिगमकाप्राप्तेश्चेति।

**यद्भावनाविशेष्यत्वे सतीति।** भावनाविशेष्यस्य कर्त्तुः कर्म्मणो वा प्रथमान्तपदोपस्थाप्यत्वमेवाक्षेपलभ्यत्वमित्यर्थः। मिश्रास्तु विशिष्टमेव पारिभाषिकमाक्षेपलभ्यत्वमितरकारकव्यावृत्तं, तत्र च क्तान्तपदोऽपस्थाप्येऽतिव्याप्तिरिति सत्यन्तम्। सुप्यत इत्यादिभावप्रत्ययान्तोपस्था-

मकरन्दः।

**यद्भावनेति।** भावनाविशेष्यस्य कर्त्तुः कर्मणो वा प्रथमान्तपदेनोपस्थाप्यत्वमेवाक्षेपलभ्यत्वमिति भावः।

टिप्पणी।

**आक्षेपलभ्य** इति। **संख्येये** कर्तरि, आक्षेपलभ्ये सति, **अभिधानस्य** शक्तेः, कल्पना आख्यातस्य न भवति अनन्यलभ्यो हि शब्दार्थ इति न्यायात्। नन्वेवमाख्याताभिहितसंख्यायाः कर्तर्येवान्वयो न कर्मणीति कुतोऽत आह **संख्येयमात्रेत्यादि।** तुशब्दोऽप्यर्थकः, संख्यायाः संख्येयमात्राक्षेपित्वेऽपि यं यं पदार्थं भावनाऽन्वेति तं तं संख्यापीति व्युत्पत्त्या **व्यवस्थितिः** संख्याऽन्वयनियमः, तथाच कर्तृविवक्षिताख्यातोपस्थाप्यसंख्यायाः कर्तरि, कर्मविहिताख्यातोपस्थाप्यसंख्यायाः कर्मण्यन्वय इति भावः।

काङ्क्षति। न हि व्यापारवन्तं व्यापार आश्रयते, आत्माश्रयत्वात्, समवायं प्रति तदनुपयोगात्, विजातीयव्यापारवतोऽकर्तृत्वाच्च। न च द्वितीयाद्याः प्रातिपदिकविभक्तयः। ततः प्रथमानिर्दिष्टेनैव भावनाऽन्वीयते इति तस्यान्वययोग्यतानियमात् सङ्ख्याऽपि तदनुगामिनी तेनैवान्वीयते इति नातिप्रसङ्गः, नञर्थवत्। यथा हि चैत्रो न गौरो न स्पन्दते न कुण्डलीत्यादौ विशेषणविशेष्यसमभिव्याहाराविशेषेऽपि नञा तदनभिधानाविशेषेऽपि नञर्थस्य विशेषणांशेनैवान्वयो न विशेष्यांशेन।

ननु बाधात्तत्र तथा, न हि विशेष्येण तदन्वये विशेषणोपादानमर्थवद्भवेत्, तन्निषेधेनैव विशेषणनिषेधोपलब्धेः। उभयनिषेधे चावृत्तौ वाक्यभेदादनावृत्तौ निराकाङ्क्षत्वादिति चेत्। न, तुल्यत्वात्। समानप्रत्ययोपात्तभावनाऽऽक्षिप्तान्वयोपपत्तौ बाधकं विना सन्निहितत्यागे व्यवहितपरिग्रहस्य गुरुत्वात्। भावनायाश्च सामान्याक्षेपेऽपि साकाङ्क्षपरित्यागे निराकाङ्क्षान्वयानुपपत्तेः। न ह्यन्यतराकाङ्क्षा अन्वयहेतुः, अपि तूभयाकाङ्क्षा। प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रिया-

प्रकाशः।

युक्त्यन्तरमाह **समवायं प्रतीति**। **तदनुपयोगाद्** = व्यापारवदनुपयोगात्। भावनाया इव तत्समवायस्यापि शुद्धप्रातिपदिकार्थापेक्षतया **भावना**दिविशिष्टनिराकाङ्क्षत्वादित्यर्थः।

**यद्वा** समवायो मेलकः। यत्मेलकस्य पूर्वापरीभूतभावनावाचकेनाख्यातेनैव बोधितत्वाद् न तदन्वयाय **भावनान्तरापेक्षे**त्यर्थः। नन्वात्माश्रयानवस्थाभ्यां सजातीयव्यापारवदनाकाङ्क्षेति द्वितीयाद्युपनीतविजातीयव्यापारवत् साकाङ्क्षत्वं स्यादित्यत आह **विजातीयेति**। तथासत्यऽयोग्यत्वादनन्वयापत्तिः, न हि घटानुकूलव्यापारेण पाककर्तृत्वं दृष्टमित्यर्थः।

ननु शुद्धप्रातिपदिकार्थापेक्षिण्यपि भावना कुतो न द्वितीयाद्युपनीतेनान्वेतीत्यत आह **न चेति**। उभयोपस्थितावपि साकाङ्क्षेण सहान्वयो भावनाया न निराकाङ्क्षेणेति दृष्टान्तेन स्पष्टयति **नञर्थवदिति**। न चैत्र इत्यादिना क्रमेण जातिगुणकर्मद्रव्याणां विशेषणानां निषेध्यत्वमुक्तम्। **आवृत्ताविति**। उभयनिषेधे च सकृदुच्चरितस्य तयोऽन्यतरनिषेधेनैव निराकाङ्क्षत्वात् तदर्थान्वयार्थमावृत्तिकल्पने पदावृत्तिरूपवाक्यभेदापत्तिरित्यर्थः। **अनावृत्ताविति**। सकृदुच्चरितनञो येन केनचिदेकेनैव चरितार्थत्वाद् निराकाङ्क्षत्वादित्यर्थः।

भावनाऽन्वयिनैव सङ्ख्याऽन्वेतीत्यत्राभिमतं नियामकं स्पष्टयति **समानेति**। यद्यपि व्यापारात्मिका भावना व्यापारिसामान्यमाकाङ्क्षति आक्षिपति, तथापि साकाङ्क्षेण व्यापारिणा प्रातिपदिकार्थेनान्वीयते, न तु निराकाङ्क्षेण कारकान्तरेणेत्याह **सामान्येति**। उभयाकाङ्क्षामाह **प्राति-**

प्रकाशिका।

प्येऽतिव्याप्तिरिति प्रथमान्तेत्यादि व्याचक्षते **भावनादिविशिष्टेति**। सजातीयव्यापारमभिप्रेत्य। ननु भावनासमवायस्यापदार्थत्वेन तदन्वयो न शब्दात्पदमपीत्यरुचेराह **यद्वेति**। **भावनान्तरापेक्षेति**। तथा च शुद्धप्रातिपदिकमात्राकाङ्क्षैवेति भावः।

मकरन्दः।

**भावनादिविशिष्टेति**। सजातीयव्यापारमभिप्रेत्य।

ननु भावनासमवायो न पदार्थः, किन्तु तदन्वय इति तस्यान्वयप्रतियोगित्वाभावान्निराकाङ्क्षत्वेऽप्यदोष इत्यरुचेराह **यद्वेति**।

**भावनान्तरेति**। तथा च शुद्धप्रातिपदिकार्थमात्राकाङ्क्षैवेति भावः।

सम्बन्धमपेक्षते, भावनाऽपि व्यापारभूता सती व्यापारिणमित्युभयाकाङ्क्षा अन्वयहेतुः । कटं कटेनेत्यादि तु कारकतयैव फलसमन्वितं न व्यापारान्तरमपेक्षते इति निराकाङ्क्षमिति ।

अत एव 'ऽऽस्यते सुप्यते' इत्यादौ नाक्षिप्तेनान्वयः। न हि चैत्रेणेति तृतीयान्तशब्दस्य भावनायामाकाङ्क्षाऽस्ति । भाव्याकाङ्क्षाऽस्तीति चेत् । न, फलेन शयनादिधात्वर्थेनान्वयात् । फलसंबन्धिनश्चात्र कर्त्रनतिरेकात्, न हि शयनादयो धात्वर्थाः कर्त्रतिरेकिसंबन्धाः । न च फलतत्संबन्धिव्यतिरेकेणान्यो भाव्यो नाम यमपेक्षेत ।

---

प्रकाशः ।

**पदिकार्थं इति ।** फलेन-धात्वर्थेन, क्रियासम्बन्धं व्यापारसम्बन्धमित्यर्थः । **कटं कटेनेति ।** अत्र द्वितीयातृतीयाभ्यां कारकविभक्तिभ्यां क्रियाऽनुकूलव्यापारसहितस्यैवोपस्थितेर्न भावनाऽऽकाङ्क्षेत्यर्थः ।

ननु यदि स्वपिति इत्यादावाक्षिप्तेन कर्त्राऽन्वयस्तदा सुप्यते इत्यादावपि तथा स्यादित्यत आह **अत एवेति ।** यत एव उभयाकांक्षानिबन्धनोऽन्वय इत्यर्थः । भाव्यं भावनाजन्यं, फलञ्चेत्तत्राह **फलेनेति ।** अथ फलसम्बन्धि कर्म भाव्यं, तत्राह **फलेति ।** धातूनामकर्मकत्वात् तदाश्रयत्वं कर्तुरेवेत्यर्थः । तस्य च चैत्रेणेति **तृतीयया** कर्तृत्वोपस्थितेर्न भाव्यत्वेनान्वयान्तरमिति भावः ।

ननु चैत्रस्तण्डुलान् पचति इत्यत्र भावनाऽन्वयश्चैत्रे सम्भवत्याश्रयत्वात् । चैत्रेण पच्यन्ते तण्डुला इत्यत्र तण्डुलानां न तावद्विषयत्वेन भावनाऽन्वयः, यत्नस्य विक्लित्त्यनुकूलव्यापारविषयत्वात् । विषयत्वेनान्वये वा चैत्रस्तण्डुलान् पचतीत्यत्र तण्डुलानां विषयत्वेन भावनाऽन्वयापत्तौ सङ्ख्याया अपि तदन्वयापत्तेः । नाप्याश्रयतया, भावनाया अतदाश्रितत्वात् । न च चैत्रेण भावनाऽन्वयः, तृतीयार्थयत्नेनावरुद्धतया भावनायास्तदनन्वयात् । अचेतने वा कथं सङ्ख्याऽन्वयनियमः ? । तत्र भावनाया अनन्वयात् । यत्र च पचतीत्येव प्रयुज्यते, तत्र कथं भावनायाः कर्त्रन्वयः ? । **यत्र वा** चैत्रः कर्त्ता पचत्योदनम् इति प्रयोगः, तत्र चैत्रेणेतिवत् कर्तृत्वेनैवोपस्थितावाकाङ्क्षाविरहाद्भावनाऽनन्वये कथं कर्त्तरि सङ्ख्याऽन्वयः ? ।

उच्यते—**यत्र यद्विशेष्यं,** तेन सङ्ख्याऽन्वयः । तथा हि चैत्रस्तण्डुलान् पचतीत्यत्र तण्डुलानां कर्मत्वेनान्वयात् **तण्डुलवृत्ति**फलजनकव्यापारजनकयत्नाश्रयश्चैत्र इति प्रतीतेः स विशेष्यः । चैत्रेण पच्यन्ते तण्डुला इत्यत्र **चैत्रवृत्ति**यत्नजन्यव्यापारजन्यफलाश्रयास्तण्डुलाः प्रतीयन्ते इति

प्रकाशिका ।

**तृतीयार्थयत्नेति ।** 'कर्तृकरणयोस्तृतीये'त्यनेन कर्त्तरि तृतीयानुशासनादिति भावः । ननु तत्राक्षिप्तेनैव चैत्रादिना भावनान्वयोऽन्यथा तदनन्वय एवेत्यरुचेराह **यत्र वा चैत्र** इति ।

**यत्र यद्विशेष्यमिति ।** आख्यातवाच्यविशेष्यमित्यर्थः । आख्यातवाच्यश्च क्वचिद्यत्नः क्वचिद्व्यापार इति । **तण्डुलवृत्तीत्यादि ।** फलं द्वितीयार्थः, तदेव कर्म्मत्वं, वृत्तिस्तु संसर्गः, व्यापारश्च धात्वर्थः, जनकत्वं च संसर्गः, यत्नश्चाख्यातार्थः, तस्य च व्यापारेण समं जनकत्वं देवदत्तेन सममाश्रयत्वं संसर्ग इति भावः । **चैत्रवृत्तीत्यादि ।** अत्र च यत्नस्तृतीयार्थः व्यापारो

मकरन्दः ।

**तृतीययेति ।** 'कर्तृकरणयोस्तृतीये'ति कर्तृत्वे तृतीयाऽनुशासनादिति भावः ।

ननु अत्राक्षिप्तेन चैत्रादिना भावनाऽन्वयः, अन्यथा तदनन्वय इष्ट एवेत्यरुचेराह **यत्र वेति ।** **यद्विशेष्यमिति ।** आख्याततात्पर्यविषयीभूतार्थविशेष्ये इत्यर्थः । अत एवाह अचेतनेऽपीति ।

**स्यादेतत्, किमिति न प्रयुज्यते कटः करोति चैत्रमित्यादि, अभिहितानभिहितव्यवस्थाऽभावादिति चेत्। न, चैत्रमिति प्रथमान्तस्यासाधुत्वात्। द्विती-**

**प्रकाशः।**

यत्नस्य परम्परया तण्डुला विशेष्याः। एवं यद्यप्युभयत्र चैत्रः कर्त्ता तण्डुलाः कर्माणि, तथापि यत्नविशेष्ये सङ्ख्याऽन्वयः। अचेतनेऽपि रथो ग्रामं गच्छतीत्यत्र ग्रामवृत्तिफलजनकव्यापाराश्रयो रथः प्रतीयते, रथेन गम्यते ग्राम इत्यत्र रथवृत्तिव्यापारजन्यफलाश्रयो ग्राम इति, तत्रापि विशेष्ये सङ्ख्याऽन्वयः।

चैत्रेण सुप्यते इत्यत्र न चैत्रो भावनाविशेष्यः, तृतीयार्थविरुद्धत्वात्, कर्म तत्र नास्त्येव। अतो धात्वर्थ एव भावनाविशेष्यः, फलत्वाद्विषयत्वाद्वेति तत्र सङ्ख्याऽन्वयः। न च प्रातिपदिकार्थे भावनाऽन्वयेऽपि न सङ्ख्याऽन्वयः, प्रथमोपनीतसङ्ख्याऽन्वयेन च तस्य तदनाकाङ्क्षत्वादिति वाच्यम्। प्रथमाऽऽख्याताभ्यामेकस्या एव सङ्ख्याया अभिधानात्, चैत्रो दण्डीत्यत्रेव सामानाधिकरण्यानुरोधात्। अन्यथा त्वन्मते प्रथमाऽर्थसङ्ख्याऽन्वयश्चैत्रे न स्यात्, आख्यातेनैव स्ववाच्यकर्तृसङ्ख्याऽभिधानात्। नापि पचतीत्यत्र पाकयत्नवानिति विवरणात् कर्त्ता आख्यातवाच्यः। कर्तुरन्यलभ्यत्वेनावाच्यत्वस्थितौ विवरणस्य तात्पर्यविषयपरत्वात्, द्वन्द्वादिसमासस्य विग्रहेण विवरणेऽपि तत्र शक्त्यभावाच्च।

**अत्रास्मत्पितृचरणाः**—कृतिरूपकर्तृत्ववत् कर्मत्वमपि लकारवाच्यम्, **तद्धर्मिणोरन्यत** एव लाभात्। तण्डुलान् पचतीत्यत्र (१) द्वितीयात इव चैत्रेणौदनः पच्यते इत्यत्रान्यतः कर्मत्वालाभादित्याहुः।

कर्तृकर्मकरणादीनामभिहितानभिहितत्वविशेषाभावे कटं करोति चैत्र इत्यत्र विभक्तिपरिणामे प्रयोगः किं न स्यादित्याह—**किमिति**। चैत्रशब्दस्य पुंलिङ्गत्वात् प्रथमायां तद्रूपमसाध्वित्याह

**प्रकाशिका।**

धात्वर्थः फलं च कर्म्मत्वरूपमाख्यातार्थः कृतिजन्यत्वादिकश्च संसर्ग इति भावः। न चैवं कर्म्मत्वस्याख्यातवाच्यत्वे चिन्तामणिकारीयमतभेदः, आख्यातवाच्यकर्तृत्वे कर्म्मत्वाधिकरणत्वं संख्यान्वयनियामकमित्येतावता चिन्तामणिकारीयमतभेदात्। कर्म्मत्ववाचकता तु कर्माख्यातस्योभयमतेऽपीति भावात्, एषा च रीतिः फलोपलक्षितव्यापारवाचकत्वे धातोः, यदा तु फलविशिष्टव्यापार एव धात्वर्थोऽन्यथा त्यजिगत्योः पर्यायतापत्तिरिति मतं, तदाश्रयत्वरूपमेव कर्मत्वं द्वितीयायाः आख्यातस्य चार्थः, तत्प्रकारकप्रतीत्यनुरोधादन्यच्च पूर्ववदेवेत्यवधेयम्। केचित्तु फलस्य विशेषरूपेण धातुवाच्यत्वं सामान्येन तु द्वितीयादिवाच्यत्वमिति फलस्य धातुवाच्यत्वपक्षेऽपि पूर्वैव रीतिरित्याहुः।

**तद्धर्म्मिणोरिति**। कर्तृत्वधर्म्मित्वधर्म्मिणोः, कर्तृधर्म्मिणोरित्यर्थः। **द्वितीयाया** इति। तथा च वाच्यतया। चैत्रोपस्थितेः तथात्वेन कटं नापेक्षते किन्तु भावकत्वेनैव, तच्च विपर्ययादयुक्तमिति भावः।

**मकरन्दः।**

**तद्धर्मिणोरिति**। कर्तृत्वकर्मत्वधर्म्मिणोः कर्तृकर्म्मणोरित्यर्थः।

**इत्याहुरित्यस्वरसोद्भावनम्**। तद्बीजन्तु–तथाप्याश्रयत्वमात्रमनन्यलभ्यतया लकारवाच्यं, परसमवेतक्रियाफलशालित्वं हि कर्म्मत्वमिति चैत्रवृत्तियत्नजन्यव्यापारजन्यफलाश्रयत्वमेव तस्य कर्म्मत्वं वाच्यम्। तत्र तृतीयया यत्नस्य धातुना फलावच्छिन्नव्यापारस्याभिधानेऽपरस्यानन्यलभ्यत्वादिति।

**द्वितीयाया इति**। तथा च भाव्यतया चैत्रस्योपस्थितेस्तथात्वेन कटं नापेक्षते, किन्तु भावकत्वेनैव, तच्च विपर्य्ययादयुक्तमिति भावः।

(१) अत्र द्वितीयाया इति प्रकाशिकामकरन्दाभिमतः पाठः।

यान्तस्य तु कर्मवचनत्वेन तत्संबन्धाकाङ्क्षाभ्यानपेक्षणीभावेन भावकमात्रमपेक्षेत । न च कटस्य चैत्रं प्रति भावकत्वं, विपर्ययात् । अनातेन तु विवक्षायां प्रयुज्यत एव ।

प्रयुज्यतां तर्हि कटः करोति चैत्र इत्यादि । न, नित्यसन्दिग्धत्वेन वाक्यार्थासमर्पकत्वात् । ततस्तदुपपत्तये विशेषस्य व्यञ्जनीयत्वात् । व्यज्यतां तर्हि तृतीयया चैत्रेणेति, एवं देवदत्तः क्रियते कटमिति व्यज्यतां द्वितीययेति चेत् । न, अप्रयोगात् । न ह्याप्तेनाऽप्येवंप्रायाणि प्रयुज्यन्ते । लक्षणाविरोधेन कुत एतदेवेति चेत् । लोकस्यापर्यनुयोज्यत्वात् ।

न हि गार्गिकयेति पदं साध्विति श्लाघाऽभिधायिपदसन्निधिमनपेक्ष्य प्रयुज्यते । तस्य तदुपाधिनैव विहितत्वादिति चेत् । एतदेव कुतः ? लोके तथैव प्रयोगदर्शनादिति चेत् । तुल्यम् । करोतीत्यादिकर्मविभक्तिसमभिव्याहारेणैव प्रयुज्यते, क्रियते इति कर्तृविभक्तिसमभिव्याहारेणैवेति किमत्र क्रियताम् ।

इममेव विशेषमुररीकृत्यानभिहिताधिकारानुशासनेनं ह्येतावान् परामर्शः सर्वेषां हृदि पदमादधातीत्यभिधानानभिधानविभाग एव व्युत्पादनदशायां पेशल इति ।

स्यादेतत्, भवतु सर्वाख्यातसाधारणी भावना, कालविशेषसंबन्धिनी सा लडाद्यर्थः, कालत्रयापरामृष्टा लिङर्थ इति चेत् । न, यत्नपदेन समानार्थत्वप्रसङ्गात् । विषयोपरागानुपरागाभ्यां विशेष इति चेत् । न, यागयत्न इत्यनेन पर्याय-

---

प्रकाशः ।

**चैत्रमितीति । भाव्यानपेक्षिणीति । द्वितीयायाः** कर्मत्वाभिधायकत्वेन भाव्यानपेक्षिणी भावनेत्यर्थः । **नित्येति ।** कर्तृकर्मभावे इति शेषः । **लोकस्येति ।** व्याकरणस्याप्यनादिप्रयोगानुपजीव्यैव शब्दान्वाख्यायकत्वादित्यर्थः । **तुल्यमिति ।** अनादिः प्रयोगोऽस्माकमप्युपजीव्य इत्यर्थः ।

**इममेवेति ।** बालव्युत्पत्त्यर्थं प्रकृतिप्रत्ययविभागस्येवाभिहितानभिहितत्वस्यापि व्युत्पादनमित्यर्थः । वस्तुतो यत्पदस्य यत्पदसमभिव्याहारेणैव प्रयोगनियमः, तस्य तत्पदं विना न प्रयोग इत्यर्थः ।

कर्तृधर्मस्य **यत्नस्य** विधित्वे सर्वाख्यातसाधारण्येनोक्तातिप्रसङ्गे समाधिं शङ्कते—

**स्यादेतदिति ।** लडादीनां वर्त्तमानादिकालनियमवल्लिङस्तदभावादिति नातिप्रसङ्ग इत्यर्थः । यत्नज्ञानस्याप्रवर्त्तकतया प्रागुक्ताप्रवृत्तेरिति स्मारणेन परिहरति **यत्नपदेनेति ।** अथ लिङा न

प्रकाशिका ।

**यत्नस्येति ।** यद्यपि यत्नस्य लिङर्थत्वे तज्ज्ञानं प्रवर्त्तकमिति, न तु स्वात्मनि वृत्तिविरोधदोषः, तथापि यत्नवानित्यतोऽप्रवृत्तिरेव तत्पक्षे दूषणमित्यवधेयम् । **न वा तत्साधनमिति ।** पर-

मकरन्दः ।

**यत्नस्येति ।** यद्यपि यत्नस्य लिङर्थत्वे तज्ज्ञानं प्रवर्त्तकमिति न स्वात्मनि वृत्तिविरोधो दोषः, तथापि प्रवृत्तिहेतौ सङ्कल्पे शक्तेरित्युक्तत्वात् तद्दूषणे तात्पर्य्यम् ।

**न वा तत्साधनमिति ।** यद्यपि परम्परया तत्साधनत्वं वक्ष्यति, तथापि साक्षान्न तथेत्यापातत इदम् । यद्वा कुम्भकारपितृवदन्यथासिद्धतया न साधनमिति भावः ।

टिप्पणी ।

**नित्यसंदिग्धत्वेन**—कोऽत्र कर्ता किं कर्मेति संदिग्धत्वेन ।

**गार्गिकयेत्यादि ।** गोत्रचरणाच्छ्लाघाऽत्याकारतदवेतेषु ( ५-१-१३४ ) इति पाणिनीयसूत्रेण गोत्रप्रत्ययान्तात् गार्ग्यशब्दात् भावे वुञ्प्रत्ययेन केवलं गार्गिकशब्दो व्युत्पादितोऽपि गार्गि-

ताऽऽपत्तेः। कर्तृसङ्ख्याऽभिधानानभिधानाभ्यां विशेष इति चेत्। न, यागयत्नवानित्यनेन साम्यापत्तेः। इष्ट एवायमर्थ इति चेत्। न, इतो वत्सरशतेनाप्यप्रवृत्तेः। फलसमभिव्याहाराभावान्न प्रवर्त्तते इति चेत्। न, स्वर्गकामो यागयत्नवानित्यतोऽप्यप्रवृत्तेः। तत् कस्य हेतोः? न हि यत्नो यत्नस्य हेतुर्यत्नप्रतीतिर्वा यत्नस्य कारणं, अपि त्विच्छा। न च साऽपि प्रतीता यत्नजननी येन सैव विध्यर्थ इत्यनुगम्यताम्, अपि तु सत्तया। न च लिङः श्रुतिकाले सा सती। न च लिङेव तां जनयति। अर्थविशेषमप्रत्याययन्त्यास्तस्यास्तज्जनकत्वे व्युत्पत्तिग्रहणवैयर्थ्यात्। अनुपलब्धलिङोऽपीच्छाऽनुत्पत्तिप्रसङ्गादिति। एतेन-वृद्धव्यवहाराद् व्युत्पत्तिर्भवन्ती बालस्यात्मनि प्रवृत्तिहेतुर्योऽवगतस्तमेवाश्रयेत्, स्वयञ्च कुर्यामिति सङ्कल्पादेवायं प्रवृत्तः, ततः स एव लिङर्थ-इति निरस्तम्। कुर्यामिति प्रयत्नो वा स्यादिच्छा वा? नाद्यः, स्वात्मनि वृत्तिविरोधात्। न द्वितीयः, सा हि सत्तयैव प्रयत्नोत्पादिनी, न च लिङः श्रुतिकाले सा सतीत्युक्तम्।

फलेच्छा तु निसर्गवाहितया सत्यपि न प्रयत्नं प्रति हेतुः। अन्यविषयत्वात्। तदर्थञ्च शास्त्रवैयर्थ्यात्। तस्याः कारणान्तरत एव सिद्धेः, तत्प्रतीत्यर्थमपि

---

प्रकाशः।

यत्नः क्रियते अपि तु यत्नज्ञानमिति, तत्राह **यत्नप्रतीतिर्वेति**। अत्रापि न हीति योज्यम्। अस्तु कर्तृधर्म इच्छैव लिङ्वाच्येत्यत आह **न चेति**। प्रवृत्तिहेतुज्ञानविषयस्य लिङर्थत्वादित्यर्थः।

असत्त्वादिति विवृणोति **न च लिङ इति**। प्रत्ययत्यागादिति हेतुं व्याचिख्यासुर्भूमिकामारचयति **न च लिङेवेति**। अथ विषयज्ञानमनुत्पाद्य लिङपि नेच्छां जनयति, अन्यथा व्युत्पन्नस्येवाव्युत्पन्नस्यापि लिङ्श्रवणादिच्छा स्यादित्याह **अर्थेति**। **स्वयञ्चेति**। इष्टसाधनं ममेति मत्वा कुर्यामिति यः सङ्कल्पः, तज्ज्ञानादहं प्रवृत्तः, अतः प्रयोज्यवृद्धोऽपि तत एव प्रवृत्तः, ततः सङ्कल्पज्ञानं लिङुच्चारणान्तरं जातमिति लिङेव तत्करणमित्यवगच्छति व्युत्पद्यमानो बाल इत्यर्थः।

**स्वात्मनीति। यत्नस्य** यत्नहेतुत्वे स्वात्मनि वृत्तिविरोध इत्यर्थः। अनेन विरोधत इति कारिकांऽशो विवृतः। इच्छा साधनगोचरा प्रवृत्तिहेतुरपि न ज्ञाता सतीति न लिङर्थ इत्याह **सा हीति। न चेति**। लिङः श्रवणात् प्रागिच्छाहेत्विष्टसाधनताज्ञानाभावादित्यर्थः।

सङ्करादिति कारिकांऽशं विवरीतुं, सुखादीच्छा लिङः श्रुतिकालेऽप्यस्तीति सा लिङर्थः प्रयत्नहेतुश्च स्यादिति निरस्यति **फलेच्छा त्विति**। निसर्गवाहित्वं-निरुपाधित्वम्। **अन्यविषयत्वादिति**। फलसाधने हि पुरुषः प्रवर्त्तते, न फले अन्येच्छायाश्चान्यत्र प्रवृत्तिहेतुत्वेऽतिप्रसङ्ग इत्यर्थः। अपि च फलेच्छां शास्त्रमुत्पादयेत्, ज्ञापयेद्वा? तत्र नाद्य इत्याह **तदर्थञ्चेति**। फलेच्छायाः फलज्ञानादेवोत्पत्तेः, तस्य स्वविषयेच्छाजनकत्वस्वभावत्वादित्यर्थः। अतएव यज्ज्ञातं स्ववृत्तितयेष्यते, तदेव स्वतः प्रयोजनमिति भावः। द्वितीयमाशङ्क्य निराकरोति **तदिति**।

प्रकाशिका।

म्परासाधनत्वेऽपि साक्षादसाधनत्वाभिप्रायेण **वा** कुम्भकारपितृवदन्यथासिद्धयभिप्रायेण वेदमुक्तम्। **न चेति**। तथा च संकल्पविषयः संकल्पो न भवत्येवेति भावः ॥११॥

मकरन्दः।

**न चेति**। तथा च सङ्कल्पविषयः सङ्कल्पो न भवत्येवेति भावः ॥११॥

टिप्पणी।

कया श्लाघते इत्येव प्रयुज्यते, तत्र श्लाघतेपदसमभिव्याहारमन्तरेणापि कुतो न प्रयोग इति प्रश्ने तथैव व्यवहारः शरणमित्यर्थः ॥११॥

शास्त्रानपेक्षणात्, तस्या मनोवेद्यत्वात्। अप्राप्ते च शास्त्रानवकाशात्। तद्-भिधाने च स्वर्गकाम इति कर्तृविशेषणपौनरुक्त्यात्, तदा हि यजेतेत्यस्यैव यागकर्त्ता स्वर्गकाम इत्यर्थः स्यात्।

यदि च फलविषयेव साधनविषयं प्रयत्नं जनयेत्; अन्यत्रापि प्रसुवीत, नियामकाभावात्। हेतुफलभाव एव नियामक इति चेत्। न। अज्ञातस्य तस्य नियामकत्वे लिङं विनाऽपि स्वर्गेच्छातो यागे प्रवृत्तिप्रसङ्गात्। ज्ञातस्य तु तत्साधनत्वस्य नियामकत्वे तदिच्छैव तत्र प्रवर्त्तयतु। यो यत्कामयते स तत्साधनमपि कामयत एवेति नियमात्। न च सा तदानीं सती। न च तज्ज्ञानमेव प्रयत्नजनकं, तच्च लिङा क्रियते इति युक्तम्। स्वर्गकामो यागचिकीर्षावानित्यतोऽपि प्रवृत्तिप्रसङ्गात्। लिङो वेच्छां प्रतीत्यानिच्छन्नपि सर्वः प्रवर्त्तेत। स्वसम्बन्धितया तदवगमस्तथा न तु सामान्यत इति चेत्। न। प्रथमपुरुषेण तदभिधाने तस्याविध्यर्थत्वप्रसङ्गात्। ओदनकामस्त्वं पाकचिकीर्षावानित्यतोऽपि प्रवृत्त्यापत्तेश्च।

अपि च, सङ्कल्पज्ञानात् यदि प्रयत्नो जायेत तथापि सङ्कल्पस्य कुतो जन्म किमर्थञ्च? सङ्कल्पज्ञानादेव, प्रयत्नार्थञ्चेति चेत्। नन्विच्छाविशेषः सङ्कल्पः; स तावत् सुखे स्वभावतः, तत्साधने चौपाधिकः, सङ्कल्पविषयस्तु कथम्? तत्साधनत्वादेवेति चेत्। तर्हि तत्साधनत्वज्ञानात् न तु सङ्कल्पस्वरूपज्ञानाद्भवितुमर्हतीति।

---

प्रकाशः।

किमतो यद्येवमित्यत आह **अप्राप्ते चेति**। अवकाशे वा फलेच्छाया लिङैवोक्तत्वात् स्वर्गकाम इति पुनरुक्तरूपसङ्कारापत्तिरित्यत आह **तदभिधान इति**।

ननु समानविषयकतयेच्छाप्रवृत्त्योर्हेतुहेतुमद्भाव एव कुतः इत्यत आह—

**यदि चेति**। अन्यत्राप्यसाधनेऽपीत्यर्थः। नियामकमाह **हेतुफलेति**। फलेच्छा तत्साधन एव प्रयत्नमुत्पादयति नान्यत्रेत्यर्थः। यदि स्वरूपसन्नेव हेतुफलभावः प्रवृत्तिनियामकः, तदा स्वर्गकामो यजेतेत्यादिविधिजन्यज्ञानं विनाऽपि स्वर्गसाधने प्रवृत्त्यापत्तिरित्याह **अज्ञातस्येति**। भ्रमादसाधनेऽप्रवृत्त्यापत्तेश्चेति भावः। अथ ज्ञातः, तदा फलसाधनेच्छैव तत्साधने प्रवर्त्तयतु समानविषयत्वादित्याह **ज्ञातस्य त्विति**।

ननु साधनविषया नेच्छा तस्य निसर्गसुन्दरत्वाभावादित्यत आह **यो यदिति**। अस्तु साधनविषयैवेच्छा प्रयत्नजननी लिङर्थ इत्यत आह **न चेति**। साधनेच्छा न लिङः श्रुतिकाले सतीत्यर्थः। ननु साधनेच्छायास्तत्कालासत्त्वेऽपि तज्ज्ञानादेव प्रवृत्तिः स्यादित्यत आह **न चेति**। **तच्चेति**। साधनविषयेच्छाज्ञानमित्यर्थः। यदि च साधनेच्छाज्ञानादेव प्रवृत्तिः, तदा स्वेच्छानुत्पत्तिदशायामपि ततः प्रवर्त्तेतेत्याह **लिङो वेति**। यजेतेत्यतः साधनेच्छाज्ञानं जातं, न तु स्वसम्बन्धितया, तादृशञ्च प्रवर्त्तकम्, अतो नानिच्छन्नपि प्रवर्त्तेतेत्यत आह **स्वसम्बन्धितयेति**। एवं यजेतेत्यस्य विध्यर्थत्वं न स्यात्तस्य स्वेच्छाज्ञानाजनकत्वादित्याह **प्रथमेति**।

**किमर्थमिति**। इच्छाज्ञानादेव प्रवृत्तौ किमर्थमिच्छोत्पादनमित्यर्थः। कुत इति प्रश्ने सङ्कल्पज्ञानादित्युत्तरं, किमर्थमित्यत्र तु, **प्रयत्नार्थमिति**। इच्छाविशेषः,–कुर्यामित्याकारः। स्वभावतः–सुखज्ञानस्य स्वविषयविषयकेच्छाजनकस्वभावत्वादित्यर्थः। औपाधिकः–तत्साधनताज्ञानजन्य इत्यर्थः। सङ्कल्पस्तु न फलं न वा तत्साधनमिति नेच्छाविषयः, न च सङ्कल्पज्ञानात् फलसाधन एवेच्छा, ज्ञानस्य स्वसमानविषयकेच्छाजनकत्वनियमादिति भावः। **तत्साधनत्वादेवेति**। परम्परया फलसाधनत्वज्ञानादेवेत्यर्थः। **तर्हीति**। तथा चेष्टसाधनतैव विधिः स्यान्न सङ्कल्पः, तेन रूपेणाप्रवर्त्तकत्वादिति भावः।

अन्यथेष्टसाधनताज्ञानमप्यनर्थकमापद्येत। तस्मात् सङ्कल्पः प्रवर्त्तक इत्यभ्युपेयते, किन्तु सत्तामात्रेण न तु ज्ञात इति नासौ विधिः। ज्ञानञ्च विषयोपहारेणैव व्यवहारयतीति तद्विषय एवावशिष्यते इति कर्तृधर्म्मव्युदासः ॥ ११ ॥

अस्तु तर्हि कर्म्मधर्म्मः। नेत्युच्यते,

**अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ॥**
**तदलाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ १२ ॥**

---

प्रकाशः।

यद्वा सङ्करादिति विवृणोति **तर्हीति**। एवं लाघवादिष्टसाधनतैव विधिः, सङ्कल्पस्य तु तत्सङ्कीर्णत्वादित्यर्थः।

यदि च नैवं तदा भोजनादाविष्टसाधनताज्ञानमिच्छोत्पादकं न स्यादित्याह **अन्यथेति**। सङ्कल्पस्याप्रवर्त्तकत्वे शास्त्रविरोधं परिहरति **तस्मादिति**। तर्हि ज्ञानमेव कर्तृधर्मो विधिरस्त्वित्यत आह **ज्ञानञ्चेति**। तद्विषय एव-ज्ञानविषय एव। विधिरित्यनुषज्यते। यदि हि विषयविशेषानवच्छिन्नं ज्ञानं प्रवर्त्तयेत्, सर्वत्र प्रवृत्तिप्रसङ्गः। तदवच्छिन्नस्य च तस्य तथात्वे यं विषयमुपनयत्तत् प्रवर्त्तकं स एवार्थो विधिरिति कृतिहेतुचिकीर्षाकारणज्ञानविषयो विधिरित्यर्थः ॥११॥

क्रियते इति व्युत्पत्त्या कर्मपदेन यदि फलं स्वर्गाद्युच्यते, तस्य च कार्य्यत्वं ज्ञात्वा प्रवर्त्तते तदा अनुपायेऽपि प्रवर्त्तेतेत्याह—

**अतिप्रसङ्गादिति**। अथापूर्वस्य कार्य्यत्वं ज्ञात्वा प्रवर्त्तते, तदा शब्दानुभवात् पूर्वं तदुपस्थितं न वा ? आद्ये अपूर्वत्वव्याघातः, तस्य शब्दानुभवैकवेद्यत्वादित्यर्थः। अन्त्ये कथं शक्तिग्रह इति भावः। ननु कार्यत्वेनोपलक्षिते अपूर्वे कार्यत्वेनैव रूपेण शक्तिग्रहः, कार्य्यत्वविशिष्टस्योपस्थितमेवेत्याह **तदलाभादिति**। उपलक्ष्यस्यान्यत्र मानान्तरसिद्धत्वादत्रापि तथात्वे अपूर्वत्वहानिरन्यथा तु तदलाभ इत्यर्थः।

यद्वा कार्य्यत्वविशिष्टे कार्य्ये धर्मिणि शक्तिग्रहः, वाक्यार्थानुभवदशायामयोग्यतया घटादौ निरस्ते च तदतिरिक्तापूर्वलाभः स्यादित्यत आह **तदलाभादिति**। तथापि नित्यनिषेधापूर्वयोरलाभः स्यादित्यर्थः। **न क्रियाऽपीति**। क्रियायाः कार्य्यत्वज्ञानात् न प्रवृत्तिरनिष्टसाधनत्वादित्यर्थः।

टिप्पणी

फलनिष्ठकार्यताज्ञानम् अपूर्वनिष्ठकार्यताज्ञानं, यागादिनिष्ठकार्यताज्ञानं वा प्रवर्तकमिति विकल्प्य प्राभाकरमतं क्रमेण दूषयति **अतिप्रसङ्गादिति**। स्वर्गादिः कार्यं इति ज्ञानं यदि प्रवर्तकं स्यात्तदा स्वर्गाद्यसाधनेऽपि प्रवृत्तिप्रसङ्गनियामकस्य कस्यचिदप्यभावात्। **तत्त्वहानित** इति। अपूर्वस्य शाब्दबोधात्प्रागुपस्थितावपूर्वत्वहानिः अनुपस्थितौ च शाब्दबोधानुपपत्तिरित्यर्थः। ननु यथा गन्धवत्त्वेनोपलक्षितायां पृथिवीत्वविशिष्टायां घटादिव्यक्तौ पृथिवीपदस्य शक्तिग्रहस्तदनन्तरं च पृथिवीत्वेन शाब्दबोधः तथा कार्यं विधिशक्यमिति कार्यत्वोपलक्षितेऽपूर्वे शक्तिग्रहस्तदनन्तरं चापूर्वत्वेनापूर्वस्य शाब्दबोधः स्यादत आह **तदलाभादिति**। अपूर्वत्वविशिष्टापूर्वव्यक्त्यनुपस्थितेरित्यर्थः। अयमाशयः-गन्धवत्त्वपृथिवीत्वयोः पूर्वानुभवजन्यसंस्कारेण स्मरणस्य सहचारदर्शनेन पूर्वगृहीतव्याप्तेः स्मरणेनानुमितेर्वा संभवात् किमनयोः पृथिवीपदप्रवृत्तिनिमित्तमिति संशये अखण्डपृथिवीत्वजातौ लाघवात् प्रवृत्तिनिमित्तत्वं परिच्छिद्यते ननु गन्धवत्त्वे सखण्डे गौरवात् इह तु अपूर्वत्वस्य प्रागनुपस्थितिः, उपस्थितिश्चेदपूर्वत्वव्याघात इति। क्रिया यागादिस्तद्धर्मोऽपि कार्यत्वं न विध्यर्थ इत्याह **न क्रियाऽपीति**। **अप्रवृत्तित** इति।

कर्म्म हि फलं वा स्यात्, तत्कारणमपूर्वं वा, तत्कारणं क्रिया वा? न प्रथमः फलेच्छायाः प्रवृत्ति प्रत्यहेतुत्वात्, अतिप्रसङ्गादित्युक्तत्वात्। न द्वितीयोऽव्युत्पत्तेः। लिङो हि प्रवृत्तिनिमित्तमपूर्वत्वं वा स्यात्, उभयं वा? न प्रथमः। शब्दप्रवृत्तिनिमित्तस्यापूर्व्वत्वस्य प्रमाणान्तरादवगतावपूर्वत्वव्याघातात्, अनवगतावव्युत्पत्तेः, सम्बन्धिनोऽनवगमे सम्बन्धस्य प्रत्येतुमशक्यत्वात्। तत एवावगतावितरेतराश्रयदोषात्।

न च गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दवत् अपूर्वे प्रवर्त्तते लिङिति युक्तम्। तत्रोभयोरपि प्रतीयमानत्वेन सन्देहकल्पनागौरवपुरस्कारेण पृथिवीत्व एव सङ्गतिविश्रान्तेरुपपत्तेः, न त्वत्रापूर्वत्वप्रतीतिः।

स्यादेतत्, कार्यत्वमुपलक्षणीकृत्य तावदेषा लिङ् प्रवृत्ता, तदुपलक्षितश्च यागो वा यत्नो वाऽन्यो वा शब्देतरप्रमाणगोचरो नाधिकारिविशेषणस्वर्गसाधनसमर्थः। न चाकाम्यफले कामी नियोक्तुं शक्यते। ततोऽन्यदेवालौकिकं किञ्चिदनेनोपलक्ष्यते, यो लिङादिप्रवृत्तिगोचर इति किमनुपपन्नमिति चेत्। उपलक्षणं हि स्मरणमनुमानं वा। उभयमप्यनवगतसम्बन्धेनाशक्यम्, न हि संस्कारवन्मनोवददृष्टवद्वा कार्यत्वमपूर्वत्वमुपलक्षयति, ज्ञानापेक्षणात्। ततो हस्तीव हस्तिपकं, धूम इव धूमध्वजं, तत्सम्बन्धज्ञानादुपलक्षयेत्, न त्वन्यथा।

---

प्रकाशः।

तत्कारणमपूर्वकारणम्। **फलेच्छाया इति**। स्वर्गादेः कार्य्यतां जानन्नपि उपायज्ञानं विना न प्रवर्त्तते। कथं वाऽन्यज्ञानादन्यत्र साधने प्रवृत्तिः। यदि च साध्यसाधनभावो नियामकः, तदा भ्रमादसाधने न प्रवर्त्तेतेत्यर्थः।

**प्रमाणान्तरादिति**। शब्देतरप्रमाणागोचरत्वस्यापूर्वस्य त्वयाऽभ्युपगमादित्यर्थः। **अनवगताविति**। मानान्तराच्छक्तिग्रहविषयानुपस्थितौ तदसम्भवादित्यर्थः। **तत एवेति**। लिङ्पदादेवेत्यर्थः। **इतरेति**। लिङः शक्तिग्रहे ततोऽपूर्वोपस्थितिस्तदुपस्थितौ च तत्र शक्तिग्रह इत्यर्थः। **तत्रेति**। पृथिवीत्वगन्धवत्त्वयोः प्रत्यक्षतः सिद्धौ तदन्यतरत्र प्रवृत्तिनिमित्तत्वसंशये गन्धवत्त्वस्योपाधित्वेन सखण्डत्वात् पृथिवीत्वस्य च जातित्वेनाखण्डत्वात् तत्रैव शक्तिः कल्प्यते, प्रकृते त्वपूर्वत्वाप्रतीतौ न तथेत्यर्थः।

**कार्य्यत्वमिति**। वृद्धव्यवहाराद्व्युत्पद्यमानो बालः आत्मन्यवगतं प्रवृत्तिहेतुं कार्य्यत्वं लिङ्मवधारयति ततः कार्य्यशक्तं लिङ्पदं स्वर्गयोः कार्य्यत्वं त्यक्त्वा स्वर्गसाधनतायोग्यं तन्मध्यवर्त्तिकार्य्यत्वोपलक्षितमपूर्वत्वमनुभावयिष्यतीत्यर्थः।

**उपलक्षणं हीति**। यथा गङ्गापदं स्वार्थान्वयानुपपत्त्या स्वसम्बन्धितया प्रतीतचरं तीरं स्मारयति, यथा वा व्याप्यं व्यापकतयाऽवगतमनुमापयति, न तद्वदपूर्वमप्रतीतचरत्वेन सम्बन्धितया व्यापकतया वाऽनवगतं कार्य्यत्वं स्मारयितुमनुमापयितुं वाऽलमित्यर्थः। न च यथा संस्कारादिरज्ञात एव स्मृत्यादि जनयति, एवं कार्य्यत्वमज्ञातमेवापूर्वं ज्ञापयति, सम्बन्धित्वव्याप्यत्वाभ्यां ज्ञातस्यैव ज्ञापकत्वादित्याह **न हीति**। **तत्सम्बन्धेति**। अपूर्वेण सम्बन्धज्ञानादित्यर्थः। एवञ्च **प्रागुक्त**न्यायसम्पादनमपि अफलं, सर्वथाऽपूर्वस्याप्रतीततया तत्र शक्तिग्रहाशक्यत्वादित्याह—

मकरन्दः।

**एवं कार्य्यत्वमिति**। स्वभावादिति भावः। तमेवाह **सम्बन्धित्वेति**। **प्रागुक्तेति**। उपलक्षितस्येत्यादिना प्रागुक्तेत्यर्थः।

तथाच न्यायसम्पादनाऽरण्ये रुदितम्, न हि युक्तिसहस्रैरप्यविदिते सङ्गतिग्रहोऽविदितसङ्गतिर्वा शब्दः प्रवर्त्तते इति। एतेन–भेदाग्रहात् क्रियाकार्ये व्युत्पत्तिः–इति निरस्तम्, न ह्यज्ञाते भेदाग्रहो व्यवहाराङ्गम्, अतिप्रसङ्गात्।

किञ्चापूर्वत्वे प्रवृत्तिनिमित्ते कल्प्यमाने लौकिकी लिङनर्थिका प्रसज्येत, तत्रोपलक्षणीयाभावात्। तत्र कार्यत्वमेव प्रवृत्तिनिमित्तमिति यदि, प्रकृतेऽपि तथैवास्तु क्लृप्तत्वात् सम्भवाच्चेति॥

अस्तु तर्हि तदेव प्रवृत्तिनिमित्तं, तर्कसम्पादनया त्वपूर्वव्यक्तिलाभ इति चेत्। न। नित्यनिषेधापूर्वयोरलाभप्रसङ्गात्। न चास्मिन् पक्षे एकत्र निर्णीतेन शास्त्रा-

प्रकाशः।

**तथा चेति।** **स्थायिकार्य्यत्वमेव** लिङः प्रवृत्तिनिमित्तं, क्रियारूपकार्य्ये तु भेदाग्रहाल्लिङः प्रवृत्तिरित्यप्यत एवापास्तं, ज्ञातेनैव सह भेदाग्रहस्य प्रवर्त्तकत्वादित्याह **एतेनेति।** **किञ्चेति।** पचेतेत्यादौ क्रियाया योग्यत्वेन त्यागाभावात्तत्क्रियाकार्यत्वमेव लिङ्पदात् प्रतीयते इत्यपूर्वत्वस्य तत्प्रवृत्तिनिमित्तत्वे तदानर्थक्यं स्यादित्यर्थः। **प्रकृतेऽपीति।** तच्च क्रियासाधारणमिति नापूर्वव्यक्तिलाभ इति भावः।

ननु कार्यधर्मिणि कार्यत्वेन रूपेण घटादावेव शक्तिग्रहः सम्भवति, कार्यत्वञ्च मानान्तरोपस्थितमेवातोऽन्विताभिधानदशायां स्वर्गकामायोग्यतया घटादिकं तिरस्कृत्य क्रियातोऽन्यत् स्थायिस्वर्गसाधनतायोग्यं लिङा बोध्यते। न चान्यत्र शक्तिग्रहोऽन्यच्च शब्देन बोध्यते इति न स्यादिति वाच्यम्। येन रूपेण शब्दादनुभवः, तेन शक्तिग्रहस्य हेतुत्वात्, तथा च कार्यत्वेन रूपेण घटादौ शक्तिग्रहे योग्यतादिसहकारिवशादप्रतीतं धर्म्यन्तरं लिङाऽनुभाव्यते। न च स्मृतानां पदार्थानां योग्यतादिसाचिव्याच्छब्देनान्वयो बोध्यते, न चापूर्वं स्मृतिगोचर इति वाच्यम्। शक्तिग्रहपदार्थस्मरणवाक्यानुभवादीनां समानप्रकारत्वेनैव कार्यकारणभावात्, लाघवादावश्यकत्वाच्च। न च क्वचित् सहचारमात्रेणान्वयप्रतियोगिन एव स्मृतिरन्वयबोधे हेतुः, गौरवात्। प्रकृतेऽपि कार्यशक्ता लिङिति शक्तिग्रहात् कार्यमिति ततः स्मृतिः, यागविषयकं कार्यमित्यनुभव इति क्रमेण तेषां समानप्रकारकत्वमस्त्येवेत्यभिसन्धायाह—

**अस्त्विति।** यदि कार्यत्वेन क्रियासाधारण्येन लिङः शक्तिग्रहः, स्वर्गकामायोग्यतया च क्रियानिरासः, तदा 'अहरहः सन्ध्यामुपासीत, न कलञ्जं भक्षयेदि'त्यत्र नित्यनिषेधापूर्वयोरलाभः, न हि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते, फलाश्रवणेन न्यायसम्पादनानवकाशादित्याह **नित्येति।** अस्मिन् पक्षे–कार्यत्वप्रवृत्तिनिमित्ततापक्षे। **न्यायेति।** न ह्यपूर्वत्वेन शक्तिरपि तु कार्यत्वेन कार्ये धर्मिणि, क्रिया च तथा भवत्येवेति न तद्भिन्नं लिङा बोध्येतेत्यर्थः।

ननु न लोके कार्ये धर्मिणि शक्तिः कल्पिता, किन्त्वनन्यलभ्ये कृतिरूपे कार्यत्वमात्रे, धर्मिणः पाकादेर्धातोरेवोपस्थितिसम्भवात्। क्रियाकार्यत्वस्य चान्विताभिधानलभ्यत्वात्। तथा च धर्मिणि शक्तिर्वेद एव कल्प्या, सा च क्रियानिरासेनैव, क्रियाया अन्वययोग्यत्वे धर्मिणि शक्तिग्रहस्या-

प्रकाशिका।

**स्थायिकार्यत्वमेवेति।** अपूर्वनिष्ठमिति शेषः। यद्वा अपूर्वमेवानेनोपलक्षितम्–अत एवाग्रे तस्यैव दूषणं किञ्चेत्यादिना। कार्यत्वमात्रमित्युपलक्षणम्–क्रियासाधारणं कार्यमात्रमभेदश्चान्वय इत्यपि द्रष्टव्यम्।

मकरन्दः।

**स्थायिकार्यत्वमेवेति।** अपूर्वनिष्ठमिति शेषः। यद्वा अपूर्वत्वमेवानेनोपलक्षितम्, अत एव किञ्चेत्यादिना तदेव दूषयतीति भावः।

र्थेनान्यत्र तथैव व्यवहार इति सम्भवति । कार्यत्वस्यैव प्रवृत्तिनिमित्तत्वेन निर्णीतत्वात्, न त्वपूर्वत्वस्य । न्यायसम्पादनायाश्च तत्रासम्भवात् । फलानुगुण्येन हि

प्रकाशः ।

शक्यत्वात् । तस्मादयोग्यतया क्रियायां निरस्तायां धर्मिणि शक्तिग्रहकाले वस्तुतो यत्क्रियाभिन्नं कार्यं, तत्र शक्तिः । तथा च नित्यनिषेधयोरपि तदेवोपासनाद्यन्वययोग्यं लिङाऽभिधीयते, क्लृप्तत्वात्, न तु क्रियान्वययोग्यकार्यत्वमात्रं, लक्षणाप्रसङ्गात्, धर्मिणि बाधकाभावाच्च । अत एव क्रियाकार्यत्वे लौकिकी लिङ् लाक्षणिकी, उक्तरीत्या क्रियानिरासेनैव वेदे धर्मिणि शक्तिकल्पनात् । लौकिकानां तत्र तात्पर्यासम्भवात्, क्रियासाधारणशक्तावपि लोके लिङ् लाक्षणिकी । पचेतेत्यादौ पाककार्यताज्ञानेऽपि लाघवात् कार्यत्वे लिङस्तात्पर्यम्, न तु धर्मिण्यपि धातुलभ्यत्वात्, तथा च तृतीयायाः करणैकत्ववत् कार्यं कार्यत्वञ्च न स्वतन्त्रं शक्यं, किन्तु विशिष्टम्, विशिष्टाच्च विशेषणमन्यदेवेति कार्यत्वे लक्षणा । न चानुपपत्त्या कार्यत्वविशिष्टोपस्थितावपि धर्म्यंशमपहाय क्रियायाः कार्यत्वान्वयोपपत्तौ किमुपस्थित्यन्तरार्थं लक्षणयेति वाच्यम् । यत इतरधर्मिगतत्वेनोपस्थितस्य कार्यत्वस्य न धर्म्यन्तराकाङ्क्षाऽस्ति, येन तदितरधर्म्यन्वयो ज्ञायेत, तथा च स्वतन्त्रकार्यत्वोपस्थितये लक्षणा युक्ता ।

मैवम् । **कार्यत्वमात्रशक्तस्य** लिङ्पदस्यापूर्वलक्षणयैवोपपत्तौ तत्र शक्तौ मानाभावात् । न चापूर्वं शक्यकार्यत्वसम्बन्धितया न ज्ञातमिति न तत्र लक्षणेति युक्तम् । यथा हि शक्तिपक्षे कार्यत्वेन रूपेण घटादावेव लिङः शक्तिग्रहः कार्यमिति ततः स्मृतिश्चानुभवदशायां च योग्यतावशात् घटादिकं विहायापूर्वं भासते, तथा लक्षणायामपि लिङ्वाच्यं कार्यत्वं कार्यघटादिसम्बन्धितया ज्ञातं कार्यं घटादि स्मारयतु, योग्यतावशाच्चापूर्वमनुभवे भासताम्, कार्यस्मरणं हि अन्विताभिधानोपयोगि न त्वपूर्वस्मरणम्, **तच्च पदेन पदार्थेन** वेति न कश्चिद्विशेषः । न च लिङो लाक्षणिकत्वेनापूर्वानुभवप्रसङ्गः, लाक्षणिकपदस्यानुभावकत्वादिति युक्तम् । त्वन्नये इतरान्वितस्वार्थशक्तस्य यजिपदस्यैवेतरदपूर्वमादायानुभावकत्वात्, अन्यथा तीरादेरप्यननुभवापत्तिः ।

अथेतरोपलक्षितस्वार्थान्वयमात्रे पदानां शक्तिर्न तु इतरत्रापि, गौरवात्, पदान्तरलभ्यत्वाच्च। न च तीरादिप्रतिबन्धिः, तत्र हि तीरोपलक्षितान्वयशालिस्वार्थान्वयानुभावकत्वं वसतीत्यादिपदस्य, तीरस्य तु संस्कारादुपस्थितिः, प्रकृते चापूर्वस्य संस्काराविषयत्वादिति चेत् । न । मञ्चाः क्रोशन्तीत्यत्र मञ्चस्थाः पुरुषाः क्रोशन्तीत्यवगम्यते, न च मञ्चस्थः पुरुषः प्रागनुभूतो येन तीरमिव

प्रकाशिका ।

**तच्च पदेन पदार्थेन वेति** । एतच्च लक्षणास्थाने पदार्थस्य शक्यस्य लक्ष्योपस्थापकत्वमिति मतमाश्रित्य, वस्तुतः पदस्यैव लक्ष्योपस्थापकत्वमिति साक्षात्सम्बन्धेन **परम्परासम्बन्धेन** वेति विकल्पार्थो द्रष्टव्यः । न चैतादृशं बोधयति चिकीर्षाजनकस्यैव बोधकस्याकांक्षितत्वात्, एतस्य चातथात्वात्, न ह्यनेनापूर्वगोचरा चिकीर्षा तदविशेष्यकत्वात्, नापि यागविशेष्यिका तत्र कार्यत्वसम्बन्धानवगाहनात् ।

मकरन्दः ।

**कार्य्यत्वमात्र**मित्युपलक्षणं, न क्रियासाधारणं कार्य्यमात्रमभेदश्चान्वयः, न हि यदप्रयुक्तानुपपत्त्या यत्कल्पनं तदेव तस्य विषय इत्यभ्युपगमादित्यपि द्रष्टव्यम् ।

**कार्य्यमात्रशक्तस्येति** । न च स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणेति नियम इति वाच्यम् । अप्रयोजकत्वात् । अत एव नीलादिपदस्य तद्वति लक्षणाऽभ्युपगम इति भावः । अधिकं शब्दप्रकाशे द्रष्टव्यम् ।

**व्यक्तिविशेषो लभ्यते, न च तत् तत्र श्रूयते। न चाश्रुतमपि कल्पयितुं शक्यते। बीजाभावात्।**

प्रकाशः।

संस्कारादुपतिष्ठेत। न चापूर्वः पुरुषविशेषो न भासते इति वाच्यम्। गृहप्रवेशानन्तरं अयं यथा पूर्वमज्ञात एव मञ्चाः क्रोशन्तीति शब्दात् क्रोशनकर्तृतयाऽवगत इत्यनुभवात्। तस्मादनन्यगतिकतयेतरान्वितस्वार्थबोधकत्वमभ्युपेयम्।

अथैवंसति यजिपदेन स्वर्गकामकार्यविषयो याग इत्यनुभवो जन्येत, लक्षणायामितरपदस्य लक्षणीयविशेषणस्वार्थविशेष्यकानुभवजनकत्वात्, न चैतादृशो बोध आकांक्षित इति चेत्। न। **स्वर्गकामकार्यविषयो** याग इत्यनुभवेऽपि स्वर्गकामकार्य्ययोरन्वयप्रकारत्वेनापूर्वलाभात्। **तादृशशब्दानु**भवानन्तरमर्थाद्यागविषयकं कार्यमित्यौपादानिकबोधात् प्रवृत्त्युपपत्तेश्च। अस्तु वा लाक्षणिकमपि पदमनुभावकम्, तच्च द्वितीयाध्यायप्रकाशे प्रपञ्चितमस्माभिरिति नेह प्रतन्यते।

किञ्च न कार्ये घटादौ लिङः शक्तिग्रहः, स्वर्गकामायोग्यतया शक्तिग्रहकाले क्रियानिरासवत् यागान्वयानुपपत्त्या घटादिनिरासस्यापि सम्भवात्, तत्र यागविषयकत्वस्य बाधात्, अन्यथाऽन्विताभिधानकालेऽपि तन्निरासानुपपत्तेः। न च शक्तिग्रहकाले यागान्वयानुपपत्तेरप्रतिसन्धानं, किन्तु स्वर्गकामान्वयानुपपत्तिमात्रं प्रतिसन्धीयते इति युक्तम्। प्रत्ययस्यान्तरङ्गप्रकृत्यर्थान्वयं बोधयत एवेतरान्वयबोधकत्वमिति तदन्वयानुपपत्तिप्रतिसन्धानस्यैव प्राथमिकत्वात्। पुरुषदोषादप्रतिसन्धानेऽपि शक्तिग्रहस्य भ्रमत्वापत्तेः, घटादेरशक्यत्वात्। घटादीनामानन्त्येऽपि पृथिवीत्वादिनाऽन्विताभिधानकालवन्निरासोपपत्तेः। एवञ्च अचरत्कार्यनिरासे क्व कार्यधर्मिणि शक्तिग्रहः?।

एतेन—लिङ्पदमेकत्रोच्चारणे स्थायिकार्यस्वर्गजनकत्वादीनां ज्ञाने शक्तमिति व्युत्पत्तिः। स्थायिज्ञानादिकञ्चोपस्थितमेव। अतो लिङ्पदेनैकत्रोच्चारणे योग्यतादिवशाद् यागविषयकं स्थायिस्वर्गजनकं कार्यमित्येकं ज्ञानमनुभवरूपं अचरद्वस्तुविलक्षणविषयं क्रियते। न चैवं नानार्थवदेकैकज्ञाने शक्तिग्रहादेकैकविषयोऽनुभवो भवेत्, न समुदितविषय इति वाच्यम्। शक्तिग्रहकाले एकत्रोच्चारणे इति विशेषणमहिम्ना तत्सम्भवात्। नानार्थे तु प्रमाणाभावेन गौरवेण शक्तिग्रहे तस्याप्रवेशात्। तथाप्यमीषां समूहालम्बनापत्तिर्न तु मिथो वैशिष्ट्यज्ञानमिति न वाच्यम्। साकाङ्क्षधर्मधर्मिणोरेकं ज्ञानमेव हि विशिष्टज्ञानम्। इत्थमेवालौकिककार्येषु स्वर्गादिपदेषु शक्तिग्रह—इत्यपास्तम्।

स्थायिनां घटादीनां निरासाद् धर्ममात्रे च शक्तिग्रहस्य प्रकृतेऽनुपयोगात्। किञ्च तेषु समुदितेषु न शक्तिग्रहः, प्रथमं समुदायस्यैकज्ञानाविषयत्वात्। विषयत्वे वा पूर्वमेव विशिष्टस्य सत्त्वे अपूर्वत्वव्याघातः। एकज्ञानविषयकसाकाङ्क्षधर्मधर्मिणोरेव विशिष्टत्वात्। नापि प्रत्येकम्, तथाहि—लिङ्पदात् स्मरणत्रयं यजिपदाच्च यागस्मरणम्। न च चतुर्णां तेषां यौगपद्यमस्ति। न च प्रत्येकं शक्तिग्रहेऽपि समुदितविषयमेकं स्मरणं लिङ्पदादिति वाच्यम्। समुदायस्य पूर्वमननुभवात्। किञ्च एकमेव स्मरणं यदि साकाङ्क्षधर्मधर्मिविषयकं, तर्ह्यपूर्वत्वक्षतिः। तन्नैकज्ञानारूढयोः साकाङ्क्षधर्मधर्मिणोरेव विशिष्टत्वादित्यस्मत्पितृचरणाः।

ननु विश्वजिन्न्यायेन नित्येऽपि फलं कल्पयिष्यते इत्यत आह **न चेति। त्वन्नये** इति शेषः।

प्रकाशिका।

**स्वर्गकामकार्यविषय इति।** कार्यपदमत्र यागपरम्। नन्वेवमपि चिकीर्षाजनकत्वानुपपत्तिस्तदवस्थैवेत्यत आह **तादृशशब्देति**। वस्तुतस्तु एतदुत्तरकालीनो यागः कार्य इतीहोपादानिकबोधः प्रवर्त्तक इति मन्तव्यम्। **त्वन्नय इति।** त्वन्नयेऽस्य निष्फलत्वाभ्युपगमादिति भावः।

मकरन्दः।

**त्वन्नये** इति। त्वया निष्फलत्वेनाभ्युपगमादिति भावः। **न त्विति**। न त्वपूर्वं स्वर्गसाधनमिति तत्र गौणप्रयोजनत्वधीरित्यर्थः।

तद्धि विध्यन्यथाऽनुपपत्त्या कल्प्येत, कार्य्यत्वप्रत्ययान्यथाऽनुपपत्त्या वा, लोकवत् । न प्रथमः । भवतां दर्शने तस्योपेयरूपत्वात्, यतः श्रुतस्वर्गफलत्वेऽपि साध्यविवृद्धिरुच्यते । न द्वितीयः । शब्दबलेन तत्प्रत्यये तदनपेक्षणात्, लोके हि तत्प्रत्यय इष्टाभ्युपायताऽधीनो न तु वेदे इत्यभ्युपगमात् । अन्यथेष्टाभ्युपायतैव प्रथमं वेदादवगन्तव्या, प्रमाणान्तराभावात्, ततः कार्य्यतेत्यानुमानिको विधिः स्यात्, न शाब्दः ।

आनुमानिकं फलमस्तु, यत्कर्त्तव्यं तदिष्टाभ्युपाय इति व्याप्तेरित्यपि न युक्तम् । सुखेन व्यभिचारात् । अन्यत्वे सतीति चेत् । न । दुःखाभावेन व्यभिचारात् । फलं विहायेति चेत् । तदेव किमुक्तं स्यात् । इष्टं स्वभावत इति चेत् । तर्हि ततोऽन्यदनिष्टं स्यात्, तच्च कर्त्तव्यमिति व्याघातः । तत्साधनमिति चेत् । तत्साधनत्वे सतीति साध्याविशिष्टं विशेषणम् । स्वभावतो नेदमिष्टं कर्त्तव्यञ्च, ततो नूनमिष्ट

---

प्रकाशः ।

तथाच तवापसिद्धान्त इति भावः । बीजाभावं स्पष्टयति **तद्धीति** । तत्–फलम् । विधित्वं–कार्यत्वम् । तत् फलजनकत्वं विनाऽनुपपन्नं फलं कल्पयतीत्यर्थः । **लोकवदिति** । यथा लोके कार्यत्वं पाकादेरिष्टसाधनत्वेन लिङ्गेनानुमीयते इति कार्यत्वमिष्टं फलं प्रतीत्यैव प्रतीयते, तथा वेदेऽपीत्यर्थः । **उपेयरूपत्वादिति** । त्वन्मये अपूर्वस्यैव स्वतःकाम्यतयाऽनन्योद्देशकृतिव्याप्यत्वादित्यर्थः । तथा च फलजनकत्वं विनाऽपि फलस्येवापूर्वस्य कार्यत्वमुपलभ्यमानं न फलकल्पकमिति भावः । **यत इति** । यत्रापि स्वर्गः फलं श्रूयते, तत्राप्यपूर्वस्यैव स्वतःप्रयोजनता स्वर्गपर्यन्तं व्याप्नोति । **न त्वपूर्वं स्वर्गसाधन**मिति धीः, **प्रधानस्य** गुणत्वानुपपत्तेरिति तव दर्शनादित्यर्थः ।

एतच्च विरोधोद्भावनमात्रम्, वस्तुतोऽपूर्वं न स्वतः प्रयोजनं, लोके तथाऽनवगमात् । वेदेऽपि काम्यस्थले काम्यसाधनस्यैवापूर्वस्य गौणप्रयोजनस्य लिङाऽभिधानम्, काम्यसाधनताज्ञानं विना कामिकार्यत्वस्य बोधयितुमशक्यत्वात्, न तु स्वतःप्रयोजनत्वेन, तत्रासामर्थ्याद्नुपयोगाच्च । प्रवृत्तेर्भोजनादाविव लोकक्लृप्तकाम्यसाधनताज्ञानात् कार्यताज्ञानाद्वा गौणप्रयोजकत्वेनैवोपपत्तेः । अथ नित्ये लोकवेदावगतगौणमुख्यप्रयोजनाभावे सति लिङ्वापूर्वस्य स्वतःप्रयोजनत्वं बोधयति, तेन विना प्रवृत्तिपरत्वानिर्वाहादिति चेत् । न । निरुपधीच्छाविषयत्वं हि स्वतःप्रयोजनत्वमपूर्वस्य लिङा बोधनीयं, न चापूर्वस्य तादृशेच्छाविषयत्वं क्वचिदपि सिद्धमिति भावः ।

**शब्दबलेनेति** । कार्यताधीर्लैङ्गिकी, तत्र सा लिङ्गमिष्टसाधनत्वमपेक्षते, वेदे तु कार्यशक्ता लिङेव तां जनयतीति न तत्र सा तदपेक्षेतेत्यर्थः । **यदि** चापूर्वं न स्वतःकार्यमिति तत्रापि सा तदपेक्षेत, तदेष्टसाधनत्वज्ञापकस्यान्यस्याभावाद्वेद एव तद्बोधयेत्, तथाच लोकवल्लिङ्गादेव कार्य्यताधीसम्भवान्न लिङस्तत्र शक्तिः कल्प्येतेत्याह **अन्यथेति** । **साध्याविशिष्टमिति** । इष्टसाधनत्वस्यैव साध्यत्वादित्यर्थः । **स्वभावत इति** । सोपाधीच्छाविषयत्वे सति कर्त्तव्यत्वेनापूर्वं फल-

प्रकाशिका ।

**न त्वपूर्वं स्वर्गसाधनमिति धीः** । यत्र गौणप्रयोजनत्वधीरित्यर्थः । **प्रधानस्येति** । तच्चापूर्वं स्वतःप्रयोजनमेव न तु गौणप्रयोजनमित्यर्थः । तन्मतेऽस्वरसमाविष्करोति **एतच्चेति** । परं प्रत्यसिद्धान्तोद्भावनमात्रमित्यर्थः ।

मकरन्दः ।

**प्रधानस्येति** । तथा चापूर्वं स्वतःप्रयोजनमेव न तु गौणप्रयोजनमिति भावः । अत्र मते अस्वरसमुद्भावयति **एतच्चेति** । परं प्रत्यपसिद्धान्तोद्भावनमात्रमित्यर्थः । **यदि चेति** । स्वतःकाम्यत्वे इष्टसाधनत्वाभावान्न तदपेक्षेति भावः ।

साधनमिति साधनार्थं इति चेत् । न । स्वभावतो नेदमिष्टमित्यसिद्धेः । अनन्योद्देश-प्रवृत्तकृतिव्याप्तत्वात्, अन्यथा तदसिद्धेः, ततो व्याघातादन्यतरापाय इति ।

अस्तु नित्यनिषेधापूर्वयोरलाभः, किं नश्छिन्नमिति चेत् । किं नश्छिन्नं, यदा कामाधिकारेऽपि तदलाभः, न हि लिङा कार्यं स्वर्गसाधनमुक्तम् । नापि स्वर्ग-कामपदसमभिव्याहारान्यथाऽनुपपत्त्या तल्लब्धं, ब्राह्मणत्वादिवदधिकार्य्यवच्छेद-मात्रेणैवोपपत्तेः ।

न चेदमनुमानं–यस्य यदिच्छातो यत्कर्त्तव्यं, तत्तस्येष्टसाधनम्–इति । अन्ये-च्छयैव तत्कर्त्तव्यतायाः सुखेनानैकान्तिकत्वात्, औपाधिककर्त्तव्यतायाश्चेष्टसाध-नत्वमप्रतीत्य प्रत्येतुमशक्यत्वात् ॥

किमनया विशेषचिन्तया, प्रतीयते तावच्छब्दादन्यदिच्छतोऽन्यत्कार्यमित्ये-तावतैवानुमानमिति चेत् । नन्वन्वितमभिधानीयं, योग्यश्चान्वीयते, अन्यदिच्छ-तश्चान्यत् कर्त्तव्यमन्वयायोग्यं, तत्कथमभिधीयताम् । तत एव तत्साधनत्वसिद्धि-रिति चेत् । एवं तर्हीष्टसाधनतैकार्थसमवायिकर्त्तव्यत्वाभिधानादनुमानानव-काशः । न चान्विताभिधानेऽपि तत्साधनत्वसिद्धिः । अधिकार्यवच्छेदमात्रेणाप्य-न्वययोग्यतोपपत्तेः ।

---

प्रकाशः ।

साधनमित्यनुमेयमित्यर्थः । **असिद्धेरिति** । त्वन्मतेऽपूर्वस्यैव स्वतःकाम्यतया विशेषणासिद्धौ हेतुरित्यर्थः । असिद्धिं स्पष्टयति **अन्यथेति** । उद्देश्यफलान्तरसद्भावे नित्यनिषेधापूर्वत्वासिद्धेरि-त्यर्थः । **तत** इति । अपूर्वस्य स्वभावत इष्टत्वे न काम्यसाधनत्वं, तथात्वे वाऽनन्योद्देशप्रवृत्तकृति-व्याप्यत्वरूपं स्वभावत इष्टत्वं नेत्येकतरसत्त्वमन्यतरसत्त्वविरुद्धमित्यर्थः ।

तदलाभोऽपूर्वालाभः । किं निरपेक्षा लिङेवं स्वर्गसाधनतामाह येन तत्साधनं स्थिरमपूर्वं शब्द-बोध्यं, स्वर्गकामपदसमभिव्याहृता वा ? आद्ये न हीति । तथा सति लौकिकी लिङनर्थिका स्यात् । वेदेऽप्यनन्योद्देश्यकृतिव्याप्यत्वरूपस्य कार्य्यत्वस्य स्वर्गसाधनत्वविरोध इति भावः । द्वितीयमाश-ङ्क्यान्यथासिद्ध्या निराकरोति **नापीति** । यथा यस्य ब्राह्मण्यमस्ति तस्य कार्य्यमिति धीः, तथा यस्य स्वर्गकामनाऽस्ति तत्सम्बन्धि कार्य्यमिति शाब्दी धीः, न तु स्वर्गोद्देशप्रवृत्तकृतिसाध्यं कार्य्य-मिति, तथाच न स्थायिनोऽपूर्वस्य लाभ इत्यर्थः ।

अनुमानादपूर्वलाभोऽस्त्विति मतमाशङ्क्य निराकरोति **न चेदमिति** । **यस्येति** । काम्या-साधने कामिनः कर्त्तव्यताज्ञानाभावाद्व्याप्तेरित्यर्थः । किमन्येच्छया कर्त्तव्यत्वं, स्वभावतो वा ? आद्ये, **अन्येच्छयेति** । अन्येच्छया कर्त्तव्यत्वेऽनन्योद्देशप्रवृत्तकृतिसाध्यत्वं भज्येतेत्यर्थः । अन्त्ये, **तदिति** । आद्ये दूषणान्तरमाह **औपाधिकेति** ।

अत्र स्वाभाविकत्वौपाधिकत्वरूपविशेषाविवक्षायां कर्त्तव्यत्वमात्रं विवक्ष्यते, तच्च शब्देनान्ये-च्छोरेव बोध्यते इति पूर्वमनुमानमदुष्टमेवेत्याह—

**किमनयेति** । इष्टसाधनताऽभिधानं विनाऽन्यदिच्छतोऽन्यत् कर्त्तव्यमयोग्यतया नान्वेतुमर्ह-तीत्याह **नन्विति** । काम्यभिन्नस्य कामिकार्य्यस्य काम्यसाधनस्यैवान्वययोग्यत्वादित्यर्थः । **तत एवेति** । शब्दादेवेष्टसाधनत्वसिद्धिरित्यर्थः ।

अस्तु वा अन्यदिच्छतोऽन्यत् कर्त्तव्यमन्वययोग्यं, तथापि नेष्टसाधनत्वमनुमातुं शक्यते, ब्राह्मणत्वस्येव स्वर्गकामत्वस्याधिकारितावच्छेदकत्वेनाप्यन्वययोग्यतोपपत्तेरित्याह **न चान्वि-तेति** । वस्तुतः तवापूर्वस्यैव स्वतःकाम्यसाधनत्वं विरुद्धमिति भावः ।

**न च कार्य्यत्वमपूर्वे सम्भवति। तद्धि कृतिव्याप्यता चेत्, ब्रीह्यादिष्वेव, सिद्धत्वात्। कृतिफलत्वाच्चेत्, यागस्यैव, ततस्तस्यैवाहत्योत्पत्तेः। कृत्युद्देश्यता चेत्, स्वर्गस्यैव, निसर्गसुन्दरत्वात्। न त्वपूर्वस्य, तद्विपरीतत्वात्। स्तन्यपानादिवदौपाधिकीति चेत्। साऽपि यागस्यैव। स्वर्गस्य साध्यत्वस्थितौ यागस्यैव साधनत्वेनान्वयात्।**

**कालव्यवधानान्नैतन्निर्व्वहतीति चेत्, यथा निर्व्वहति श्रुतानुरोधेन तथा**

प्रकाशः।

कार्य्यत्वमपूर्वस्य विकल्प्य निराकरोति **न चेति। तद्धीति।** कृतिजन्यव्यापाराश्रयत्वमित्यर्थः। न ह्यसिद्धस्य व्यापारभागित्वमिति भावः। कृतिफलत्वं **कृत्यनन्तर**भावित्वमिति भावः। कृत्युद्देश्यत्वमनन्योद्देशकृतिव्याप्यत्वमित्यर्थः। **तद्विपरीतत्वादिति।** सुखदुःखाभावयोरेव स्वतःकाम्यत्वादित्यर्थः। न च लिङैव तद्बोध्यते, वस्तुसत एव बोध्यत्वात्। न चापूर्व्वस्य निरुपाधीच्छाविषयत्वमस्ति, यल्लिङा बोध्येतेत्युक्तमिति भावः। साऽपीति। औपाधिकीष्टसाधनता यागस्य स्वर्गसाधनतयाऽस्तीति कृतिसाध्यत्वमप्यौपाधिकमिति तत्परित्यागे नापूर्व्वसिद्धिरित्यर्थः।

यागस्याशुतरविनाशित्वात् स्वर्गस्य च कालान्तरभावित्वात् यागस्य स्वर्गसाधनत्वं न सम्भवतीत्याह **कालेति।** यागस्य प्रतीतस्वर्गसाधनताऽन्यथानुपपत्त्या फलसमयपर्यन्तस्थायी व्यापारः कल्प्यते इत्याह **यथेति।**

ननु साधनताप्रतीतिरेव योग्यताज्ञानाभावान्न सम्भवति। तथाहि स्वर्गसाधनताज्ञानं यागस्य भवत्साक्षात्साधनताविषयकं भवेत् परम्परासाधनताविषयकं वा, एतदुभयोदासीनसाधनताविषयकं वा? नाद्यः, आशुतरविनाशित्वेन क्रियायाः कालान्तरभाविस्वर्गाव्यवहितपूर्व्वसमयावृत्तित्वात्। न द्वितीयः, परम्पराघटकस्यानुपस्थितेः।

अथास्तु तृतीयः, तथाहि—साक्षात्परम्परोदासीनसाधनतामात्रं यागस्य स्वर्गं प्रति नायोग्यम्। न च साक्षात्परम्पराविशेषद्वयं विना सामान्यं नास्त्येवेति वाच्यम्। साक्षात्परम्पराभ्यां विशेषणानुपपत्तेः। न च विशेषद्वयबाधे सामान्यमपि बाधितं, परम्परासाधनत्वस्याबाधनात्। बाधो हि विपरीतप्रमा। न च स्वर्गे यागो न परम्परासाधनमिति प्रमा नास्ति। न च योग्यानुपलब्ध्या परम्पराघटकबाधः, संस्कारवदयोग्यस्यापि तस्य सम्भवात्। अन्यथा वाच्येऽप्यपूर्व्वे क्रिया कामिकार्य्या न स्यात्, काम्यासाधनत्वात्। न हि यदयोग्यं तत्पश्चाद् योग्यम्। तस्मात् स्वर्गसाधनं याग इति सामान्यतः परम्परासाधनत्वमनुल्लिख्य वस्तुगत्या परम्परासाधनविषयकं ज्ञानमुत्पद्यमानं नायोग्यतया परिभवितुं शक्यमिति।

मैवम्, तथाहि—स्वर्गं प्रति यागो न साक्षात्साधनमिति ज्ञानानन्तरं स्वर्गसाधनं याग इति सामान्यज्ञानं भवत् परम्परासाधनताप्रकारकं स्यात् **एकविशेषबाधे शाब्दज्ञानस्य** तदितरविशेषप्रकारकत्वनियमात्। यथा छिद्रबाधे घटपदजन्यं घटज्ञानं छिद्रेतरत्वप्रकारकम्। न च परम्परा-

प्रकाशिका।

कृतिजन्यत्वमपूर्वस्यापीत्यन्यथा व्याचष्टे **कृत्यनन्तरेति।** कृत्यव्यवहितानन्तरेत्यर्थः। तत्रापि किञ्चिद्व्यवधानेऽपि अपूर्वापेक्षया अव्यवधानमस्त्येवेति भावः।

**एकविशेषबाधे शाब्दज्ञानस्येति।** एकविशेषबाधसहकृतसामान्यप्रकारकज्ञानजनकसामग्र्या·

मकरन्दः।

कृतिजन्यत्वमपूर्वस्यापीत्यन्यथा व्याचष्टे **कृत्यनन्तरेति।** कृत्यव्यहितानन्तरेत्यर्थः। यद्यपि तत्रापि किञ्चिद्व्यवधानं, तथाप्यपूर्वापेक्षया अव्यवधानमस्त्येवेति भावः।

प्रकाशः।

घटकानुपस्थित्या प्रकृते तथा घटते। तन्न। एतादृशनियमे मानाभावात्। न हि छिद्रवाधानन्तरं घटपदेन छिद्रेतरत्वेन ज्ञानं जन्यते, किन्तु योग्यतया छिद्रं विहाय यद्वस्तुगत्या छिद्रेतरत्, तस्य घटत्वेन ज्ञानम्। न च छिद्रेतरत्वेन ज्ञानं सम्भवत्यपि, तस्याशक्यत्वेन घटपदादुपस्थित्यभावात्। न च घटपदात्तथैवानुभव आनुभविकत्वेनोभयसिद्धः, येन लक्षणयाऽपि तथा निर्वाह्येत। न च लक्षणाऽपि, सा हि जहत्स्वार्था, अजहत्स्वार्था वा? नाद्या, घटाननुभवप्रसङ्गात्। नान्त्या, **शक्यलक्ष्यसाधारणै**करूपाभावात्। एवं सर्व्वत्र सामान्यशब्दस्य विशेषपरत्वे द्रष्टव्यम्।

अथ छिद्रेतरतया योग्यतावधारणेन शब्दानुभवात् पूर्वं नियमेनोपस्थितिः संस्कारादेव। **न च विभक्तीनां** प्रकृत्यर्थानुगतस्वार्थान्वयवोधकत्वव्युत्पत्तेस्तत्र विभक्त्यर्थो नान्वीयेतेति वाच्यम्। **प्रकृत्यर्थो हि** प्रकृतिप्रतिपाद्यः, स च प्रकृतेऽप्यस्ति, **अन्यथा** पाचकमानयेत्यत्र पाककर्त्तरि विभक्त्यर्थकर्मताऽन्वयानुपपत्तिः, तस्या**शक्यत्वात्**। तथा च संस्कारोपस्थितं छिद्रेतरत्वमादाय शाब्दान्वयवोधः स्यात्।

मैवम्, **शब्दानुपस्थितस्य** शब्देनान्वयवोधाजननात्। एतच्च शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्य्यते इत्युपपादयद्भिरस्माभिर्घ्राणादिसूत्रे प्रपञ्चितमिति नेहोपपाद्यते। संस्कारस्यानियतोद्वोधतया नियमेन तदुपस्थितेरभावाच्च। फलस्योभयासिद्धतया तद्बलेनापि नियतोपस्थितेरभावात्। तथापि सामान्यभानस्य विशेषभाननियतत्वाद् विशेषाभाने कथं सामान्यं भासते इति चेत्। न। परम्परासाधनत्वस्य परम्पराघटकानुपस्थित्याऽभानेऽपि वस्तुतः परम्परासाधनस्य भानात्।

ननु काम्यादन्यत् काम्याव्यवहितसाधनतयाऽवगतमेव कर्त्तव्यतया चेति। न च यागस्य स्वर्गाव्यवहितसाधनता सम्भवति। न च तृप्तिकामस्य पाके प्रवृत्तेर्व्यभिचारः, ओदनकामस्य तत्र प्रवृत्तेः। तृप्तिकामना च तृप्तिसाधनतत्साधनपरम्पराकामनोपयोगिनी, न तु साक्षात्, अन्यथा साधनसाधने प्रवृत्त्यभावापत्तेः।

मैवम्। काम्यसाधनत्वज्ञानस्यैव प्रवर्त्तकत्वात्, लाघवात्। न च तृप्तिकामस्य सिद्धौदनस्य पाके प्रवृत्तिप्रसङ्गः, गुरूपायत्वात्, इष्टोत्पत्त्यनान्तरीयकदुःखजनकत्वज्ञानस्य प्रतिवन्धकत्त्वाच्च। तस्मात् प्रतीता स्वर्गसाधनता व्यापारं विनाऽनुपपद्यमाना व्यापारमपूर्वं कल्पयति।

प्रकाशिका।

स्तदितरविशेषप्रकारकज्ञानजनकतानियमादित्यर्थः। **शक्यलक्षणसाधारणेति**। यद्यपि तादृशरूपाभावेपि राजपुरुषपदादिवल्लक्षणास्त्विति वाच्यम्, तथापि शक्यस्य लक्ष्याविशेषणतयोपस्थितिरित्यत्र तद्वैषम्यात्। **न च विभक्तीनामिति**। तथा च छिद्रेतरत्वस्य शब्दानुपस्थितौ तद्विशिष्टे तृतीयार्थकरणत्वान्वयो न स्यादित्यर्थः। **प्रकृत्यर्थो हीति**। प्रकृतितात्पर्यविषयत्वं प्रकृतिप्रतिपाद्यत्वं छिद्रेतरत्वविशिष्टेऽस्त्येव, यद्वा संस्कारसहितप्रकृतिप्रतिपाद्यत्वेऽपि प्रतिपाद्यत्वमस्त्येवेति भावः। **अन्यथेति**। यदि स्ववृत्त्या प्रत्युपस्थाप्य एव विभक्त्यर्थान्वय इत्यर्थः। शक्यत्वादित्युपलक्षणमशक्यत्वाच्चेत्यपि द्रष्टव्यम्। शब्दात्मेति शेषः। नन्वपूर्वानभ्युपगमे प्रायश्चित्तवैफल्यमित्यत आह

मकरन्दः।

**प्रकृत्यर्थो हीति**। यद्यपि संस्कारस्योपस्थापकत्वमुक्तं न तु प्रकृतेः, शक्तिलक्षणयोरभावे तदुपस्थापकत्वस्यासम्भवाच्च, अत एव **शब्दानुपस्थितस्ये**ति सिद्धान्ते वक्ष्यति। तथापि प्रकृतिप्रतिपाद्यत्वं प्रकृतितात्पर्य्यविषयत्वमित्येके। तन्मते औपादानिकी तदुपस्थितिः, तत्र प्रकृतेरपि तेन हेतुताभ्युपगमात् तथोक्तमित्यन्ये।

**अन्यथेति**। यदि वृत्त्युपस्थितस्यैव विभक्त्यर्थान्वयस्तदेत्यर्थः।

**कल्प्यताम् । व्यापारद्वारा कथञ्चित् स्यात्, न तु भिन्नकालयोर्व्यापारव्यापारिभावः । कारणत्वञ्च व्यापारेण युज्यते । अव्यवधानेन पूर्व्वकालनियमश्च तत्त्वम् । अन्यथाऽतिप्रसङ्गादिति चेत् । न, पूर्व्वभावनियममात्रस्य कारणत्वात् । कार्य्यानुगुणावान्तरकार्य्यस्यैव व्यापारत्वात्, कृषिचिकित्सादौ बहुलं तथा व्यवहारात् । लाक्षणिकोऽसाविति चेत् । न । मुख्यार्थत्वे विरोधाभावात् ॥**

---

प्रकाशः ।

ननु व्यापारेण तन्निर्वाहो न तज्जननात्, उत्तरवर्त्तित्वेन व्यापारस्य तत्रासामर्थ्यात् । न ज्ञापनात्, लिङ्गेव तज्ज्ञापनात् । न च चिरध्वस्तं कारणं व्यापारव्याप्तं, विपक्षे बाधकाभावात्, **प्रायश्चित्तस्य च फलप्रतिबन्धकत्वं स्यात्**, तस्मात् पापान्मुच्यते इति फलश्रवणस्य च निषिद्धक्रियातः फलभागी न भवतीत्यर्थः । न च मुख्ये बाधकाभावः, उपस्थितत्वेन विहितनिषिद्धक्रियायामेव धर्माधर्मशक्तिग्रहस्य बाधकत्वात् ।

मैवम् । चिरध्वस्तस्य व्यापारसत्त्वे कारणत्वमिति निरुपाध्यन्वयव्यतिरेकाभ्यां व्याप्त्यवधारणात् । न चाप्रयोजकत्वं, यागो यदि चिरध्वस्तत्वे सति सव्यापारो न स्यात्, स्वर्गसाधनं न स्याद्धटवदिति विपक्षबाधकात् । न चात्र कारणताग्राहकाभाव उपाधिः, तेनापि समं व्याप्त्यवधारणेन तस्याप्यापादनात् ।

तथापि देवताप्रीतिर्यागव्यापारोऽस्तु । न च तत्र मानाभावः, यजिधातोः पूजार्थतया तस्याश्चाराध्यप्रीतिहेतुक्रियात्वात् । तथाच यागस्य देवताप्रीतिसाधनत्वेन कालान्तरभाविस्वर्गं प्रति तद्द्वारा साधनतोपपत्स्यते, प्रीतेः क्षणिकत्वेऽपि तदनुभवजनितसंस्कारद्वारा तत्सम्भवात् ।

अत्राहुः—देवतोद्देशेन द्रव्यत्यागेन देवताप्रीतिर्जन्यते इत्यत्र मानाभावः, यज देवपूजायामिति शाब्दिकस्मृतिः, स्मृतित्वादेव न स्वतः प्रमाणम् । तन्मूलञ्च मानान्तरं नास्त्येव । न वा स्वर्गस्य प्रीतदेवतासाध्यत्वे मानम् । वस्तुतो लाघवात् कर्तृगतफलावसानिकव्यापारस्य कल्पनान्न देवताप्रीतिर्व्यापारः । न च स्वर्गभागिदेहान्तरमेव तद्व्यापारः, प्रलये विच्छेदेऽपि तद्व्यापारानुवृत्तेः, शरीरस्य च कार्य्यद्रव्यतया अभावात्, नापि ध्वंस एव तद्व्यापारः, तस्यानन्त्येऽपि स्वभावात् सावधिफलजनकत्वमिति वाच्यम् । प्रतियोगिध्वंसयोरेकत्राजनकत्वादिति संक्षेपः ।

शङ्कते **व्यापारेति** । न च प्रकृते तथेति शेषः । कारणस्यावान्तरव्यापरयोगः, यागश्च न स्वर्गकरणं, कार्य्याव्यवहितप्राक्कालसत्त्वस्य कारणत्वादित्यर्थः । अत्राव्यवहितत्वमतन्त्रं गौरवात् । अतएव न सहभावेन कारणत्वम् । न च विनश्यदवस्थसमवायिनः कारणत्वापत्तिः, तावता समवायिकारणस्यैव तथात्वादिति परिहरति पूर्व्वभावेति । **कार्य्येति** । यज्जन्यं सज्जन्यजनकं, स एव तस्य व्यापार इत्यर्थः । **कृषीति** । यथा माघमासीयभूकर्षणस्य पाकजपरम्पराव्यापारद्वारा हेमन्त-

प्रकाशिका ।

**प्रायश्चित्तस्य चेति** । निषिद्धक्रियासमानकालीनप्रायश्चित्तादिप्रागभावस्याव्यवधानेन जनकत्वादिति भावः । कारणमित्यनुषञ्जनीयम् । विकल्पत्वेऽस्य पृथक् दूषणं न्यूनत्वापत्तिः, प्रयत्नादेः शब्दधर्म्मत्वाभावाद्विरोधश्चेति भावः ।

मकरन्दः ।

**अशक्यत्वादित्यु**पलक्षणम्—अलक्ष्यत्वाच्चेत्यपि द्रष्टव्यम् । **शब्दानुपस्थितस्येति** । वृत्त्येति शेषः । नन्वेवमपूर्वानभ्युपगमे प्रायश्चित्तविधिर्वैफल्यमित्यत आह **प्रायश्चित्तस्य च फलप्रतिबन्धकत्वं स्यादिति** ।

अस्तु तर्हि पुत्रेण हते ब्रह्मणि चिरध्वस्तस्य पितुस्तमवान्तरव्यापारीकृत्य कर्त्तृत्वम् ; तथाच लोकयात्राविप्लव इति चेत् । न । सत्यपि सुते कदाचित्तद्-करणात् तस्मिन्नसत्यपि कदाचित् करणादनिर्वाहकतया तस्य व्यापारत्वायोगात्। यं जनयित्वैव हि यं प्रति यस्य पूर्वभावनिर्वाहः, स एव तं प्रति तस्य व्यापारो नापरः, यथाऽनुभवस्य स्मरणं प्रति संस्कारः, तस्य ह्यन्वयव्यतिरेकानुविधाने सिद्धे तदन्यथाऽनुपपत्त्या संस्कारः कल्प्यते, न त्वन्यथा, तथेहापि । न चेदेवं, तवापि ब्रह्मभिदुरशरविमोकसमसमयहतस्य हन्तृत्वं न स्यात्, स्याच्च स्वनिवेशनशयानस्य तत्पितुरिति । एतेनोभयं वेति निरस्तम् ।

अस्तु तर्हि क्रियाधर्म्म एव कार्यत्वं विधिः, सर्वो हि कर्त्तव्यमेतदिति प्रत्येति, ततः कुर्यामिति सङ्कल्प्य प्रवर्त्तते इति चेत् । न । कर्त्तव्यं मयेति कृत्यध्यवसायार्थो वा स्यात्? कर्तव्यं मयेत्युचितार्थो वा स्यात्? तत्र प्रथमः सङ्कल्पान्न भिद्यते। व्यवहितकार्यसङ्कल्पो हि कर्त्तव्यो मयेति, सन्निहितकार्यसङ्कल्पस्तु कुर्यामिति । स च न लिङर्थः । सत्तामात्रेण प्रवर्त्तनादित्युक्तम् । तदेतत् कर्त्तव्यतायां जातायां प्रवर्त्तते इति वस्तुस्थितौ भ्रान्तैर्ज्ञातायामिति गृहीतम् ।

औचित्यन्तु क्रियाधर्म्मः प्रागभाववत्त्वं, तस्मिन् सति शक्यत्वं वा, तस्मिन् सति कर्तारं प्रत्युपकारकत्वं वा? प्रथमे कुतश्चिदपि न निवर्त्तेत । द्वितीये दुःखेऽपि तथाविधे प्रवर्त्तेत । तृतीये तु वक्ष्यते ॥ १२ ॥

---

प्रकाशः ।

भाविसस्यजनकत्वम्, यथा वा दशमूलीकषायपानस्य धातुसाम्यद्वारा भाविज्वरशान्तिजनकत्वमित्यर्थः । व्यवहितस्य कारणत्वेऽतिप्रसङ्गमाह—**अस्त्विति** । येन विना यत्कारणत्वं न निर्व्वहति तस्य स व्यापारः, न च पितुः कारणत्वं पुत्रं विना न निर्व्वहतीति न स व्यापार इत्याह **सत्यपीति** । तदेव स्पष्टयति **यं जनयित्वैवेति**। यदि च कार्य्यसमानकालस्यैव कारणत्वं, तदा तवाप्यनिष्टमित्याह **न चेदेवमिति** । **उभयं वेति** । कार्यत्वमपूर्वत्वञ्च लिङः प्रवृत्तिनिमित्तमित्यर्थः । कृत्यध्यवसायः–कृत्यनुकूलेच्छा उचितार्थोऽर्हार्थः । तत्रैव कृत्यविधानादिति भावः । **व्यवहितेति** । प्रवृत्त्यपेक्षयेति शेषः । स चेति, उभयरूपोऽपि सङ्कल्पः ।

तस्याज्ञातस्यैव प्रवृत्तिहेतुत्वेन प्रवर्त्तकज्ञानाविषयत्वादित्यर्थः । सङ्कल्पविधिवादिनमुपहसति **तदेतदिति** । शक्यत्वं कृतिसाध्यत्वमित्यर्थः । **कुतश्चिदिति** । अनिष्टादपीत्यर्थः । **तृतीये इति** । इष्टसाधनार्थत्वनिरासेनेत्यर्थः । तद्धर्मोऽभिधा वेति । वाक्यार्थज्ञानानुकूला भावना–शब्दव्यापारादिपदवाच्या अभिधा शब्दधर्मो वा लिङर्थः । तदाहुर्भट्टपादाः—

अभिधां भावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना चान्या सर्वाख्यातेषु गम्यते ॥ इति ।

तदर्थो भावनादिर्वेत्यत्र **करणमित्यनुपञ्जनीयम्** । लिङर्थो भावादिः प्रयत्नादिः करणं, तद्धर्म इष्टसाधनता वेत्यर्थः ॥ १२ ॥

मकरन्दः ।

**करणमित्यनुपञ्जनीयमिति** । यदि हि धर्म्मविकल्प एवायमपि स्यात्, तदाऽस्य पृथग्दोषात् न्यूनत्वापत्तिः । करणविकल्पे च शब्दः । प्रयत्नादिश्च करणत्वेन विकल्पितः, तद्धर्म्मश्चाभिधा इष्टसाधनता वेति विकल्पद्वयं पर्य्यवस्यति । तच्च दूषितमेव । किञ्च धर्म्मविकल्पपक्षे प्रयत्नादेः शब्दधर्म्मत्वाभावाद्विरोध इति भावः ॥ १२ ॥

अस्तु तर्हि करणधर्म्मः । न । करणं हि शब्दः, तद्धर्म्मोऽभिधा वा स्यात्, तदर्थो भावनादिर्वा, तद्धर्म्म इष्टसाधनता वा ? न प्रथमः,—

**असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।**
**बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १३ ॥**

सङ्गतिप्रतिसन्धानाधिकायां तस्यां प्रमाणाभावात् । अन्यसमवेतस्यापूर्ववदन्यव्यापारत्वेनाप्युपपत्तेः । विषयतयाऽपि च स्वव्यापारं प्रति लिङ्गवद्धेतुभावाविरो-

---

प्रकाशः ।

पराभिमतशब्दधर्मस्वरूपाभिधायां मानाभावादित्याह **असत्त्वादिति** । तत्सत्त्वेऽपि पदान्तरेण तदुपस्थितौ ततोऽपि न प्रवृत्तिरित्याह **अप्रवृत्तेश्चेति** । सर्वत्रान्यत्र पक्षेषु बाधकसत्त्वात् परिशेषेणाभिधा लिङर्थ इत्यपि नास्ति, तत्रापि बाधकसत्त्वादित्याह **बाधकस्येति** ।

ननु शब्दस्य वाक्यार्थधीकारणत्वात् तस्य व्यापारेण भाव्यमवश्यमित्यभिधैव तद्व्यापारः । किञ्च पदानां प्रत्येकमर्थज्ञानाजनकत्वादाशुविनाशितया क्रमभावितया च तन्मेलकस्याभावादर्थज्ञानानुपपत्त्या अभिधा कल्प्यते इत्यत आह **सङ्गतीति** । सङ्गतिस्मृतिरेव पदस्यावान्तरव्यापारः, एकस्मृतिविषयानुपूर्वीविशेषविशिष्टपदमालैव पदार्थस्मृतिव्यापारा वाक्यार्थधीकरणमिति न तत्र मानमित्यर्थः ।

ननु सङ्गतिस्मृतिर्न शब्दव्यापारः, व्यापारिणं विहायान्यत्रात्मनि तत्समवायात्, ततो यः शब्दसम्बन्धस्तद्व्यापारः साऽभिधा स्यादित्यत आह **अन्येति** । यथाऽऽत्मसमवेतमपूर्वं यागादेः करणस्य व्यापारः, तथा सङ्गतिस्मृतिरपि तादृशी शब्दव्यापार इत्यर्थः । अतएव—यद्व्यापारे कर्तृ तदेव करणं, यथा पाककरणानि काष्ठानि ज्वलनावान्तरव्यापारकर्तॄणि, न च **स्वविषयज्ञाने** शब्दः कर्ता किन्तु कर्म—इत्यपास्तम् । कर्तृपदस्य मुख्यार्थतायामचेतनस्य व्यापारासम्भवात्, हेतुमात्रविवक्षायाञ्च **प्रकृतेऽप्यदोषा**दिति भावः ।

**ननु** व्यापारी व्यापारकारणं भवति, न च सङ्गतिस्मृतौ पदं कारणम्, अतः शब्दजन्याभिधा मन्तव्येत्यत आह **विषयतयाऽपीति** । यथा लिङ्गस्य स्वविषयपरामर्शे विषयतया हेतुत्वं, तथा शब्दस्यापि सङ्गतिस्मृतावित्यर्थः । अस्मन्मते स्मृतेर्विषयाजन्यत्वेऽपि परमतेनेदमुक्तम् । अस्तु वा

प्रकाशिका ।

**स्वविषयज्ञान इति** । सङ्गृहीतग्रहरूपे शब्दव्यापारतयाभिमतेत्यर्थः । **प्रकृतेऽप्यदोषादिति** । विषयतया **कथञ्चिल्लिङ्गवद्धेतुत्वा**दिति मूले एवोक्तत्वादिति भावः । तदेव दर्शयितुं शङ्कते **नन्विति** । पुरुषार्थसुखादिप्रतिसन्धानस्यैव प्रवर्तकत्वादिति भावः ।

मकरन्दः ।

**स्वविषयज्ञाने**—सङ्गतिग्रहरूपशब्दव्यापारतया अभिहिते इत्यर्थः । प्रकृतेऽपीति । विषयतया कथञ्चित् लिङ्गवद्धेतुत्वादिति मूल एवोक्तत्वादित्यर्थः । तदेव दर्शयितुं शङ्कते **नन्विति** ।

टिप्पणी ।

अनिष्टसाधनताज्ञानकालेऽपि कार्यताज्ञानसंभवात् प्रवृत्त्यापत्तेरित्यर्थः । लिङादिशब्दात्मककरणवृत्तिधर्मरूपा याऽभिधा तज्ज्ञानं प्रवर्तकमिति, लिङाद्यर्थो यो भावनादिः स एव करणं तद्धर्मस्येष्टसाधनत्वस्य ज्ञानं प्रवर्तकमिति वा विकल्प्य दूषयति **करणं हीति** । **गरीयसी** लिङर्थता उचिता । नन्वन्यस्य बाधात् लिङर्थत्वं परित्यक्तं ततः परिशेषात् भावनैवास्तु लिङर्थ इत्यत आह **बाधकस्येत्यादि** । इच्छादेर्लिङर्थत्वे यथा बाधकमुक्तं तथाऽत्रापि समानमित्यर्थः ।

धात्, अधिकत्वेऽपि ततोऽप्रवृत्तेः। बालानां तदभावेऽपि तद्भावात्। शब्दान्तरेण तच्छ्राविणामप्यप्रवृत्तेः।

न च विलक्षणैव सा लिङो विषयः। तद्वैलक्षण्यं प्रतीतं प्रति चेत्, अर्थविशेषोऽपि स्यात्। प्रवृत्तिमात्रं प्रति चेत्, अभिधासमवेतं तदिति कुतः? तत्सन्निधानादिति चेत्। न। अनियमात्। अन्यस्य सर्वस्य निषेधादिति चेत्। न। प्रवृत्तिहेतुत्वनिषेधस्य तुल्यत्वात्। शब्दैकवेद्यत्वे चाव्युत्पत्तेः।

प्रवृत्त्यन्यथाऽनुपपत्तिसिद्धे व्युत्पत्तिरित्यपि वार्त्तम्। न हि प्रवृत्तिहेतुः कश्चिदस्तीति प्रवर्त्तते। इष्टसाधनता तु स्यात्। सर्वो हि मया क्रियमाणमेतन्मतं समीहितं साधयिष्यतीति प्रतिसन्धत्ते, तत इच्छति कुर्यामिति, ततः करोतीति सर्वानुभवसिद्धम्।

तदयं व्युत्पित्सुर्यज्ज्ञानात् प्रयत्नजननीमिच्छामवाप्तवान्, तज्ज्ञानमेव लिङ्श्राविणः प्रवृत्तिकारणमनुमिनोति।

---

प्रकाशः।

शब्दव्यापारोऽभिधा लिङ्वाच्या, तथापि नासौ प्रवृत्तिहेतुः अपुरुषार्थत्वादित्याह **अधिकत्वेऽपीति**। अभिधायामव्युत्पन्नानामभिधाज्ञानाभावेऽपि प्रवृत्तिसत्त्वादित्याह **बालानामिति**। अभिधादिपदैरभिधां ज्ञातवतोऽप्यप्रवृत्तेरित्याह **शब्दान्तरेणेति**।

अथाभिधादिपदात्तत्सामान्यज्ञानेऽपि न प्रवृत्तिः, लिङभिधेयविलक्षणाभिधाज्ञानस्य प्रवर्त्तकस्य ततोऽनुत्पादात्, अत एव नाख्यातान्तरेण तज्ज्ञानेऽपि प्रवृत्तिः, अत्राह **न चेति**। **प्रतिपत्ति प्रतीति**। प्रतिपत्तिविशेषकमित्यर्थः। **अर्थविशेषोऽपीति**। अर्थविशेषं विना बुद्धिविशेषस्यानुत्पत्तेरित्यर्थः। यदि प्रवर्त्तकज्ञानविशेषादेव सोऽर्थः प्रतीयते, तदा लोके **यत्प्रतीयमानं** प्रवर्त्तकत्वेन ज्ञातं तत् लिङा वाच्यम्, न चाभिधायां तत्सम्भवतीति भावः।

अथाभिधाज्ञानमात्रस्याप्रवर्त्तकत्वात् प्रवृत्त्यैव तद्वैलक्षण्यमनुमेयं, तत्राह **प्रवृत्तिमात्रमिति**। **तदिति**। अभिधायाः सन्निहितत्वात्तद्वैलक्षण्यं प्रवर्त्तकमित्यर्थः। **नानियमादिति**। वौद्धसन्निधानं धात्वर्थे इष्टसाधनत्वे चास्तीत्यर्थः। प्रवृत्तिहेतुत्वस्य निषेधः प्रमाणान्तरात्, विधिवादसन्निधेर्वा? आद्ये **प्रवृत्तिहेतुत्वेति**। अन्त्ये **तत्सन्निधीति**। यथाऽभिधायां विधिसन्निधिनिषेधोऽशक्यः, तथा धात्वर्थादावपीत्यर्थः।

ननु मानान्तरादभिधाज्ञानेऽपि न प्रवृत्तिः, लिङादिपदैकवेद्याभिधाज्ञानस्य प्रवर्त्तकत्वादित्यत आह **शब्दैकेति**। एवं तत्र लिङादिशक्तिग्रह एव न स्यात्, मानान्तरेण तदनुपस्थितेरित्यर्थः। **न हीति**। प्रवृत्त्यन्यथानुपपत्त्या हि तद्धेतुः कश्चिदित्येव ज्ञानं स्यात्, न च तत्प्रवर्त्तकमित्यर्थः। द्वितीयं पक्षमाह **इष्टसाधनता त्विति**। करणधर्मो विधिरिति शेषः। तदुपपादयति **सर्वो हीति**। **मयेत्यादि**नाऽसाध्ये कृत्यसाध्ये स्वकृत्यसाध्ये च प्रवृत्तिर्निवारिता।

**तदयमिति**। ननु कार्य्यत्वमेव विधिः, तथाहि—ज्ञानस्य कृतावुपायायां चिकीर्षाऽतिरिक्तं न कर्त्तव्यम्, सा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयेच्छा, पाकं कृत्या साधयामीति तदनु-

प्रकाशिका।

**प्रतीयमानमिति**। इष्टसाधनत्वादिकमित्यर्थः।

मकरन्दः।

**अपुरुषार्थत्वादिति**। पुरुषार्थसुखादिप्रतिसन्धानं विना प्रवृत्त्यभावादिति भावः।

**यत्प्रतीयमानमिति**। इष्टसाधनत्वादिकमित्यर्थः।

**ततश्च कर्त्तव्यतैकार्थसमवायिनी इष्टसाधनता लिङर्थ इत्यवधारयति । न च वाच्यम्-एवञ्चेत् वरं कर्त्तव्यतैवास्तु, अवश्याभ्युपगमनीयत्वात्; कृतमिष्टसाधन-**

प्रकाशः ।

भवात्, पाकं कुर्य्यामित्यस्य पाकं कृत्या साधयामीति विवरणाच्च । सा स्वकृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वजनकज्ञानसमानप्रकारकत्वनियमात् । अत एव स्वकृतिसाध्ये प्रवर्त्तते, न त्विष्टसाधनेऽपि स्वकृत्यसाध्ये ।

अथ कृत्या साध्येऽपि विषभक्षणादावप्रवृत्तेरिष्टसाधनत्वमादाय विधिः । न च तत्रानिष्टसाधनताज्ञानं प्रतिबन्धकम्, प्रवृत्तौ तदभावस्य हेतुत्वे गौरवापत्तेः । तद्वरं लाघवादिष्टसाधनत्वं विषयतावच्छेदकमस्तु । न च प्रवृत्तेः पूर्वमनिष्टसाधनताज्ञानविरह उभयसिद्धः, इष्टसाधनताज्ञानञ्च सन्दिग्धम्, अतो युगपदुपस्थित्यभावाच्च लाघवावतार इति वाच्यम् । त्वयाऽपि प्रवृत्तेः पूर्वमिष्टसाधनताज्ञानविनियोगस्वीकारात् । यत्र शब्दादनुमानाद्वा तदधिगतं, तत्र तदभावाच्च, **तस्माद्विषभक्षणादौ** वृष्ट्यादौ च प्रत्येकं व्यभिचारात् कृतिसाध्यत्वे सतीष्टसाधनत्वं विधिरिति ।

न । विषभक्षणादौ स्वकृतिसाध्यत्वाभावात्, **न हि कश्चिद्विष**भक्षणं चिकीर्षति ततः करोतीति दृश्यते, **जीवन**योनिकृतिसाध्यञ्च तत्र भवत्येव, न चान्या कृतिरस्ति ।

अथेष्टसाधनताभ्रमानन्तरं विषभक्षणमपि चिकिर्षाजन्यकृतिसाध्यम्, अतो विशेषदर्शनेऽपि तत्र प्रवर्त्ततेति चेत् । न । द्विधा हि कृतिरनुभूयते, बलवदनिष्टजनिका यथा विषभक्षणादौ, तदजनिका च यथा पाकादौ, तदिह बलवदनिष्टाजनककृतिसाध्यत्वं विवक्षितम् । न च विषभक्षणे तदस्ति।

अत एव तत्र प्रथममिष्टसाधनतया तथाविधकृतिसाध्यत्वमविद्यमानमवगत्य प्रवर्त्तते, प्रवृत्त्यनन्तरञ्च बलवदनिष्टहेतुकृतिसाध्यत्वं विरोधि तत्र विगलमिति न प्रवर्त्तते ।

तथाभूतकृतिसाध्यत्वं पूर्वानुभूतं स्मृत्वा प्रवर्त्ततेति चेत् । न । विशेषदर्शनेन भ्रमाहितसंस्कारोन्मूलनात्, अन्यथेष्टसाधनतास्मरणेऽप्यप्रतीकारात् । न चैवं श्रमेऽपि प्रवर्तेत, स्वेच्छाजन्यकृतिसाध्यस्य विवक्षितत्वात् । श्रमस्य च नियमतोऽन्येच्छाधीनकृतिसाध्यत्वं, दुःखत्वेन तत्रेच्छाविरहात्। अतएव स नान्तरीयक इत्युच्यते । न चैवमिच्छाज्ञानस्य प्रवर्त्तकत्वप्रसङ्गः, कृतौ परिचायकमात्रत्वात्।

यद्वा कृतौ स्वरूपसतीच्छा जनिका, **इच्छायान्तु** तज्ज्ञानं जनकमस्तु, को विरोधः । न हि यदेकत्र स्वरूपतो हेतुस्तज्ज्ञानमन्यत्र न जनकम् । एवं चिकीर्षाहेतुतया कृतिसाध्यताज्ञाने व्यवस्थिते

प्रकाशिका ।

**तस्माद्विषभक्षणादाविति** । विषभक्षणे कृतिसाध्यत्वेऽपीष्टसाधनत्वाभावात् वृष्ट्यादौ इष्टसाधनत्वेऽपि कृतिसाध्यत्वाभावात् न प्रवृत्तिरिति भावः । विषभक्षणे कृत्यसाध्यत्वादेव प्रवृत्तिर्नेत्यत आह **न हि कश्चिदिति** ।

ननु चिकीर्षाधीनकृतिसाध्यत्वाभावेऽपि जीवनयोनिकृतिसाध्यमेव विषभक्षणं स्यादित्यत आह **जीवनयोनीति** । **इच्छायान्त्विति** । चिकीर्षायामित्यर्थः । तथाचेच्छाज्ञानस्य प्रवर्त्तकत्वं बाधितमेव, कृतौ स्वरूपसदिच्छाया एव हेतुत्वाभ्युपगमादिति भावः ।

मकरन्दः ।

ननु चिकीर्षाजन्यकृतिसाध्यत्वाभावेऽपि जीवनयोनिकृतिसाध्यत्वं स्यादित्यत आह **जीवनेति** । **इच्छायान्त्विति** । चिकीर्षायामित्यर्थः । तथाचेच्छाज्ञानस्य प्रवर्त्तकत्वप्रसङ्गो वारित एव, कृतौ स्वरूपसदिच्छाया एव हेतुत्वाभ्युपगमादिति भावः । वस्तुतश्चिकीर्षाहेतुज्ञानस्यैव प्रवर्त्तकत्वमितीच्छाज्ञानस्य चिकीर्षाहेतुत्वे प्रवर्त्तकत्वापत्तिरिति प्रथमकल्प एव साधुरिति ।

तथा–इति । यथा हि नेष्टसाधनतामात्रं प्रतीत्य प्रवर्त्तते, असाध्येषु व्यभिचारात् ।

प्रकाशः ।

विषभक्षणादौ व्यावर्त्तककृतिवृत्तिवलवदनिष्टाजनकचिकीर्षाधीनत्वमेव, न त्विष्टसाधनत्वम् । कृतिवृत्तिधर्मापेक्षया वहिरङ्गत्वात् जीवनयोनिकृतिजन्यप्राणादिसञ्चारनिवृत्त्यर्थमावश्यकत्वात् भोगचिकीर्षायां व्यभिचाराच्च ।

न चोपायचिकीर्षेष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् वृष्टीच्छावदिति वाच्यम् । साध्यत्वसाधनत्वयोर्विरोधेनैकत्र ज्ञातुमशक्यत्वात् । असिद्धतां सिद्धताञ्चादाय तयोर्व्यवस्थितेः । न च यद्वस्तुतः कृतिसाध्यं तदिष्टसाधनमिति ज्ञायते इति युक्तम् । कृतिसाध्यतोत्तीर्णज्ञानात् चिकीर्षाऽनुत्पत्तेः । अपि च साधनत्वस्य सिद्धमात्रधर्म्मत्वात् साधनत्वज्ञानमिच्छाविरोधि, न हि कश्चित्कृतिसिद्धमिच्छति, अतोऽसुन्दरे वृष्ट्यादौ चेच्छा तत्साध्येष्टज्ञानात् ।

अथ तादृशकृतिसाध्यत्वे कृतिर्न विशेषणम्, असत्त्वात्, सत्त्वे वा कृतौ सत्यां कृतिसाध्यताज्ञानं, तथा ज्ञाने च कृतिर्वेत्यन्योन्याश्रयः । नोपलक्षणम्, अनतिप्रसक्तोपलक्ष्याभावादिति चेत् । न । ज्ञाने विषयतया कृतेर्विशेषणत्वात्, साध्ये च प्रवृत्तिविषये परिचायकतयोपलक्षणत्वात्, अन्यथेष्टसाधनतापक्षेऽपीष्टस्य तथाविधविकल्पप्रासात् ।

प्रकाशिका ।

वलवदनिष्टजनकत्वस्य चिकीर्षाविशेषणत्वेऽपि न क्षतिरित्याह वलवदनिष्टाजनकचिकीर्षाधीनत्वमिति । वलवदनिष्टाजनकत्वस्य पूर्वं कृतिविशेषणतयोक्तस्यायमुपसंहारो, न तु पक्षान्तरमिति ध्येयम् । केचित्तु–वलवदनिष्टाजनकचिकीर्षाजन्यचिकीर्षाधीनत्वमिति पाठः । तत्र वलवदनिष्टाजनिका या चिकीर्षा तज्जनकं यच्चिकीर्षाधीनत्वमुक्तरूपन्तदेव विशेषणमिति योजनया पूर्वोक्त एवार्थः । ननु यागस्येव कृतेरपीष्टसाधनत्वं धर्म्म इति तुल्यमेवान्तरङ्गत्वमित्यत आह जीवनयोनिकृतीति । यद्यपि तद्व्यावर्त्तकं चिकीर्षाधीनत्वमात्रं वलवदनिष्टाजनकत्वमपि, तथापि मधुविषसंपृक्तान्नभोजनव्यावृत्तये तदप्यावश्यकमिति भावः । भोगेति । तस्य स्वतःपुरुषार्थत्वेनेष्टसाधनत्वाभावादित्यर्थः । वस्तुतः कृतिसाध्यमिति । यदा कदापीति शेषः । कृतिसाध्यतोत्तीर्णेतीति । सिद्धत्वज्ञानादित्यर्थः । अन्यथा साधनत्वस्यैव अग्रहादित्यर्थः ।

मकरन्दः ।

यद्यपि वलवदनिष्टाजनकत्वं कृतौ विशेषणीकृतं प्राक्, तथापि चिकीर्षाविशेषणत्वेऽपि न दोष इत्याशयवानाह वलवदनिष्टाजनकचिकीर्षाधीनत्वमिति । वस्तुतो वलवदनिष्टाजनकत्वे सति चिकीर्षाधीनत्वमित्यर्थः, तथा च न पूर्वविरोधः । क्वचित्तु वलवदनिष्टाजनकचिकीर्षाजन्ययत्नचिकीर्षाधीनत्वमिति पाठः । तत्र वलवदनिष्टाजनकचिकीर्षाजन्ययत्ने यच्चिकीर्षाधीनत्वमुक्तरूपं, तदेव विशेषणमिति योजनया तादृशार्थलाभ इत्याहुः ।

ननु यागस्येव कृतेरपीष्टसाधनत्वं धर्म इति तुल्यमेवान्तरङ्गत्वमत आह जीवनयोनिजेति । यद्यपि तद्व्यावर्त्तकं चिकीर्षाधीनत्वमात्रं न तु वलवदनिष्टाजनकत्वमपि, तथापि मधुविषसंपृक्तान्नभोजनव्यावृत्त्यर्थं तदावश्यकमिति भावः ।

भोगेतीति । तस्य स्वतःपुरुषार्थत्वेनेष्टसाधनत्वाभावादित्यर्थः । वस्तुत इति—यदा कदापीत्यर्थः ।

कृतिसाध्यतोत्तीर्णेति । सिद्धत्वज्ञानादित्यर्थः, अन्यथा साधनत्वस्यैवाग्रहादिति भावः । शेषं शब्दप्रकाशे प्रपञ्चितमनुसन्धेयम् ।

अत एवेदं मत्तोऽभूतमित्यत्राकारप्रश्लेषः, अभवनस्य प्रागभावरूपत्वादित्यर्थः । अत एव क्वचित् मत्तो न भूतमित्येव पाठः ।

**तथा प्रयत्नविषयसमवायिनीमिष्टसाधनतामधिगम्याधिकारी प्रवर्त्तते इत्यनुभवः ॥**

प्रकाशः ।

ननु तादृशकृतिसाध्यत्वज्ञानाच्चिकीर्षा ततः कृतिः कृतौ सत्यां प्रत्यक्षेण कृतिसाध्यताज्ञानमित्यन्योन्याश्रयात्, कृतिसाध्यतोत्तीर्णे चिकिर्षाकृत्योरसम्भवाच्च । नानुमानात्, कृतक्रियमाणयोः पक्षत्वे कृतिसाध्यतोत्तीर्णत्वेन बाधात्, भाविपक्षत्वे चाश्रयासिद्धेः ।

उच्यते—पाको मत्कृतिविशेषसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात् मद्भोजनवत् । यस्य यदिष्टसाधनं यदा यत्कृतिं विना न सिध्यति, तत् तदा तत्कृतिविशेषसाध्यमिति व्याप्तेः, असिद्धस्येष्टसाधनत्वाभावात् ।

न च पक्षानुपपत्तिः, पाके कृतिसाध्यत्वं हि सिध्यत् सिद्धे बाधादनागतं पाकमादाय सिध्यति, पक्षतावच्छेदकधर्मसामानाधिकरण्यं साध्यमानस्य हेतुना सिध्यतीत्यनुमाने क्लृप्तत्वात् । यथा प्रसिद्धवह्निबाधेऽपि वह्निमात्रं न बाधितमित्यप्रसिद्धोऽपि वह्निः सिध्यति, तथा प्रसिद्धपाके कृतिसाध्यत्वबाधेऽपि पाकमात्रे न बाधितमित्यप्रसिद्धं पाकमादाय सिध्यति, अप्रसिद्धयोः पक्षसाध्ययोः सिद्धावविशेषात् ।

तथापि प्राथमिकत्वादावश्यकत्वाच्च लिङ्गज्ञानमेव प्रवर्त्तकमस्तु । न च लाघवात् कृतिसाध्यत्वं तथा, तदा कृतिसाध्यत्वानुमितौ मानाभावेन युगदुपस्थित्यभावादिति चेत् । न लिङ्गज्ञाने कृतिसाध्यत्वाप्रकाशे तत्प्रकारकचिकीर्षायां तस्याहेतुत्वात् ।

ननु कृतिसाध्यत्वस्य विधित्वे 'न कलञ्जं भक्षयेदि'त्यत्र विध्यर्थनिषेधानुपपत्तिः । कलञ्जभक्षणं न कृतिसाध्यमित्यस्यायोग्यत्वात् । न, तत्रापूर्वस्य लिङर्थत्वेन कलञ्जभक्षणप्रवृत्तं प्रति कलञ्जभक्षणाभावविषयकापूर्वस्य कृतिसाध्यत्वेन बोधनात् । न चानादित्वेन प्रागभावो न साध्यः, भक्षणप्रवृत्तस्य हि भक्षणप्रागभावस्तत्कृतिं विनोत्तरकाले न भवति तत्कृत्या तु भवतीत्यन्वयव्यतिरेकाभ्यां तत्कृतिसाध्य एवानुभूयते । न हि कृत्यनन्तरक्षणे घटस्वरूपं कृत्यधनीनमित्यतोऽन्यत् कृतिसाध्यत्वं घटे । इयांस्तु विशेषः । क्वचित् कृत्यधीनः आकालयोगः क्वचिदुत्तरकालयोग इत्युभयोरपि योगक्षेमयोः कृतिसाध्यत्वमानुभविकम् **अत, एवेदं मत्तोऽभूतमिति** व्यवहारः ।

ननु कृतौ नष्टायां सन्नपि धर्मो न कार्य्यः, तथासति कथमपूर्वे कार्य्ये कामिनोऽन्वयः ? आशुविनाशितया क्रियातुल्यत्वात् । मैवम्, यद्वृत्ति काम्यसाधनत्वं **तत्र कार्य्यताबुद्धिः प्रयोजिका,** न तु कार्य्यताविशिष्टस्य काम्यसाधनताविशिष्टतेति व्याप्तिः । तस्मात् कृतिसाध्यत्वमेव विधिः ।

अत्रोच्यते–कृतिसाध्वताज्ञानस्य प्रवर्त्तकत्वे तृप्तोऽपि भोजने प्रवर्त्तेत **तथा विशेषदर्शनेऽपि** चैत्यवन्दनादौ ।

अथ स्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्य्यताज्ञानं प्रवर्त्तकम् । तथा हि–काम्ये पुरुषविशेषणं कामना, ततः काम्यसाधने यागपाकादौ कार्यताज्ञानम् । नित्ये च कालशौचादि स्वविशेषणम् । तृप्तस्य तृप्तौ कामनाविरहेणेष्टसाधनताज्ञानाभावात् न तथा बोधः । विशेषदर्शने च भ्रमदशायामिव चैत्यवन्दने नेष्टसाधनताज्ञानं, येन तज्जन्यकार्यताबोधात् प्रवर्त्तेत ।

प्रकाशिका ।

**अत एवेदं मत्तोऽभूतमि**त्यकारप्रश्लेपः अभवनस्य प्रागभावरूपत्वादित्यर्थः । क्वचिन्मत्तो न भूत इति पाठः, स तु सुगम एव । **तत्र कार्यताबुद्धिः प्रयोजिकेति ।** तद्धर्म्मिनिष्ठकाम्यसाधनताज्ञानमेव कार्यताबुद्धिप्रयोजकम् न तु कार्यताविशिष्टस्य काम्यसाधनत्वज्ञानमित्यर्थः । **तथा विशेषदर्शनेऽपीति ।** इष्टसाधनत्वज्ञानेऽपीत्यर्थः । बलवदनिष्ठाजनकत्वेन कृतिविशेषणेऽपि तत्रातिप्रसङ्ग-

प्रकाशः ।

मैवम् । कृतिसाध्यत्वज्ञाने लाघवाद्विषयतयेष्टसाधनत्वस्यैवावच्छेदकत्वात् । न तु स्वविशेषणवत्ताप्रतिसन्धाजन्यत्वं तत्र विशेषणं, गौरवात् । न च साध्यत्वसाधनत्वयोर्विरोधः, निर्विशेषितयोस्तयोरविरोधात् । तदा साध्यत्वसाधनत्वयोरेव विरोधात् । तथात्वस्य चानभ्युपगमात् । अन्यथा साध्यत्वसाधनत्वयोरन्यतरमेव स्यात् पाके, न तु समयभेदादुभयम् । तस्मात् समयभेदमादाय साध्यत्वसाधनत्वयोर्ज्ञानमबाधितम् । **न चैवं गौरवं, समयभेदस्य** प्रवृत्तावनुपयोगात्, ज्ञानोत्पत्तावेव तदुपक्षयात् ।

कथं वा इष्टसाधनत्वेन कार्यत्वानुमानं, पक्षे साध्यसाधनयोरन्यतरसत्त्वे बाधासिद्ध्योरन्यतरप्रसङ्गात् । समयभेदेन तयोरविरोध इति तु तुल्यम् । अपि च स्वविशेषणवत्ताज्ञानजन्यकार्यताज्ञानाभावात् कथं सुखे चिकीर्षा ?

अथोपायचिकीर्षायां तद्धेतुः, इच्छाकारणसुखज्ञाने कृतिसाध्यत्वं यदा विषयः, तदा सुखे चिकीर्षा, नो चेदिच्छामात्रमित्युभयं चिकीर्षाहेतुः । तर्हीच्छाहेतुज्ञाने कृतिसाध्यत्वं यदा भासते, तदा चिकीर्षा, नो चेदिच्छामात्रमित्यनुगतमेव सुखतदुपायचिकीर्षाहेतुरस्तु, लाघवात् । सुखत्वज्ञानवदिष्टसाधनत्वज्ञानस्यापि इच्छाहेतुत्वात् । अत एव पाकादाविष्टसाधनताज्ञाने कृतिसाध्यत्वं विषय इति चिकीर्षा, वृष्ट्यादाविष्टसाधनताज्ञाने तु न तद्विषय इतीच्छामात्रम् । सुखचिकीर्षायामिच्छाकारणज्ञाने कृतिसाध्यताविषयके चिकीर्षाहेतुत्वावधारणात् ।

परमार्थतस्तु दैवाधीनवृष्टीच्छादौ स्वतोऽसुन्दरविषयेच्छामात्रं प्रतीष्टसाधनताज्ञानं कारणं क्लृप्तम्, अतः पाकादिचिकीर्षाऽपि तज्जन्या, न हि यज्जातीयं प्रति यत्कारणं गृहीतं, तदतिपत्य तद्भवति । न च चिकीर्षान्यत्वे सत्युपायेच्छात्वं तत्र तन्त्रं, गौरवात् । न च साधनत्वज्ञानमिच्छाविरोधि, निर्विशेषितयोः सिद्धत्वासिद्धत्वयोरविरोधेनेच्छासाधनत्वयोरविरोधात् ।

यत्तु तत्साध्येष्टज्ञानाद्वृष्ट्यादाविच्छेत्युक्तम् । तन्न, असिद्धावस्थावतो वृष्ट्यानिष्टानुत्पत्तेस्तस्यावश्यं सिद्धत्वमवगन्तव्यम्, इच्छानुरोधाच्चासिद्धत्वमिति तत्रापि विरोधात् । वृष्टिसाधनत्वमादायैवेष्टसाध्यत्वग्रहाच्च । एवञ्चेष्टसाधनतामात्रज्ञानात् कृतिसाध्यताप्रकारिकेच्छा नोत्पत्तुमर्हति, न चातिप्रसङ्गनिवृत्तिरिति कृतिसाध्यत्वमपि तत्र विषयतयाऽवच्छेदकमस्तु ।

ननु कृताविच्छा चिकीर्षा, सनः प्रकृत्यर्थगोचरेच्छावाचित्वात् । न च कृतिविषयपाकादिविषये कृतिसाध्यत्वप्रकारकेच्छावाचित्वम् । तथा च कृताविष्टसाधनताज्ञानादिच्छा, वृष्ट्यादौ तथा कल्पनात् । यदा कृताविच्छा, तदा सैव चिकीर्षा, अन्यत्रेच्छामात्रम्, न तु कृतिसाध्यताज्ञानात्, कृतौ कृतिसाध्यत्वाभावात् ।

अथ पाकं कृत्या साधयामीतीच्छा अनुभवसिद्धा, सा च कृतिसाध्यताज्ञानात् । सा च चिकीर्षापदाप्रतिपाद्याऽपि कृतिहेतुः, समानविषयकत्वात् । न तु कृतीच्छा कृतिहेतुः, कृतिविषयाविषयत्वादिति चेत् । अस्ति तावत् पाककृताविच्छा वृष्टीच्छावत्, अस्ति च कृतिसाध्यत्वप्रकारिका तत्रेच्छा । तथापि कृतीच्छैव कृतिहेतुर्लाघवात्, न तु कृतिसाध्यत्वप्रकारिकेच्छा, गौरवात् । न चावगतिप्रवृत्त्योः समानविषयत्वमुभयसिद्धं, तस्यैव विचार्यत्वात् । कथन्तर्हि पाकं कृत्या साधयामीतीच्छा ? येन रूपेण यस्येष्टसाधनत्वं तेन रूपेण तत्रेच्छासत्त्वात् । यथा स्वकेदारवृष्टित्वेनेष्टसाध-

प्रकाशिका ।

वारणादिति भावः । **न चैवं गौरवमिति** । समयभेदविशिष्टस्य वाच्यत्वस्वीकार इति भावः । **समयभेदस्येति** । प्रवर्त्तकं ज्ञानं न समयभेदविषयकं, किन्तु वस्तुगत्या भिन्नसमयावच्छिन्नमेव । वस्तुतो बलवदनिष्टाजनकत्वे सति चिकीर्षाधीनत्वमित्यर्थोऽतो साध्यत्वं साधनत्वं च प्रतीतिविषय

**तत्र विषयो धातुना भावनाऽऽख्यातमात्रेण, शेषन्तु तद्विशेषेण लिङा इत्येव-मिष्टाभ्युपायतायामविगतायामन्वयबलात् तद्विषयस्येष्टसाधनत्वावगतिरिति कर्त्त-व्यतैकार्थसमवायिनोऽभ्युपायता लिङः प्रवृत्तिनिमित्तमित्युक्तम् ।**

प्रकाशः ।

नत्वात्तथैवेच्छा, तथा कृतिसाध्यत्वेन पाकस्येष्टसाधनत्वात् तथैवेच्छासत्त्वात् । अन्यथा तत्तदुपाय-साध्यत्वेनेच्छा तत्तदुपायसाध्यत्वप्रकारकज्ञानात् स्यादित्यनन्तकारणकल्पनापत्तिः । मम तूपायेच्छा-यामिष्टसाधनत्वज्ञानमेव हेतुः । अत एवैकप्रत्ययाभिधेयत्वप्रत्यासत्तेरन्तरङ्गतया विधिप्रत्ययाभिधेयेष्ट-साधनत्वस्य कृतावेवान्वयो न प्रकृत्यर्थे, तथैव चिकीर्षाहेतुज्ञानजनकत्वात् । प्रकृत्यर्थस्य च कृतौ विधेयत्वेनान्वयः । उच्यते-पाकस्य वह्निसाध्यत्वेन कृतिसाध्यत्वेन वा नेष्टसाधनत्वं गौरवात्, किन्तु पाकत्वेन, स च कृतिं विना नेत्यन्यदेतत् । कथं तर्हि वह्निना साधया-मीतीच्छा । इष्टसाधनत्वेन ज्ञाते यत्र यत्साध्यत्वं ज्ञायते, तत्र तत्साध्यत्वेनेच्छासत्त्वात् । यथा हीष्टसाधनत्वेन ज्ञाते वह्निसाध्यत्वज्ञानाद्वह्निना पाकं साधयामीतीच्छा, तथा कृतिसाध्य-त्वेन ज्ञाते पाके इष्टसाधनत्वज्ञानात् कृत्या साधयामीतिच्छा । तथा चेष्टसाधनत्वेन कृतिसाध्यत्वेन च ज्ञाते कृतिसाध्यत्वप्रकारिकेच्छा न त्विष्टसाधनताज्ञानमात्रादिति कृतिसाध्येष्टसाधनता विधिः । नित्ये च स्नानादौ यथेष्टसाधनताज्ञाने सत्यपि न नित्यताक्षतिः, तथा निपुणतरमुपपादितं द्वितीया-ध्यायप्रकाशे **इति संक्षेपः ।**

**तत्रेति । पचतीत्यादौ** भावनाविषयः पाकादिर्धातुनोच्यते, भावना त्वाख्यातेनेत्यर्थः । **शेषमिति ।** यजेतेत्यादौ लिङा भावनाविषयस्य यागादेरिष्टसाधनत्वमुच्यते इत्यर्थः । **अन्वयब-लादिति । प्रकृतिसमाभिव्याहारादित्यर्थः । तद्विषयस्येति ।** इष्टसाधनीभूतस्य भावनावि-षयस्येत्यर्थः । **भावनाया इष्टसाधनतया** तत्कारणको **यागोऽपि तथेति भावः । कर्त्तव्य-तैकेति ।** यद्यपि पूर्वं तदर्थो भावनादिस्तद्धर्म इष्टसाधनता वेत्यनेन भावनाधर्म एवेष्टसाधनत्वं लिङर्थ इति विकल्पितम् , अधुना च भाव्यस्योच्यते इति विरोधः, तथापि **तत्रादिपदेन** भाव्यस्याप्य-भिधानाददोषः ।

प्रकाशिका ।

इत्यर्थः । **इति संक्षेप इति ।** इदमत्राभिसंहितम्-सुखचिकीर्षायां चिकीर्षात्वावच्छेदेन कृतिसाध्य-ताज्ञानं कारणत्वेन क्लृप्तम् इष्टेच्छायान्तूपायेच्छात्वावच्छेदेनेष्टसाधनताज्ञानं कारणत्वेन क्लृप्तमित्युभ-यावच्छेदकाधिकरणपाकचिकीर्षायामुभयं कारणमिति फलोपधानाय प्रवृत्तस्य लिङ्गपदस्योभयशक्यत्व-मित्यन्यत्र विस्तरः। एकत्रैवाख्यातत्वपुरस्कारेण भावनालिङ्पुरस्कारेण इष्टसाधनता वाच्या तदुभयसं-सर्गस्तु वाक्यार्थतया भासत इति मतनिराकरणाय विषयभेदमाह **पचतीत्यादाविति ।** अन्वय-विषयतानियामको नान्वय इत्यत आह **प्रकृतिसमभिव्याहारादित्यर्थ** इति । **भावनाया इष्ट-साधनतयेति ।** यद्यपि यागो न भावनाकारणं किन्तु विपरीतं तथापि तत्कारणमिति बहुव्रीहिः । करणपदे विषयविवक्षा वेति भावः । **यागोपि तथेति ।** यागद्वारैव भावनाया इष्टसाधनत्वादिति

मकरन्दः ।

**भावनाया इष्टसाधनतयेति ।** यद्यपि भावनाकारणं न यागः प्रत्युत भावनैव यागजनिका, तथापि तत्कारणेत्यत्र बहुव्रीहिः, कारणपदेन विषयविवक्षा वेति भावः ।

टिप्पणी ।

**इष्टाभ्युपायता लिङः प्रवृत्तिनिमित्तमिति ।** आचार्यमण्डनमिश्राणामप्येतदेव सम्मतम्, तदुक्तं तैः-पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ इति।

करणस्येष्टसाधनताऽभिधाने ज्योतिष्टोमेनेति तृतीयया न भवितव्यमिति तु देश्यमवैयाकरणस्यावधीरणीयमेव। तत्सङ्ख्याऽभिधानं हि तदभिधानमाख्यातेन, न च तत् प्रकृते। न च यागेष्टसाधनताऽभिधानं लिङा, किन्त्वन्वयबलात्तल्लाभ इत्युक्तम्।

यत्तु सिद्धापदेशादपि प्रतीयते इष्टसाधनता, न चातः सङ्कल्पात्मा प्रवृत्तिरस्तीति देश्यम्। तत्र समुत्कटफलाभिलाषस्य समर्थस्य तत्साधनताऽवगमेऽपि न प्रवृत्तिरिति कः प्रतीयात्। सर्व्वपक्षसमानञ्चैतत् समानपरीहारश्चेति किन्तेन।

प्रकाशः।

ननु यदीष्टसाधनता लिङर्थः, 'तदा ज्योतिष्टोमेन यजेते'त्यादौ तृतीया न स्यात्, यागकरणत्वस्य **लिङैवाभिधानादित्यत (१)** आह **करणस्येति**। लिङ्आख्यातेन यागसंख्याभिधानरूपं तदभिधानं वाच्यम्, न चैवमिहास्तीत्याह **तत्संख्येति**। यजेतेत्यत्र हि न करणे लकारो येन तद्गतसंख्यामभिदध्यात्, किन्तु कर्त्तरीति तत्संख्याऽभिधाने **तृतीयोपयोगः, तृतीयातोऽपि** लब्धे करणत्वे नेह तात्पर्य्यमित्यर्थः। लिङा चेष्टसाधनतामात्राभिधानेऽपि न यागस्य तदभिधानमित्याह **न चेति**। यद्यप्येवमप्यभिधानमस्ति, तथापि वाक्यार्थतया न पदार्थतया, तथाऽनभिधानञ्च'नभिहित' इति सूत्रे विवक्षितमित्**येके**। लिङ्कृत्तद्धितैः परिसंख्यानं नियामकमित्**यन्ये**।

**यत्त्विति**। यागः स्वर्गसाधनमिति सिद्धार्थवाक्यादिष्टसाधनत्वज्ञानेऽपि न प्रवृत्तिरिति नायं विधिरित्यसिद्धं, ततोऽपि स्वर्गकामस्य तत्साधनताज्ञानवतः प्रवृत्तेरित्यर्थः। अन्येषामपि विधीनां सिद्धार्थात् प्रतीतावप्रवृत्त्या न ते विधयः स्युरित्याह **सर्वपक्षेति**। एतद्दूषणमित्यर्थः। एवमिष्ट-

प्रकाशिका।

भावः। **तत्रादिपदेनेति** भावः। न चपूर्वन्तदर्थस्य लिङर्थ इत्यर्थो **न तु भाव्यं** लिङर्थ इति वाच्यम्। तदर्थ इत्यत्र तत्पदेन यजेतेत्यादौ समुदायस्यैवोक्तत्वादिति। **लिङैवाभिहितत्वादिति**। तृतीयायाश्चानभिहिताधिकारीयत्वादिति भावः। **तृतीयोपयोग** इति। तृतीयासम्भव इत्यर्थः। कारणसंख्यायाश्च अनभिधानात्तदभिधानाभावस्यैव चानभिहितसूत्रार्थत्वादिति भावः। नन्वेवं तृतीयया आख्यातेन च करणत्वाभिधाने पौनरुक्त्यमत आह **तृतीयातोपीति**। तात्पर्यगौरवादुक्तदोषाच्च वाजपेयाधिकरणन्यायादनन्वितमेव तृतीयोपस्थाप्यं करणत्वमिति भावः। **एके** इत्यरुचौ, तद्वीजन्तु एवंसति क्वाप्यभिधानं न स्याद्विशिष्टस्य सर्वत्रापदार्थत्वादिति। **परिसंख्यानं** विशेषः, स च विषयविशेषाधीनः प्रयोगानुसारकल्प्य इति भावः। विशेषस्यानुगतस्याभावान्न नियामकत्वमित्यरुचिमाविष्करोति **अन्य इति**। हेतुत्वादिति कारिकास्थदलस्य प्रतीतलिङ्गार्थत्वे स्वाकांक्षाया-

मकरन्दः।

**तत्रादिपदेनेति**। न च तदर्थ इत्यस्य पूर्वं लिङर्थ इति विवरणाद्यागस्य च लिङर्थत्वाभावाद्विरोध इति वाच्यम्। लिङर्थत्वेन तस्यापि विकल्पे दोपाभिधाने दोपाभावादित्यर्थः। तदर्थ इत्यत्र तच्छब्देन शब्दस्यैव विवक्षा, उपस्थितत्वात्। न लिङः, अनुपस्थितत्वात्। प्रकाशे च लिङर्थ इति विवरणं भावनामात्राभिप्रायेणेत्याहुः।

**तृतीयोपयोग इति**। तृतीयासम्भव इत्यर्थः। कारणसङ्ख्याया अनभिहितत्वादिति भावः।

नन्वेवं तृतीयया करणत्वस्याभिधानात् लिङाऽपि च तदभिधाने पौनरुक्त्यमित्यत आह **तृतीयातोऽपीति**। गौरवादुक्तदोषाच्चेति भावः। वाजपेयाधिकरणन्यायात् कर्मनामधेयतया तृतीयायाः प्रथमं मूकत्वादित्यन्ये।

(१) लिङैवाभिहितत्वादिति प्रकाशिकाभिमतः पाठः।

अत्राभिधीयते—अस्तु प्रयत्नविषयसमवायिनीष्टसाधनता प्रवृत्तिहेतुः, तथापि नासौ लिङर्थः, सन्देहात्। सा हि किं साक्षादेव लिङाऽवगम्यते, स्तनपानादावनुमानादिव बालेन; किं वा तत्प्रतिपादितात् कुतश्चिदर्थादनुमीयते, चेष्टाविशेषानुमितादिवाभिप्रायविशेषात् समयाभिज्ञेनेति सन्दिह्यते। एवञ्च सति सा नाभिधीयते इत्येव निर्णयः ॥ १३ ॥

**हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः।**
**अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १४ ॥**

तथाहि—अग्निकामो दारुणी मथ्नीयादिति श्रुत्वा कुत इत्युक्ते वक्तारो वदन्ति, यतस्तन्मन्थनादग्निरस्य सिद्ध्यतीति। तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यादाविष्टाभ्युपायतायामेवावगतायामनुमिमते तान्त्रिकाः—यदश्वमेधेन यजेत मृत्युब्रह्महत्यातरणकाम इत्यादिविधिम्। निन्दया च निषेधम्। तत् यथा—

---

प्रकाशः।

साधनतां विधिं व्युत्पाद्य स्वसिद्धान्तेन निराकर्त्तुं सन्देहं तावदाह **अस्त्विति। स्तनपानादाविति।** यथा स्तनपानादेरिष्टसाधनत्वं साक्षादेव पानादवगम्यते इत्यर्थः। **तत्प्रतिपादितादिति।** लिङ्बोधितादाप्ताभिप्रायादिष्टसाधनत्वमनुमीयते, ततः प्रवृत्तिरित्यर्थः। समयश्चेच्छाविशेषः सङ्केतः। **एवञ्चेति।** इष्टसाधनता न लिङाऽभिधीयते, किन्त्वाप्ताभिप्रायविषयत्वेनानुमीयते इत्यर्थः।

तदुपपादयति—**हेतुत्वादिति। अनुमानादिति।** विधेरिति शेषः। **मध्यमादाविति।** मध्यमपुरुषोत्तमपुरुषलिङ इष्टसाधनतावियोगादित्यर्थः। **अन्यत्रेति।** आज्ञाऽध्येषणादौ लिङ इच्छाविषयत्वकल्पनात् लिङ्मात्रस्य तथौचित्यादित्यर्थः। **निषेधेति।** सर्वत्र विधिप्रकारेषु न हन्यादिति निषेधानुपपत्तेरित्यर्थः।

हेतुत्वादिति व्याचष्टे **अग्निकाम इति।** लिङैवेष्टसाधनत्वाभिधाने यतस्तन्मथनादिति हेत्वभिधानं व्यर्थमित्यर्थः। अनुमानादिति विवृणोति **तरतीति।** लिङेष्टसाधनताऽभिधाने विधेरनुमानं व्यर्थं, तदर्थस्य वाक्यादेव प्रतीतेरिति तदन्य एव लिङर्थ इत्यर्थः। मध्यमादाविति व्याचष्टे

प्रकाशिका।

मिष्टसाधनत्वस्य तद्धेतुत्वेनाभिधानादित्यर्थः। ननु न हन्यादित्यत्र हननाभावविषयकभावनैवार्थो-

मकरन्दः।

परिसङ्ख्यानमित्यभिधानपर्याय एव अन्यस्य दुर्वचत्वादित्यनुशयमाविष्करोति **इत्यन्ये** इति।

टिप्पणी।

**हेतुत्वादिति।** नेष्टसाधनत्वं विध्यर्थ इति शेषः। **सिध्यतीति।** इष्टसाधनत्वस्य विध्यर्थत्वेऽङ्गीक्रियमाणे तु दारुमथनमिष्ट (अग्नि) साधनमिष्टसाधनत्वादित्यनुमिनुयात्, न च तत्संभवति हेतुसाध्ययोरविशेषात्, आप्ताभिप्रायस्य विध्यर्थत्वे तु आप्ताभिप्रायविषयत्वादिति हेतुः सम्भवतीति भावः। **अनुमानादिति।** 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्याद्यर्थवादतो मृत्युतरणादिरूपेष्टसाधनत्वस्याश्वमेधेऽवगमेऽपि अनन्तरं 'मृत्युब्रह्महत्यासंतरणकामोऽश्वमेधेन यजेदि'ति विध्यनुमानं सर्वसम्मतं भवति तस्य वैयर्थ्यम्, इष्टसाधनत्वस्य विध्यर्थत्वे हि अश्वमेध इष्टसाधनमिति प्रतीतिः स्यात् सा चार्थवादलब्धैवेत्यर्थः। **मध्यमादाविति।** मध्यमपुरुषे उत्तमपुरुषे चेत्यर्थः। कुर्याः कुर्यामित्यादौ सर्वत्रैवेष्टसाधनत्वस्य वियोगः, तत्र हि आज्ञादिः प्रतीयते न त्विष्टसाधनत्वमित्यर्थः। अध्येषणादिलिङमिच्छावाचकत्वादपि न तथेत्याह **अन्यत्रेति।**

अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः—

इत्यतो नात्मानं हन्यादिति। कुर्य्याः कुर्य्यामित्यत्र विधिविहितैव लिङ् नेष्टाभ्युपायतामाह, किन्तु वक्तृसङ्कल्पम् न हीष्टाभ्युपायो ममायमिति कुर्य्यामिति पदार्थः, किन्तु तत्प्रतिपत्तेरनन्तरं योऽस्य सङ्कल्पः—कुर्य्यामिति, स एव। सर्व्वत्र चान्यत्र वक्तुरेवेच्छाऽभिधीयते लिङेत्यवधृतम्। तथाह्याज्ञाऽध्येषणाऽनुज्ञासंप्रश्नप्रार्थनाऽऽशंसालिङि नान्यत् चकास्ति।

यां वक्तुरिच्छामननुविदधानस्तत्क्षोभाद्बिभेति, सा आज्ञा। या तु श्रोतुः पूजासम्मानव्यञ्जिका, सा अध्येषणा। वारणाभावव्यञ्जिका अनुज्ञा। अभिधानप्रयोजना सम्प्रश्नः। लाभेच्छा प्रार्थना। शुभाशंसनमाशीरिति।

न च विधिविकल्पेषु निषेध उपपद्यते। तथाहि—यदाऽभिधा विधिः, तदा न हन्यात् हननभावना नाभिधीयते इति वाक्यार्थो व्याघातान्निरस्तः। यदा कालत्रयापरामृष्टा भावना, तदा नेति सम्बन्धोऽत्यन्ताभावोमिथ्या। यदा कार्यं, तदा न हन्यात् न हननं कार्यमित्यनुभवविरुद्धम्। क्रियत एव यतः। न हननेन कार्यं हननकारणकं कार्यं नास्तीत्यर्थ इत्यपि नास्ति। दुःखनिवृत्तिसुखाप्त्योरन्यतरस्य

---

प्रकाशः।

**कुर्य्या इति**। तवेदमिष्टसाधनमतः कुर्य्याः, ममेदमिष्टसाधनमतः कुर्यामिति व्यवहारान्मध्यमपुरुषादौ सङ्कल्प एव लिङर्थ इत्यर्थः। अन्यत्र क्लृप्तसामर्थ्यादिति विवृणोति **सर्वत्रेति**। अन्तिमं हेतुं व्याचष्टे **न चेति**।

**न हन्यादिति निषेधेन सह** हननान्वये हननाभावविषया भावना तदर्थः स्यात्। तत्र च विधिवैयर्थ्यं, हननप्रागभावात्यन्ताभावयोर**साध्यत्वात्**। हननभावना नास्तीत्यन्वयस्तु न सम्भवति, वाधात्। ततो हननविषयभावनाऽभिधाया निषेधो वाच्यः, तत्राह **व्यापारादिति**। **अभिधाविधिवादिनां** हन्यादिति पदं हननभावनाऽभिधायकमेवेति तन्निषेधे व्याघात इत्यर्थः। **यद्यपि** भट्टानामभिधा न सङ्केतः किन्तु **शक्यनिष्ठं धर्मान्तरं**, तथापि सिद्ध्यसिद्धिव्याघाताभ्यां तन्निषेधो न शक्य इति भावः।

यदा कालत्रयापरामृष्टा भावनेत्यत्र विधिरित्यनुषज्यते। एवमुत्तरत्र। कदाचिद्धननभावनायाः सत्त्वात्तन्निषेधस्यात्यन्ताभावरूपत्वं नास्तीत्याह **तदा नेतीति**। कार्यताविधिपक्षे निषेधानुपपत्तिमाह **यदा कार्यमिति**। यथाख्यातेन नञन्वयः, तदा हनने कृतिसाध्यत्वकृत्युद्देश्यत्वयोरुभयोरपि सत्त्वान्निषेधो वाधित इत्यर्थः। हननस्य कार्यमाह **दुःखनिवृत्तीति**।

प्रकाशिका।

स्त्वित्यत आह **न हन्यादिति** निषेधेनेति। **असाध्यत्वादिति**। तथा च न तत्र विषयतया भावनान्वय इति भावः। **अभिधाविधिवादिनामिति**। हननभावनया समं वाच्यवाचकभावलक्षणो लिङ्सम्बन्धोऽभिधा, तन्निषेधश्चाशक्यः, तथा सति तद्बोधानुपपत्तेरिति भावः। **यद्यपीति**। तथा च न व्याघातः, वाच्यवाचकभावलक्षणाभिधानपक्ष एव तत्सम्भवादिति भावः। **शक्यनिष्ठं धर्म्मान्तरमिति**। यद्यपि भट्टानां शब्दनिष्ठा भावना न शक्यनिष्ठा, तथापि तथासति सिद्धसाधन-

मकरन्दः।

**यद्यपीति**। तथा च नोक्तव्याघातः, वाच्यवाचकभावसम्बन्धात्मकाभिधापक्ष एव तत्सम्भवादिति भावः।

तत्र सद्भावात् । हननकारणकमदृष्टं नास्तीत्यर्थ इति तु निरातङ्कं दृष्टार्थिनं प्रवर्त्तयेदेवेति साधु शास्त्रार्थः । अहननेनापूर्वं भावयेदिति त्वशक्यम् । कारणस्यानादित्वेन कार्यस्यापि तथाभावप्रसङ्गात्, भावनायाश्च तदविषयत्वात् । अहननसङ्कल्पेनेति यावज्जीवमविच्छिन्नतत्सङ्कल्पः स्यात् । सकृत् कृत्वैव वा निवृत्तिः । पश्चाद्धन्यादेवाविरोधात् । सम्पादितो ह्यनेन नियोगार्थः ।

यावद् यावद्धननसङ्कल्पवान् तावत्तावद्विपरीतसङ्कल्पेनापूर्वं भावयेदिति वाक्यार्थः, तथाभूतस्याधिकारित्वादित्यपि वार्त्तम् । तदश्रुतेः । प्रसक्तं हि प्रतिषिध्यते नाप्रसक्तमिति चेत् । न वै किञ्चिदिह प्रतिषिध्यते । तदभावः प्रतिपाद्यते इति निषेधार्थः । हननकरणकमपूर्वं वाक्यार्थः ॥

किञ्च न हन्यादिति अहननेनापूर्वस्य कर्त्तव्यताप्रत्ययो जातो वेदात्, जातश्च हननक्रियायां रागात् । निष्फलाच्च कार्यादपेक्षितफलं गरीय इति न्यायेन हन्यादेवेत्यहो वेदव्याख्याकौशलमास्तिक्याभिमानिनो मीमांसकदुर्दुरूढस्य ।

---

प्रकाशः ।

**निरातङ्कमिति** । अत्र किं सुकृतापूर्वस्य निषेधः, दुरितापूर्वस्य वा ? आद्ये धर्मानुत्पादेऽप्यधर्मोत्पादकमानाभावाद्दृष्टफलार्थी हनने प्रवर्त्तेत । अन्त्ये च सुतरां प्रवृत्तिः स्यादित्यर्थः । अथ नञा धात्वर्थान्वयः, तत्राह **अहननेति** । **कारणस्येति** । हननप्रागभावस्यानादित्वादनाद्यपूर्वं स्यादित्यर्थः । ननु हननप्रागभावविषया भावनाऽपूर्वमुत्पादयिष्यतीत्यत आह **भावनायाश्चेति** । प्रागभावस्तदा भावनाविषयः स्यात्, यदि तत्स्वरूपं भावनासाध्यं स्यात्, न चैवमित्यर्थः ।

**सङ्कल्पविधिपक्षे** निषेधानुपपत्तिमाह **अहननेति** । सर्वदा किमहननसङ्कल्पेनापूर्वं भावयेदित्यर्थः, यदा कदाचिद्वा ? आद्ये, **यावज्जीवमिति** । अन्त्ये, **सकृदिति** । नियोगार्थो विध्यर्थः । **विपरीतेति** । अहननसङ्कल्पेनेत्यर्थः । **तथाभूतस्येति** । प्रवृत्तिमत एव निषेधापूर्वेऽधिकारादित्यर्थः । **तदश्रुतेरिति** । हननसङ्कल्पवतो विपरीतसङ्कल्पकत्वाश्रुतेरित्यर्थः । ननु प्रसक्तं हननं निषेध्यं, प्रसङ्गश्च तत्करणसङ्कल्प एव, **इच्छाया एवा**द्यप्रवृत्तित्वादित्यश्रुतमपि तल्लभ्यते इत्याह **प्रसक्तमिति** । नात्र हननं निषिध्यते, किन्तु हननाभावसङ्कल्पकारणकमपूर्वं विधीयते इत्याह **न वै किञ्चिदिति** ।

**किञ्चेति** । अपूर्ववाच्यत्वेऽपि 'न कलञ्जं भक्षयेदि'त्यादितः कलञ्जभक्षणाभावविषयकमपूर्वमवगम्यापि तदभावे न प्रवर्त्तेत । तथाहि कलञ्जभक्षणे रागादस्य कर्त्तव्यताबुद्धिर्जाता, शब्दाच्च भक्षणाभावे । निःफलाच्च कार्यात् सफलं गरीय इति न्यायेन सुखहेतौ भक्षण एव प्रवर्त्तेत, न तदभावे, तस्य निःफलत्वात् । न च निषेधापूर्वमेव फलं तस्य सुखदुःखाभावान्यतया पण्डत्वेन तदजनकतया च गौणमुख्यप्रयोजनत्वाभावात् ।

प्रकाशिका ।

मेव शब्दधर्म्मस्यार्थभावनारूपेऽभावादिति मतान्तरमेवेदमर्थनिष्ठाभिधेति भावः । **संकल्पविधिपक्षे** इति । सङ्कल्पेति लिङर्थान्वयपक्ष इत्यर्थः । तेन नाग्रेतनविकल्पविरोध इत्यवधेयम् । **यावज्जीवमिति** । न च तत्सम्भवति सुषुप्त्याद्यनुपपत्तेरिति भावः । ननु प्रवृत्तिमतो निवृत्तिनियोगेऽधिकारात् प्रवृत्तिप्रसङ्गो न तु सङ्कल्प इत्यत आह **इच्छाया एवेति** । आद्या प्रवृत्तिरिच्छैवेत्यभिधानादिति भावः ।

मकरन्दः ।

**यावज्जीवमिति** । न च तत्सम्भवति, सुषुप्त्यादिदशायां तद्विच्छेदादिति भावः ।

ननु प्रवृत्तिमतो निवृत्तिनियोगाधिकारात् प्रसङ्गः प्रवृत्तिः न तु सङ्कल्प इत्यत आह **इच्छाया एवेति** । आद्या प्रवृत्तिरिच्छैवेत्यभिधानादिति भावः ।

इष्टसाधनतापत्तेऽपि न हन्यात् न हननभावना इष्टाभ्युपाय इति वाक्यार्थः। तथाचानिष्टसाधनत्वं कुतो लभ्यते। न हीष्टसाधनं यन्न भवति तदवश्यमनिष्टसाधनं दृष्टमुपेक्षणीयस्यापि भावात्।

यत् रागादिप्रसक्तं प्रतिषिध्यते तदवश्यमनिष्टसाधनं दृष्टम्, यथा सविषमन्नं न भुञ्जीथा इति, तेन वेदेऽप्यनुमास्यते, इत्यपि न साधीयः। प्रतिषेधार्थस्यैव चिन्त्यमानत्वात्।

न हि कर्त्तव्यत्वस्येष्टसाधनत्वस्य भावनाया वा अभावः प्रतिपादयितुं शक्यते, लौकिकानां लौकिकप्रमाणसिद्धत्वात्। तथापि प्रतिपाद्यते तावदिति चेत्। न। पाषण्डागमनिषेधेनानैकान्तात्। नासौ प्रमाणमिति चेत्। न। अर्थविपर्य्ययप्रतिपादनाविशेषेऽस्यापि तथाभावात्।

तात्पर्य्यतः प्रामाण्यमिति चेत्। न। विधिनिषेधयोरनन्यपरत्वात्। न विधौ परः शब्दार्थ इति वचनात्। तथापि निषेधे तथा भविष्यतीति चेत्। न। अविना-

---

प्रकाशः।

अथ प्रवृत्तिमतो निवृत्तिनियोगाधिकार इति यदा भक्षणे प्रवृत्तिस्तदा तन्निषेधे शब्दकार्यज्ञानात्तद्विपरीतप्रयत्ने जनिते रागान्न क्रियोत्पत्तिः, तेनैव प्रतिबन्धादिति चेत्। निवृत्तिकार्यताज्ञानेऽपि निष्फलत्वे निवृत्तौ प्रयत्न एव नोत्पद्यते, यस्य प्रतिबन्धकता स्यात्। न च शास्त्रस्थस्य शास्त्रजकर्त्तव्यताज्ञानं बलवदिति वाच्यम्। तस्य सफलविषयत्वादेवास्य च निष्फलविषयत्वात्। अथ कलञ्जभक्षणस्य निन्दार्थवादेन बलवदनिष्टसाधनत्वज्ञानात् तद्भक्षणे न प्रवर्त्तते इति चेत्। एवमपि कलञ्जभक्षणे न प्रवर्त्ततां, तदभावेऽपि निष्प्रयोजनत्वेनाप्रवृत्तौ किमायातमित्यर्थः।

**तथाचेति। वस्तुतः** शत्रुहननभावनायाः कलञ्जभक्षणभावनायाश्चेष्टसाधनत्वमस्त्येवेति भावः। अत एव वक्ष्यति **न हीति**। अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हीति न्यायेनाह **तथापीति**। प्रसक्तैव हिंसा यागादिविषया पाषण्डेन प्रतिषिध्यते, न च सा अनिष्टसाधनमिति व्यभिचार इत्याह **पाषण्डेति। नासाविति**। प्रमाणत्वेन हेतुर्विशेष्य इत्यर्थः। प्रमाणबाधितार्थविषयत्वेन पाषण्डागमस्येव न हन्यादित्यस्याप्यप्रमाणत्वादित्याह **अर्थेति**।

ननु गङ्गायां घोष इत्यस्येव न हन्यादित्यस्याप्यर्थान्तरे निषिध्यमानानिष्टसाधनत्वरूपे तात्पर्याद्बोधकत्वं स्यादित्याह **तात्पर्यत इति**। अर्थवादवचनानामन्यत्र विधौ तात्पर्यं न तु विधिवचनस्येत्यभ्युपगमात् तदनुरोधेनान्यत्र लक्षणा युक्ता न तु तत्रैवेत्याह। **न विधाविति**। भावविधावेव तथा न तु निषेधविधावपीत्याह **तथापीति**। यत्र लक्षणीयार्थेनाविनाभावस्तदुद्देशेन प्रयोगश्च तत्रैव लक्षणा, न च न हन्यादिति वाक्यमन्यपरत्वेन प्रयुक्तं, न वाऽनिष्टसाधनत्वेनाविनाभाव इत्याह **अविनाभावेति**। ननु यथा असुरादिपदे न निषेधो नञर्थः किन्तु तदन्यद्विरोधि,

प्रकाशिका।

**वस्तुत इति**। तथा च तदभावप्रतिपादने बाध इति भावः। **न हीति**। न हि कर्त्तव्यत्वस्य

मकरन्दः।

अत एव न हि कर्त्तव्यत्वस्येष्टसाधनत्वस्य वा अभावः प्रतिपादयितुं शक्यते इति वक्ष्यतीत्याह **न हीति**।

टिप्पणी।

'न कलञ्जं भक्षयेदि'त्यादौ तृप्तिरूपेष्टसाधनत्वस्य सत्त्वात्तन्निषेधानुपपत्तिरित्याह **निषेधेति**।

भावतदुद्देशप्रवृत्त्योरभावात् । नाप्यसुरामित्यादिवदस्य नञो विरोधिवचनत्वम्, क्रियासङ्गतत्वात् । असमस्तत्वाच्च ॥ १४ ॥

तस्माद्—

**विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।**
**अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता ॥ १५ ॥**

तत्र स्वयङ्कर्त्तृकक्रियेच्छाऽभिधानं कुर्य्यामिति । सम्बोध्यकर्त्तृकक्रियेच्छाऽभिधानं कुर्य्या इति । शेषकर्त्तृकक्रियेच्छाऽभिधानं कुर्वीतेति । तथाचाग्निकामो दारुणी मथ्नीयादित्यस्य लौकिकवाक्यस्यायमर्थः सम्पद्यते अग्निकामस्य दारुमथने प्रवृत्तिर्ममेष्टेति । ततः श्रोताऽनुमिनोति–नूनं दारुमथनयत्नोऽग्नेरुपाय इति । यद्विषयो हि प्रयत्नो यस्याप्तेनेष्यते, स तस्यापेक्षितहेतुः । तथा तेनावगतश्च, यथा ममैव पुत्रादेर्भोजनविषय इति व्याप्तेः ।

विषं न भक्षयेदित्यस्य तु विषभक्षणगोचरा प्रवृत्तिर्मम नेष्टा इत्यर्थः । ततोऽपि श्रोताऽनुमिनोति–नूनं विषभक्षणभावना अनिष्टसाधनम् । यद्विषयो हि प्रयत्नः कर्त्तुरभिमतसाधकोऽप्याप्तेन नेष्यते, स ततोऽधिकतरानर्थहेतुः, तथा तेनावगतश्च, यथा ममैव पुत्रादेः क्रीडाकर्दमविषभक्षणादिविषय इति व्याप्तेः ।

---

प्रकाशः ।

तथाऽत्रेष्टसाधनविरोध्यनिष्टसाधनमर्थः स्यादित्यत आह **नापीति** । क्रियासङ्गतस्य नञः प्रसज्यप्रतिषेधवाचकत्वात् **समास एव** तस्य पर्युदासवृत्त्या **तदितरविरोधिपरत्वादि**त्यर्थः ।

नियोक्तृधर्मो वेत्यभिमतं पक्षमुपसंहरति—

**विधिरिति** । प्रवृत्त्यादावित्यादिपदान्निवृत्तिः । विषयसप्तमीयम् । तेन प्रवृत्तिनिवृत्तिविषय आप्ताभिप्रायो लिङर्थ इत्यर्थः । प्रवर्त्तकमिष्टसाधनताज्ञानमेव लिङर्थस्त्वाप्ताभिप्रायो **लाघवादिति** भावः । वक्त्रभिप्रायस्य विधित्वे कुर्यामित्यादावर्थभेदमानुभविकमुपपादयति **तत्रेति** ।

स्वर्गकामो यजेतेत्यस्य **स्वर्गकामकृतिसाध्यतया** यागो यागयत्नो वा आप्तेष्ट इत्यर्थः । ततो यो व्यापारो यस्य कृतिसाध्यतया यद्व्यापारविषयः प्रयत्नो वा यस्याप्तेनेष्यते, स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहाद् यागस्येष्टसाधनत्वमनुमिनोति । तथाहि–यागो मदिष्टसाधनं मत्प्रयत्नविषयतया मदाप्तेष्यमाणत्वात्, यथा मत्पित्रा मत्प्रयत्नविषयतया इष्यमाणं भोजनं मदि-

प्रकाशिका ।

इष्टसाधनत्वस्य वाऽभावः प्रतिपादयितुं शक्यत इत्यादिकमित्यर्थः । **समास एवेति** । यद्यपि न घटः पट इत्यादौ व्यासेऽपि पर्युदासवृत्त्या प्रयोगो दृष्टः, तथापि विरोधिवाचकत्वं समास एव, अत एवोक्तं–**तदितरविरोधिपरत्वादिति** । **विधिर्वक्तुरित्यादिकारिकायां** वक्तुरभिप्रायो विधिरभिधेय इति योजना । **लाघवादिति** । न चाप्तस्य विशेषणीभूतस्य शक्यत्वे विपरीतं गौरवमिति वाच्यम् । वस्तुत आप्तस्य योऽभिप्रायस्तस्याभिधेयत्वेन शक्यत्वमित्याशयात् । **स्वर्गकामकृतिसाध्यतयेति** । आख्यातार्थकृतावेव लिङर्थान्वयो धात्वर्थे वेति मतभेदेन विकल्पः । इष्टसाधनत्वविधिपक्षेतोऽ

मकरन्दः ।

**समास एवेति** । यद्यपि न घटः पट इत्यादौ व्यासेऽपि पर्युदासवृत्त्या तदितरपरत्वमस्त्येव, तथापि शब्दप्रकाशोक्तमनुसन्धेयम् । यागो मदिष्टसाधनमित्याद्यनुमानं शब्दप्रकाशे विपश्चितमनुसन्धेयम् ।

टिप्पणी ।

**विधिरित्यादि** । नन्वेवमिष्टसाधनताज्ञानात् यागादौ कथं प्रवृत्तिरत आह **अनुमेयेति** । **इष्टेति** । द्विष्टसाधनत्वमप्येतदुपलक्षयति न कलञ्जं भक्षयेदित्यादिनिषेधवाक्यात् कलञ्जभक्षणे आप्ताभिप्रायविषयत्वभावावगमे द्विष्टसाधनत्वस्यानुमानात् ।

लौकिक एव वाक्ये अयं प्रकारः कदाचिद्बुद्धिमधिरोहति न तु वैदिकेषु, तेषु पुरुषस्य निरस्तत्वात् इति चेत्। न। निरासहेतोरभावात्। तदस्तित्वेऽपि प्रमाणं नास्तीति चेत्। मा भूदन्यत्, विधिरेव तावद्गर्भ इव पुंयोगे प्रमाणं श्रुतिकुमार्याः किमत्र क्रियताम्। लिङो वा लौकिकार्थातिक्रमे य एव लौकिकास्त एव वैदिकास्त एव चैषामर्था इति विप्लवेत। तथाच जबगडदशादिवदनर्थकत्वप्रसङ्ग इति भव सुस्थः।

स्यादेतत्। तथापि वक्तॄणामुपाध्यायानामेवाभिप्रायो वेदे विधिरस्तु कृतं स्वतन्त्रेण वक्त्रा परमेश्वरेणेति चेत्। न, तेषामनुवक्तृतयाऽभ्यासाभिप्रायमात्रेण प्रवृत्तेः शुकादिवत् तथाविधाभिप्रायाभावात्। भावे वा न राजशासनानुवादिनोऽभिप्राय आज्ञा, किं नाम राज्ञ एवेति लौकिकोऽनुभवः॥ १५॥

श्रुतेः खल्वपि—

**कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः।**
**स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ॥ १६॥**

---

प्रकाशः।

ष्टसाधनम्। न कलञ्जं भक्षयेदित्यस्य कलञ्जभक्षणं मम बलवदनिष्टसाधनं मदिष्टसाधनत्वे सत्यपि मदाप्तेन मत्प्रयत्नविषयतयाऽनिष्यमाणत्वात्। यथा मत्पित्रा मत्प्रयत्नविषयतयाऽनिष्यमाणं मधुविषसम्पृक्तान्नभोजनं ममानिष्टसाधनम्।

लिङादीनां साक्षात् प्रवर्त्तकज्ञानजनकत्वे बाधकाभावाश्च परम्पराजनकत्वमिति न वाच्यम्। अनन्यलभ्यस्य शब्दार्थत्वनियमे कर्त्रादेरिवान्यलभ्यत्वस्य **हेतुत्वादित्यादेश्च** बाधकत्वात्। **त्वयाऽपि** स्वकृतिसाध्येष्टसाधनतामन्तराऽनुमापयता शब्दस्य साक्षात् प्रवर्त्तकत्वानङ्गीकाराच्चेति भावः।

**विधिरेवेति।** नन्वेवमन्योन्याश्रयः, न वा लाघवं **तात्पर्यगौरवात्**, ईश्वराद्यनन्तकल्पनापत्तेश्च। मैवम्। लोके आप्ताभिप्राये लिङः शक्तिग्रहाद्वेदे परिशेषादीश्वराभिप्राये पर्यवसानात्। न तु तत्रैव शक्तिः। यथा तवैव कार्यशक्तस्य लिङादेरपूर्वे पर्यवसानम्। फलमुखश्च गौरवं न दोषाय। शक्तिग्रहकाले सिद्ध्यसिद्धिपराहतत्वात्, ईश्वरे मानान्तरोपदर्शनाच्चेति भावः।

एतदेवाभिप्रेत्याह **य एवेति।** लोकदृष्टा एव पदार्था वेदे प्रत्यभिज्ञायमानाः कथमन्य इत्यर्थः। **अनर्थकत्वेति।** गृहीतसङ्गतेर्लौकिकपदादन्यत्वेनागृहीतसङ्गतित्वादित्यर्थः। **तेषामिति।** उपाध्यायवंशानामतीन्द्रियार्थज्ञानाभावात्तत्रेच्छा न सम्भवतीति शुकादीनामिव तावत्पदज्ञानात् विवक्षातश्चोच्चारयितृत्वमात्रमित्यर्थः।

**स्वार्थद्वारैवेति।** मुख्यार्थाबाधात्तत्रैव श्रुतेस्तात्पर्यमिति नान्यपरत्वमित्यर्थः।

प्रकाशिका।

चेति भावः। **हेतुत्वादित्यादेश्चेति।** हेतुत्वादनुमानाच्चेत्यादिकारिकोक्तौ इत्यर्थः। **त्वयापीति।** स्वांशस्याशक्यत्वात्तद्घटितस्य प्रवर्त्तकज्ञानाविषयत्वादिति भावः। **तात्पर्यगौरवादिति।**

मकरन्दः।

**हेतुत्वादित्यादेश्चेति।** हेतुत्वादनुमानाच्चेत्यादेरचेत्यर्थः।

टिप्पणी।

प्रथमश्लोकोक्तश्रुतेरित्यस्य व्याख्यान्तरमाह **श्रुतेः खल्वपीति। स्वर्गादिवदिति।** यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥ इत्याद्यर्थवादो यथा स्वर्गाद्यर्थप्रतिपादनद्वारा स्वर्गकामो यजेतेत्यादिविधिवाक्येन सहैकवाक्यतां प्रतिपद्यमानः

**न सन्त्येव हि वेदभागा यत्र परमेश्वरो न गीयते । तथाहि—स्रष्टृत्वेन पुरुषसूक्तेषु, विभूत्या रुद्रेषु, शब्दब्रह्मत्वेन मण्डलब्राह्मणेषु, प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनिषत्सु, यज्ञपुरुषत्वेन मन्त्रविधिषु, देहाविर्भावैरुपाख्यानेषु, उपास्यत्वेन च सर्वत्रेति ॥**

**सिद्धार्थतया न ते प्रमाणमिति चेत् । न । तद्धेतोः कारणदोषशङ्कानिरासस्य**

प्रकाशः ।

**सिद्धार्थतयेति ।** इदमत्राभिसंहितम्—व्यवहारत एवाद्या व्युत्पत्तिरुपायान्तरस्य व्युत्पत्त्यधीनत्वात् । तथाहि प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो व्युत्पित्सुः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयाद्यनुविधानादुपस्थितत्वाच्च प्रयोज्यप्रवृत्तिमेव प्रयोजनमवधारयति ।

तच्च तदनुकूलव्यापारं विनाऽनुपपद्यमानं कार्यताज्ञानमेव व्यापारं कल्पयति, स्वप्रवृत्तौ तस्यैव कारणत्वनिश्चयात् । एवञ्च तत्र शब्दस्य हेतुत्वमवधार्य तत्रैव शक्तिं कल्पयति, उपस्थितत्वात्, पश्चादावापोद्वापाभ्यां क्रियाकारकपदानां कार्यान्विततत्तदर्थेषु शक्तिं गृह्णाति प्रथमं सामान्यतस्तत्रैव शक्तिग्रहादिति कार्यान्वित एव पदानां शक्तिरिति सिद्धार्थः शब्दो न प्रमाणम् ।

अथाकाङ्क्षादेस्तथयाऽपि वाक्यार्थज्ञानहेतुत्वोपगमात् तत एव कार्यपदसमभिव्याहारात् कार्यत्वज्ञानसम्भवेनान्यलभ्यत्वान्न कार्यांशेऽपि शक्तिः । **परम्परयाऽपि** शब्दस्य कार्यत्वज्ञानानुकूलत्वादर्थापत्तेः परिक्षयात् । **किञ्च** कार्यत्ववाचिलिङादीनामाकाङ्क्षाद्युपेतपदार्थान्वितस्वार्थबोधकत्वस्यावश्यकत्वात् पदान्तराणामपि तथात्वमस्तु लाघवात् ।

मैवम् । पदानां कार्यान्वितज्ञाने **साक्षात्त्वस्यौत्सर्गिकत्वेन** तथैव हेतुत्वस्य न्याय्यत्वात् । अन्वितपदार्थज्ञाने च हेतुत्वे परम्पराया अन्याय्यत्वात् । अर्थापत्तेः साक्षादुपपादकविषयत्वेन साक्षादुपपादके कार्यान्वितज्ञाने पदानां शक्तिकल्पनात् । लिङादीनां शक्तेरकल्पनादन्यलभ्यत्वतर्कस्याप्यभावात्, आद्यव्युत्पत्तेर्विचार्यत्वात् । न च कार्यवाचिलिङादीनां व्यभिचारः । कार्यत्वविशिष्टज्ञानजनकत्वं हि सर्वपदानाम् । तच्च कार्यान्वितस्वार्थप्रतिपादकतया इतरान्वितस्वार्थकार्यप्रतिपादकतया वेति न कश्चिद्विशेषः ।

अथ सिद्धार्थेऽपि व्युत्पत्तिः सम्भवति । तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्तादृशेनैव वार्त्ताहारेण समं चैत्रसमीपं गतः 'चैत्र ! पुत्रस्ते जातः,'—इति वार्त्ताहारवाक्यं शृण्वन् चैत्रस्य मुखप्रसादं पश्यन् श्रोतुर्हर्षमनुमिनोति, हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति, उपस्थितत्वादुपपादकत्वादन्योपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवात् ।

मैवम् । हर्षहेतूनां बहूनां सम्भवात् हर्षेणापि लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परिशेषयितुमशक्यत्वात् । **अत एव** विधिशेषीभूतार्थवादानां स्वर्गादिपदशक्तिग्राहकाणाञ्च प्रवृत्तिपरत्वेन परम्परया कार्यान्वयात् कार्यान्वितस्वार्थबोधकत्वमिति ।

**तद्धेतोरिति ।** साध्यार्थानामिव सिद्धार्थानामपि वक्तृदोषनिबन्धनाप्रामाण्यनिरासादित्यर्थः ।

प्रकाशिका ।

अभिप्राये इष्टसाधनत्वे च तथासति तात्पर्यादित्यर्थः । **परम्परयापीति ।** कार्यवाचिलिङ्पदसमभिव्याहारादित्यर्थः । **किञ्चेति ।** न हि तत्रापि कार्यान्वितमात्रज्ञानजनकत्वं पौनरुक्त्यापत्तेरिति भावः । **साक्षात्त्वस्येति ।** इतरपदसमभिव्याहारानपेक्षत्वमेव साक्षात्त्वम् । **अत एवेति ।** यत एव

मकरन्दः ।

**साक्षात्त्वस्यौत्सर्गिकत्वेनेति ।** यथा च कार्यान्वितव्युत्पत्त्या साक्षात् कार्यान्वितज्ञानं नान्वितव्युत्पत्त्या, तथा शब्दप्रकाशे अनुसन्धेयम् ।

टिप्पणी ।

तात्पर्यविषयतां लभमानः प्रामाण्यमश्नुते, तथा 'यज्ञो विष्णुरि'त्यादिरपि वेदभागः स्वार्थप्रति-

भाव्यभूतार्थसाधारणत्वात्। अन्यत्रामीषां तात्पर्यमिति चेत्। स्वार्थप्रतिपादनद्वारा, शब्दमात्रतया वा ? प्रथमे स्वार्थेऽपि प्रामाण्यमेषितव्यम्। तस्यार्थस्यानन्यप्रमाणकत्वात्। अत एव तत्र तस्य स्मारकत्वमित्यपि मिथ्या।

तत्प्रतिपादकत्वेऽपि न तत्र तात्पर्यमिति चेत्।

स्वार्थापरित्यागे ज्योतिःशास्त्रवदन्यत्रापि तात्पर्ये को दोषः। अन्यथा स्वर्गनरकप्रात्यश्रोत्रियादिस्वरूपप्रतिपादकानामप्रामाण्ये बहु विप्लवेत। तत्राबाधनात्तथेति चेत्। तुल्यम्।

न तादृगर्थः क्वचित् दृष्ट इति चेत्। स्वर्गादयोऽपि तथा। तन्मिथ्यात्वे तदर्थिनामप्रवृत्तौ विधानानर्थक्यप्रसङ्ग इति चेत्। इहापि तदुपासनाविधानानर्थक्यप्रसङ्गः। तन्मिथ्यात्वे हि सालोक्यसायुज्यादिफलमिथ्यात्वे कः प्रेक्षावांस्तमुपासीतेति तुल्यमिति॥

---

प्रकाशः।

**अन्यत्रेति**। कार्ये तदन्विते च शब्दशक्तेरवधारणात् सिद्धार्थानामपि तत्रैव तात्पर्यमिति न मुख्येऽर्थे प्रामाण्यमित्यर्थः। **स्वार्थेति**। कार्ये तेषां तात्पर्यं किं प्रतिपाद्यमानसिद्धार्थान्वयपुरस्कारेण, किं वा स्वार्थमप्रतिपाद्येत्यर्थः।

**प्रथमे इति**। अबाधितं पदसमन्वयलभ्यमर्थमादायैव तेषां कार्यपरत्वात् स्वार्थेऽपि प्रामाण्यमवर्जनीयमित्यर्थः।

**ज्योतिःशास्त्रवदिति**। यथा ज्योतिःशास्त्रस्य वेदाङ्गस्य दर्शादिकालं स्वार्थमादायैव दर्शादियागविधौ तात्पर्यं, तथा सिद्धार्थवादानामपि स्वार्थं प्रतिपादयतामेव कार्ये प्रामाण्यमित्यर्थः। **अन्यथेति**। यदि स्वार्थमप्रतिपाद्यैवान्यपरत्वमिति द्वितीयः कल्प इत्यर्थः। **तादृश इति**। **वेदान्त**बोध्यनित्यज्ञानादिरूप इत्यर्थः। **इहापीति**। ईश्वराभावे ईश्वरमुपासीतेत्यादिविधेरानर्थक्यप्रसङ्ग इत्यर्थः। सालोक्यं-समानलोकता। **सायुज्यं**-सार्वज्ञ्याणिमादिकम्। आदिपदात् सारूप्यादि।

अत्रापीदमभिप्रेतम्-यद्यर्थापत्त्या साक्षादुपपादक एव पदानां शक्तिः, तदा घटानयनकार्यताज्ञान एव पदशक्तिप्रसङ्गः, घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य घटानयनप्रवृत्त्या घटानयनकार्यताज्ञानस्यैवानुमानात्। न तु कार्यान्वितज्ञानस्य, प्रवृत्तिविशेषे तस्याहेतुत्वात्।

अथ घटानयनक्रियायां प्रथमं क्रियात्वज्ञानात्प्रवृत्तिमात्रानुमाने, तेन च कार्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य कारणतां गृहीत्वा शक्तिं कल्पयति, तदुत्तरं विशेषयोः कार्यकारणभावग्रह इति चेत्।

प्रकाशिका।

कार्यान्वितज्ञान एव पदानां शक्तिरत एव परम्परया कार्यान्वयकल्पनमित्यर्थः। **वेदान्तेति**। अन्तशब्दोऽत्र स्वरूपपरः, वेदान्तशब्द उपनिषत्परो वा। ननु सायुज्यं संयोगः, स च शरीरस्य परमेश्वरेण सर्वदैव आत्मनस्तु न कदापि, तथासति जीवन्मुक्तधर्म्मसालोक्यसमभिव्याहाराविशेषादित्यन्यथा व्याचष्टे **सायुज्यं सार्वज्ञाणिमादिकमिति**। **सारूप्यादीति**। गरुडगदाचक्रादीत्यन्वयः।

मकरन्दः।

ननु सायुज्यं संयोगः, स च परमेश्वरेण शरीरस्य सर्वदा अयत्नसिद्ध एव, आत्मनस्तु न कदाऽपीत्यन्यथा व्याचष्टे **सायुज्यमिति**।

टिप्पणी।

पादनद्वारा 'ईश्वरमुपासीतेत्या'दिविधिवाक्येन सहैकवाक्यतामापद्यमानः तात्पर्यविषयतां सम्पद्यमानः प्रामाण्यं लभते इत्यर्थः॥ १६ ॥

**वाक्यादपि । संसर्गभेदप्रतिपादकत्वं ह्यत्र वाक्यत्वमभिप्रेतम् । तथाच यत्पदकदम्बकं यत्संसर्गभेदप्रतिपादकं तत् तदनपेक्षसंसर्गज्ञानपूर्वकं, यथा लौकिकं, तथाच वैदिकमिति प्रयोगः । विपक्षे च बाधकमुक्तम् ॥ १६ ॥**

प्रकाशः ।

न । प्रथमं प्रवृत्तिमात्रकार्यान्वितज्ञानमात्रयोरनुमानं भवति क्रमेणेत्यत्र मानाभावात् । घटादिपदशक्तिग्रहस्य तेन विनाऽपि सम्भवात् । न च सामान्ययोः कार्यकारणभावग्रहो विशेषयोस्तथात्वज्ञाने हेतुरिति वाच्यम् । विशेषयोरन्वयव्यतिरेकाभ्यामेव तद्ग्रहात् । विशेषयोः कार्यकारणभावज्ञानं प्राथमिकमिति तन्मूलकः पदविशेषग्रह एव स्यात् । निष्प्रयोजनत्वेनान्तराऽनुमितौ मानाभावात् ।

किञ्च ममेदं कार्यमिति ज्ञानं साक्षादुपपादकं प्रवृत्त्या स्वकारणत्वेनानुमितम्, अतस्तत्र शक्तिं गृह्णीयात्, साक्षादुपपादकविषयत्वात् कल्पनायाः । न त्विदं कार्यमिति ज्ञाने, तस्य साक्षादुपपादकोपपादकत्वात् । अथेदं कार्यमिति ज्ञानशक्त्यैव परम्परयाऽनुमानद्वारा ममेदं कार्यमिति ज्ञानसम्भवादन्यलभ्यत्वे न तत्र शक्तिकल्पनमिति तुल्यम् ।

अपि च—अस्तु प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात् कारणताबोधात्तत्र शक्तिग्रहः, तथाप्यावापोद्वापाभ्यां पदविशेषस्येतरान्वितस्वार्थज्ञाने शक्तिं कल्पयति, लाघवात् । न तु कार्यत्वांशे, गौरवादन्यलभ्यत्वाच्च । अन्यथासिद्धिमपश्यतो हि बालस्य पूर्वं तत्सम्भवेऽपि पश्चाद्गौरवान्यलभ्यत्वतर्कसहकृतमानेन तद्बाधैवोचिता ।

न च प्रवृत्तिहेतुतयोपस्थितं कार्यान्वितज्ञानं हित्वा कल्पयित्वाऽन्वितज्ञानं तत्र शक्तिकल्पनमयुक्तमुभयथा गौरवादिति वाच्यम् । कार्यान्वितज्ञानेऽन्वितज्ञानस्यापि सत्त्वात्, तद्विशेषत्वात्तस्य । तथात्वेऽपि तदुपस्थितावन्वितज्ञानत्वं न विषय इति तदुपस्थित्यन्तरं कल्प्यमिति चेत् । न कार्यान्वितज्ञाने अन्वितज्ञानं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात्, विशिष्टज्ञानस्य विशेष्यविषयत्वनियमात् । अन्यथा अन्यजातिज्ञानमन्यच्च जातिविशिष्टव्यक्तिज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तव जातिरेव पदार्थः स्यात् ।

यच्च हर्षहेतूनां बहूनां सम्भवादित्युक्तम् । तन्न, स्वतो गृहीतहर्षहेतुस्तनपानादेर्बाधावताराद्न्यस्य हर्षहेतोरग्रहात् । अत उपस्थितत्वादुपपादकत्वाच्च पुत्रजन्मज्ञानमेव हर्षहेतुतया कल्पयति । न चान्यदपि प्रियं हर्षहेतुर्भविष्यतीति शङ्कया कथमेवमिति वाच्यम् । कार्यान्वितज्ञानेऽपि शक्तिग्रहानापत्तेः । प्रयोज्यज्ञानहेतूनां बहुत्वात् । अनन्यथासिद्धशब्दार्थविधानञ्च तुल्यमिति संक्षेपः ।

**यत्पदकदम्बकमिति । एतद्वेदवाक्यस**मानकालोत्पत्तिकज्ञानाजन्यमिदं वेदवाक्यं समानविषयकज्ञानजन्यं वाक्यत्वात् लौकिकवाक्यवदित्यत्र तात्पर्यम् । **विपक्षे चेति** ॥ १६ ॥

प्रकाशिका ।

**एतद्वेदवाक्यसमानकालोत्पत्तिकेति ।** अत्र समानकालपदेन स्थूलकालोपाधेर्विवक्षणाद् पूर्वकालएव विवक्षितः, स च पैत्रिकस्य जनकत्वासम्भवेन तदादायात्मन्तरशङ्कानवतारात् । एवञ्चाध्यापकादिज्ञानजन्यत्वेनार्थान्तरवारणाय **जन्यान्तरं** पक्षविशेषणम् । अत्र च समानविषयत्वं ज्ञानविशेषणम् अन्यथा तात्पर्यादिज्ञानजन्यत्वेन विशेषणासिद्धेः । न चैवमपि वाक्यार्थं ज्ञात्वा अस्मदाद्युच्चरितवेदे पक्षतावच्छेदकासिद्धिरिति वाच्यम् । तद्भिन्नस्यैव पक्षत्वादिति भावः । यद्यपि सोत्पत्तिकज्ञानाजन्य-

मकरन्दः ।

**एतद्वेदवाक्येति ।** समानकालपदेन स्थूलकालोपाधेर्विवक्षणात् पूर्वकाल एव विवक्षितः । समानकालोत्पत्तिकस्य जनकत्वासम्भवेन तदादायार्थान्तरादिशङ्काऽनवकाशात् । एवञ्चाध्यापकादिज्ञानजन्यत्वेनार्थान्तरवारणायाजन्यान्तम् । न चैवमप्यसिद्धिः तादृशपदज्ञानादिजन्यत्वादिति वाच्यम् । समानविषयत्वेनापि ज्ञानविशेषणात् । न चैवमपि वाक्यार्थं ज्ञात्वा अस्मदादिनैवोच्चरिते इदानीन्तनवेदे दोषतादवस्थ्यमिति वाच्यम् । तद्भिन्नवेदस्यैव पक्षत्वादित्याहुः । यद्यपि सोत्पत्ति-

सङ्ख्याविशेषादपि—

**स्यामभूवं भविष्यामीत्यादिसङ्ख्या च वक्तृगा ।**
**समाख्याऽपि न शाखानामाद्यप्रवचनादृते ॥ १७ ॥**

कार्यतया हि प्राक् सङ्ख्योक्ता, सम्प्रति तु प्रतिपाद्यतयोच्यते । तथाह्युत्तमपुरुषाभिहिता सङ्ख्या वक्तारमन्वेतीति सुप्रसिद्धम् । अस्ति च तत्प्रयोगः प्रायशो वेदे । ततस्तदभिहितया तयाऽपि स एवानुगन्तव्यः, अन्यथाऽनन्वयप्रसङ्गात् ।

अथवा—समाख्याविशेषः सङ्ख्याविशेष उच्यते । काठकं कालापकमित्यादयो हि समाख्याविशेषाः शाखाविशेषाणामनुस्मर्यन्ते । ते च न प्रवचनमात्रनिबन्धनाः प्रवक्तृणामनन्तत्वात् । नापि प्रकृष्टवचननिमित्ताः । उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषात् । तत्पाठानुकरणे च प्रकर्षाभावात् । कतिचनादौ संसारे प्रकृष्टाः प्रवक्तार इति को नियामक इति । नाप्याद्यस्य वक्तुः समाख्येति युक्तम् । भवद्भिस्तदनभ्युपगमात् । अभ्युपगमे वा स एवास्माकं वेदकार इति वृथा विप्रतिपत्तिः ।

स्यादेतत् , ब्राह्मणत्वे सत्यवान्तरजातिभेदा एव कठत्वादयः । तदध्येया तदनुष्ठेयार्था च शाखा तत्समाख्यया व्यपदिश्यते इति किमनुपपन्नम् । न । क्षत्रिया-

प्रकाशः ।

पुरुषगुणाभावे तज्जन्यप्राशोभनवर्णोच्चारायितृत्वं प्रकर्षः, तत्राह **कति चेति** । न च ब्राह्मणत्वव्याप्यं

प्रकाशिका ।

त्वविशेषणादेव पक्षधर्मतावलेनाजन्यज्ञानसिद्धिस्तथाप्यकालोत्पत्तिकस्य जनकत्वशङ्कैव नेति स्वरूपनिर्वचनपरं समानकालोत्पत्तिविशेषणम् । न चार्थानभिज्ञोक्तवाक्ये व्यभिचारः, प्रमाणस्य तस्य पक्षसमत्वात् , अप्रमाणस्य च प्रमाणवाक्यात्मकत्वहेतुविरहात् , उत्तमपुरुषत्वात् प्रमाणोत्तमपुरुषादित्यर्थः, अन्यथा शुकोक्तप्रमाणोत्तमपुरुषे व्यभिचारात् , प्रमाणतद्वाक्यस्य च पक्षसमत्वमेवेत्यर्थः । **वक्तरीति** । यद्यपि वक्त्रनुवक्त्रोर्भेदादनुवक्त्रा नार्थान्तरशङ्का तथापि वक्तृत्वं वचनकर्तृत्वमात्रं तच्च तत्रापीति युक्तं स्वातन्त्र्यविशेषणमिति भावः ॥१६॥ **कतिचेति** । तथा च पुनरप्यनियमप्रसङ्ग-

मकरन्दः ।

कतादृशज्ञानाजन्यत्वविशेषणादेव पक्षधर्मतावलादजन्यज्ञानसिद्धाविष्टसिद्धिः, तथाप्यन्यकालोत्पत्तिकस्य जनकत्वशङ्कैव नेति स्वरूपतानिर्वचनपरं तदिति मन्तव्यम् । न च शुकादिवाक्ये व्यभिचारः, तस्यापि पक्षसमत्वादिति भावः ।

(१) **वक्तरीति** । न च वक्तृत्वानुवक्तृत्वयोर्भेदादनुवक्ता न वक्तेति न तद्विशेषणमर्थवदिति वाच्यम् । वक्तृत्वं हि वचनकर्तृत्वं, तच्च तत्रापि । **आगन्तुकेति** । तथा च कठादिशरीरमधिष्ठायाद्यवक्तुरीश्वरस्यैव तत्तत्समाख्याविशेषे निबन्धनत्वमिति भावः ॥ १६ ॥

टिप्पणी ।

द्व्यणुकपरिमाणजनकसंख्याजनकापेक्षाबुद्ध्याश्रयतया ईश्वरः सिध्यतीति पूर्ववृत्तं स्मारयन्नाह **कार्यतयेति** । संख्याविशेषशब्दस्यार्थान्तरमाह **समाख्यापीति** । **प्रवक्तृवचननिमित्त एवेति** । एवं चातीन्द्रियार्थदर्शी परमकारुणिको भगवानेव अस्मदाद्यदृष्टाकृष्टकठकादिशरीरमधिष्ठाय यां यां शाखां प्रावोचत् तत्तच्छाखानां तत्तन्नाम्ना व्यपदेश इति भावः ।

(१) प्रकाशिकामकरन्दयोर्गृहीतस्यैतत्प्रतीकस्य 'आगन्तुकस्येति' मकरन्दे समुपलब्धस्य च प्रकाशप्रतीकस्य व्याख्येयः 'एतद्वेदवाक्यसमाने'त्यादित ऊर्ध्वं 'व्यवस्थाव्यतिरेकश्चे'त्यतः पूर्वं कश्चिदंशो प्रकाशस्यादर्शपुस्तके भ्रष्ट इति प्रतिभाति । विशेषस्तु भूमिकायां द्रष्टव्यः । सं० ।

देरपि तत्रैवाधिकारात् । न च यो ब्राह्मणस्य विशेषः, स क्षत्रियादौ सम्भवति । न च क्षत्रियादेरन्यो वेद इत्यस्ति । न च कठाः काठकमेवाधीयते तदर्थमेवानुतिष्ठन्तीति नियमः, शाखासञ्चारस्यापि प्रायशो दर्शनात् । प्रागेवायं नियम आसीदिदानीमयं विप्लवते इति चेत् । विप्लव एव तर्हि सर्वदा, कठाद्यवान्तरजातिविप्लवादित्यगतिरेवेयम् । तस्मादाद्यप्रवक्तृवचननिमित्त एवायं समाख्याविशेषसम्बन्ध इत्येव साध्विति ॥

**स एवं भगवान् श्रुतोऽनुमितश्च, कैश्चित् साक्षादपि दृश्यते प्रमेयत्वादेर्घटवत् ॥**
नतु तत्सामग्रीरहितः कथं द्रष्टव्यः । सा हि वहिरिन्द्रियगर्भा मनोगर्भा वा तत्र न सम्भवति । चक्षुरादेर्नियतविषयत्वात् । मनसो वहिरस्वातन्त्र्यात् । तदुक्तं 'हेत्व-

---

प्रकाशः ।

कठत्वादि क्षत्रिये सम्भवतीत्याह **न चेति** । ननु क्षत्रियाद्यधीयमानाऽपि शाखा कठादिपदवाच्येत्यत आह **न च कठा इति** । **प्रागेवायमिति** । पूर्वं कठैः स्वशाखैवाधीता, अधुना शाखान्तराध्ययनरूपो विप्लव इत्यर्थः । **विप्लव एवेति** । कठत्वादिशाखाव्याप्यजातिविप्लवः कठादिसमाख्याव्यवस्थाव्यतिरेकश्चेत्यर्थः । **तस्मादिति** । कठादिशरीरमधिष्ठाय सर्गादावीश्वरेण या शाखा कृता, सा तत्समाख्येति परिशेष इत्यर्थः । अत्र **अनित्यज्ञानवद्वक्तृकवाक्याव्याचकानि** श्रौतकठपदादीनि **किञ्चित्प्रवक्तृ**कवाक्यवाचकानि वाक्यवाचकपदत्वात् मन्वादिसंहितापदवदिति मानमभिप्रेतम् ।

इयता प्रबन्धेन मननरूपां प्रतिज्ञातामुपासनां निर्वाह्य न तावन्मात्रान्मोक्षोऽनुमितिरूपविशेषदर्शनस्य प्रत्यक्षभ्रमानुच्छेदकत्वात्, अपि तु प्रत्यक्षरूपं तत्तद्धेतुरिति दर्शयितुमाह —

**स एवमिति** । अत्र प्रत्यक्षसामग्रीमुपाधिमाह **नन्विति** । सामग्र्या अतीन्द्रियतया योग्यानुपलम्भेन निषेधोऽपास्तः । न च तस्याः कार्यव्यङ्ग्यतया तदभावादेवाभाव इति वाच्यम् । कार्यस्यापि पुरुषान्तरप्रत्यक्षज्ञानत्वेन योग्यव्यतिरेकत्वात् । साधनव्यापकतया स नोपाधिरित्याह

प्रकाशिका ।

स्तदवस्थ एवेति भावः । **पूर्वं कठैरिति** । तथा च पूर्वकालीनमेव कठत्वादिजातिमद्ब्राह्मणाध्ययनं शाखायाः कठादिसमाख्यानियामकमस्तीत्यर्थः । **कठत्वादिशाखाव्याप्येति** । पूर्वशब्दस्याननुगतत्वेन सर्गाद्यत्वमेव तदर्थः, स च न भवताप्युपेयत इत्यनियमस्तदवस्थ एवेति भावः । **अनित्यज्ञानवदिति** । तन्मतेऽवक्तृकतया अस्य ज्ञानवक्तृकतया च पक्षतावच्छेदकसिद्धिः । न चास्मदाद्युच्चरितवेदवाचकतया कठादिसमाख्यायाः पक्षतावच्छेदकासिद्धिरिति वाच्यम् । अनित्यज्ञानवत्वक्रियामात्रावाचकत्वस्य विशेषणत्वादिति भावः । **किञ्चित्प्रवक्तृकेति** । स्वातन्त्र्यम् प्रशब्दार्थ इति नाव्यापकेनार्थान्तरमिति ध्येयम् ॥१७-२० ॥

मकरन्दः ।

**व्यवस्थाव्यतिरेक इति** । नियमगर्भस्योक्तनियामकस्यासिद्धेरिति भावः ।

**अनित्यज्ञानवदिति** । तन्मते अपौरुषेयत्वादस्मन्मते नित्यज्ञानवद्वक्तृकत्वादुभयसिद्धविशेषणमिति बोध्यम् । शेषं सुगमम् ॥ १७-२० ॥

इति महामहोपाध्यायदेवदत्तात्मजश्रीरुचिदत्तोपाध्यायविरचितः

मकरन्दः समाप्तः ॥



भावे फलाभावादि'त्यादि। न कार्यैकव्यङ्ग्यायाः सामग्र्या निषेद्धुमशक्यत्वात्।

अपि च दृश्यते तावद्वहिरिन्द्रियोपरमेऽपि असन्निहितदेशकालार्थसाक्षात्कारः स्वप्ने। न च स्मृतिरेवासौ पटीयसी। स्मरामि स्मृतं वेति स्वप्नानुसन्धानाभावात्। पश्यामि दृष्टमित्यनुव्यवसायात्। न चारोपितं तत्रानुभवत्वम्। अबाधनात्। अननुभूतस्यापि स्वशिरश्छेदनादेरवभासनाच्च।

स्मृतिविपर्यासोऽसाविति चेत्। यदि स्मृतिविषये विपर्यास इत्यर्थः, तदाऽनुमन्यामहे। अथ स्मृतावेवानुभवत्वविपर्यासः इति, तदा प्रागेव निरस्तः। न च सम्भवत्यपि, न ह्यन्येनाकारेणाध्यवसितोऽन्येन ज्ञानावच्छेदकतयाऽध्यवसीयते। तथा च स घट इत्युत्पन्नायां स्मृतौ भ्राम्यतस्तं घटमनुभवामीति स्यात्, न त्विमं घटमिति। न ह्ययं घट इति स्मृतेराकारः। तस्मादनुभव एवासौ स्वीकर्त्तव्यः।

अस्ति च स्वप्नानुभवस्यापि कस्यचित् सत्यत्वं, संवादात्। तच्च काकतालीयमपि न निर्निमित्तम्। सर्वस्वप्नज्ञानानामपि तथात्वप्रसङ्गात्। हेतुश्चात्र धर्म एव। स च कर्म्मजवत् योगजोऽपि योगविधेरवसेयः, कर्मयोगविध्योस्तुल्ययोगक्षेमत्वात्।

तस्मात् योगिनामनुभवो धर्मजत्वात् प्रमा, साक्षात्कारित्वात् प्रत्यक्षफलं, धर्माननुगृहीतभावनामात्रप्रभवस्तु न प्रमेति विभाग इति। अतस्तत्सामग्रीविरहोऽसिद्धः।

तथापि विपक्षे किं बाधकमिति चेत्। 'द्वे ब्रह्मणी वेदितव्ये' इत्यादियोगविधिवैयर्थ्यप्रसङ्गः अशक्यानुष्ठानोपायोपदेशकत्वात्। न चासाक्षात्कारिज्ञानविधानमेतत्। अर्थज्ञानावधिनाऽध्ययनविधिनैव तस्य गतार्थत्वात् इति। एतेन परमाण्वादयो व्याख्याता इति।

तदेनमेवम्भूतमधिकृत्य श्रूयते—'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति। 'एकमेवाद्वितीय' मिति। 'पश्यत्यचक्षुः स शृणोत्यकर्ण' इति। 'द्वे ब्रह्मणी वेदितव्ये पर-

---

प्रकाशः।

**कार्यैकेति।** अथ प्रत्यक्षहेतुयावद्विशेषाभावादयोग्याया अपि सामग्र्या अभाव उन्नेयः। तत्र यथा स्वप्नज्ञाने सहकारिविशेषान्मनसो बहिः स्वातन्त्र्यं, तथा प्रकृतेऽपि योगजधर्मात्तस्य तथात्वमित्याह। **अपि चेति।** पटीयस्त्वम्—असन्दिग्धविषयत्वम्। स्मृतिविपर्यासः—विपर्यस्ता स्मृतिः, **प्रागेवेति।** अनुभवत्वस्याबाधनादित्यर्थः। न च सम्भवत्यपि इत्यत्र स्मृतावनुभवत्वविपर्यास इत्यनुषञ्जनीयम्। यदि स घट इति स्मृतावनुभवत्वारोपः, तदा तं घटमनुभवामीति स्यात्, न तु इमं घटमनुभवामीत्याह **न हीति।** ननु प्रमायामेव मनसो बहिरस्वातन्त्र्यं स्वप्नज्ञानं त्वप्रमा इत्यत आह **अस्ति चेति।** तथापि साक्षात्कारो भ्रमो वासनाप्रभवत्वात् कामातुरकामिनीसाक्षात्कारवदित्याशङ्क्य तत्प्रमात्वमुपपादयति **स चेति। अर्थज्ञानावधिनेति।** स्वाध्यायोऽध्येतव्य इति विधेः परिशेषादर्थज्ञानफलसिद्धावर्थज्ञानावधित्वं सिद्धमिति भावः। **एतेनेति।** परमाण्वादयोऽपि प्रमेयत्वात् प्रत्यक्षा इत्यर्थः।

**एकमेवेति।** ईश्वराख्यं ब्रह्म एकमेव न द्वितीयमित्यर्थः। मदर्थमित्यनेन ईश्वरज्ञानार्थतां

प्रकाशिका।

धीरा धरणिभवानी यमजनि चन्द्राद् भगीरथं तनयम्।
तस्य कृतावेतस्यां सन्तः सन्तोषमाचरत॥

श्चापरमेव चे' ति । 'यज्ञेन यज्ञमयजन्त देवा' इति । 'यज्ञा वै देवा' इति । 'यज्ञो वै विष्णु' रित्यादि । स्मर्यते च—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । इति ।
मदर्थं कर्म कौन्तेय ! मुक्तसङ्गः समाचर । इति ।
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । इति ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते । इत्यादि ।

अनुशिष्यते च साङ्ख्यप्रवचने ईश्वरप्रणिधानम् । तमिमं ज्योतिष्टोमादिभिरिष्टैः प्रासादादिना पूर्त्तेन शीतातपसहनादिना तपसा अहिंसादिभिर्यमैः शौचसन्तोषादिभिर्नियमैः आसनप्राणायामादिना योगेन महर्षयोऽपि विविदिषन्ति । तस्मिन् ज्ञाते सर्वमिदं ज्ञातं भवतीत्येवं विज्ञाय श्रुत्वैकतानस्तत्परो भवेत् । यत्रेदं गीयते—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ १७ ॥ इति ।

**इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते**
**येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।**
**किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः**
**काले कारुणिक, त्वयैव कृपया ते भावनीया नराः ॥ १८ ॥**

---

प्रकाशः ।

कर्मणो दर्शयता न ज्ञानकर्मणोस्तुल्यकक्षतया समुच्चय इत्यभिप्रेतम् । अनुशिष्यते, उपदिश्यते इत्यर्थः । ईश्वरोऽवश्यं ज्ञेयो महर्षीणामपि तज्ज्ञानान्वितत्वादित्याह **तमिममिति** । ईश्वरवेदनस्य फलमाह **तस्मिन्निति** । मयि परमेश्वरे मनः संयुज्येत्यर्थः । योगजेश्वरसाक्षात्कारस्य फलमाह **शान्तिमृच्छतीति** । मोक्षं प्राप्नोतीत्यर्थः ॥ १७ ॥

यस्त्वेवं निर्दोषन्यायावगमितं कुतर्काभ्यासान्न प्रत्येति, तं प्रत्याह—

**इत्येवमिति** । इतिशब्दः स्वरूपार्थः । एवंशब्दश्च प्रकारार्थः । नीतिर्न्यायः । शैलसारः पाषाणं, लौहं वा, तद्वदाशयो येषां ते तथा, युक्तिप्रतिसन्धानानाश्रयहृदया इत्यर्थः । प्रस्तुते ईश्वरे, विप्रतीपविधयः प्रतिकूलप्रकाराः, तादृशा अप्युच्चैरत्यर्थं काले कदाचित् भवच्चिन्तका इति योजना । भावनीया वासनीयाः शङ्काकलङ्कशून्याः कर्त्तव्या इत्यर्थः ।

प्रकाशिका ।

आसीदनुपमः कोऽपि महादेवः कुलाग्रणीः ।

टिप्पणी ।

**सर्वधर्मानिति** । अत्र धर्मपदमधर्मस्याप्युपलक्षणम् 'नाविरतो दुश्चरितान्नाशान्तो नासमाहित' इत्यादिश्रुतेः, 'त्यज धर्ममधर्मं चे'त्यादिस्मृतेश्च, धर्माधर्मावनादृत्य मां परमात्मानमेकं शरणं प्राप्नुहि मदेकशरणो भवेत्यर्थः । अहं त्वा त्वां सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यः मोक्षयिष्यामि अतो माशुचः मा शोकं कार्षीरित्यर्थः । **प्रासादादीति** । भगवन्मन्दिरादीत्यर्थः । ॥ १७-१९ ॥

**इत्येष** इत्यादि । इतिः समाप्तौ । एष उज्ज्वलश्रीः न्यायकुसुमाञ्जलिः दक्षिणवामकौ सज्जनदुर्जनौ यद् वासयेत् अनुरञ्जयेत्, अन्योऽपि कुसुमाञ्जलिः दक्षिणवामनासापुटे अनुरञ्जयति ।

**अस्माकन्तु निसर्गसुन्दर! चिराच्चेतो निमग्नं त्वयी-**
**त्यद्धाऽऽनन्दनिधे! तथापि तरलं नाद्यापि सन्तृप्यते।**
**तन्नाथ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां**
**याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१९॥**

**इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-**
**र्यद्वासयेदपि च दक्षिणवामकौ द्वौ।**
**नो वा ततः किममरेशगुरोर्गुरुस्तु**
**प्रीतोऽस्त्वनेन पदपीठसमर्पितेन ॥ २० ॥**

**इति श्रीन्यायाचार्यपदाङ्कितमहामहोपाध्यायश्रीमदुदयनविरचितं न्यायकुसुमाञ्जलिप्रकरणं समाप्तम् ॥**

---

प्रकाशः।

अस्माकं त्वश्रद्धा नास्तीत्याह। **अस्माकंत्विति।** यद्यपि त्वयि चेतो निमग्नमित्यद्धा तत्त्वम्, तथापि तरलं मनो नाद्यापि सन्तृप्यते तृप्तं भवति। तृपेः क्वचित् सकर्मकत्वात् कर्मकर्तरि रूपम्। त्वदेकाग्रतां त्वत्प्रवणताम्। याम्या यमदैवताकाः। यातना नरकपीडाः ॥ १९ ॥

**इत्येष इति।** इतिः समाप्तौ। एष नीतिकुसुमाञ्जलिर्दक्षिणवामकौ द्वौ यदि वासयेत्, ततः किमस्माकम्। यद्वा यद्वासयेदित्यत्र प्रोक्त एव यदि ब्रूयात् माऽस्मान् वासयतीति, तं प्रत्याह **नो वा इति।** वासयेदित्यनेन सम्बन्धः। ततः किं। तद्वासनायाः फलं न किञ्चिदित्यर्थः। पदमेव पीठं, तत्र न्यायकुसुमाञ्जलेर्यत् समर्पणं, तेन भगवान् प्रीतोऽस्तु ॥ २० ॥

यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः।
तस्यात्मजोऽतिविषमं कुसुमाञ्जलिं तं प्राकाशयत्कृतिमुदे बुधवर्द्धमानः ॥
इति महामहोपाध्यायश्रीवर्द्धमानविरचितो न्यायकुसुमाञ्जलिप्रकाशः समाप्तः ॥

---

प्रकाशिका।

अनुजस्तस्य कृतवानिमां व्याख्यां भगीरथः ॥
इति महामहोपाध्याय मेघठक्कुरापरनामकश्रीभगीरथविरचितायां
कुसुमाञ्जलिप्रकाशिकायां पञ्चमः स्तवकः ॥
इति कुसुमाञ्जलिप्रकाशिका समाप्ता।

---

टिप्पणी

कुतर्काभ्याससमलिनान्तःकरणं कथं वासयिष्यतीत्यत आह **नो वेति।** अपिच किंच, नो वासयेत्, ततः किमस्माकं किन्तु अमरेश इन्द्रस्तस्य गुरुर्बृहस्पतिर्ब्रह्मा वा, तस्य गुरुः उपदेष्टा परमेश्वरः, पदमेव पीठं तत्र समर्पणं यस्य, तादृशेनानेन न्यायकुसुमाञ्जलिना प्रसन्नोऽस्त्वित्यर्थः ॥२०॥

इति मिथिलादेशालङ्कारसर्वतन्त्रस्वतन्त्र**श्रीबच्चाझा**गुरुचरणसेवनसमुपजातविद्येन दरभङ्गामण्डलान्तर्गतसीमाग्रामनिवासिना काशीहिन्दूविश्वविद्यालयदर्शनविभागाध्यक्षेण मैथिलेन **लक्ष्मीनाथझा**शर्मणा कृता न्यायकुसुमाञ्जलेः चतुःस्तवकपर्यन्तगुरुकृतटिप्पणीतोऽवशिष्टपञ्चमस्तवकमात्रस्य टिप्पणी समाप्ता।

---

साम्बशिवार्पणमस्तु।

# कुसुमाञ्जलिकारिकाः

## प्रथमः स्तबकः ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥
स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥
न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥
सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥
हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥
प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥
एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ७ ॥
विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥
चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥
भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥
संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥
निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥
जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परोद्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥
कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा ध्रुवः ॥ १४ ॥
नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥
न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥

स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥
हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥ १८ ॥
पूर्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥
इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥ २० ॥

## अथ द्वितीयः स्तबकः ।

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः ॥ १ ॥
वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥
जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥
कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

## अथ तृतीयः स्तबकः ।

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥
व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥
दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥
इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ।
नान्यथा सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥
आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥
दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥
परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥
साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥
सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥
सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुभयापि वा ॥ ११ ॥
श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥
अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥
निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥
व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥
न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥
न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनाववोधार्थो न च सन्नपि तत्परः ॥ १७ ॥
हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥
अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥
प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥
प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥
अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥
प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते ।
तं सर्वानुविधेयमेकसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

## अथ चतुर्थः स्तवकः ।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥
स्वभावनियमाभावादुपकारो हि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥
अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥
मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥
साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

## अथ पञ्चमः स्तवकः ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥
न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥ २ ॥
तर्काभासतयाऽन्येषां, तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥
स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान् ॥ ४ ॥
कार्य्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥
उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती ।
ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥ ६ ॥
प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं, विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥ ७ ॥
इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ८ ॥
कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥ ९ ॥
भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ १० ॥

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः ॥ ११ ॥
अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ १२ ॥
असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १३ ॥
हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १४ ॥
विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १५ ॥
कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १६ ॥
स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्याऽपि च शाखानां नाद्यप्रवचनादृते ॥ १७ ॥
इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक! त्वयैव कृपया ते तारणीया नराः ॥ १८ ॥
अस्माकन्तु निसर्गसुन्दर! चिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥ १९ ॥
इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा, ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ २० ॥

॥ इति कुसुमाञ्जलिकारिकाः ॥



कुसुमाञ्जलिप्रकरणीयकारिकानामकारादिक्रमेण

## प्रतीकसूची ।

इति कुसुमाञ्जलिकारिकासूचीसमाप्तिमगमत् ॥



न्यायकुसुमाञ्जलिप्रकरणस्य प्रस्तावक्रमेण

# विषयसूची ।

## प्रथमस्तबके

द्वितीयस्तबके



तृतीयस्तबके



चतुर्थस्तबके

पञ्चमस्तवके



इति कुसुमाञ्जलिप्रकरणसूची समाप्ता ।

---

कुसुमाञ्जलिबोधन्या-प्रकाशस्य च सन्दर्भानुसारेण

## विषयसूची ।

प्रथमस्तवके

द्वितीयस्तवके



तृतीयस्तवके

इति कुसुमाञ्जलिबोधिनीप्रकाशगतविषयसूची समाप्ता ।